ॐ

आदर्शपुस्तको[illegible]पत्र[illegible]का ।

ग्रन्थाङ्कः ९२

त्पर्यचन्द्रिकायाश्च

वेदान्ताचार्यश्रीवेङ्कटनाथकृततात्पर्यचन्द्रिकाख्य[illegible] तेषां नामादीनि

लितश्रीमद्रामानुजाचार्यविरचितभाष्यसहिता ।

ये मुद्रितम् ।

# श्रीमद्भगवद्गीता ।

। मध्ये किंचि

म् ।

एतत्पुस्तकं

स्यमेव परं तु केवलं

[illegible]रुलकरोपाख्यरङ्गनाथभट्टात्मजशंकरशास्त्रिणा

यासहितं च ।

[illegible] द्भूद इति संस्थास्यम् ।

[illegible] इत्युपाह्वानम् ।

बी. ए. [illegible]

[illegible] इति संस्थास्यम् ।

## विनायक गणेश आपटे

इत्यनेन

पुण्याख्यपत्तने

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४५

खिस्ताब्दाः १९२३



मूल्यं सार्धाः सप्त रूपकाः ( ७॥ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्या रामानुजभाष्यसहितश्रीमद्भगवद्गीतायास्तात्पर्यचन्द्रिकायाश्च पुस्तकानि यैः परहितैकपरायणतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रदर्श्यन्ते ।

(क.) इति संज्ञितम्—आनन्दाश्रमस्थम्, वेङ्कटेश्वरमुद्रणयन्त्रालये मुद्रितम् ।

(ख.) इति संज्ञितम्—आनन्दाश्रमीयसंस्कृतग्रन्थसंग्रहालयस्थम् । मध्ये किंचि-त्त्रुटितं च ।

(ग.) इति संज्ञितम्—आनन्दाश्रमीयसंस्कृतग्रन्थसंग्रहालयस्थम् ।

(घ.) इति संज्ञितम्—एतदप्यानन्दाश्रमसंस्कृतग्रन्थसंग्रहालयस्थमेव परं तु केवलं भाष्यम् । प्रायः शुद्धमेव मुद्रणव्यवस्थासहितं च ।

(ङ.) इति संज्ञितम्—भाण्डारकरओरियंटल्रिसर्चइन्स्टीट्यूट् इति संस्थास्थम् । प्रायः शुद्धमपि द्वित्रपत्रहीनम् ।

(च.) इति संज्ञितम्—भाण्डारकरओरियंटल्रिसर्चइन्स्टीट्यूट् इति संस्थास्थम् । कतिपयदलविगलितम् ।

(छ.) इति संज्ञितम्— ” ” ” ”

(ज.) इति संज्ञितम्—तात्पर्यचन्द्रिकायाः पुस्तकमानन्दाश्रमस्थग्रन्थसंग्रहालया-न्तर्गतमेव । तच्चैकं सदपि दशमाध्यायपर्यन्तमेव न तु समग्रम् । तदपि प्रतिच्छायारूपं नैव मूलभूतम् । स्थले स्थले लेखकप्रमादजनिताशुद्ध्यादिसहितं चेति ।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

※अद्वैतवादिमते तु निरस्तसमस्तभेदेन ब्रह्मणा जगतोऽभेदं प्रदर्शयन्तीषु परश्शतासु श्रुतिषु जाग्रतीषु कथंकारं पामरजनानुभवसिद्धो भेदः सत्यतां लभताम् । 'किंतु नेह नाना' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिशतसमधिगतोऽभेद एव पारमार्थिकः । न च तासामुपचरितार्थता वक्तुं शक्या । उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्त्वेन तत्त्वं बोधयन्तीनामुपचरितार्थतानुपपत्तेः । लिङ्गषट्कं च पूर्वाचार्यैः प्रदर्शितम्—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति ।

तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहाराख्यमेकं लिङ्गम् । यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयस्य वस्तुनः 'एकमेवाद्वितीयम्' इत्यादौ 'ऐतदात्म्यमिदं सर्वम्' इत्यन्ते च प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः । यथा तत्रैव मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य प्रमाणान्तराविषयीकरणमपूर्वता । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुतिभिरुपनिषन्मात्रवेद्यत्वप्रतिपादनाद्ब्रह्मणोऽपूर्वत्वम् । प्रकरणप्रतिपाद्यस्य तत्र तत्र श्रूयमाणं प्रयोजनं फलम् । यथाऽभयं गतो भवतीत्यादि । प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । यथा तत्रैव 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' इत्यादि प्रशंसनम् । प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः । यथा तत्र 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यत्र विकारस्य वागारम्भणमात्रत्वे युक्तिः श्रूयते । मृद्विकारेषु घटादिषु विकारनामधेययोर्वागारम्भणमात्रत्वेन यथा मृत्त्वमेवावशिष्यते नान्यत्तथा चिद्विवर्तस्य प्रपञ्चस्य गिरिनदीसमुद्रात्मकविकारनामधेययोर्वागारम्भमात्रत्वाच्चिन्मात्रमेवावशिष्यते रज्जुविवर्तस्य सर्पस्य रज्जुमात्रावशेषवदित्यर्थः । एवं च सर्वेषां वेदान्तवाक्यानामभेद एव तात्पर्यं पर्यवस्यति । भेदस्तु औपाधिकः । यथा लोके समुद्रादुदकात्मनोऽभेदेऽपि तद्विकाराणां फेनवीचितरङ्गादीनां मिथो भेदो दृष्टस्तद्वज्जीवप्रपञ्चयोर्ब्रह्मणोऽनन्य [illegible] सिध्यति । तत्र यद्यपि जीवो न ब्रह्मविकारः 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( [illegible] । ६ ) इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशश्रवणात्तथाऽपि अविद्याप्रत्युपस्थापितनामरूपोपाधिनिमित्तो भेदः कार्यमनुप्रविष्टस्यापि संभवति । यथैव च नैयायिकमत आकाशस्यैव सतो घटकरकाद्युपाधिभेदाद्घटाकाशकरकाकाशयोर्भेदस्तद्वत् । एवं च पृथगात्मानमित्यादीनां भेदश्रुतीनां यः पृथिव्यां तिष्ठन्नित्यादिघटकश्रुतीनां चौपाधिकभेद एव तात्पर्यमिति सर्वजनीनः शांकरपथसिद्धान्तः ।

॥ २७ ॥

※ अयं टिप्पणीग्रन्थो द्वितीयाध्याय एकषष्टप[illegible]
करणीयाः' इत्यस्मादग्रेतनत्वेनानुसंधाय तत्र वा[illegible]

श्रीमद्यामुनमुनये नमः ।

# अथ श्रीमद्यामुनमुनिप्रणीतः श्रीमद्भगवद्गीतार्थसंग्रहः ।

---

विगाहे यामुनं तीर्थं साधुवृन्दावने स्थितम् ।
निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः ॥ ( १ )
स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः ।
नारायणः परं ब्रह्म गीताशास्त्रे समीरितः ॥ १ ॥
ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥ २ ॥
मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥ ३ ॥
प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम् ।
कर्मधीर्भक्तिरित्यादिपूर्वशेषोऽन्तिमोदितः ॥ ४ ॥
अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम् ।
पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥ ५ ॥
नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः ।
द्वितीये स्थितधीलक्ष्या प्रोक्ता तन्मोहशान्तये ॥ ६ ॥
असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम् ।
सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता ॥ ७ ॥
प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मताऽस्य च ।
भेदा ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते ॥ ८ ॥
कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः ।
ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते ॥ ९ ॥
योगाभ्यासविधिर्योगी चतुर्धा योगसाधनम् ।
योगसिद्धिः स्वयोगस्य पारम्यं षष्ठ उच्यते ॥ १० ॥
स्वयाथात्म्यं प्रकृत्याऽस्य तिरोधिः शरणागतिः ।
भक्तभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते ॥ ११ ॥
ऐश्वर्याक्षरयाथात्म्यं भगवच्चरणार्थिनाम् ।
वेद्योपादेयभावानामष्टमे भेद उच्यते ॥ १२ ॥

स्वमाहात्म्यं मनुष्यत्वे परत्वं च महात्मनाम् ।
विशेषो नवमे योगो भक्तिरूपः प्रकीर्तितः ॥ १३ ॥
स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनता मतिः ।
भक्त्युत्पत्तिविवृद्ध्यर्था विस्तीर्णा दशमोदिता ॥ १४ ॥
एकादशेऽस्य याथात्म्यसाक्षात्कारावलोकनम् ।
दत्तमुक्ता विदिप्राप्त्योर्भक्त्येकोपायता तथा ॥ १५ ॥
भक्तिशैद्यमुपायोक्तिरशक्तस्याऽऽत्मनिष्ठता ।
तत्प्रकारास्त्वतिप्रीतिर्भक्तेर्द्वादश उच्यते ॥ १६ ॥
देहस्वरूपमात्माप्तिहेतुरात्मविशोधनम् ।
बन्धहेतुर्विवेकश्च त्रयोदश उदीर्यते ॥ १७ ॥
गुणबन्धविधौ तेषां कर्तृत्वं तन्निवर्तनम् ।
गतित्रयस्वमूलत्वं चतुर्दश उदीर्यते ॥ १८ ॥
अचिन्मिश्राद्विशुद्धाच्च चेतनात्पुरुषोत्तमः ।
व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ॥ १९ ॥
देवासुरविभागोक्तिपूर्विका शास्त्रवश्यता ।
तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥ २० ॥
अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणतः पृथक् ।
लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम् ॥ २१ ॥
ईश्वरे कर्तृताबुद्धिः सत्त्वोपादेयताऽन्तिमे ।
स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते ॥ २२ ॥
कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम् ।
ज्ञानयोगो जितस्वान्तैः परिशुद्धात्मनि स्थितिः ॥ २३ ॥
भक्तियोगः परैकान्त्यप्रीत्या ध्यानादिषु स्थितिः ।
त्रयाणामपि योगानां त्रिभिरन्योन्यसंगमः ॥ २४ ॥
नित्यनैमित्तिकानां च पराराधनरूपिणाम् ।
आत्मदृष्टेस्त्रयोऽप्येते योगद्वारेण साधकाः ॥ २५ ॥
निरस्तनिखिलाज्ञानो दृष्ट्वाऽऽत्मानं परानुगम् ।
प्रतिलभ्य परां भक्तिं तयैवाऽऽप्नोति तत्पदम् ॥ २६ ॥
भक्तियोगस्तदर्थी चेत्समग्रैश्वर्यसाधनम् ।
आत्मार्थी चेत्त्रयोऽप्येते तत्कैवल्यस्य साधकाः ॥ २७ ॥

ऐकान्त्यं भगवत्येषां समानमधिकारिणाम् ।
यावत्प्राप्ति परार्थी चेत्तदेवात्यन्तमश्नुते ॥ २८ ॥
ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः ।
तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः ॥ २९ ॥
भगवद्ध्यानयोगोक्तवन्दनस्तुतिकीर्तनैः ।
लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रियः ॥ ३० ॥
निजकर्मादिभक्त्यन्तं कुर्यात्प्रीत्यैव कारितः ।
उपायतां परित्यज्य न्यसेद्देवे तु तामभीः ॥ ३१ ॥
ऐकान्त्यात्यन्तदास्यैकरतिस्तत्पदमाप्नुयात् ।
तत्प्रधानमिदं शास्त्रमिति गीतार्थसंग्रहः ॥ ३२ ॥

इति श्रीमद्यामुनमुनिप्रणीतः श्रीमद्भगवद्गीतार्थसंग्रहः संपूर्णः ।

## अथ प्रास्ताविकं किंचित् ।

इह तावद्विदांकुर्वन्त्वत्रभवन्तस्तदेतत् । यत्परमपुरुषसंकल्पसृष्टजरायुजादिचतुर्विधभूतग्रामेऽप्युच्चतरकोटिभाजि मनुष्यप्राणिवर्गे तत्तदनादिप्रारब्धप्रवाहप्राप्ताधिकारनियन्त्रितं नैकशोभेदभिन्नमपि चातुर्विध्यमेव हि भगवतोपवर्णितं दृश्यते—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ इति ।

तथाऽप्युपरि निर्दिष्टाश्चत्वारोऽपि भक्तास्तत्तदनिष्टप्रयोजकदुरितनिवृत्तिद्वारा तत्तदिष्टप्राप्त्यर्थं भजनादिना भगवन्तं समाश्रयन्त इति हिरण्यगर्भादिपिपीलिकापर्यन्तोच्चावचाखिलप्राणभृद्वर्गः सततानेकविधदुर्विषहदुःखपरम्पराजालसंवलितसंसृतिचक्रपरिभ्रमणपरिश्रान्तः स्वभावत एवानिष्टानिच्छुरिष्टेच्छुश्च भवति । इष्टं चास्य सुखविशेष एव पुरुषार्थनामा । स च पुरुषार्थः स्थिरास्थिरोभयाविधोऽनुक्रमेण मोक्षकामशब्दभाग्भवति । तदुभयसाधनत्वाद्धर्मः सर्वाभ्यर्थनीयो धर्मसाधनत्वादर्थोऽपि सकलाभिलषणीय एवेत्यन्योन्यं तरतमभावमापन्ना अपीष्टत्वाविशेषात्पुरुषैरर्थ्यमानत्वाविशेषाच्च चत्वारोऽपि पुरुषार्थशब्दभाज इति निर्विचिकित्सः पन्थास्तत्र न कोऽपि विरुणद्धि ।

अथ खलु विदितमेवैतद्यत्परमकारुणिकः परमेश्वरो हेयप्रत्यनीकासंख्येयकल्याणगुणगणः श्रीमानरविन्दलोचनो गोविन्दो विशालविषयाटवीवलयनद्धदुःखदावानलजटालज्वालाभीषणसंतापत्रयसंतापितान्, दृढतरकामक्रोधादिदुस्तरजालसंदब्धे पुत्रमित्रकलत्राद्यनेकातिघनपाशोपबृंहिते संसारचक्रेऽम्भोभ्रमादम्भोभ्रमान्तरं परिपतितानिव कीटाननवरतमितस्ततो व्याकुलं परिभ्रमतो जनानुद्दिधीर्षुश्चतुर्विधपुरुषार्थसंपादनपटीयसीरनेका विद्याः प्रवर्तयांचक्र इति । ताश्च विद्याः प्रदर्शिता विष्णुपुराणे—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ इति ।

अङ्गानि शिक्षाकल्पव्याकरणेत्यादीनि षट् प्रसिद्धानि । पुराणन्यायमीमांसाधर्मशास्त्राणि चेति चत्वार्युपाङ्गानीत्युच्यन्ते । अत्र पुराणपदेनोपपुराणानामपि संग्रहो बोध्यः । भारतरामायणसांख्यपातञ्जलपाशुपतवैष्णवादीनां धर्मशास्त्रेऽन्तर्भाव इति मेलनेन चतुर्दश विद्याः संपद्यन्ते । ऋग्यजुःसामाथर्वणां वेदानां क्रमेण चत्वार उपवेदाः श्रूयन्ते । ते च यथा—आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रं चेति । तथा चाष्टादश विद्या इति प्रसिद्धिः कथ्यमाणा संगच्छते ।

मुण्डकोपनिषदि तु मुख्यतो विद्याद्वैविध्यमेवोपवर्णितं दरीदृश्यते । ‘ द्वे विद्ये वेदितव्ये परा चैवापरा च ’ इति श्रुतेः । तथा च सकलविद्यानां, प्रमाणानामपि प्रामाण्यापादकात्परब्रह्मपरवासुदेवादिशब्दाभिलप्यमानाद्भगवतः सकाशादाविर्भूतत्वेन न कस्याश्चिदप्यप्रामाण्यमाशङ्कितुमपि शक्यम् । विद्यासु प्रतिपाद्यविषयभेदेनाऽऽपाततः प्रतीयमानो विरोधस्तत्तदधिकार्यनुसारात्परिहरणीयः । तथा ‘ सर्वविद्याप्रतिष्ठाम् ’ इत्यादि तत्तद्विद्याप्रशंसनमपि तत्तद्विद्याधिकारिणस्तत्र तत्र सविशेषं प्रवर्तनाय । ‘ जरामृत्युं ते पुनरेवापियन्ति ’ इत्यादिना कस्याश्चिद्दृश्यमानं निन्दनमपि हि तदनधिकारिणस्तत्र प्रवृत्तिनिवृत्तय इति ज्ञेयम् । अत एव निन्दितमपि कर्मार्जुनस्याधिकारमाकलय्य कर्तव्यत्वेन भगवतोपदिश्यते गीतायाम्––‘ कुरु कर्मैव तस्मात्त्वम् ’ ‘ नियतं कुरु कर्म त्वम् ’ इत्यादिना । ‘ नास्त्यकृतः कृतेन ’ ‘ कर्मणा बध्यते जन्तुः ’ इतिश्रुतिस्मृत्योरपि एतदाशयेनैव प्रवृत्तिः । सर्वात्मना निषेधे तात्पर्ये तु ‘ ज्योतिष्टोमेन स्वर्गकामो यजेत ’ इति कुरु कर्मैवेत्यर्जुनं प्रति भगवत्कृतकर्मविधानोपदेशश्च न संगच्छेतेति भावः ।

ननु कस्याश्चिदपि विद्याया नाप्रामाण्यमित्युक्तं तदसमीचीनमिव भाति । कथमेतदवगम्यत इति चेत्, अत्र केचित्प्रत्यवतिष्ठन्ते । तथाहि––काठकं तैत्तिरीयकमित्यादिसमाख्यास्तत्तद्वेदविषया लोके दृश्यन्ते । काठकमित्यादौ तद्धितप्रत्ययश्च ‘ तेन प्रोक्तम् ’ इति पाणिनिसूत्रेण प्रोक्तार्थे विधीयते । ततश्च व्यासेन प्रोक्तं वैयासिकं भारतं पाणिनिना प्रोक्तं पाणिनीयमित्यादौ पाणिनिव्यासादिपुरुषकर्तृकत्ववत्कठेन तित्तिरिणा चर्षिणा प्रोक्तं वेदवाक्यं काठकमित्यादावपि तित्तिरिकठाद्यृषिप्रणीतत्वाद्वेदानां सुस्पष्टमेव पौरुषेयत्वं प्रतीयते ।

युज्यन्ते चेमाः समाख्या वेदानां कृतकत्वे न नित्यत्वे । ननु प्रोक्तार्थे तद्धितविधानदर्शनात्कठादीनां वेदप्रवचनकर्तृत्वं स्यान्न वेदकर्तृत्वम् । तथा च प्रवचननिमित्ताः काठकादिसमाख्या न कर्तृत्वनिबन्धना इति चेद्भ्रान्तोऽसि । प्रवचननिबन्धनत्वे हि संज्ञानाम् , प्रवचनस्यानेकपुरुषसाधारण्यादाहत्य काठकविशेषणानुपपत्तेः । तस्मात्कर्तृत्वनिमित्ता एव समाख्याः । कर्तृत्वं चैकस्यैवेति युक्तं विशेषणं भवति । किं पुनर्वाक्ये पुंसः कर्तृत्वमिति चेत्––यः स्वातन्त्र्येण पदानि वाक्यत्वेनाऽऽरचयति स कर्तेत्युच्यते लोके । यस्तु यथैव हि पुरुषान्तरेणोच्चारितं तथैवाहमुच्चारयामीति मनसि कृत्वोच्चारयति नासौ लोके कर्ता भवति । पुरुषान्तरकर्तृकोच्चारणसमानमुच्चारणं हि बहूनामप्येकस्मिन्वाक्ये संभवतीति कथमिवाऽऽहत्य काठकादिविशेषणं संगच्छताम् । असाधारण्येन हि व्यपदेशाः समवलोक्यन्ते । यथा––भूमिसलिलानिलबीजादिसामग्रीसमवधानजन्माऽप्यङ्कुरः शालिबीजत्वेन व्यपदिश्यते शाल्यङ्कुर इति । न तु भूम्यादिभिः, तेषां घटादिकार्यान्त-

रेष्वपि साधारणत्वात् । तस्मादसाधारणत्वात्कर्तृनिबन्धनाः काठकादिसमाख्या इति वेद-पौरुषेयत्ववाचोयुक्तिः सुसमीचीना ।

किंच लोके यद्यद्भारतरामायणादिलौकिकं वाक्यजातं तत्तत्सर्वं पुरुषकर्तृकं दृश्यते तत्सामान्यादिदमपि वैदिकं वाक्यजातं कर्तृपूर्वकं भवितुमर्हतीत्यनुमीयत इत्युच्यते । तथा च प्रयोगः—विवादास्पदं वेदवाक्यं पुरुषकर्तृकं वाक्यत्वात्, कालिदासविरचितरघुवंशादिग्रन्थवत्, इति । तस्मात्पौरुषेया वेदा इति मन्यन्ते । पौरुषेयत्वं च पूर्वानुपूर्व्यनपेक्ष-पुंविशेषबुद्ध्यधीनानुपूर्वीमत्त्वम् । ततश्च वेदानां पुरुषबुद्धिप्रभवत्वेन, पुरुषबुद्धेश्च 'भ्रान्तेः पुरुषधर्मत्वान्निर्दोषमिति नाऽऽग्रहः' इत्यभियुक्तोक्तन्यायानुसारेण विप्रलम्भभ्रान्त्यादिदोषावश्यंभावेन तदधीनानुपूर्वीकाणां वेदानामपि पुरुषबुद्धिगतविप्रलम्भभ्रान्त्यादि-दोषासंस्पर्शस्य सुरगुरुणाऽपि गुरुणा वक्तुमशक्यत्वात्कथमिवाऽऽश्वासस्तेष्विति न वेदाः प्रामाण्यपदवीमारोहन्ति । अत एव च तेषां तथा सूत्रणं भवति—'धूर्तप्रलापो वेदः' इति ।

एवं मन्तारो नास्तिका एवेति तैः सह संलापापेक्षया वरं मौनमिति युक्त्यायात-मपि धूर्तैस्तैस्तदेवास्मन्मौनं सहायत्वेनाऽऽलम्ब्य दुर्युक्त्याभासैस्तदनभिज्ञाँल्लोकान्वञ्चयित्वा जगति विस्तरतां नीयमानं वेदाप्रामाण्यमन्धस्यैवान्धलग्नस्य विनिपातः पदे पदे, इति न्यायेन तानिव तदनुयायिनोऽपि विनिपातयेत्तदेतन्मनसि कृत्वा 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इत्यभियुक्तोक्तेरनर्थप्रतीकारादनर्थप्रतिबन्धस्यैव युक्तिसहत्वेन जगद्वि-निपातपरिजिहीर्षयोत्तरप्रपञ्चो युक्तिप्रयुक्त्याऽनेकप्रमाणानुगृहीतः शास्त्रकृत्संमत आरभ्यते । तत्र यदुक्तं काठकं तैत्तिरीयमित्यादिसमाख्याबलाद्वैयासिकं भारतमित्यादाविव व्यासेनेव वेदेष्वपि केनचन पुरुषेण कर्त्रा भवितव्यमिति । तत्रोच्यते—

'वाक्यत्वात्पौरुषेयत्वं दृश्यादर्शनबाधितम् ।
प्रतिहेतुविरुद्धश्च हेतुरस्मादकृत्रिमः' ॥

अत्रायमभिसंधिः—यथा कालिदासादिग्रन्थेषु तत्तत्सर्गावसाने कर्तृनामनिर्देश उपलभ्यते तथा वेदानां यदि कश्चित्कर्ताऽभविष्यत्तदा कालिदासादिवदुपालप्स्यत । न चोपलभ्यते वेदानां कर्ताऽध्येतृपरम्परयाऽपि । नन्वेवं रूपावल्यादीनामपौरुषेयत्वं प्रसज्येत । श्रूयते हि परम्परया मत्स्य...समयमारभ्याद्यावदासेतु आहिमाचलं सर्वैः पण्डितैः पण्डितंमन्यैर्वा प्रारम्भे सैव प्राग्धीता । इदानीं चाधीयतेऽग्रेऽप्यध्येष्यते सैव । परंतु न तत्र कर्तृनाम केनाप्युपलभ्यते नाप्यध्येतृपरम्परया वा श्रूयत इति चेत्—यथा संस्कृतं प्रविविक्षोश्छात्रस्य तदध्ययनमतीवोपयुज्यते तथा तत्प्रणेतुर्नाम नातीवोपयुज्यत इति लुप्तप्रायमित्यतो न ज्ञायते न तु कर्ता नास्तीति । तद्वद्वेदानामपि कर्तुर्विस्मरणमिति

सांप्रतम् । न त्वस्य विस्मरणं संभवति । लौकिकवाक्येषु अध्ययनपरम्परया अविच्छेदेऽपि अनुपयुक्ततया कर्तुर्विस्मरणं युज्यते वैदिकवाक्येषु तु तदर्थानुष्ठानस्य कर्तृज्ञानपूर्वकत्वेनोपयुक्ततया तदज्ञानेऽनुष्ठाननैष्फल्यापत्तेर्न प्रणेतृविस्मरणं संभवेत् । तथा हि–' यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते ' इत्युपक्रम्य ' तस्मादेतानि मन्त्रे मन्त्रे विद्यात् ' इति श्रुतिर्ऋषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति । ऋष्याद्यज्ञाने तु दोषित्वं च स्थाणुं वर्च्छतीत्यादिना प्रतिपाद्यत इत्यर्थः । ततो यदि वेदानां कर्ता कश्चिदभविष्यत्ततोऽवश्यमध्येतृपरम्परया कालिदासवदस्मरिष्यत् । न त्वसौ स्मर्यते । न च विस्मरणम् । तत्प्रत्ययेन हि तदा सर्वपुंसां वेदार्थानुष्ठानम् । अन्यथाऽनुष्ठानस्यानर्थावहत्वापातात् । अतः संप्रदायाविच्छेदे कथमसौ विस्मर्येत । तथा च स कर्ताऽवश्यं स्मर्तव्यः । न च स्मर्यते, तेन मन्येथाः संप्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वाच्छशविषाणवदभावात्मनाऽध्यवसीयते कर्ता । तस्मादपौरुषेया वेदा इति चेत्तदेतन्मन्दम्—विशेषणासिद्धेः । वेदपौरुषेयत्वोत्प्रेक्षिभिः प्रलये संप्रदायविच्छेदस्याङ्गीकारात् ।

किंच किमिदमस्मर्यमाणकर्तृकत्वमभिप्रेयते भवता, अप्रमीयमाणकर्तृकत्वं वाऽस्मरणगोचरकर्तृकत्वं वा । नाऽऽद्यः कल्पः कल्पते । परमेश्वरस्य तत्कर्तृत्वेन प्रमितेः स्वीकारात् । द्वितीयेऽपि किमेकेनास्मरणमभीप्सते वा सर्वैर्वेति विकल्पो दुरुद्धरः । एकेनास्मरणमिति प्रथमे पक्षे ' यो धर्मशीलो जितमानरोषः ' इत्यादिमुक्तकोक्तिषु व्यभिचारः । ' तत्केन कं पश्येत् ' तत्तत्र विद्यावस्थायां कः कर्ता केन करणेन कं विषयं पश्येदित्यादिना द्वितीयाभावेन क्रियाकारकादिसर्वव्यवहारनिराकरणश्रुतेर्मुक्तस्य मुक्तकोक्तिषु कर्त्रनुसंधानाभावेनैकेन मुक्तेन कर्त्रस्मरणात्पौरुषेयत्वापत्तिरित्यर्थः । द्वितीयेऽपि सर्वैरस्मरणस्यासर्वज्ञैर्दुर्ज्ञेयत्वादिति ।

अपि च ' ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ' । इति पुरुषसूक्ते वेदस्य सकर्तृकताप्रतिपादनादपौरुषेयत्ववाचोयुक्तिरयुक्ता । यदपि परमेश्वरस्याशरीरस्य ताल्वादिस्थानाभावेन वर्णोच्चारणासंभवात्कथं तत्प्रणीतत्वं वेदस्य स्यादिति चेन्न तद्भद्रम् । वस्तुतोऽशरीरस्यापि परमेश्वरस्य भक्तानुग्रहार्थं लीलाविग्रहधारणसंभवात् । तस्मात्पौरुषेया वेदा इति कथं नाप्रामाण्यमिति प्राप्तेऽभिधीयते—

यदिदं पौरुषेयत्वं सिसाधयिषितं तत्किं पुरुषादुत्पन्नत्वमात्रं वा प्रमाणान्तरेणार्थमुपलभ्य तत्प्रकाशनाय पुरुषेण रचितत्वं वा । तत्र प्रथमपक्षे न विवादः । द्वितीये पक्षेऽनुमानबलात्तत्साधनं वक्तव्यम् । तच्च न । मालतीमाधवादिवाक्येषु वाक्यत्वहेतोः सव्यभिचाररूपहेत्वाभासत्वात् । तादृशवाक्यानां कल्पितत्वेन प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वाभावात्तत्र च वाक्यत्वहेतोः सत्त्वात् । अथैतद्दोषपरिजिहीर्षया प्रमाणत्वे सतीति

विशेषणं हेतौ दीयत इति चेत्तदपि न विपश्चितां मनोरमम् । प्रमाणान्तरागोचरार्थप्रतिपादकं हि वाक्यं वेदवाक्यं तत्प्रमाणान्तरगोचरार्थप्रतिपादकमिति साध्यमाने मम माता वन्ध्येतिवद्वदतो व्याघातापातात् । तस्मान्नानुमानं वेदानां पौरुषेयत्वं साधयितुमवकल्पत इति यदि वेदानां कर्ता कश्चित्स्यात्ततोऽध्येतृपरम्परयाऽवश्यमुपलभ्येत । न चासावुपलभ्यते ततो नास्त्येव कर्ता वेदानामित्यपौरुषेया वेदा इति योग्यानुपलब्धिनिराकृते वेदकर्तृत्वे काठकादिसमाख्याः कर्तृनिमित्ता न संभवन्तीति प्रवचनसंप्रदायप्रवर्तकत्वनिबन्धनैव काठकादिसमाख्या इति ।

ननु तादृशप्रवचनस्यानेकपुरुषैरपि कर्तुं शक्यत्वात्काठकादिविशेषणस्वारस्यभङ्गापत्तेर्न प्रवचननिमित्ताः समाख्या युज्यन्त इत्युक्तमिति चेन्न भवान्प्रवचनपटुः । यावता प्रवचन एवातिशययोगेन कठस्यासाधारण्यात्तत्त्वेन विशेषणसंभवान्नांशेनापि स्वारस्यभङ्गापत्तिः । ततश्चापौरुषेयत्वाद्वेदानां नाप्रामाण्यमिति सर्वं समञ्जसम् ।

तत्रापरा, ऋग्वेदो यजुर्वेद इत्यादिनोपवर्णिता । तत्र वेदो नाम धर्मब्रह्मप्रतिपादकापौरुषेयं प्रमाणभूतं वाक्यमित्याचक्षते । ऋग्वेदस्तु अर्थोपेतपादघटितगायत्र्यादिवृत्तबद्धा 'अग्निमीळे' इत्याद्या ऋचः । ता एव गीतिसंवलिताः सामवेद इत्युच्यते । वृत्तगीतिविवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजुर्वेद इति परिभाष्यते । त एते वेदा यज्ञनिर्वाहाय संप्रदायपरम्परया प्रवृत्ताः । तदुक्तम्—'वेदा हि यज्ञार्थमभिप्रवृत्ताः' इति । तत्र 'यदृचैव हौत्रं क्रियते यजुषाऽऽध्वर्यवं साम्नोद्गीथम्' इतिश्रुत्यनुसाराद्धौत्रप्रयोग ऋग्वेद उपयुज्यते । आध्वर्यवप्रयोगे यजुर्वेद औद्गात्रप्रयोगे च सामवेदो विनियोज्यते । अथर्ववेदस्तु यज्ञानुपयुक्तः शान्तिकपौष्टिकाभिचारादिकर्मप्रतिपादकत्वाद्भिन्न्योऽत्यन्तवैलक्षण्यभाग्भवति । एवं च कर्मबोधकत्वात्कर्मोपयिकत्वाच्च कर्मात्मकोऽयं वेदभागः कर्मकाण्ड इत्यवगतो लोके । ऋग्वेदोपवेद आयुर्वेदो धन्वन्तर्यश्वीन्द्रादिभिरुपदिष्टश्चरकेण संक्षिप्त इति वक्तृपरम्परातोऽवगम्यते । एवं यजुर्वेदोपवेदो धनुर्वेदः पादचतुष्टयबद्धो विश्वामित्रेण प्रणायि । सामवेदोपवेदो गान्धर्ववेदो भगवता भरतेन प्रणीतः । अथर्ववेदोपवेदोऽर्थशास्त्रं तु अनेकविधं नानामुनिभिः प्रणीतमित्याचक्षते ।

उपनिषद्भागस्य तु ज्ञाननिरूपणपरस्य ज्ञानकाण्डत्वं ब्रुवते । इयमेव परा विद्योच्यते । सैव च 'अथ परा यया तदक्षरमधिगम्यते' इति मुण्डकोपनिषदि प्रदर्शिता । परविद्यायाः श्रेष्ठत्वं च परशब्देनैव सूचितम् । एवं च श्रुतिषु कश्चिद्भागः कर्मप्रतिपादकः कश्चिच्च भागो ज्ञानप्रतिपादक इति सिद्धम् । तत्र प्राणभृन्मात्रेण मोक्षावस्थाप्राप्तये कर्ममार्गोऽवलम्ब्यतामुत ज्ञानमार्ग आहोस्विदुभयम् । उभयमार्गावलम्बपक्षे च प्रथममयं पश्चाच्चायमिति क्रमेण, किंवा स्वच्छन्दं द्वयोरेक आदाववलम्बनीयः । यदि चान्यतर एव

समाश्रयणीयस्तदोभयोर्मध्ये को वा ज्यायानित्यनेके संशयाः पुरतः समवतिष्ठन्ते। संसारावर्ते पुनः पुनरध ऊर्ध्वं च निमज्जतो जनानुद्धरन्त्या मातापित्रपेक्षयाऽप्यधिकवात्सल्यवत्या श्रुत्या संशयापाकरणेन सदेकमार्गप्रदर्शनपरयैव भाव्यं न पुनरज्ञानां मार्गद्वयप्रदर्शनेन संदेहे पातयन्त्या भवितव्यम्। अथ कदाचित्कस्मिंश्चित्प्रकरणे सर्वसंदेहनिरसनपुरःसरं मार्गद्वयसंगतिरविरोधेन वर्णिता भवेत्तथाऽपि अधुनोपलब्धश्रुतिषु न सा दृष्टिपथमापतति। श्रुतिसंप्रदायश्चतुर्मुखादारभ्य प्रचलितोऽपि अध्येतृमतिदौर्बल्यात्कियानपि श्रुतिभागोऽध्ययनपरम्परातः परिभ्रष्टः कालेन समूलं लोपमभिप्राप्तो भवेत्तेन सह मार्गद्वितयसंगतिप्रकरणेनापि परिलुप्तेन भवितव्यम्। एतादृगवस्थायामर्थादेव संशयव्यपाश्रयो मतभेदः समजनि। समजनि च लोकानां यथाभिरुचि प्रवृत्तिः। तामेतामव्यवस्थामालोच्य सहस्राक्षप्रमुखैर्देवैः समभ्यर्थितः परमात्मा व्यासावतारं दधार। अथ च तदानीमुपलब्धश्रुतीः परस्परविरोधपरिहारपुरःसरं व्यवस्थाप्य लोकानां तदर्थयाथात्म्यज्ञानाय तदनुसारं ब्रह्मसूत्राणि रचयामास। ब्रह्मसूत्रकृतः प्राक्तने समये जगत्यां किं विशिष्टाद्वैतवादः प्रचलित आसीदुत वा मायावादः, तदिदं निश्चेतुमेतर्हि न किंचिद्बलवत्साधनमुपलभामहे। सूत्रकारादनन्तरं तु विशिष्टाद्वैतमतमनुसृत्य बोधायनाचार्यैर्ब्रह्मसूत्रोपरि वृत्तिनामा ग्रन्थो विरचितः। द्रमिडाचार्यैर्भाष्यं प्रणीतम्। अथ च टङ्काचार्यैर्वार्तिकानि विरचितानि। एतस्मिन्नेवावसरे गुहदेवकपर्दिभारुचिप्रभृतयो नैकशो व्याख्यातारो विशिष्टाद्वैतमतमनुरुन्धानाः प्रावर्तिषत। ते च सर्वेऽप्यास्तिकत्वेनैकमततामायातास्तथाऽपि विशिष्टाद्वैतवादमायावादसगुणवादनिर्गुणवादपरिणामवादविवर्तवादारम्भवादादिभिः परस्परस्मिन्भेदमाकलयांचक्रुः।

इममभिसंधिं समीक्ष्य नास्तिकाः 'द्वयोः कलहे तृतीयस्य लाभः' इति न्यायादग्रे सद्रुमुदयंसिषुः। ततः कियत्यपि गते काले कर्ममार्गिणो मीमांसकाः प्रादुरभूवन्। अथ च तदानीतनराजसहायाः सन्तो नास्तिकान्वेदान्तिनश्च नामशेषतामिवानैषुः। अमुष्मिन्नवसरे भगवांश्चराचरगुरुर्महेश्वरः श्रीशंकरः श्रीशंकराचार्यरूपेण जगतीतलेऽवतीर्य कर्ममार्गिभिः साकं विवादं कृत्वा तान्विजित्य लोके मायावादं प्रवर्तयामास। श्रुत्यर्थयथार्थज्ञानं मा भूदिति जनान्संमोहयितुं नारायणाज्ञया श्रीशंकरोऽवातारीदिति रामानुजसंप्रदायानुसारिणो वदन्ति। श्रीमदाचार्यशंकरपादा मायावादमुद्भाव्य तदनुरोधेन ब्रह्मसूत्रव्याख्यां शारीरकमीमांसाभाष्यमारचयांबभूवुः। अयं च मायावादो जगति तथा प्रथते स्म यथाऽन्येषां विशिष्टाद्वैतादिवादानां तदा नामापि नाश्रूयत। तदनन्तरं कियता कालेन विशिष्टाद्वैतमतमुद्धर्तुं रामानुजाचार्याणामवतारो बभूव। अथाऽऽचार्या वेदार्थसंग्रहादिग्रन्थान्प्रणीय विशिष्टाद्वैतमतं समर्थयांचक्रुः। अत्र ग्रन्थे श्रुत्याधारेण विशिष्टाद्वैतमतीयप्रधानसिद्धान्ताः कतिपये विवेचिताः। तथा श्रुतीनामेकवाक्यता परस्पर-

विरोधपरिहारेण प्रदर्शिता । तथाऽप्ययं विशिष्टाद्वैतवादः सूत्रकृतां संमत इति लोका नाग्रहीषुस्ततो लोकास्तथां विश्वस्युरिति विशिष्टाद्वैतमनुरुन्धाना ब्रह्मसूत्रव्याख्या विरचिता । इयमेव श्रीभाष्यमिति लोके प्रथिता । क्रमेण चाजस्रतन्तन्यमानपरमपुरुषनियमातिक्रमजनिततन्निग्रहसंकल्पविषयतया सवेगेन प्रतिकूलवातेन सुदूरं प्राप्यमाणानिव यात्रिकगणान् संसारसागरमहाप्रवाहमध्यपतिताञ्जन्तूनवलोक्य निरवधिककरुणार्द्रहृदयस्तेषां पुरुषोत्तमप्रसादमेव संसृतितरणोपायं मन्वानः, प्रसादस्य च निग्रहसंकल्पशान्तिपूर्वकतया, तस्याश्च भक्तिप्रपत्तिजन्यत्वेन 'भक्त्या त्वनन्यया शक्यः' 'भक्त्या त्वनन्यया लभ्यः प्रपत्त्या वा महामुने' 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादिपरःशतप्रमाणगणप्रमिततया तदनुष्ठानस्य च भगवत्स्वरूपगुणविभवादिज्ञानाधीनतया भगवत्स्वरूपगुणादेश्च गीतायां भगवता स्वयमेवोक्तत्वाद्विशिष्टाद्वैतानुसारेण गीताभाष्यं च प्रणिनायाऽऽचार्यः । अयं च रामानुजाचार्यावतारः शेषावतार इति तदनुयायिनोऽवगच्छन्ति । कोऽयं रामानुजाचार्यः, कं वा देशं वंशं च स्वजनुषाऽलंचकारेत्यत्र किंचिदुच्यते। अनितरसाधारणशेषसमाख्याविख्यातः सूर्यप्रणीरयमाचार्यः श्रीकान्तपादारविन्दमिलिन्दाय मानपरिचर्याचतुरजनसमाक्रान्ततया प्रख्यातानन्तगुणगणायां त्रिचनापल्ल्यभिधमहाप्रदेशप्रविष्टायां भूतपुर्यभिख्यायां नगर्यामनवरतानुष्ठितानभिसंहितफलक्रतुशतसंतोषितरमारमणस्य हारितान्ववायाकूपाराङ्कानभिज्ञशशाङ्कस्य सुगृहीतनाम्नः सोमयाजिनो लब्धवर्णस्य केशवभट्टस्य द्विजश्रेष्ठस्य भार्यायां शैलपूर्णसमानोदर्यायां भूदेव्यपरपर्यायायां सत्यां कान्तिमत्यां नवाब्धिखभूमिते शालिवाहनशके (१०४९) पिङ्गलाब्दचैत्रशुक्लपञ्चम्यामार्द्राभाजि जीववासरे प्रादुरास । एवमाविर्भूतः प्रकृत आचार्यो यथाविध्यनुष्ठितसंस्कारः काञ्चीपुरीनिवासिनो विबुधश्रेष्ठाद्यादवप्रकाशाभिधात्कणभक्षाक्षचरणपाणिनिगुरुकुमारिलभट्टप्रभृतिभिर्गुम्फितान्वाचोगुम्फानचिरेणैव सलीलं समग्रहीत् । तदात्वे च तद्देशाधीश्वरस्य दुहितरं कश्चिद्ब्रह्मराक्षसः संप्रविवेश । स तु नरपालो यादवप्रकाशं पण्डितं मान्त्रिकोत्तमं विदित्वा तमामन्त्रयांचकार । स च मान्त्रिकवर्यश्छात्रैः समवेतः क्षितिपतिसभां प्रविश्य तेन च यथार्हं विहितार्हणः कन्यां राक्षसाविष्टामाकारयामास । सा च कन्या भूतसंसृष्टोच्चैर्हसन्त्याह—हंहो मान्त्रिक मां समुच्चाटयितुं संप्राप्तोऽसि, परं किं न श्रुतं त्वया यच्छतशो मन्त्रवित्तमा मदीयेन सरभसाट्टहासेन भीताः सन्तः पलायांचक्रिर इति । किं च भवान्स्वप्राग्भवीयोदन्तमपि जानाति । त्वं किल पुरा गोधाभावमनुप्राप्य कस्मिंश्चिद्द्रुमगुल्मे वसञ्शेषाचलशिखरशेखरायमाणस्य भगवतः श्रीनिवासस्य संदर्शनाय प्रस्थितानां हरिदासानां भुक्तावशिष्टाशनेन विप्रभूयं गतवान् । अहं तु श्रीनिवासदासोऽध्वरैस्तं भगवन्तं समाराधयंस्तत्र स्वरभ्रेषेण ब्रह्मराक्षसोऽभूवम् । परं तु योऽयं त्वदन्तेवासी लक्ष्मणाभिख्यो भस्मावृतोषर्बुधस्फुलिङ्ग इव स्वमाहात्म्यं निरतिशयमपि अप्रकाशयन्प्राकृत इवाऽऽस्ते स यदि स्वपादारविन्दद्वयं ममोत्तमाङ्गे न्यस्य मामनुशिष्यात्तदा यथानुशासनमनुतिष्ठा-

सीति। भूपतिश्चैतच्छ्रुत्वा सविनयं प्रणम्य गुरुवर्यं प्रार्थयांचक्रे। गुरुप्रकाण्डश्चासावुररीचकार भूपालाभ्यर्थनाम्। दुहितरमाविष्टो ब्रह्मराक्षसश्च गुरुमेनमभिवन्द्य तदीयपादतामरसं स्वमूर्ध्नि धृत्वा धन्योऽस्मि कृतकृत्योऽस्मीति ब्रुवंस्तां कन्यां परित्यज्य प्रयातः। तदनु प्रहर्षितेन राज्ञा विहिताभ्यनुज्ञो यादवप्रकाशः शिष्यैः सत्रा स्वोदवसितं प्रायात्। अथ कदाचिद्यादवप्रकाशस्याभ्यञ्जनं कुर्वति गुरुवरे 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यस्याः श्रुतेर्मर्कटपृष्ठसदृक्षे भगवतोऽक्षिणी इत्यर्थमाकर्ण्य शोकेनोदबिन्दून्व्यसृजत्। ते चानलाणव इव तदूरोरुपरि न्यपतन्। तदिदं वीक्ष्य यादवप्रकाशः स्वान्तेवासिनमेनमाचार्यमप्राक्षीत्। कुतस्तेऽयं शोक इति। सोऽब्रवीत्। श्रुतेरस्याः समीचीनेऽर्थे संभवति भवद्भिरुक्तमपार्थं श्रुत्वा मम मनो दूयत इति। स च कोऽसौ समीचीनार्थ इति तं पृष्टवान्। आचार्यशिरोमणिरयं कं पिबतीति कपिः सूर्यः, तेनाऽऽस्यते विकसितं क्रियत इति, कमुदकं प्यास आसनमुद्भवो वा यस्येति, कपिर्नालं तस्मिन्नास आसनं यस्येति च व्युत्पत्त्या रविकरविकसितगम्भीराम्भःसमुद्भूतसुमृष्टनालपुण्डरीकदलामलायते भगवतोऽक्षिणी इत्यर्थत्रयमुपन्यस्योत्तरयांचकार। एवमस्य गुरोर्भगवत्प्रेमातिशयोऽनितरसाधारणं निगमान्ततत्त्वार्थनिरूपणकौशलं तदितरविषयवैतृष्ण्यमित्यादयो गुणा दिने दिनेऽवर्धन्त।

अथ काञ्चीनगरे वसति गुरुवरे यामुनार्यनामा श्रीरङ्गनिवासी गुरुवरो लक्ष्मणार्यस्य गुणगणाञ्छ्रुत्वा विषयेऽस्मिन्किंचित्कुर्वता मया भवितव्यमिति मन्यमानोऽपि शास्त्रान्तराभ्यासपरिसमाप्तिं प्रतीक्षमाणस्तदात्व एव स्वस्य मुक्तिघण्टापथप्रस्थानवासरं प्रत्यासन्नं मन्वानो महापूर्णमेतदानयनाय प्राहिणोत्। आकर्ण्य चैनं वृत्तान्तं चिरकाङ्क्षितयामुनार्यशिष्यभावो गुरुवरस्त्वरया गरीयस्या निरगाच्च काञ्चीनगरात्। स यावद्रङ्गनगरं नाऽऽससाद तावदेव यामुनार्यः समलमकार्षीद्वैकुण्ठलोकम्। गच्छन्नेव हाटकनिम्नगायास्तटे दक्षिणे पश्यन्नतिमहतीं परिषदं श्रीवैष्णवानां विदितयामुनार्यवृत्तान्तो नितान्ततान्तो यामुनार्यविप्रयोगजनिते महति शोकसागरे न्यमाङ्क्षीत्। चिराल्लब्धसंज्ञ उपसृत्य तच्चरमविग्रहमाचार्यस्याऽऽपादमौलि संसेवमानो दक्षिणे करे संकुचितकरशाखात्रितयमद्राक्षीदप्राक्षीच्च तत्रत्यानन्तेवासिजनान्। कदान्वङ्गुलित्रयं समकुच्यत कीदृश्यस्य शरीरे रुगजनीति च। ते च प्रत्यब्रुवन्। न कदाचिदपि रुजाऽस्याऽऽविरासीत्। निर्याणानन्तरमेवाऽऽकुञ्चितमङ्गुलित्रयमिति। पुनरपि तान्पप्रच्छ किमस्यापूरितो मनोरथ आसीत्, इति। ते प्रत्यूचुः—श्रीशारीरकमीमांसासूत्रस्य बोधायनमहर्षिप्रणीतवृत्तिग्रन्थानुसारिणी नातिसंक्षिप्ता नातिविस्तृता व्याख्या प्रणेतव्या, व्यासपराशरयोरस्मत्सिद्धान्तप्रवर्तकयोर्नाम तत्कृतोपकारस्मृतिफलतया प्रकटनीयम्, प्रसन्नजनकूटस्थेन श्रीशठमथनमुनिना प्रवर्तितायाः द्रमिडोपनिषदो व्याख्या च कर्तव्येति वारंवारं कथयन्त एवाऽऽसन्, एतत्त्रयमपि न कृतमेवेति। एतद्वचनं निशम्य सर्वमहं करिष्ये, इति प्रतिज्ञातवान्। अनन्तरं च —

शाखाः पूर्ववदासन् । यामुनार्यस्यानन्तरकर्तव्यशेषे यथाक्रमं निर्वृत्ते लक्ष्मणार्योऽयं तुरीयाश्रमश्रीपरिष्कृतः कूरनाथदाशरथिमुख्यैश्छात्रैः समवेतस्तेषां तत्त्वार्थानुपदिदेश । अथ कदाचिद् दिगन्तभारतवर्षप्रतिभटबाधकविजयाय प्रस्थितो वाराणस्यां सरस्वतीमन्दिरमभ्यगात् । तदा च भारती स्वयमेवाभिमुखमाजगाम । अथ च 'तस्य यथा कप्यासं पुण्डरीकम्' इत्यस्याः श्रुतेः सम्यगर्थं ब्रूहीति तं पृष्टवती । यतिराजोऽपि तदर्थं न्यरूपयत् । तच्छ्रुत्वाऽतितुष्टा तुष्टाव तं शिरसा । तत्कृतं च भाष्यं स्वमूर्ध्ना संभाव्य तस्यैवेदं श्रीभाष्यकार इति नाम युज्यत इत्युक्त्वा सादरं तं विससर्ज । एवमयं महावैभवशाली लक्ष्मणार्यस्तस्य माहात्म्यातिशयस्तु सहस्रवदनेनापि वर्णयितुमशक्य इति प्रपन्नामृतादिग्रन्थेष्वनुश्रूयते । निरुक्तसंयमिसार्वभौममणेर्विशिष्टाद्वैतमतप्रतिपादकवेदार्थसंग्रहश्रीरङ्गगद्यश्रीवैकुण्ठगद्यशरणागतिगद्यश्रीभाष्यादिमुख्यनिबन्धनवकान्तर्गत एव गीताभाष्यनामा प्रबन्धो विराजते । निखिलश्रुतिभिरेकवाक्यतया प्रतिपादितं स्वीयपरमतात्पर्यभूतं श्रीशंकरार्यगुरुमुखाम्बुजनिःसृतमकरन्दमिवाखिललोकहिततमं मायावादमसहिष्णव इव रामानुजाचार्या मायावादिमतोच्चाटनार्थं प्रावर्तन्तेति स्वनिबन्धेषु स्थले स्थले मायिकमतं निरूप्य तत्रासमाधानं प्रकाशयद्भिस्तैरेव स्वाशयः प्रकटीक्रियते । अथापि तेषामयं यत्नः कियानपि हि सफलोऽभूदिति उभयमतपरीक्षणक्षमबुद्धिभिर्वाचकैः स्वमनसि तुलनात्मकदृशा विचारणीयम् ।

अथोभयवादिमतयुक्तायुक्तत्वविचारसौलभ्याय विशिष्टाद्वैतमतप्रक्रिया समासतो निर्दिश्यते—प्रसिद्धं ह्येतस्मिञ्जगति आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति त्रिविधं दुःखं भवतीति । तस्य चाऽऽत्यन्तिकी निवृत्तिर्मोक्षावस्थायामिति निर्विवादम् । तादृगवस्थायाश्च प्रधानं साधनं परमात्मस्वरूपयाथात्म्यज्ञानमिति सर्वेषामास्तिकवादिनामविरुद्धम् । नास्तिकास्तु परमात्मानमेव न मन्यन्ते दूरे तस्य ज्ञानं तन्मोक्षावस्थायाश्च साधनमिति । इत्थं हि तेषां मतम् । यस्य किल सत्तयाऽऽहारनिद्राभयमैथुनानि प्रसिध्यन्ति । येन हि स्वेष्टानिष्टे ज्ञात्वा तदुपलब्धये तत्परिवर्जनाय च प्रयत्यते । यस्मिंश्च निरतिशयः प्रेमोपलभ्यते । यो हि सर्वैः सर्वदा सर्वस्मात्संरक्ष्यते । यस्यास्तित्वमेव चिरं प्रार्थ्यते न नास्तित्वम् । यस्य सुखाय नानाविधान्यकार्याण्यप्यनुष्ठीयन्ते । यस्य च कृते कापट्यमवलम्ब्यते मात्सर्यं बहु मन्यते सर्वानर्थकारी क्रोधोऽङ्गीक्रियते लोभो ध्रियते मोहो न परित्यज्यते मदः समालिङ्ग्यते दुराचरणेनापि कामः पूरयितुमभिलष्यते स एवाशेषाभिलापास्पद आत्मा । एवंगुणविशेषणविशिष्टश्च देह एवोपलभ्यते प्रत्यक्षेण, न तदतिरिक्तः कोऽपि परमात्मपदवाच्य इति तेषामाशय इति परिहीयते सर्वश्रुतिस्मृत्यसंमता प्रासङ्गिकी कथा ।

विशिष्टाद्वैतवादिरामानुजमते प्रत्यक्षानुमानशब्दरूपं त्रिविधमेव प्रमाणम् । उपमानार्थापत्त्यनुपलब्धिरूपप्रमाणत्रयं तु पूर्वोक्तेषु त्रिष्वेवान्तर्भवतीति नातिरिक्तं प्रमाणा-

न्तरम् । तदेतत्प्रमाणत्रयसिद्धं वस्तु तत्त्वपदवाच्यं भवति । तच्च तत्त्वं त्रिप्रकारकं जडं जीवं ईश्वरश्चेति । क्वचिदचिच्चिदीश्वरेति भेदत्रितयं दृश्यते । जडं नाम पाञ्चभौतिकशरीरादिकं परिदृश्यमानमखिलं जगत् । जडापेक्षया स्वरूपस्वभावाभ्यामत्यन्तभिन्नस्तदन्तर्यामी जीवः । स च बद्धमुक्तनित्यभेदात्त्रिविधो भवति । जीवस्याप्यन्तर्यामी सन्कल्याणगुणगणाकरत्वेन हेयगुणपरित्यागेन च तस्मादतिविलक्षण ईश्वरः । अयमेव परमात्मब्रह्मेत्यादिशब्दैरुच्यते । अयं सर्वावस्थजीवजडव्यापी तदुभयान्तर्यामी तदुभयं नियमयति । जडजीवौ मिलित्वा परमात्मनः शरीरं भवति । तदपि द्विविधं सूक्ष्मं स्थूलं च । सूक्ष्मशरीरविशिष्ट ईश्वरः स्थूलस्यास्य जगत उपादानकारणं समस्ति । ईश्वरस्य स्वरूपं ज्ञानं शरीरं चेति त्रयं व्यापकमेव । परमात्मा यद्यपि अनेककल्याणगुणाश्रयस्तथाऽपि ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपाः षडेव मुख्यास्तस्य गुणाः । अस्येश्वरस्य पञ्च प्रकाराः परव्यूहविभवान्तर्याम्यर्चावतारभेदात् । जीवेश्वरभेदाऽज्ञस्येव न त्वौपाधिकी । सत्त्वरजस्तमोरूपगुणत्रयवती चतुर्विंशतितत्त्वात्मिका नित्या प्रकृतिः सर्वस्य जगतो मूलप्रकृतिः । चतुर्विंशतितत्त्वानि तु—प्रकृतिर्महदहंकारमनःपञ्चज्ञानेन्द्रियपञ्चकर्मेन्द्रियपञ्चतन्मात्रपञ्चभूतानि । परमात्मा यद्यपि सर्वव्यापित्वात्प्राणिमात्रस्य संनिहित एव तथाऽपि सर्वभूतेषु गूढ इति श्रुतेः सर्वेषु अत्यन्तं गूढतयाऽवस्थानस्य श्रूयमाणत्वेन स्थिरतरप्रयत्नविशेषादृते न शक्यो ज्ञातुम् । जडवस्तुषु पृथ्वीजलतेजांसि स्थूलानि द्रव्याणि दृष्टिगोचरतां नातिक्रामन्ति । वाय्वाकाशौ द्रव्ये न कदाऽपि दृग्गोचरतां प्रयातः । पञ्चमहाभूताख्यद्रव्याणां परिणामाच्छरीरेन्द्रियाण्युत्पद्यन्ते । तत्र शरीरं तावद्दृग्विषयत्वेनानुभूयत एव । इन्द्रियाणि तु सूक्ष्मत्वान्न कदाऽपि चाक्षुषं प्रत्यक्षं जनयन्ति । जडवस्त्वन्तर्यामी जीवात्मा सूक्ष्मत्वद्दृग्विषयो न भवति । केवलमन्तःकरणेन तु साधनेन जीवस्य स्वरूपं ज्ञायते । परमात्मनस्तु सूक्ष्मजीवस्याप्यन्तर्यामित्वेन तत्स्वरूपं सुतरां दुर्विज्ञेयम् । यथैव हि पयसि निगूढतया स्थितं घृतं मन्थनदण्डेन प्रमथ्य पृथक्क्रियते तदैवोपलभ्यते तद्वदन्तःकरणरूपमन्थनदण्डेन यदा जीवः स्वात्मानं प्रमथ्य पृथक्कुर्यात्तदैव तदन्तर्यामी परमात्मा ज्ञानविषयो भवति । जीवात्मनो मन्थनं नाम जीवात्मनः स्वस्वरूपयाथात्म्यज्ञानमेव । जीवस्वरूपयाथात्म्यज्ञानादनन्तरं यत्किंचित्तदन्तर्दृश्येत स एव परमात्मा । परमात्मनः शरीरं जीवः, जीवस्य तु स्थूलदेहः शरीरम् । एतत्त्रितयसंबन्धस्यात्यन्तं दृढतमत्वात्तद्याथात्म्यज्ञानं नानायासेन सिध्यतीति तत्स्वरूपगुणविभवादियथात्वज्ञानाय ब्रह्मसूत्राणि भगवद्गीतोपनिषदं च भाष्यमारचय्य भूषयांचकार रामानुजाचार्यः । भक्तिप्रपत्तिभ्यां प्रसन्न ईश्वरो मोक्षं ददातीति भक्तिप्रपत्त्योरेव मुख्यं मोक्षोपायत्वम् । तदशक्तस्य तु भक्तियोगसिद्ध्यर्थमात्मावलोकनमपेक्षितम् । तच्चाऽऽत्मावलोकनं कर्मयोगान्निर्मलान्तःकरणस्य ब्रह्मविचाररूपज्ञानयोगाज्जन्यते । एवं च परमात्मस्वरूपयाथात्म्यज्ञानजन्यभक्त्या प्रसन्न ईश्वर एव मोक्षं ददाति । मोक्षावस्था च

जीवात्मनः परमात्मना सादृश्यं न तु परमात्मनैक्यम् । वस्तुतो भिन्नयोरैक्यस्यात्यन्तासंभवात् । त्रिगुणात्मिका प्रकृतिरेव च तत्परिणामभूतं विस्तृतं जगदीश्वरस्य लीलाविभूतिः । पञ्चीकृतपञ्चमहाभूतानि महत्तत्त्वमहंकारस्त्रिगुणप्रकृतिश्चेत्येतत्तत्त्वाष्टकात्स्थूलशरीरं समुत्पद्यते । पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाण्येकादशं मनश्चेत्येतान्यहंकारवच्छरीरमलंकुर्वन्ति । प्रकृतिपरिणामसंभूतं पाञ्चभौतिकं जगदनित्यम् । जीवा जडानि च मिलित्वा परमात्मनः शरीरमित्युक्तम् । तादृशशरीरविशिष्टपरमात्मैकमेव तत्त्वम् । शरीरविशिष्टपरमात्मव्यतिरिक्तं किंचिदन्यन्नास्त्येव । जीवा जडाश्च पदार्था यद्यपि विशिष्टपरमात्मनः सकाशान्न भिन्नास्तथाऽपि केवलपरमात्मनो भिद्यन्त एव । परमात्मा स्वतन्त्रोऽथ सर्वेषामाधारश्च । न तस्य कोऽप्यन्य आधारः । स च परमात्मा वस्तुत एव सगुणः । इन्द्रचन्द्रादीनामप्यपरिच्छेद्यानामसंख्येयकल्याणगुणानामाधारत्वात् । अयमेतन्मते विशेषः । श्रीशंकराचार्यास्तु परमात्मानं निर्गुणं वदन्ति । एवमनयोर्दर्शनयोः परस्परविरोधिनोऽन्येऽपि विशेषा दृश्यन्ते । ते च यथा—एकत्र मायावादोऽपरत्र तदस्वीकारः । तथैकस्मिन्नद्वैतविवर्तनिर्गुणब्रह्मानिर्वचनीयख्यातिवादा इतरस्मिंस्तु विशिष्टाद्वैतपरिणामसगुणब्रह्मसत्ख्यातिवादाः । परमात्मैकमेव तत्त्वं परमते चिदचिदीश्वररूपं तत्त्वत्रयम् । मुख्यमते जगन्मिथ्या तद्विरुद्धमते जगत्सत्यम् । जीवन्मुक्तिरस्तीति एकं दर्शनं जीवन्मुक्तिर्नास्तीति परं दर्शनम् । एकत्र जीवो विभुः परत्र जीवोऽणुः । परमात्मनैक्यं मोक्षस्त्वेकत्रेतरत्र परमात्मना साम्यम् । मुक्तौ जीवब्रह्मणोरभेदः । मुक्तावपि जीवब्रह्मणोर्भेदः । एवमन्येऽपि बहवो विशेषास्तत्तद्दर्शनपरिशीलनशालिभिरुत्प्रेक्षणीयाः । तत्र सगुणनिर्गुणवादमधिकृत्य किंचिदभिधीयते । सगुणब्रह्मवादिनो रामानुजास्तेषामयमाशयः—श्रुतिषु परमात्मनो जगत्कारणत्वस्यासकृच्छ्रूयमाणत्वात्तादृशजगन्निर्माणोपयुक्तानां गुणानां ब्रह्मणि अवश्यंभावात्सगुणः परमात्मा । यद्ययं निर्गुणः स्यान्न ततो जगन्निर्मातुं प्रभवेत् । तथा च जगत्कारणत्ववादिनी श्रुतिरसंगता स्यात् । लोकेऽपि येन येन यद्यन्निर्मीयते तेन तेन तत्तदुत्पत्त्यनुकूलगुणवता भाव्यमेव । यदि तु निर्गुण एवोत्पादयेत्तदा किमिति सर्वेण सर्वं न निष्पाद्यते । जगदेकदेशघटादेर्निर्मातुरीदृशी स्थितिस्तदा किमु वक्तव्यं सर्वजगन्निर्मातरि गुणाः सन्तीति । किंच सत्यं ज्ञानमनन्तमित्यादिश्रुतिषु स्थले स्थले स्पष्टमेव परमात्मनो गुणा वर्ण्यमाना दरीदृश्यन्ते । यदि तु तत्वत एव निर्गुणं ब्रह्म तदा श्रुतिस्तद्गुणानां नामापि न संकीर्तयेत् । छान्दोग्ये येन न परमात्मगुणा ज्ञायन्ते स यथेच्छं संचरितुं न प्रभवतीति परमात्मगुणानजानानो धिक्कृतः । आदावेवाज्ञानावृतत्वात्परमात्मानमलभमानं पुनः पुनः संसारचक्रे पर्यावर्तमानं जीवं किमिति मातृभ्योऽप्यधिकवत्सला श्रुतिः परमात्मन्यसतो गुणानारोप्यासत्यस्वरूपप्रदर्शनेन भ्रान्तस्य भ्रमम् [illegible] । ते च गुणाः पुनरसंख्येयाः । अत एव यतो वाचो निवर्तन्त इति परमात्मगुणानामियत्ताया अभावः

द्वाङ्मनसागोचरत्वमुच्यते । परमात्मनो निर्गुणत्वेन तत्र वाङ्मनसे न प्रवर्तेते, इत्यर्थं केचि-द्वर्णयन्ति स न समीचीनः । पूर्वोक्तगुणप्रतिपादकश्रुतिविरोधात् । निर्गुणमितिश्रुतिस्थगुण-पदं हेयगुणपरम । तथा च निर्गुणमित्यस्य हेयगुणरहितमित्यर्थः । सामान्यतः सर्वगुण-निषेधे तु ' सत्यकामः सत्यसंकल्पः ' इति परमात्मनिष्ठगुणप्रदर्शनपरा छान्दोग्यश्रुतिर्विरु-ध्येत । अतस्तदेकवाक्यतया निर्गुणश्रुतिस्थं गुणपदं सामान्यमुखप्रवृत्तमपि लक्षणया संकुचितार्थपरमेवेति ।

श्रीशंकरगुरुचरणास्त्वेवमाहुः—'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ निखिलज-गत्कारणत्वेन ब्रह्म श्रूयत इति तत्रापि संमतमेव । तथा च तद्यथोपपद्येत तथा व्याख्यातव्यम् । कारणं च कार्यापेक्षया सामान्यम् । कार्यगतयावद्विशेषरहितमित्यर्थः । यथा घटक-रकादिकार्यं प्रति मृत्तिका कारणम् । घटादिकार्यगतघटत्वादिविशेषाणां मध्ये एकस्यापि विशेषस्य कारणभूतायां मृदि अविद्यमानत्वात् । यदि मृदि कश्चिदपि विशेषः स्यात्तदा न कारणं भवितुमर्हेत् । न हि घटः शरावं प्रति कारणत्वेन दृश्यते । सविशेषत्वात् । अत एव सर्वस्य जगतः कार्यरूपस्य मूलभूतं ब्रह्म सर्वविशेषशून्यमित्यवगम्यते । यदि तत्र कश्चि-द्गुणः स्यात्तदा तेन गुणेन ब्रह्मणः सविशेषत्वावश्यंभावेन सविशेषस्य च घटादेः शरावा-दिकं प्रतीव कारणत्वादर्शनाद्यतो वा इतिश्रुतिप्रतिपादितं निखिलजगत्कारणत्वं ब्रह्मणो नोपपद्येत । एतदेकवाक्यतया सत्यकाम इत्यादिगुणवर्णनपराः श्रुतय आरोपितगुणवर्ण-नपराः । तदुक्तम्—

> नित्यं सर्वगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
> गौणार्थाः सगुणोक्तयः शुभगुणारोपात्परे ब्रह्मणि ॥ इति ।

परमात्मनि तत्त्वत एव गुणानुरीकृत्य हेयगुणनिषेधेन निर्गुणश्रुतिनिर्वाहे तु अचेतनानामपि सुखदुःखादिगुणविवर्जितत्वेन निर्गुणपदप्रतिपाद्यता केन वार्येत । किंच निर्गुणश्रुत्या ब्रह्मणि गुणा निषिध्यन्ते । निषेधस्य च निषेध्यप्राप्तिं विनाऽनुपपद्यमानत्वा-ख्येन हेतुना परमात्मनि गुणाः प्रापणीयाः । सा च प्राप्तिर्न प्रत्यक्षेण संभवति । ब्रह्मणः प्रत्यक्षविषयत्वाभावात् । अपि त्वनुमानेन । तद्यथा—ब्रह्म सगुणं जगदुत्पत्तिस्थितिलय-कारणत्वात्, कुलालकुविन्दादिवत्, इति । तथा च परमात्मनो जगज्जन्मस्थितिभङ्गक-र्तृत्वं येभ्य ऋतेऽनुपपद्यमानं गुणानाक्षिपत्तदुपपादकसर्वज्ञत्वादिगुणानेवाऽऽक्षिपेत्तत्र, न त्वनुपयुक्तान्हेयगुणानपि । ततश्च हेयगुणानां केनापि प्रकारेण प्राप्तेरसंभवात्कथं निर्गुण-श्रुतेस्तन्निषेधे तात्पर्यं कल्पयितुं शक्यम् ।

ननु घटेन जलमाहरेति प्रयोगे निश्छिद्रेणेतिविशेषणानुक्तावपि सच्छिद्रेण तेन जलाहरणासंभवाद्धेतुतया सामान्यमुखप्रवृत्तमपि घटपदं निश्छिद्रघटपरमिति विशेषं बोद्धा

प्रतिपद्यते यथा, तथा सामान्यार्थपरमपि गुणपदं सगुणश्रुत्यविरोधाय विशेषार्थपरं विज्ञायत इत्युक्तमिति चेन्न । तथा संकुचितार्थत्वे प्रमाणाभावात् । तथाहि—कश्चित्क्षेत्राजीवः कस्माच्चन वृद्ध्याजीविनश्शतं रूपकाननृणत्वेन प्रहीत् । अग्राहयच्चर्णलेखमुत्तमर्णेन । क्रमेण च समुद्धारं सवृद्धिं प्रत्यर्पयद्धनस्वामिने धमर्णः । अथ चर्णप्रत्याप्तिपत्रिकां पैक्षिष्ट । सोऽपि महाशयः साक्षिनामोल्लेखपुरःसरं स्वनामोपनामोट्टङ्कितां प्रत्याप्तिपत्रिकां ददौ । तदनु कियत्यपि काले व्यतीते स धनिकस्तं कृषीवलं राजसंसदि ऋणित्वेनाशशासीत् । अथ राज्ञ आज्ञया प्राड्विवाकस्तौ दूराकार्य सभां कृत्वा न्यायासनमारुक्षत् । अपृच्छच्च वादिनं प्रमाणं लेख्यम् । तेन राजमुद्राङ्कितं पर्युदञ्चनपत्रं प्रमाणीकृतम् । प्रतिवादिनाऽप्यृणिनर्णप्रत्यर्पणपत्रं तद्धस्ताक्षरोट्टङ्कितं पुरस्कृतम् । तद्वीक्ष्य न्यायमूर्तिर्वादिपक्षीयान्नीतिवित्तमान्प्राक्षीदिति कश्चित्प्रतिवादोऽत्र युष्माकमिति । अथ ते नेत्रयोरुपर्युपनेत्रे दत्त्वा पुस्तकमुद्घाट्य वीक्षांचक्रिरे । अवेक्ष्य चोत्तिष्ठन्तः साञ्जलिबन्धं न्यवेदिषुः । अहो न्यायपीठाधीश्वर पुस्तकान्यालोड्यानुसंधीयन्ते बहवो न्यायाः, क्रियन्ते च बहुलं तर्काः स्मर्यन्तेऽपि पूर्वनिर्णयाः परं तद्द्वारप्रत्यर्पणपत्रसत्यतायां न किंचिदपि मूलमस्माल्लेखान्निष्क्रष्टुं शक्नुमः । ततो देवः प्रमाणमित्युक्तवत्सु तेषु निर्णयं दातुं कर्णाग्रलेखनीमवतारयत्यक्षदर्शकेऽत्रान्तरे स धनी पुरो भूत्वा प्रोवाचोच्चैः । अहो नीतिविग्रह नैते न्यायकोविदोऽतोऽत्राहमेव विप्रतिपद्ये । भोः कीदृशी ते विप्रतिपत्तिः । श्रूयताम्—अहं तावदुत्तमवर्ण उत्तमर्णो वयसाऽप्युत्तमतां गतोऽप्यद्ययावन्न कदाऽप्यनुत्तममुत्तमतामापादितमुत्तमं चानुत्तमताम् । अनेन तु धनिकमहाशयेन न नीतिशास्त्रपण्डितेन भाव्यं नापि वा तदीयां कांचित्परीक्षामुत्तीर्णेन किंतु शिक्षणक्रमेण महाविद्यालयं प्रविष्टेन तेन रामानुजीयमताभ्यासपरेण भवितव्यमिति प्रतिभाति । आस्ताम्, यदनेन प्रतिवादिनाऽधमर्णेनर्णप्रत्यर्पणपत्रं प्रमाणत्वेन पुरस्कृतं तत्र मयैव स्वहस्तेन स्वनामोपनामोट्टङ्कितमिति नाप्रमाणं तेन तन्नाङ्गी कुर्म इति न । एवं लेख्याशयो न केनापि अवबुध्यते देवेन वा । नीतिशास्त्रप्रणेतारोऽपि तादृशाशयानुसंधायकं न्यायं न संक्षिपन्तीत्याश्चर्यम् । को वाऽऽशयो भवेत् । अहो राजकार्यावेक्षक पर्युदञ्चनप्रत्यादानलेख्ये निरुक्तनामकुलात्, शतं रूपकान्प्रत्यग्रहीषमिति प्रयुक्तम् । तत्र वक्तुस्तात्पर्यानुसारेणार्थोऽवगम्यते लोके । अत एव गङ्गातीरे घोष इति, गङ्गायां घोष इतिप्रयोगात्प्रतीयते । तथाच निरुक्तशतं रूपकानितिवाक्ये सामान्यरूपेण प्रवृत्तोऽपि रूपकशब्दो मत्तात्पर्यानुरोधादर्थविशेषे हेयरूपे वृत्तिं लभताम् । हेयत्वं च निर्मृष्टराजमुद्रात्वाद्व्यवहारानुपयुक्तत्वेन, असत्यरूपका इत्यर्थः । एवं च निर्मृष्टराजमुद्रा अत एव हेया असत्यरूपका निरुक्ताधमर्णात्प्रतिगृहीताः, अर्थादनिर्मृष्टराजमुद्राः सत्यरूपकाः प्रत्यादेयत्वेनावशिष्टा इति प्रमाणत्वेन भवत्संमतादृणप्रत्यर्पणलेख्यादेव प्रसिध्यति । नहि वृद्ध्याजीविनो मम नैतादृशोऽभिप्राय इति ब्रह्मणाऽपि सुवचम् । एतादृशीमश्रुतपूर्वामर्थवर्णनरीतिं श्रुत्वा न्यायाधीश्वरेण

सह सर्वेऽपि सभ्या असभ्याश्च जनाः, कीयमर्थप्रतिपादनशैली, केन विनीतस्य वाचो-युक्तिरियं, को वा गुरुर्भवेत् कस्मादिदमुपलभ्यत इत्युपधिना स्तुवन्तः सोपहासं हासं चक्रुः । इतश्च सामान्यमुखप्रवृत्तस्य तथा संकुचितार्थत्वे न शक्यं नापि लौकिकी युक्तिरित्यप्रमाणमेवैतादृगर्थवर्णनमिति विशिष्टाद्वैतवादिनामियमर्थवर्णनशैली याचकैरवश्यं मनसि संनिधातव्या ।

ननु किमिदमुच्यते विशिष्टाद्वैतमतमिति कोऽर्थोऽस्य भवेत् । अत्रोच्यते—प्रामाणिकतयाऽभ्युपगतोऽर्थो मतमुच्यते । तत्र द्वयोर्भावो द्विता, द्वितैव द्वैतम्, भेद इत्यर्थः । न द्वैतमद्वैतमभेद इति यावत् । विशिष्टस्याद्वैतं विशिष्टाद्वैतम् । स्वव्यतिरिक्तसमस्तचेतनाचेतनविशिष्टं ब्रह्मैकमेव तत्त्वमित्युपवर्णनाद्रामानुजीयं मतं विशिष्टाद्वैतमिति व्यवह्रियते । तदुक्तं न्यायसिद्धाञ्जने—अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वमिति । एतन्मते चिदचिदात्मकस्य प्रपञ्चस्याथो ब्रह्मणश्च सत्यत्वमङ्गीकृत्य तयोर्द्वयोः शरीरशरीरिभावरूपसंबन्धाभ्युपगमात्, लोके शरीरस्य जीवात्मनश्चात्यन्तभेदेऽपि एकत्वैव इत्येकत्वव्यवहारो यथा भवति तद्वदिहापि चिदचिच्छरीरविशिष्टब्रह्मण एकत्वव्यपदेशः परस्परं स्वरूपभेदश्च भवति । तदुक्तम्—प्रकारप्रकारिणोः प्रकाराणां च मिथो भेदेऽपि विशिष्टैक्यविवक्षयैक्यव्यवहारस्तदितरनिषेधश्चेति ।

श्रीमच्छंकरगुरुचरणास्तु ब्रह्मैकमेव तत्त्वं तद्व्यतिरिक्तं सर्वं मिथ्येति निरूपयन्तोऽद्वैतं प्रतिपादयन्तोऽद्वैतिवेदान्तिन इत्युच्यन्ते । भगवत्पूज्यपादश्रीमच्छंकराचार्याश्च शालिवाहनशके खभूसप्तसंख्ये ( ७१० ) वत्सरेऽवतेरुः । एते चाऽऽचार्यचरणा नम्बुद्रीयब्राह्मणा इति प्रवक्तृपरम्परातः श्रूयते । तैश्च सकलतत्त्वपारदृश्वभगवद्बादरायणविरचितचतुरध्यायब्रह्ममीमांसाशास्त्रोपरि गभीरन्यायसंदृब्धं भाष्यमारचय्य सर्वत्राद्वैतवादे विस्तारिते न कोऽपि दर्शनान्तराभिमानी दिनदीप इव तत्पुरतः प्रकाशते स्म । ततः कियताऽपि कालेन छात्रवृन्देन सह सर्वत्र संचारं विधाय चतसृषु दिक्षु मठान्संस्थाप्य तेषु अद्वैतवादप्रवचनपटूञ्शिष्यान्नियोज्य स्वीयावतारस्य कृतकृत्यतामाकलयन्तो नेत्राब्धिगिरिपरिमिते शालिवाहनशके ( ७४२ ) स्वस्वरूपमीयुराचार्यपादाः ।

ननु एकस्मिन्नेव ब्रह्ममीमांसाशास्त्रे पूर्वोक्तमाचार्यद्वयं प्रवृत्तम् । तत्र श्रीशंकराचार्याणां ब्रह्म सत्यं तदन्यत्सर्वं जगत्प्रातिभासिकं मिथ्यैवेत्यद्वैतं मतम् । रामानुजाचार्यास्तु यद्यप्यद्वैतिन एव तथाऽपि अखिलस्य प्रपञ्चस्य ब्रह्मणश्च सत्यत्वमङ्गीकृत्य द्वयोः समुदायस्यैकत्वाद्विशिष्टाद्वैतं वर्णयन्ति । तादृशाद्वैतस्य च भेदगर्भत्वाद्भेदाभेदयोश्च तेजस्तिमिरवदत्यन्तविरुद्धत्वाद्भवति संदेहः किमद्वैतं परमार्थं आहोस्विद्विशिष्टाद्वैतमिति । किमत्र युक्तमिति चेदत्रोच्यते—श्रुतिषु तावद्भेदाभेदौ द्वयमपि वर्णितं संदृश्यते । तत्र द्वैतिनः

माध्वाचार्या भेदप्रतिपादकश्रुतिं परमार्थत्वेनोररीकृत्य तदनुसारेणाभेदप्रतिपादकश्रुतिमौपाधिकीमाहुः । तथा च श्रुतिः—' क्षरात्मानावीशते देव एकः ' ' पृथगात्मानं प्रेरितारं च मत्वा ' ' ज्ञाज्ञौ द्वावजावीशनीशौ ' इत्यादिका भेदग्राहिणी । अत्राऽऽत्माज्ञपदवाच्यस्य जीवस्य नियम्यत्वेन देवप्रेरितृज्ञपदवाच्यस्य परमात्मनश्च तन्नियन्तृत्वेन प्रतिपादनं भेदः स्पष्टः । सूत्रकारैरपि ' अधिकं तु भेदनिर्देशात् ' इत्यत्र भेदः प्रतिपादितः । आचार्यचरणास्तु अभेदश्रुतिं परमार्थतयाऽङ्गीकुर्वन्तो भेदश्रुतिमौपाधिकीं प्रतिपादयन्ति । तदुक्तम्—' अद्वैतश्रुतयः सदर्थविषया भेदोक्तिरौपाधिकी ' इति । अद्वैतप्रतिपादकश्रुतिश्च—' तत्त्वमसि ' ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' ' नेह नानाऽस्ति किंचन ' इत्यादिका । रामानुजाचार्यास्तु लोकदृष्टशरीरशरीरिन्यायेन शरीरस्य शरीरिणश्च परस्परं भेदस्याऽऽनुभविकतया तादृशभेदबोधकत्वेन भेदावगाहिन्यः श्रुतयः प्रवृत्ताश्चेत्र एक इति विशिष्टस्य शरीरेण एकत्वेनाभेदग्राहिण्यश्च श्रुतय इति योजयन्तो विशिष्टाद्वैतं मन्यमाना द्वैताद्वैतवादिनौ द्वावप्यनुगृह्णन्ति । तथा च भेदवादिनोऽभेदवादिनश्च द्विविधा अपि श्रुतयो मुख्यार्था एवेति वदन्ति । तदुक्तम्—अद्वैतश्रुतयो विशिष्टविषया निष्कृष्टरूपाश्रया भेदोक्तिः, इति । एवं च न्यायानुगृहीतश्रुतिमूलकत्वाद्विशिष्टाद्वैतवादस्य, कथंतरां श्रीमदाचार्याणामद्वैतमात्रवादो विजेजीयतामिति चेदुच्यतेऽसि । कुत इति चेत्—भेदाभेदयोरुज्जितमिथ्यात्यन्तपरस्परविरोधित्वात्तयोर्द्वयोरपि मुख्यत्वे श्रुतीनां तात्पर्यस्य साक्षात्सहस्रवदनेनापि निर्वक्तुमशक्यत्वेनाभेदस्यैव श्रुतितात्पर्यविषयत्वाद्भेदोक्तेर्गौणार्थत्वं विनाऽगतेरित्याशयात् । एवं चेद्भेदाभेदयोर्द्वयोरपि श्रुतिविषयत्वाविशेषादभेदस्यैव श्रुतितात्पर्यविषयत्वे विनिगमकाभावेनान्यतरस्य मुख्यत्वेऽन्यतरस्य च गौणत्वेऽवश्यमङ्गीकर्तव्ये तात्पर्यविषयभेदप्रतिपादकश्रुत्यनुसारादभेदस्यैवातात्पर्यविषयत्वं किं न स्यादिति चेन्नैतद्भद्रम् । ' नित्यो नित्यानां चेतनश्चेतनानाम् ' इत्यादिका हि भेदप्रतिपादिनी श्रुतिः । ' तत्त्वमसि ' ' सर्वं खल्विदं ब्रह्म ' इत्यादिका चाभेदप्रतिपादिनी । तत्र तत्त्वमसीत्यादौ तत्त्वंपदयोः सामानाधिकरण्यात्तदभिन्नस्तदेव त्वमसीति मुख्यया वृत्त्या शक्त्यैवाभेदं दर्शयति श्रुतिः । ' क्षरात्मानावीशते देव एकः ' इत्यादिका तु भेदश्रुतिर्न मुख्यवृत्त्या शक्त्या भेदं प्रतिपादयति किंतु वाच्यवृत्त्या नियन्तृनियम्यभावमेव प्रतिपादयति । स च नियन्तृनियम्यभावो भेदपूर्वक इति तदन्यथानुपपत्त्या तयोर्भेदमाक्षिपति । एवं चाऽऽर्थिको भेदो न वाच्यः । अभेदस्तु शाब्दो मुख्यः । एवं स्थिते भेदाभेदयोरन्यतरस्य श्रुतितात्पर्यविषयत्वे वक्तव्येऽभेदस्य प्रत्यक्षत्वाद्भेदस्य चाऽऽर्थिकत्वेनाप्रत्यक्षत्वात्प्रत्यक्षाप्रत्यक्षश्रुत्योः प्रत्यक्षश्रुतेरेव बलिष्ठत्वादेकत्वस्यैव परमतात्पर्यविषयत्वं भेदस्यैव चाऽऽर्थिकस्य ' गुणे त्वन्याय्यकल्पना ' इति न्यायेन श्रुत्यतात्पर्यविषयत्वमौपाधिकत्वं युक्तम् । किंच यदि भेदः श्रुत्यभिप्रेतः स्यात्तदा तत्त्वतो भिन्नयोः सुत-

र्थमभेदासंभवादभेदप्रतिपादिनी श्रुतिरनुपपद्येत। उपपद्यते तु भेदग्राहिणी श्रुतिरैक्यपर-श्रुतितात्पर्यविषयत्वेऽप्यौपाधिकत्वेन। न चाभेदस्य गौणार्थता। तस्य वाच्यत्वेन प्रत्यक्षत्वा-द्युत्तरत्वात्। तस्माद्‌द्वैतविशिष्टाद्वैतशुद्धाद्वैतादिसकलदर्शनातिशायि श्रुतिस्मृतिन्यायादि-प्रमाणानुगृहीतं श्रीशांकरमद्वैतदर्शनमेव विजयतेतराम्। अत्र केचित्, एवं श्रुतियुक्त्या-दिप्रमाणनिचयैः सिद्धेऽपि अद्वैतदर्शनस्य सर्वातिशायित्वे तदसहमाना इव श्रीमच्छंकर-पादानां सर्वातिशायित्वं ह्रासयितुमिव तदतिरिक्तानां दर्शनकाराणां चाज्ञत्वं गोपयितुमिव चाऽऽचार्यचरणैः सह तांस्तुलयितुं यतन्ते। तदित्थम्—श्रीमच्छंकराचार्यैः श्रुत्यादिप्रमाणसि-द्धमायाया अङ्गीकाराद्भेदप्रतिपादकश्रुतीनामौपाधिकभेदपरत्वेनाभेदप्रतिपादिकानां निखि-लानां श्रुतीनामद्वैतब्रह्मप्रतिपादन एव परमरहस्यं तेन न क्वचिदपि श्रुतीनां परस्परं विरोधो नापि समन्वयभङ्ग इत्यन्येषां दर्शनप्रणेतॄणामाचार्याणां शांकरमतसिद्धाद्वैतप्रतिपादन एव तात्पर्यम्। न हि ते मुनयो भ्रान्ता वाऽज्ञा वा। किंतु लोकानुग्रहाय प्रवृत्तानां तेषां स्थूलारुन्धतीन्यायेनाधिकार्यन्तरानुसारेण तादृशतादृशविरुद्धमतप्रतिपादनाग्रहस्तेषामज्ञत्वा-दिकल्पनापेक्षयैवमेवाऽऽशयवर्णनस्य युक्तत्वादिति।

अत्रोच्यते—यथा लोके कश्चित्साक्षात्कृतारुन्धतीकः शिष्यस्य स्थूलग्राहितामनुसरन्प्रथमं स्थूलां तारामरुन्धतीत्वेन निर्दिश्य पुनरन्यां पुनरन्यामित्यग्रे मुख्यां सूक्ष्मामरुन्धतीं ग्राहयति तत्र युज्यतेऽधिकार्यनुरोधेन स्थूलसूक्ष्मप्रतिपादनमिति वक्तुं तस्य सर्वज्ञत्वं च कल्पयितुम्। मुख्यामुख्योभयज्ञानवत्त्वात्तस्य। यत्र तु केवलं स्थूलममुख्यं च द्वैतमेव वर्ण्यमानं दृश्यते न सूक्ष्मं मुख्यं चाद्वैतं ब्रह्म तत्र केन हेतुनाऽधिकार्यनुरोधेनैव स्थूलवर्णनं तस्य सर्वज्ञत्वं च कल्पयितुं युज्येत। यदि तु अभिप्रायैक्यात्सर्वेषां दर्शनकृतामैकात्म्यं ततश्च येनैव द्वैतं वर्णितं तेनैव तदद्वैतं प्रतिपादितमिति मन्येथास्तर्हि सर्वज्ञत्वादभिप्रायैक्यसिद्धिरभिप्रायैक्याच्च सर्वज्ञत्वसिद्धिरिति दुरुद्धरोऽन्योन्याश्रयापत्तिः। यदा चानुक्तेऽप्यद्वैतवादे तेषां तात्पर्यकल्पनेन सर्वज्ञत्वमुच्यते तदा 'असद्वा इदमग्र आसीत्। ततो वै सदजायत' इति श्रुतिमुपजीव्य प्रवृत्तानां बौद्धादीनामपि तत्राऽऽशयकल्पनेन सर्वज्ञत्वं किं न कल्प्येत। न हि तन्मताग्रहिभिस्ते न सर्वज्ञत्वेन मताः। किंच कल्पेतापि वैशेषिकादीनां सर्वज्ञत्वं शास्त्रकारत्वात्। यतो यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति स सर्वज्ञ इति हि लोके प्रसिद्धम्। यथा व्याकरणादिप्रणेता पाणिन्यादिः सर्वज्ञ इति गीयते। तथा च प्रयोगः—सांख्यादयः सर्वज्ञाः शास्त्रकारत्वात्, यथा पाणिनिरिति। एवं चेदत्रोच्यते—अत्र शास्त्रकारत्वेन हेतुना सर्वज्ञत्वे साध्यमानेऽनुक्तमपि सांख्यमतं वैशेषिकसंमतं वैशेषिकमतं च सांख्यसंमतम्, तथाऽपि तादृशाधिकार्यनुरोधेन तत्तन्मताग्रह इति वक्तव्यं परंतु परस्परेण परस्परमतसिद्धान्तस्य खण्डितत्वेन हेतोर्बाधितत्वात्। तदुक्तम्—'विरोधे त्वन-

पेक्षं स्यादसति ह्यनुमानम् ' इति । तस्मात्सर्वेषां दर्शनकृतां सर्वज्ञत्वकल्पने प्रमाणाभावः । अथ चेत्सर्वज्ञत्वं लोकप्रसिद्ध्यैवावगतं तर्हि प्रष्टव्योऽत्र भवान् । किं ते लोकाः सर्वज्ञा उताज्ञानिनः । प्रथमे किमपेक्षया तत्तदर्थप्रतिपादनाग्रहः । द्वितीये तु सर्वज्ञत्वस्यासर्वज्ञैर्दुर्विज्ञेयत्वम् । विप्रलम्भकतापत्तिरिति चेद्भ्रान्तोऽसि । सर्वज्ञत्वसिद्धौ परमार्थं जानन्तोऽपि यद्यपरमार्थमुपदिशेयुस्तदा विप्रलम्भका भवेयुः । एवं च सर्वज्ञत्वसिद्धौ सत्यां विप्रलम्भकतादोषस्तद्भिया च सर्वज्ञत्वकल्पनमिति नान्योन्याश्रयमतिक्रामति । किंतु तपःप्रभावादिना यावान्यादृक्च वेदार्थो भातः स कारुणिकतया लोकोपकाराय स्वस्वदर्शने संजगृहुरिति तत्र कथं विप्रलम्भकतादोषावकाशः । नहि स्फीतालोकमध्यवर्तिनं घटं पश्यन्घटोऽस्तीति ब्रुवाणोऽनृताभिधायित्वेन प्रत्यवेयात् । न चैवं द्वैतादिदर्शनानामपरमार्थाभिधायित्वेनाप्रामाण्यापत्तिरिति चेन्न । भेदस्य गौणत्वेऽपि व्यवहारकाले बाधायोगाद्व्यावहारिकप्रामाण्यस्यावर्जनीयत्वात् । तदुक्तम्—' देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणम् ' इति । अद्वैतप्रतिपादकवेदान्तानां तु कालत्रयाबाध्यतत्त्वावेदकत्वात्तात्त्विकं प्रामाण्यमित्यर्थः । एवं च सांख्यवैशेषिकादिदर्शनकृतां सर्वज्ञत्वकल्पने न किंचित्प्रमाणं पश्यामः । अत एव श्रीमच्छंकराचार्यचरणैः शारीरकभाष्ये द्वितीयाध्यायप्रथमपादे स्मृत्यधिकरणे ईक्षत्यादिभ्यो हेतुभ्यो युक्तिप्रयुक्तिभ्यां च निराकृतेऽपि सांख्यपरिकल्पितप्रधानकारणवादे 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति' इति श्रुत्यैव कपिलस्य, सांख्यशास्त्रप्रणेतुः सर्वज्ञत्वोक्तेर्नास्मासु लोकाः श्रद्दध्युरिति पुनरप्याक्षिप्यत इत्युक्त्वा, या तु कपिलस्य सर्वज्ञत्वं प्रदर्शयन्ती श्रुतिस्तत्र कपिलेति सामान्योक्तेस्तावता सांख्यशास्त्रप्रणेता कपिलः सर्वज्ञ इति भ्रान्तिरयुक्ता यतः श्रुतौ कपिलपदेन षष्टिसहस्रसंख्याकसगरसुतानां दाहकस्य कपिलमहर्षेर्ग्रहणादित्युक्तम् । तथा रत्नप्रभायां सर्वज्ञत्वप्रतिपादकश्रुतौ कपिलशब्दमात्रेण सांख्यशास्त्रप्रणेतुः कपिलस्य सर्वज्ञत्वकल्पनभ्रान्तिरयुक्ता द्वैतवादिनस्तस्य सर्वज्ञत्वायोगादित्युक्तम् । एवमेवाऽऽनन्दगिरीये भामत्यां च । एवं च सगरात्मजभस्मीभावहेतोः सर्वज्ञात्कपिलमहर्षेः, सांख्यदर्शनप्रणेतुः कपिलस्यान्यत्वेन प्रतिपादनात्स्पष्टमेव तस्य सर्वज्ञत्वं निराकृतमिति गम्यते । किंच मन्त्रद्रष्टारोऽपि ऋषयस्तत्तन्मन्त्रविशेषाणामेव द्रष्टारः स्मर्यन्ते न तु सर्वे सर्वेषां द्रष्टारः । तेषां सर्वज्ञत्वे तु सर्वैः सर्वेऽवलोकिता इति मन्त्रद्रष्टृव्यवस्थाया अव्यवस्था स्यात् । न चैवं युक्त्यादिभिर्गले पतितमपि अस्मन्मानसंरक्षणार्थं द्वैतादिदर्शनकृतां सर्वज्ञत्वं श्रीमद्भिरङ्गी क्रियतां किंतु तत्र तारतम्यं कल्प्यतामेतदपेक्षयाऽयं सर्वज्ञ एतदपेक्षयाऽयं सर्वज्ञ इति । हन्तैवं सर्वेऽपि सर्वज्ञा इत्यल्पल्पज्ञा अस्मादृक्षा अपि सर्वज्ञपदभाजः स्युस्ततः क ईदृशसर्वज्ञत्वेन तव लाभः । किंच सर्वज्ञत्वमथ च तत्र तारतम्यमिति विप्रतिषिद्धमेतत् । सर्वज्ञत्वस्य सर्वथा ज्ञानसंकोचाभावरूपत्वात्तारतम्यस्य च तादृशसंकोचपूर्वकत्वादिति । तस्मात्सर्वज्ञत्वप्रसिद्धेर्निर्व्यूढ आम्रेडितदोषकज्ञानवत्त्वेन निर्वा-

द्धेलेव रमणीयम् । नहि वेदाङ्गशिरोभूतव्याकरणप्रणेता पाणिनिराचार्यः सर्वज्ञत्वेन प्रथितोऽपि तदपेक्षया भाष्यवार्तिककारयोराधिकज्ञानवत्त्वं ततश्च प्रामाण्यम् । अत एव पाणिनिगतन्यूनोक्तदुरुक्तैतदुभयपरिहारकत्वं वार्तिककारत्वं तदुभयगततादृशोभयपरिहारकत्वं च भाष्यकारत्वं वदन्त्यभियुक्ताः । एवं च श्रीशांकरमद्वैतदर्शनं सर्वातिशायीति यदत्र किंचिद्दुर्लपितमतिप्रलपितं वा तत्सर्वं सर्वविद्येशानश्चराचरगुरुर्महेश्वरः श्रीशंकरः क्षमतामिति निरवद्यम् ।

प्रकृतमनुसंदध्मः । अयं च विशिष्टाद्वैतवादः प्रथमं पराशरेण श्रीविष्णुपुराणे प्रतिपादितः । तदनन्तरं च पाराशर्येण महाभारतशारीरकसूत्रादिषूपवर्णितः । ततश्च बोधायनेन मुनिना वृत्तिग्रन्थे विस्तृतः । अथ च टङ्कद्रमिडादिभिर्द्रमिडभाष्यादिषु संगृहीतः । एवं युगान्तरे प्रचुरप्रचारोऽप्ययं कलियुगे श्रीयामुनाथयामुनमुनिभिः प्रवर्तितः । रामानुजाचार्यैश्च कुमतिकल्पितविविधकुतर्कशुष्कतृणवात्यचक्रायमाणसुयुक्तिव्रातपरिवृतेन श्रीभाष्याख्यप्रबन्धेन सम्यक्प्रतिष्ठां नीतश्च । एवमयं प्रवृत्तसंप्रदायोऽपि अतिगहनानेकयुक्तितर्कन्यायोपबृंहितत्वादगाध इति मन्दजनोपकृतये लघूपायेन तद्यथावस्थितस्वरूपप्रदर्शनाय च श्रीरामानुजाचार्यैः श्रीमद्भगवद्गीतायां भाष्यं व्यरचि । तदिदं रामानुजगीताभाष्यमित्युच्यते । इदं च भाष्यं क्वचिद्विदेशे मुद्रितं भवेत्तथाऽप्यशुद्धिबहुलत्वाट्टीकारहितत्वाच्च न बोद्धॄणां बोधजननायालमिति सटीकमत्र मुद्रणायोपक्रान्तम् । अस्य च संस्करणे सहायभूतानि षट् प्रत्यन्तराणि संपादितान्यासन् । टीकायाश्चैकमेवार्वाचीनं हस्तलिखितं पुस्तकमासीत् । सा चेयं टीका निरुक्तभाष्यस्य यथावस्थिततात्पर्यबोधजननाय राकाचन्द्रिकेवेत्यन्वर्थनाम्नी तात्पर्यचन्द्रिकेति । अयं च टीकाकृन्महापण्डितो विशिष्टाद्वैतवादिरामानुजाचार्यहृदयतलावगाहिधिषणश्चेति तदीयलेखादवसीयते । नाम्ना चायं वेङ्कटनाथः । अत एव प्रत्यध्यायान्ते टीकासमाप्तौ कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य वेदान्ताचार्यस्य वेङ्कटनाथस्येत्येवं स्वेनैव स्वोल्लेखः कृतोऽस्ति । एतद्भाष्योपरि पञ्चषाष्टीकाः सन्तीत्यनुश्रूयते तत्र स्वटीकायां प्रसङ्गतोऽप्यन्यटीकाकृतो नाम न गृह्णाति तेन ज्ञायते तेष्वयं प्रथमष्टीकाकृदिति । सोऽयं वेङ्कटनाथः कदाऽजनि कं वा देशं वंशं चालंचकारेति नाध्यवसातुं पार्यते तथाऽपि मङ्गलाचरणश्लोके यामुनमुनेर्नमस्करणात्तट्टीकायां च ' यामुनाचार्यस्यैकलव्य इवाहमिति ध्यानशब्देन व्यज्यते ' इति स्वेनैवोक्तत्वाच्च द्रोणाचार्यस्यैकलव्य इव यामुनमुनेः शिष्योऽयं कवितार्किकसिंह इत्यनुमीयते । यामुनाचार्यश्च श्रीरङ्गनिवासी रामानुजाचार्यसमकालिक एवेति प्रागुपवर्णिताख्यायिकातः स्पष्टमेव । रामानुजाचार्याश्च शके ( १०४९ इसवीसन ११२७ ) परिमिते प्रादुर्बभूवुः । ततश्च रामानुजाचार्योद्भवकालस्य निश्चितत्वाद्यामुनमुनेश्च तत्कालीनत्वात्तच्छिष्यस्याप्यर्थात्तत्कालीनत्वात्सामान्यतो रामानुजाचार्यकालीनत्वमे-

तस्य टीकाकृतः पर्यवस्यतीति युक्तं चेदूह्यतां विचारशीलैः। सा चेयं टीका तात्पर्यचन्द्रिका-नाम्नी महता प्रयत्नेन संपादिताऽपि दशमाध्यायपर्यन्तैवोपलब्धा। अतस्तावत्येवात्र निवेशिता। समग्रां तां संपादयितुं संस्थाध्यक्षाणां प्रयत्नाः प्रवृत्ताः सन्ति, यद्युपलभ्येत ततो द्वितीयावृत्तौ तस्या अपि निवेशनेन ग्राहकाणां मनीषां सफलयिष्यामः। तदेवं प्रौढतामापन्नस्यास्य सटीकरामानुजगीताभाष्यस्य संस्करण आनन्दाश्रममुद्रणालयाध्यक्षैर्नियुक्तोऽहं सूक्ष्मया दृष्ट्या सावधानं संशोधनमकरवम्। तत्राऽऽदौ स्थूलाक्षरैर्गीता, तदधः सूक्ष्माक्षरैस्तच्छ्लोकस्थं भाष्यं तस्याधस्तात्तत्प्रभवा टीका निवेशिता तदधोभागे च पाठादिकमित्येवं पुस्तकरचना। किंच यतीन्द्रमतदीपिकाश्रीभाष्यादिविशिष्टाद्वैतग्रन्थानालोच्य तथाऽद्वैतग्रन्थानालोच्य च मतद्वयानुसारेण स्थले स्थले विस्तृता टिप्पण्यपि निवेशिता। तथा प्रतिश्लोकार्धसूची प्रस्तावना गीतार्थसंग्रहश्चेति त्रितयमपि संमुद्रय निवेशितम्। तदीदृशस्य दुरवगाहस्य विशिष्टाद्वैतीयगीताभाष्यस्य परिशोधने प्रथमत एव प्रवृत्तस्य मम दृष्टिदोषाद्बुद्धिमान्द्याच्छास्त्राध्ययनाभावाद्भ्रान्तेः पुरुषधर्मत्वाच्च संजातानां स्खलनानां प्रदर्शनेनानुगृह्णन्तु मां पण्डिताः, येन द्वितीयावृत्तिसंस्करणवेलायां प्रयतिष्ये तत्परिमार्ष्टुमित्यभ्यर्थ्यते—

पुण्यपत्तनीयानन्दाश्रमस्थप्रमुखसंस्कृतग्रन्थश्रेणीसंशोधनाधिकृतः परमगुरुश्रीरामशास्त्रिचरणान्तेवासी मारुलकरोपाह्वः शंकरशास्त्री।



ॐ तत्सद्ब्रह्मणे नमः ।

वेदान्ताचार्यश्रीवेङ्कटनाथकृततात्पर्यचन्द्रिकाख्यटीकासंवलितं-
श्रीमद्रामानुजाचार्यविरचितभाष्यसहिता ।

# श्रीमद्भगवद्गीता ।

---

## प्रथमं षट्कम् ।

### तत्र प्रथमोऽध्यायः ।

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं तं वन्दे यामुनं मुनिम् ॥ १ ॥

---

यतिपरिवृढो यद्गीतानामदर्शयदञ्जसा
निगमपरिषन्नेदीयांसं सुधामयमाशयम् ।
जननपदवीयातायातश्रमापहरां धियं
जनयतु स मे देवः श्रीमान्धनंजयसारथिः ॥ १ ॥
अनुचितपदवीभिश्चिन्तयित्वा प्रयातान्
अलमल्पमतिमात्रैरत्र चित्ते विपादैः
उपनिषदमुदारामुद्वहन्पाण्डवार्थे
शरणमुपगतान्नस्त्रायते शार्ङ्गधन्वा ॥ २ ॥
सन्तः सानुग्रहैश्चित्तैस्तमःप्रमथिनीमिमाम् ।
भजन्तु भगवद्गीताभाष्यतात्पर्यचन्द्रिकाम् ॥ ३ ॥

श्रीमद्भगवद्गीतां व्याचिख्यासुरविघ्नपरिपूरणप्रचयगमनार्थं परमाचार्यस्य संग्रहश्लोकनिर्माणमुखेन तत्तदर्थोपदेष्टृतां तदनुवृत्तेः स्वाचार्यसंप्रीणनतामप्यनुसंदधानः परमाचार्यभजनरूपं मङ्गलमाचरति—यत्पदाम्भोरुहेति । यच्छब्देन सर्वोत्तराचार्यगुणपौष्कल्यहेतुकां प्रसिद्धिं सूचयति । अम्भोरुहशब्देन भोग्यत्वप्रतीतेर्भक्तिरूपत्वं ध्यानस्य व्यज्यते । यामुनाचार्यस्यैकलव्य इवाहमित्यभिप्रायेण ध्यानशब्दः । सकृत्संदर्शनेन प्रायशः कल्मषाणि विध्वस्तानि तन्मूलनिरन्तरस्मरणेन तेषां सवासनोन्मूलनं कृतमि-

---

१ ख. घ. यत्पदाम्बुरुहध्यानानन्दनिर्वृतचेतसः ।
मुक्तिमप्यवजानन्ति तं वन्दे पुरुषोत्तमम् ॥

त्यभिप्रायेण ध्यानविध्वस्ताशेषकल्मष इत्युक्तम् । वस्तुताम् 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इत्याद्युक्तप्रकाराम्। अहं वस्तुतामुपयात इत्याश्चर्यगर्भम् । एवमनिष्टनिवर्तनेष्टप्रापणरूपोपकारस्मृतिप्रेरितवागादित्रयकरणकः प्रणामः शिष्यशिक्षणार्थं श्रोतॄणां फलसिद्ध्यर्थं च ग्रन्थे निवेशितः। तेन स्वाचार्यवत्तदाचार्यपरम्पराया अपि भजनमत्यादरेण करणीयमित्यपि शिक्षितम्। तथाच श्रूयते—"स चाऽऽचार्यवंशो ज्ञेयो भवत्याचार्याणामसावसावित्या भगवत्तः" इति ॥ अथाभिमतपरदैवतस्य भगवतः स्वरूपरूपादिभावनावर्णनाभ्यामर्थादभङ्गुरं मङ्गलमाचरन्

स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः ।
नारायणः परब्रह्म गीताशास्त्रे समीरितः ॥

इति संग्रहानुरोधेन व्याख्येयशास्त्रप्रधानप्रतिपाद्यं च सप्रकारं दर्शयञ्छास्त्रप्रामाण्यस्थापनाय वक्तुः स्वतः सर्वज्ञत्वपरमकारुणिकत्वसाधुपरित्राणोन्मुखावस्थत्वसर्वशक्तित्वादिना भ्रमविप्रलम्भप्रमादाशक्त्यभावप्रदर्शनेनाऽऽप्ततमत्वं समर्थयन्नपवर्गप्रधानचतुर्वर्गोपायबोधात्मकमवान्तरप्रयोजनमपवर्गदशानुभाव्यसप्रकारभगवत्स्वरूपं च परमप्रयोजनं प्रकाशयन्, शंकरादिपक्षे शास्त्रोपदेशारम्भाद्यनुपपत्तेर्वक्ष्यमाणायाः स्वपक्षे प्रसङ्गाभावाय शास्त्रोपदेशाद्यनुकूलजीवपरमात्मपारमार्थिकभेदादिकथनेन शास्त्रारम्भं समञ्जसयन्कारणशोधकोपासनभेदाभेदघटकवचसां सर्वेषामपि मुख्यतां ख्यापयन्गुणतनुजनिविभवविहरणादिविधिनिषेधोपनिषदामल्पश्रुतकुमतिविहितप्रतारणकृतकलहकूलंकषां विषयव्यवस्थामुपस्थापयन्नवाप्तसमस्तकामस्यापि लीलामात्रविहितनिखिलव्यापारत्वेन शारीरकद्वितीयाध्यायसिद्धं विरोधपरिहारमुपलक्षयञ्जिज्ञास्यजगत्कारणपरब्रह्मभूतदेवताविशेषमपि सर्वशाखाप्रत्ययसामान्यविशेषादिन्यायैस्त्रिमूर्त्यैक्यसाम्योत्तीर्णव्यक्त्यन्तरत्वव्युदासेन निरूपिताकारं निर्दिशन् 'बहु स्याम्' इति संकल्पमारभ्य सारथ्यचर्यापर्यन्तस्य सर्वस्य जगद्व्यापारस्याऽऽश्रितार्थतया व्याजलाभमात्रादपि परमपुरुषार्थभूतस्वात्मोपलम्भकाध्यात्मशास्त्रावतरणादिना च सौलभ्यातिशयमुद्घोषयन्प्राप्यत्वोपास्यत्वैकान्तपरत्वसौलभ्यस्थापनौपयिकगुणवर्गद्वयं जगत्पातित्वसर्वज्ञत्वसर्वेश्वरत्वा-

अथ श्रियः पतिर्निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दै-

दिकं परमकारुणिकत्वसुधाश्रयत्वाश्रितार्थावतारत्वविरोधिनिरसनशीलत्वासेचनकदर्शनत्वादिकं चोदाहरन्पञ्चमवेदपरमप्रतिपाद्यस्य भगवतो नारायणस्य श्लोकनोदन्तं गीतोपनिषदुपदेशेन संगमयति श्रियः पतिरित्यादिनाऽवतारयामासेत्यन्तेन । तत्रेत्यादिना चकारेत्यन्तेन द्वितीयेन वाक्येन बुभुत्सोर्धृतराष्ट्रस्य ज्ञातांशनिष्कर्षः । एवं ज्ञात्वाऽपीत्यादिना तृतीयेन शास्त्रोपोद्घातारम्भभूतप्रश्नसंगतिः । दिव्यात्मस्वरूपव्यतिरिक्तं समस्तमपि नारशब्दार्थतया विविच्य दर्शयिष्यंस्तदयनं स्वरूपमन्यपदार्थतयोत्तरपदार्थतया वा समासद्वयेऽपि प्रधानभूतं प्रथमं निष्कृष्य दर्शयति—श्रियः पतिरित्यादिना ।

विशेषज्ञप्तये भर्तुरभिगम्यत्वसिद्धये ।
समस्तमङ्गलावाप्त्यै प्रथमं श्रीरिहोदिता ॥
एष नारायणः श्रीमान्क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ॥
अर्थो विष्णुरियं वाणी............

इत्यादिकमिह भाव्यम् । कतिपयहेयनिवर्तकतीर्थसेवादिव्युदासाय निखिलेति विशेषणम् । अत्र हेयशून्यत्वमर्थसिद्धम् । नहि परगतनिखिलहेयनिराकरणसमर्थः स्वगतं हेयं क्षमते । यद्वा हेयविरोधिस्वभावतया हेयशून्यमित्यर्थः । तदा निखिलशब्दः सर्वाचिद्गतविकारादिकं सर्वचिद्गतं क्लेशादिकं च संगृह्णाति । कुमतिपरिकल्पितमंशभेदेनाकल्याणस्पर्शमपाकर्तुं कल्याणैकतानशब्दः । अत एव ज्ञानानन्दैकस्वरूप इत्यनेनापौनरुक्त्यम् । अथवा सामान्यविशेषनिर्देशरूपत्वादपुनरुक्तिः । यद्वा कल्याणैकतानं कल्याणगुणानामेवाऽऽश्रयभूतमिति वक्ष्यमाणगुणप्रपञ्चस्य संग्रहः । अनन्तं त्रिविधपरिच्छेदरहितम् । 'अत्रैव देशेऽस्ति अत्र तु नास्ति' इति देशपरिच्छेदः । 'अत्र कालेऽस्ति अत्र तु नास्ति' इति कालपरिच्छेदः । 'इदमिदम्', 'इदमिदं न भवति' इति वस्तुपरिच्छेदः । अल्पवर्णसुवर्णवत्स्वरूपापकृष्टत्वा-

* 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २ । १ । १ ) 'विज्ञानमानन्दं ब्रह्म' ( बृ० ३ । ९ । २८ ) इत्यादिश्रुतिषु विज्ञानस्य ब्रह्मतादात्म्यप्रतिपादनादिति भावः ।

कस्वरूपः स्वाभाविकानवधिकातिशयज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभृ-

दिकं वा। एवंविधपरिच्छेदत्रयराहित्यं नाम सर्वदेशकालव्यापित्वं सर्वान्तर्यामित्वादिरूपम्। वस्तुपरिच्छेदराहित्यं हि समस्तवस्तु-सामानाधिकरण्ययोग्यत्वादिकं न पुनर्मिथोविरुद्धविविधवस्तुतादात्म्यं स्वव्यतिरिक्तसमस्तवस्तुमिथ्यात्वं वा तयोरत्यन्तासंभावितत्वात्। विस्तरस्तु शतदूषण्यां कृतोऽस्माभिः। आनन्दस्य ज्ञानविशेषत्वाज्ज्ञानानन्दशब्दयोः सामानाधिकरण्यमुपपन्नम्। तर्ह्यानन्दशब्दस्य विशेषशब्दत्वात्पटद्रव्यमित्यादिवदानन्दज्ञानमिति वक्तव्यमिति चेन्न—बहुलग्रहणेन सर्वोपपत्तेः। यद्वाऽऽनन्दशब्दस्यानुकूलवेदनीयेषु जडेष्वपि प्रयोगात्तद्विशेषणतया ज्ञानशब्दस्य पूर्वत्वोपपत्तिः। स्वरूपं प्रतीदं विशेषणद्वयं वा। स्वरूपापेक्षया गुणविग्रहादीनामपृथक्सिद्धिसाम्येऽपि विग्रहादिधारणनियमनादौ ज्ञानादिगुणापेक्षत्वप्रदर्शनायोत्तरोत्तरसुग्रहत्वसिद्धये च प्रथमं गुणोक्तिः। समस्तगुणच्छन्दप्रधानतया षाड्गुण्यस्य स्वरूपेणोपादानमितरेषां च सौशील्यादीनां प्रभृतिशब्देन संग्रहणं कृतम्।

तवानन्तगुणस्यापि षडेव प्रथमे गुणाः।
यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः॥

इति ह्याहुः। संहृतिसृष्टिस्थितिहेतुभूतसंकर्षणादिव्यूहत्रये ज्ञानबलादिद्वंद्वत्रिकस्य यथाक्रमं तत्तत्कार्यविशेषोन्मुखत्वेनाऽऽविर्भावविशेषाज्ज्ञानबलेत्यादिक्रमविशेषः कृतः। स्वतः सर्वं सर्वथा सर्वदा साक्षात्करोति तथा साक्षात्कृतं च सर्वं धारयति धारयंश्चैव नियच्छति धारयन्नियच्छंश्चाशिथिलो भवति अघटितं च घटयति। तत्र च सहकारिनिरपेक्षो न केनचिदप्यभिभूयते, किंतु सर्वाभिभूर्भवतीति गुणक्रमपाठविवक्षा। स्वाभाविकत्वमनन्याधीनत्वम्। मुक्तनित्ययोरपि हि तादृशं ज्ञानादिकं तदनुगुणपरमात्मसंकल्पाधीनम्। अनवधिकत्वमत्रोत्कृष्टावधिराहित्यम्। द्वाभ्यां विशेषणाभ्याम् 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्याम्नाते परत्वस्वाभाविकत्वे प्रतिगुणमन्विते दर्शिते। असंख्येयशब्देन महोदधिशब्देन च—

१ ग. घ. ङ. नत्र°। २ ग. घ. ङ. 'र्थवीर्य'।

त्यसंख्येयकल्याणगुणगणमहोदधिः* स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्या-

यथा रत्नानि जलधेरसंख्येयानि पुत्रक ।
तथा गुणा ह्यनन्तस्य, असंख्येया महात्मनः ॥

इत्यादि स्मार्यते । कल्याणशब्देन गुणनिषेधवचसां हेयगुण-विषयत्वमुत्सर्गापवादादिन्यायसिद्धं सूचितम् । अथ कारणोपासनादिप्रकरणेष्वस्त्रभूषणाध्यायादिषु च प्रतिपन्नं विलक्षणविग्रहयोगं दर्शयति—स्वाभिमतेति । अभिमतेऽप्यननुरूपत्वस्यानुरूपेऽप्यनभिमतत्वस्य लोके दृष्टत्वात्तदुभयव्यवच्छेदाय स्वाभिमतानुरूपेत्युक्तम् । एकरूपेत्यनेन व्यूहविभवाद्यवस्थास्वपि हेयप्रत्यनीकत्वानन्दावहत्वमुमुक्षूपास्यत्वप्राप्यत्वादिस्वभावापरित्यागोऽभिहितः । यद्वा—व्यूहादिपरिणामे सत्यपि परमव्योमनिलयस्य विग्रहस्य प्राचीनसंस्थानावस्थितिरुक्ता । सावयवत्वादनित्यमित्यादीनां धर्मिग्राहकाणां बाधादिभिराभासतामभिप्रेत्याचिन्त्यत्वोक्तिः । एको दिव्यशब्दः संस्थानवैलक्षण्यपरः परमव्योमवर्तित्वमात्रपरो वा । इतरस्त्वप्राकृतत्वपरः । विचित्रावतार-

* ज्ञानशक्तिबलैश्वर्यवीर्यतेजःसौशील्यवात्सल्यमार्दवार्जवसौहार्दधैर्यसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यस्थैर्यपराक्रमादयो भगवतोऽनन्तकल्याणगुणाः । तत्र ज्ञानं नाम सर्वसाक्षात्काररूपम् । शक्तिरघटितघटनासामर्थ्यम् । बलं धारणसामर्थ्यम् । ऐश्वर्यं नियमनसामर्थ्यम् । वीर्यमविकारित्वम् । तेजः पराभिभवसामर्थ्यम् । महतो मन्दैः सह नीरन्ध्रेण संश्लेषस्वभाववत्त्वं सौशील्यम् । वात्सल्यं दोषेऽपि गुणत्वबुद्धिर्दोषादर्शित्वं वा । आश्रितविरहासहत्वं मार्दवम् । मनोवाक्कायैकरूपमार्जवम् । स्वसत्तानपेक्षतद्रक्षापरत्वं सौहार्दम् । जन्मज्ञानवृत्तगुणानपेक्षया सर्वैराश्रयणीयत्वं साम्यम् । आश्रितदोषगोपनं चातुर्यम् । अकम्पनीयत्वं स्थैर्यम् । अभग्नप्रतिज्ञत्वं धैर्यम् । परबलप्रवेशनसामर्थ्यं शौर्यम् । तन्निराकरणं पराक्रमः । स्वप्रयोजनमनपेक्ष्य परदुःखनिराचिकीर्षा दया परदुःखदुःखित्वं वा । क्षीरवदुपाध्यभावेऽपि स्वादुत्वं माधुर्यम् । भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं गाम्भीर्यम् । प्रभूतं दत्त्वाऽप्यतृप्तत्वमौदार्यम् । एवं वदान्य इत्यादावप्यूह्यम् । आदिशब्देन सौन्दर्यौज्ज्वल्यलावण्ययौवनक्षमाशान्तिभक्तिप्रपत्त्यादिपरिग्रहः ।

१ क. ख. 'रूपानन्तनित्ययौ° ।

द्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यलावण्ययौवनाद्यनन्तगुणनिधिर्दिव्यरूपः स्वोचितविविधविचित्रानन्ताश्चर्यनित्यनिरवद्या-

योगः प्रतिक्षणमपूर्ववदनुभाव्यत्वं वटपत्रशयनविश्वरूपाद्यवस्थागतमाश्चर्यत्वं चाद्भुतशब्देन विवक्षितम् । नित्यत्वं कालापरिच्छिन्नत्वम् । तथा चाऽऽमनन्ति रहस्याम्नायविदः—' नित्यालिङ्ग्या स्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती ' इति । श्रीपौष्करे च—

नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर ।
यस्यास्ति सत्ता हृदये तस्यासौ संनिधिं व्रजेत् ॥ इति ॥

निरवद्यत्वं जरादिराहित्यम् । उत्तरोत्तरनिरवद्यशब्देषु पूर्वपूर्वेभ्यः सुग्रहत्वं वा विवक्षितम् । शुभाश्रयत्वभोग्यत्वाद्युपयुक्तमङ्गलगुणयोगो निरतिशयौज्ज्वल्येत्यादिनोक्तः । निरतिशयत्वं स्वापेक्षयोत्कृष्टराहित्यमनुत्तमत्ववत् । तच्च प्रतिगुणमन्वेतव्यम् । औज्ज्वल्यं भास्वरत्वम् । सौन्दर्यमवयवशोभा । लावण्यं समुदायशोभा । यदुच्यते भगवच्छास्त्रे—

विश्वमाप्याययन्कान्त्या पूर्णेन्द्वयुततुल्यया । इति ।
भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् ।
चक्षुरानन्दजननं लावण्यमिति कथ्यते ॥

इति ह्याहुः । यौवनं कौमारानन्तर्योपलक्षणीयस्वभावविशेषो न तु कौमारानन्तरभाविन्येव दशा तद्यौवनस्यानादित्वात् । देवादिषु च केषांचिद्युवत्वेनैवोत्पत्तिदर्शनात् । आदिशब्देन शुभाश्रयप्रकरणेषूक्ताः सर्वे विग्रहगुणाः संगृहीताः । एवं स्वरूपतद्गुणौ विग्रहतद्गुणौ च प्रतिपाद्य विग्रहाश्रितमाभरणवर्गमायुधवर्गं च दर्शयति—स्वोचितेत्यादिपदद्वयेन । पूर्वोक्तविलक्षणविग्रहविशिष्टं स्वरूपमिह स्वशब्दार्थः । अत्र ' सर्वभूषणभूषणार्हा ' इत्यादि भाष्यम् । किरीटहारादिरूपेण वैविध्यम् । एकजातीयेष्वपि मणिकाञ्चनादिद्रव्यविशेषवर्णसंस्थानादिविशेषविशिष्टव्यक्तिभेदाद्वैचित्र्यम् । अपरिमितेत्यसंख्येयत्वोक्तेरनन्तत्वमाश्चर्यविशेषणम् ।

१ क. ख. °रपाश्रप° ।

परिमितदिव्यभूषणः स्वानुरूपासंख्येयाचिन्त्यशक्तिनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुधः स्वाभिमतानुरूपनित्यनिरवद्यस्वरूपरूपगुणविभवैश्वर्यः शीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणश्रीवल्लभः

अनवधिकाश्चर्यरसावहत्वमनन्ताश्चर्यत्वम् । अथवा—अनन्तान्याश्चर्याणि संस्थानविशेषसौगन्ध्यसुखस्पर्शत्वादीनि येषां भूषणानां तानि तथोक्तानि । नित्यनिरवद्यशब्दौ पूर्ववत् । अपरिमितत्वमसंख्येयत्वमेव न तु ह्रस्वदीर्घादिपरिमाणविरहः । यद्वा—अनन्तेत्यसंख्येयत्वमपरिमितेति च विग्रहानुरूपमहत्तरत्वं विवक्षितम् । भूषणायुधयोर्दिव्यत्वमप्राकृतत्वम् । पूर्वोक्तगुणविग्रहाभरणविशिष्टस्वरूपं स्वानुरूपेत्यत्र स्वशब्दार्थः । असंख्येयेति । पञ्चायुधत्वप्रसिद्धिः प्राधान्यादिति भावः । अचिन्त्यशक्तीति । कुठारटङ्ककुद्दालादिभिः प्रत्येकं कृच्छ्रसाध्यं सालशैलवसुधातलविदारणमेकेन हि महेषुणा कृतमिति भावः । निरतिशयकल्याणत्वं निरतिशयानन्दावहत्वं भूषणकोटावप्यनुप्रवेशात् । यद्वा—लोके यान्यायुधलक्षणानि मङ्गलावहतया प्रसिद्धानि तैः सर्वैः संपूर्णत्वम् । पूर्वं स्वरूपनिरूपकतया सामान्यतोऽभिहितां श्रियं विभूतिमध्येऽपि विशेषतः स्थितां दर्शयन्नर्थात्तत्स्वरूपादिकमप्याह—स्वाभिमतेति । स्वरूपं स्वासाधारणधर्मविशिष्टं श्रियो दिव्यात्मस्वरूपम् । रूपं दिव्यविग्रहः । रूपानन्तरो गुणशब्दस्तद्गतनिरतिशयौज्ज्वल्यसौन्दर्यादिपरः । विभवशब्दः परिजनपरिबर्हादिपरः । परत्वसौलभ्योपयिकगुणवर्गद्वयमैश्वर्यशीलाभ्यामुपलक्षितम् । ततश्चाऽऽदिशब्दः प्रत्येकमन्वयाज्ज्ञानशक्त्यादिकं वात्सल्यादिकं च संगृह्णाति । ऐश्वर्यशीलादयोऽनवधिकातिशयाश्चासंख्येयाश्च कल्याणाश्च गुणा इति विशेषणसमासः । एवंविधगुणानां गण इति षष्ठीतत्पुरुषः । ऐश्वर्यशीलादेर्गणविशेषणत्वानौचित्यात् । अनवधिकातिशयत्वस्यापि गुणविशेषणत्वे प्रत्येकं गुणानामुत्कर्षस्याशाब्दत्वाद्गुणविशेषणतयैव समास उचितः । स्वरूपं रूपं तद्गुणा विभव ऐश्वर्यादिगुणगणश्चेति द्वंद्वः । स्वरूपा-

१ क. ख. °चिन्त्याकृतिनिरति° । २ ग. घ. ङ. °मतानित्यनिरपायानुरू° । ३ क. ख. °श्वर्यः ।

दिपञ्चकं भगवदभिमतानुरूपनित्यनिरवद्यं यस्याः सा स्वाभिमतेत्यादिगुणगणेत्यन्तेनोक्ता । स्वरूपं रूपं तद्गुणा विभव ऐश्वर्यं शीलमित्यादिगुणगण इति योजनायां स्वरूपरूपयोरपि गुणानुप्रवेशप्रसङ्गः । स्वरूपादेः सर्वस्य परमात्माभिमतत्वं व्यक्तम् । स्वरूपस्य नित्यत्वं निर्विकारतया सर्वकालवर्तमानत्वम् । निरवद्यत्वं पूर्वं परमात्मस्वरूपे प्रतिपादितप्रकारं तद्वत्पितृत्वप्रयुक्तकादाचित्कोष्मलत्वादिराहित्यं वा । अनुरूपत्वं तु यथाप्रमाणं प्राग्वदेव कल्याणैकतानत्वादिकम् । 'शान्तानन्त' इत्यादिकमिह भाव्यम् । रूपस्य नित्यत्वमवतारादिदशायामपि परमपदनिलयभगवदेकासनस्थितस्य तथावस्थितत्वम् । अनुरूपत्वं च—

अस्या देव्या यथारूपमङ्गप्रत्यङ्गसौष्ठवम् ।
रामस्य च यथारूपं तस्येयमसितेक्षणा ॥
विष्णोर्देहानुरूपां वै करोत्येषाऽऽत्मनस्तनुम् ।

इत्यादि प्रतिपादितम् । विग्रहगुणानां नित्यत्वं नामौज्ज्वल्यादेः कदाचिदप्यपकर्षाद्यभावः । निरवद्यत्वं च दुष्प्रेक्षतादिराहित्यम् । अनुरूपत्वं 'घनकनकद्युती युवदशामपि मुग्धदशाम्' इत्याद्युक्तप्रकारम् । विभवस्यानुरूपत्वम्—

देवतिर्यङ्मनुष्येषु पुंनामा भगवान् हरिः ।
स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥

इत्यादिभिरनुसंधेयम् । अनवधिकातिशयत्ववचनादीश्वरव्यतिरिक्ताशेषगोचरस्यापि तदैश्वर्यस्येश्वराभिमतत्वान्न द्वैराज्यादिदोषः । 'अस्येशाना जगतो विष्णुपत्नी' इति विष्णुपत्नीत्वविशेषेण हि सर्वस्य जगत इयमीष्टे । 'ईश्वरीं सर्वभूतानाम्' इत्यत्र तु यद्यपि सर्वभूतानामिति प्रतिसंबन्धिनिर्देशात्स्त्रीप्रत्ययानुसारेणेश्वरपत्नीति विवक्षा न शक्या, तथाऽपि वाक्यान्तरबलादर्थस्य तथात्वसिद्धिः । निरवद्यत्वं भगवदैश्वर्यैकरसत्वं वा निग्रहादिप्रसङ्गाभावो वा । प्रतिकूलदण्डकत्वं हि पुंस्त्वानुरूपस्तद्वल्लभस्यैव भागः । शीलस्य नित्यत्वं महत्त्वे सत्यपि मन्दैः सह नीरन्ध्रसंश्लेषः कदाचिदपि स्वोत्कर्षप्रकाशनाभावः । निरवद्यत्वं तत्र विप्रलम्भाभिप्रायादिविरहः । अनुरूपत्वमनवधिकातिशयत्वं च—

स्वसंकल्पानुविधायिस्वरूपस्थितिप्रवृत्तिभेदाशेषशेषतैकरतिरूपनित्यनिरवद्य-

‘तुल्यशीलवयोवृत्ताम्’ इत्याद्युक्तप्रकारम्। एवं श्रियः पृथङ्नित्यस्वरूपरूपगुणविभवैश्वर्यशीलादिप्रतिपादनेन ज्ञानादिगुणवदपृथक्सिद्धशक्तिमात्रत्वं व्यूहविशेषत्वं स्वरूपैक्यमन्यदन्यदपि वदन्तो निरस्ताः। शक्तित्ववादास्तु पत्नीत्वेन कार्योपयुक्तविशेषणत्वाभिप्रायाः। प्रयुज्यते हि शास्त्रेषु सर्वत्र स्त्रीपुंसात्मकेषु द्वंद्वान्तरेष्वपि स्त्र्यंशे शक्तिशब्दः। एकत्ववादास्तु समस्तप्रपञ्चप्रतियोगिकैकशेषत्वाश्रयत्वेन स्वविशिष्टैक्येनाऽऽत्मद्विःप्रयुक्तैक्यकदेवतात्वादिवेषेण वा निर्वाह्याः। अत एव हि—

व्याप्त्यावतिसंश्लेषादेकतत्त्वमिवोदितौ।

इत्युच्यते। उक्तं च श्रीराममिश्रैः षडर्थसंक्षेपे—‘उभयाधिष्ठानं चैकं शेषित्वम्’ इत्यादि। एवंविधाया भगवत्याः श्रियो वल्लभः प्रियतमः, श्रीर्वल्लभा यस्येति वा। न चाभिमतशब्दपुनरुक्तिः, प्रत्येकसमुदायविषयतयाऽभिमतत्वातिशयव्यञ्जनपरत्वादिति। अथ नित्यपरिजनविशिष्टतां दर्शयति—स्वसंकल्पेति। स्वरूपं धर्म्यंशः। स्थितिरप्रच्युततयाऽवस्थानम्। प्रवृत्तिर्व्यापारः। नित्यानां स्वरूपस्थित्योः परमात्मसंकल्पानुविधायित्वं नाम तन्नित्येच्छासिद्धत्वम्। तच्चानिच्छासंभवे निवर्तयितुं शक्यतामात्रम्। तेषु त्वनिच्छायाः कदाचिदप्यभावात्स्थितेः सदातनत्वम्। इदं च परमात्मसंकल्पानुविधायि स्वरूपस्थितिप्रवृत्तित्वं बद्धमुक्तप्रकृतिप्राकृतकालादिष्वपि भाव्यम्। तच्च सर्वं प्रपञ्चयिष्यते। शेषता शेषवृत्तिरित्यर्थः। अशेषशेषता यथाभिमताकारा। अत्र—

शरा नानाविधाश्चापि धनुरायतविग्रहम्।
अन्वगच्छन्त काकुत्स्थं सर्वे पुरुषविग्रहाः॥

निवासशय्यासनेत्यादि द्रष्टव्यम्। एकैककृतस्यैव हि कैङ्कर्यस्य मिथः स्वार्थतयाऽनुसंधानात्सर्वेऽपि सर्वकैङ्कर्यकारिणो भवेयुः। यद्वा—स्वरूपस्थितिप्रवृत्तिभेदा एवाशेषशब्देन संगृह्यन्ते। तेषामशेषाणां परमात्मानं प्रति शेषता शेषभावः। एव-

निरतिशयज्ञानक्रियाद्यनन्तगुणगणैरपरिमितैः सूरिभिरनवरताभिष्टुतचरणयुगलो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावतया स्वोचितवि-

मुक्तप्रकारायां शेषतायामितरपरित्यागेन तदेकावलम्बिनी प्रीतिरेव रूपं स्वरूपं स्वभावो वा येषां तेऽशेषशेषतैकरतिरूपाः । ते च सर्वे नित्याः स्वरूपनित्यत्वस्य सर्वात्मसाधारणत्वात् । मुक्तवत्कदाचिदाविर्भूतस्वभावत्वमिह नित्यशब्देन व्युदस्यते । नित्यासंकुचितज्ञानादिगुणा इत्यर्थः । अत एव निरवद्याः क्लेशकर्मस्वातन्त्र्याभिमानादिदोषात्यन्ताभाववन्तः । एषां ज्ञानस्य निरतिशयत्वं परमात्मज्ञानतुल्यत्वम् । क्रियाया निरतिशयत्वं स्वच्छन्दानन्तकैंकर्यात्मकत्वम् । ऐश्वर्यस्य निरतिशयत्वं परमात्मकैंकर्योपयोगिस्वेच्छागृहीतशरीरेन्द्रियादिनियमने निर्विघातत्वं न तु सर्वविषयत्वम्, 'जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च' [ ब्र० सू० ४ । ४ । १७ ] । इति न्यायात् । अत्र निरतिशयज्ञानक्रियैश्वर्यादिरनन्तो गुणगणो येषामिति विग्रहः । ते चापरिमिताः, असंख्याः सूरयः । 'सदा पश्यन्ति सूरयः' । 'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते' इत्याद्यनुसंधानेनाऽऽह—अनवरताभिष्टुतचरणयुगल इति । विपन्यवो विशेषेण स्तुतिशीलाः । 'पण व्यवहारे स्तुतौ च । पन च' । अभिष्टुतेत्यभिर्विशब्दार्थः । स्तुतिशीलत्वादनवरतत्वोक्तिः । स्तुतिविषयत्वप्रसक्तमैश्वर्यादेरियत्तारूपं परिच्छेदमपाकरोति—वाङ्मनसेति । एतेन 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' । 'अविज्ञातं विजानतां विज्ञातमविजानताम्' । [ केन० ११ ] । 'सो अङ्ग वेद यदि वा न वेद' । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' [ तै०२।९ ] । इत्यादीनां वाङ्मनसयोरवेद्यत्वार्थतां वदन्तो निरस्ताः । तथा सति 'तद्विजिज्ञासस्व' 'मनसा तु विशुद्धेन' 'ब्रह्मवित्' 'आनन्दं ब्रह्मणो विद्वान्' [तै०२।९।१] । इत्यादिभिः 'यतो वाचो निवर्तन्ते' इत्यत्र यच्छब्दादिभिर्विरोधप्रसङ्गः । विरोधपरिहाराय मुख्यवृत्तिनिषेधविषयतया व्यवस्थाप्यत इति चेदागतोऽसि पन्थानम् । विषयव्यवस्था तु

१ क. ख. ग. घ. ङ. °क्रियैश्वर्याद्य° । २ ग. घ. ङ. °त्वादिन° । ३ ग. घ. ङ. °युगानुभवानन्दो वा° । ४ ग. घ. ङ. °भावः स्वो° ।

विधविचित्रानन्तभोग्यभोगोपकरणभोगस्थानसमृद्धानन्ताश्चर्यमहाविभूति-
रनन्तपरिमाणनित्यनिरपायनिरवद्याक्षरपरमव्योमनिलयो विविधविचि-

यथाप्रमाणमस्माभिः क्रियत इति विशेषः । वाङ्मनसेत्यादिकं परमव्योमविशेषणतया केचिद्व्याचक्षते श्रीवैकुण्ठगद्ये तथोक्तेः । वयं तु अत्रैव षष्ठाध्याये 'योगिनामपि' इति श्लोके 'वाङ्मनसापरिच्छेद्यस्वरूपस्वभावम्' इति परमात्मविशेषणत्वेनैवाभिधानात्कुमतिनिरासार्थमपेक्षितत्वाच्चात्रापि तथा विवक्षामाचक्ष्महे । स्वोचितेत्यादि । अत्राप्यनन्ताश्चर्यशब्दः पूर्ववत् । विभवशब्देन वाहनरत्नादिग्रहः । अनन्तपरिमाणत्वं तिर्यगूर्ध्वादिदेशापेक्षया, अधस्तात्प्रकृत्यवच्छिन्नत्वात् । अनन्तशब्दावृत्तिः प्रत्येकमानन्त्ये तात्पर्यातिरेकात् । नित्यत्वं प्राकृतव्योमवत्क्षयरहितत्वम् । निरवद्यत्वं शुद्धसत्त्वमयत्वेन रजस्तमस्तत्कार्यराहित्यम् । अक्षरत्वमंशतोऽपि सृष्टिसंहारविरहः । परमशब्देन निर्दिष्टप्रक्रियया प्राकृतव्योमव्यवच्छेदः । एतेन 'तदक्षरे परमे व्योमन्' इत्यादिश्रुतिसूचनम् । एवं नित्यविभूतियोग उक्तः । अथ लीलाविभूतियोगप्रतिपादनमुखेन 'यतो वा इमानि' इत्यादिवाक्ये 'जन्माद्यस्य यतः' इति सूत्रेण निरूपितं जिज्ञास्यब्रह्मलक्षणयोगं दर्शयति—विविधेति । शब्दस्पर्शादिरूपेण दिव्यादिव्यादिभेदेन चात्र भोग्यवैविध्यवैचित्र्ये । इमानीत्यादिश्रुत्या हस्तप्रसारणेन तत्तत्प्रमाणसिद्धसमस्तकार्यप्रकारनिर्देशाद्बहुवचनासंकोचाच्च भोक्तॄणां ज्ञानसुखादितारतम्यहेतुभूतं देवादिरूपेण वैविध्यं तदवान्तरविधाभूतब्राह्मणादिरूपेण वैचित्र्यं च दर्शितम् । यद्वा विविधशब्द एव सावान्तरभेदं समस्तं वैविध्यं संगृह्णाति । विचित्रशब्दस्त्वाश्चर्यरूपत्वेनान्यापरः । 'मेघोदयः' इत्यारभ्य 'विष्णोर्विचित्राः प्रभवन्ति मायाः' इत्यादिवत् । ज्ञानसुखादितारतम्याभावेन परमव्योम्नि भोक्तृवैविध्याभावात्परभोग्यतैकरसनित्यसूरीणां पृथगुक्तत्वाच्च तत्र भोक्तृवर्गानुक्तिः । भोगोपकरणभोगस्थानान्यत्राप्यर्थसिद्धानि । एवंविधायाश्च विषमसृष्टेर्विचित्रानादिचेतनकर्मप्रवाहमूलत्वात्

त्रभोग्यभोक्तृवर्गपूर्णनिखिलजगदुदयविभवलयलीलः परब्रह्मभूतः पुरुषो-

वैषम्यादिदोषः। निखिलशब्देन कतिपयसृष्ट्यादिनिमित्तोपादान-भूतचतुर्मुखादिव्यावर्तनम्। उदयशब्देन सद्वारकाद्वारकसमस्त-सृष्टिसंग्रहणम्। एवं विभवशब्देन विष्ण्ववतारान्तर्यामित्वादिकृत-विविधस्थितिसंग्रहः। लयोऽपि नित्यनैमित्तिकादिरूपः। निखिलसृष्ट्यादिष्वन्यतमस्यैव ब्रह्मलक्षणत्वे संभवत्यपि उपात्त-व्यतिरिक्तयोः किमन्यः कर्तेति शङ्काव्यावर्तनाय सृष्ट्यादित्र-योपादानम्। जगद्गतानामुदयविभवलयानामेतद्गतलीलात्वेन व्यपदेशादुपादानत्वं सूचितम्। जगदाकारेण जायमानत्वादी-न्यस्य लीला। 'बहु स्यां प्रजायेय' इति हि जगत्कारणस्य तस्य संकल्पः। सूक्ष्मचिदचिद्विशिष्टस्यैवोपादानत्वाद्बालस्यैव युव-त्वादिप्राप्तौ न स्वरूपगतो विकार इति निर्विकारश्रुत्यविरोधः। अवाप्तसमस्तकामस्य कथं जगद्व्यापार इति शङ्कां परिहरता लीलाशब्देन निमित्तत्वमपि तस्यैवेति सिद्धम्। एतेन निमि-त्तोपादानभेदं वदन्तो निरस्ताः। न च लोके निमित्तोपादानभे-ददर्शनमात्राद्विरोधः। लौकिककारणविलक्षणत्वाच्छ्रुतिसिद्धस्य ब्रह्मणः। अन्ततो वैशेषिकादिभिरपि घटेश्वरगतसंयोगविभागद्वि-त्वद्विपृथक्त्वादिकार्येष्वीश्वरस्यैव निमित्तत्वमुपादानत्वं चाभ्युप-गतमिति न कश्चिदस्मन्मते दोषः। तथा बुद्धिपूर्वकसुखोत्पादनादा-वपि द्रष्टव्यम्। एवं ब्रह्मलक्षणयोगान्नारायणस्यैव परब्रह्मत्वं दर्श-यन्सद्ब्रह्मात्मादिसामान्यशब्दानां नारायणाख्यविशेषपर्यवसानं च सूचयन् 'नारायणः परं ब्रह्म' इति श्रुत्यनुकारिणः 'नारा-यणः परं ब्रह्म गीताशास्त्रे समीरितः' इति गीतार्थसंग्रहश्लो-कस्य प्रपञ्चनमिह क्रियत इति च ज्ञापयन्नुक्तैः प्रकारैः समाख्या-त्रयमस्यैव संगतमिति चोदाहरन्नुक्तेष्वर्थेषु वा समाख्यात्रयं प्रमाणयन् 'परं ब्रह्म परं धाम पवित्रं परमं भवान्।' 'प्रथितः पुरुषोत्तमः' 'एष नारायणः श्रीमान्' इत्यमीषां कृष्णैकविष-यत्वं च दर्शयन्नभेदश्रुतीनां भेदश्रुतीनां घटकश्रुतीनां कारणशो-धकोपासनश्रुतीनां च निष्कृष्टमर्थं संगृह्णाति—परं ब्रह्म पुरु-षोत्तमो नारायण इति। सर्वसामानाधिकरण्यं सर्ववैलक्षण्यं च

त्तमो नारायणो ब्रह्मादिस्थावरान्तं निखिलं *जगत्सृष्ट्वा स्वेन रूपेणाव-

सर्वान्तर्यामित्वेनोपपन्नमिति पदत्रयस्याभिप्रायः । अत एव प्रप-ञ्चब्रह्मभेदाभेदादिना सामानाधिकरण्यं वदन्तो निरस्ताः । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यारभ्य 'तत्र ब्रह्मा चतुर्मुखोऽजायत' 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्याद्युक्तप्रकारेण करणकलेवर-प्रदानहितोपदेष्टृत्वादिकमभिप्रेत्याऽऽह—ब्रह्मादिस्थावरान्तं निखिलं जगत्सृष्ट्वेति । ब्रह्मसृज्यस्य स्थावरपर्यन्तस्य जगतः परमात्मसृ-

* 'यतो वा इमानि भूतानि जायन्ते' ( तै० ३ । १ । १ ) इत्यादिश्रुतिषु परब्रह्मभूतस्येश्वरस्य जगत्कारणत्वमुक्तम् । तत्रेश्वरत्वं नाम व्यापकत्वे सति चेतनत्वं सत्य-संकल्पत्वं चेतीश्वरलक्षणं बोध्यम् । कारणं त्रिविधम्—उपादानं निमित्तं सहकारि चेति। तत्र कार्यरूपेण परिणामयोग्यं वस्तूपादानकारणम् । यथा घटं प्रति मृत्तिका । उपादान-वस्तुनः कार्यरूपेण परिणामं यः करोति स कर्तैव निमित्तकारणमुच्यते । यथा कुलालः । कार्योत्पत्त्युपकरणं वस्तु सहकारिकारणम् । यथा दण्डचक्रादयः । जगतस्तु त्रिविधमपि कारणमीश्वर एव । सूक्ष्मचिदचिद्विशिष्ट उपादानम् । बहु स्यामिति संकल्पविशिष्टो निमि-त्तम् । ज्ञानशक्त्यादिविशिष्टः सहकारीत्याशयः ।

नन्वीश्वरस्यैवोपादानत्वे तस्य सविकारत्वात् 'अविकाराय शुद्धाय' [ वि० पु० १ । २ । ] इत्युक्तं निर्विकारत्वं विरुध्यत इति चेन्न । चिदचिद्रूपविशेषणविशिष्टस्येश्व-रस्य जगद्रूपेण परिणामेऽपि विशेष्यस्य स्वरूपस्य विकाराभावात् । परिणामस्तु विशेषण-द्वारैव । यथोर्णनाभिः स्वरूपविकाराभावेऽपि स्वशरीरभूतविशेषणद्वारा तन्तुजालकार्यं प्रत्युपादानं तद्वत् । विशिष्टस्वरूपेण विकाराश्रयत्वमीश्वरस्येष्टमेव । मनुष्यादिशरीरविशिष्टे स्वरूपतो निर्विकारे पुंसि बाल्ययुवत्वस्थविरत्वस्थूलत्वादिवत् ।

ननु बौद्धा आर्हताश्च परमाणूनामेव जगत्कारणत्वं वदन्ति । वैशेषिकाश्च परमाणूना-मुपादानकारणत्वमीश्वरस्य निमित्तकारणत्वं वदन्ति । तत्र बौद्धा वैशेषिकाश्च पार्थिवाप्य-तैजसवायवीयांश्चतुर्विधान्परमाणूनभ्युपगच्छन्ति । आर्हताः पुनरेकरूपानेवेत्यन्यदेतत् ।

सांख्यास्तु प्रधानमेव जगत्कारणम् । यथा मेघविमुक्तस्यैकरसस्य जलस्य नारिके-लतालचूतकपित्थादिविचित्ररसरूपेण परिणामप्रवृत्तिर्दृश्यते तथा परिणामस्वभावस्य प्रधा-नस्यानन्याधिष्ठितस्यैव गुणवैषम्यनिमित्तो विचित्रपरिणामः संभवतीत्याहुः ।

तत्कथं नारायणस्यैव कारणत्वमुच्यत इति चेन्न—

१ ग. घ ङ. °गत्स्रष्टा स्वे° ।

परमाणौ प्रमाणाभावात् । तथा हि—न तावत्प्रत्यक्षम् । महत्त्वाभावात् । नाप्यनुमानम् । ‘ सदेव सोम्येदमग्र आसीत् ’ ( छा० ६ । २ । १ ) इत्यादिश्रुतिविरोधात् । नचाऽऽगमः । अनुपलम्भात् । प्रत्युताऽऽगमादीश्वरस्यैव जगत्कारणत्वं सिध्यति । अन्येषां च कारणानां त्रिष्वेवान्तर्भावः ।

नापि प्रधानं कारणम् । तस्याचेतनत्वात् । चेतनमेव हि संकल्पहेतुः । यदि स्वभावत एव प्रवृत्तिस्तर्हि प्रलयानुपपत्तिः ।

जीवविशेषोऽपि न कारणम् । तस्य कर्मपरतन्त्रत्वात् । ब्रह्मरुद्रादयोऽपि सृज्यत्वसंहार्यत्वरूपकार्यश्रवणाज्जीवविशेषा एवेति ।

छान्दोग्ये तावत्सदाकाशप्राणशब्दवाच्यानां जगत्कारणत्वं प्रतीयते । वाजसनेयके च ब्रह्मशब्दवाच्यस्य कारणत्वं प्रतीयते । सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामेकविषयत्वे प्रतिपादयितव्ये छागपशुन्यायेन सामान्यवाचकानां सदादिशब्दानां विशेषे ब्रह्मणि पर्यवसानं वक्तव्यम् । एवमुक्तन्यायेन ब्रह्मशब्दवाच्यस्य तैत्तिरीयोक्त आत्मशब्दवाच्ये पर्यवसान आत्मशब्दवाच्यः क इत्याकाङ्क्षायां श्रुतिप्रसिद्ध इन्द्रो वाऽग्निर्वोपास्यत्वेन प्रसिद्धः सूर्यो वा कारणत्वेनोक्तः सोमो वाऽभीष्टफलप्रदत्वेनोक्तः कुबेरो वा यमो वा वरुणो वेति विशये एतेषां कर्मवश्यत्वपरिच्छिन्नैश्वर्यत्वसंहार्यत्वश्रवणान्नैते जगत्कारणभूताः किंतु महोपनिषन्नारायणोपनिषत्सु नारायणस्यैव परमकारणत्वसर्वशब्दवाच्यत्वमोक्षप्रदत्वजगच्छरीरत्वादेः प्रतिपादनात्समस्तकल्याणगुणात्मकः प्रकृतिपुरुषाभ्यां भिन्नस्ताभ्यां विशिष्टः परब्रह्म जगत्कारणं नारायण एव ।

अयं च नारायणशब्दाभिलप्यमान ईश्वरो विशिष्टाद्वैतवादिनां रामानुजीयानां मते चिदचिद्रूपशरीरविशिष्ट एक एव न तु तस्मात्तच्छरीराच्चान्यत्किंचित् (१) तथा चेतनत्वेन स्वसजातीयेभ्यो जीवेभ्योऽचेतनत्वेन विजातीयेभ्यो जडेभ्यः प्रधानादिभ्यः स्वगतेभ्यः कल्याणकारकगुणेभ्यश्च भिन्नः (२) सविशेषः सर्वज्ञत्वनित्यत्वव्यापित्वादिविशेषयुक्तः सर्वज्ञो नित्यो व्यापीत्यादिशब्दैर्वक्तुं शक्यः (३) स्वभावत एवापहतपाप्मत्वाद्यनेककल्याणकारकगुणाश्रयो हेयगुणगणविरहितश्च (४)

तत्र विशिष्टाद्वैतशब्दस्य कोऽर्थ इति चेत्तत्र किंचिदुच्यते—रामानुजीयानां त्रिविधं तत्त्वमिष्टं जडजीवेश्वरभेदात्, तत्र जडं प्रसिद्धं पाञ्चभौतिकं शरीरादिकमखिलं जगत् । तदपेक्षया स्वरूपतः स्वभावतश्चात्यन्तविलक्षणस्तदन्तर्यामी जीवः । जीवस्याप्यन्तर्यामी निखिलहेयगुणराहित्येन कल्याणैकतानत्वेन जीवापेक्षयाऽत्यन्तविलक्षण ईश्वरः । अयमेव परमात्मब्रह्मशब्दवाच्यः सर्वाधारः सर्वकर्ता नारायणः । तत्र जडं जीवश्चेति द्वयं मिलित्वेश्वरस्य शरीरम् । ‘ यस्याऽऽत्मा शरीरम् ’ ( बृ० ३ । ७ । २२ ) ‘ यस्य पृथिवी शरीरम् ’ ( बृ० ३ । ७ । ३ ) इत्यादिश्रुतेः । ईश्वरस्य स्वरूपं ज्ञानं शरीरं चेति

ब्रह्मापि व्यापकमेव । तथा च-द्वयोर्भावो द्विता, द्वितैव द्वैतं, भेद इत्यर्थः । न द्वैतमद्वैतमभेद इत्यर्थः । विशिष्टस्याद्वैतं विशिष्टाद्वैतम् । स्वव्यतिरिक्तसमस्तचेतनाचेतनविशिष्टं ब्रह्मैकमेव । यद्ब्रह्मणः शरीरभूतं न भवति तादृशं ब्रह्मव्यतिरिक्तं किंचिदपि नास्तीति तात्पर्यम् । ब्रह्मणः शरीरभूता येऽनन्ता जीवा जडाश्च पदार्थास्तेषां नानात्वेऽपि ब्रह्मणः सकाशात्तेषां भेदेऽपि च तद्विशिष्टस्य शरीरिणो ब्रह्मण एकत्वमेवेति विशिष्टाद्वैतमित्युच्यते ।

शरीरशरीरिणोश्च तादात्म्येन व्यवहारो यद्यपि लोके दृश्यते यथा मनुष्योऽहं गौरोऽहं स्थूलोऽहमित्यादौ तथाऽपि स व्यवहारो गौण एव । शरीरप्रतिसंबन्धिन आत्मनो वस्तुतः शरीरापेक्षया भिन्नत्वात् । परमात्मशरीरं च चेतनत्वेन सजातीयं जीवरूपमचेतनत्वेन विजातीयं च जडरूपम् । तथा च परमात्मनि सजातीयाद्विजातीयाच्च भेदः सिध्यति । तथा च श्रुतौ—' पृथगात्मानं प्रेरितारं च मत्वा ' ( श्वे० १ । ६ ) ' क्षरात्मानावीशते देव एकः ' ( श्वे. १।१० ) इति । अत्र क्षरात्मपदवाच्ययोर्जडजीवयोर्नियम्यत्वेन देवपदवाच्यस्य परमात्मनश्च तन्नियन्तृत्वेन प्रतिपादनात्ताभ्यां परमात्मनो भेदः स्पष्ट एव । सूत्रकारैरपि ' अधिकं तु भेदनिर्देशात् ' ( ब्र० सू० २ । १ । २२ ) इत्यादौ जीवेश्वरयोर्भेद उक्तः । तथा ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपं गुणषट्कं न परमात्मस्वरूपान्तर्गतं किंतु परमात्मनिष्ठमिति तस्मादपि परमात्मा भिन्न एवेति परमात्मनि स्वगताद्भेदः सिध्यति । तथा च परमात्मनि सजातीयभेदविजातीयभेदस्वगतभेदरूपं भेदत्रयं सिद्धम् ।

ननु ' यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ' ( तै० २ । ७ । १ ) इति श्रुतौ भेदो निषिध्यते । य एतस्मिन्ब्रह्मणि खल्वमपि भेदं मन्यते तस्य भयं भवतीति तदर्थादिति चेन्न । श्रुत्यर्थाज्ञानात् । तत्र ह्यन्तरशब्दोऽवकाशवाची । ब्रह्मोपासनाया अवकाशे विच्छेदे सति भयं भवतीत्यर्थः ।

यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥
इति महर्षिवचनेनोपबृंहणादयमर्थो निश्चीयते ।

' एकमेवाद्वितीयम् ' ( छा० ६ । २ । १ ) इति श्रुत्याऽप्यद्वैतं नाऽऽपादनीयम् । तत्र ह्येकशब्देन ब्रह्मव्यतिरिक्तं जगतो निमित्तकारणं निषिध्यते । कार्यगतबहुत्वावस्था कार्यानुसारेण कारणे ब्रह्मणि कल्पिता स्यात्तन्निवृत्तय एवकारः । अद्वितीयमित्यनेन च ब्रह्मव्यतिरिक्तं जगत उपादानकारणं निषिध्यते ।

' नेह नानाऽस्ति किंचन ' ( बृ० ४ । ४ । १९ ) इति श्रुतेरयमाशयः—यस्य ब्रह्म कारणं न भवति नाप्यन्तर्यामि भवति तादृशं ब्रह्मभिन्नं वस्तु किंचिदपि नास्तीति । न तु ब्रह्मकार्यभूतस्य जगतो निषेधः प्रतिपाद्यते । जगत्कारणत्वस्य श्रुत्यैव प्रतिपादनात् ।

एवमेव ' यत्र द्वैतमिव भवति ' ( बृ० २ । ४ । १४ ) इत्याद्यद्वैतप्रतिपादिकाः श्रुतयो योजनीयाः ।

नन्वेवम् ' सोऽकामयत बहु स्यां प्रजायेय ' ( तै० २ । ६ । १ ) इति श्रुतिर्विरुध्यते । तत्र ह्यहं बहु स्यामिति परमात्मसंकल्पो दृश्यते । न तु स्वेतरत्किंचिन्निर्दिश्य तद्बहु स्यादिति । तथा च कार्यकारणानन्यत्वन्यायेन परमात्मनः सकाशाज्जगतो भिन्नत्वाभावः सिध्यति । उक्तभेदाङ्गीकारे त्वेतच्छ्रुतिविरोधः स्पष्ट इति चेत्सत्यम् । बहु स्यामिति बहुभवनसंकल्पो हि न साक्षात्किंतु शरीरद्वारा । तथा च स संकल्पो नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतयैकरूपेणावस्थितस्य विभक्तनामरूपचिदचिद्वस्तुशरीरकतया बहुप्रकारताविषय इत्येवं श्रुतितात्पर्याङ्गीकारान्न विरोधः ।

यतश्चायमीश्वरो नारायणो जगत्कारणत्वस्य कारणत्वोपयोगिनां सर्वज्ञत्वादिधर्माणां चाऽऽश्रयोऽतः स सविशेष एव । ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै० २ । १ । १ ) इति श्रुतावपि सत्यत्वादयो विशेषाः प्रतिपादिताः । तथा ' अथ परा यया तदक्षरमधिगम्यते ' ( मु० १ । १ । ५ ) इत्यत्रापि प्राकृतान्हेयगुणान्प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्वसार्वज्ञ्यादिकल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः । तथा हि कुण्डली छत्री वासस्वी देवदत्त इत्यत्रेव सत्यं ज्ञानमिति वाक्ये सत्यादिपदानामनेकविशेषणविशिष्टैकार्थाभिधानरूपं सामानाधिकरण्यं दृश्यते । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिरिति वृद्धयाह्निके कैयटे । एकस्यैव वस्तुनोऽनेकविशेषणविशिष्टताप्रतिपादनमिति तदर्थः । तथा च निमित्तभेदोऽवश्यमाश्रयणीयः । एवं च सत्यादिपदप्रवृत्तिनिमित्तभूतानां सत्यत्वादीनां ब्रह्मगतधर्माणामनपलपनीयत्वेन ब्रह्मणः सविशेषत्वं सिध्यति ।

युक्तं चैतत् । परस्येश्वरस्य जगत्कारणत्वम् ' यतो वा इमानि भूतानि जायन्ते ' ( तै० ३ । १ । १ ) इत्यादिश्रुतिसिद्धं निर्विवादमेव । तथा च जगद्रूपकार्योत्पादनोपयोगी सामर्थ्यविशेषस्तत्रावश्यमास्थेयः । लोके घटपटादिकार्याण्युत्पादयतां कुलालकुविन्दादीनां तत्तत्कार्योत्पत्त्युपयोगिसामर्थ्यविशेषस्य दर्शनात् । तथा चेश्वरस्यापि सामर्थ्यविशेषोऽनुमीयते । येन स सूक्ष्मचिदचिद्रूपशरीरद्वारेण सृष्टेरुपादानकारणं भवति । येन च जीवानां स्वप्नावस्थायां तत्तत्पुरुषमात्रानुभाव्यांस्तत्तत्कालावसानांश्च हस्त्यादीन्पदार्थान्क्षणमात्रेण सृजति । एवं च परमात्मनः सविशेषत्वं सिद्धम् ।

स च परमात्मा सगुण एव न तु निर्गुणः । निर्गुणे जगत्कारणत्वस्य सुतरामसंभवात् । गुणाश्च केचित्स्वरूपप्रतीत्यनुबन्धिनः । यथा ' सत्यं ज्ञानमनन्तं ब्रह्म ' ( तै.- २।१ ) ' आनन्दो ब्रह्म ' ( तै. ३।६ ) इत्यादिश्रुतिप्रतिपादिताः सत्यत्वज्ञानत्वानन्दत्वा-

मलत्वादयः। एते हि ब्रह्मस्वरूपप्रतिपत्तावेवोपयुज्यन्ते। आनन्दादिगुणविशिष्टस्यैव ब्रह्मत्वेन तेषां ब्रह्मस्वरूपान्तर्गतत्वात्। अत एवैते वस्तुस्वरूपप्रतीतिकाल एव प्रतीयन्ते। यथा लोके कस्मिंश्चित्पुरुषे दृष्टे तदैव तद्गता ह्रस्वत्वोन्नतत्वादयः प्रतीयन्ते। एते च स्वरूपान्तर्गतत्वात्सर्वासूपासनास्वनुवर्तन्ते। कारुण्यादयो गुणास्तु यद्यपि परमात्मानं कदाऽपि न व्यभिचरन्ति तथाऽपि ते स्वरूपानन्तर्गतत्वान्न सर्वासूपासनास्वनुवर्तन्ते। किंतु ये यत्रोक्तास्त एव तत्र भावनीयाः। ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपं गुणषट्कमपि कारुण्यादिवदेव न ब्रह्मस्वरूपान्तर्गतं किंतु ब्रह्मणा नित्यसंबद्धम्। यत्संबन्धं विना न कदाऽपि ब्रह्मणोऽवस्थितिर्ब्रह्मसंबन्धं विना च न क्षणमपि तेषामवस्थितिः। उक्तगुणैः सत्यत्वादिभिः स्वरूपे निरूपिते तद्विशेषका ज्ञानबलादयो गुणाः। तत्र सर्वज्ञत्वसर्वशक्तित्वादयो गुणाजगदुत्पादन उपयुज्यन्ते। वात्सल्यसौशील्यसौलभ्यादय आश्रयण उपयुज्यन्ते। वात्सल्यादीन्दृष्ट्वैवोपासकाः परमात्मानमाश्रयन्ति। कारुण्यादयो भक्तरक्षण उपयुज्यन्ते। यस्यामुपासनायां न केऽपि गुणा निर्दिष्टास्तस्यामपि ब्रह्मस्वरूपान्तर्गता गुणा भावनीया एवेति सर्वासूपासनासु प्राप्यं ब्रह्म सगुणमेव।

'निर्गुणम्' (चू०७।२) इति श्रुतिस्तु हेयगुणरहितमित्यर्थपरत्वेन वर्णनीया। हेया गुणास्तु पातकजरामरणशोकक्षुधातृषादयः। अत एव च्छान्दोग्ये 'अपहतपाप्मा विजरः' (छा० ८।१।५) इति त एव विशेषतः प्रतिषिद्धाः। तदग्रे च 'सत्यकामः सत्यसंकल्पः' (छा० ८।१।५) इत्येवं शुभा गुणा उक्ताः। सर्वगुणनिषेधे हि सत्यकामइतीयं श्रुतिर्विरुध्येत। अतस्तदानुगुण्येन निर्गुणश्रुतेर्हेयगुणरहितमित्येवार्थः स्वीकार्यः। तदेतत्सर्वं सुविस्तृतं विविच्य श्रीगुरुचरणैः स्वकृताद्वैतामोदग्रन्थ उक्तम्—

नित्यं हेयगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
स्पष्टार्थाः सगुणोक्तयः शुभगुणप्रख्यापनाद्ब्रह्मणः।
अद्वैतश्रुतयो विशिष्टविषया निष्कृष्टरूपाश्रया
भेदोक्तिस्तदिहाखिलश्रुतिहितं रामानुजीयं मतम्॥ इति।

(अथात्र मायावादिनां मतमुपन्यस्यते)

अद्वैतवादिनां श्रीशंकरगुरुमतानुयायिनां मत आत्मरूपमेकमेव तत्त्वं नान्यत्किंचित् १। आत्मनो व्यतिरिक्तं न किंचिदपि सत्यमात्मसजातीयमात्मविजातीयमात्मनिष्ठं वा। स्वगतसजातीयविजातीयभेदत्रयशून्य एवाऽऽत्मा २। स चाऽऽत्मा निर्विशेषः। ईदृशस्तादृश इत्येवं केनापि प्रकारेण वक्तुं न शक्यते ३। अत एव च स निर्गुणः। न तत्र कल्याणकारका अपि गुणा वस्तुतः सन्ति ४।

तत्र प्रथमतः क इमे शंकरगुरवः कदा च प्रादुरभूवन्नित्येतत्संक्षिप्य निरूप्यते।

अनवरततन्तन्यमानानाद्यनिर्वचनीयभावरूपाज्ञानविलसितसंसारचक्रे घटीयन्त्रवदश्रान्त

वम्भ्रम्यमाणाञ्जनान्निश्रमयितुकामो भगवान्निरवधिकरुणार्द्रस्वान्तः श्रीशंकरः शालिवाहनशके खेन्दुहयमिते ( शके ७१० ) श्रीशंकराचार्यरूपेणावातारीत् । त इमे शंकरगुरवं आचार्यपादाश्चोच्यन्ते । ततश्च ब्रह्मसूत्रव्याख्यारूपं शारीरभाष्यं विरच्य सर्वतोऽद्वैतवादे प्रसारिते स्वल्पेनैव कालेन प्रायः सर्वत्र शिष्यगणेन सह संचारं कृत्वा चतसृषु दिक्षु मठान्संस्थाप्य तत्र तत्राद्वैतात्मवादख्यापननिपुणान्पद्मपादादींश्चतुरः शिष्यान्नियोज्य स्वावतारकर्तव्यतापरिपूर्णतां मनस्यनुसंधाय शालिवाहनशके पक्षवेदर्षिपरिमिते ( ७४२ ) संवत्सरे स्वस्वरूपं प्रापुराचार्यचरणा इति प्रसिद्धिपरम्परातो ज्ञायते ।

प्रत्यग्ब्रह्मणोरैक्यमद्वैतशब्दार्थः । सजातीयादिभेदत्रयशून्यं ब्रह्मेत्यर्थः । तच्च ब्रह्मावगमयितुं प्रत्यक्षादिप्रमाणेषु शब्द एव तावदादौ मुख्यतः प्रकल्पते । तथा च ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' ( छा० ६ । २ । १ ) इत्यादिः श्रुतिः परमात्मरूपमेकमेव तत्त्वमिति स्पष्टमेवाभिधत्ते । स च परमात्मा दृशिरूपः । यद्यपि द्रष्टा दृश्यं दृशिश्चेति पदार्थत्रयमाबालमसंदेहं सकलैरप्यनुभूयते तथाऽपि दृश्याश्रयीभूतो द्रष्टा दृशिविषयीभूतं दृश्यमिति तयोर्द्रष्टृदृश्ययोर्दृशिसापेक्षत्वेन तत्स्वरूपस्य दृशिनिरूपणाधीननिरूपणाद्दृशिरेव वस्तुतस्तत्त्वम् । द्रष्टृदृश्ययोस्तु कल्पितत्वमेव ।

दृशिर्ज्ञानम् । सा च दृशिर्द्विधा निरुपाधिका सोपाधिका च । तत्र निरुपाधिका दृशिर्निराश्रयं निर्विषयं सन्मात्ररूपं ज्ञानम् । सा च निरुपाधिका दृशिः स्वरूपलाभे न किमप्यपेक्षते । इयमेव ब्रह्मशब्देन परमात्मशब्देन चाभिधीयते । साश्रयं सविषयं यच्च किंच प्रमाणादिजन्यं ज्ञानं तद्रूपा दृशिश्च सोपाधिकाऽऽश्रयविषयसापेक्षेति द्रष्टृदृश्यवत्कल्पितैव । तथा च कल्पितानां निखिलवस्तूनामाश्रयीभूतं कल्पनाधिष्ठानभूतमत एव सर्वजगन्मूलभूतं ब्रह्म । 'यतो वा इमानि भूतानि जायन्ते ' ( तै० ३ । १ । १ ) इति श्रुतौ ' जन्माद्यस्य यतः ' ( ब्र० सू० १ । १ । २ ) इति सूत्रे च सर्वजगन्मूलकारणं ब्रह्मेति ब्रह्मलक्षणं प्रतिपाद्यते ।

कारणं च कार्यापेक्षया व्यापकं भवति । तदुक्तमुपदेशसाहस्याम्—

सूक्ष्मताव्यापिते ज्ञेये गन्धादेरुत्तरोत्तरम् ।
प्रत्यगात्मावसानेषु पूर्वपूर्वप्रहाणतः ॥ ( उ० सा० ९ । १ )

इति । पृथिवीजलतेजोवाय्वाकाशादिस्वरूपात्कार्यात्पूर्वस्मादुत्तरोत्तरं कारणतया स्थितेषु परमात्मपर्यन्तेषु पदार्थेषु यथाक्रमं कार्याकारत्यागेन व्यापिता विज्ञातव्या । तथा सकलविकारानुगतस्यैवोपादानकारणत्वात्कार्यापेक्षयाऽधिकदेशवृत्तित्वेन कारणस्य कार्यव्यापकत्वम्, तस्मात्पृथिवी स्वकार्यापेक्षया व्यापिका सिद्धा । पृथिव्यपेक्षया जलं व्यापकम् । एवमुत्तरत्र तेजआदिषु बोध्यम् ।

व्यापकत्वादेव च कारणं कार्यापेक्षया सामान्यभूतम् । कार्यगतविशेषरहितमित्यर्थः । घटशरावादिकार्यगतानां घटत्वशरावत्वादिविशेषाणां कारणावस्थायां मृदवदर्शनात् । अत एव सर्वकार्याणां मूलकारणं ब्रह्म सर्वविशेषरहितम् । यदि तत्र कोऽपि विशेषः स्यात्तर्हि तादृशविशेषरहितं ब्रह्मणोऽपि मूलकारणमन्यत्किंचित्स्यात् । तस्यापि सविशेषत्वे तादृशविशेषरहितं तन्मूलभूतं पुनरन्यत्स्यादित्यनवस्थाप्रसङ्गः । तन्निरासाय मूलकारणं सर्वविशेषरहितमित्यवश्यं वाच्यम् । तदेव च नो ब्रह्म ।

विशेषरहितत्वादेव च न तत्र यस्मात्कस्मादपि सजातीयाद्विजातीयात्स्वगताच्च भेदः संभवति । सविशेषस्यैव भेदाधिकरणत्वात् । तेन ब्रह्मसजातीयश्चेतनो ब्रह्मविजातीयोऽचेतनो ब्रह्मगतो धर्मो वा न कश्चिदन्योऽस्तीति सर्वथा शुद्धमद्वितीयं भेदत्रयशून्यं निर्विशेषं ब्रह्म सिध्यति ।

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ॥ ( ब्र० बि० ८ । ९ )

इति श्रुतौ निर्विकल्पशब्देन ब्रह्मणो निर्विशेषता स्पष्टमेवोच्यते ।

किं च ब्रह्मणः सविशेषत्वे तद्विशेषपुरस्कारेणेदृशं तादृशमित्येवं शब्दप्रतिपाद्यता ब्रह्मणः स्यात् । तथा सति 'यतो वाचो निवर्तन्ते' ( तै० २ । ९ ) इति श्रुतिः, 'अगोचरं वचसाम्' ( वि० पु० ६ । ७ । ५३ ) इति स्मृतिश्च विरुद्धा स्यात् ।

'निर्गुणम्' ( आ० १ चू० ७ । २ ) इति श्रुतिर्ब्रह्मणि शुभान्हेयांश्च सर्वानेव गुणान्सामान्येन निषेधति । युक्तं चैतत् । ब्रह्मणः सगुणत्वे तेन गुणेन ब्रह्मणः सविशेषत्वावश्यंभावेन तस्य पूर्वोक्तयुक्त्या जगन्मूलकारणत्वं न स्यात् । 'यः सर्वज्ञः' ( मु० १ । १ । ९ ) 'सत्यकामः सत्यसंकल्पः' ( छा० ८ । ७ । १ ) इत्याद्याः सगुणश्रुतयस्त्वारोपितगुणप्रतिपादिकाः । ब्रह्मणि गुणान्वस्तुत एव स्वीकृत्य हेयगुणराहित्येन निर्गुणश्रुतिसमर्थने तु बाह्येन्द्रियग्राह्यरूपरसादिगुणराहित्येन जीवस्यापि निर्गुणपदवाच्यता स्यात् । पृथिव्यादिभूतानामपि सुखदुःखादिगुणराहित्येन निर्गुणपदवाच्यता स्यात् । तथा सति 'निर्गुणम्' ( आ० १ चू० ७ । २ ) इति पूर्वोक्तश्रुत्या निर्गुणपदेन किमप्यधिकं नोक्तं भवेत् । एवं च परब्रह्मणि कल्याणकारका अपि गुणा वस्तुतो नैव सन्ति ।

किं च परमात्मनिष्ठत्वेनाभिमताः कल्याणकारका गुणा जीवानां जीवावस्थायामेवोपयुज्यन्ते । सा चावस्थाऽविद्याकल्पितेति तत्रोपयुज्यमानाः परमात्मगुणा अपि कल्पिता एव । स्वप्नस्थकल्पितगतिक्रियायामुपयुज्यमानो रथोऽपि कल्पित एव भवति ।

ज्ञानमपि परब्रह्मणः स्वरूपं न तु तस्य गुणः । 'विज्ञानघनः' ( बृ० २ । ४ । १२ ), 'सत्यं ज्ञानम्' ( तै० २ । १ ) 'विज्ञानमानन्दं ब्रह्म' ( बृ० ३ । ९ । २८ ) इत्यादिश्रुतिषु

ज्ञानस्वरूपं ब्रह्मेति स्पष्टमेवोच्यते। 'विज्ञातारमरे' (बृ० २।४।१४) इति श्रुतौ विज्ञातृत्वोक्तिस्त्वौपचारिकी। अद्वितीये परब्रह्मणि भेदमूलकस्य धर्मधर्मिभावस्यासंभवेन तस्य वस्तुतो ज्ञानाश्रयत्वासंभवात्। तदेतद्ब्रह्माद्वितीयम्। ब्रह्मणा संबद्धं तदसंबद्धं तच्छरीरभूतं तदंशभूतं तद्धर्मभूतं वाऽन्यत्किंचिदपि नास्ति। 'सर्वं खल्विदं ब्रह्म' (छा० ३।१४।१) 'इदं सर्वं यदयमात्मा' (बृ० २।४।५) 'ऐतदात्म्यमिदं सर्वम्' (छा० ६।८।७) इत्यादिश्रुतिभ्यः सर्वस्य जगतो ब्रह्मतादात्म्यं स्फुटमेव प्रतीयते। ब्रह्माद्वैतमिति प्रसिद्धिरपि एतन्मते सामीचीन्येन संगच्छते। ब्रह्मणि वस्तुतः केनापि प्रकारेण द्वैतस्याभावात्। अत एवेदमद्वैतमतमिति जेगीयते।

ब्रह्म च सन्मात्ररूपम्। अस्तीत्येव केवलं वक्तुं शक्यते न त्वीदृशं तादृशमिति। ईदृशादिविशेषणोपादाने तु विशेषणस्य व्यावर्तकत्वानियमेन यस्य व्यावृत्तिस्तेन ब्रह्मणः सद्वितीयत्वापत्तावद्वितीयश्रुतिर्विरुध्येत।

ननु ब्रह्माद्वैते—

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥

इत्यभियुक्तोक्तिर्विरुध्येत। अत्र जीव ईश्वरो ब्रह्म जीवेश्वरयोर्भेदोऽविद्या ब्रह्मणोऽविद्यासंबन्धश्चेत्येतेषां षण्णामनादित्वकथनेन द्वैतस्य स्पष्टमेव प्रतिपन्नत्वादिति चेदुच्यते। सत्ता हि त्रिविधा पारमार्थिकी व्यावहारिकी प्रातिभासिकी च तत्र पारमार्थिकी सत्ता ब्रह्मण एव नान्यस्य कस्यचित्। तस्य कदाऽप्यबाध्यमानत्वात्। व्यावहारिकी सत्ता भूतभौतिकस्य सर्वस्य जगतस्तस्य मोक्षदशायां बाधेऽपि व्यवहारदशायामबाध्यमानत्वात्। प्रातिभासिकी सत्ता शुक्त्यादौ भासमानस्य रजतादेः। तस्य व्यवहारदशायामपि बाधात्। प्रतिभासकाल एव तस्य सत्त्वम्। तदुक्तम्—

कालत्रये ज्ञातृकाले प्रतीतिसमये तथा।
बाधाभावात्पदार्थानां सत्त्वत्रैविध्यमिष्यते॥
तात्त्विकं ब्रह्मणः सत्त्वं व्योमादेर्व्यावहारिकम्।
रूप्यादेरर्थजातस्य प्रातिभासिकमिष्यते॥
लौकिकेन प्रमाणेन यद्बाध्यं लौकिकेऽवधौ।
तत्प्रातिभासिकं सत्त्वं बाध्यं सत्येव मातरि॥
वैदिकेन प्रमाणेन यद्बाध्यं वैदिकेऽवधौ।
तद्व्यावहारिकं सत्त्वं बाध्यं मात्रा सहैव तत्॥ इति।

ब्रह्माद्वैतमित्युक्तिस्तु पारमार्थिकसत्ताभिप्रायेण बोध्या। जीव ईश इत्युक्तश्लोके विशुद्धा

स्थितो ब्रह्मादिदेवमनुष्याणां ध्यानार्चनाद्यगोचरोऽप्यपारकारुण्यसौशी-

ल्यत्ववचनाद्ब्रह्मा(ह्मत्वा)दिकञ्चुकितः परमात्मा तत्तत्सृजतीति सिद्धम्। अथ स्वेच्छयाऽवतारं तत्प्रयोजनं च वक्तुमनवतारदशायां तत्प्रयोजनानिर्वृत्तिं दर्शयति—स्थैनेत्यादिनाऽगोचर इत्यन्तेन । अगोचरत्वमव्यक्तत्वात् । यथोच्यते—

यैर्लक्षणैरुपेतो हि हरिरव्यक्तरूपधृक् ।
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम् ॥ इति ।

ब्रह्मादिदेवेतिवचनात् 'तदुपर्यपि बादरायणः संभवात्' [ब्र० सू० १ । ३ । २६ ] इत्यधिकरणेऽर्थित्वसामर्थ्याभ्यां समर्थितं ब्रह्मरुद्रादिदेवजातीनामपि परमात्मोपासनाधिकारित्वं सूचितम् । स्वप्रयोजनाभावे कथं प्रवर्तेनेत्यत्राऽऽह—अपारेति । स्वार्थनिरपेक्षया परदुःखासहितया महत्त्वाप्रतिरुद्धया मन्दैः सह निरन्तरसंश्लेषर-सिकतया स्वाभाविकेन परदोषातिरस्कारिणा संबन्धविशेषेण पिशाचगोपालगोपिकादिभ्यः स्वात्मसमर्पणे कृतेऽपि कियद्दत्त-

---

चिदित्यनेन परं ब्रह्मोच्यते तदतिरिक्तानां जीवादीनां पञ्चानां न पारमार्थिकं सत्त्वं किं तु व्यावहारिकम् । अनादित्वसाम्येन तु षण्णां तत्र परिगणनम् । पारमार्थिकस्य ब्रह्मणोऽनादित्वमनन्तत्वं च । कालत्रयाबाध्यत्वमिति यावत् । अन्येषां जीवादीनां पञ्चानां त्वनादित्वेऽपि नानन्तत्वम् । तेषां यावत्संसारं स्थायित्वेऽपि मोक्षावस्थायां विनाशात् । तेष्वपि जीवेश्वरभेदोऽविद्या ब्रह्मणोऽविद्यासंबन्धश्चेत्येतेषां त्रयाणां स्वरूपेणैव नाशः । जीवेश्वरयोस्तु न तथा । किं तु जीवत्वेश्वरत्वप्रापकोपाधेरेव विनाशः । एतेन जीवस्य व्यावहारिकसत्त्वे व्यवहारातीतायां मोक्षावस्थायां जीवनाशावश्यंभावेन मोक्षप्राप्तये न कोऽपि यतेतेत्य-पास्तम् ।

तदेवं मायावादिमते निर्गुणं निर्विशेषं भेदत्रयशून्यं च सन्मात्रं ब्रह्मैकमेव सत्यं नान्य-त्किंचिदिति सिद्धम् । तदुक्तमद्वैतामोदग्रन्थे श्रीगुरुचरणैः—

नित्यं सर्वगुणावधूननपरा नैर्गुण्यवादाः श्रुतौ
गौणार्थाः सगुणोक्तयः शुभगुणारोपात्परे ब्रह्मणि ।
अद्वैतश्रुतयः स्वदर्थविषया भेदोक्तिरौपाधिकी
तत्सर्वश्रुतिसंगतं विजयते श्रीशांकरं दर्शनम् ॥

इत्यलं विस्तरेण ।

ल्यवात्सल्यौदार्यमहोदधिः स्वेयमेव रूपं तत्सजातीयसंस्थानं स्वस्वभावमजहदेवं कुर्वंस्तेषुं तेषु लोकेष्ववतीर्यावतीर्य तैस्तैराराधितस्तत्तदिष्टानुरूपं धर्मार्थकाममोक्षफलं प्रापयन्भूभारावतारणापदेशेनास्मदादीनामपि संसा-

मिति भावयता महौदार्येण च प्रेरितोऽवतरतीत्यर्थः। अस्त्रभूषणाध्यायोक्तं विग्रहम्—

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

इति परामृश्य

समस्तशक्तिरूपाणि तत्करोति जनेश्वर।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥

इत्युक्तप्रकारेणावतारविग्रहस्यापि अप्राकृतपरमपदनिलयविग्रहांशविशेषत्वं दर्शयितुं स्वयमेव रूपमित्याद्युक्तम्।

नैष गर्भत्वमापेदे न योन्यामवसत्प्रभुः।
न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसंभवा ॥
न भूतसंघसंस्थानो देहोऽस्य परमात्मनः।

इति चोच्यते । 'अजोऽपि सन्' इत्यादिवक्ष्यमाणमनुसंदधान आह—स्वस्वभावमजहदेवेति ।

'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत'।

'संभवामि युगे युगे' इति वीप्सार्थम् 'बहूनि मे व्यतीतानि जन्मानि' इत्याद्यर्थं च भावयन्नाह—तेषु तेषु लोकेष्ववतीर्यावतीर्येति। 'स उ श्रेयान्भवति जायमानः' 'यस्यावताररूपाणि समर्चन्ति दिवौकसः। अपश्यन्तः परं रूपम्' इत्यादिकं स्मारयितुम्—अवतीर्य तैस्तैराराधित इत्युक्तम्। 'तत्तदिष्टानुरूपम्' इति वचनात्फलप्रदाने वैषम्यदोषः परिहृतः। 'तस्मिन्प्रसन्ने किमिहास्त्यलभ्यम्' इत्यादि चात्रानुसंधेयम्। एवमवतारसामान्यं तत्प्रयोजनं च दर्शितम्। अथ तद्विशेषं प्रस्तुतान्वितं दर्शयति—भूभारेत्यादिना। भूभारावतरणं व्याजमात्रं सर्वसमाश्रयणीयत्वं तु साक्षादुद्देश्यं, दुष्कृद्विनाशस्य साधुपरि-

१ ग. घ. स्वमे°। २ क. °वते°। ३ ग. घ. ङ. °षु लो°। ४ क. °वतीर्य।

रदुःखशमनाय सकलमनुष्यनयनविषयतां गतः परावरनिखिलजनसंतापह
राणि चेष्टितानिःकुर्वन्पूतनाशकटयमलार्जुनारिष्टप्रलम्बधेनुकासुरकालीयके-
शिकुवलयापीडचाणूरमुष्टिककोसलकंसादीन्निहत्यानवधिकदयासौहार्दानुरा-
गगर्भावलोकनालापामृतैर्विश्वमाप्याययन्निरतिशयसौन्दर्यसौशील्यादिगुण-

त्राणाख्यमहाप्रयोजनानुषङ्गिकत्वाद्भूभारावतरणापदेशेनेत्युक्तम्। अस्मदादीनामपि अयोगिनामित्यर्थः। सर्वसमाश्रयणीयत्वं विवृणोति—सकलेति।

यन्न देवा न मुनयो न चाहं न च शंकरः।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम्॥

इत्यादिप्रतिपादितप्रकारेण महायोगिनां परिशुद्धेन मनसाऽपि दुर्ग्रहः सौलभ्यातिरेकान्मनुष्याणां तत्राप्यागोपालमवधीरितविरुद्धाविरुद्धविभागो मांसचक्षुषा ग्राह्योऽभूदिति भावः। एवमवतरणनयनविषयत्वयोर्न केवलमाराध्यत्वमेव प्रयोजनं किंतु तदनुभवोऽपीत्यभिप्रायेणाऽऽह—परावरेति। परा उपासनसमर्थाः, ब्रह्मरुद्रभीष्माक्रूरादयः। अवरास्त्वाभीरप्रभृतयः। निखिलजनेति—स्त्रीपुंसादिविभागोऽपि नास्तीत्यभिप्रेतम्। 'पुंसां दृष्टिचित्तापहारिणम्' इतिवत्। दिव्यचेष्टितानि—नवनीतनटनादीनि। एवं विशेषणद्वयं साधुपरित्राणप्रकारविशेषतयाऽभिहितम्। अथ साधुपरित्राणानुषङ्गिकं दुष्कृद्विनाशनप्रकारं प्रपञ्चयति—पूतनेति। भगवतो बलभद्रस्यापि एतदंशरूपत्वात्प्रलम्बमुष्टिकादिहननमपि एतत्कर्तृकतयोपात्तम्। पुनः साधुपरित्राणान्तर्गतां भोग्यतां दर्शयति—अनवधिकेति। प्रियतमस्वरूपसंदर्शनं धारकं तच्चेष्टितनिदर्शनं पोषकं तेन सहाऽऽलापादिर्भोगप्रकार इति नयनविषयत्वचेष्टितालोकनादिविभागनिर्देशाभिप्रायः। दया स्वार्थनिरपेक्षा परदुःखनिराकरणेच्छा। सौहार्दं हितैषित्वम्। अनुरागः प्रीतिः। एवं साधुपरित्राणं तदौपयिकं दुष्कृद्विनाशनं चोक्तम्। अथ धर्मसंस्थापनमाराध्यस्वरूपप्रदर्शनेन देशकालविप्रकृष्टानामपि परम्परयाऽनुग्राहकेणोपदेशेन च दर्शयति—निरतिशयेत्यादिना वाक्यशेषेण। एतच्चाखिलं 'परित्राणाय'

१ ग. 'नमनोनयनहारिदिव्यचे। २ क. ख. सौगन्ध्यादि।

गणाविष्कारेणाक्रूरमालाकारादिकान्परमभागवतान्कृत्वा पाण्डुतनययुद्धप्रोत्साहनव्याजेन परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतं भक्तियोगमवतारयामास । तत्र पाण्डवानां

---

इति श्लोके व्याख्यास्यति । तत्र हि साधूनां लक्षणस्वभावादिकमुक्त्वाऽनन्तरमेवमुक्तम्-मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषां परित्राणाय तद्विपरीतानां विनाशाय च क्षीणस्य वैदिकस्य धर्मस्य मदाराधनरूपस्याऽऽराध्यस्वरूपप्रदर्शनेन स्थापनाय च देवमनुष्यादिरूपेण युगे युगे संभवामीति । उपदेशतो धर्मसंस्थापनं व्यासादिमुखेनापि शक्यम्, आराध्याकारप्रदर्शनेन स्थापनं तु स्वेनैवावश्यकर्तव्यमिति भावः । बाह्यान्तरकरणग्राहकगुणवर्गनिदर्शनतया सौन्दर्यसौशील्ययोर्ग्रहणम् । परमभागवतान्कृत्वेति—भगवद्भक्तिरूपपरमधर्मनिष्ठान्कृत्वेत्यर्थः । एवं प्राचीनभगवच्चरितस्य श्रीमद्गीतार्थोपदेशेन संगतिः प्रदर्शिता । पाण्डुतनययुद्धप्रोत्साहनव्याजेनेति तु भारतकथासंगतिः । अत्र व्याजशब्देन—

अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम् ।
पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥

इत्यत्रत्योद्दिश्येतिपदस्याभिप्रायो विवृतः । परमपुरुषार्थेत्यादिना शास्त्रस्य परमप्रयोजनाभिधानम् । तेनात्र भूमविद्यायामिवाऽऽत्मानुभवोक्तिरैश्वर्योक्तिवद्भगवदनुभवापेक्षया निकृष्टपर्वत्वज्ञापनायेति सूचितम् । मोक्षसाधनतयेति साध्यसाधनभावनिर्देशेन संसार्यात्मन एव नित्यमुक्तिं वदन्तो निराकृताः । वेदान्तोदितं वेदान्तविहितं न तु वेदान्तोत्पादितमित्यर्थः । एतेनाविधेयज्ञानवादिनो निरस्ताः । वेदान्तोदितस्यार्थस्योपबृंहणमत्र क्रियत इति भावः । वेदान्तोदितं स्वविषयमिति । मोक्षार्थोपासनवाक्यानामनन्यपरतया साक्षात्परमपुरुषाराधनविषयत्वमेव । अथर्वशिरःप्रतर्दनविद्यादिषु रुद्रेन्द्रादिभिः स्वस्य मुमुक्षूपास्यत्व-

---

१ क. ख. °गणविस्तारे° । २ क. ख. पाण्डवानपि परमप्रियत्वेनानुरञ्जयन्प° ।

कुरूणां च युद्धे प्रारब्धे स भगवान्पुरुषोत्तमः सर्वेश्वरेश्वरो जगदुपकृतिमर्त्यः

---

वचनेऽपि रुद्रेन्द्राद्यन्तर्यामिभूतः परमात्मैवोपास्य इति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' [ब्र. सू. १।१।३१] इति सूत्रकारेणैव प्रतिपादितमिति भावः । एतेन वेदान्तोदितस्वमाहात्म्यवादिनो भगवतः 'स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः' इति सूचितम् । स्वविषयमिति भक्तियोगस्य सिद्धरूपपरमप्रतिपाद्यानुबन्धित्वमपि दर्शितम् । प्रधानविधेयांशनिष्कर्षाय भक्तियोगमित्युक्तम् । ज्ञानकर्मानुगृहीतत्वं ज्ञानकर्मसाध्यत्वम् । एतेन समुच्चयादिपक्षा निरस्ताः । वैराग्यस्य संग्रहश्लोके पृथगुक्तस्यापि निष्ठाद्वयानुप्रविष्टत्वादिहानुक्तिः । एवमुपायोपेयात्मकमुभयमपि शास्त्रप्रतिपाद्यमिति संग्रहश्लोकतात्पर्यमुक्तं भवति । मोक्षसाधनतया वेदान्तोदितं भक्तियोगमितिवचनादुपासनस्यार्वाचीनब्रह्मप्राप्त्यादिसाधनत्वं वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं च वदन्तः प्रत्युक्ताः । ज्ञानध्यानादिसामान्यवचसां भक्तिरूपविशेषे पर्यवसानमिति च भावः । एतच्चाखिलमुत्तरत्र व्यक्तं भविष्यति । एवं शास्त्रं संगमय्य शास्त्रोपोद्घातं संगमयितुं पाण्डुतनयेत्यादिना सूचितं पूर्ववृत्तान्तं प्रकटयन्सारथित्वेनावस्थायाऽऽचार्यकृत्यकरणे प्रतारकत्वशङ्कां निवारयति—तत्रेति । तत्र प्रथमं भक्तियोगमवतारयितुमेवं चकारेत्यर्थः । यद्वा तत्र युद्धे प्रारब्ध इत्यन्वयः । भक्तियोगावतरणव्याजभूतप्रोत्साहनविषयभूते प्रारब्ध इत्यर्थः । भगवतोऽवतारदशायामपि पूर्णत्वं स्वाच्छन्द्यादिकं वात्सल्यादिमूलसारथ्याद्यपकृष्टकर्मानुष्ठानस्य गुणरूपत्वादिकं च प्रदर्शयितुं स भगवानित्याद्युक्तम् । स भगवान्पुरुषोत्तमः सर्वेश्वरेश्वर इति चतुर्भिः पदैः स्वरूपगुणवैलक्षण्यविभूत्यादिप्रतिपादनेन परत्वसंग्रहः । सर्वेश्वरेश्वर इत्यनेन सर्वेश्वरेश्वरः कृष्ण इत्यादिवचनोक्तं स्वाच्छन्द्यं जगत्कुटुम्बित्वं च ज्ञापितम् । जगदुपकृतिमर्त्य आश्रितवात्सल्यविवश इति सौलभ्यसंग्रहः । अविप्रलम्भकत्वं चानेन व्यञ्जितम् । 'जगतामुपकाराय' 'जगदुपकृतिमर्त्यं'

स्वाश्रितजनवात्सल्यविवशः पार्थं रथिनमात्मानं च सारथिं सर्वलोकसाक्षिकं चकार। एवमर्जुनस्योत्कर्षं ज्ञात्वाऽपि सर्वात्मनाऽन्धो धृतराष्ट्रः सुयोधनविजये संदिहानः संजयं पप्रच्छ—

---

को विजेतुं समर्थः' इत्यादिकमिह स्मारितम् । जगदुपकृतिमर्त्यत्वेऽपि उत्कृष्टचरितं परित्यज्य निकृष्टसारथ्यादिकृत्यं कुत इत्यत्रोक्तमाश्रितवात्सल्यविवश इति ॥ पार्थं रथिनमात्मानं च सारथिमिति ॥ अपकृष्टं पार्थमुत्कृष्टे कृत्ये स्वयमेवावस्थाप्य स्वात्मानमुत्कृष्टं निकृष्टकृत्ये चकारेति भावः । पार्थशब्देन वात्सल्यौपयिकसंबन्धविशेषोऽपि सूचितः। पितृष्वसा हि पृथा भगवतः। सर्वलोकसाक्षिकमिति ॥ न चासौ निकृष्टकृत्यं सापत्रपो रहस्ये कृतवान् । अत इदमप्याश्रितवात्सल्यस्य नैरपेक्ष्यस्यार्थापह्नवाद्यसंभवस्य च लिङ्गमिति भावः। यद्वा—सर्वेषां स्वसमाश्रयणेन पुरुषार्थलाभाय स्वस्य शास्त्रैकसमाधिगम्यमाश्रितपारतन्त्र्यं सर्वलोकप्रत्यक्षं चकारेति भावः । तदेवं त्वां शीलरूप इत्यादिक्रमेणानन्यासाधारणशीलरूपचरितपरमसत्त्वप्रबलशास्त्रदेवतापारमार्थ्यवेदिशांतनवसंजयादिवचनैरपि आसुरप्रकृतीनां यथावदवगन्तुमशक्यतां प्रदर्शयन्गीतोपनिषत्प्रस्तावनार्थं प्रथमश्लोकमवतारयति-एवमिति। 'श्रियः पतिः' इत्यादिना पूर्वोक्तप्रकारेणेत्यर्थः। सर्वात्मनेति। न केवलं चक्षुषा परत्रेह च हितमजानता मनसाऽपीत्यर्थः । एवंविधमान्ध्यं सुयोधनविजयाभिलाषेण प्रश्ने हेतुः । मामका इति प्रथमोक्त्या ममकारेण 'यत्र योगेश्वरः' इत्यादिप्रतिवचनप्रक्रियया च सूचितं प्रष्टुरभिप्रायं दर्शयितुं सुयोधनेत्यादिकमुक्तम् । संजयमिति । व्यासप्रसादलब्धसकलभारतसमरवृत्तान्तसाक्षात्कारम् । 'शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्' इत्यादिवादवादिनम् । एवं यथार्थदर्शित्वयथादृष्टार्थवादित्वाभ्यामाप्ततमतया निर्णीतमिति भावः । पप्रच्छ । समरवृत्तान्तमिति शेषः ।

धृतराष्ट्र उवाच—

* धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।

\+ मामकाः पाण्डवाश्चैव × किमकुर्वत = संजय ॥ १ ॥

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं ÷ व्यूढं दुर्योधनस्तदा।

आचार्यम् ⁜ उपसंगम्य राजा ⊙ वचनमब्रवीत् ॥ २ ॥

---

धर्मक्षेत्रे धर्मस्य स्थानभूते सत्राध्वरसमुचित इति भावः। कुरुक्षेत्रे पाण्डवधार्तराष्ट्राणां स्वकूटस्थनामोपलक्षितत्वेन बहुमानविषय इति भावः। युयुत्सवः समवेता मिथः प्रत्यनीकरूपेण व्यूढा इत्यर्थः। चैवेत्यव्ययद्वयमनतिरिक्तार्थम्। यद्वा—समस्तभूतमण्डलवर्तिनां राज्ञां तत्र समाहारेऽपि तादर्थ्याद्वर्गद्वयमेव तदाऽभूदित्येवकाराभिप्रायः। अकुर्वतेत्यात्मनेपदेन कर्त्रभिप्रायक्रियाफलविपर्ययेण स्वार्थतोक्ता। एवं सुयोधनविजयबुभुत्साकृतस्य प्रश्नस्य 'यत्र योगेश्वरः' इति साक्षादुत्तरं वक्ष्यंस्तत्प्रत्यायनार्थमखिलमवान्तरवृत्तान्तमपि संजय उवाच—दृष्ट्वेति। पाण्डवानीकं व्यूढं दृष्ट्वेति सुयोधनस्य धैर्यभ्रं-

---

* धर्मस्य पूर्वमविद्यमानस्योत्पत्तेर्विद्यमानस्य च वृद्धेर्निमित्तं सस्यस्येव क्षेत्रं यत्कुरुक्षेत्रं सर्वश्रुतिस्मृतिप्रसिद्धम्। 'बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' इति जाबालश्रुतेः। + मामकाः किमकुर्वतेत्येतावतैव प्रश्ननिर्वाहे पाण्डवाश्चेति पृथङ्निर्दिशन्पाण्डवेषु ममकाराभावप्रदर्शनेन तद्द्रोहमभिव्यनक्ति। × धर्मक्षेत्रगताः पाण्डवाः पूर्वमेव धार्मिका यदि पक्षद्वयहिंसानिमित्तादधर्माद्भीता निवर्तेरंस्ततः प्राप्तराज्या एव मत्पुत्राः। अथवा क्षेत्रमाहात्म्येन पापानामपि मत्पुत्राणां कदाचिच्चित्तप्रसादः स्यात्तदा च तेऽनुतप्ताः कपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युस्तर्हि विनाऽपि युद्धं हता एवेति स्वपुत्रराज्यलाभे पाण्डवराज्यालाभे च दृढतरमुपायमपश्यतो महानुद्वेग एव प्रश्नबीजम्। = संजयेति च संबोधनं रागद्वेषादिदोषाक्षितवानसीति निर्व्याजं कथनीयं त्वयेति सूचनार्थम्। ÷ व्यूहरचनया धृष्टद्युम्नादिभिः स्थापितम्। ⁜ न तु स्वसमीपे तमाहूयेत्यर्थः। एतेन पाण्डवसैन्यदर्शनजं भयं सूचितम्। ⊙ भयेन स्वरक्षार्थं तत्समीपगमनेऽपि आचार्यगौरवव्याजेन भयसंगोपनं राजनीतिकुशलत्वादिति राजेत्यनेन सूच्यते।

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां * द्रुपदपुत्रेण तव + शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महे × ष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च = महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्य ÷ वान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च ❀ नरपुंगवः ॥ ५ ॥
युधामन्युश्च वि ❦ क्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदे ψ याश्च सर्व एव ⌣ महारथाः ॥ ६ ॥
अस्माकं ☙ तु विशिष्टा ये तान्निबोध ∞ द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

---

शहेतुः । तदधीनो धैर्यभ्रंशरूपोऽवस्थाविशेषस्तुशब्देन सूच्यते । दृष्ट्वेत्यादेर्व्यनुनादयन्नित्यन्तस्याव्यक्तांशं व्यञ्जयति—दुर्योधन इत्यादिनाऽकथयदित्यन्तेन । संज्ञार्थं सम्यग्ज्ञानार्थं संज्ञया परिसं-

---

* धृष्टद्युम्नेनेत्यनुक्त्वा द्रुपदपुत्रेणेति कथनं द्रुपदपूर्ववैरसूचनेन क्रोधोद्दीपनार्थम् । + शिष्येणेत्युक्तिस्तु शिष्यापेक्षया गुरोराधिक्यस्य प्रसिद्धत्वात्त्वं प्रतिकर्तुं क्षमोऽसीति सूचयति । × महान्तोऽन्यैरप्रधृष्या इष्वासो धनूंषि येषां ते तथा । दूरत एव परसैन्यविद्रावणकुशला इति भावः । = महारथ इति युयुधानविराटद्रुपदानां विशेषणम् । ÷ धृष्टकेतुचेकितानकाशिराजानां विशेषणं वीर्यवानिति । ❀ नरपुंगव इति पुरुजित्कुन्तिभोजशैब्यानां विशेषणम् । ❦ विक्रान्तो युधामन्युर्वीर्यवांश्चोत्तमौजा इति द्वौ । ψ द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यादयः पञ्च । ⌣ महारथा इत्यतिरथस्याप्युपलक्षणम् । महारथलक्षणं च—एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः । रथस्त्वेकेन यो योद्धा तन्न्यूनोऽर्धरथः स्मृतः ॥ ☙ तुशब्देनान्तरुत्पन्नमपि भयं तिरोदधान आत्मनो धृष्टतां द्योतयति । ∞ मम सैन्यस्य नायकास्त्वया ज्ञायन्त एव न किंचिदविज्ञातं तव विज्ञापयामीति द्विजोत्तमेति विशेषणेनाऽऽचार्यं स्तुवन्कार्ये तदाभिमुख्यं संपादयति । दौष्ट्यपक्षे ब्राह्मणत्वात्तावद्युद्धाकुशलस्त्वं तेन त्वयि त्रिमस्थेऽपि भीष्मप्रभृतीनां क्षत्रियप्रवराणां सत्त्वान्नाऽस्माकं महती क्षतिरित्यर्थः ।

भवान्भीष्मश्च कर्णश्च कृपश्च *समितिंजयः ।
+अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ८ ॥
अन्ये च बहवः शूरा मदर्थे ❦ त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥
=अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥
×अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

ख्यानार्थं वा । तत्रान्तर्विषण्णोऽभवदित्यन्तेन ' भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ' इत्येतदन्तं व्याख्यातम् ।

अपर्याप्तमिति श्लोकस्यायमर्थः––तस्मादस्माकं बलं भीष्माभिरक्षितमपर्याप्तं परबलविजयाय नालम् । इदं त्वेतेषां पाण्डवानां बलं भीमाभिरक्षितं पर्याप्तमस्मद्बलविजयायालमिति । नन्विदमनुपपन्नम्––तद्बलमिति सामानाधिकरण्यप्रतीतिभङ्गप्रसङ्गात्, पूर्वत्र च परबलस्वबलयोः सामर्थ्यासामर्थ्यहेतूपन्यासाभावात् । न च भीष्मद्रोणादिरक्षितं स्वबलमयमसमर्थं मन्यते, प्रबलानामेव हि भीष्मद्रोणादीनां वधः सोपाधिकः । ' न भेतव्यं महाराज ' इत्यादिषु बहुशः स्वबलस्यैव सामर्थ्यं दुर्योधनेनोपन्यस्तम् । न चेदानीं तद्विपरीतप्रतीतौ कारणमस्ति । द्विती-

* समितिं सङ्ग्रामं जयतीति समितिंजय इति कृपविशेषणं कर्णादनन्तरं गण्यमानत्वेन तस्य कोपमाशङ्क्य तन्निरासार्थम् । + भीष्मापेक्षयाऽऽचार्यस्य प्रथमगणनवद्विकर्णापेक्षया तत्पुत्रस्य प्रथमगणनमाचार्यपरितोषार्थम् । ❦ मदर्थे जीवितमपि त्यक्तुमध्यवसिता इत्यर्थस्तेन स्वस्मिन्ननुरागातिशयस्तेषां सूचयति । = तथाभूतैर्वीरैर्युक्तमपि भीष्माभिरक्षितमपि अस्माकं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति । इदं तु एतेषां पाण्डवानां बलं भीमेनाभिरक्षितं सत्पर्याप्तं समर्थं भाति । भीष्मस्योभयपक्षपातित्वादस्मद्बलं पाण्डवसैन्यं प्रत्यसमर्थम् । भीमस्यैकपक्षपातित्वादेतद्बलमस्मद्बलं प्रति समर्थं भाति । × समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि यानि नियम्यन्ते तान्यत्रायनानीत्युच्यन्ते । सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति ।

यदित्वसारम्भे च दुर्योधन एवं वक्ष्यति—

अपर्याप्तं तदस्माकं बलं पार्थाभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं पार्थिवसत्तमाः ॥ इति ।

तत्र चास्माकमपर्याप्तमित्येवान्वयो न पुनरस्माकं बलमिति । ततोऽत्रापि तथैव वचनव्यक्तिरुचिता । तस्मात्पाठभेदेन व्यवहितान्वयेन वाक्यभेदेन पदार्थभेदेन वा योजना स्यात् । तत्र भीमभीष्मशब्दयोर्विपर्यासात्पाठभेदः । तदा च भीमाभिरक्षितं तद्बलमस्माकमपर्याप्तमित्यन्वये सामानाधिकरण्यं तदितिविप्रकृष्टनिर्देशस्वारस्यं दुर्योधनाभिप्रायाविरोधश्च सिध्यति ।

व्यवहितान्वयेऽप्ययमेवार्थः । द्विधा च व्यवहितान्वयोऽत्र शक्यः—भीष्माभिरक्षितभीमाभिरक्षितशब्दयोर्विपर्यासादेकः, अपर्याप्तं तत्, पर्याप्तं त्विदमित्यनयोर्विपर्यासाद्द्वितीयः । अर्थौचित्याय तु व्यवधानमात्रं सह्यते ।

वाक्यभेदे त्वेवं योजना—अपर्याप्तं तदित्येका प्रतिज्ञा, पर्याप्तं त्विदमिति द्वितीया । अत्र को हेतुरिति शङ्कायां हेतुपरं वाक्यद्वयम्—अस्माकं बलं भीष्माभिरक्षितम्, एतेषां तु बलं भीमाभिरक्षितमिति । अस्मद्बलस्य प्रबलाधिष्ठितत्वात्परबलस्य च दुर्बलाधिष्ठितत्वादित्यर्थः ।

पदार्थभेदे त्वेवं योजना—पर्यापनं समापनम् । पर्याप्तमिति कर्तरि क्तः । नाशनसमर्थमित्यर्थः । अपर्याप्तं नाशनासमर्थमित्यर्थः । भीष्माभिरक्षितमस्माकं बलं तत्, अपर्याप्तं नाशयितुं न शक्नोति । तदित्यत्र पाण्डवबलं कर्तृतया निर्दिश्यते । इदमिति च स्वबलं परबलपर्यापनकर्तृतया । निष्ठायोगान्न कर्मणि षष्ठ्याः प्राप्तिः । यद्वा—अपर्याप्तमपरिमितमित्यर्थः । पर्याप्तं परिमितमित्यर्थः । स्वबलस्यैकादशाक्षौहिणीयुक्तत्वात्परबलस्य सप्ताक्षौहिणीमात्रत्वाच्च । सर्वथा तावन्न स्वबलदौर्बल्यं परबलप्राबल्यं च युद्धारम्भे दुर्योधनः प्रसञ्जयेदिति ।

सोऽयं घण्टापथात्पाटच्चरकुटीरप्रवेशः । तथाहि—इह तावद्भीष्माभिरक्षितमित्येतत्प्रतिशिरस्त्वेन, भीमाभिरक्षितमिति केनाभि-

प्रायेण निर्दिश्यते। न तावद्भीष्मवद्भीमस्यापि सेनापतित्वेन, धृष्टद्युम्नस्य तत्पतित्वेनोक्तत्वात्। नापि भीष्मसमपौरुषत्वेन, अत्यन्तविषमतया प्रसिद्धेः। यथोक्तं भीष्मेणैव—

शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान्।
यद्येषां न भवेद्गोप्ता विष्णुः कारणपूरुषः॥ इति।

नापि प्रतिबलाधीश्वरत्वेन, धर्मसूनोस्तथात्वात्। नापि परबलभटप्रधानत्वेन, अर्जुनस्यैव तथा प्रसिद्धेः। अतो भीमस्य समस्तधार्तराष्ट्रवधदीक्षितत्वात्तदुचितसाहसबलसहायादियुक्तत्वाच्च तस्य विशेषतो निर्देशः। एवं सति तत्प्रतिशिरस्त्वेन भीष्मस्य निर्देशोऽपि समस्तपाण्डुतनयसंरक्षणप्रवणत्वेन प्रतिपन्नत्वात्। अतः शत्रुभयसहायातिशङ्के पदद्वयसूचिते इत्युक्तं भवति।

यत्तूक्तं पूर्वत्र परबलस्वबलयोः सामर्थ्यासामर्थ्यहेतुः कश्चिन्नोक्त इति तदप्यसमीक्षितवचनम्। उपक्रमे हि प्रथममेव स्वबलाच्चतुरक्षौहिणीन्यूनाऽपि 'महतीं चमूम्' इति प्रतिचमूर्वर्णिता। अनन्तरं धीमतेत्यन्तेन प्रतिसेनापतिर्वर्णितः। तदनन्तरं च 'अत्र शूरा महेष्वासाः' इत्यारभ्य 'सर्व एव महारथाः' इत्यन्तेन दृष्टान्तीकृतभीमार्जुनाभ्यां सहाऽऽसन्नविंशसंख्याः पुरुषा निरतिशयपौरुषतया वर्णिताः। स्वपक्षे तु न चमूर्वर्णिता नापि सेनापतिः। स्वबलप्रधानपरिसंख्याने च सप्त पुरुषा उपात्ताः। व्यतिरिक्तास्त्वाकृतिगणत्वेन 'अन्ये च बहवः शूराः' इत्युक्ताः। 'मदर्थे त्यक्तजीविताः' इति चोक्तं न तु 'मदर्थे [वि]जिगीषवः' इति साभिसंधिकत्वमेव तेनापि प्रतिपाद्यत इति चेत्—सत्यम्, तथाऽपि वचनव्यक्तिप्रकार एवंविधोऽभिसंधिद्योतनायापि हि त्यक्तजीवितत्ववचनं प्रतिभटानां बलीयस्त्वबुद्ध्यैव भवति। अनन्तरं च 'तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः।' इति दुर्योधनस्य जनयितव्यहर्षत्वेन पूर्वं विषादः स्वरसतः सूच्यते। एतदभिप्रायेणोक्तमन्तर्विषण्णोऽभवदिति। परस्ताच्च 'स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्' इति धार्तराष्ट्रहृदयसंक्षोभ एवोच्यते। अत उपक्रमे प्रतिचमूतत्सेनापतिसमग्रभटवर्णनात्,

उपसंहारेऽपि शङ्खशब्दमात्रेण हृदयसंक्षोभवचनात्, मध्ये जनयितव्यहर्षत्वेन विषादोत्पत्तितदपनयसूचनात्, एतच्छ्लोकस्वारस्याच्चोक्तार्थ एव तात्पर्यम्। अतस्तच्छब्दस्य तस्मादिति हेत्वर्थकत्वमुपपन्नम्। अत एव विप्रकृष्टनिर्देशचोद्यं च परिहृतम्। न च परबलमिदानीं दुर्योधनस्य परोक्षम् 'दृष्ट्वा तु पाण्डवानीकम्, 'पश्यैताम्' 'एतेषाम्' इत्यादिप्रत्यक्षनिर्देशात्।

यत्तु–भीष्मद्रोणादिरक्षितस्य स्वबलस्य दौर्बल्यप्रतीतिरयुक्तेति। तदप्यसत्–सोपाधिकस्यापि भीष्मद्रोणादिवधस्य ज्ञातोपाधिना दुर्योधनेन शङ्कितत्वोपपत्तेः। यत्तु–'न भेतव्यं महाराज' इत्यादौ बहुशः स्वबलसामर्थ्यमुपन्यस्तम्, इदानीं च तद्विपरीतप्रतीतौ हेतुर्नास्तीति। तदपि न–यथाऽर्जुनो जिघांसया शरचापोद्यमनपर्यन्तं प्रवृत्तोऽपि हन्तव्यबन्धुसमुदायसंनिधिसंदर्शनेनोल्बणैः स्नेहकारुण्यधर्मभयैराकुलीकृतः पुनर्भगवता पर्यवस्थाप्यते तथाऽत्रापि दृढघटितव्यूहबहुमहाभटनिबिडप्रतिभटबलसाक्षात्कारादुल्बणभयविषादो दुर्योधनो भीष्मेण पर्यवस्थाप्यत इति किमनुपपन्नम्। प्रत्यक्षितं च दुर्योधनेन गोग्रहणस्वग्रहणादिवृत्तान्तेषु सर्वेभ्यः स्वबलभटेभ्यः परेषां सामर्थ्यम्। न चेदानीं तन्न स्मरति। वदति हि स्वयमेव—'अकारादीनि नामानि अर्जुनत्रस्तचेतसः, इत्यादि।

यत्तु–द्वितीयदिवसारम्भोक्तवचनव्यक्तिवदत्रापि वचनव्यक्तिः कार्येति तदपि मन्दम्। न ह्यवश्यमेकदेशसादृश्यात्सर्वथा सादृश्येन भवितव्यमिति नियमः। प्रथमद्वितीयदिवसयोरभिप्रायभेदोऽनुपपन्न इति चेन्न। युद्धसिद्धेश्चञ्चलत्वाद्यनुसंधानेन विषमत्वादभिप्रायपद्धतेः। किं चात्राऽऽचार्यभीष्माभ्यां सह व्यूहान्तरमार्गेषु यथाभागावस्थापनसेनाधिपतिसंरक्षणादिहितनिरूपणे प्रवृत्तत्वादेवमभिप्राय उपपन्नः। तदेतद्दर्शितमाचार्याय निवेद्यान्तर्विषण्णोऽभवदिति। द्वितीयदिवसे तु स्वसहायभूतेभ्यः पार्थिवेभ्यः स्वधैर्यप्रकाशने बलसान्त्वनादौ च प्रवृत्तत्वात्तथा व्यवहार इति न कश्चिद्दोषः। तदेतदखिलमभिप्रेत्य दृष्ट्वा त्विति तुशब्दः प्रयुक्तः।

तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं * विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

इदं च प्रारम्भे दैवोपहतस्य दुर्योधनस्यातर्किताागतविषादमूलं स्वबलस्यापर्याप्तत्ववचनमागामिनमपजयं सूचयति । अतः सर्वजनपठितपाठस्वरसासिद्धार्थस्य निर्दोषत्वात्पाठभेदादिपक्षाः परिक्षीणाः । पाठभेदव्यवहितान्वयवाक्यभेदाप्रसिद्धार्थकल्पनादीनामेव च प्रबलदूषणत्वात् । वाक्यभेदयोजनायां तु प्रतिज्ञाद्वये हेतुद्वयस्य यथाक्रमं तावदन्वयो न घटते। यो हि प्रबलो दुर्बलो वा यद्बलं रक्षति स तस्य पर्याप्तावपर्याप्तौ वा हेतुः स्यात्, न तु तत्प्रतिबलस्य। फलतस्तथा निर्देश इति चेत्तदाऽप्यस्वारस्यम् । प्रातिलोम्येन हेत्वोरन्वय इति चेत्तर्हि व्यवहितान्वयोऽप्यागतः । हेतुद्वयं समुच्चित्य प्रत्येकं प्रतिज्ञयोर्योज्यत इति चेत्तथाऽपि व्यवहितान्वयास्वारस्ययोर्न परिहारः समुच्चायकशब्दाभावश्चाधिको दोषः। एवं दूषणान्तराण्यपि भाव्यानि । अतो यथाभाष्यमेवार्थ इति ।

'तस्य संजनयन्' इत्यादेः 'तुमुलोऽभवत्' इत्यन्तस्यार्थमाह—तस्येति । जनयन्निति शतुः 'लक्षणहेत्वोः क्रियायाः' (पा० सू० ३ । १२६) इति हेत्वर्थत्वसूचनाय जनयितुमित्युक्तम् । सिंहनादं विनद्येत्येतत् 'ओदनपाकं पचति' इतिवदिति सूचयितुं कृत्वेति पदम्। 'कृभ्वस्तयः क्रियासामान्यवचनाः' इत्येतद्व्यञ्जनायोदाहरणतया 'शङ्खध्मानं च कृत्वा' इत्युक्तम् । 'ततः शङ्खाः' इत्यत्र ततःशब्दो विजिगीषासूचनाय भीष्मेण सेनापतिना कारितत्वं ज्ञापयितुमित्यभिप्रायेणोक्तम्—अकारयदिति । शङ्खभेरीति पणवाद्युपलक्षणम् । ततःश्लोकेऽपि कतिपयवाद्यनिर्देश उपलक्षणार्थ इति सूचितम् ।

* सिंहनादं विनद्य कृत्वेत्यर्थः । यद्वा सिंहनादमिति णमुलन्तम् । अतो रैपोषं पुष्यतीतिवत्तस्यैव धातोः पुनः प्रयोगः । अत्र सिंहनादशङ्खवादनयोर्हर्षजनकत्वेन पूर्वापरकालत्वेऽपि अभिचरन्यजेतेतिवज्जनयन्निति शताऽवश्यंभावित्वरूपवर्तमानत्वे व्याख्यातव्यः ।

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं *हृषीकेशो देवदत्तं+ धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं ÷भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा =कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि ×व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

धर्मक्षेत्र इत्यारभ्य स घोषो धार्तराष्ट्राणामित्यन्ताः श्लोकाः । दुर्योधनो भीमाभिरक्षितं पाण्डवानां बलमात्मीयं च बलं भीष्माभिर-

---

सिंहनादशङ्खध्मानाभ्यां शङ्खभेर्यादिनादसमुच्चयार्थो द्वितीयश्चकारः । कृत्वेत्यनेनाकारयदित्यस्य समुच्चयार्थस्तृतीयः ।

‘ ततः श्वेतैः ’ इत्यादिकम् ‘ धनंजयः ’ इत्यन्तं व्याचष्टे–

---

* सर्वेन्द्रियप्रेरकत्वेन सर्वान्तर्यामी सहायः पाण्डवानामिति सूचयितुं हृषीकेशपदोपादानम् । + दिग्विजये सर्वान्राज्ञो जित्वा धनमाहृतवानिति सर्वथैवायमजेय इति कथयितुं धनंजयपदम् । ÷ भीमं कर्म हिडिम्बवधादिरूपं यस्य तद्दृशो वृकोदरत्वेन बह्वन्नपाकादतिबलिष्ठो भीमसेन इति कथितम् । = कुन्त्या महता तपसा धर्ममाराध्य लब्धः । स्वयं च राजसूययाजित्वेन मुख्यो राजा । युधि चायमेव जयभागित्वेन स्थिरो न त्वेतद्विपक्षाः स्थिरा इति युधिष्ठिरपदेन सूचितम् । × तुमुलोऽतितीव्रः स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्, हृदयविदारणसदृशीं व्यथां जनितवानित्यर्थः ।

क्षितमवलोक्याऽऽत्मविजये तस्य बलस्य पर्याप्ततामात्मीयबलस्य तद्वि-
जये चापर्याप्ततामाचार्याय निवेद्यान्तर्विषण्णोऽभवत् । तस्य विषाद-
मालोक्य भीष्मस्तस्य हर्षं जनयितुं सिंहनादं शङ्खनादं च कृत्वा
शङ्खभेरीनिनादैश्च विजयाभिशंसिनं घोषं चाकारयत् । ततस्तं घोषमा-
कर्ण्य सर्वेश्वरेश्वरः पार्थसारथी रथी च पाण्डुतनयस्त्रैलोक्यविजयो-
पकरणभूते महति स्यन्दने स्थितौ त्रैलोक्यं कम्पयन्तौ श्रीमत्पाञ्चजन्य-
देवदत्तौ शङ्खौ प्रदध्मतुः । ततो युधिष्ठिरवृकोदरादयश्च स्वकीयाञ्छ-
ङ्खान्पृथक्पृथक्प्रदध्मुः । स घोषो दुर्योधनप्रमुखानां ( णां )

ततस्तमिति । तत इति व्याख्येयं पदम् । तं घोषमाकर्ण्येति तद्विवक्षितकथनम् । सर्वेश्वरेश्वरः पार्थसारथिरिति । सर्वोत्कृष्टेभ्य उत्कृष्टः परमपुरुषो निकृष्टान्मानुषमात्रादपि निकृष्टतामाश्रितवात्सल्येन नीत इति भावः। पाण्डवविजयसूचनाय संजयेनोपात्तो माधवशब्दोऽत्र श्रियः पतिवाची सर्वेश्वरेश्वरत्वपर एव। स्यन्दने स्थितावित्यविशेषस्थितिव्यवच्छेदाय सारथित्वविभागः । श्वेतैरित्यादिना प्रतिपादितमहत्त्वस्य व्यक्त्यर्थमुक्तम्—त्रैलोक्येति । नात्र परिमाणादिमहत्त्वमात्रं विवक्षितमिति भावः । त्रैलोक्यं कम्पयन्ताविति । तयोः स्यन्दने स्थितिमात्रमपि त्रैलोक्यकम्पनहेतुरिति भावः । यद्वा—'दिव्यौ शङ्खौ प्रदध्मतुः' इत्याद्युक्तप्रकृष्टाध्मानमूलशङ्खघोषातिशयेन 'नभश्च पृथिवीं चैव' इति वक्ष्यमाणेन च फलितमिदम् । दिव्यत्वोक्तिदर्शितशङ्खातिशयवैशद्याय पाञ्चजन्यदेवदत्तसंज्ञोक्तिः । एवं भीमसेनादिशङ्खचतुष्टयविशेषनामनिर्देशोऽपि ।

पृथक्पृथक्प्रदध्मुरिति । यथैकैकशङ्खध्वनिरेव धार्तराष्ट्रहृदयभेदाय स्यात्तथा पृथग्दध्मुरिति भावः । यद्वा यथास्वं प्रकर्षद्योतनाय क्रमात्प्रदध्मुरिति । स घोष इति श्लोके नभश्च पृथिवीं चानुनादयन्नपि धार्तराष्ट्राणामेव हृदयानि विभेदेत्यन्वयः । अन्येषां हर्षहेतुरभूदिति भावः । सर्वेषामेव भवत्पुत्राणामित्यनेन तेषु दृढचित्तः कश्चिदपि नास्तीति द्योतनाय धार्तराष्ट्रशब्दतद्गतबहुवचनयोरर्थ उक्तः । व्यदारयदित्यस्य वक्ष्यमाणाभिप्रायद्योतकं

१ क. ख. ग. घ. ङ. °न्तरे विष°।

सर्वेषामेव भवत्पुत्राणां हृदयानि विभेद । अद्यैव नष्टं कुरूणां बलमिति धार्तराष्ट्रा मेनिरे । एवं तद्विजयाभिकाङ्क्षिणे धृतराष्ट्राय संजयोऽकथयत् १—१९ ॥

अथ व्य*वस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपि+ध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
=हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच—

एवमुक्तो हृषीकेशो गु÷डाकेशेन भा×रत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

---

प्रतिपदं बिभेदेति । घोषस्य शास्त्रादिवद्धृदयविदारणत्वं कथमित्यत्राऽऽह—अद्यैवेति । स्वबलस्य विजयित्वमध्यवस्यतां तन्नाशबुद्धिरेव हि हृदयभेद इति भावः । धार्तराष्ट्रविजयबुभुत्सया पृच्छते धृतराष्ट्राय प्रागुक्तप्रकारेण तदपजयसूचकमेवं संजयोऽकथयदित्याह ॥ १–१९ ॥

एवमिति । 'अथ व्यवस्थितान्' इत्यादेः कुरूनित्यन्तस्यार्थ-

---

* युद्धोद्योगेनावस्थितान्न तु भयात्प्रचलितानित्यर्थः । + हनूमता महावीरेण ध्वजरूपतयाऽनुगृहीतः । = इन्द्रियप्रवर्तकत्वेन सर्वान्तःकरणवृत्तिज्ञं श्रीकृष्णमित्यर्थः । ÷ गुडाकाया निद्राया ईशेन जितनिद्रतया सर्वत्र सावधानेनेत्यर्थः । × भरतवंशमर्यादामनुसंधायापि द्रोहं त्यज ज्ञातीनामिति संबोधनाभिप्रायः ।

भीष्मद्रोणप्र*मुखतः सर्वेषां च महीक्षिताम् ।
उवाच +पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥

अथ व्यवस्थितानित्यारभ्य भीष्मद्रोणप्रमुखत इत्यन्तम् । अथ युयुत्सूनवस्थितान्धार्तराष्ट्रान्भीष्मद्रोणप्रमुखान्वीक्ष्य लङ्कादहनवानरध्वजः पाण्डुतनयो ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधिं स्वसंकल्पकृतजगदुदयविभवलयलीलं हृषीकेशं परावरनिखिललोकान्तर्बाह्यसर्वकरणानां सर्वप्रकारकनियमनेऽवस्थितं समाश्रितवात्सल्यविवशतया स्वसारथ्येऽवस्थितं

---

माह—अथेत्यादिनेति चावोचदित्यन्तेन । तत्र वाक्यत्रये प्रथमेन वाक्येन 'प्रियचिकीर्षवः' इत्यन्तस्यार्थ उच्यते । व्यवस्थितानित्यत्र विशब्दसूचितविशेषव्यक्तये युयुत्सूनित्युक्तम् । 'योद्धुकामानवस्थितान्' इति ह्यनन्तरमुभयमप्युच्यते । कपिध्वज इत्यत्र कपित्वमात्रप्रतिपन्नलाघवं निवारयितुं सौगन्धिकयात्रायां हनूमद्दत्तं वरं ध्वजसंदर्शनमात्रेण रक्षसामिव परेषां संक्षोभं च सूचयितुं लङ्कादहनवानरध्वज इत्युक्तम् । अप्रच्युतस्वभावत्वप्रतिपादकाच्युतपदाभिप्रेतव्यञ्जनाय ज्ञानेत्यादिकम् । हृषीकेशपदव्याख्या परावरेत्यादि । यद्वा—सृष्ट्यादिकं वीर्यादिकं तदुपलक्षितं ज्ञानादिकमपि हृषीकेशशब्दार्थ एव । यथोक्तमहिर्बुध्न्यसंहितायाम्—

क्रीडया हृष्यति व्यक्तमीशः सन्सृष्टिरूपया ।
हृषीकेशत्वमीशस्य देवत्वं चास्य तत्स्फुटम् ॥
अविकारतया हृष्टो हृषीको वीर्यरूपया ।
ईशः स्वातन्त्र्ययोगेन (ण) नित्यं सृष्ट्यादिकर्मणि ॥
ऐश्वर्यवीर्यरूपत्वं हृषीकेशत्वमुच्यते ॥ इति ।

आश्रितान्न च्यावयति अतश्च्युतोऽस्य नास्तीत्यच्युतशब्दस्य काचिन्निरुक्तिस्तां दर्शयति—समाश्रितवात्सल्येत्यादिना । स्वसारथ्येऽवस्थितमिति । हृषीकेशतया सर्वेषां करणानां सर्वप्रकारनियमनेऽ-

---

* भीष्मद्रोणयोः प्रमुखे संमुखे सर्वेषां महीक्षितां च संमुखे, आद्यादित्वात्तसिः । चकारेण समासनिविष्टोऽपि प्रमुखतःशब्द आकृष्यते । भीष्मद्रोणयोः पृथक्कीर्तनमतिप्राधान्यसूचनाय । + पृथाया अयं पार्थस्तत्संबुद्धिः । पृथायाः स्त्रीस्वभावेन शोकमोहग्रस्ततया तत्संबन्धिनस्तत्रापि तद्वत्ता समुपस्थितेत्यभिप्रायः ।

युयुत्सूनेतान्समेतान्यावदहं निरीक्षे तावदुभयोः सेनयोर्मध्ये रथं स्थापयेत्यचोदयत् । तथा चोदितस्तत्क्षणादेव भीष्मद्रोणादीनां सर्वेषामेव

---

वस्थितस्य रथयुग्यमात्रनियमनं क्रियदिति भावः । निरीक्ष इत्यत्रोपसर्गार्थो यथावदिति दर्शितः । यावच्छब्दोऽत्र साकल्यवाची निरीक्षणकालावधिवाची वा । ‘ यावत्पुरानिपातयोर्लट्, [ पा० सू० ३ । ३ । ४ ] । इति निरीक्षणस्य भविष्यत्त्वद्योतको वा । ‘ यैः सह मया योद्धव्यं तान्निरीक्षे ’ इत्यत्र ‘ मया सह यैर्योद्धव्यं तानवेक्षे ’ इति नोक्तम्; अतो योत्स्यमानानिति श्लोकस्योत्थानम् । धार्तराष्ट्रस्य दुर्बुद्धेरिति दुर्योधनादिदोषप्रख्यापनतात्पर्याच्च न पौनरुक्त्यम् । यद्वा–‘ सेनयोरुभयोर्मध्ये ’ इति पूर्वोक्तत्वात् ‘ सेनयोरुभयोरवस्थितानपश्यत् ’ इति वक्ष्यमाणत्वाच्च स्वसेनास्थितस्वसहायविषयः पूर्वश्लोकः । तत्र कैर्मया सह स्थित्वा परैर्योद्धव्यमित्यर्थः । उत्तरस्तु श्लोकः प्रतिसैन्यस्थितधार्तराष्ट्रसहायविषय इति व्यक्त एव । प्रागेव तेषां विदितत्वेऽपीदानींतनसंरम्भादिविशेषदर्शनेन तत्तदुचितसांपरायिकव्यापारसौकर्याय यथावद्दर्शनमिहार्जुनेनाऽऽकाङ्क्षितम् । ‘ सेनयोरुभयोर्मध्ये ’ इत्यस्याभिप्रेतकथनम्—तदीक्षणक्षमे स्थान इति । अचोदयदित्यनेन स्थापयेत्यत्र प्रत्ययस्य नियोगार्थत्वं दर्शितम् । सर्वप्रशासिता नियोज्योऽभवदित्याश्चर्यमिति भावः । ‘ एवमुक्तः ’ इत्यादेः ‘ महीक्षिताम् ’ इत्यन्तस्यार्थमाह–स चेति । अर्जुनवचनरथस्थापनयोर्व्यवधायकाभावफलितमुक्तम्—तत्क्षणादेवेति । भीष्मद्रोणप्रमुखत इत्यत्र प्रमुखशब्द आदिशब्दसमानार्थः । तद्गतप्रत्ययश्च सार्वविभक्तिकत्वात्षष्ठीबहुवचनार्थ इत्यभिप्रायेणोक्तम्—भीष्मद्रोणादीनामिति । तदा चकारोऽवधारणार्थ इति दर्शयितुं सर्वेषामेवेत्युक्तम् । ‘ अनादरे षष्ठी ’ इति व्यञ्जनाय पश्यतामिति पदाध्याहारः । यद्वा—प्रमुखतोऽग्रत इत्यर्थः । तदेव महीक्षितामित्यत्रापि बुद्ध्या निष्कृष्य योज्यम् । तदा चकारः समुच्चयार्थः । भाष्ये त्वेवकारोऽपि तदर्थ एव । पश्यता-

महीक्षितां प्रमुखे हृषीकेशो यथोक्तमकरोत्। ईदृशी भवदीयानां जयस्थितिरिति चावोचत्॥ २०—२५॥

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान्।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा॥
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि॥ २६॥
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान्।
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत्॥ २७॥

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं * कृष्ण युयुत्सुं समुपस्थितम्।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति॥ २८॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते॥ २९॥

---

मिति फलितार्थोक्तिः। 'उवाच पार्थ' इत्यस्य तात्पर्यमाह—ईदृशीति। एतान्समवेतानिति जेतव्यसमुदायप्रदर्शनेन जयस्थितिरभिप्रेतेति भावः। यद्वा—धार्तराष्ट्रकर्मकविजयस्थितिरित्यर्थः। धृतराष्ट्रं प्रति संजयवाक्याभिप्रायेण भवदीयानामित्युक्तम्। अथवा—धार्तराष्ट्रकर्तृकविजयस्थितिरीदृशीत्युपालम्भगर्भमवोचदित्यर्थः। अयमेवार्थ उचितः। अर्जुनं प्रति कृष्णेन 'भवताम्' इत्येतावन्मात्रस्य वक्तव्यत्वात्, धृतराष्ट्रं प्रति तु 'भवत्पुत्राणाम्' इति पूर्वोक्तवत् 'भवदीयान्विलोक्य' इति वक्ष्यमाणवच्चात्रापि भवदीयनिर्देशोपपत्तेः। किमकुर्वतेति गूढाभिसंधेः पृच्छतो धृतराष्ट्रस्य गूढाभिसंधिः संजयो धार्तराष्ट्रहृदयविदारणादिकमेवाकथयत्॥ २०—२५॥

---

* अहमनात्मवित्त्वेन दुःखितत्वाच्छोकनिबन्धनं क्लेशमनुभवामि त्वं तु सदानन्दरूपत्वाच्छोकासंसर्गीति कृष्णपदेन सूचितम्। अतः स्वजनदर्शने तुल्येऽपि शोकासंसर्गित्वलक्षणाद्विशेषात्त्वं मामशोकं कुर्विति भावः। अग्रिमकेशवपदेन च तत्करणसामर्थ्यं को ब्रह्मा सृष्टिकर्ता, ईशो रुद्रः संहर्ता, तौ वात्यनुकम्प्यतया गच्छतीति तद्व्युत्पत्तेः।

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ३० ॥
न च श्रेयोऽ * नुपश्यामि हत्वा स्व + जनमाहवे ॥३१॥
न का = ङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोवि × न्द किं भोगैर्जीवितेन वा॥३२॥
ये ❦ षामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा॥ ३४॥
एतान्न हन्तु मिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाऽऽश्रयेदस्मान्हत्वैतानात ◡ तायिनः ॥ ३६ ॥

---

* द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः॥ इत्यादिना हतस्यैव श्रेयोविशेषाभिधानाद्धन्तुस्तु न किंचित्सुकृतमित्यर्थः । + अस्वजनवधेऽपि श्रेयसोऽभावे स्वजनवधे सुतरां तदभाव इति ज्ञापयितुं स्वजनमित्युक्तम् । = फलाकाङ्क्षा हि उपायप्रवृत्तौ कारणम् । अतस्तदाकाङ्क्षाया अभावात्तदुपाये युद्धे भोजनेच्छाविरहिण इव पाकादौ मम प्रवृत्तिरनुपपन्नेत्यर्थः । × गोशब्दवाच्यानीन्द्रियाण्यधिष्ठानतया नित्यं प्राप्तस्त्वमेव ममैहिकफलविरागं जानासीति सूचयन्संबोधयति-गोविन्देति । ❦ ननु स्वस्य वैराग्येऽपि स्वीयानामर्थे यतनीयमित्यत आह—येषामिति । एकाकिनो हि राज्याद्यनपेक्षितमेव । येषां बन्धूनामर्थे तदपेक्षितं त एते प्राणान्धनानि च त्यक्त्वा युद्धेऽवस्थिता इति न स्वार्थः स्वीयार्थो वाऽयं प्रयत्न इति भावः । ◡ ननु—अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः । इति स्मरणादग्निदत्वादिभिः षड्भिरपि हेतुभिरेते तावदाततायिनः । आततायिनां च वधो युक्त एव । आततायिनमायान्तं हन्यादेवाविचारयन् । नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन । इति वचनेन दोषाभावप्रतीतेर्हन्तव्या एव दुर्योधनादय आततायिन इत्याशङ्क्याऽऽ-

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥
अधर्माभिभवात्कृष्ण * प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥
संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं + वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

---

ह—पापमेवेति। आततायिनमायान्तमित्यादिकं हि अर्थशास्त्रम्। तच्च 'न हिंस्यात्' इति धर्मशास्त्राद्दुर्बलम्। तदुक्तं याज्ञवल्क्येन—

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः॥ इति।

* अस्मदीयैः पतिभिर्धर्ममतिक्रम्य कुलक्षयः कृतश्चेदस्माभिरपि व्यभिचारे कृते को दोष इति कुतर्कहताः कुलस्त्रियः प्रदुष्येयुरित्यर्थः।

+ प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः।
अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान्॥

इत्यादिवचनात्।

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

संजय उवाच—

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्न*मानसः ॥ ४७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

---

तत्रापश्यत्स्थितान्पार्थ इत्यारभ्य, एवमुक्त्वाऽर्जुनः संख्य इत्यन्तम्[1] । स तु पार्थो महामनाः परमकारुणिको दीर्घबन्धुः परमधार्मिकः

---

अथाध्यायशेषस्य संकलितार्थमाह—स त्विति । तुशब्देन पूर्वोक्तप्रकाराद्दुर्योधनाद्वक्ष्यमाणप्रकारविशिष्टस्य पार्थस्य विशेषम् 'स कौन्तेय' इत्यनेनाभिमेतं द्योतयति । बन्धुव्यपदेशमात्रयोग्यशत्रुवधानिच्छया विजयादिकं त्रैलोक्यराज्यावधिकमपि तृणाय मन्यत इति महामना इत्युक्तम् । न काङ्क्षे विजयमित्यादिकं हि वदति । शत्रूणामप्यसौ दुःखं न सहत इति परमकारुणिकत्वोक्तिः । 'कृपया परयाऽऽविष्टः' इति ह्युक्तम् । 'पितॄनथ पितामहान्' 'आचार्याः पितरः' इत्याद्युक्तस्नेहविषयप्राचुर्यं दीर्घबन्धुशब्देनोक्तम् । यद्वा—बन्धूनां महापकारे कृतेऽपि स्वयं न शिथिलबन्धो भवतीति भावः । 'सर्वान्बन्धून्' 'स्वजनं हि' इत्यादिकमिह भाव्यम् । आततायिपक्षस्थानामपि आचार्यादीनामहन्तव्यत्वानुसंधानात्कुलक्षयादिजनिताधर्मपारम्पर्यदर्शनाच्च

---

* शोकेन संविग्नं पीडितं प्रकम्पितं वा मानसं यस्येत्यर्थः ।

---

१ ख. ग. घ. ङ. च. °तम् । एवं पा° ।

सभ्रातृको भवद्भिरतिघोरैर्मारणैर्जतुगृहादिभिरसकृद्द्वघ्नितोऽपि परमपुरुषसहायोऽपि हनिष्यमाणान्भवदीयान्विलोक्य बन्धुस्नेहेन परमया च

परमधार्मिकत्वोक्तिः। आततायिवधानुज्ञानमाचार्यादिव्यतिरिक्तविषयमिति अर्जुनस्य भावः। सभ्रातृक इति। नायमेक एवंविधः किंतु सर्वेऽपि पाण्डवा इति भावः। एतेन 'अस्मान्नो वयमस्माभिः' इत्यादिभिरुक्तं संगृहीतम्। यद्वा—न केवलं स्वापकारमात्रानादरादेव बन्धुवधादिकमुपेक्षतेऽपि तु आसन्नतराचार्यादिस्थानीयबहुमतिस्नेहदयादिविनयधर्मराजद्रौपद्याद्यपकारेऽपीति भावः। आचार्यादिवधदोषो भ्रातॄणामपि मा भूदित्यर्जुनाभिप्रायः। हन्तव्यत्वसूचनाय घ्नतोऽपीत्युक्तं तद्विवृणोति—भवद्भिरित्यादिना। जतुगृहदाहादिभिरित्यादिनाऽऽततायिशब्दोऽपि व्याख्यातः।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहरश्चैव षडेते आततायिनः॥
आततायिनमायान्तं हन्यादेवाविचारयन्।
नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन॥

इति हि स्मरन्ति। आदिशब्देनासकृच्छब्देन चाऽऽततायित्वहेतवः प्रत्येकं बहुशः कृताः। न चेदानीमप्युपरतमिति दर्शितम्। अनुपरतिश्च घ्नतोऽपीति वर्तमाननिर्देशसूचिता। भवद्भिरित्यनेन धृतराष्ट्रमपि 'मुह्यन्तमनुमुह्यामि दुर्योधनमपर्षणम्' इति पुत्रस्नेहवशादनुमन्तारं तत्तुल्यं व्यपादिशति। एवं च दुर्योधनादीनां सर्वेषामप्यतिलोभोपहतचेतस्त्वादिना 'महामनाः' इत्युक्तविपरीतत्वमुक्तं भवति। शकुनिकर्णादिसहायानां धार्तराष्ट्रादीनां हनिष्यमाणानामपि हतत्वनिश्चयेन शोकोत्पत्त्यर्थमुक्तम्—परमपुरुषेति। परमपुरुषः सहायो यस्येति समासः। परमपुरुषस्य सहायो निमित्तमात्रमिति वा। वक्ष्यति हि—'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति। अर्जुनश्च पूर्वं महाबलसहस्रेभ्योऽपि निरायुधस्य परमपुरुषस्य संनिधिमात्रमेव विजयहेतुतया निश्चित्य तमेव वव्रे। स्नेहाद्यस्थानत्वसूचनाय भवदीयान्विलोक्येत्युक्तम्। बन्धुस्नेहेनेत्यादि। न

कृपया धर्मभयेन चातिमात्रखिन्नसर्वगात्रः सर्वथा न योत्स्यामीत्युक्त्वा बन्धुविश्लेषजनितशोकसंविग्नमानसः सशरं चापमुत्सृज्य रथोपरि उपाविशत् ॥ २६—४७ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
प्रथमोऽध्यायः ।

---

ह्यसौ दुर्योधनवद्बन्धुद्वेषनृशंसत्वप्रतिभटभयादिना विषण्णः, नापि परेषां गुणान्निवर्तते, न च परमपुरुषसचिवस्य स्वस्य दौर्बल्यादिति भावः । सीदन्तीत्यादेर्मन इत्यन्तस्यार्थोऽतिमात्रेत्यादिना संगृहीतः । 'एतान्न हन्तुमिच्छामि' 'यदि मामप्रतीकारम्' इत्यादेरभिमेतमाह—सर्वथाऽहमिति । सर्वथा बहुप्रकारमेषामाततायित्वेऽपीदानीं हन्तुमुद्यतत्वेऽपि युद्धान्निवृत्तेरधर्माकीर्त्यादिहेतुत्वेऽपि युद्धस्य त्रैलोक्यराज्याद्युपायत्वेऽपि किं बहुना सर्वेश्वरेश्वरेण मम हिततमोपदेशिना भगवतोक्तत्वेऽपीति भावः । बन्धुविनाशस्य सिद्धत्वाध्यवसायः शोकहेतुः । विषादमात्रपरो वाऽत्र शोकशब्दः । स शोकः शरचापपरित्यागे हेतुरिति व्युत्क्रमपाठेन दर्शितम् । संविग्नमानसः, अत्यर्थचलितयुद्धाध्यवसाय इत्यर्थः । 'ओविजी भयचलनयोः'। ( तु० आ० से० ) इति धातुः । एवं चलितयुद्धाध्यवसायत्वात्समराध्वरस्रुक्स्रुवस्थानीयं सशरं चापं विसृज्य प्रायोपवेशादिपर इव रथोपस्थे रथिस्थानाद्विनिवृत्य रथोत्सङ्ग उपाविशदिति भावः । सखीन्वयस्यान् । सुहृदो वयोविशेषानपेक्षया हितैषिणः । सेनयोरुभयोरपि—एकैकस्यां सेनायामेते सर्वे प्रायशो विद्यन्त इति भावः । समीक्ष्य—शास्त्रलोकयात्रायुक्तमालोक्येत्यर्थः । सर्वान्बन्धून्—न ह्यत्रानागतः कश्चिद्बन्धुरवशिष्येतेति भावः । अधर्मोऽभिभवतीति मानसदोषोक्तिः । प्रदुष्यन्तीति कायिकोक्तिः ॥ २६-४७ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतौ श्रीद्रामानुजविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां प्रथमोऽध्यायः ॥ १ ॥

# अथ द्वितीयोऽध्यायः ।

संजय उवाच—

तं तथा * कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

तमित्यारभ्य क्लैब्यमित्यन्तम् । एवमुपविष्टे पार्थे कुतोऽयमस्थाने

---

अथ शोकापनोदनविषयो द्वितीयोऽध्याय आरभ्यते । संजयवाक्यादिभेदेऽपि संजय उवाचेति निर्देशोऽध्यायारम्भरूपतयाऽन्योक्तिशङ्कापरिहाराय । तं तथेत्यादिश्लोकत्रयं व्याख्याति—एवमिति । विषीदन्तमित्यस्य पूर्वाध्यायोक्तानुवादत्वं सूचयितुमेवमुपविष्टे पार्थ इत्युक्तम् । तथेति । अस्थान इत्यर्थः । कृपा चाऽऽन्तरो विषादः । ततोऽश्रुपूर्णाकुलेक्षणं बाह्यशोकेनाप्याविष्टमित्यर्थः । विषीदन्तं पूर्वाध्यायोक्तरीत्या विषादं प्राप्योपविष्टम् । मधुसूदनशब्देन शोकमूलरजस्तमोनिबर्हणत्वं सूचितम् । अस्थान

---

* ममैत इतिव्यामोहनिमित्तः स्नेहविशेषः कृपा ।

+ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥

समग्रस्येति प्रत्येकं संबध्यते । मोक्षस्येति तत्साधनस्य ज्ञानस्य । इङ्गना संज्ञा । इत्थं समग्रमैश्वर्यादिकं यत्र वर्तते नित्यमप्रतिबन्धेन. स भगवानित्यर्थः । नित्ययोगे [.।]

तथा—

उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

शोक उपस्थित इत्याक्षिप्य तमिमं विषमस्थं शोकमविद्वत्सेवितं परलोकविरोधिनमकीर्तिकरमतिक्षुद्रं हृदयदौर्बल्यकृतं परित्यज्य युद्धायोत्तिष्ठेति श्रीभगवानुवाच ॥ १—३ ॥

पुनरपि पार्थः स्नेहकारुण्यधर्मव्याकुलो भगवदुक्तं हितमजानन्निदमुवाच—

अर्जुन उवाच—

---

इति विषमशब्दोपचरितार्थः । कश्मलमिह मूर्छाकल्पः शोकः । शोकसंविग्नमानस इति प्रकृतत्वात् । प्रख्यातवंशवीर्यश्रुतादिसूचका अर्जुनपार्थपरंतपेतिशब्दाः कौन्तेयत्वात्त्वयि आक्षेपकाकुगर्भा इत्यभिप्रायेणाऽऽक्षिप्येत्युक्तम् । कुतःशब्दश्च हेत्वाभासस्य हेतुतां प्रतिक्षिपन् धिक्कारगर्भः । परांस्तापयतीति परंतपः । क्लैब्यमिह कातर्यम् । तद्धृदयदौर्बल्यशब्देन विवृतम् । पूर्वश्लोकस्थविशेषणानामप्यत्र कातर्यत्याज्यताहेतुत्वादर्थतस्तान्यप्यत्र संगमयति—तमिमं विषमस्थमित्यादिना । अतत्त्वेभ्य आराद्दूराद्याता बुद्धिर्येषां त ह्यार्या विद्वांसः, तदन्ये त्वनार्याः । अस्वर्ग्यमित्यत्राविपे( र्चिर्न )ःस्वर्गशब्दः परलोकमात्रोपलक्षकः । नञश्चात्र विरोधिपरतया स्वर्ग्यशब्दनिर्दिष्टस्वर्गहेतुविरोधित्वेऽर्थतस्तत्फलविरोधात्परलोकविरोधिनमित्युक्तम् । क्षुद्रशब्दस्यात्र संकोचकाभावेनाऽऽपेक्षिकक्षुद्रविषयत्वायोगात्, महत्तरस्यार्जुनस्य तथाविधावस्थापर्यालोचनाच्च काष्ठाप्राप्तं क्षुद्रत्वं विवक्षितमिति दर्शयितुमतिक्षुद्रमित्युक्तम् । कार्ये कारणोपचार इति वा कारणत्यागस्य कार्यत्यागार्थतया पूर्वोत्तरश्लोकफलितार्थविवक्षया वा हृदयदौर्बल्यकृतमित्युक्तम् । अदृढहृदयत्वकृतमित्यर्थः । परंतपेत्यनेन ज्ञापितं प्राकरणिकमर्थमध्याहृत्योक्तम्—युद्धायोत्तिष्ठेति ॥ १—३ ॥

अथ भगवदुक्तयुद्धारम्भस्य परम्परया परमनिःश्रेयसहेतुत्वरूपहिततमत्वाज्ञानात्तत्प्रतिक्षेपरूपस्यार्जुनवाक्यस्य तथात्वं तथाविधाज्ञानस्य चास्थानस्नेहाद्याकुलतामूलत्वं वदन्नुत्तरमवतार[ यन् ] पुनरपीदमुवाचेत्युक्तम् । कथमित्यादिश्लोके च

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
गुरूनहत्वा हि महानुभावा-
ञ्छ्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ५ ॥

भीष्मद्रोणादिकान्बहुमन्तव्यान्गुरून्कथमहं हनिष्यामि कथंतरां

कारस्यानुक्तसमुच्चयार्थत्वप्रदर्शनायाऽऽदिशब्द उपात्तस्यानुपात्तोपलक्षकतया वा । पूजार्हशब्दविवक्षितबहुमन्तव्यत्वहेतुतयोत्तरश्लोकस्थमत्राऽऽकृष्योक्तं गुरूनिति । महानुभावानित्युत्तरश्लोकस्थानुसंधानात्स्वत एव बहुमन्तव्याः पितामहत्वधनुर्वेदाचार्यत्वादिभिरत्यन्तबहुमन्तव्या इति भावः । पुष्पादिभिः पूजार्हाणां पूजादिनिवृत्तिरेव साहसं हननं त्वतिसाहसं गुरुभक्त्या च तद्विरोधिभिः सह योद्धव्यं न पुनर्गुरुभिरिति कथं गुरूनिषुभिः प्रतियोत्स्यामीत्यस्य भावः । अर्हशब्देन प्रख्यातवंशत्वादिकमभिप्रेतम् । इषुभिः प्रतियोत्स्यामीत्यस्य हननपर्यन्तप्रतियुद्धाभिप्रायत्वमुत्तरश्लोकेन विवृतमिति हनिष्यामीत्युक्तम् । मधुसूदनारिसूदनशब्दाभ्यां नहि त्वमपि सांदीपिन्यादिसूदन इति भाव इति सूचितम् । भोक्तुमित्यत्र भावमात्रार्थस्तुमुन्, न तु क्रियार्थोपपदिकः । यद्यपि या काचिज्जीविकाऽऽश्रयणीया तथाऽपि गुरुवधलब्धभोगेभ्य इह लोके परधर्मरूपभैक्षाचरणमपि श्रेयः प्रशस्यतरम् । महाप्रभावगुरुवधसाध्यपारलौकिकदुःखस्यात्यन्तमहत्त्वादिति भावः। प्रकृतविरुद्धार्थभ्रमव्युदासाय पूर्वश्लोकस्थकथंशब्दानुषङ्गादतिनृशंसत्वसामर्थ्यात्तुशब्दद्योतितवैषम्याच्च कथंतरामित्युक्तम्। 'गर्हायां लडपिजात्वोः' [पा० सू० ३ । ३ । १४२] 'विभाषा कथमि लिङ्च' [पा० सू० ३ । ३ । १४३] इति गर्हार्थ इह लिङ्प्रत्ययः। अत्रार्थकामानित्यत्र द्वंद्वादिभ्रान्तिनिवर्त-

१ क. ख. ग. च. भैक्ष्यम् ।

भोगेष्वतिमात्रसक्तांस्तान्हत्वा तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरेणोपसिच्य तेष्वासनेषूपविश्य भुञ्जीय तेष्वासक्ता ( क्तो ) भवेम इ( यमि )ति ॥ ४–५ ॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥
कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

एवं युद्धमारभ्य निवृत्तव्यापारान्भवतो धार्तराष्ट्राः प्रसह्य हन्युरिति

---

नाय समासतदंशद्वयार्थो भोगेष्वतिमात्रप्रसक्तानित्युक्तम्। अर्थेषु कामो येषामिति विग्रहः । अवर्ज्यो हि व्यधिकरणो बहुव्रीहिर्जन्माद्युत्तरपदः। अर्थ्यन्त इत्यर्था भोगाः । कामश्चातिमात्रसङ्गो वक्ष्यते । यद्वा–अर्थान्कामयन्त इति अर्थकामाः। ते निष्कामाश्चेत्तद्भोगहरणमपि सह्येत। इदं तु क्षुधितानामोदनहरणवदिति भावः। हननादप्यतिनृशंसत्वसूचनाय भोगरुधिरादिशब्दैरर्थसिद्धिस्तुशब्देन च द्योतितो विशेषस्तैरित्यादिनोक्तः। इहैवेत्यनेन विवक्षितो नृशंसत्वातिशयस्तेष्वित्यादिना दर्शितः । गुरुवधसाध्यभोगा रुधिरप्रदिग्धगुरुस्मृतिहेतुत्वात्स्वयमपि तथाविधभव(य)दुर्भोजा भवन्तीत्यैहलौकिकसुखमपि नास्तीति रुधिरप्रदिग्धशब्दाभिप्राय इत्याह—तद्रुधिरेणोपसिच्येति। उपसेचनं हि स्वयमद्यमानं सदन्यस्यादनहेतुः। इह तदुभयमपि विपरीतमिति भावः॥ ४—५॥

न चैतद्विद्म इत्यादेश्चकारद्योतितशङ्कापूर्वकं तात्पर्यार्थमाह—एवमिति। बन्धुविनाशाद्भीतेन त्वया धर्मसुतभीमनकुलाद्यासन्नतरबन्धुविनाश एव कारितः स्यादिति भवत इत्यनेन सूचितम्।

चेदस्तु। तद्वधलब्धजयादधर्म्यादस्माकं धर्माधर्मावजानद्भिस्तैर्हननमेव ग-
रीय इति मे प्रतिभातीत्युक्त्वा यन्मह्यं श्रेय इति निश्चितं तत्तद्वं शरणाग-
ताय शिष्याय मे ब्रूहीत्यतिमात्रकृपणो भगवत्पदाम्बुजमुपससार॥६–७॥

न हि प्रपश्यामि ममापनुद्या-
यच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाऽऽधिपत्यम्॥ ८॥

संजय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतप।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह॥ ९॥

---

विद्म इत्यादिबहुवचनानुसारिणाऽस्माकमित्यनेन हन्तव्यतया निर्दिष्टभीष्मद्रोणाद्यपेक्षया सर्वेषां शिष्यत्वादिकमभिप्रेतम्। पूर्वोत्तरार्धाभ्यां विमृश्य स्वाभिमतपक्षौ व्यञ्जितौ। यद्वेति यदि वेति च तुल्यार्थम्। येषां वधेन जीवनमस्माकमनिष्टं त एवास्माञ्जिघांसन्तः सह नानास्वरूपत्वेनावस्थिता इति यानेवे-त्यादेरन्वयार्थः। जिजीविषाम इत्यनेन सूचितामनिर्णयपर्यवसितामत एव प्रश्नहेतुभूतां प्रतिभामाह—इति मे प्रतिभातीति। यच्छ्रेय इत्यादेरन्वयफलितार्थमुपदेशयोग्यत्वायोक्तां शिष्यगुणसंपत्तिं च स्फुटयति—यन्मह्यमित्यादिना। निश्चेतव्याकारनिष्कर्षणायेतिकरणम्। शासनीयो हि शिष्यः, अतः शिष्यस्तेऽहं शाधि मां त्वामिति वदति। स्वभावोऽत्र धैर्यम्। कर्तव्यविशेषाज्ञानाच्छोकापनोदनोपायराहित्यादिना चातिमात्रकार्पण्यम्। त्याज्यस्यापरित्यागोऽत्र कार्पण्यमित्येके। दयाजनकदीनवृत्तिनिरतत्वमित्यपरे। भगवत्पादावुपससादेति। शिष्यत्वप्रपन्नत्वाद्युक्तिफलमेवमुक्त्वेति श्लोके हृषीकेशपदेन सदर्थ(र्थ)श्रवणायार्जुनहृषीकप्रेरकत्वं यच्छोकमुच्छोषणमिन्द्रियाणामित्याद्युक्तेन्द्रियक्षोभशान्तिकरत्वं च व्यञ्जितम्॥ ६–७॥

---

१. क. ग. ङ. °धर्माद्°। २ क. व. °धर्ममवजा°।

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

एवमस्थानसमुपस्थितस्नेहकारुण्याभ्यामप्रकृतिं गतं क्षत्रियाणां परमधर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया शरणागतं पार्थमुद्दिश्याऽऽत्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसंधिरहितस्य स्वधर्मस्याऽऽत्मयाथार्थ्य-

---

हृष्यन्ति हर्षयन्तीति वा हृषीकाणीन्द्रियाणि । एवमुक्त्वा स्वावस्थामावेद्येत्यर्थः । निद्रा गुडाका स्यादिति गुडाका निद्रा तस्यामीशो गुडाकेशः प्रबुद्धस्वभाव इत्यर्थः । पिण्डितकेश इति वा । गोविन्दशब्देन शोकापनोदनयोग्यवाक्छालित्वं. गोशब्दनिर्दिष्टाया भुवो लाभाय भारावतरणार्थप्रवृत्तत्वं वाऽभिप्रेतम् । एवमनेनोपोद्घातेनोचितावसरे वक्ष्यमाणशास्त्रावतरणसंगतिं वदन्नर्थादुपोद्घातसंग्रहश्लोकं च व्याकरोति । अस्थानशब्दस्य विषमे समुपस्थितमित्येतद्विषयत्वं व्यञ्जयंस्तस्य स्नेहकारुण्याभ्यामेवान्वयाय तयोः पृथङ्निर्देशं कृतवान् । अप्रकृतिं गतमित्याकुलशब्दार्थ उक्तस्तेन स्वभावतो धीरत्वं सूच्यते । उपहतस्वभाव इति हि स्वेनैवोक्तम् । एतेन कार्पण्यदोषोपहतस्वभावत्वं धर्मसंमूढचेतस्त्वे हेतुतयोक्तमित्यपि दर्शितम् । धर्मसंमूढचेता इत्येतद्विवरणरूपस्य धर्माधर्मधियेत्यस्यार्थः- क्षत्रियाणामित्यादिनोक्तः । धर्मेऽप्यधर्मबुद्धिर्धर्माधर्मधीः शुक्तिकारजतधीरितिवत् । तत्र यथार्थख्यातिपक्षे भेदाग्रहो विवक्षितः । तामसी चेयं धीः । अयं धर्ममिति या मन्यत इत्यादिना वक्ष्यते । अत्रास्थानस्नेहकारुण्याभ्यां जाता धर्माधर्मधीरिति विग्रहो द्रष्टव्यः । स्नेहकारुण्यधर्मभयाकुल इत्यादिप्राचीनभाष्यानुसारेण धर्माधर्मभयाकुलमिति पाठे तु त्रयाणां द्वंद्वः । पृच्छामि त्वामित्यादिसमभिव्याहृतप्रपन्नशब्दार्थो धर्मबुभुत्सया च शरणागत इत्युक्तः । एवं योग्योद्देशेन प्रवृत्तिर्युज्यत इत्याह—पार्थमुद्दिश्येति । व्याजलाभमात्रेण शास्त्रावतरणं कृतमिति भावः । आकुलं पार्थमुद्दिश्येत्यस्य तात्पर्यमात्मेत्यादिना मत्वेत्यन्तेनोक्तम् । आत्मयाथात्म्यं नित्यत्वभगवदधीनत्वादिकम् । न हि प्रपश्यामीत्यादिकं वदतोऽ-

प्राप्त्युपायताज्ञानेन च विनाऽस्य मोहो न शाम्यतीति मत्वा भगवता परमपुरुषेणाध्यात्मशास्त्रावतरणं कृतम् ।

तदुक्तम्—

अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम् ।
पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् इति ॥ ८-९ ॥

---

स्यायमेव शोकनिरासोपाय इति भावः । कृतमित्यस्य केनेत्या-काङ्क्षायां प्रबन्धकर्तृभूतव्यासादिशङ्काव्यावर्तनायोक्तभगवता परमपुरुषेणेत्यनेन पदद्वयेन प्रामाण्यानुपयुक्तमुभयलिङ्गत्वादिक-मभिप्रेतम् । अन्यपरशास्त्रान्तरव्युदासायाध्यात्मेति विशेषितम् । अस्यार्थस्य सांप्रदायिकत्वायाऽऽह—तदुक्तमिति । प्रत्यध्यायं संग्रहश्लोकैरर्थभेदेऽभिधीयमानेऽपीतः पूर्वस्य द्वितीयाध्यायैकदे-शस्यापि शास्त्रोपोद्घातित्वमतः परस्य शास्त्रावतरणरूपत्वं च विवेक्तुमस्थानेत्यादिना संग्रहश्लोकेनानिर्दिष्टप्रथमाध्यायेनैताव-त्संगृहीतम् । महर्षिस्तु शोकतदपनोदनरूपकथावान्तरसंगत्या तं तथेत्यादि द्वितीयाध्याये न्यवीविशत् । इदमपि सूचितं तन्मो-हशान्तय इति द्वितीयाध्यायफलं संगृह्णद्भिः । ततश्चास्थानस्नेहाद्या-कुलत्वं प्रथमाध्यायार्थः सविशेषः स एवात्र संगत्यर्थमनूद्यत इत्यपि दर्शितं भवति ॥ ८-९ ॥

नन्वेवंविधमुद्दिश्य कथमपृष्टकर्मयोगज्ञानयोगभक्तियोगादिवि-षयं शास्त्रमुपदिश्यते । नापृष्टः कस्यचिद्ब्रूयादिति हि स्मरति । विशेषतश्चायं गुह्यगुह्यतरगुह्यतमप्रकारोऽर्थः सहसोपदेष्टुमयुक्तम् । 'तस्माद्युध्यस्व भारत' 'युद्धाय कृतनिश्चयः' इत्यादिषु च प्राकरणिकयुद्धप्रोत्साहनपरत्वमेव प्रतीयते । अतो नान्य(स्य) शास्त्रस्याध्यात्मपरत्वमिति । अत्रोच्यते—यच्छ्रेयः स्यादिति प्रश्न-वाक्ये श्रुतिरनिर्धारितविशेषा दृश्यते । न चार्जुनस्य युद्धमेव श्रेयस्त्वेन जिज्ञास्यमित्यस्ति नियमः परमास्तिकस्य तस्य भग-वति संनिहिते प्रस्तुतमुखेन निःश्रेयसपर्यन्तजिज्ञासोपपत्तेः । अस्तु वा तस्य युद्धविषया जिज्ञासा तथाऽपि परमकारुणिकेन भगवता यच्छ्रेय इति सामान्यवचनमालम्ब्य परमहितोपदेश उपपन्नः । युध्यस्वेत्यादिकमपि परमनिःश्रेयसोपाय इति तत्र तत्र वक्तव्यम् ।

तमेवं देहात्मनोर्याथात्म्याज्ञाननिमित्तशोकाविष्टं देहातिरिक्तात्मज्ञाननिमित्तं च धर्माधर्मौ भाषमाणं परस्परविरुद्धगुणान्वितमुभयोः सेनयोर्युद्धायोद्युक्तयोर्मध्येऽकस्मान्निरुद्योगं पार्थमालोक्य परमपुरुषः प्रहसन्निदमुवाच । पार्थं प्रहसन्निव परिहासवाक्यं वदन्निवाऽऽत्मपरमात्मयाथात्म्यैतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरम् । 'न त्वेवाहं

---

तस्माद्युक्तमिदमध्यात्मशास्त्रावतरणमिति परिहासयोग्यत्वाय तमिति परामृष्टमाह--एवमित्यादिना। उभयोरित्यनेन सूचितमुक्तम्--युद्धायोद्युक्तयोरिति । एतेनोपदेशावसरलाभोऽपि व्यञ्जितः । सीदमानमित्यनेन निरुद्योगित्वं फलितम् । युद्धविनिवृत्त्यनर्हावस्थाज्ञापकेन मध्य इत्यनेनाभिप्रेतमाह--अकस्मादिति। अधर्मादिः पराजयादिर्वा युद्धनिवृत्तेः सम्यग्हेतुरत्र नास्ति । अहेतुकोपक्रान्तत्यागे तु परिहास्यत्वमिति भावः । अत्र हृषीकेशत्वोक्तिफलितं वक्ष्यमाणशास्त्रप्रामाण्याद्युपयुक्तं वक्तुः पुरुषस्य सर्ववैलक्षण्यं परमपुरुष इति दर्शितम्। यद्यप्यसौ हृषीकेशत्वार्थ(द)स्य हृषीकादिकं सर्वं संकल्पमात्रेण नियम्य भूभारावतरणे प्रेरयितुं शक्तस्तथाऽपि जगदुपकृतिमर्त्यतया पार्थतदितरासाधारणपुरुषार्थोपायशास्त्रोपदेशद्वारा प्रवर्तयतीति भावः । यद्वा--धीरमर्जुनं हृषीकेशतया स्वयं प्रक्षोभ्य प्रहसन्निव जगदुपकाराय शास्त्रमुवाचेति संबन्धविशेषात्समनन्तरवाक्यपर्यालोचनया च परिहासार्थत्वौचित्यात्प्रहासस्य पार्थकर्मत्वमुक्तम्। यद्वा प्रसन्नस्य दोषानिरीक्षणेन परिहासासंभवं शिष्यं प्रत्यध्यात्मोपदेशे प्रहासमात्रदृष्टान्तानुपयोगं चाभिप्रेत्य पार्थशब्दः । अतः प्रहसन्निवेत्यनेन फलितं सरसत्वं सुग्रहत्वं निखिलनिगमान्तगह्वरनिलीनस्य महतोऽर्थजातस्यानायासभाषणमिदंशब्दस्य वक्ष्यमाणसमस्तभगवद्वाक्यविषयत्वमिङ्गितेनापि विवक्षितसूचनं च दर्शयति--परिहासेत्यादिना । अशोच्यानिति श्लोकस्याप्युपदेशार्थावधानापादनार्थपरिहासच्छायतया शास्त्रावतरणमात्रत्वेन साक्षाच्छास्त्रत्वाभावान्न त्वेवाहमारभ्येत्युक्तम् । यद्वा--अत्राशोच्यानिति श्लोकः प्रहसन्निवेत्यस्य

---

१ क. ख. °कात्माज्ञा° । २ ग घ. च धर्म भा° ।

जातु नाऽऽसम् ' इत्यारभ्य ' अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ' इत्येतदन्तमुवाचेत्यर्थः ॥ १० ॥

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अशोच्यान्प्रत्यनुशोचसि ' पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ' इत्यादिकान्देहात्मस्वभावप्रज्ञानिमित्तवादांश्च भाषसे। देहात्मस्वभावज्ञानवतां नात्र किंचिच्छोकनिमित्तमस्ति । गतासून्देहानगतासूनात्मनश्च

---

विषयः। न त्वेवाहमित्यादिकं तु इदंशब्दार्थः । अत्र मा शुच इत्येतदन्तं भक्तियोगगोचरमिति निर्देशः सर्वसाधकस्यापि चरमश्लोकोक्तप्रपदनस्य प्रकृतान्वयेन भक्तिविरोधिनिवर्तकतयोदाहरिष्यमाणत्वात् ॥ १० ॥

अशोच्यानन्वशोच इत्युक्ते केचिदशोच्याः शोचन्ति तदनन्तरमयमपि शोचतीति भ्रान्तिः स्यात्तन्निवृत्त्यर्थमुक्तम्—अशोच्यान्प्रतीति। अन्वशोच इति लङ्प्रयोगोऽनुपपन्नः शोकस्याद्यतनत्वाद्भाषस इति वर्तमानव्यपदेशवैरूप्याच्चेत्यत्राऽऽह—अनुशोचसीति। अद्यतन एव चिरानुवृत्तत्वाविवक्षया सोपसर्गलङ्प्रयोगः । यद्वा वर्तमानार्थ एव सुप्तिङुपग्रहेत्यादिना लकारव्यत्ययः। प्रज्ञावादांश्च भाषस इत्यत्र ' वर्तमानसमीप्ये वर्तमानवद्वा ' [पा० सू० ३ । ३ । १३१ ] इत्यनुशासनान्न तूष्णीं बभूवेत्यनेन विरोधः। अत्र प्रकृष्टज्ञानवाचिना प्रज्ञाशब्देन देहात्मनोः स्वभावज्ञानमुच्यते। प्रज्ञया कृता व्यवहाराः प्रज्ञावादा इति समासार्थव्यञ्जनाय निमित्तशब्दः। देहात्मभेदज्ञाने सति हि पितॄणां तदर्थपिण्डोदकक्रियास्तल्लोपनिमित्तप्रत्यवायादेश्च विश्वासपूर्वको व्यवहार इत्येतत्सूचनाय पतन्तीत्याद्युपात्तम् । फलितमाह—देहात्मेति । गतासूनित्यादेर्विवक्षितं विशेष्यं निर्दिशन्पण्डितशब्दं च प्रकृतोपयोगितया व्याकुर्वन्नन्वयमाह—गतासूनिति। गतास्वगतासुशब्दौ निष्प्राणसप्राणवाचकौ तथाऽपि तस्यार्थस्य प्रकृतासंगतेः।

प्रति तयोर्याथात्म्यविदो न शोचन्ति । अतस्त्वयि विप्रतिषिद्धमिदमुपलभ्यते । यदेतान्नाहं हनिष्यामीत्यनुशोचनं यच्च देहातिरिक्तात्मज्ञानकृतं धर्माधर्मभाषणम् । अतो देहस्वभावं न जानासि न तदतिरिक्तमात्मानं च नित्यं तत्प्राप्त्युपायभूतं युद्धादिकं धर्मं च । इदं युद्धं फलाभिसंधिरहितमात्मयाथात्म्यावाप्त्युपायभूतम् । आत्मा हि न देहजन्माधी-

अविश्रान्तमनालम्बमपाथे(थे)यमदेशिकम् ।
तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥
बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ।
शोच्यान्यहोऽतिमोहेन व्याप्तानि(नी)ति मनीषिणाम् ॥

इत्यादिषु पण्डितानामेव सप्राणनिष्प्राणविषयशोकदर्शनादशोच्यानन्वशोच इत्यस्य वक्ष्यमाणे विस्तरे चाव्यक्तोऽयमित्यादिना, अथ चैनमित्यादिना च नित्यस्याऽऽत्मनोऽनित्यस्य शरीरस्य चाशोचनीयत्वेन वक्ष्यमाणत्वादत्रापि तद्विषयैव युक्तेत्यभिप्रायः । देहास्तावन्न शोचनीया नश्वरत्वात्, आत्मानोऽपि तथाऽनश्वरत्वादित्यूहापोहक्षमबुद्धिरूपा पण्डा येषां तेऽत्र पण्डिताः । प्रज्ञावादविप्रतिषिद्धशोकेनोन्नीतांस्तदज्ञानविषयानाह– अतो देहेत्यादिना । शोकस्तु सिद्धः प्रज्ञा तु वादमात्रस्थेति भावः । को देहस्वभावः कथमात्मा देहातिरिक्तो नित्यश्च कथं चानयोरशोच्यत्वं कथं वा घोरं युद्धादिकमात्मप्राप्त्युपायभूतमित्याशङ्क्य तदज्ञानविषयतयोक्तं त्रयं बुद्धिस्थक्रमेण विवृणोति— इदं चेत्यादिना । इदमेव युद्धं बुद्धिविशेषसंस्कृतत्वादात्मयाथात्म्यप्राप्तिकरमित्यर्थः । उपायभूतमित्यत्र च्व(च्वि)प्रत्ययाप्रयोगादयमेवास्य स्वभावः । फलान्तराभिसंधिना तु स प्रतिबध्यत इति भावः । आत्मा हीति । हिशब्देन 'न जायते' [क० २ । १८] इत्यादिश्रुतिप्रसिद्धिं द्योतयति । आत्मनो देहसंयोगवियोगलक्षणजन्ममरणसद्भावेऽपि न ह्युत्पत्तिविनाशरूपे

१ क. तयोः स्वभावयाथा° ।

नजन्मा न देहमरणाधीनविनाशश्च । तस्य जन्ममरणयोरभावात् । अतः स न शोकस्थानम् । देहस्त्वचेतनः परिणामस्वभावस्तस्योत्पत्तिविनाशयोगः स्वाभाविक इति सोऽपि न शोकस्थानमित्यभिप्रायः ॥ ११ ॥

न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥

प्रथमं तावदात्मनां स्वभावं शृणु । अहं सर्वेश्वरस्तावदतो वर्तमानात्पूर्वस्मिन्ननादौ काले न नाऽऽसमपि त्वासम् । त्वन्मुखाश्चेत ईशि-

---

जन्ममरणे इत्यभिप्रायेणाऽऽह—तस्येति । देहस्त्विति । तुशब्द आत्मापेक्षया वैलक्षण्यं प्रत्यक्षादिसिद्धं द्योतयति । देहत्वेनोपचयात्मकत्वादचेतनत्वाच्च घटादिवत्परिणामस्वभाव इत्यर्थः । एवमुपायोपेयनिवर्त्यस्वभावानभिज्ञं प्रति तृतीयोपदेशाय बुभुत्सोत्पादिता ॥ ११ ॥

अथ पारलौकिकफलोपायानुष्ठानाधिकारित्वाय देहातिरिक्तत्वेनावश्यं ज्ञातव्यं पुरुषार्थतयोपेयमात्मानं तत्प्राप्तीच्छामुखेन तदुपायेच्छाजननाय प्रथममेवोपदिशतीत्यभिप्रायेणाऽऽह—प्रथममिति । शृण्वित्यनेन प्रकृतश्लोकस्य प्रतिवादिवाक्यवदुपलम्भमात्रार्थत्वव्युदासायावधानापादनार्थत्वं व्यञ्जितम् । जीवेश्वररूपेष्वात्मसु नित्यत्वे शीघ्रसंप्रतिपत्तियोग्यांशं प्रथममाहेत्यभिप्रायेणाऽऽह—अहमिति । ईश्वरस्याहंग्रहः सर्वनियन्तृत्वगर्भ इति तद्व्यपदेशफलितमाह—सर्वेश्वर इति । तावदिति संप्रतिपत्तिसूचनम् । अतः परमित्यत्रातःशब्दार्थं तस्य पूर्ववाक्येऽपि यथार्थमनुषङ्गं जातुशब्दाभिप्रेतं चाऽऽह—अत इत्यादिना । अनभिमतपक्षनिषेधाय व्यतिरेकरूपे वाक्ये तुशब्दद्योतितन्यायमाह—अपि त्वासमिति । न त्वं नेम इति भेदनिर्देशेऽपि क्षेत्रज्ञाकारेण समुदायी कुर्वन्नीश्वरापेक्षया युष्मदिदंशब्दार्थतया फलितमीशितव्यत्वाकारं च साधारणं दर्शयन् संनिहितानिदर्शनपराया एकदेशोक्तेस्तात्पर्यतो ब्रह्मादिसकलक्षेत्रज्ञविषयत्वं चाऽऽह—त्वन्मुखा इति । तुशब्देनानुषङ्गं क्रियापदविभक्तिविपरिणामं च

तव्याः क्षेत्रज्ञा न नाऽऽसन्नपि त्वा * सन् । अहं च यूयं च सर्वे वयमतः परमस्मादनन्तरे काले न चैव न भविष्यामोऽपि तु भवि+ष्याम एव । यथाऽहं सर्वेश्वरः परमात्मा नित्य इति नात्र संशयस्तथैव भवन्तः

दर्शयति—अपि त्वासन्निति । 'न त्वं नेमे जनाधिपाः' इत्यत्र न त्वेवेत्येतदनुषज्य न त्वं नाऽऽसीर्नेमे जनाधिपा नाऽऽसन्नित्यन्वयः । सर्वे वयमित्यस्य पूर्वोक्तजीवेश्वरसमुदाये संप्रतिपन्नव्यांशं विविनक्ति—अहं चेति । 'त्यदादीनां मिथो योगे यः परः स शिष्यते' इति युष्मदस्मदोरत्रैकशेषः । एवमुत्तरत्र भवन्त इत्यत्रापि मन्तव्यम् । कालानन्त्यात्पर्वतादीनामिवातिस्थिराणामपि कदाचिन्नाशः स्यादित्युत्प्रेक्षां निवारयति—अपि तु भविष्याम एवेति । अप्रस्तुतस्वनिर्देशस्य दृष्टान्तार्थतां तत्राहमितिनिर्देशाभिप्रेतसर्वेश्वरत्वसर्वात्मत्वरूपंनित्यत्वोपपत्तिं दार्ष्टान्ति [के] च नित्यत्वसंभावनामाह—यथेति । सर्वेश्वरः कालत्रयवर्तिनः सर्वस्याधिपतिः कथं न कालत्रयवर्ती कथं च सर्वेषां नियन्ता कदाचित्केनचिन्निरुध्येतेति भावः । परमात्मा देशकालस्वरूपावच्छिन्नव्याप्तिरिति परमात्मपदनिरुक्तिः । तथा व्याप्तत्वाच्च व्याप्यैरस्य न नाशः सर्वात्मत्वेन सर्वकालवर्तित्वं च सिद्धमिति भावः । ननु यः प्रत्यक्षयोग्ये देहातिरिक्ते जीवेऽपि संशेते स कथं ततोऽप्यतिरिक्तेऽत्यन्तागोचरे परमात्मनि निःसंशयः स्यात् । उच्यते । नह्यसावर्जुनः पुरुषं शाश्वतं दिव्यमित्यादेः स्वयं वक्ता, नारदासितदेवलव्यासादिपरमर्षिशतवचनविदितपरब्रह्मभूतपरमपुरुषस्वभावः प्रत्यक्षीकृतपुरंदरलोकसकलास्त्रमन्त्रतपःप्रभावादिनिरतिशयगुरुदेवताभक्तिरस्खलितसकलवर्णाश्रमाचारो धर्मलो-

* सत्त्वसहितानाममीषां सर्वेषां वर्तमानकालात्प्राक्तने काले सत्तासद्भावप्रतिपादनात्प्रागभावाप्रतियोगित्वं दर्शितम् । + एतेन वर्तमानकालादुत्तरस्मिन्काले प्रागुक्तानां सर्वेषां सत्तास्तित्वोपवर्णनाद्ध्वंसाप्रतियोगित्वमुक्तम् । वर्तमानकाले च भवाम एव । एवं च कालत्रयेऽपि सत्तायोगित्वादात्मनो नित्यत्वेनानित्याद्देहाद्वैलक्षण्यं सिद्धम् । देहादात्मनो वैलक्षण्यसूचनार्थमेव श्लोके न त्वेवेति तुशब्दोपादानम् ।

१ ख. ग. घ. ङ. च. °रस्मिन्ननन्ते का° ।

क्षेत्रज्ञा आत्मानोऽपि नित्या एवेति मन्तव्याः। एवं भगवतः सर्वेश्वरा-
दात्मनां* भेद आत्मनां च परस्परं भेदः पारमार्थिक इति भगवतैवो-

---

पभयविह्वलो देहातिरिक्तमात्मानमीश्वरं चात्यन्तानित्यतया चाऽस्तीति भ्राम्यति संशेते वा। तत्प्रकारविशेषानभिज्ञतयैव हि तस्य शोकादिः। अतोऽयमीश्वरं तन्नित्यतां च सर्वेश्वरत्वादिसिद्धां सामान्यतो मन्यते। लोकदृष्ट्या जन्मविनाशादिदर्शनात्, 'न प्रेत्य संज्ञाऽस्ति' [ बृ० २।४।१२ ] इत्यादिश्रुत्यर्थापातप्रतीत्या च जीवप्रकारविशेषांस्तत्त्वतो न जानातीति न कश्चिद्दोषः। क्षेत्रज्ञा आत्मान इति। यथा जीवात्मनो वैलक्षण्येन जीवस्वभावास्तस्मिन्न भवन्ति तथा क्षेत्राद्विलक्षणत्वेन वक्ष्यमाणेन क्षेत्रगतमनित्यत्वादिकं तन्नियन्तरि जीवे न शङ्कनीयमिति भावः। अथ कुमतिसौचिकनिर्मितानामामूलचूडमघटितसंघटितजरत्कर्पटशकलकन्थासगन्धानां प्रबन्धानां दोषान्स्थालीपुलाकन्यायेन निर्दिशन्प्रथमं शास्त्रोपक्रमविरोधं शास्त्रप्रवृत्त्यनुपपत्तिं च वदति—एवमित्यादिना। एवं तत्त्वोपदेशप्रवृत्तशास्त्रारम्भोक्तिप्रकारेणेत्यर्थः। भगवतः सर्वेश्वरादित्युभयलिङ्गात्सर्वनियन्तुरहमितिनिर्दिष्टादित्यर्थः। यदीश्वराज्जीवानां भेदः पारमार्थिको न स्यादुभयलिङ्गत्वदुःखित्वादिस्वभावसंकरः स्यात्। यदि चाऽऽत्मनां मिथो भेदः सत्यो न स्याद्बद्धमुक्तशिष्याचार्यादिव्यवस्थानुपपत्तिः स्यादिति भावः। भगवतैव। न तु रथ्यापुरुषकल्पेन केन

---

* सर्वेश्वराज्जीवानां जीवानां च परस्परं भेद इत्यर्थः। तत्र जीवो नाम यथेष्टविनियोगार्हत्वे सति चेतनत्वम्। चेतनत्वमात्रोक्तावीश्वरेऽतिव्याप्तिः। सत्यन्तमात्रोक्तावचित्पदार्थेष्वतिव्याप्तिः स्यादत उभयोपादानम्। स च मम शरीरमिति प्रतीत्या देहाद्व्यावृत्तः।

चार्वाकास्तु देह एवाऽऽत्मेति आहुः। अत एव स देहावधिकः। न तु देहोत्पत्तेः पूर्वं देहनाशानन्तरं वा तस्य स्थितिः। देहात्मवादे प्रमाणं त्वहं जानामीति प्रत्ययः। ज्ञाता ह्यात्माऽहमिति चकास्ति। देहश्चाहंकारगोचरः स्थूलोऽहं कृशोऽहमिति प्रत्ययात्। देहस्य हि स्थौल्यादियोगः। अतस्तत्समानाधिकरणतयाऽयमहंकारः शरीरालम्बन इत्यवश्यमाश्रयणीयम्।

यद्यपि भौतिकेषु लोष्टकाष्ठादिषु चैतन्यं नोपलभ्यते तथाऽपि भूतचतुष्टयसंघातात्मकदेहे चैतन्याविर्भावो नानुपपन्नः । यथा क्रमुकफलताम्बूलदलादिष्ववयवेषु प्रत्येकमविद्यमानोऽपि रागः संयोगविशेषादवयविन्याविर्भवति तद्वत् । परं त्वेतदचारु । इदं शरीरमिति शरीरविषयिणी मतिः पराग्वृत्तिः । अहं जानामीति प्रत्यग्वृत्तिरहमिति मतिः । सा चेदंकारगोचराद्भिन्नमेव स्वविषयमुपस्थापयति तदुक्तम्—' न खल्वहमिदंकारावेकस्यैकत्र वस्तुनि ' इति ।

स्थूलोऽहमित्यादिस्तु लाक्षणिकः प्रयोगः । अत एव ममेदं गृहमितिवन्ममेदं शरीरमिति भेदप्रतिभासः । किंच चैतन्यमपि देहे नोपपद्यते । कार्यद्रव्यगतविशेषगुणानां कारणगुणपूर्वकत्वात् । ताम्बूलादावपि चर्वणजनितद्रुतवहसंयोगसंपादितपाटलिमाभिः परमाणुभिर्द्व्यणुकादिक्रमेण कारणगुणपूर्वक एव रागोदयः ।

किंचानुमानेनापि देहस्याऽऽत्मत्वं सिध्यति । तथा चोक्तम्—

उत्पत्तिमत्त्वात्पारार्थ्यात्संनिवेशविशेषतः ।
रूपादिमत्त्वाद्भूतत्वाद्देहो नाऽऽत्मा घटादिवत् ॥
सच्छिद्रत्वाददेहित्वाद्देहत्वान्मृतदेहवत् ॥ इति ।

किंच देहात्मवादे जन्मान्तराभावेनाकृताभ्यागमकृतविप्रणाशदोषप्रसङ्गः । सन्ति हि देहान्तरानुभाव्यस्वर्गस्वाराज्यादिसाधनविधायिन्यः श्रुतयः । किंच जातमात्रो हि जन्तुः स्तन्यादिवाञ्छायुक्तस्तदर्थप्रवृत्त्या निश्चीयते । तदवस्थस्य च रागादयो जन्मान्तरीयसंस्कारोद्बोधमन्तरेण न युज्यन्त इति बोध्यम् ।

स च नित्यः । पूर्वानुभूतार्थप्रतिसंधानात् । ' न जायते म्रियते वा ' ( का० २ । १८ ) ' ज्ञाज्ञौ द्वावजावीशनीशौ ' ( श्वे० १ । ९ ) इत्यादिश्रुतिषु जननमरणनिषेधश्रवणादपि जीवनित्यत्वं प्रतीयते । किंच जीवानित्यत्वेऽकृताभ्यागमकृतप्रणाशरूपदोषद्वयप्रसङ्गः । ननु नित्यश्चेज्जीव उत्पन्नो जीवो विनष्टो जीव इति प्रतीत्यनुपपत्तिरिति चेदिदमुत्तरं गृहीत्वा संतुष्यन्तु सरलाः । जीवस्य देहसंबन्ध उत्पत्तिस्तद्वियोगो नाश इति जीवस्वरूपं नित्यमेव । ' प्रजापतिः प्रजा असृजत ' ( तै० सं० ५ । ७ । ३ ) ' यतो वा इमानि भूतानि जायन्ते ' ( तै० ३ । १ । १ ) इत्यादिश्रुतिप्रतिपादिते सर्जनजनने अपि देहसंबन्धद्वारैवोपपादनीये ।

ननु नित्यत्वे जीवात्मनाम् ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' ( छा० ६ । २ । १ ) इति श्रुतिप्रतिपादितं सृष्टेः प्रागेकत्वावधारणं न युज्यत इति चेन्न । नामरूपविभागाभाव एवैकत्वमिति तात्पर्यात् । एतेनानित्यत्ववादिनश्चत्वारोऽपि पक्षाः खण्डिता वेदितव्याः । तथा हि—क्षणिक आत्मेति विज्ञानात्मवादिनः । आशरीरस्थायीति प्राणेन्द्रियात्मवादिनः । प्रलयान्तं इति पौराणिकैकदेशिनः । मोक्षावधिक इत्यौपनिषदाभासाः ।

तत्र प्रथम आत्मानमुत्तरकालानवस्थायिनं मन्यमानो न किंचिदुद्दिश्य प्रवर्तेत । प्रवृत्तिर्हि खलूत्तरकाले सुखं दुःखनिवृत्तिं वाऽभिसंधायैव भवति । साऽत्र कथं घटेत । फलकाले स्वाभावात्स्वकाले फलाभावात् । द्वितीये तु पारलौकिकं फलमभिसंधाय यज्ञादौ प्रवृत्तिर्न स्यात् । सा च सार्वत्रिकी दृश्यते । तृतीये मोक्षमार्गोपदेशानर्थक्यम् । चतुर्थेऽप्यानर्थक्यम् । तदुक्तम्—

अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥ इति ।

स च जीवः प्रतिशरीरं भिन्नः । अत एव कस्यचित्सुखित्वकालेऽन्यस्य दुःखित्वं दृश्यते । किंच जीवैकत्वे चैत्रेणानुभूते विषये मैत्रस्यापि स्मरणं प्रसजेत् । संस्कारनाशान्न तत्स्मरणं प्रसजतीतिचेच्चैत्रस्यापि स्मरणाप्रसङ्गः । न च चैत्रीयसंस्कारो न नष्ट इति वाच्यम् । जीवात्मनामैक्यपक्षेऽमुष्य संस्कारो लुप्तोऽमुष्य न लुप्त इति व्यवस्थायाः सुरगुरुणाऽपि वक्तुमशक्यत्वात् । किंच सुखदुःखयोरेकाश्रयत्व उभयप्रतिसंधानमेकस्यैव स्यादित्यनुभवविरोधः समापतति । तथा जीवैक्ये कश्चिद्बद्धः कश्चिन्मुक्तः कश्चिच्छिष्यः कश्चिदाचार्य इति व्यवस्था नोदयमासादयेत् । देवमनुष्यतिर्यगादिभेदेन विषमसृष्टिश्च नोपपद्येत । कर्मभेदो विषमसृष्टिनियामक इतिचेत्तदेतदत्यन्तारम्यम् । जीवैक्यपक्षे हि अमुकस्येदं कर्म नामुकस्येति नियमस्य दुरुपपादत्वात् । एवमेवान्तःकरणभेदस्यापि सुखदुःखादिवैषम्यव्यवस्थापकत्वाभावो वक्तव्यः । इदमन्तःकरणममुष्यैव नामुष्येति व्यवस्थाया दुर्वचत्वात् ।

किंच 'एषोऽणुरात्मा चेतसा वेदितव्यः' ( मु० ३ । १ । ९ ) इति श्रुतिवचसा स्पष्टमेव जीवोऽणुपरिमाण इति प्रतिपाद्यते । 'उत्क्रान्तिगत्यागतीनाम्' ( ब्र० सू० २ । ३ । २० ) इति सूत्रे श्रीभाष्येऽपि जीवस्याणुत्वमेवोपपादितम् । तथा चैकस्याणोर्जीवस्यानन्तशरीरसंबन्धः सुतरामसंभवी । विष्णुमित्रात्मानं पक्षीकृत्य हरदत्ततादात्म्यविरहितत्वं साध्यते, कदाऽपि हि हरदत्तानुभूतसुखाद्यनुसंधानशून्यत्वादित्यनुमानादपि जीवानां मिथो भेदः सिध्यति । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' ( का० ५ । १३ ) इत्यादिश्रुतिरपि जीवानेकत्वं प्रतिपादयति । नन्वियं श्रुतिरौपाधिकभेदप्रतिपादिका । अत एव 'भोक्ता भोग्यम्' ( श्वे० १ । १२ ) इत्यादिभिर्जीवैकत्वाभिधायिनीभिः श्रुतिभिरविरोध इतिचेत्—एकपरिमाणेष्वनेकेषु सुवर्णघटेष्वेको घट इति प्रतीतिवत्, 'एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते जनम्' इतिवच्च वस्तुतः परस्परं भिन्नानामपि जीवानां ज्ञानस्वरूपेणैकजातीयत्वाज्जीवैक्यव्यवहारः । ऐक्यं तुल्यत्वम् । तच्चेदं चौषधमेकमेवेत्यत्रेवात्राप्येकशब्दस्तुल्यार्थक इत्यर्थः । जीवाद्वैतमिति व्यवहारस्याप्येषैव गतिः । जीवाद्वैतस्य प्रकाराद्वैते तात्पर्यम् । जीवानां स्वरूपेणा-

क्तमिति प्रतीयते । अज्ञानमोहितं प्रति तन्निवृत्तये पारमार्थिकनित्य-

---

चित् । यद्वा-त्वमेव त्वां वेद्ध ( त्थ ) योऽसि सोऽसि ' सो अङ्ग वेद यदि वा न वेद ' इत्युक्तेर्भगवतैव स्वेन स्वस्य स्वशरीरभूतजीवानां च तत्त्वमुक्तमिति प्रतीयत इत्यभिप्रायः । अज्ञानमोहितमिति । न हि स्वयं वम्भ्रम्यमाणस्याऽऽप्तेनापि भ्रान्ति-रेवोत्पादनीयेति भावः । बौद्धाद्यवतारेणासुरादिभ्य इवायमुपदेशः किं न स्यादित्यत्रोक्तम्—तन्निवृत्तय इति । मोहनिवृत्त्यर्था गीतो-पनिषदिति भवद्भिरपि स्वीकृत्य व्याख्यानादि च कृतमिति भावः । देहभेदाभिप्रायेण बहुवचनं नाऽऽत्मभेदाभिप्रायेणेति शंकरोक्तं दूषयति—पारमार्थिकेति । न ह्यसौ न त्वेवाहमित्यादि-

---

नेकत्वेऽपि तेषां प्रकारस्यैक्यात् । ' नानाऽऽत्मानो व्यवस्थातः ' इति न्यायसूत्रेऽपि जीवनानात्वमेव प्रस्थापितम् । सांख्यैरप्युक्तम्—

जननमननकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ ( सां० का० १८ ) इति ।

तथा च जीवभेदनिषेधकवचोजातं प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिमानमूलक-देवतिर्यगादिभेदनिषेधपरमिति न्यायसिद्धाञ्जने स्पष्टम् ।

एवं जीवानां परस्परं भेदे सिद्धे जीवब्रह्मभेदोऽपि सिध्यति । तथा च श्रुतिः— ' क्षरात्मानावीशते देव एकः ' ( श्वे० १ । १० ) । अत्राऽऽत्मपदाभिधेयस्य जीवस्य नियन्ता देवपदबोध्यः परमात्मेति प्रतीयते । तथा च ब्रह्मणः सकाशाद्भिन्न एव जीव इति निष्टङ्कमवगम्यते । ' आधिकं तु भेदनिर्देशात् ' ( ब्र० सू० २ । १ । २२ ) इति सूत्रे श्रीभाष्ये रामानुजाचार्यकृते वेदान्तसारे वेदान्तदीपे चाऽऽध्यात्मिकदुःखयोगार्हाज्जीवस्वरू-पाद्ब्रह्मस्वरूपमधिकमर्थान्तरभूतम् । कुतः—भेदनिर्देशात् । ' पृथगात्मानं प्रेरितारं च मत्वा ' ( श्वे० १ । ६ ) ' ज्ञाज्ञौ द्वावजावीशनीशौ ' ( श्वे० १ । ९ ) ' नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ' ( श्वे० ६ । १३ ) इत्यादिश्रुतिषु ईश्वराद्भेदस्याऽऽत्मनां बहुत्वनित्यत्वयोश्चाभिधानाज्जीवेश्वरयोर्भेद इत्युक्तम् ।

' नेह नाना ' ( बृ० ४ । ४ । १९ ) इत्यादयो जीवेश्वरयोरभेदविधायिन्यः श्रुत-यस्तु अग्निना सिञ्चेदितिवद्विरुद्धार्थप्रतिपादनादौपचारिक्यः । सर्वस्य ब्रह्मशरीरत्वेन ब्रह्म-शरीरव्यतिरिक्तवस्त्वन्तरनिषेधार्थिकाः । एतदेव हि ब्रह्माद्वैतम् । तस्य प्रकार्यद्वैते तात्पर्यात् । ब्रह्मशरीरभूतानां जीवानां प्रकाराणामनेकत्वेऽपि तेषां सर्वेषामात्मभूतस्य प्रकारिणो ब्रह्मण ऐक्यात् ।

त्वोपदेशसमयेऽहं[1] त्वमिमे सर्वे वयमिति व्यपदेशात्। औ*पाधिका-
त्मभेदवादे ह्यात्मभेदस्यातात्त्विकत्वेन तत्त्वोपदेशसमये भेदनिर्देशो न

ग्रन्थो भ्रान्तिनिवृत्त्यर्थो मन्त्रपाठो येन भेदनिर्देशस्यान्यपरत्वं मन्येमहि किंत्वसौ तत्त्वार्थोपदेशरूप इति भावः। अहमिति प्रत्यक्त्वेन, त्वमिति स्वाभिमुखचेतनान्तरत्वेन, इम इति स्वपराङ्मुखानेकचेतनत्वेन सर्वे इति एकोपाधिसंगृहीतानेकव्यक्तित्वेन, वयमिति स्वेन सहाऽस्मतयैकवर्ग(र्गी)कृतानन्तव्यक्तित्वेनेति भावः। इति व्यपदेशादिति। नह्यत्र नाहमिति कश्चिदस्ति न च त्वमिति नाप्यन्य इति प्रत्यादेशः कृत इति भावः। भास्करमते भेदस्य सत्योपाधिप्रयुक्तत्वाद्भेदनिर्देश उपपद्यत इति शङ्कायां तत्रापि सामान्यत उक्तदूषणमपरिहार्यमित्याह—औपाधिकेति। हिशब्द उपाधिभेदोपहितस्य परोक्तघटाकाशाद्युदाहरणेष्वपि भेदांशातात्त्विकत्वाभ्युपगमपरः। उपाधिसत्यत्वेऽपि यथैकस्य मुखचन्द्रादेर्मुनि( मणि )कृपाणसरित्समुद्रादिभिः

* अद्वैतिनां मतमेतत्। तेषां मतेऽभेदो मुख्यो भेदस्त्वौपचारिकः। रामानुजीयमते भेदो मुख्योऽभेदस्त्वौपचारिकः। तथा हि द्विविधाः श्रुतय उपलभ्यन्ते। 'पृथगात्मानं प्रेरितारं च मत्वा' ( श्वे० १।६ ) 'ज्ञाज्ञौ द्वावजावीशनीशौ' ( श्वे० १।९ ) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' ( श्वे० ६।१३ ) इत्यादिका भेदश्रुतयः। 'नेह नानाऽस्ति किंचन' ( बृ० ४।४।१९ ) 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६।२।१ ) 'सर्वं खल्विदं ब्रह्म' ( छा० ३।१४।१ ) इत्यादिका अभेदश्रुतयः। आसु च श्रुतिषु रामानुजीयमते लोकदृष्टशरीरशरीरिन्यायेन शरीरस्य शरीरिणश्च परस्परं भेदस्य निखिलमहीमण्डलवर्तिपामरापामराखिलजनानुभवसिद्धतया तादृशभेदबोधकत्वात्प्रामाणिकत्वेन भेदविधायिन्यः श्रुतयोऽङ्गीकरणीयाः। ततश्च परिशेषन्यायेन नेह नानेत्याद्यभेदविधायिन्यः श्रुतयोऽग्निना सिञ्चेदितिवद्विरुद्धार्थप्रतिपादकत्वाच्चैत्र एक इतिवद्विशिष्टस्य शरीरिण एकत्वेनोपचरितार्थत्वेन स्वीकरणीयाः।

१ ख. ग. °देशः। अहं।

संगच्छते । भगवदुक्तात्मभेदः स्वाभाविक इति श्रुतिरप्याह—' नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ' इति । नित्यानां बहूनां चेतनानां य एकश्चेतनो नित्यश्च कामान्विदधातीत्यर्थः।

---

सत्यैरपि उपाधिभिरपि भेदोऽपारमार्थिको यथा चैकस्यैवाऽऽकाशादेर्घटमणिकादिसत्योपादि( धि )भिरपि संयोगभेदातिरिक्तो नोपाध्यधीनो भेदः । एवमन्तःकरणादिभिः सत्यैरप्युपाधिभिर्निरवयवत्वेन च्छेदनभेदनाद्ययोग्यस्य सर्वत्र परिपूर्णस्य ब्रह्मणो भेदोऽपारमार्थिक इत्यभ्युपगन्तव्यम् । ततश्च तत्त्वोपदेशसमये तद्विपरीतोपदेशो हितोपदेशिनो न घटत इति भावः । द्वयोरपि पक्षयोः श्रुतिविरोधोऽपि दूषणम् । स्वपक्षे च श्रुत्यैकार्थ्यान्न बुद्धागमादिवन्मोहनार्थत्वशङ्केत्यभिप्रायेणाऽऽह—भगवदिति । यद्वा भास्करपक्षदूषणायैव श्रुतिरुपात्ता । ततश्च कैमुत्येन शंकरपक्षोऽपि दूषितः । अपिशब्दः प्रमाणद्वयसमुच्चये । भगवदुक्तात्मभेद इत्यनेन श्रौतवदेव प्रमाणान्तरनैरपेक्ष्यं सूच्यते । श्रुतिरपि नित्या तदाज्ञारूपतयैव हि प्रमाणम् । नित्यो नित्यानामित्यत्रापि पवित्राणां पवित्रमित्यादिवद्योजनायां जीवानित्यत्वपर्यवसितमर्थान्तरभ्रमं निरस्य नित्यत्वबहुत्वचेतनत्वसामानाधिकरण्येन निरुपाधिकमेवाऽऽत्मनां बहुत्वं चेतनत्वं चेति प्रदर्शयंस्तत एवाऽऽत्मानित्यत्ववादिनां सौगतादीनामविद्यामूलभेदवादिनां शंकरादीनामागमापायिचैतन्यवादिनां वैशेषिकादीनां चिच्छक्तिमात्रनित्यवादिनामन्येषामपि निरासमभिप्रयन्प्रथमान्तपदचतुष्टयसामानाधिकरण्यबलादीश्वरैक्यं तदैक्यस्य हिरण्यगर्भरुद्रेन्द्रादिवत्कालादिभेदाभेद्यत्वेन प्रवाहेश्वरप्रतिक्षेपं श्रुत्यन्तरादिप्रसिद्धनित्यचैतन्यं प्रसरादिकं च सूचयन्यदाग्नेय इत्यादिवदनुवादलिङ्गसद्भावेऽप्यप्राप्तत्वबलेन विशिष्टविधित्वं च व्यञ्जयन्सदा सर्वत्र सर्वेषां चेतनानामेक एवेश्वरस्तत्कर्मसमाराधितस्तत्तदनुरूपाण्यपेक्षितानि करोतीति श्रुत्यर्थमाह—नित्यानामिति । पुनः सिंहावलोकितकेन शंकरमतस्योपदेशानुपपत्तिरूपं शास्त्रारम्भमूलघातक-

अज्ञानकृतभेददृष्टिवादे तु परमपुरुषस्य परमार्थतत्त्वदृष्टेर्निर्विशेपकूटस्थ-नित्यचैतन्यात्मयाथात्म्यसाक्षात्कारान्निवृत्ताज्ञानतत्कार्यतयाऽज्ञानकृत-भेददर्शनं तन्मूलोपदेशादिव्यवहाराश्च न संगच्छन्ते। परमपुरुषोऽप्यज्ञ इति पक्षेऽर्जुनवाक्यात्परमपुरुषवाक्यस्याज्ञानमूलमिथ्यार्थत्वे विशेषाभावान्न तस्योपदेशरूपत्वम्। अथ परमपुरुषस्याविगताद्वैतज्ञानस्य बाधितानुवृत्तिरूपमिदं भेदज्ञानं दग्धपटादिवन्न बन्धकमित्युच्यते। नैतदुपपद्यते।

---

माह—अज्ञानेति। किमयं भगवान्स्वेन ज्ञातमर्थमुपदिशत्यज्ञातं वा ज्ञातमपि साक्षात्कृतं श्रुतमात्रं वा, उभयत्रापि तदज्ञानं निवृत्तं वाऽनिवृत्तं वा, तन्निवृत्तावपि तत्कार्यभेदभ्रमो निवर्तते न वेति विकल्पमभिप्रेत्य साक्षात्कारादज्ञानतत्कार्यनिवृत्तिपक्षे दूषणमाह—परमपुरुषस्येति। क्षेत्रज्ञस्य ह्यपरमार्थदृष्टिः स्यादिति भावः। निर्विशेषेत्यादि। निर्विशेषत्वं सजातीयविजातीयस्वगतभेदराहित्यम्। कूटस्थत्वं मायानिष्ठत्वं साधारण्यं निर्विकारत्वं वा स्वयमविक्रियमाणस्यापि कूटस्य यथा स्वसंसर्गिणामयःप्रभृतीनां विकारहेतुत्वं तद्वत्। तत एव नित्यत्वं कालानवच्छिन्नत्वम्। याथात्म्यमुक्तप्रकारम्। अयथासाक्षात्कारोऽस्मदादीनामपि परैरभ्युपगत इति तद्व्युदासाय याथात्म्यसाक्षात्कारोक्तिः। अज्ञानमविद्या। तत्कार्यं भेदभ्रमः। आदिशब्देनानुष्ठानादि गृह्यते। उपदेश्या(शा)दिव्यवहारो ह्युपदेशार्थतद्वाचकाधिकारिशिष्याचार्यादिप्रयोजनभेदादिनानाविधभेददर्शनभेदमूलः। भेददर्शनं चाज्ञानेनैव कृतमिति त्वन्मतम्। ततश्चाज्ञानतत्कार्यनिवृत्तौ कथं तत्कार्यपरम्परानुवृत्तिरिति व्याघातापसिद्धान्तशास्त्रारम्भोपदेशाभावनिष्फलपरिश्रमश्रुतिविरोधादिदोषशतमुन्मिषेदिति भावः। अद्वैतज्ञानादज्ञाननिवृत्तावपि वासनावशाद्भेदभ्रमस्यानुवृत्तिं तस्य च बन्धकत्वमाशङ्कते—अथेति। दग्धपटादिवदिति। यथा दग्धपटादेः पटादिप्रतिभासविषयत्वेऽपि न पटादिकार्यकरत्वं तद्वदत्र भेदभ्रमस्यानुवृत्तस्यापि न संसारहेतुत्वमिति भावः। नैतदुपपद्यत इति। दृष्टान्तमात्रमुक्तं न तूपपत्तिः। प्रत्युतानुपपत्तिश्च विद्यत इति

---

१ ख. ग. °र्थदं°।

मरीचिकाजलज्ञानादिकं हि बाधितमनुवर्तमानमपि न जलाहरणादिप्रवृत्तिहेतुः। एवमत्राप्यद्वैतज्ञानेन बाधितं भेदज्ञानमनुवर्तमानमपि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशादिप्रवृत्तिहेतुर्भवति। न चेश्वरस्य पूर्वमज्ञस्य शास्त्राधिगततत्त्वज्ञानतया बाधितानुवृत्तिर्वक्तुं शक्यते। 'यः सर्वज्ञः सर्ववित्' [मु० १।१।९] 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' [श्वे० ६।८।]

वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन॥

इत्यादिश्रुतिस्मृतिविरोधात्। किंच परमपुरुषश्चेदानींतनगुरुपरम्परा-

---

भावः। अनुपपत्तिं सोदाहरणामाह—मरीचिकेति। एवमत्र प्रसङ्गः—विमतिपन्नं भेदज्ञानमद्वैतज्ञानबाधिततया मिथ्यार्थविषयमिति निश्चितमिति चेन्न स्वविषयानुरूपप्रवृत्तिहेतुः स्यात्। यथा बाधितानुवृत्तं मरीचिकाजलज्ञानमिति। एवं च बाधितानुवृत्तिभेदज्ञानं दग्धपटादिवन्न स्वकार्यकरमिति बाधितानुवृत्तिफलाभावात्स्वेष्टव्याघातादिति भावः। श्रुतमात्रपक्षेऽपि निर्विशेषविषयसाक्षात्कारश्रवणयोर्विषयानतिरेकेणाज्ञाननिवृत्तिरनुपपन्नेति कृत्वाऽथ सर्वेश्वरे बाधितानुवृत्तिस्वरूपं दूषयति—न चेति। ईश्वरत्वादेव पूर्वमज्ञ इति वक्तुं न शक्यते। अनीश्वरत्वप्रसङ्गात्। ईश्वरोऽपि चेत्पूर्वमज्ञस्तस्य शास्त्राधि[गमोऽ]पि न संभवति। तदधिकज्ञानवतोऽन्यस्य शास्त्रोपदेष्टुरभावात्। भावेऽपि स एवेश्वरो वाऽसन् कुतः सिद्धज्ञान इत्यनवस्थादोषात्। न च प्रवाहेश्वरपारम्पर्यमस्ति, तस्य दूषितत्वात्। न चेश्वरः सु(स्व)कृतेन शास्त्रेण तत्त्वमवगच्छति वेदानित्यत्वान्योन्याश्रयादिप्रसङ्गात्। न चानादीनेव वेदान्स्मृत्वा तैरर्थमधिजगाम, स्मृत्यादिहेतोः पूर्वोपलम्भस्याप्युपदेष्टृभावादिदुःस्थत्वादित्यादिदोषानभिप्रेत्योक्तम्—पूर्वमज्ञस्येत्यादि। ईश्वरस्य पूर्वमज्ञत्वे शास्त्राधीनज्ञानत्वे तदुपदेष्ट्रन्तरसद्भावे भ्रान्त्यनुवृत्त्या(त्तौ)च श्रुतिस्मृतिविरोधमाह—यः सर्वज्ञ इति। स्वरूपतः प्रकाशतश्च सर्वं जानातीति विवक्षया सर्वज्ञसर्वविच्छब्दयोरपुनरुक्तिः। यः सर्वं विन्दति प्राप्नोतीति वा सर्ववित्। एवमुपदेशस्य हेत्वनुपपत्तिरुक्ता। अथ श्रोताऽपि नोपपद्यत इत्याह—किं चेति। इदानींतनेति। न केवलमीश्वरकृतः प्रथम एवोपदे-

श्चाद्वितीयात्मस्वरूपनिश्चये सति अनुवर्तमानेऽपि भेदज्ञाने स्वरूपनिश्चयानुरूपमद्वितीयमात्मानं कस्मा उपदिशतीति वक्तव्यम्। प्रतिबिम्बवत्प्रतीयमानेभ्योऽर्जुनादिभ्य इति चेन्नैतदुपपद्यते। न चानुन्मत्तः कोऽपि मणिकृपाणदर्पणादिपु प्रतीयमानेपु स्वात्मप्रतिबिम्बेपु तेषां स्वात्मनोऽनन्यत्वं

---

शोऽनुपपन्नोऽपि स्वद्यतनकुमतिमठपतिपरम्परायाः शिष्यान्नकुक्षिभरेः शिष्याद्यभावात्प्रायोपवेशनं प्रसज्यत इति भावः। अज्ञातोपदेशपक्षानुपपत्तिमभिप्रेत्याऽऽह—स्वनिश्चयानुरूपमिति। न ह्येतेऽनुपलब्धार्था नापि संदिग्धार्था नापि विप्रलम्भका न च परोक्तानुवादिनो नापि बालोन्मत्तवि(व)द्यथोपनतजल्पका इति भावः। कस्मा इति। स्वस्मै परस्मै वा, पूर्वत्र भिन्नतया निश्चितायान्यथा वा, भिन्नतेत्यत्रापि सत्यतया[ऽन्यथा] वा। परस्मा इत्यपि तात्त्विकाय वाऽतात्त्विकाय वाऽतात्त्विकत्वेऽपि तथा प्रतीतायान्यथा वा, इति विकल्प्य पृष्टे तदुत्तरं वक्तव्यमित्यर्थः। तत्र स्वस्यैव भिन्नस्य सत्यत्वनिश्चयेऽपसिद्धान्ताज्ञत्वादिदोपप्रसङ्गः। असत्यत्वनिश्चये वन्ध्यातनयादिभ्य इवानुपदेशः। अभिन्नतया निश्चिताय स्वस्मै चेदर्जुनादिप्रतिभासमन्तरेण सर्वदोपदेशः स्यात्। न चात्रोपदेशस्य किंचित्प्रयोजनमस्ति। परस्मै तात्त्विकायेति तु शरीरभेदेऽपि भवान्नाभ्युपगच्छति। अतात्त्विकतयैव प्रतीताय परस्मै चेत्पूर्वप(व)देवानिर्वचनीयत्वेनासत्त्वेन वा निश्चितेभ्यः प्रतिबिम्बवन्ध्यासुतादिभ्य उपदेशादिप्रसङ्गः। अतात्त्विकस्यैव परस्य तात्त्विकत्वबोधे तु तत्त्ववेदित्वमेव न स्यादिति तत्त्वोपदेशित्वासिद्धिरिति स्थिते परमार्थत एकत्वेऽपि भ्रान्त्या भिन्नतया प्रतीयमानेभ्यो बाधकज्ञानेन बलेनाभिन्नतया निश्चितेभ्यश्चेति पक्षं शङ्कते—प्रतिबिम्बवदिति। दूपयति—नेति। अनुपपत्तिं विवृणोति—नहीति। अनुन्मत्त इति। ईश्वरादेरुन्माद एव भवता स्वीकृतः स्यादिति भावः। नो (कोऽ) पीति। किमुतेश्वर इति भावः। अनन्यत्वं जानन्निति। अन्यत्वं जानन्तो बालादयः काममुपदिशेयुः। अत्रोपदेष्टुरन्य-

जानंस्तेभ्यः कमप्यर्थमुपदिशति । बाधितानुवृत्तिरपि तैर्न शक्यते वक्तुम् । बाधकेनाद्वितीयात्मज्ञानेनाऽऽत्मव्यतिरिक्तभेदज्ञानकारणस्याप्यज्ञानादेर्विनष्टत्वात् । द्वि*चन्द्रज्ञानादौ तु चन्द्रैकत्वज्ञानेन पारमार्थिक-

---

त्वाद्यध्यवसाये भ्रान्तत्वादिप्रसङ्ग इति भावः । कमपीति । लौकिकमलौकिकं वा दृष्टार्थमदृष्टार्थं वा, किं पुनर्मोक्षार्थमित्यर्थः । बाधितानुवृत्तिस्वरूपमभ्युपगम्य पूर्वं दूषणान्तरमुक्तम् । इदानीं त्वन्मते तदेव न सिध्यतीत्याह—बाधितेति । उपपादयति—बाधकेनेति । नहि कारणाभावे कार्यं घटते । न च दोषनिवृत्तौ भ्रान्तिनिवृत्तिर्न स्यादिति वक्तुं युक्तम् । अनादेते(रि)ति । स्वरूपतः प्रवाहतो वाऽनादेर्निवृत्ततयैतावन्तं कालमनुवृत्तस्य भेदज्ञानकारणभूतस्य दोषस्य यद्यद्वैतज्ञानेनापि नाशो न स्यात्, नित्यं संसारित्वं ब्रह्मणः स्यादिति भावः । अत्राज्ञानादेरिति क्वचित्पाठः । तत्राऽऽदिशब्देन भेदभ्रमस्तद्विषयश्च गृह्यते । परैरुदाहृते दृष्टान्ते बाधितानुवृत्तेरुपपत्तिमाह—द्विचन्द्रेति । पारमा-

---

* अङ्गुल्या नेत्रनिपीडने कृते सति तिमिराख्यनयनरोगोदये च सति वा चन्द्रद्वयं दृश्यत इति हि लोके प्रसिद्धम् । तदित्थमुपपद्यते—व्यापकाभावे व्याप्याभाव इति न्यायेन कार्योत्पत्तिः कारणसमग्रीं प्रतीक्षत इति निर्विवादम् । द्विचन्द्रग्रहणे च नायनतेजोगतिः सामग्री । सा च द्विप्रकारा । एका स्वभावत ऋजुः । अपरा त्वङ्गुलीनिपीडनादिनिबन्धना वक्रभूता । तत्र प्रथमा सामग्री स्वीयप्रदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपप्रदेशग्रहणपूर्वकं चन्द्रं स्वीयप्रदेशवियुक्तं गृह्णाति । चन्द्रोपकण्ठप्रदेशे चन्द्राभावेऽपि चन्द्राधिकरणप्रदेशतत्समीपप्रदेशयोरन्तरालाग्रहणेन द्वितीयसामग्र्या चन्द्रस्य स्वाधिकरणप्रदेशस्थत्वेनाग्रहणाच्च तथा प्रतीतिः । ततश्च ग्रहणसाधनभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिरिति ध्येयम् । तथा च द्विचन्द्रज्ञानवतः पुंसो मातापितृसहस्रेभ्योऽप्यधिकेनाऽऽप्तेन प्रयुक्तादेकश्चन्द्र इति वाक्याज्जायमानेनैकचन्द्रज्ञानेनेन्दुद्वयज्ञानबाधेऽपि द्विविधज्ञानहेतोरङ्गुल्यवष्टम्भादेरविनाशात्तत्र बाधितस्य द्विचन्द्रज्ञानस्यानुवृत्तिरनुवर्तनं युज्यते कारणानाशात्कार्यानाशादित्यर्थः । प्रकृते तु अद्वितीयात्मज्ञानेनापारमार्थिकब्रह्मव्यतिरिक्तभेदज्ञानहेतोरप्यज्ञानादेर्विनाशान्न कथंचिदपि बाधितस्य भेदज्ञानस्यानुवृत्तिः संभवतीत्यर्थः ।

तिमिरादिदोषस्य द्विचन्द्रज्ञानहेतोरविनष्टत्वाद्बाधितानुवृत्तिर्युक्ता। अनुवर्तमानमपि प्रबलप्रमाणबाधितत्वेनाकिंचित्करम् । इह तु भेदज्ञानस्य सविषयस्य सकारणस्यापारमार्थिकत्वेनावस्तुतयाऽऽत्मज्ञानविनष्टत्वान्न कथंचिदपि बाधितानुवृत्तिः संभवति । अतः सर्वेश्वरस्येदानींतनगुरुपर-

---

र्थिकेति। नहि पारमार्थिकं बाध्येत । तथा सति बाधाबाधविप्लवप्रसङ्ग इति भावः। द्विचन्द्रज्ञानहेतोरिति। नहि बाधकज्ञानेन पूर्वज्ञानस्य कारणं बाध्यते । इन्द्रियादेरपि बाधप्रसङ्गात्। अतो विषय एवाऽऽरोपिततदधिष्ठानविषयेग विरुद्धाकारग्राहिणा ज्ञानेन बाध्यः। न चात्र तिमिरादिद्विचन्द्रज्ञानस्य चन्द्रैकत्वज्ञानस्य वा विषयः। भवतस्तु समस्तभेदभ्रमोपादानस्य ज्ञानवासनादेः साक्षिचैतन्यविषयत्वाद्बाधकज्ञानस्य चाद्वितीयात्मव्यतिरिक्तसमस्ताभावगोचरत्वात्कारणस्याप्यज्ञानादेर्बाध एवेति भावः। युक्तेति। सामग्र्यनुवृत्तौ कार्यानुवृत्तिरुपपन्नेति भावः। यदि भ्रान्तिरनुवृत्ता कथं तर्हि तत्कार्यविस्मयभयादिनिवृत्तिरित्यत्राऽऽह—अनुवर्तमानमपीति । प्रबलशब्देन परपक्षे भेदभ्रमतद्बाधकयोरविशेषः सूचितः। द्वयोरपि ह्यज्ञानकारणत्वं तैराश्रितमन्यथा सत्यद्वयप्रसङ्गात्। तथा च सति किं कस्य बाधकं बाध्यं वा। न च दोषमूलत्वं बाधकज्ञानस्य ज्ञातमिति वाच्यम्। प्रथममेव श्रवणवेलायां ब्रह्मव्यतिरिक्तसमस्तमिथ्यात्वप्रत्ययात्। न चाज्ञातमिति तावता तत्त्वसिद्धिः। सत्यरजतबाधकेन शुक्तिकाज्ञानेनाज्ञातदोषेगापि तत्त्वतो रजतस्वरूपबाधाभावाद्दोषमूलत्वाविशेषेऽपि पूर्वपरत्वादिभ्यां बाध्यबाधकव्यवस्थेति चेन्न। दोषमूलत्वे ज्ञाते सति परस्याकिंचित्करत्वात्। भ्रान्ततयाऽवगतेनोक्तसर्पबाधकवाक्यवत् । अन्यथा शून्यमेव तत्त्वमिति माध्यमिकवाक्येन दोषमूलतया ज्ञातेनापि परत्वमात्रेण सदिचिन्मात्रस्यापि बाधः स्यात् । अथ कारणस्यापि बाध्यतया विषयत्वापारमार्थिकत्वलक्षणं दृष्टान्ताद्वैषम्यं विवृण्वन्बाधितानुवृत्त्यसंभवं निगमयति—इह त्विति। न कथंचिदप्यनाद्यज्ञानेन वा भेदज्ञानवासनादिभिर्वेत्यर्थः। ज्ञातमज्ञातं वेति विकल्पाभिप्राये-

---

१ ख. ग. घ. °त्वेन वस्तुतयाऽऽत्मज्ञा°।

म्परायाश्च तत्त्वज्ञानमस्तीतिचेद्भेददर्शनतत्कार्योपदेशाद्यसंभवः। भेददर्शनमस्तीतिचेदज्ञानस्य तद्धेतोः स्थितत्वेना॰ज्ञत्वादेव सुतरामुपदेशो न संभवति। किंच गुरोरद्वितीयात्मज्ञानादेव ब्रह्मात्मज्ञानस्य सकार्यस्य विनष्टत्वाच्छिष्यं प्रत्युपदेशो निष्प्रयोजनः। गुरुस्तज्ज्ञानं च कल्पितमिति

णोपक्रान्तामुपदेशकारणाद्यनुपपत्तिं विकल्पस्फुरणेनोपसंहरति—अत इति। सुतरामिति जानतस्तु बाधितानुवृत्तौ दृष्टान्तमात्रमपि वा(ता)वदस्ति। अज्ञस्योपदेशे सोऽपि नास्तीति भावः। उपदेशस्य कारणाद्यनुपपत्तिरुक्ताऽथाऽऽनर्थक्यमाह—किंचेति। तत्र प्रतिबिम्बवत्प्रतीयमानेभ्य इत्यादिना पूर्वमेव जीवाज्ञानपक्षस्यापि दूषितत्वाद्ब्रह्मज्ञानपक्षेऽधिकदूषणमिदमुच्यते। ते खल्वेकमेव ब्रह्म विद्याशबलमेक एव जीवः स्वप्नदृश इवैकस्यैव तस्य भ्रमात्स्वप्नदृष्टपुरुषादय इवान्ये वा जीवाः प्रतिभान्ति। तस्यैकस्यैवानिश्चितदेहविशेषस्थितेरनिर्णीतकालेन भविष्यता तत्त्वज्ञानजागरेण समस्तप्रपञ्चोऽपि स्वप्नप्रपञ्चवद्बाध्यत इति वर्णयन्ति। तत्रायमुपदेष्टा वासुदेवादिर्गुरुः स एव तद्दृष्टो वा शिष्योऽप्यर्जुनादिः स एव तद्दृष्टो वेति विकल्पमभिप्रेत्य गुरुः स एवेति पक्षे दूषणम्—गुरोरिति। सकार्यस्येति। शिष्याचार्यत्वादेरपीति भावः। तेनोपदेष्टृभावः प्रष्टृभाव उपदेशपरिकराभावश्चोक्तो भवति। गुरोस्तद्दृष्टत्वपक्षमनुवदति—गुरुरिति। नहि स्वप्नदृशा कल्पितपुरुषविज्ञानेन स्वप्नो बाध्यते तद्वदत्रापि गुरोर्ज्ञानेन प्रपञ्चबाधाभावात्तद्बाधायोपदेशः सप्रयोजन इति भावः। दूषयति—शिष्येति। अयं भावः—तावत्तत्रार्जुनादिः स एव जीव इति तृतीयकल्पे प्रमाणमुपलभामहे। न चायं मम शिष्यो जीवो मुक्तो भविष्यति अहं त्वनेन स्वप्नदृशेव कल्पित इत्याचार्योऽपि मन्यते। तथा सति स्वसंसारकारिणे तस्मै नोपदिशेत्। स्वयं हि स्वप्नस्वभावनियमेनैव निवृत्तं स्यादिति न मोक्षोपायमाचरेत्। शिष्योऽपि स्वप्नदृष्टवद्गुरुं मन्यते ततो न शृणुयात्। गुरुतज्ज्ञानविशेषयोः स्वभ्रान्तिकल्पिततया स्वयमेव तज्ज्ञानविषयविशेषं जानंस्ततः किमर्थं

१ घ. ङ. च. °नाज्ञानत्वा°।

सेच्छिष्यतज्ज्ञानयोरपि कल्पितत्वात्तदप्यनिवर्तकम् । कल्पितत्वेऽपि पूर्वविरोधित्वेन निवर्तकमितिचेत्तदाचार्यज्ञानेऽपि समानमिति तदेव निवर्तकं भवत्वित्युपदेशानर्थक्यमेवेति कृतमसमीचीनवादैर्निरस्तैः ॥ १२ ॥

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

एकस्मिन्देहे वर्तमानस्य देहिनः कौमारावस्थां विहाय यौवनाद्यव

---

शृणोति। स्वकल्पितोपदेष्टृ[प]जनितोपदेशभ्रमात्स्वभ्रान्तिनिवृत्तिरिति च(?)हास्यन्तमन्तरेणापि स्वप्रत्यक्षभ्रमादपि निवृत्त्युपपत्तेः।न च ज्ञानार्थेऽर्जुने यथावद्भ्रमनिवृत्तिर्दृश्यते । अतः शिष्योऽप्याचार(र्य)वत्समस्तप्रपञ्चस्वप्नदशाऽन्येनैव दृष्ट इति चतुर्थः कल्पः परिशिष्यते। ततश्च शुकवामदेवादिज्ञानवदर्जुनादिज्ञानमपि नाज्ञानादिनिवर्तकमिति।निष्फलः शिष्याचार्याणां कृष्णार्जुनादीनां त्रिवर्गपरित्यागेनापवर्गार्थप्रयास इति शास्त्रारम्भोऽनुपपन्नः । अथ परिहासकाकुपूर्वमपच्छेदनयमाशङ्क्य परिहरति—कल्पितत्वेऽपीत्यादिना । एवमुपदेशानुपपत्तौ तस्य सर्वद्रष्टुरेकस्यापि जीवस्य कदाचिदपि मोक्षायोगाच्छास्त्रप्रयोजनमपि नास्तीति ततोऽपि शास्त्रारम्भानुपपत्तिरिति फलितम् । एवं शास्त्रोपदेशस्य तदुपदेष्टुस्तच्छ्रोतुस्तत्प्रयोजनस्य चानुपपत्तौ सामान्यतः सर्वस्मिन्नपि परमते दूषिते किमवान्तरदूषणैरित्यन्यपरतयोपसंहरति—इति कृतमिति । कृतमलमित्यर्थः । असमीचीनवादैरित्यनेन भास्करादिमतेऽप्येवंविधदूषणशतं शारीरकभाष्याद्युक्तं स्मारितम् ॥ १२ ॥

आत्मनामशोचनीयत्वाय नित्यत्वमुक्तम् । तत्राऽऽत्मनित्यत्वे जन्ममरणादिप्रतीतिव्यवहारौ कथमिति शङ्कां दृष्टान्तेन परिहरति—देहिन इति । अस्मिन्निति निर्देशाभिप्रेतमाह—एकस्मिन्निति । देहस्यावस्थात्रयान्वयनिदर्शनादपि देहिन्येव तन्निदर्शनमुचितमित्यभिप्रायेणाऽऽह—देहे वर्तमानस्येति । कौमारं यौवनं जरेति । क्रमनिर्देशसूचितार्थस्वभावफलितमुक्तम्—विहायेति । कौमारयौवनत्यागविशेषयोरपि शोकविशेषनिमित्तत्वात्तद्व्यवच्छेदार्थं यथाशब्दतात्पर्यव्यक्त्यर्थं चोक्तमात्मन इत्यादि । बाल्या-

स्थायामात्मनः स्थिरत्वबुद्ध्या यथाऽऽत्मा नष्ट इति न शोचति देहाद्देहान्तरप्राप्तावपि तथैव स्थिर आत्मेति बुद्धिमान्न शोचति। अत आत्मनां नित्यत्वादात्मानो न शोकस्थानम्। एतावदत्र वक्तव्यम्। आत्मनां नित्यानामेवानादिकर्मवश्यतया तत्तत्कर्मोचितदेहसंसृष्टानां तैरेव देहैर्बन्धनिवृत्तये शास्त्रीयं स्ववर्णोचितं युद्धादिकमनभिसंहितफलं कर्म कुर्वतामिन्द्रियैरवर्जनीया इन्द्रियार्थस्पर्शाः शीतोष्णादिप्रयुक्तसुखदुःखाय भवन्ति। ते तु यावच्छास्त्रीयकर्मसमाप्ति क्षन्तव्या इतीममर्थमनन्तरमेवाऽऽह ॥ १२ ॥

---

वस्थानिवृत्तावपि आत्मनः स्थिरत्वबुद्धिर्हि तद्विनाशनिमित्तशोकाभावे हेतुः सोऽत्रापि समान इति देहान्तरप्राप्तिरित्यत्रान्तरशब्दसूचितं पूर्वदेहत्यागाख्यं शोकप्रसक्तं दर्शयति—देहादिति। धीरशब्दस्य प्रकरणविशेषतोऽर्थः स्थिर आत्मेति बुद्धिमानिति। अशोच्यानित्यादिना प्रागुक्तेन संगमयति—अत इति। एवं श्लोकद्वयेन क्रमात्प्राप्यं निवर्त्यं च व्यञ्जितम्। अथात्र हृद्गतं प्रापकविषयोत्तरश्लोकद्वयफलितं संकलय्य संगतिमाह—एतावदिति। बन्धनिवृत्तय इत्यन्तोऽमृतत्वायेत्यस्यार्थः। शुद्धस्वभावानां संसारानुपपत्तिपरिहारायोक्तमनादीति। कर्मवश्यतया न त्वनिर्वचनीयाज्ञानादिवश्यतयेति भावः। स्वतोऽत्यन्तसमानानामात्मनां देहभोगादिवैषम्यसिद्ध्यर्थमुक्तम्—तत्तत्कर्मेति। देहैर्बन्धनिवृत्तय इति। देहैर्यो बन्धस्तस्य निवृत्तय इत्यर्थः। यद्वा—देहैः कर्म कुर्वतामित्यन्वयः। तदा तु बन्धका एव देहा मोक्षसाधनौपयिकाः संभवन्तीति अवधारणाभिप्रायः। शास्त्रीयमिति। अन्यथेश्वरशासनातिलङ्घनाद्दण्ड एव स्यादिति भावः। स्ववर्णोचितमिति। न तु त्वया युद्धादिकं परित्यज्य भैक्षं चरितुं श्रेय इति भावः। अमृतत्वहेतुत्वायोक्तम्—अनभिसंहितेति। प्रतिकूलस्वभावस्य कथं कर्तव्यत्वमितिशङ्कानिवर्तकतुशब्दद्योतितमवर्जनीयत्वं तितिक्षितव्यत्वे हेतुः। इत्येतावदत्र वक्तव्यमित्यन्वयः। आत्मनित्यत्वप्रकरणपर्यवसाने वक्तव्योऽप्ययमर्थस्तात्पर्यातिशयात्सहसोच्यत इत्याह—इममर्थमनन्तरमिति ॥ १२ ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

शब्दस्पर्शरूपरसगन्धाः साश्रयास्तन्मात्रकार्यत्वान्मात्रा इत्युच्यन्ते । श्रोत्रादिभिस्तेषां स्पर्शाः शीतोष्णमृदुपरुषादिरूपसुखदुःखदा भवन्ति । शीतोष्णशब्दः प्रदर्शनार्थः । तान्धैर्येण यावद्युद्धादिशास्त्रीयकर्मसमाप्ति तितिक्षस्व । ते चाऽऽगमापायित्वाद्धैर्यवतां क्षन्तुं योग्याः । अनित्याश्चा-

---

आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि मात्रा इति शंकराद्युक्ताप्रसिद्धयोजनाव्युदासाय मात्राशब्दार्थमाह—शब्देति । साश्रया इति । गुणविशिष्टद्रव्यस्य हि तन्मात्रकार्यत्वादिति तन्मात्राणां मात्राशब्दवाच्यत्वे तावन्नास्ति विवादः । शब्दमात्रा स्पर्शमात्रेत्यादिप्रयोगाश्च सन्ति । ततश्च तत्कार्यद्रव्यस्यापि तदेकद्रव्यत्वात्तच्छब्दगोचरत्वमुपपन्नमिति भावः । कर्मव्युत्पत्तेरपि भावव्युत्पत्तेः प्रसिद्धिप्रकर्षं विषयसंबन्धस्यैव साक्षात्सुखादिहेतुत्वं मत्वा स्पर्शस्य प्रतिसंबन्ध्यन्तरं निर्दिशन्समासार्थमप्याह—श्रोत्रादिभिस्तेषां स्पर्शा इति । शीतोष्णशब्दयोरुपलक्षणत्वं समासार्थं चाऽऽह—शीतोष्णमृदुपरुषादिरूपेति । एवं हेतुफलभावं विहाय शीतोष्णदाः सुखदुःखदा इति योजनायां पृथग्व्यपदेशवैयर्थ्यमिति भावः । संग्रामे शीतोष्णयोरप्रसक्तत्वात्किमर्थमिदमुच्यत इत्यत्राऽऽह—शीतोष्णशब्दः प्रदर्शनार्थ इति । शस्त्रपातादेरिति शेषः । शीतोष्णादिकं तु तेषु तेषु वर्णाश्रमधर्मेषु यथासंभवं ग्राह्यम् । धीरमिति वक्ष्यमाणं धीरस्तत्रेति पूर्वोक्तं चाऽऽकृष्याऽऽह—तान्धैर्येणेति । यद्वा—अत्रैव कौन्तेयभारतशब्दाभ्यां क्षत्रियायामुत्पन्नस्य विशिष्टक्षत्रियसांतानिकस्य ते धैर्यमेवोचितमिति सूचितम् । यथा तपश्चर्यायां यागादौ च वातातपक्षुत्पिपासापश्वालम्भादयो यावत्तत्कर्मसमाप्ति क्षन्तव्यास्तथाऽत्रापि शस्त्रपातशत्रुवधादयः । तस्मादवर्जनीयेन्द्रियार्थस्पर्शनिमित्तदुःखानां शोकेन

नित्यत्वं च बन्धहेतुपापनाशे सति, आगमापायित्वेनापि निवर्तन्त इत्यर्थः ॥ १४ ॥

तत्क्षमा किमर्थेत्यत आह—

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

यं पुरुषं धैर्यादियुक्तमवर्जनीयदुःखं सुखवन्मन्यमानममृतत्वसाधनतया स्ववर्णोचितं युद्धादिकमनभिसंहितफलं कुर्वाणं तदन्तर्गतशस्त्रपातादिमृदुक्रूरस्पर्शा न व्यथयन्ति स एवामृतत्वं साधयति न त्वादृशो

---

दुष्परिहारत्वान्निरर्थके शोके तितिक्षैव युक्तेति भावः । अत्र सुखांशस्य क्षमा नामोपेक्षयाऽनुत्सेकः। तत्रापि हेतुरागमापायित्वमेव । अनित्यशब्दस्यापौनरुक्त्यायाऽऽह—बन्धेति । अनित्यशब्दोऽत्र प्रवाहनित्यतानिषेधकः। नित्या इति पदच्छेदेन नित्यानुबन्धितया तितिक्षितव्यत्वद्योतनं तु मन्दम् । मुक्तौ तदभावाच्च । प्रवाहतोऽपि नित्यत्वं नास्तीति भावः ॥ १४ ॥

तत्क्षमा किमर्थेति । किं दृष्टार्थत्वादुतादृष्टार्थत्वादुत स्वरसवाहित्वेनावर्जनीयत्वात् । न प्रथमः—दुःखरूपतयोपलम्भात् । न द्वितीयः—गुरुवधकुलक्षयादिरूपाधर्मबहुलत्वात् । न तृतीयः—युद्धान्निवृत्त्यैव शस्त्रपाताद्यभावादिति भावः । तितिक्षार्हत्वद्योतनाय धीरमिति पदम् । सुखदुःखवैषम्याज्ञत्वभ्रमं तयोः समपरिमाणत्वादिभ्रमं च व्युदस्यन्किमर्थेति शङ्कां च प्रतिवदति—अवर्जनीयदुःखं सुखवन्मन्यमानमिति । यथा ह्यारोग्यकाम औषधादिक्लेशं सुखसाधनत्वात्सुखवन्मत्वा प्रवर्तते यथा चार्थार्थी समुद्रतरणादिक्लेशं तथा तापत्रयनिवृत्तिं निरतिशयानन्दं च लिप्सुस्तदुपायनान्तरीयकदुःखं सुखवदेव मन्येतेति भावः । तस्करादिष्वपि संभावितस्य द्वंद्वतितिक्षामात्रस्य मोक्षहेतुत्वव्युदासायोक्तम्—अमृतत्वसाधनतयेत्यादि । एत इत्यस्य तात्पर्यार्थमवर्जनीयत्वं च दर्शयितुमुक्तम्—तदन्तर्गता इति । व्यथयन्ति प्राप्तव्यत्वधिया परितापेन चालयन्तीत्यर्थः । न तु पीडयन्तीति । मृदुक्रूरस्पर्शा

---

१ क. ख. ग. तत्क्षान्तिः कि° ।

दुःखासहिष्णुरित्यर्थः । अत आत्मनां नित्यत्वादे[1]तावत्कर्तव्यमित्यर्थः ॥१५॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

यत्त्वात्मनां नित्यत्वं देहानां स्वाभाविकं नाशित्वं[2] शोकानिमित्तमुक्तम् । 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' इति तदुपपादयितुमारभते--नासत इति । असतो देहस्य सद्भावो न विद्यते । सतश्चाऽऽत्मनो नासद्भावः । उभयोर्देहात्मनोरुपलभ्यमानयोर्यथोपलब्धि

इति मृदुस्पर्शस्याप्युपादानात् । तच्छब्दरूपपरोक्षनिर्देशेन पुरुषर्षभेति विपरीतकाक्वा च फलितमाह—स एवेति । त्वादृशः—अस्थानस्नेहाद्याकुलः । अनन्तरश्लोकार्थप्रसङ्गायाऽऽत्मनाशप्रतीकारनैरपेक्ष्याय च निगमयति—आत्मनां नित्यत्वादिति । एतावदिति । तितिक्षामात्रं न तु शोकादि । अत्रेति । आगमापायिनां तत्त्वज्ञानेन निवर्तिष्यमाणसंतानानाममृतत्वलक्षणपरमपुरुषार्थोपायानुष्ठानेऽवर्जनीयसंनिधीनां शस्त्रपातादिदुःखानामागताविन्यर्थः । कर्तव्यमिति । अकरणे त्वपवर्गरूपफलाभावः स्वधर्मपरित्यागेन प्रत्यवायो धैर्याद्यभावनिमित्ताकीर्त्यादिप्रसङ्गश्च स्यादिति भावः ॥ १५ ॥

नासत इति श्लोकं व्यवहितप्रकृतस्थापनोपक्रमतयाऽवतारयति—यत्त्विति । स्वाभाविकपरिणामि स्वभावस्यावश्यंभावि न तु हेतुनिरपेक्षम् । शोकानिमित्तं शोकनिमित्तविरोधि शोकाभावनिमित्तमित्यर्थः । इतः पूर्वं स्वभावकथनमात्रत्वादुपपादयितुमित्युक्तम् । अस्यापि श्लोकस्योपपादनार्थं प्रतिज्ञामात्ररूपत्वादारभत इत्युक्तम् । सदसद्भावाभावादिशब्दानां प्रकरणोचितमर्थविशेषं विवृण्वन्व्या[ ख्या ]ति—असत इति । असतः सतश्चेति व्याख्येयम् । तस्य प्रकरणादिविशेषितार्थप्रतिपादनम्—देहस्याऽऽत्मन इति । अनयोरितिनिर्देशफलितमुक्तम्—उपलभ्यमानयोरिति । तत्त्वदर्शनस्य तुशब्दद्योतितामुपलम्भानतिवृत्तिमभिप्रेत्याऽऽह—यथोपलब्धि तत्त्वदर्शिभिरिति । एतेन तद्ब्रह्म तद्भाव-

१ ख. ग. घ. ° देव तत्क° । २ क. ख. ग. °शित्वमशोकानि° ।

तत्त्वदर्शिभिरन्तो दृष्टः । निर्णयान्तत्वान्निरूपणस्य निर्णय इहान्तशब्दे-नोच्यते । देहस्यासद्वस्तुनोऽसत्त्वमेव स्वरूपम् । आत्मनश्चेतनस्य सत्त्व-मेव स्वरूपमिति निर्णयो दृष्ट इत्यर्थः । विनाशस्वभावो ह्यसत्त्वम् । अविनाशस्वभावः सत्त्वम् । यथोक्तं भगवता पराशरेण–

तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
ज्ञानं यथा सत्यमसत्यमन्यत्० ।
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ।

स्तत्त्वमिति शंकरोक्तमुपहसितुं सच्छब्दनिर्दिष्टस्य नित्यस्य विनाशायोगादन्तशब्दस्य निर्णयार्थत्वं तत्र शब्दवृत्तिप्रकारमिह देहात्मविवेकप्रकरणे तत्त्वदर्शिभिरित्यादिसंनिधौ च तस्यैवौचित्यं चाऽऽह—निर्णयान्तत्वादिति । ननु देहस्य सद्भावो न विद्यत इत्ययुक्तम् । प्रत्यक्षादिविरोधात् । आत्मनोऽसद्भावो न विद्यत इति चायुक्तम् । असदेवेदमग्र आसीदित्यादिसकलनिषेधदशायां तस्याप्यसच्छब्दवाच्यत्वात् । अवस्थाविशेषापेक्षयाऽपि सत्त्व-मसत्त्वं च देहात्मनोर्द्वयोरपि समानमतो भाष्यान्तरवत्सत्कार्यवादा-दिविषयतयाऽयं श्लोको व्याख्येय इत्याह–देहस्येति । अचिद्वस्तु-नश्चेतनस्येति पदाभ्यां सत्त्वासत्त्वयोः स्वभावत्वे हेतुः । चिदचिद्वि-षयतया सदसच्छब्दयोः प्रयोगश्च सूचितः । नन्वेवमपि देहात्मनोः सदसत्त्वचोद्यं न परिहृतमित्यत्राऽऽह–विनाशेति । हिशब्देन प्रयोग-प्रसिद्धिर्दर्शिता तामेव दर्शयति–यथोक्तमिति । दशश्लोक्यां वस्त्व-वस्त्वस्तिनास्तिसत्यासत्यशब्दानां शारीरकभाष्ये पुराणोपक्रमो-पसंहारादीनां मध्ये महीघटत्वमित्यादिना च सविकारत्वेनैवाव-स्तुत्वोपपादनाच्छ्रुतिस्मृत्यन्तरप्रत्यक्षाद्यनुरोधाच्च निर्विकारसवि-कारतया नित्यानित्यचेतनाचेतनविषयत्वं स्थापितम् । व्यवहारार्ह-त्वादिविषयौ सदसच्छब्दौ तयोः परमार्थापरमार्थविषयसत्यास-त्यशब्दाभ्यां कथमैकार्थ्यमिति शङ्कायां नाशानाशयोरेव परमार्था-परमार्थादिशब्दप्रयोगहेतुत्वे महर्षिवचनमुपादत्ते—अनाशीति । विनाशोपलक्षितपरिणामवृद्ध्यादिभिः पूर्वावस्थाप्रहाणेन संज्ञान्तर-योगादेवावस्तुशब्दवाच्यत्वं तदभावाच्च वस्तुशब्दवाच्यत्वमित्य-

१ ग. °स्याचिद्°

यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसंभूतं तद्वस्तु नृप तच्च किम् ॥ इति ।

अत्रापि ' अन्तवन्त इमे देहाः ' ' अविनाशि तु तद्विद्धि ' इति ह्युच्यते । तदेव सत्त्वासत्त्वव्यपदेशहेतुरिति गम्यते । अत्र सत्कार्यवादस्यासंगतत्वान्न तत्परोऽयं श्लोकः । देहात्मस्वभावाज्ञानमोहितस्य तन्मोहशान्तये ह्युभयोर्नाशित्वानाशित्वरूपस्वभावविवेक एव वक्तव्यः । स एव ' गतासूनगतासूंश्च नानुशोचन्ति ' इति प्रस्तुतः । स एव ' अविनाशि तु तद्विद्धि ' ' अन्तवन्त इमे देहाः ' इत्यनन्तरमुपपाद्यते । अतो

---

स्मिन्नर्थे स्पष्टोक्तिं दर्शयति—यत्त्विति । अत्रोत्तरश्लोकद्वयैकार्थ्यान्न्यायमेवार्थ इत्याह—अत्रापीति । एके(ते)न कचिच्चेतनविषयतयाऽसच्छब्दोऽपि देवादिनामरूपप्रहाणाद्यवस्थाविशेषापेक्षयेत्युक्तं भवति । स्वरूपतस्तु निर्विकारत्वात्सच्छब्दवाच्यत्वमेव । श्लोकयोर्व्युत्क्रमेणोपादानं नासत इति क्रमापेक्षया । ततः किमित्यत्राऽऽह—तदेवेति । प्रतिज्ञातस्यार्थस्य हेतुर्ह्यनन्तरं वाच्यं तद्धेतुत्वं चात्र स्वरसतोऽवगम्यमानं परित्यज्यार्थान्तरपरत्वेन व्याख्यातुं न युक्तमिति भावः । कुदृष्टिकल्पितव्याख्यां दूषयति—अत्रेति । नह्यत्र वैशेषिकादिनिरासः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनं सांख्यसिद्धान्तोपन्यासादिर्वा प्रक्रियते । न च सत्कार्यवादेन देहात्मविवेकोपपादनं शोकशान्तिर्वा सिध्येत् । सर्वस्य नित्यत्वाच्चेतनानामपि नित्यत्ववर्णनमसिद्धस्यात्यन्तासिद्धेन साधनमिति भावः । उक्तार्थपरत्वे महाप्रकरणसंगतिमाह—देहेति । यदज्ञानान्मोहस्तस्यैव हि ज्ञापनं तन्निवृत्तये स्यादिति भावः । अत्र तन्मोहशान्तय इति द्वितीयाध्यायार्थसंग्रहश्लोकः सूचितः । सत्कार्यवादे पूर्वोत्तरविरोधमभिप्रयन्स्वोक्तस्यावान्तरप्रकरणसंगतिमप्याह—स एवेति वाक्यद्वयेन । अनन्तरमिति । नहि मात्रयाप्य(ऽप्य)न्यव्यवधानमस्तीति भावः । प्रस्तुत उपपाद्यत इति शब्दाभ्यामपौनरुक्त्यं दर्शितम् । उपसंहरति—अत इति । यथोक्त एवेत्यवधारणेनान्येषामपि व्याख्यातॄणामसत्प्रतिभासा निवर्त्यन्ते । यत्रो( चो )क्तं यज्ञस्वामिना—असच्छब्देनाशुभं

यथोक्त एवार्थः ॥ १६ ॥

आत्मनस्त्वविनाशित्वं कथमुपपद्यत इत्यत्राऽऽह—

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

---

रजस्तमस्तत्कार्यदुःखादिकं गृह्यते । सच्छब्देन तु सत्त्वतत्कार्यसुखादिकं भावाभावशब्दाभ्यां चाभ्युदयानभ्युदयपर्यायभूत्यभूत्युभयोरपि दृष्टोऽन्त इति राशिद्वयस्य नश्वरत्वमुच्यते । ततश्च पूर्वोक्तद्वंद्वतितिक्षाहेतुभूतदुःखात्मकत्वनश्वरत्वयोरेव प्रपञ्चनं कृतं भवतीति । तदयुक्तम्—रजस्तमःप्रभृतीनामसदादिशब्दैरुपादाने प्रकरणाद्ययोगात् । एतदभिप्रायेण च स एव प्रस्तुत इत्युक्तम् । ननु मात्रास्पर्शास्त्विति श्लोके मात्राशब्देन सत्त्वादिगुणा उच्यन्ते । तथाच कपिलासुरीये गुणाः, गुणा मात्रा गुणा लक्षणं गुणा अवयवः सत्त्वं रजस्तम इति त्रिगुणा इत्युच्यन्ते । सत्त्वादीनां गुणाश्च तेषां मात्रा अपदिश्यन्ते । तत्र तत्त्वदर्शनताभयनाशस्वभावतामसन्नेन्द्रियतासुखस्वप्नबोधनतेति सत्त्वमात्रा इत्यादावुपकरणेषु च मात्राशब्दः प्रयुज्यते—लघुमात्रः परिव्रजेदित्यादिषु । मात्राशब्देन शब्दादिविषयग्रहणे तु शीतोष्णशब्दपौनरुक्त्यं च स्यादिति । तदप्यसत् । मात्राशब्दस्य सत्त्वादिषु मुख्यप्रयो[ गा ]भावादन्यत्रापि प्रसिद्ध्यभावादत्राप्रसिद्धार्थस्वीकारहेत्वभावाच्च । शीतोष्णशब्दपौनरुक्त्यं तु सामान्यविशेषरूपत्वात्प्रदर्शनार्थत्वाच्च परिहृतम् । अस्तु तर्हि प्रस्तुतयोः सुखदुःखयोरेव सदसच्छब्दाभ्यां ग्रहणम् । मैवम् । तयोरेवाभ्युदयानभ्युदयरूपत्वविवक्षायां तद्धेतुतया व्यतिरेकनिर्देशायोगात् । सुखदुःखयोर्दुःखसुखकारणत्वनिषेधश्च लोकवेदविरुद्धः । सुखादनैश्वर्यानिवृत्त्यादिकथनं च प्रस्तुतानुपयुक्तम् । एवं योजनान्तरेष्वपि दूषणमूह्यम् । अतो महाप्रकरणपूर्वापरादिसंगतेर्यथोक्त एवार्थः ॥ १६ ॥

अथ प्राप्यविशेषणतया तदनुप्रवेशात्पुरुषार्थभूतस्य सहसैव शोकनिवृत्तिहेतोरात्मनित्यत्वस्य नासत इति श्लोके चरमप्रतिज्ञा तस्यापि बुद्धिस्थक्रमेण प्रथममुपादानं क्रियत इत्यभिप्रायेणाऽऽह—आत्मनस्त्विति । तुशब्देन जननमरणादेः सर्वलोकसाक्षिकत्वादे-

तदात्मतत्त्वमविनाशीति विद्धि। येनाऽऽत्मतत्त्वेन चेतनेन तद्व्यतिरिक्तमिदमचेतनं तत्त्वं सर्वं ततं व्याप्तम्। व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मनो विनाशानर्हस्य तद्व्यतिरिक्तो न कश्चित्पदार्थो विनाशं कर्तुमर्हति तद्व्याप्यतया तस्मात्स्थूलत्वात्। नाशकं हि शस्त्रजलाग्निवाय्वादिकं नाश्यं व्याप्य शिथिलीकरोति मुद्गरादयोऽपि हि वेगवत्संयोगेन

---

तेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यन्तीति देहसमानयोगक्षेमत्वश्रवणाच्च कथमात्मनो देहाद्विशेष इत्यभिप्रेतमेवमपि विशेषोऽस्तीति श्लोकस्थतुशब्दार्थः। तच्छब्दार्थं नपुंसकतात्पर्यं प्रतिज्ञांशं तत्राप्याश्रयसाध्यधर्मयोर्भेदं च व्यनक्ति—तदात्मतत्त्वमिति। न विनंष्टुं शीलमस्येति अविनाशि। हेत्वंशप्रतिपादकद्वितीयपादं व्याकुर्वन् सर्वशब्दस्य वाक्यान्वयौचित्यप्राप्तं संकोचमिदंत्वनिर्देशस्वारस्यसूचितं बाह्यानां परात्त्वं तद्विपर्ययेणाऽऽत्मनः फलितं चेतनत्वं तत एवाचेतने चेतनस्याऽऽत्मत्वेन व्याप्तिं गमयति—येनेति। चेतनसमुदायेनाचेतनसमुदायस्तिलतैलदारुवह्न्यादिवद्यथांशं व्याप्त इत्यर्थः। यद्वा सर्वाचेतनानुप्रवेशयोग्यत्वमिह विवक्षितमित्युभयथाऽपि नाऽऽत्माणुत्वविरोधः। अत्रायं प्रयोगः—आत्मा शस्त्राद्यधीनविनाशो न भवति, तद्व्यापकत्वेन ततः सूक्ष्मत्वात्। यथाऽऽकाशः। व्यतिरेकेण वा यो यदधीनविनाशः स ततः सूक्ष्मो न भवति। यथा वायुविनाश्यो दीप इतीमं प्रयोगं व्यञ्जयन् प्रयोगान्तरपरतयोत्तरार्धं (धं.) व्याचष्टे—व्यापकत्वेनेति। विनाशानर्हस्येति अव्ययशब्दार्थः। तस्य हेतुर्निरतिशयसूक्ष्मत्वादिति। इदं च निरतिशयसूक्ष्मत्वमचेतनापेक्षया। कश्चिदित्यस्येश्वरोऽपीति परस्य व्याख्या स्वदर्शनविरुद्धेत्यभिप्रायेणाऽऽह—तद्व्यतिरिक्तः कश्चित्पदार्थ इति। धर्मिनिर्देशोऽयम्। आत्मनो विनाशं कर्तुं नार्हतीति साध्यार्थः। तत्र हेतुमाह—तद्व्याप्यतया तस्मात्स्थूलत्वादिति। तस्मात्स्थूलत्वादित्येव हेतुस्तस्यासिद्धिपरिहारायोक्तं तद्व्याप्यतयेति। व्याप्तिपूर्वं दृष्टान्तमाह-नाशकमिति। घटादिनाशकमुद्गरादावनैकान्त्यमाशङ्क्य परिहरति—मुद्गरेति। अयमभिप्रायः—न तावन्मुद्गरसंयोगमात्रं घटादिनाशकं मुद्गरो-

वायुमुत्पाद्य तद्द्वारेण नाशयन्ति । अत आत्मतत्त्वमविनाशि ॥ १७ ॥

देहानां तु विनाशित्वमेव स्वभाव इत्याह—

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्मायुध्यस्व भारत ॥ १८ ॥

दिह उपचय इत्युपचयरूपा इमे देहा अन्तवन्तो विनाशस्वभावाः ।

---

परिस्थापितघटस्य नाशप्रसङ्गात् । नापि वेगमात्रमसंयोगे विध्वंसप्रसङ्गात् । नापि तदुभयमात्रं वेगवत्तृणसंयोगेऽपि प्रसङ्गात् । न च वेगवद्द्रव्यविशेषसंयोगो नाशकः । तस्यैव पृष्ठभागसंयोगे नाशादर्शनात् । अतो वेगवत्काठिन्यादिविशिष्टद्रव्यविशेषभागविशेषसंयोगविशेष एव नाशक इत्यपि(वि)वादम् । तदा च वायुविशेषोत्पत्तिरपि प्रायशः प्रत्यक्षसिद्धत्वादविवादा । वायोश्च तत्तद्द्रव्यानुप्रवेशेन नाशकत्वं कठिनतरशब्दाभिघातसंक्षोभ्यमाणपदार्थेष्वभ्युपगतम् । एवं सति क्लृप्तकारणभावस्यात्रापि विद्यमानस्य वायुविशेषस्य नाशहेतुत्वमवश्याभ्युपगमनीयम् । स च वायुर्घटाद्यपेक्षया सूक्ष्मः । यत्र तु वेगाभावेऽप्याक्रमणादिमात्रेण नाशकत्वं तत्र मुद्गरावयवनुन्नघटादिद्रव्यावयवविशेषा भागान्तरं स्म( स्व )स्मात्स्थूलतरमनुप्रविश्य वि(भि)न्दन्ति आक्रममूलान्तरवायुनिःसरणवशाद्वायुपूरितभस्त्रिकाक्रमणादिष्विवेति । अत इति । उक्तहेतुद्वयेन शस्त्रादेरनाशकत्वादात्मनोऽपि सूक्ष्मतरस्य तन्नाशकस्यान्यस्यादर्शनादीश्वरस्यापि तन्नाशसंकल्पाभावादिति भावः ॥ १७ ॥

नासत इतिप्रतिज्ञांशस्योपपादकतयोत्तरश्लोकमवतारयति— देहानामिति । अवधारणेन स्वभावशब्देन चासद्व्यपदेशैकान्त्यं सूचितम् । अन्तवन्त इति । साध्यस्य हेत्वाकाङ्क्षां शमयन् धर्मिप्रतिपादकमेव देहशब्दं निर्वक्ति—दिह उपचय इति । उपचयरूपाः सावयवा इत्यर्थः । देहशब्दो रूढ्या धर्मिप्रतिपादकयोगेन हेतुप्रतिपादनपर इति भावः । साध्यनिर्देशे प्रकृतिप्रत्यययोरर्थमाह—विनाशस्वभावा इति । नात्र निरूपणापेक्षया

उपचयापचयात्मका हि घटादयोऽन्तवन्तो दृष्टाः। नित्यस्य शरीरिणः कर्मफलभोगार्थतया भूतसंघातरूपाः देहाः पुण्याः पुण्येनेत्यादिशास्त्रैरुक्ताः कर्मावसानविनाशिनः। आत्मा त्वविनाशी। कुतः—अप्रमेयत्वात्। न ह्यात्मा प्रमेयतयोपलभ्यते। अपि तु प्रमातृतया। तथा च वक्ष्यते—

'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः'। इति।

---

वा देशाद्यपेक्षया निर्णयपरिमाणादिरन्तो विवक्षितः। मतुप् च नित्ययोगादिविषय इत्यर्थः। व्याप्तिदृष्टान्तावाह—उपचयेति। श्रुति-वद(त्य)र्थापत्तिभ्यामपि शरीरस्य विनाशस्वभावतामुपपादयतीत्याह—नित्यस्येति। नित्यस्य शरीरिण इति पदद्वयसूचिते श्रुत्यर्थापत्ती कथं तेरुक्ता (क्ते) इत्याकाङ्क्षां शमयति—कर्मतयादिना। शरीरिण इतीनिप्रत्ययेन षष्ठ्या च प्रतीतस्य संबन्धस्य कर्माख्यो हेतुः प्रकृतोपयोगाद्दर्शितः। ईश्वरादिशरीराणामकर्माधीनत्वात्तद्व्यवच्छेदार्थमिम इतिनिर्देशसूचितमुक्तम्—भूतसंघातरूपा इति। अनेकभूतसंघातात्मकत्वमपि अनित्यत्वे हेतुः। कर्मावसानविनाशिन इति। शरीरशब्दनिर्वचनफलितम्। विशरणाद्धि शरीरम्। कैश्चिच्छास्त्रैस्तावद्देहानामुत्पत्तिविनाशौ द्वावप्यभिधीयेते। यैश्च कर्माधीनोत्पत्तिमात्रमुक्तं तैरप्यर्थात्कर्मावसाने विनाशोऽप्युक्त एव स्यादिति भावः। एवं चेमे देहाः शरीरिण इति पदत्रयेण सूचितं भूतसंघातरूपत्वसावयवत्वकर्मफलभोगार्थत्वरूपं शरीरानित्यत्वे हेतुत्रयमुक्तम्। अनाशिनोऽप्रमेयस्येति पदद्वयमात्मनित्यत्वाख्यसाध्यसंभावनातद्धेतुपरतया व्याख्याति—आत्मा त्विति। नित्यत्वस्य नाशनानर्हत्वेन स्थिरीकरणान्नित्यत्वानाशिन इत्यनयोरपुनरुक्तिः। स्थूलसूक्ष्मनाशविरहाभिप्रायाद्वा। असिद्धो हेतुरात्मनोऽप्यस्मत्सिद्धान्ते प्रमाविषयत्वादित्यत्राऽऽह—न ह्यात्मेति। प्रमेयत्वपर्युदासः प्रमेयैकस्वभावशरीरादिव्यावर्तनमुखेन प्रमातृत्वपर्यवसितः। नञोऽत्र तदन्यवाचित्वात्। एवमेव क्षेत्रक्षेत्रज्ञयोर्विवेको वक्ष्यत इत्याह—तथा चेति। एतेन ज्ञानाविषयत्वमात्रं व्याकुर्वन्निरस्तः। प्रमेयत्वं चात्र भोग्यत्वपर्यवसितम्। तद्व्यतिरेकश्च पूर्वोक्तकर्मफलभोगार्थत्वरूपहेतुव्य-

---

१ क. ख. घ. ङ. °यात्म°।

न चानेक[रूप] उपचयापचयात्मकश्चाऽऽत्मोपलभ्यते । सर्वत्र

तिरेकरूपेण भोक्तृत्वपर्यवसितः । ततश्चायं पूर्वोक्तहेत्वन्तरद्वय-व्यतिरेकस्यापि प्रदर्शनार्थ इति मत्वा तयोरपि व्यतिरेकमाह—न चेत्यादिना । सावयवत्वे योग्यानुपलब्धिमाह—सर्वत्रेति । सर्व-शब्दोऽत्र देहांशकात्स्न्र्यपरः । तेनाणोरप्यात्मनः पादे मे वेदना शिरसि मे सुखमित्यादिसुखदुःखनिमित्ततत्तदवयवावच्छिन्नव्य-वहारदशायामपि निरवयवत्वोपलब्धिरुक्ता । यद्वा—देवादिरू-पेण विचित्रप्रकारेष्वनन्तेषु देहेषु क्वचिदपि देहे देहिनः सावयवत्वं नोपलब्धमित्यर्थः । अहमित्येकवचनमेकस्मिन्देहेऽभिमन्तुरात्मन एकत्वं सूचयति । यद्यात्मा सावयवः स्यात्तदाऽवयवीति कदा-चिदुपलभ्येत प्रत्येकं तदवयवानामपि चैतन्यस्यावश्यमभ्युपगम-नीयत्वात् । सावयवत्वे ह्यवयवसंघातरूपोऽवयविरूपो वा स्यात् । उभयथाऽप्यवयवगतविशेषगुणमन्तरेण न तत्र विशेषगुण-सिद्धिः । किण्वादिष्वपि प्रत्येकमसिद्धाऽपि मदशक्तिः पाकविशेषाद्रसविशेषादिवत्प्रत्येकं (कं) जायते । शक्ते-श्चापर्यनुयोज्यत्वेऽपि विशेषगुणेष्वयं नियमो दुस्त्यजः । ज्ञान-द्रव्यत्वपक्षेऽप्येवं निष्प्रभसमुदाये सप्रभत्वायोगवत् । एवं च सति समाजवदेकस्मिन्देहिनि मिथः कलहासूयेर्ष्यानिग्रहानुग्र-हादयोऽप्युपलभ्येरन् । समुदायावयविनोश्चातिपीडायामप्यवय-वव्यतिरिक्तयोरभावादवयवानामेवानुभवितृत्वं स्यात् । तथा सति पुण्यापुण्याद्यवच्छिन्नात्मावयवानुरूपं तदन्योऽवयवो न प्रतिसंदधीतेति दक्षिणहस्तेन मयैव स्पृष्टं वामहस्तेन पुनः स्पृशामी-त्यादि प्रतिसंधानं न स्यात् । न चाऽऽत्मावयवानामाशुतरसंचारा-त्तदुपपत्तिः, आत्मनश्चूर्णपुञ्जकल्पत्वप्रसङ्गेन संघातविशेष्या-( षादेर ) पि असिद्धिप्रसङ्गात् । न च वस्त्रादिषु मृगमदवासने-वान्यवासनासंक्रमः । मात्राऽनुभूतस्य गर्भस्थेनापि स्मरणप्रस-ङ्गात् । न च भेदाभेदात्सर्वोपपत्तिस्तस्यैव व्याघातादिदुःस्थ-त्वस्य शारीरकभाष्यादिषु प्रपञ्चितत्वात् । तदेवमहमित्येकत्वे-नोपलम्भो निरवयवत्वमन्तरेण नोपपद्यते । एतेनार्थाद्देहेन्द्रिय-

१ क. ख. घ. ङ. °यात्म° ।

देहेऽहमिदं जानामीति देहादन्यस्य प्रमातृतयैकरूपेणोपलब्धेः। न च देहादेरिव प्रदेशभेदे प्रमातुराकारभेद उपलभ्यते। अत एकरूपत्वेनानु-

प्राणानामप्यात्मत्वं निरस्तं वेदितव्यम्। तथाहि—नहि पाण्याद्यारब्धोऽवयव्यस्ति सत्कार्यवादस्थापनात्। न च पाण्यादय एवाऽऽत्मानः प्रत्येकमहंत्वाभावात्। अविवादनियमासंभवाच्च। न चात्र परस्परोपकार्योपकारकभावाभिमानः सुवचः। अत एव च न तत्समुदायः। एवमिन्द्रियग्रामे प्राणाख्यसंघातेऽपीति देहस्य चान्यस्य चेति ग्र(गृ)हक्षेत्रादितुल्यो ममेदमिति देहस्येदंग्रहः। लो( सोऽ )हमित्यादिकं तु प्रबुद्धस्यापृथक्सिद्धेः। अप्रबुद्धस्य तु भ्रान्त्येति न कश्चिद्दोष इति भावः। प्रमातृतयेति। विमर्शदशायां प्रमेयस्याप्यात्मनः प्रमातृत्वेन हि सर्वदा विषयग्रहणवेलायां स्फुरणमज्ञासिषमित्येवमादिरूपेणान्यदाऽपि प्रमातृत्वं परामृष्टम्। आत्मग्रहणेऽपि मां जानामीति प्रमातृत्वमपि सुस्थितमेवेति भावः। एकरूपेणेति। सावयवत्वे कस्यचिदवयवस्य कदाचित्प्रमातृत्वेनान्येषां चाप्रमातृत्वेन स्फुरणं स्यात्। न ह्यनेकेषां चेतनानामवयवानां प्रमाप्रसरयौगपद्यनियमोऽस्तीति भावः। अथ पूर्वोक्तमेव सुखभेदेन साधयन्विजातीयसंघातात्मकत्वे योग्यानुपलब्धिं चाऽऽह—न चेति। पाञ्चभौतिकेषु देहादिषु तत्तद्भूतांशभूतत्वगस्थिमांसादौ तत्तद्भूतप्रयुक्ताकारभेद उपलभ्यते नैवं प्रमातरि। तथा च श्रूयते—कृत्स्नः प्रज्ञानघन एवेत्यादि। यद्वा—आकारभेद इति पाणिपादादिसंनिवेशभेदो विवक्षितः। तदेवमात्मनो नित्यत्वे देहस्य विनाशित्वे च प्रत्येकं हेतुचतुष्टयं श्लोकद्वयसिद्धं सुखग्रहणाय संकलय्य दर्शयति—अत इति। एकरूपत्वेनाभूतसंघातात्मकत्वादित्यर्थः। अनुपचयात्मकत्वात्—निरवयवत्वादित्यर्थः। नन्विदमखिलमपि हेतुजातमनुपपन्नम्। तथाहि—तत्रासंघातरूपत्वस्य निरवयवत्वस्य च रूपरसादिभिर्महदादिभिश्चानैकान्त्यम्। प्रमातृत्वं च यदि कर्मफलभोक्तृत्वं विवक्षितं तदानीमसाधारणानैकान्त्यं सकलसपक्षविपक्षव्यावृत्तेः। तत्र चेश्वरादेरपि पक्षीकारे भागासिद्धिश्च।

यदि प्रमाश्रयत्वमात्रं विवक्षितं तदा सर्वप्रमातृपक्षीकरणे पूर्ववत् साधारण्यम् । जीवमात्रपक्षीकारे त्वीश्वरनित्यत्वस्यापि दृढाभ्युपगमाभावात्तस्मिन्दृष्टान्ते संदिग्धसाध्यवैकल्यादिदोषः । व्यापकत्वं च यदि सर्वव्यापकत्वं तदा स्वरूपासिद्धिः । प्रत्येकं क्षेत्रज्ञानामणूनां तदभावात् । ईश्वरापेक्षया व्याप्यत्वाच्च । यदि कतिपयव्यापकत्वं तदा शस्त्राकाशादिभिरेवानैकान्त्यम् । शरीरानित्यत्वसाधकं सावयवत्वमीश्वरदिव्यविग्रहाभरणायुधादिविशेषैः । एवं कर्मफलभोगार्थत्वं च यदि तद्धेतुत्वं तदेश्वरजीवस्वरूपादिभिः पूर्ववदनैकान्त्यम् । यदि तदर्थमुत्पन्नत्वं तदा व्यर्थविशेषणत्वमुत्पन्नत्वमात्रेण व्याप्तिसिद्धेः । संघातरूपत्वमपि सावयवत्ववदेवानैकान्तिकम् । व्याप्यत्वं च यदि सर्वापेक्षया तदा त्वसिद्धिदोषः । नहि शरीरादिकं पर्वतादिव्यो(ना व्या)प्यते । अप्रसिद्धत्वं च हेतोः—कुत्रचिदपि तस्याभावात् । यदि कतिपयापेक्षया तदेश्वरव्याप्यैर्जीवादिव्यमङ्गलविग्रहादिभिरनैकान्त्यम् । यदि जीवव्याप्यत्वमिति विशेष्येत तदा नित्यसूरिविग्रहविशेषादिभिः प्रकृत्यादिभिश्च प्राग्वद्व्यभिचारः । एतेन क्षेत्रज्ञव्याप्यत्वमित्यपि निरस्तम् । यदि पुनरव्यापकत्वं विवक्षितं तदाऽणिमाद्यैश्वर्यवद्योगिप्रभृतिशरीरेषु स्वरूपासिद्धिः । तच्छरीराणां शिलाद्युन्मज्जननिमज्जनादेरपि योग्यत्वादिति । अत्रोच्यते—असंघातत्वनिरवयवत्वयोस्तावदर्जुनबुद्ध्या घातुकतया प्रस्तुतशस्त्राग्न्याद्यधीनविनाशनिवृत्तेः साध्यत्वान्न महदादिभिरनैकान्त्यम् । द्रव्यत्वेन विशेषणान्नाग्न्यादिनाश्यरूपादिभिरनैकान्त्यम् । एवं प्रत्यक्षादिसिद्धनाशकनिषेधे महदादिवत्केवलमीश्वरसंकल्पादिना नाशः शङ्क्येत तदपि श्रुत्यैव प्रतिषिध्येतेति भावः । प्रमातृत्वस्य भोक्तृत्वपर्यवसाने कर्मफलभोगार्थत्वरूपप्रमेयत्वनिषेधमुखेनानुत्पत्तिपर्यवसितत्वादनुत्पन्नत्वस्य च नित्यत्वेन व्याप्तिसिद्धेरात्मस्वरूपानुत्पत्तेश्च शास्त्रसिद्धत्वान्न कश्चिद्दोषः। प्रमाश्रयत्वमात्रस्य हेतुत्वे त्वीश्वरो दृष्टान्तः । तत्र साध्यसंदेहः 'न त्वेवाहम्' इत्यस्य व्याख्यानदशायां निराकृतः । व्यापक-

त्वस्य प्रयोगस्तु पूर्वमस्मद्व्याख्यातप्रकारेण शस्त्रादिविषय-तया पठितव्य इति न तत्रापि दोषः । शरीरानित्यत्वसाधनेषु च सावयवत्वभूतसंघातत्वयोः प्राकृतत्वे सतीति विशेषा(षणा)न्न व्यभिचारः । एतदर्थं हि 'इमे देहाः' इत्युक्तम् । कर्मफल-भोगार्थत्वमपि तदर्थमुत्पन्नत्वमेव । न च व्यर्थविशेषणं मुक्तात्म-ज्ञानविकासस्य व्यवच्छेद्यत्वात् । नहि सोऽनुत्पन्नः प्रागभावा-न्निवृत्ते प्रतिबन्धे करणानिरपेक्षस्वरूपाधीनोत्पत्तित्वमात्रेण हि स्वाभाविकमुच्यते न त्वनुत्पन्नत्वेन । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा । प्रकाश्यन्ते न जन्यन्ते नित्या एवाऽऽत्मनो हि ते ॥ इत्यादिकं त्ववबोधादिस्वरूपस्यानुत्पन्नतामाह न तु तद्विकासस्य । अथवाऽवस्थारूपत्वेन तस्योत्पन्नत्वं नाम पृथक्चिन्त्यतां तदव-स्थावस्थितव्यवच्छेदाय विशेषणं स्यात् । अस्तु वा विशेषणनै-रपेक्ष्यं तथाऽप्युत्पन्नत्वमात्रेणानित्यत्वं तावत्सिद्धम् । अज्ञातोत्पत्तिषु केषुचिच्छरीरेषु हेत्वसिद्धिशङ्कापरिहारः कर्ममूलत्वप्रदर्शनेन क्रियते । कर्मावसानविनाशित्वस्य वा साध्यत्वात्तदौचित्याय चेदं विशेषणम् । साध्यत्वं व्याप्यत्वं च शस्त्राद्यपेक्षया विवक्षितम् । साध्यं च तदधीनविनाशत्वमिति न कश्चिद्दोषः । ननु यो यद्व्याप्यः स तदधीनविनाश इति न व्याप्तिः । ईश्वरव्याप्यैः प्रकृतिपुरुषका-लादिभिरनैकान्त्यादिति चेन्न । योग्यत्वस्य साध्यत्वात्तत्रापि तत्संभवात् । ईश्वरनित्येच्छापरिग्रहादेव हि तन्नित्यत्वम् । अन्यथा यदीश्वरो जीवादिस्वरूपमपि संजिहीर्षेत्कस्तस्य शासिता तर्हि जीवाकाशादिव्याप्यैस्तदधीननाशरहितैः शरीरादिभिर्व्यभिचार इति चेन्न । तेषामपि तन्नाश्यत्वयोग्यत्वात् । तन्नाशकर्तेश्वरस्तु न तत्र जीवादीन्युपकरणी करोतीति विशेषः । ततश्चैवं प्रयोगः—शरीरादि शस्त्राद्यधीनविनाशयोग्यम् । तद्व्याप्यत्वात् । यद्यद्व्याप्यं तत्तदधीनविनाशयोग्यमिति । यद्वा तिष्ठतु सामान्यव्याप्तिः । शस्त्रादिनाश्यत्वमेव साध्यम् । शस्त्रादिव्याप्यत्वादित्येव च हेतुः । यच्छस्त्रादिव्याप्यं तच्छस्त्रादिनाश्यम् । यथा कद-लीकाण्डादीति । न चाऽऽकाशादि शस्त्रादिव्याप्यम् ।

सूक्ष्मत्वे सत्यनुप्रवेशस्य विवक्षितत्वात् । सूक्ष्मत्वस्य चात्र यत्र यत्प्रतिहन्यते तत्राप्रतिहतत्वं ततः सूक्ष्मत्वमिति निष्कर्षात् । योगिप्रभृतिशरीराणां तु शस्त्रादिव्याप्यत्वमेव परिणामविशेषादौ नि( निं )द्यत्तमतस्तदधीननाशाभावः । शस्त्राद्यपेक्षया व्यापकत्वमेव तेषामिति तैर्न व्यभिचारः। ततोऽपि सूक्ष्मतरैरीश्वरसंकल्पस्वसंकल्पादिभिस्तु तन्नाशः । एतेन शस्त्रास्त्रादिप्रतिबन्धकौषधाद्यनुगृहीतशरीरदृष्टान्तोऽपि व्याख्यातः । औषधादिभिस्तत्र प्रवेशप्रतिबन्धात् । तस्मात्सिद्धमष्टावपि हेतवोऽष्टदिग्विजयिन इति । ननु किमर्थमिह लोकसिद्धं शरीरानित्यत्वं प्रसाध्यते । केषुचिच्छरीरेषु प्रत्यक्षत एव नाशो दृष्टः। अविनष्टेषु भीष्मादिशरीरेष्वपि तत्तुल्यतया नाशित्वं निश्चितमेव । अन्यथा शत्रून्प्रति शस्त्रादिकमपि न प्रहीयेत स्वयमपि शत्रुशस्त्रादिकं न निवारयेत् । अतः शरीरानित्यत्वस्य संप्रतिपन्नत्वात्संदिग्धे च न्यायापेक्षणान्निरर्थकमिह सावयवत्वाद्यनुमानचतुष्टयमिति । अत्रोच्यते—प्रथमं तावदात्मनित्यत्वानुमानानां यच्छस्त्राद्यधीनविनाशं तत्सावयवं यथा शरीरमिति व्यतिरेकव्याप्तिप्रदर्शनमेकं प्रयोजनम् । तत एव देहात्मनोर्विरुद्धधर्मप्रपञ्चनेन भेदस्थापनं द्वितीयम् । शस्त्रादिनिवारणरसायनसेवादिभिर्नित्यत्वमपि [न] किं संभवेदिति संदेहापाकरणं तृतीयम् । एवं देहानां नाशतद्धेत्वोरवश्यंभावित्वप्रतिपादनेन स्वदेहवैराग्यजननं चतुर्थम् । परदेहेषु च स्वस्यैकस्यैव नाशहेतुभ्रमनिरसनेन वक्ष्यमाणप्रकारेण स्वतन्त्रकर्तृत्वाभिमानक्षालनं पञ्चमम् । नाशहेतौ सत्यवश्यं नश्यतीति प्रतिपादनात्फलाभिसंधिरहितकर्मानुष्ठानादिनाऽत्यन्तनाशस्यापि संभावनाद्योतनं षष्ठम् । नश्वरस्वभावत्वादशोचनीयत्वं सप्तमम्। शीघ्रं मोक्षसाधने प्रवर्तितव्यमित्यष्टमम् । एवं यथोचितमन्यदपि भाव्यमिति । तस्माद्युध्यस्व भारतेति । तस्मादित्यस्य व्याख्यानं देहस्येत्यादि न शोकस्थानमित्यन्तम् । मात्रास्पर्शास्त्वित्यादिश्लोकद्वयप्रतिपादितेन द्वंद्वतितिक्षारूपपरिकरेणामृतत्वरूपफलेन

पचयापचयात्मकत्वात्प्रमातृत्वाद्व्यापकत्वाच्चाऽऽत्मा नित्यः। देहस्तूपचयापचयात्मकत्वाच्छरीरिणः कर्मफलभोगार्थत्वादनेकरूपत्वाद्व्याप्यत्वाच्च विनाशी। तस्माद्देहस्य विनाशस्वभावत्वादात्मनो नित्यस्वभावत्वाच्चोभावपि न शोकस्थानमिति शस्त्रपातादिपरुषस्पर्शानवर्जनीयान्स्वगतानन्यगतांश्च धैर्येण सहन्नमृतत्वप्राप्तयेऽनभिसंहितफलं युद्धाख्यं कर्माऽऽरभस्व ॥ १८ ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

एवमुक्तस्वभावमात्मानं प्रति हन्तारं हननहेतुं कमपि यो मन्यते

---

च पूरयन्नाह—शस्त्रेति। अत्र परगतान्प्रति शोचतः स्वगताभिधानं मर्मोद्घाटनेन मानजननार्थम्। शास्त्रीयत्वादेव स्वगतमपि दुःखं सह्यते तथा यज्ञपशुशत्रुप्रभृतिगतमपि सोढव्यमिति प्रदर्शनार्थं च। युद्धस्यानीप्सितराज्यादिक्षुद्रभोगान्तरप्रधानकत्वव्युदासाय प्रकरणारम्भोक्तमेव फलमुचितमिति अमृतत्वप्राप्तय इत्युक्तम्। धात्वर्थस्य पराभिमतं करणतयाऽन्वयमपाकुर्वन्युध्यस्वेत्यत्र प्रकृतिप्रत्ययार्थौ विविच्याऽऽह—युद्धाख्यं कर्माऽऽरभस्वेति। अयमर्थः सेश्वरमीमांसायां प्रपञ्चितोऽस्माभिः ॥ १८ ॥

अथाविनाशि तुविति श्लोकेनोक्तं नैनं छिन्दन्तीति प्रपञ्चयिष्यमाणं शस्त्रादीनामात्मनश्च हन्तृत्वहन्तव्यत्वायोग्यत्वं तद्विपर्ययवेदिनिन्दया द्रढयति—य एनमिति। सामानाधिकरण्यभ्रमनिरासायोक्तम्—प्रतीति। हन्तारमित्यस्य तृन्नन्तत्वादेनमिति द्वितीया। 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा० सू० २। ३। ६९) इति कृद्योगे षष्ठीनिषेधात्। हननहेतुमिति। प्रत्ययस्यात्र हेतुमात्रविवक्षेति भावः। न कश्चित्कर्तुमर्हतीति पूर्वोक्तवत्पदार्थविवक्षया पुंलिङ्गत्वोपपत्तिरिति ज्ञापनायोक्तम्—कमपीति। छेदनादिहेतुषु कश्चि(कंचि)दपीत्यर्थः। ननु हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते। इत्यस्य कठवल्लीवाक्यस्योपबृंहणरूपोऽयं

---

१ क. ख. घ. ङ. °यात्म°। २ क. ख. ग. °यात्म°।

यश्चैनं केनापि हेतुना हतं मन्यते, उभौ तौ न विजानीतः। उक्तैर्हेतुभिरस्य नित्यत्वादेवायं हननहेतुर्न भवति अत एव चायमात्मा न

श्लोकः। तस्य च वाक्यस्याऽऽत्मनो हन्तृत्वहन्तव्यत्वनिषेधार्थत्वम्। 'कर्ता शास्त्रार्थवत्त्वात्' (ब्र० सू० २।३।३३) इत्यधिकरणभाष्ये पूर्वपक्षिणोक्तम्। सिद्धान्ते च यदुक्तं हन्ता चेन्मन्यत इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इत्येवमनूद्य तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यत इति परिहृतम्। कथमत्रैनं हन्तारमित्यादिना स्वरससिद्धसामानाधिकरण्यादिभङ्गेन हननहेतुं कमपीत्यध्याहृत्य व्याख्यायते। उच्यते—न तावदत्र शारीरकभाष्यविरोध ऐकार्थ्यात्। अत्र हि यस्य कस्यापि हेतोरात्महननहेतुत्वं नास्तीत्युक्तम्। तथा सत्यात्मनोऽपि आत्महननहेतुत्वं नास्तीत्युक्तं भवति। एवं चात्र सामान्योक्तस्य विशेषनिष्ठतामभ्युपेत्योक्तं शारीरके। न च तत्र सामानाधिकरण्याभ्युपगमः। आत्मनो हन्तारमिति वैयधिकरण्येऽपि फलितोक्तेः। तत्र ह्यपेक्षितपदान्तरस्य योग्यविभक्त्यन्ततयाऽध्याहारः। अत्र तु सामानाधिकरण्यादपि क्रियाकर्मणोराकाङ्क्षादिमतोः परस्परान्वय एव स्वारसिकः। सामान्यविषयत्वे च प्रकरणौचित्यम्। आत्मनो हन्तृत्वनिषेधरूपविशेषोपसंहारस्तु वेदाविनाशिनमिति श्लोके भविष्यति। तस्मादयमिति शब्दस्य भिन्नार्थत्वादिकमपि न दोषायेति सिद्धम्। प्रतिज्ञान्तरभ्रमव्युदासायाऽऽह—उक्तैरिति। अस्य नित्यत्वादिति। तत्कार्यशक्तमपि न हि तदयोग्ये प्रवर्तत इति भावः। एनमिति पूर्ववाक्यादनुकृष्योक्तम्। अत एव चेति। अयोग्यतया हेत्वभावे तत्क्रियाविषयत्वरूपफलाभाव इति भावः। अयं हननहेतुरयमात्मेत्युभयत्रायंशब्दप्रयोगात्तन्त्रेणोच्चारितोऽयंशब्दो हन्ति हन्यत इत्यनयोर्विवक्षाभेदात्कर्तृकर्मसमर्पक इति भावः। कथं तर्हि मनुष्यं हन्तीत्यादिप्रयोगः। न ह्यसौ शरीरमात्रहननविषयः। मृतशरीरघातकेष्वपि पितृहा मातृहेत्यादिप्रयोगोपक्रोशाद्यभावात्। मनुष्यादिशब्दाश्चाऽऽत्मपर्यवसिता इति नः सिद्धान्तः। मां जिघांसतीत्यादिप्रयोगेषु व्यक्तमेव हन्तेरात्म-

हन्यते। हन्तिधातोरप्यात्मा न कर्म। स तु शरीरवियोगकरणवाची। 'न हिंस्यात्सर्वा भूतानि' 'ब्राह्मणो न हन्तव्यः' इत्यादीन्यपि शास्त्राणि तत्तच्छरीरवियोगकरणविषयाणि ॥ १९ ॥

उक्तैरेव हेतुभिर्नित्यत्वादपरिणामित्वादात्मनो जन्ममरणादयः सर्व एवाचेतनदेहधर्मा न सन्तीत्युच्यते—

कर्मकत्वम्। अतो हिंसायोग्यश्चेतन एव हन्तिधातोः कर्मभूतः। तथा सति नायं हन्ति न हन्यत इत्युक्तमुभयमपि नोपपद्यत इत्याशङ्क्याऽऽह—हन्तिधातुरिति। आत्मकर्मेत्यनेन शङ्कासूचनम्। सत्यमात्मकर्मक एव स्वतो हन्तिधातुः। न तु स्वरूपप्रच्युतिप्रतिपादकः किंतु मरणपरः। तथैव हि लोकवेदयोः प्रयोगः। मारणं च शरीरादिविश्लेषणात्मकम्। 'मृङ् प्राणत्यागे' इतिचानुशिष्यत इति भावः। एवं लोकप्रयोगो निर्व्यूढः। न हिंस्यात्सर्वा भूतानीति शास्त्रप्रयोगस्य कोऽर्थः। स चास्तु यः कश्चित्स तावत्सामान्यतो विशेषतश्च निषिद्धत्वादकर्तव्य इत्याह—न हिंस्यादिति। पराभिमतप्रक्रिययोत्सर्गापवादन्यायाद्वा स्वमतेन विहितशरीरवियोगकरणस्य पशुशत्रुप्रभृतीनामपि हिततमत्वेन हिंसात्वस्यैवा ( भावा ) द्वेति भावः ॥ १९ ॥

अथ विपश्चिदधीतस्यात्र कदाचिदित्येकपदमात्रविशेषितस्य न जायत इति कठवल्लीश्लोकस्य पौनरुक्त्यप्रत्यक्षविरोधादिदोषमाशङ्क्याऽऽह—उक्तैरेवेति। एतेन प्रतिज्ञामात्रत्वशङ्का परास्ता। नित्यत्वेनापरिणामित्वादिति। अविनाशित्वेन विकारमात्रस्यापि निरस्तत्वादित्यर्थः। तथाहि–विनाशो नाम पूर्वावस्थाप्रहाणरूपा नामान्तरभजनार्हावस्थान्तरापत्तिः। यथा घटादिद्रव्यस्य कपालाद्यवस्था। तदवस्थौन्मुख्यं च तस्या अपक्षयः। सैव कपालाद्यवस्थस्य तस्यैव द्रव्यस्योत्पत्तिः। एवं परिणामवृद्ध्यादिकमुदाहरणीयम्। वक्ष्यति चेममर्थं जातस्य हि ध्रुवो मृत्युरित्यत्र। अतो विनाशित्वनिराकरणेन जननादिकमप्यर्थतो निरस्तम्। सर्व एवेत्यपौनरुक्त्यार्थमुक्तम्। एवकारोऽत्रापिशब्दसमानार्थः। न केवलं हन्तव्यत्वमात्रमेत्रापि तु जन्यत्वादिकमपीत्यपुनरुक्तिरिति भावः। देहधर्मा इति। हन्यमाने शरीर इति सूचितज-

१ °धातुरप्यात्मकर्मेश°। २ क. ङ. च. °स्त्राण्यविहितशरी°।

न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥

तत्र न जायते म्रियत इति वर्तमानतया सर्वेषु देहेषु सर्वैरनुभूयमाने जन्ममरणे कदाचिदप्यात्मानं न स्पृशतः । नायं भूत्वा भविता वा न भूयः । अयं कल्पादौ भूत्वा भूयः कल्पान्ते च न भवितेति न । केषुचि-

---

ननमरणादिव्यवहारविषय उक्तः । तत्र हेतुरचेतनेति । जननादयो देहधर्मा आत्मनो न सन्तीत्युच्यत इत्यात्मनि देहधर्मान्प्रत्यक्षादिनाऽभिमन्यमानायार्जुनाय न जायत इत्युपनिषन्मन्त्रेणैव यथावस्थिताकारो विविच्याभिधीयते न तु देहसंयोगवियोगलक्षणजनिमरणप्रतिक्षेपः क्रियत इत्यर्थः । वाशब्दश्चार्थः । श्लोकस्थपदानां पौनरुक्त्यपरिहाराय वर्तमानादिनिर्देशसिद्धां व्यवस्थां व्यञ्जयन्नाह—तत्रेति । ननु कदाचिदित्यनेन वर्तमानकालविवक्षायां वैयर्थ्यम् । लकारेणैव गतार्थत्वात् । भूतभविष्यतोः संग्रहे वर्तमाननिर्देशो न संगच्छत इत्याशङ्क्योक्तम्—वर्तमानतयेत्यादि । तत्तत्कालीनपुरुषाणां तेषु तेषु देहेषु जायते म्रियत इति वर्तमानतयैव हि जननमरणयोरनुभवोऽतस्तदपेक्षया वर्तमाननिर्देशोपपत्तिः । तेन कल्पाद्यन्तव्यतिरिक्तः समस्तः कालः कदाचिदिति संगृहीत इति भावः । भूत्वेति पूर्वकालनिर्देशाभिप्रेतमाह—कल्पादाविति । तत्र भूयःशब्दः कल्पान्तपरः । भूत्वा भवितेत्यनयोः क्रिययोः प्रत्येकं नञ्द्वयभ्रमव्युदासायोक्तम्—न भवितेति नेति । भूत्वा न भवितेति विशिष्टं नञन्तरेण प्रतिषिध्यते । ननु नायं भूत्वेत्यादिकं किमर्थमुच्यते । न जायत इत्यादिनैव संग्रहीतुं शक्यत्वादित्याशङ्क्याऽऽह—केषुचिदिति । अयं भावः—कालविशेषेषु देहविशेषेषु सृष्टिप्रलयविशेषः श्रूयते । स च न देहसंबन्धतद्वियोगमात्रम् । तोयेन जीवान्व्य( वि ) ससर्ज भूम्यामिति कठोक्तेः प्राक्सृष्टेरेकत्वावधारणादेकविज्ञानेन सर्वविज्ञानप्रति-

स्प्रजापतिप्रभृतिदेहेष्वागमेनोपलभ्यमानं कल्पादौ जननं कल्पान्ते च मरणमात्मानं न स्पृशतीत्यर्थः। अतः सर्वदेहगत आत्माऽजः। अत एव नित्यः शाश्वतः प्रकृतिवत्सदसत्परिणामैरपि नान्वीयते। अतः पुराणः पुराऽपि नवः सर्वदाऽपूर्ववदनुभाव्यत इत्यर्थः। अतः शरीरे हन्यमानेऽपि न हन्यतेऽयमात्मा ॥ २० ॥

---

ज्ञोपपत्तेरेकस्यैव बहुभवनसंकल्पादेश्चेति। जीवस्वरूपोत्पत्तिनाशावेवाभ्युपगन्तव्याविति जीवानामाप्रलयावस्थायित्ववादशङ्कानिरासाय नायं भूत्वेत्याद्युक्तम्। तत्र चैवमुत्तरम्—जीवानां विसृष्टिः सदेहीकरणेन विक्षेपः। प्राक्सृष्टेरेकत्वावधारणं नामरूपविभागाभावात्। एकविज्ञानेन सर्वविज्ञानं च सूक्ष्मचिदचिद्वस्तुशरीरकस्य ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरतया परिणामात्। अत एव बहुभवनसंकल्पाद्युपपत्तिश्च। अतः कल्पाद्यन्तयोरपि ज्ञानसंकोचविकासकरदेहविश्लेषसंश्लेषमात्रमेव न पुनः स्वरूपोत्पत्तिरिति। अजो नित्य इत्यनयोः पूर्वोक्तार्थस्य संकलय्य निगमनरूपतया तत्तत्कालेषु जन्मादिनिषेधेन सर्वदेहगतात्माजत्वादिविवक्षया चापौनरुक्त्यमित्यभिप्रायेणाऽऽह—अतः सर्वदेहगत इति। अत एव नित्य इति। उत्पत्तिरहितत्वान्नाशरहित इत्यर्थः। सृष्ट्यवस्थागतस्थूलपरिणामानामात्मनि निरस्तत्वात्प्रलयावस्थागतसूक्ष्मपरिणामनिरसनपरः शाश्वतशब्द इत्यभिप्रायेणाऽऽह—प्रकृतिवदिति। पुराणशब्दमप्यक्षरसाम्यान्निर्ब्रूयादित्युक्तन्यायेन निर्वक्ति—पुराऽपि नव इति। किमिदं पुराऽपि नवत्वम्। अनुत्पन्नस्य कदाचिदपि नवत्वायोगात्। उत्पन्नेऽपीदानीमपि नव इति वा परस्तादपि नव इति वा वक्तव्यम्। पुरानवत्वस्याविस्मयनीयत्वादित्याशङ्क्याऽऽह—सर्वदेति। पुराशब्दस्य कालत्रयोपलक्षणतया वा वृत्त्यन्तर्गताभिप्रायकापिशब्दसमुच्चितकालान्तरतात्पर्येण वा पुरातनोऽपि नव इति विरोधाभिप्रायेण वा निर्वाहः। नवशब्दोऽप्यत्र नवत्वसहचरिताश्चर्यत्वपरः। वक्ष्यति चाऽऽश्चर्यवदित्यादीति भावः। यद्वा सावयवानामवयवाप्यायनादिना नवीकरणं स्यात्। अयं तु निरवयवत्वेनानवीकार्यतया पुराऽपि नव इति उपपादितमर्थमर्जुनस्य शङ्क्यमानविषये निगमयतीत्यभिप्रायेणाऽऽह—अत इति ॥ २० ॥

---

१ क. °वदविशदसततपरि°। २ क. ख. ग. °रातनोऽपि।

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

एवमविनाशित्वेनाजत्वेन व्ययानर्हत्वेन च नित्यमेनमात्मानं यः पुरुषो वेद स पुरुषो देवमनुष्यतिर्यक्स्थावरशरीरावस्थितेष्वात्मसु कमप्यात्मानं कथं घातयति कं वा कथं हन्ति कथं नाशयति कथं वा तत्प्रयोजको भवतीत्यर्थः । एतेनाऽऽत्मनो घातयाम्यहमित्यनुशोचनमात्मस्वरूपयाथात्म्याज्ञानमूलमेवेत्यभिप्रायः ॥ २१ ॥

यद्यपि नित्यानामात्मनां शरीरवियोगमात्रं क्रियते तथाऽपि रमणीयभोगसाधनेषु शरीरेषु नश्यत्सु तद्वियोगरूपं शोकनिमित्तमस्त्येवेत्यत आह—

---

य एनमित्युक्तविपर्ययपरे वेदेत्यादिश्लोके नित्यमिति परमसाध्यानुवादः । अविनाशिनमित्यादिकं तु तद्धेतुरित्यभिप्रायेणाऽऽह—एवमिति । व्ययशब्देनात्र जन्मनाशव्यतिरिक्तविकारा विवक्षिताः । अपक्षय एव वा छेदनादियोग्यावयवविश्लेषादिर्वा । कमिति निर्धारणस्यानिर्धारितानेकव्यक्तिसापेक्षत्वादाह—देवमनुष्येत्यादि । घातयतिहन्त्योः पौनरुक्त्यमाशङ्क्य बुद्धिस्थक्रमेणार्थमाह—कथं नाशयतीत्यादि । वेदितुर्विशेषेण हन्तृत्वादिनिषेधो न युज्यते, आत्मनो नित्यत्वे तदवेदितुरपि कत्थनायोगादित्याशङ्क्य परिहाराय फलितार्थं वदन्प्रकृतेन संगमयति—एतानिति । नात्र श्लोके हन्तृत्वादिमात्रं निषिध्यते किंतु तत्प्रयुक्तं शोचनम् । तदुत्पादकप्रकारप्रतिषेधायैव ह्यत्र कथंशब्द इति भावः ॥ २१ ॥

शङ्कापूर्वकं वासांसीति श्लोकमवतारयति—यद्यपीति । ननु सार्वभौमादिशरीरपरित्यागे तत्तत्कर्मानुरूपनारकतिर्यक्स्थावरादिशरीरपरिग्रहसंभावनया प्रलयवदपरिगृहीतशरीरतयाऽवस्थितिसंभावनया चास्त्येव शोकनिमित्तम् । न च नूतनत्वमात्रं सुखाय । चिरंतननरपतिगृहपरित्यागेनापि नूतनकारागारप्रवेशादेर्जीर्णांशुक-

---

१ ख. °त्वेनापाया° । २ क. ङ. एतानात्म° । ३ ख. ग. घ. ङ. °रूपाज्ञा° । ४ °विश्लेषमा° । ख. ग. घ. °विच्छेदमा° ।

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥

वासांसीति। धर्मयुद्धे शरीरं त्यजतां त्यक्तशरीरादधिकतरकल्याणशरीरग्रहणं शास्त्रा*दवगम्यत इति जीर्णानि वासांसि विहाय नवानि कल्याणानि वासांसि गृह्णतामिव हर्षनिमित्तमेवात्रोपलभ्यते ॥ २२ ॥

पुनरपि 'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्' इति पूर्वोक्तमविनाशित्वं सुखग्रहणाय व्यञ्जयन् द्रढयति—

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

---

प्रहाणेन नूतनगोणीग्रहणादेश्च दुःखरूपत्वात्। न च वयमिह मानुषादिशरीरविलयसमनन्तरमभिनववसनपरिधानवदनिभिपदेहादिसङ्ग्र(ग्र)हमुपलभामह इत्याशङ्क्याऽऽह—धर्मयुद्ध इति। अधिकतरेति कल्याणविशेषणम्। नवशब्दाभिप्रेतोक्तिः—कल्याणानीति। हर्षनिमित्तमेवेति। पुरा शोकाविषयमात्रे शोकः कृतः। इदानीं तु तद्विपरीतहर्षविषये क्रियत इति भावः ॥ २२ ॥

पूर्वोक्तेन पुनरुक्तिं दार्ढ्यसुखग्रहणरूपप्रयोजनभेदेन परिहरन्नैनमिति श्लोकद्वयमवतारयति—पुनरपीति। नैनमित्यादौ सार्धश्लोके वैशद्याय पृथगुक्तं करणासामर्थ्यं विषयायोग्यत्वं च परस्परप्रतियोगितयाऽन्यत्रेतरदन्तर्भवतीति भाष्ये पृथगनुपात्तम्।

---

* 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वा' इत्यादिश्रुतेरित्यर्थः। अयमत्राऽऽशयः—भीष्मादयो हि यावज्जीवं धर्मानुष्ठानक्लेशेनैव जर्जरशरीरा वर्तमानशरीरपातमन्तरेण तत्फलभोगायासमर्था यदि धर्मयुद्धेन स्वर्गप्रतिबन्धकानि जर्जरशरीराणि पातयित्वा दिव्यदेहसंपादनेन स्वर्गभोगयोग्याः क्रियन्ते त्वया तदाऽत्यन्तमुपकृता एव ते। दुर्योधनादीनामपि स्वर्गभोगयोग्यदेहसंपादनान्महानुपकार एव। तथा चात्यन्तमुपकारके युद्धेऽपकारकत्वभ्रमं मा कार्षीरित्यर्थः। अनेन दृष्टान्तेनाविकृतत्वमात्मनः प्रतिपाद्यत इति तु प्राचां व्याख्यानं स्पष्टम्।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

नैनमिति । शस्त्राग्न्यम्बुवायवश्छेदनदहनक्लेदनशोषणान्यात्मानं प्रति कर्तुं न शक्नुवन्ति सर्वगतत्वादात्मनः। सर्वतत्त्वव्यापकस्वभावतया सर्वेभ्यस्तत्त्वेभ्यः सूक्ष्मत्वादस्य तैर्व्याप्त्यनर्हत्वाद्व्याप्यकर्तव्यत्वाच्च च्छेदनदहनक्लेदनशोषणानाम् । अत आत्मा नित्यः स्थाणुरचलोऽयं सनातनः स्थिरस्वभावोऽप्रकम्प्यः पुरातनश्च ॥ २३ ॥ २४ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

छेदनादियोग्यानि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते तैरयमात्मा न

---

अच्छेद्य इत्यादौ प्रत्ययोऽर्हार्थः । तेन नैनं छिन्दन्तीत्यादिष्वपि तदर्हत्वं शस्त्रादेः प्रतिषिध्यत इति दर्शयति––न शक्नुवन्तीति । सर्वगतपदं पूर्वोक्तहेत्वनुवादतया व्याचष्टे––सर्वगतत्वादात्मन इति । अणोरात्मनः कथं सर्वगतत्वमित्याशङ्क्याऽऽह––सर्वगतत्वेति । नात्र बहुश्रुत्यादिविरुद्धं जीवविभुत्वं सर्वगतशब्देनोच्यते । किं त्वनुप्रवेशविशेषयोग्यतेति स्वभावशब्दं प्रयुञ्जानस्य भावः । व्याप्तित्वस्य पूर्वोक्तं हेतुत्वप्रकारं प्रपञ्चयति––सर्वेभ्य इति । अत आत्मा नित्य इति । सूक्ष्मत्वेन च्छेदनाद्ययोग्यत्वादात्मा नाशरहित इत्यर्थः । स्थिरेत्यादि । स्थाणुरचल इति पदद्वयं नित्यत्वप्रपञ्चनरूपं नाशायोग्यत्वनाशकाविषयत्वपरं वा स्वाभाविकोपाधिकाविशदपरिणामराहित्यपरं वेति भावः । पुरातन इति । अत्र नित्यशब्देनानन्तत्वस्योक्तत्वात्सनातनशब्दोऽनादित्वपरतया संकोचनीय इति भावः ॥ २३ ॥ २४ ॥

पूर्वोक्तानुमानान्नामुपलम्भयुक्तिविरोधपरिहारमुखेन(ण) सर्वदूषणपरिहारपरं प्रकृतोपसंहारपरं चाव्यक्त इति श्लोकं व्याख्याति––छेदनेति । शरीरादीनि यैः प्रमाणैश्छेदनादियोग्यतया प्रत्याय्यन्ते तैस्तथाऽसौ न प्रत्याय्यते । अहं जानामीति रूपेणैव ह्यात्मन उपलम्भः । शास्त्रतस्तु नित्यत्वादिविशिष्टरूपेणेति न पूर्वोक्तानु-

व्यज्यत इत्यव्यक्तः। अतश्छेद्यादिविजातीयः। अचिन्त्यश्च सर्ववस्तुविजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः। अतश्चाविकार्यो विकारानर्हः। तस्मादुक्तलक्षणमेनमात्मानं विदित्वा तत्कृते नानुशोचितुमर्हसि॥ २५॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि॥ २६॥

---

मानानां धर्मिग्राहकविरोध इति भावः। निरूपितश्च मोक्षधर्मे व्यक्ताव्यक्तशब्दः—

इन्द्रियैर्गृह्यते यत्तत्तद्व्यक्तमिति स्थितिः।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्॥ इति।

ननु कुसूलनिहितबीजस्याङ्कुरायोग्यत्वे साध्ये न तावद्व्यक्त्यपेक्षया धर्मिग्राहकविरोधस्तथाऽप्यन्वयव्यतिरेकविषयभूतबीजत्वजात्याक्रान्ततया सामान्यतो विरोध एव भवति तद्वदत्रापि दृष्टसजातीयतया विरोधः स्यादित्याशङ्क्याऽऽह—अतश्छेद्यादिविजातीय इति। साजात्यग्राहकाभावाद्वैजात्यग्राहकाच्चेति भावः। सहेतुकं सप्रकारं चाचिन्त्यशब्दार्थमाह—सर्वेति। एतेन सौगताद्यभिमतानामात्मानित्यत्वसाधनानां सत्त्वादीनां तदनुग्राहकतर्काणां चोपलम्भागमादिविरोधान्मूलशैथिल्यमुक्तं भवति। अतश्चेति। पूर्वोक्तप्रमाणानां बाधकाभावादपीत्यर्थः। यद्वाऽनुमानान्तरमुच्यते। तथाहि—आत्मा विकारानर्हः, विकारित्वग्राहकप्रमाणशून्यत्वात्। यथेश्वरस्वरूपमित्यन्वयदृष्टान्तः। यथा घटादिरिति व्यतिरेकः। यद्वा सामान्येन व्याप्तिः। यद्यादृशाकारप्रमाणशून्यं तत्तादृशाकारं न भवति। यथा नीलं न पीताकारमिति। अविकार्य इत्येतावति निर्दिष्टे कादाचित्कविकाराभावमात्रेण सिद्धसाधनता स्यादिति तत्परिहारार्थं प्रत्ययार्थं विवृणोति—विकारानर्ह इति। निषेधापेक्षया वेदनस्य पूर्वकालत्वात्क्त्वानिर्देशो न तु शोकापेक्षया। तेनाऽऽत्मवेदनस्य शोकाभावहेतुत्वमुक्तं भवति। अर्हसि। आत्मवेदिनस्ते शोकयोग्यतैव न स्यादिति भावः॥ २५॥

एवं देहातिरिक्तात्माभ्युपगमे शोकनिमित्ताभाव उक्तः।

अथ नित्यजातं नित्यमृतं देहमेवैनमात्मानं मनुषे न देहातिरिक्तमुक्त-लक्षणं तथाऽपि एवमतिमात्रं शोचितुं नार्हसि। परिणामस्वभावस्य देह-स्योत्पत्तिविनाशयोरवर्जनीयत्वात् ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

उत्पन्नस्य विनाशो ध्रुवोऽवर्जनीय उपलभ्यते तथा विनष्टस्यापि

---

अथ नास्तिकदृष्ट्या देहात्मवादेऽपि शोकनिमित्तं नास्तीत्युच्यते—अथ चेत्यादिना श्लोकत्रयेण। अथेति [शब्दः] पक्षान्तरारम्भार्थः प्रश्नार्थो वाऽभ्युपगमार्थो वा। वाशब्दो विशेषणद्वयसमुच्चयार्थः। नित्यजातं नित्यमृतं नियतोत्पत्तिविनाशमित्यर्थः। उत्तरश्लोके चेममर्थं प्रपञ्चयिष्यति। न हि नित्यस्य जातत्वमृतत्वसंभवः। न च जन्ममरणक्रियास्वरूपं नित्यत्वेन विशेषयितुं शक्यम्। व्यस्तस्य नित्यशब्दस्याऽऽत्मविशेषणत्वभ्रमव्युदासाय नित्यजात-मितिवन्नित्यमृतमिति समस्योक्तम्। देहमिति विशेषणादिसाम-र्थ्यफलितमुक्तम्। एवेति चशब्दावधारणफलितमाह—न देहेति। पूर्वमात्मनो नाशाभावाच्छोकप्रसङ्ग एव नास्तीत्युक्तम्। इदानीं देहतयाऽभिमतस्याऽऽत्मनो नाशे सत्यपि दुष्परिहरत्वा-न्महाबाहुस्त्वं नातीव शोचितुमर्हसीत्यभिप्रायेणैवंशब्दः। यद्वा—पूर्वं देहातिरिक्तात्माभ्युपगमात्परलोकादिभयेनातिमात्रशोकोऽपि युज्येतेदानीं संसारमोचकादिवन्महाबाहोस्तवातिमात्रभीतिस्थाने कथमतिमात्रशोक इति भावः। त्वं महाबाहो इति। शूरस्य ते स्वपरमरणोद्वेगो न युक्त इत्याकूतम्। प्रतिज्ञाया हेतुसाकाङ्क्ष-त्वादुत्तरश्लोकस्थं वा विशेषणद्वयसूचितं वा हेतुं निष्कृष्याऽऽह—परिणामेति ॥ २६ ॥

ध्रुवमृत्युमृतादिशब्दानामर्थान्तरव्युदासाय प्रकृतोपपादकं जातस्येत्यादिकं व्याख्याति—उत्पन्नस्येत्यादि। उपलभ्यत इति हिशब्दसूचितप्रमाणप्रसिद्धिरुच्यते। हेतुपरत्वेऽपि हिशब्दस्या-

जन्मावर्जनीयम्। कथमिदमुपलभ्यते विनष्टस्योत्पत्तिरिति। सत एवोत्पत्तेरुपलब्धेः। असतश्चानुपलब्धेः। सत्यम्। उच्यते—उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः। तन्तुप्रभृतीनि द्रव्याणि सन्त्येव रचनाविशेषयुक्तानि पटादीन्युच्यन्ते। *असत्कार्यवादिनाऽप्येतावदेवोपलभ्यते। न हि

र्थोत्पत्तिसिद्धिः। मृतस्य जन्मव्याघाताभिप्रायेण चोदयति—कथमिति। यदि केवलमौपदेशिकोऽयमर्थः स्यात्तथा(दा)ऽभ्युपगम्येत। अत्र तु जातस्य हीति लोकसिद्धानुवादेनोच्यते। लोके च प्रागसत एवोत्पत्तिर्दृष्टा। न तु कदाचिदुत्पन्न निरुद्धस्य। यदि च नष्टं पुनर्जायेत तदा दुःखात्यन्तनिवृत्तेरशक्यत्वादपवर्गशास्त्रमखिलमप्रमाणं स्यात्। व्याधिशत्रुविजयादिप्रयासश्च निरर्थकः स्यात्। पुत्रादिमरणे च न शोचनीयम्। अतो नेदमुपपत्तिमदिति भावः। परिहरति—सत एवेति। नन्विदमुभयमप्ययुक्तम्। सत उत्पत्तिर्निरपेक्ष्यात्, प्रागसतामेव च घटादीनामुत्पत्तिदर्शनादित्याशङ्क्याऽऽह—उत्पत्तीति। निदर्शयति—तन्तुप्रभृतीनि हीति। अत्य(न्य)तन्तुसंयोगात्पूर्वं दीर्घैकतन्त्वारब्धे च त्वयाऽप्येवमिष्यत इति भावः। उक्तं च नारायणाचार्यैः—एकस्माद्दीर्घतमात्तन्तोः पटादेरुत्पत्तिर्दृष्टेति। असत्कार्यवादिनं प्रति किमवयवीति कश्चिदवयवसमुदायातिरिक्तः पदार्थो दृश्यते कल्प्यते वेति विकल्पमभिप्रेत्य प्रथमकल्पे दूषणमाह—असदिति। एतावत्—रचनाविशेषयुक्तमा-

* नैयायिकानां मतमेतत्। इह कार्यकारणभावे चतुर्धा विप्रतिपत्तिः संभवति असतोऽसज्जायते, असतः सज्जायते, सतोऽसज्जायते, सतः सज्जायत इति। तत्रासतोऽसज्जायत इति पक्षोऽत्यन्तासंभवदुक्तिकत्वात्त्याज्यः। अवशिष्टपक्षत्रयमध्ये चतस्रो विधाः प्रसरं लभन्ते। असतः सज्जायत इति सौगताः संगिरन्ते। सतः सज्जायत इत्यत्र पक्षद्वयम्। सतो विवर्तः कार्यजातं न वस्तुसदिति वेदान्तिनः संप्रतिपद्यन्ते। सांख्याः पुनः सतः सज्जायत इति। सतोऽसज्जायत इति नैयायिकादयः। सतो विद्यमानात्कारणादसद्विद्यमानं कार्यं जायत उत्पद्यत इति तदर्थः। यथा मृत्पिण्डाद्विद्यमानादविद्यमानो घटो जायते। सोऽयमसत्कार्यवादः।

१ ख. घ. °त्पत्तिरुपलब्धा। अ°। ङ. °त्पत्युप°। २ ग. घ. °न्ते। स°। ३ ख. ग. घ. ङ. °ना चैतदे°।

अत्र काणादाः प्राहुः—न कारणात्कार्यमनन्यद्भवितुमर्हति । विभिन्नबुद्धिबोध्यत्वात् । न खलु तन्तुपटमृत्पिण्डघटादिषु कार्यकारणविषया बुद्धिरेकरूपा भवति । शब्दभेदाच्च । कार्यकारणविषयकः शब्दो भिद्यते । कार्यशब्दः पटः कारणशब्दस्तन्तव इति । न हि तन्तवः पट इत्युच्यन्ते, पटो वा तन्तव इति कार्यभेदाच्च । अन्यत्कार्यं कारणस्यान्यत्कार्यं कार्यस्य । मृत्पिण्डेन कुड्यं निर्मीयते । घटेन हि जलमाह्रियते । न मृत्पिण्डकार्यं घटेन साध्यते । न चापि घटकार्यं मृत्पिण्डेन संपाद्यते । कालभेदाच्च । कार्यकारणयोः कालो भिद्यते । कारणस्य तन्त्वादेः पूर्वकालिकत्वम् । कार्यस्य पटादेश्चोत्तरकालिकत्वम् । आकारभेदाच्च । अन्यः कारणाकारोऽन्यश्च कार्याकारः । पिण्ड आकारः कारणस्य पृथुबुध्नोदरादिकं हि कार्यस्य । कारकव्यापारवैयर्थ्याच्च । यदि कारणमेव कार्यं नान्यत्तदा किं कारकव्यापारेण साध्यं भवेत् । कारकव्यापारात्प्रागपि कार्यस्य सत्त्वेन कारकव्यापारवैयर्थ्यं स्यात् । अथ कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यक्तिमात्मन आसादयतीत्येतावता कारकव्यापारोऽर्थवानिति चेद्घटाभिव्यक्तये प्रयुक्तेन कारकव्यापारेण शरावादेरप्यभिव्यक्तिः कुतो नेति वद । न हि संप्रतिपन्नाभिव्यञ्जकभावेषु दीपादिषु अनेनायमेवाभिव्यज्यतां नायमिति नियमो दृष्टचरः । किंतु ‘ घटायोन्मीलितं चक्षुः ’ इति न्यायेन घटार्थमारोपितो दीपः शरावादीनपि अभिव्यनक्ति । तस्मादसत्कार्योत्पत्तिहेतुत्वेनैव कारकव्यापारोऽर्थवान् । अतः सत्कार्यवादोऽसंगत इति ।

अत्र भवान्प्रष्टव्यः—किं कार्येण कारणं संबद्धं सत्तज्जनयति आहोस्विदसंबद्धम् । संबद्धमित्युच्यते चेन्नासत्कार्यमपि तु तत्सत्त्वं तव गले पतितम् । यतः सतोरेव घटपट संबन्ध इति नियमो नासतोः । अथ कार्यसत्त्वापत्तिपरिजिहीर्षयाऽसंबद्धमिति ब्रूषे तदा मृदः कारणाद्घटादिवदसंबद्धत्वाविशेषात्पटादयोऽप्युत्पद्येरन् । यस्मान्मृदा कारणेन न घटः संबद्धो नापि पट इति सर्वं कार्यजातं सर्वस्माज्जायेत । न हि लोके तन्तुभ्यः पटोत्पत्तिवद्घटादय उत्पद्यमाना दृष्टाः । तदुक्तं सांख्याचार्यैः—

असत्त्वान्नास्ति संबन्धः कारणैः सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

अस्यार्थः—सत्त्वं सत्ता तस्याः सङ्गः संबन्धः सोऽस्ति येषां तैः सत्तासंबद्धैरित्यर्थः । विद्यमानैरिति यावत् । तादृशैः कारणैः कार्यस्य संबन्धो नास्ति कार्यस्यासत्त्वादित्यर्थः । एतेन ‘ सतोरेव संबन्धः ’ इति नियमः सूचितः । ननु असत्त्वात्कार्यस्य कारणेन साकं संबन्धो माऽस्तु नाम कार्यासंबद्धमेव कारणं तज्जनयेदिति चेत्—कारणासंबद्धस्य कार्यस्योत्पत्तिमिच्छसि चेत्तव मते मृदः सकाशाद्घटादिभिरेवोत्पत्तव्यं न पटाभिरेवं तन्तुभ्यः पटादिभिरेव भवितव्यं न घटादिभिरित्येवं व्यवस्था न सिध्येत् । किंतु सर्वस्मात्सर्वं जायेतेत्यर्थः । न च लोके सर्वस्मात्सर्वं कार्यं समुत्पद्यमानं दृश्यत इति ।

अथाऽव्यवस्थादोषपरिहाराय कार्यासंबद्धमपि कारणं तदेव जनयति । यस्मिन्यस्य शक्तिर्भवति । शक्तिश्च कार्यदर्शनेनोन्नयनीया, अत्रैतच्छक्तमिति स्वी कुरुषे चेत्तदेतदङ्गीकृत्य ब्रूमः—तिलेषु विद्यमाना तैलजननशक्तिः सा किं तैलेन संबद्धा वाऽसंबद्धा वा । आद्ये कार्यस्य सत्त्वमायातम् । द्वितीये तैलजननशक्तिरिति निरूपयितुमशक्यम् । न हि कार्यस्यासत्त्वेऽसंबद्धत्वाविशेषात्तिलास्तैलजनन एव शक्ता न घटपटादिजनन इति निश्चय उपपद्यते ।

किंच नियतकारणोपादानं कार्यस्य सत एवोत्पत्तिं दर्शयति । यद्यसत्कार्यं तर्हि घटाय नियमेन मृदेव कारणत्वेन किमिति उपादीयते पटार्थं तन्तवश्च । तन्तुषु पटो नास्ति मद्यपि च घटो नास्तीति कृत्वा कस्मैचित्किंचिदुपादीयताम् । घटाय तन्तवः पटाय च मृत् । नैवं लोके दृश्यते । तस्मात्कार्यकुशलः पुमान्कारणे कार्यस्य सत्त्वं मनस्यनुसंधायैव तत्तत्कार्याय तत्तत्कारणं नियमेनोपाददाति । ततश्च सत्कार्यवाद एव समापतति ।

अपिचासदुत्पद्यत इति दुर्वचम् । उत्पत्तिर्नाम सत्तासंबन्धः । विप्रतिषिद्धमिदमभिधीयते यत्पूर्वमेवासत्कारकव्यापाराच्च सदिति । न ह्यसच्छशविषाणं चतुरतरेण कारकव्यापारसहस्रेणापि कर्तुं शक्यम् । न हि बुद्धिविशेषशालिनाऽपि यत्नतः कोटिवारं संपीडनेनापि वालुकाभ्यस्तैलं निष्पाद्यते । न हि नीलं निपुणतमेनापि पीतं कर्तुं पार्यते । तस्मात्कारकव्यापारात्प्रागपि सदेव कार्यं सतश्चाभिव्यक्तिरुपपद्यते । यथा संपीडनेन तिलेषु तैलस्य दोहनेन सौरभेयीषु पयसः । असतः कारणे किमपि निदर्शनं न पश्यामः ।

श्रुतावपि कारणात्कार्यस्यानन्यत्वमेव प्रतिपादितम् । तथा हि कारणभूतब्रह्मविज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण 'कथं नु भगवः स आदेशः' इत्यन्यज्ञानेनान्यज्ञाततासंभवः कथमिति चोदिते तस्य संभवदुक्तिकत्वप्रदर्शनाय दृष्टान्तापेक्षायामिदमुच्यते—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा० ६।१४) इति । एतदुक्तं भवति—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन तद्विकारभूतं तस्मादनतिरिक्तं घटशरावोदञ्चनादिकं कार्यजातं मृदात्मकत्वाविशेषाद्विज्ञातं भवेदिति । अत्र यद्यपि मृत्पिण्डज्ञाने जाते घटे दृष्टेऽयं घट इति ज्ञानं न भवति अतः कथं घटशरावादिकं विज्ञातं स्यात्तथाऽप्ययं न दोषः । मृत्पिण्डज्ञानेन घटो हि विज्ञातो भवत्येव । घटे 'अयं घटः' इति यज्ज्ञानं तज्ज्ञानमित्युच्यते । घट एव 'इयं मृत्' इति यज्ज्ञानं तद्विज्ञानमित्युच्यते । विशिष्टं ज्ञानं विज्ञानम् । यद्यपि घटज्ञाने जाते जलाहरणादिकार्यं कर्तुं शक्यते तथाऽपि न तद्विज्ञानम् । ज्ञाने विशिष्टत्वं च सूक्ष्मदृष्ट्या कार्यविशेषकरत्वम् । यथा वृक्षे ज्ञाते तदधो विश्रान्तिः । परं तु तस्मिन्नेव वृक्षेऽमुकौषधिरित्येवं ज्ञाते

तत्र तन्तुसंस्थानविशेषातिरेकेण द्रव्यान्तरं प्रतीयते। कारकव्यापारनामा-

न्नमित्यर्थः। वादिनोपलभ्यत इति पदाभ्यां वाङ्मनसविसंवादमभिप्रैति। एतावदेवेत्युक्तमर्थं प्रपञ्चयति—नहीति। द्वितीयकल्पं दूषयति—कारकेति। यदि सांख्यवद्द्रव्यमपि सर्वस्याप्यनागन्तुकत्वं वदामस्तदा भवेदेव कारकव्यापारादिनैरर्थक्यादिदोषः। वयं हि द्रव्याणां सर्वेषामनागन्तुकत्वं तदवस्थानां चाऽऽगन्तुकत्वं

रोगविनाशादिकं विशिष्टं कार्यं क्रियते। जलाहरणादि तु न तथा किंतु मृद्रूपेण क्रियमाणमेव तथा। यतो घटो विनष्टो वाऽविनष्टो वा सच्छिद्रो वाऽच्छिद्रो वा नूतनो वा जीर्णो वा सर्वदा तत्कर्तुं शक्यते न जलाहरणादि। एवं च मृत्तिकारूपेण घटज्ञानं जातमेव। अत्र निरुक्तकाणादवादेन कारणात्कार्यस्य द्रव्यान्तरत्वमाशङ्क्येत तन्निरासार्थं कारणानन्यत्वमुपपादयति भगवती श्रुतिरेव वाचाऽऽरम्भणमित्यादिना। आरम्यत आलभ्यते स्पृश्यत इत्यारम्भणम्। 'कृत्यल्युटो बहुलम्' (पा० सू० ३।३।११३) इति कर्मणि ल्युट्। वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः। घटेनोदकमाहरेत्यादिवाक्पूर्वको ह्युदकाहरणादिव्यवहारस्तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशेषस्तत्प्रयुक्तं च घट इत्यादि नामधेयं स्पृश्यते। उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति। अतो घटाद्यपि मृत्तिकेत्येव सत्यं मृत्तिकाद्रव्यमित्येव सत्यं प्रमाणेनोपलभ्यत इत्यर्थः। न तु द्रव्यान्तरत्वेन। अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण नामान्तरभजनव्यवहारविशेषादय उपपद्यन्ते। यथैक एव सन्देवदत्तोऽवस्थाभेदेन बालो युवा स्थविर इति नामान्तराणि भजते कार्यविशेषांश्च करोति तद्वत्।

किंच 'भावे चोपलब्धेः' (ब्र० सू० २।१।१५) इति सूत्र उपपादितरीत्या कार्यकरणयोरनन्यत्वं प्रत्यक्षमेवोपलभ्यते। न ह्यसत्कार्यवादिना त्वयाऽपि तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो नाम कार्यं किंचिदुपलभ्यते किंतु केवलमातानवितानवन्तस्तन्तव एव प्रत्यक्षमुपलभ्यन्ते। अतो न परमार्थतः कारणव्यतिरिक्तं कार्यं नाम किंचिद्वस्त्वस्ति। एतावता प्रबन्धेन स्पष्टमेव कार्यकारणयोरनन्यत्वमुपलभ्यत इत्यसत्कार्यवादस्यापसिद्धान्तत्वात्सत्कार्यवाद एव सिद्धान्तसंमतः। तदुक्तम्—

असदकरणादुपादानग्रहणात्सर्वसंभवाभावात्।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥ इति।

१ ख. ग. घ. ङ. °ण पदार्थान्त°।

न्तरभजनव्यवहारविशेषाणामेतावतैवोपपत्तेर्न च द्रव्यान्तरकल्पना युक्ता। अत उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः । उत्पत्त्याख्यामवस्थामुपयातस्य द्रव्यस्य तद्विरोध्यवस्थान्तरप्राप्तिर्विनाश इत्युच्यते ।

---

ब्रूमः । घटादिवत्प्रदीपादिष्वपि अवस्थान्तरापत्तिरनुमीयते । चूर्णितविशीर्णघटस्येव तु सूक्ष्मावस्थाप्राप्त्याऽनुपलम्भः । अतो न कश्चिद्दोष इति भावः । व्यवहारविशेषोऽत्रोदकाहरणादिरभिमतो नामान्तरभजनस्य पृथगुक्तत्वात् । एतेन कारणसंख्यापरिमाणबुद्धिसंस्थानादिभेदः पूर्वोक्तिरत्वनष्टत्यादिरपि निर्व्यूढः। द्रव्यान्तरत्वकल्पनायां गुरुत्वान्तरकार्यादिप्रसङ्गस्यावयवावयविगुरुत्वयोरन्यतरप्रतिबन्धादिना निर्वाहश्चातिक्लिष्ट इत्यभिप्रायेणाऽऽह–न द्रव्यान्तरेति । आहुश्च–

यदि द्रव्यान्तरं कार्यं कारणेभ्यो भवेदिह ।
गुरुत्वमतिरिच्येत कार्ये तच्च न दृश्यते ।
द्विपलं घट इत्येतद्व्यपदेशो न युज्यते ॥ इति ।

निगमयति—अत इति । तावत एवोपलम्भादन्यस्यानुपलम्भात्कल्पकानां चान्यथैवोपपन्नत्वादित्यर्थः । ननु भवतु नामोत्पत्तिर्द्रव्यस्यावस्थाविशेषः । विनाशस्त्वभावरूपस्तद्विरुद्धश्च कथं तदवस्थेत्युच्यत इत्यत्राऽऽह–उत्पत्त्याख्यामिति । अयमभिप्रायः–न तावदभावाख्यं किंचित्पदार्थान्तरं विविच्योपलभामहे । नापि नास्तिव्यवहारादिना कल्पयितुं युक्तम्। उभयसंप्रतिपन्नावस्थान्तरादिनैव तन्निर्वाहात् । न च श्यामावस्थाप्रहाणेन रक्तावस्थापरिग्रहे घटनाशव्यवहारप्रसङ्गः। कपालाद्यवस्थावद्रक्तावस्थाया घटावस्थाविरोधित्वस्य भवताऽप्यनभ्युपगमात् । न च भावत्वेनैकराश्यनुप्रविष्टानां विरोधो न युज्यत इति वाच्यम् । तेजस्तिमिरशीतोष्णतृणदहनादीनां भावानामेव सहानवस्थानवद्घातुकत्वलक्षणविरोधदर्शनादभावस्य च भावत्वस्वीकारात् । अन्यथा पदार्थत्वेनैकराशेरभावस्यापि भावविरोधो न कथंचिदुपपद्यते । तदेवं विरोध्युत्तरावस्था प्रध्वंसः। विरोधिपूर्वावस्था प्रागभावः। वस्त्वन्तरगतासाधारणविरोधिधर्म एव समानाधिकरणव्यधिकरणनिषेधभेदेनान्योन्याभावोऽत्यन्ताभावश्च । देशकालसंभेदविशेषस्त-

मृद्द्रव्यस्य पिण्डत्वघटत्वकपालत्वचूर्णत्वादिवत्परिणामिद्रव्यस्य परिणा-

स्कृतावस्थाविशेषो वा संसर्गाभावः । प्रतियोग्यादिभेदाच्च पितृत्वपुत्रत्वादिव्यवहारवदस्तिनास्तीत्यादिव्यवहारवैचित्र्यमिति । ननु यदि कपालत्वाद्युत्तरावस्थाप्राप्तिर्विनाशस्तर्हि कपालविनाशे घटविनाश एव विनष्टः स्यादिति चूर्णावस्थायां घटोन्मज्जनप्रसङ्गः । यदि च पिण्डावस्था घटप्रागभावस्तदा पिण्डीकारात्पूर्वं प्रागभावाभावाद्घटसिद्धिर्घटात्यन्ताभावो वा स्यादित्यत्राऽऽह—मृद्द्रव्यस्येति । अयमभिप्रायः—न तावदेकैव कपालत्वावस्था घटत्वावस्थाविरोधिनी, चूर्णत्वाद्यवस्थानामपि तद्विरोधित्वात् । भावरूपं प्रध्वंसमभ्युपगच्छतोऽपि विरोध्यवस्थापरम्पराऽवर्जनीया । ततः कपालत्वचूर्णत्वादीनां विरोध्युत्तरावस्थात्वाविशेषात्तासु सर्वास्ववस्थासु घटविनाशव्यवहारोपपत्तिः । एवं प्रागभावेऽपि विरोधिपूर्वावस्थापरम्परया निर्वाहः । एवमनभ्युपगमेऽतिरिक्ताभावपक्षेऽप्युक्तदोषो दुर्वारः । तत्रापि हि यदि घटाख्यं द्रव्यं घटप्रागभावनिवृत्तिस्तर्हि घटनिवृत्तौ घटप्रागभावनिवृत्तिरेव निवृत्तेति पुनर्घटप्रागभावोन्मज्जनप्रसङ्गः । तथा सति मध्ये प्रागभावस्य विच्छेदायोगाद्घट एव न स्यात् । प्रागभावस्य च सामग्रीसंपत्तौ भावतिरस्कृतत्वात्प्रागुक्ता एव घटव्यक्तेः पुनरुन्मज्जनं स्यात् । एवं यदि प्रध्वंसस्य घट एव प्रागभावस्तदा घटोत्पत्तेः पूर्वं प्रध्वंसप्रागभावाभावात्पिण्डावस्थायां घटप्रध्वंसः स्यात् । तथा च सति घट एव कदाचिदपि नोत्पद्येत । स्वप्रध्वंसे वर्तमाने स्वोत्पत्त्ययोगात् । अन्यथा कपालाद्यवस्थासामपि तदुन्मज्जनप्रसङ्गात् । एवं च पिण्डावस्थायां घटविनाशप्रसङ्गेऽपि विनाशस्य भावोत्तरकालत्वात्पिण्डात्प्रागेव घटसिद्धिः स्यात् । ततश्च तत्सिद्धिनाशकालयोर्द्वयोरपि कारकव्यापारानर्थक्यं स्यादित्यादि दूषणशतं देयम् । अतः सुष्ठूक्तम्—विरोध्यवस्थापरम्परैव प्रागभावप्रध्वंसाविति । पिण्डत्वघटत्वेत्यादिना—' मृद् घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः ' इति भगवत्पराशरवचनं स्मारयति । तत्र हि प्रकरणे नास्त्यवस्त्वसत्यादिशब्दानामवस्थान्तरापत्तिनिबन्धनत्वं स्पष्टम् । व्याख्यातं च शारीरकभाष्ये ।

मपरम्पराऽवर्जनीया। तत्र पूर्वावस्थस्य द्रव्यस्योत्तरावस्थाप्राप्तिर्विनाशः। सैव तदवस्थस्योत्पत्तिः। एवमुत्पत्तिविनाशाख्यपरिणामपरम्परा परिणामिनो द्रव्यस्यापरिहार्येति न तत्र शोचितुमर्हसि ॥ २७ ॥

सतो द्रव्यस्य पूर्वावस्थाविरोध्यवस्थान्तरप्राप्तिदर्शनेन योऽल्पीयाञ्छोकः सोऽपि मनुष्यादिभूतेषु न संभवतीत्याह—

---

नन्वेवमपि 'जातस्य हि ध्रुवो मृत्युः' इत्येतावदुपपद्यताम्। उत्पन्नघटादेर्नाशदर्शनात्। ध्रुवं जन्म मृतस्य चेति तु नोपपद्यते। नष्टस्य घटादेः पुनरुत्पत्त्यदर्शनात्। न च पुनरुत्पत्तिरस्य शोकनिमित्तं येन तस्यावर्जनीयत्वं प्रतिपाद्येतेत्यत्राऽऽह—तत्रेति। अयमभिप्रायः—यदवस्थस्य द्रव्यस्य विनाशः, न तदवस्थस्यैव पुनरुत्पत्तिरुच्यते। किंतु तस्यैव द्रव्यस्यावस्थान्तरविशिष्टस्य। एकमेव हि द्रव्यं घटाकारेण नष्टं कपालाकारेणोत्पद्यते। एकैव हि कपालावस्था घटावस्थस्य द्रव्यस्य नाशः कपालावस्थस्य तस्यैवोत्पत्तिः। अत एवोपपन्नं नष्टस्यैवोत्पत्तिरिति सैवोत्तरावस्थाप्राप्तिरित्यर्थः। अत्र प्राप्तिशब्देन प्रथमक्षणागमस्य विवक्षितत्वादुत्तरेषु क्षणेषूत्पत्तिशब्दप्रयोगाभाव उपपन्न इति सूचितम्। एवं सति पुनरुत्पत्तेरवर्जनीयत्वप्रतिपादनं च नाशावर्जनीयत्वप्रतिपादनमेव। तत एव शोकापनोदनार्थताऽपि युक्ता। यद्वा यदीदमचिद्द्रव्यं नष्टमिति शोचसि तर्हि तदेव हि द्रव्यं तदुत्तरावस्थं तथोत्पन्नमिति किं न प्रीयस इति भावः। एकस्यैव परिणामस्य निरूपणभेदादुत्पत्त्याख्या विनाशाख्या चेति उत्पत्तिविनाशाख्यपरिणामेत्युक्तम्। एवं प्रलयापेक्षया सृष्टेर्विनाशत्वेऽपि पुरुषार्थयोगायोगादिविवक्षया व्यवहारव्यवस्था। परिणामिन इति अपरिहार्यत्वकारणं तत्स्वभावत्वमुक्तम्। इतिशब्देन निपदर्शितार्थपदं हेत्वभिप्रायमिति व्यञ्जयति। एवमपरिहार्यत्वेनाप्यस्यार्थः। नुशोचनीयत्वमुक्तम् ॥ २७ ॥ -स्वेतरेति।

अथ तत्तद्वस्तूनां प्रतिनियतस्वभावेन पूर्वोत्तरावस्थायां शोकमारूपत्वदुःखरूपत्वयोरन्यतरविवेकानर्हानुपलम्भदशापत्त्या चेतमिति

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

मनुष्यादिभूतानि सन्त्येव द्रव्याण्यनुपलब्धपूर्वावस्थान्युपलब्धमनुष्यत्वादिमध्यमावस्थान्यनुपलब्धोत्तरावस्थानि तेषु तेषु स्वभावेषु वर्तन्त इति

शोचनीयत्वमुच्यते–अव्यक्तादीनीति । भूतशब्दस्यात्र देहपरत्वार्थमुक्तम्—मनुष्यादीति । अव्यक्तव्यक्तशब्दानां प्रकृत्यवस्थाविशेषादिपरत्वभ्रमव्युदासाय यादवप्रकाशोक्तसद्ब्रह्मादिपरत्वस्य च प्रकृतानुपयोगज्ञापनायोक्तम्—अनुपलब्धेत्यादि ।

*अदर्शनादिहाऽऽयातः पुनश्चादर्शनं गतः ।
नासौ तव न तस्य त्वं वृथा किमनुशोचसि ॥

इति ह्यन्यत्राप्युच्यते । स्वेषु स्वभावेषु वर्तन्त इति । अयमभिप्रायः–न तावदेषा द्रव्याणां मनुष्यत्वादिव्यक्तावस्था [ स्व ]-भावः संहतिविशेषादिसाध्यत्वात्, नाप्यव्यक्तपूर्वोत्तरावस्था, तस्या अपि विभागादिसाध्यत्वात् । अतः सामान्यतः परिणामित्वमात्रं स्वभावः । ततश्च यथा परिणामिनो द्रव्यस्याव्यक्तपूर्वावस्था न व्यक्तमध्यमावस्था च शोकनिमित्तम्, एवमुत्तरावस्थाऽपि । एवकारोऽत्रावर्जनीयत्वपरः स्वभावप्राप्तपरो वा । यद्यव्यक्तावस्थैव स्वभाव इति मनुषे तदा स्वभावपरित्यागलक्षणमनुष्यत्वाद्यवस्थैव शोचनीया । यदि पुनर्मनुष्यत्वावस्थैव स्वभावः प्रतिबन्धकव(व)शादव्यक्तावस्थेति मन्वीथास्तथाऽपि प्रतिबन्धकस्यावर्जनीयत्वादागन्तुकस्य तस्य कदाचिदपगमे पुनर्मनुष्यत्वादिसिद्धेश्चायत्नलभ्यत्वाच्च कथंचिदपि शोचनीयम् । यदि तु स्वभाव एव वस्तूनां सामान्यतः शोकनिमित्तं तर्हि प्रतिना[...]अनादिकालविचित्रस्वभावानन्तवस्तुसंततेर्जगति सर्वस्य सर्वथा दुःखशतं देयम्[...]येव निमज्जनमिति नेदानीं विशेषतः शोकनिमित्तमस्ति ।

१ ख. ग. घ. °लब्धान्ताव° ।

विति । पिण्ड[...]
कपालिकाच[...]

यति । तत्र भारते स्त्रीपर्वणि जलप्रदानिकपर्वणि द्वितीयाध्याये–अदर्शनादापतिताः पुनश्चादर्शनं[...]रापत्तिनिवन[...] तेषां त्वं तत्र का परिदेवना । इति पाठः ।

न तत्र परिदेवनानिमित्तमस्ति ॥ २८ ॥

एवं शरीरात्मवादेऽपि नास्ति शोकनिमित्तमित्युक्त्वा शरीरातिरिक्त आश्चर्यस्वरूप आत्मनि द्रष्टा वक्ता श्रोता श्रवणायत्तात्मनिश्चयश्च दुर्लभ इत्याह—

आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥

एनमुक्तस्वभावं स्वेतरसमस्तवस्तुविसजातीयतयाऽऽश्चर्यवदवस्थि-

---

औपाधिकस्यापि सुखहेतोर्वियोगाच्छोकस्तदा दुःखहेतूनां शत्रुप्रभृतीनां भैक्षचर्यादेश्च परमार्थतः शोकनिमित्तत्वं न तु सुखहेतोः शत्रुनिरसनस्य सार्वभौमत्वादेर्वा। अथ सुखदुःखहेतोः स्वशरीरादेर्नाशाद् बिभेषि तर्हि महाबाहुना भारतेन त्वया जिघांसूनां संनिधौ यथाशक्ति व्यापारेण स्वशरीरादिरक्षणं कार्यम्। यदि च बन्धुवाधादिनिमित्तलोकापवादादेर्भीतिस्तदा समर्थस्य ते बन्धुसंरक्षणाद्यभावनिमित्तो महीयानपवादः स्यात्। भीरुत्वादिनिमित्तमरणातिरिक्ता चाकीर्तिः स्यात्। न चायं दुस्त्यजशीतातपादिसांस्पर्शिकदुःखवच्छोकः किं तु अविचारितरमणीयाभिमानमूलतया तच्छिष्टस्त्वया परिहार्यः। अत एव देहात्ममोहमहाग्रहगृहीतस्त्वं लोकायतसमयरहस्यतत्त्वविचारेणापि न कथंचिदपि शोचितुमर्हसीति परिदेवना का किंनिमित्तेत्यर्थः। तदिदमुक्तम्—न तत्र परिदेवनानिमित्तमस्तीति ॥ २८ ॥

एवमन्वारुह्यवादपरिसमापनेन पूर्वोक्तं स्वसिद्धान्तमेव देहात्ममोहमूलदुरितावलीमलीमसे जगति तदधिकारिदुर्लभत्वादिकथनेन प्रशंसतीत्याह—एवमिति। कतिपयपदविशेषितोऽयमौपनिषद एवाऽऽश्चर्यवदित्यादिश्लोकः। एवमुक्तस्वभावमित्येनमित्यस्यार्थः। अव्यक्तोऽयमित्यादिनोक्तं वैजात्यमाश्चर्यत्वहेतुतयाऽऽह—स्वेतरेति। आश्चर्यवच्छब्दस्य पश्यत्यादिक्रियाविशेषणभ्रमव्युदासायोक्तमाश्चर्यवदवस्थितमिति। आत्मनो वैलक्षण्यकथनमेवात्रोचितमिति

तमनन्तेषु जन्तुषु महता तपसा क्षीणपाप उपचितपुण्यः कश्चित्पश्यति । तथाविधः कश्चित्परस्मै वदति । एनं कश्चिदेव शृणोति । श्रुत्वाऽप्येनं यथावदवस्थितं तत्त्वतो न कश्चिद्वेद । चकाराद्द्रष्टृवक्तृश्रोतृष्वपि तत्त्वतो दर्शनं तत्त्वतो वचनं तत्त्वतः श्रवणं दुर्लभमित्युक्तं भवति ॥ २९ ॥

---

भावः। एतेन कर्तृदृष्टान्ततया शंकरोक्तं योजनान्तरमपि दूषितम् । कश्चिदिति निर्धारणार्थमाह—अनन्तेष्विति । ज्ञानेन हीनानां नराणां पशुभिः समत्वप्रदर्शनायोक्तम्—जन्तुष्विति । कश्चिदित्यस्य तात्पर्यार्थमाह—महतेति। तथा चोच्यते—'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति । अन्यशब्दोऽत्र पूर्वोत्तरवाक्यगतकश्चिच्छब्दसमानार्थः । परस्मा इत्यर्थलब्धोक्तिः । श्रुत्वाऽपि न वेदेत्युक्ते व्याघातशास्त्रानारम्भादिदोषः स्यादित्याशङ्क्योक्तम्—यथावदवस्थितं तत्त्वत इति । प्रामाणिकसमस्ता[ का ]रयुक्तमनारोपितेन प्रकारेणेत्यर्थः । तत्त्ववादिनोऽत्र दुर्लभत्वमात्रे तात्पर्यम् । श्रुत्वाऽपीत्यादिवाक्यस्थचकारस्यानुक्तसमुच्चयार्थत्वं तत्समुच्चेतव्यानि चाऽऽह—चकारादिति । देहातिरिक्तस्याऽऽत्मनो द्रष्टैव तावद्दुर्लभः किमुत यथावस्थितद्रष्टा, तथाविधेषु सत्स्वपि वक्तैव दुर्लभः किमुत सकलरहस्यवक्ता, तादृशेषु सत्स्वपि श्रोतैव दुर्लभः किं पुनर्बाह्यान्तरसकलशिष्यगुणसंपत्तितया यथावस्थितश्रोता त्वादृश इत्यभिप्रायः। प्रथमं श्रवणम् । ततो मननाच्छ्रवणायत्तात्मनिश्चयः। ततश्च वचनयोग्यता। तत्रापि चिराभ्यासादिना यथावस्थितवचनयोग्यता । ततश्च निदिध्यासनाद्दर्शनम्। ततोऽपि रत्नतत्त्ववच्चिरनिरीक्षणसंस्कारात्सविशेषदर्शनमिति वा क्रमः । अत्र देहातिरिक्तश्चेदात्मा किं तथा नोपलभ्यत इतिशङ्कापाकरणाय दुर्ज्ञानत्वकथनम् । सर्वैर्ज्ञातुमशक्ये वस्तुनि किं त्वामेकमुपलभ इति भावः ॥ २९ ॥

अथ यथा देवादिस्थावरान्तेषु भूतेषु देहांशे जातिगुणदेशकालदुर्भेदत्वसुभेदत्ववैषम्यमुपलभ्यते तद्वद्देहिन्यपि सुखित्वदुःखित्वादिवैषम्यं दृश्यते । देवादिशब्दाश्च देवत्वादिविशिष्टात्मपर्यन्ताः, सर्वमेवं नित्यत्वानित्यत्वादिलक्षणवैषम्यमपि संभाव्येतेति-

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

सर्वस्य देवादिदेहिनो देहे वध्यमानेऽप्ययं देही नित्यमवध्य इति मन्तव्यः। तस्मात्सर्वाणि देवादिस्थावरान्तानि भूतानि विषमाकाराण्यप्युक्तेन स्वभावेन स्वरूपतः समानानि नित्यानि च । देहगतं तु वैषम्यमनित्यत्वं च । ततो देवादीनि सर्वाणि भूतानि उद्दिश्य न शोचितुमर्हसि न केवलं भीष्मादीन्प्रति ॥ ३० ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
ध*र्म्याद्धि यु+द्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥ ३१ ॥

---

शङ्कानिराकरणायोच्यते—देहीति । वध्यमानेऽपीति सामर्थ्यानि-(नी) तमुक्तं हन्यमाने शरीर इतिवत् । अन्यथा देहे सर्वस्येत्यस्य नैरर्थक्यम् । देहीत्येतावतैव देहवर्तित्वसिद्धेः। भूतशब्दोऽत्र क्षेत्रज्ञपर्यन्तः । सर्वाणीत्यादिसूचितः शङ्काहेतुर्विषमाकाराण्यपीत्यनूदितः, देहादिभेदाच्चतत्प्रयुक्तसुखादिभेदाच्चेति शेषः । उक्तेन स्वभावेनेति । पूर्वोक्तसूक्ष्मत्वाच्छेद्यत्वादिनेत्यर्थः । नित्यानि चेति । न तु नित्यत्वानित्यत्वलक्षणवैषम्यं शङ्कनीयमित्यर्थः । देहगतं तु वैषम्यमिति । देहगतमत्र देवादिसंनिवेशवैषम्यं स्वात्मगतमपि तत्तद्देहोपाधिकधर्मभूतज्ञानावस्थाविशेषतारतम्यात्मकम् । चेतनानां देवादिशब्दैर्व्यपदेशस्तु शरीरस्यापृथक्सिद्धिमात्रनिबन्धन इति भावः । प्रकृतसंगतिज्ञापनाय सर्वाणीत्यस्य व्यवच्छेद्यमाह—न केवलं भीष्मादीन् प्रतीति ॥ ३० ॥

एवमशोच्यानन्वशोचस्त्वमित्यादिना न त्वं शोचितुमर्हसीत्यन्तेनास्थानकारुण्यमपोदितम् । अथ स्वधर्ममित्यादिना मरणा-

---

* धर्म्यादिति । धर्मादनपेतं धर्म्यम् । ' धर्मपथ्यर्थन्यायादनपेते ' [ पा० सू० ४ । ४ । ९२ ] इति पाणिनिसूत्रेण धर्मशब्दाद्यत्प्रत्यये रूपम् । + युद्धादिति । यद्यपि युद्धस्य हिंसाविनाभावात्पापहेतुत्वम्, अत एव च ' यद्यप्येते न पश्यन्ति ' इत्यादि ' नरके नियतं वासः ' इत्यन्तं पूर्वमुक्तम्, ' कथं भीष्मम्, मित्यादिना च गुरुवधाद्यकरणं तत्सर्वमधर्मप्रवृत्तयुद्धविषयकं ज्ञेयम् ।

अपि चेदं प्रारब्धं युद्धं प्राणिमारणमपि अग्नीषोमीयादिवत्स्वधर्ममवेक्ष्य न विकम्पितुमर्हसि । धर्म्यान्न्यायतः प्रवृत्ताद्युद्धादन्यन्नहि क्षत्रियस्य श्रेयो विद्यते ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

---

दतिरिच्यत इत्यन्तेन धर्माधर्मधीरपोद्यते । अपि चेति । समुच्चेतव्यहेत्वन्तरपरप्रकरणभेदद्योतनार्थः । धर्म्याद्धि युद्धादित्यादिवाक्यशेषप्रदर्शितं स्वधर्ममित्यस्य विशेष्यमाह—इदं युद्धमिति । स्वो धर्मः स्वस्य वा धर्मः स्वधर्मः । विकम्पितुमित्येतत्सामर्थ्यसिद्धमुक्तम्—प्रारब्धमिति । अधर्मधीहेतुं सामान्यनिषेधमनुवदति—प्राणिमारणमपीति । प्रलम्ब ( बलं ) विशेषशास्त्रं निषेधशास्त्रात्, निषेधस्याप्रसक्तिं वा स्मारयति—अग्नीषोमीयादिवदिति । धर्मयुद्धव्यतिरिक्तस्य कस्यचिदन्यस्य श्रेयसः क्षत्रिये स्वरूपनिषेधभ्रमं व्युदस्यन्क्षत्रियस्य प्रशस्यतरं धर्मयुद्धादन्यन्नास्तीत्येतदर्थमन्वयमाह—धर्म्यादिति । धर्म्यत्वं धर्मादनपेतत्वम् । तद्धेतुर्न्यायतः प्रवृत्तत्वम् । तच्च निरायुधनिवृत्तशरणागतादिषु शस्त्रप्रयोगाद्यभावात् । हिशब्दसूचितं वक्ष्यमाणमाह—शौर्यमिति । नन्वग्नीषोमीयादिवदित्येतदेव न संप्रतिपन्नम् । तस्यापि हिंसात्वेनाधर्मत्वस्यावर्जनीयत्वात् । न च निषिद्धत्वमुपाधिः । न हिंस्यादिति सामान्यनिषेधेन तस्य साधनव्यापकत्वात् । नापि विहितेतरत्वमुपाधिः । अविहिताप्रतिषिद्धेष्वपि तस्य विद्यमानत्वेन साध्यव्यभिचारात् । न च सामान्यनिषेधो विशेषविधिवाक्यविरोधात्संकुचितविषयः । संकोचहेतोर्विरोधस्यैवाभावात् । सामान्यविशेषवाक्ययोः प्रत्यवायक्रतुसाधनत्वपरत्वादेकस्यैव क्रतुप्रत्यवायसाधनत्वाविरोधात् । न च प्रत्यवायसाधनं न विधीयत इति वाच्यम् । हरीतकीभक्षणादिष्विव क्रत्वनुप्रविष्टप्रायश्चित्तार्हहिंसासाध्यदुःखस्याल्पतया क्रतुसाध्यसुखस्य च भूयस्तया तदुपपत्तेः । उक्तं च सांख्यैः—सा हि पुरुषस्य दोषी( ष ) मावक्ष्यति क्रतोश्चोपकरिष्यतीत्यादि । आह च पञ्चशिखाचार्यः—स्वल्पः संकरः सुपरिहरः सप्रत्यवमर्श इति ।

इति हि वक्ष्यते। अग्नीषोमीयादिषु च न हिंसा। पशोर्निहीनतरच्छागादिदेहपरित्यागपूर्वककल्याणदेहस्वर्गादिप्रापकत्वश्रुतेः संज्ञपनस्य।

न वा उ एतन्म्रियसे न रिष्यसि देवाꣳ इदेषि पथिभिः सुगेभिः।
यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु॥

इति हि श्रूयते। इह च युद्धे मृतानां कल्याणतरदेहादिप्राप्तिरुक्ता वासांसि जीर्णानीत्यादिना। अतश्चिकित्सकशल्यादिकर्माऽऽतुरस्येवास्य

---

ततोऽग्नीषोमीयवदित्यसिद्धस्यासिद्धमेव निदर्शनमुक्तमित्यत्राऽऽह—अग्नीषोमीयादिषु चेति। अधर्मसाधको हिंसात्वहेतुरसिद्धः, उपाधिश्च न पक्षव्यापकः पक्षस्याहिंसारूपत्वात्। तत एव निषेधाभावाच्चेति भावः। अहिंसात्वमेवोपपादयति—निहीनतरेति। अनर्थमापकव्यापारत्वं हिंसालक्षणम्। अत्र तु तद्विपरीतत्वेन रक्षणत्वमेव युक्तमिति मन्त्रलिङ्गेन ज्ञापयति—न वा इति। एतदिति क्रियाविशेषणम्। सुगेभिः सुगैरित्यर्थः। पिष्टपश्वादिविधिस्तु कार्तयुगधर्मनिष्ठाधिकारिविशेषनियतः। पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हतीत्यादिवचनाच्चेति भावः। अस्त्वग्नीषोमीयादौ श्रुतिबलादहिंसात्वमिह तु कथमित्यत्राऽऽह—इह चेति। अयमर्थः श्रुतिस्मृतिसिद्ध इति भावः। नन्वहिंसत्स [ नु 'न हिंस्यात्स ] र्वभूतान्यन्यत्र तीर्थेभ्यः' इत्यादिनाऽग्नीषोमीयादेरहिंसात्वं प्रतीयते, अन्यथाऽन्यत्रेति तद्व्यवच्छेदानुपपत्तेरित्यत्राऽऽह—अत इति। अयमभिप्रायः—न तावदिह दुःखजननमात्रं हिंसारक्षणरूपेषु चिकित्सकशल्यप्रयोगादिष्वपि प्रसङ्गात्। नापि प्राणवियोजनमात्रमतद्रूपेषु सर्वहरणनरकपीडादिषु हिंसाशब्दप्रयोगदर्शनात्। न चायमुपचारः। नियामकाभावात्। विपरिवर्तस्यापि दुर्वारत्वात्। अतोऽनर्थपर्यवसितस्तादात्विकदुःखजनको व्यापारो हिंसेत्येव तत्त्वमिति। ततश्चान्यत्र तीर्थेभ्य इत्येतत्पश्वादेर्भ[1] विपुरुषार्थविशेषानभिज्ञपामरदृष्ट्योक्तम्। तस्मिन्नपि विषये हिंसात्वं नास्तीत्येव तात्पर्यम्। उक्तं च मनुना—तस्माद्यज्ञे वधोऽवध इति। तत्रापि वध इति पामरदृष्ट्याऽनुवादः। अवध इति तत्त्वकथनम्। यद्यपि क्रत्वनुप्रविष्टानां सोमोच्छिष्टभ-

---

१ ख. ग. घ. °कत्वं तेषु सं°।

रक्षणमेवाग्नीषोमीयादिषु कर्मसु संज्ञपनम् ॥ ३१ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

अयत्नोपनतमिदं निरतिशयसुखोपायभूतं निर्विघ्नमीदृशं युद्धं सुखिनः पुण्यवन्तः क्षत्रिया लभन्ते ॥ ३२ ॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

---

क्षणप्रभृतीनां हिंसालक्षणवल्लक्षणान्तरेण व्यवच्छेदः शंक्यस्तथाऽपि तेषां प्रत्यवायानाधायकत्ववचनबलादेव तथात्वमङ्गीकुर्मो न पुनः क्रत्वर्थतया विधानमात्रेण । नन्वेवमुत्सर्गापवादन्यायस्य कीदृशो विषयस्तादृश एव यत्र निरवकाशविषयवाक्यविरोधादेव सावकाशसामान्यशब्दसंकोच इति निस्तरङ्गमेतत् ॥ ३१ ॥

पुनरपि प्राणिमारणस्यापि युद्धस्य प्रशंसामुखेनाधर्मभ्रममुन्मूलयति—यदृच्छयेति । यदृच्छयोपपन्नमित्यत्राहेतुत्वादिभ्रमव्युदासायाऽऽह—अयत्नोपनतमिति । प्राक्तननिरतिशयपुण्यविपाकलभ्यत्वादिदानीमयत्नोपनतत्वम् । निरतिशयसुखोपायभूतमिति । स्वर्गशब्दो हि—यस्मिन्नोष्णं न शीतम् ।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं तत्सुखं स्वर्गफला(पदा)स्पदम् ॥

इति निरतिशयसुखविशेषे व्युत्पन्नः । देशविशेषस्तु तादृशसुखभोगस्थानतया स्वर्गः । धर्माणां च स्वतो निरतिशयसुखसाधनत्वं स्वभावः । फलाभिसंध्यादिलक्षणप्रतिबन्धकवशादन्यथात्वमिति च्विप्रत्ययमप्रयुञ्जानस्य भावः । अपावृतशब्दाभिप्रेतं निर्विघ्नत्वम् । सुखिन इत्यस्य पुण्यवन्त इति प्रतिपदम् । न हि सुखमेवेदृशयुद्धलाभहेतुः । अतोऽत्र सुखशब्देन सुखसाधनं लक्ष्यत इति भावः । यद्वाऽत्र सुखशब्दः सुखयोग्यत्वलक्षणसंबन्धपरः । तद्योग्यत्वं च पुण्यवत्त्वमेवेति भावः ॥ ३२ ॥

एवं युद्धस्य धर्म्यत्वेन निरतिशयसुखसाधनत्वमुक्तम् । अथ तदकरणे प्रत्यवायमाह—अथ चेदिति । युद्धाकरणस्य ब्राह्मणा-

अथ क्षत्रियस्य स्वधर्मभूतमिमं प्रारब्धं सङ्ग्रामं मोहादज्ञानान्न करिष्यसि चेत्ततः प्रारब्धस्य धर्मस्याकरणात्स्वधर्मफलं निरतिशयसुखं विजयेन निरतिशयां कीर्तिं च हित्वा पापं निरतिशयमवाप्स्यसि ॥ ३३ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

न केवलं निरतिशयसुखकीर्तिहानिमात्रमपि तु पार्थो युद्धे प्रारब्धे पलायित इत्यव्ययां सर्वदेशकालव्यापिनीमकीर्तिं च समर्थान्यसमर्थानि

---

दीनां पापहेतुत्वाभावात्स्वंशब्दः क्षत्रियपर इत्यभिप्रायेणोक्तम्—क्षत्रियस्य स्वधर्मभूतमिति । इममिति निर्देशाभिमतमुक्तम्—आरब्धमिति । मोहात्, धर्मेऽप्यधर्मत्वभ्रमादित्यर्थः । न हि युद्धस्याकरणमात्रं क्षत्रियस्यापि प्रत्यवायहेतुः सर्वदा युद्धकरणप्रसङ्गादित्यत उक्तम्—प्रारब्धस्येति । स्वधर्मफलमिति । धर्मशब्दोऽत्र फलपरः । अन्यथा पौनरुक्त्यात् । अनुवादमात्रत्वेऽनिष्टप्रसङ्गपर्यवसानाभावाच्चेति भावः । आगामिकीर्तिविषयत्वायोक्तम्—विजयेनेति । न केवलं दृष्टादृष्टरूपनिरतिशयपुरुषार्थहानमात्रं निरतिशयदुःखहेतुभूतं पापमप्यवाप्स्यसीति वाक्यार्थः ॥ ३३ ॥

एवं दृष्टादृष्टरूपफलहानिरदृष्टप्रत्यवायश्चोक्तः । अथ दृष्टप्रत्यवायमाह—अकीर्तिं चेति । अकीर्तिरिह दुष्कीर्तिः । न केवलमित्यादौ नापि पारलौकिकनिरतिशयपापमात्रमित्यप्यनुसंधेयम् । प्रारब्धे पलायित इति । कान्दिशीकतया प्रथमव्यापारमप्यकृत्वेति भावः । अव्ययशब्देनाविनाशित्वाभिधानात्सर्वकालव्यापित्वमुच्यताम् । सर्वदेशव्यापित्वं तु कथमुच्यते । इत्थं यद्यकीर्तिः सर्वदेशव्यापिनी न स्यात्सर्वकालव्यापिन्यपि न स्यात् । कालक्रमेण संकोचाद्विच्छेदोपपत्तेरिति । यद्वा देशतः कालतश्चान्यूनत्वमेवात्राव्ययत्वं विवक्षितम् । भूतान्यपीति शब्दान्वयः । न चापीत्यनतिरिक्तार्थत्वे निष्प्रयोजनत्वं ततो भूतानीति सामान्यनिर्देशादपिशब्दान्वयबलाच्चोक्तम्—समर्थान्यसमर्थान्यपीत्यादि ।

सर्वाणि भूतानि कथयिष्यन्ति । ततः किमिति चेत्——शौर्यवीर्यपराक्रमादिभिः सर्वसंभावितस्य तद्विपर्ययजा ह्यकीर्तिर्मरणादतिरिच्यते । एवंविधाया अकीर्तेर्मरणमेव तव श्रेय इत्यर्थः ॥ ३४ ॥

बन्धुस्नेहात्कारुण्याच्च युद्धान्निवृत्तस्य शूरस्य ममाकीर्तिः कथमागमिष्यतीत्यत्राऽऽह—

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

येषां कर्णदुर्योधनादीनां महारथानामितः पूर्वं त्वं शूरो वैरीति बहुमतो

---

अकीर्तेरिष्टत्वमाशङ्क्योत्तरार्धमुच्यत इत्याह—ततः किमिति । चः शङ्कानिराकरणार्थः । अर्जुनस्य संभावितत्वहेतूनाह—शौर्येति । सर्वसंभावितस्येति । पूर्वनिर्दिष्टैः समर्थैरसमर्थैश्च भूतैः संभावितस्येत्यर्थः । ननु मरणादतिरेकः किं हेयतया, उपादेयतया वा । न प्रथमः । जीवन्भद्राणि पश्यति, आत्मार्थे पृथिवीं त्यजेदित्यादिवचनात् । न द्वितीयः प्रकरणविरोधात् । तदाह—एवं विधाया इति । जीवन् भद्राणीत्यादिकं तु क्षत्रियपुत्रस्य तेऽत्र नोपादेयम् । न चेयमकीर्तिर्लघीयसी येन मरणाच्छ्रेयसी स्यात् । किं त्वेवंविधा सर्वकालदेशव्यापिनीयं च नरकायापि स्यात् । तथैव स्मृत्यादिसिद्धत्वात् । तथा चोत्तरस्मिन्रामायणे रघुनाथवाक्यम्—

अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ।
पतत्येवाधमाँल्लोकान्यावच्छब्दः स कीर्त्यते ॥ इति ।

युद्धे मरणं तु तत एव स्वर्गाय स्यादिति भावः ॥ ३४ ॥

एवं धर्माधर्मभ्रमो निवारितः । अथास्थानस्नेहः क्षिप्यते—भयादित्यादिना । बन्धुस्नेहादिति । शूरस्य सतः स्नेहकारुण्याभ्यां निवृत्तस्य मेऽकीर्तिरेव स्यादिति भावः । येषामिति । अतिप्रसिद्धपरामर्शात्कर्णदुर्योधनादीनामित्युक्तम् । तेनापकारिवर्गं स्मारयति । यद्यपि भीष्मादयो याथार्थ्यं जानीयुस्तथाऽपि कर्णादयो न तथेति भावः । भूत्वेत्यस्य यास्यसीत्युत्तरक्रियैककर्तृत्वेन स्नात्वा होष्यामीत्यादिष्विव क्रियापेक्षया पूर्वेणापि भविष्यता कालेन संबन्धभ्रमव्युदासायोक्तम्—पूर्वमिति । बहुभिर्गुणैर्बहुत्वेन मतो हि बहुमत इत्यभिप्रायेणाऽऽह— शूरो वैरीति । यदि शूरस्त्वं प्रागपि निर्वैरो

भूत्वेदानीं युद्धे समुपस्थिते निवृत्तव्यापारतया लाघवं सुग्रहतां यास्यसि। ते महारथास्त्वां भयाद्युद्धादुपरतं मंस्यन्ते। शूराणां हि वैरिणां शत्रुभयादृते बन्धुस्नेहादिना युद्धादुपरतिर्नोपपद्यते ॥ ३५ ॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

किंच शूराणामस्माकं संनिधौ कथमयं पार्थः क्षणमपि स्थातुं शक्नुयादस्मत्संनिधानादन्यत्र ह्यस्य सामर्थ्यमिति तव सामर्थ्यं निन्दन्तः शूराणामग्रेऽवाच्यवादांश्च बहून्वदिष्यन्ति तव शत्रवो धार्तराष्ट्राः। ततोऽ-

---

यदि वैरी त्वं शौर्यरहितस्तदा महारथा न त्वां गणयेयुरिति भावः। तत्क्षणावधि वैरानुवृत्तिसूचनायोक्तम्—इदानीमिति। लाघवफलं सुग्रहता लाघवशब्देनोपचरिता। सुग्रहत्वं चात्र सुग्रहत्वाभिमानविषयत्वम्। बन्धुस्नेहादित्याद्युक्तां शङ्कां निराकरोति—शूराणां हीति। यदि शूरत्ववैरित्वयोरन्यतरन्न स्यात्तदा युज्येताप्यन्यथासिद्धिरिति भावः ॥ ३५ ॥

एवं प्राचीनमपकारं भविष्यल्लाघवारोपं चाभिधाय पुनरागामिनाऽप्यपकारेणास्थानस्नेहत्वं द्रढयतीत्यभिप्रायेणाऽऽह—किंचेति। प्रस्तुतोदन्तफलितं सामर्थ्यनिन्दाप्रकारमाह—शूराणामस्माकमित्यादिना। शूराणामग्रेऽवाच्यवादांश्च बहूनिति। शूरान्प्रति ये न वाच्याः किंतु कान्दिशीकान्प्रति, तान्पारुष्याश्लीलपरिहासादिवादानित्यर्थः। अहितशब्दोऽत्रावाच्यवादहेतुपर इत्यभिप्रायेणाऽऽह—शत्रवो धार्तराष्ट्रादय इति। यदि च भीष्मद्रोणकृपशल्यादयः किंचिद्वदेयुस्तदा शौर्यगौरवादिना सहेतापि कथं पुनरशूरैः शूराभिमानिभिर्महापकारिभिः कृतान्बहूनवाच्यवादान्सहेथा इति भावः। ननु गुणविशिष्टवाचिशब्देषु हि तरबाद्यौचित्यम्। न जात्यादिशब्देषु। न हि घटतरमित्यादिकं प्रयुज्यत इत्यत्राऽऽह—तत इति। ततोऽवाच्यवादात्, तच्छ्रवणादिति फलितम्। दुःखशब्दः प्रातिकूल्यविशिष्टवाची। प्रतिकूलतरमितिवद्दुःखतरमित्युक्तमित्यधिकतरशब्देन प्रत्ययार्थं निष्कृष्य वदतो

धिकतरं दुःखं किं तव । एवंविधावाच्यश्रवणान्मरणमेव श्रेय इति त्वमेवं मंस्यसे[1] ॥ ३६ ॥

अतः शूरेणाऽऽत्मना परेषां हननमात्मनो वा परैर्हननमुभयमपि श्रेयसे भवतीत्याह—

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

हतो वेति । धर्मयुद्धे परैर्हतश्चेत्तत एव परमनिःश्रेयसं प्राप्स्यसि ।

---

भावः । तवेति । न हि त्वं रथ्यादिपुरुषो न च समाध्यादिनिष्ठो येनात्र दुःखिता न स्यादिति भावः । किंशब्दः पूर्वश्लोकोक्तदुःखतरमरणतत्पर इत्याह—एवमिति । त्वमेव मंस्यस इति । गाण्डीवसामर्थ्यादिनिन्दाप्रसङ्गे धर्मपुत्रमपि हि भवान् ( त्वं ) हन्तुमुद्योक्ष्यसे किं पुनः कर्णादीन्, अत इदानीं निवृत्तोऽपि तदा दुःसहतरदुःखप्रेरितो युद्धं करिष्यसीति हृदयम् ॥ ३६ ॥

हतो वेति श्लोकं पूर्वश्लोकवाक्यशेषतयाऽवतारयति—अत इति । उभयथाऽपि तव लाभ इति भावः । + प्राप्स्यसे भोक्ष्यस इत्यर्जुनं प्रत्यभिधानेऽपि शूरस्येत्यादिसाधारणाभिधानं भीष्माभिहननस्य तच्छ्रेयोहेतुतया शोकहेतुत्वं नास्तीति ज्ञापनार्थं श्रेयस इत्यनेन यथेच्छं स्वर्गराज्यादिसुखापवर्गान्संगृह्णाति । नहि हतत्वमात्रात्पुरुषार्थ इत उक्तम्—धर्मयुद्ध इति । तत एवेति । श्रेयःसाधनतया शास्त्रसिद्धहननादेवेत्यर्थः । परमनिःश्रेयसमिति । स्वर्गशब्दोऽत्रामृतत्वप्रकरणात्परमनिःश्रेयसपरस्तत्स्थानपरो वा । यथा—'स एतेन प्राज्ञेनाऽऽत्मनाऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्'। 'अनन्ते स्वर्गे लोकेऽजेये प्रतितिष्ठति' 'स्वर्गलोकममृतत्वं भजते' इति । राज्यं सुराणामपि चाऽऽधिपत्यमिति क्षुद्रस्वर्गोपेक्षकार्जुनोद्देशेन वचनाच्चायमेवार्थ इति भावः । परान्वा हत्वेति ।

---

१ क. ख. ग. घ. °व मन्यसे ।

---

+ प्राप्स्य[illegible] इति आत्मनेपदनिर्देशाट्टीकाकारेणाऽऽदृते सभाष्यगीतापुस्तके प्राप्स्यसीत्यत्र प्राप्स्यस इत्येव पाठ[illegible]दित्यनुमीयते । उपलभ्यते च लक्ष्मीविङ्कटेश्वरमुद्रणालये मुद्रिते सभाष्यगीतापुस्तके प्राप्[illegible] इति पाठ इति । आप्लृ लम्भन इति चौरादिकस्य णिजभावे, एकीयमतानुसारेण स्वरितत्त्वादात्मनेपदे रूपम् ।

परान्वा हत्वाऽकण्टकं राज्यं भोक्ष्यसे। अनभिसंहितफलस्य युद्धाख्यस्य धर्मस्य परमनिःश्रेयसोपायत्वाच्च परमनिःश्रेयसं प्राप्स्यसि। तस्माद्युद्धायोद्योगं परमपुरुषार्थलक्षणमोक्षसाधनमिति निश्चित्य तदर्थमुत्तिष्ठ। कुन्तीपुत्रस्य तवैतदेव युक्तमित्यभिप्रायः॥ ३७॥

मुमुक्षोर्युद्धानुष्ठानप्रकारमाह—

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥ ३८॥

सुखेति। एवं देहातिरिक्तमस्पृष्टसमस्तदेहस्वभावं नित्यमात्मानं ज्ञात्वा युद्धे चावर्जनीयशस्त्रपातादिनिमित्तसुखदुःखार्थलाभालाभजयपराजयेष्व-

---

महारथानां भीष्मद्रोणकर्णादीनां जयो हि हननमन्तरेण न युज्यत इति भावः। जित्वा भोक्ष्यस इत्युभाभ्यां फलितमुक्तम्—अकण्टकमिति। प्रतिकूलेषु जाग्रत्सु राज्यं सिद्धमपि न भोगाय स्यादिति भावः। अर्जुनानादृतराज्यभोगमात्रपर्यवसानव्युदासायाऽऽह—अनभिसंहितेति। मुमुक्षोर्हि राज्यभोगादि आनुषङ्गिकम्। संबुद्धितात्पर्यमाह—कुन्तीपुत्रस्येति। पृतं(गं) सूते क्षत्रिया राजपुत्रीति हि प्रसिद्धम्। न हि सिंहीसुतेन हरिणीकुमारचरितमनुसरणीयम्। न च शुद्धक्षेत्रजन्मना त्वया महीयसो धर्मस्य विच्छेदः कार्य इति भावः। एवमस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलत्वमुपशमितम्॥ ३७॥

अथ धर्मत्वेन स्थापितस्य मुमुक्षुविषयानुष्ठानप्रकारं वदतीत्याह—मुमुक्षोरिति। नहि राज्यादिकामिनामीदृशी बुद्धिरपेक्षिता। अतोऽल्पास्थिरदुःखमिश्रयुद्धसाध्यफलेन किं ममेति नाऽऽशङ्कनीयमिति भावः। पूर्वोक्तमात्मतत्त्वज्ञानमनुष्ठानदशायामनुवर्तनीयतया दर्शयति—एवमिति। देहातिरिक्तमिति। सति धर्मिणि हेयविरहादिधर्मचिन्तेति भावः। पौनरुक्त्यप्रसपरिहाराय लाभालाभयोर्धनादिविषयत्वमुक्तम्। विषमयोः सुखदुःखप्रदा-

विकृतबुद्धिः स्वर्गादिफलाभिसंधिरहितः केवलकार्यबुद्ध्या युद्धमारभस्व । एवं कुर्वाणो न पापमवाप्स्यसि पापं दुःखरूपं संसारं नावाप्स्यसि । संसारबन्धान्मोक्ष्यस इत्यर्थः ॥ ३८ ॥

एवमात्मयाथात्म्यज्ञानमुपदिश्य तत्पूर्वकं मोक्षसाधनभूतं कर्मयोगं वक्तुमारभते—

---

द्वयोः समीकरणं कथमित्यत्रोक्तम्—अविकृतबुद्धिरिति । विकारो हर्षशोकादिरूपस्तदभावकथनेन विवेकादिसप्तकान्तर्गतानवसादानुद्धर्षयोर्ग्रहणम् । युद्धायेति तादर्थ्यविभक्तिसूचितान्यार्थत्वनिवृत्तिरुच्यते—स्वर्गादीति । मा फलेषु कदाचन, एतान्यपि चेत्यादि वक्ष्यमाणमत्रानुसंहितम् । तत इत्यस्योपयुक्तहेतुविशेषपरत्वमेवोचितम् । आनन्तर्यादिपरत्वं तु अनुपयुक्तमित्यभिप्रायेणाऽऽह—केवलकार्यबुद्ध्येति । पापशब्दोऽत्र न गुरुवधादिशङ्कितपापपरः । युद्धस्य स्वधर्मतामात्रे तन्निवृत्तौ सुखदुःखसाम्यादिबुद्धिविशेषस्यैवमित्यनूदितस्य नैरर्थक्यप्रसङ्गात् । न च कृतपापपरः, नावाप्स्यसीत्यन्वयात् । करिष्यमाणे न प्रायश्चित्तं न च विद्याव्यतिरिक्तेपूत्तराघाश्लेषः, अतोऽत्रामृतत्वप्रकरणान्मुमुक्षुत्वपेक्षया निष्फलत्वाविशेषेण पुण्यपापरूपसकलसांसारिककर्मपरः । ततश्च तत्फलभूतोऽत्र संसारो लक्ष्यत इत्यभिप्रायेणाऽऽह—दुःखरूपं संसारमिति । नैवं पापमवाप्स्यसीत्युक्ते पापहेतुत्वाभावमात्रं प्रतिभातीत्यत्राऽऽह—संसारबन्धादिति । परम्परयेति शेषः । सोऽमृतत्वाय कल्पत इति पूर्वोक्तमिह स्मारितम् ॥ ३८ ॥

अथ पूर्वप्रकरणोक्तशोकापनोदनहेतुषु प्रधानार्थेनोत्तरप्रकरणारम्भं संगमयति—एवमिति । तत्पूर्वशब्देनाऽऽत्मज्ञानकर्मयोगयोः क्रमाभिधानौचित्यमुक्तम् । आत्मयाथात्म्यज्ञानोपदेशानन्तरं तच्चिन्तनरूपज्ञानयोगाभिधानस्यौचित्येऽपि तस्य कर्मयोगसाध्यत्वात्प्रथमं कर्मयोग उच्यते । पश्चात्तु तत्फलतया प्रजहाति यदा कामानित्यादिना ज्ञानयोगो वक्ष्यते । वक्तुमिति । प्रसक्तं प्राधान्येन प्रपञ्चयितुमित्यर्थः । सांख्ययोगाख्यवेदविरोधितन्त्राभिमानभ्रमं सांख्यशब्दस्यात्र ज्ञानयोगेन सांख्यानामिति वक्ष्यमाणज्ञानयो-

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि॥ ३९॥

एषेति। संख्या बुद्धिर्बुद्ध्याऽवधारणीयमात्मतत्त्वं सांख्यम्। ज्ञातव्य आत्मतत्त्वे तज्ज्ञानाय या बुद्धिरभिधेया न त्वेवाहमित्यारभ्य तस्मात्सर्वाणि भूतानीत्यन्तेन सैषाऽभिहिता। आत्मज्ञानपूर्वकमोक्षसाधनभूतकर्मानुष्ठाने यो बुद्धियोगो वक्तव्यः स इह योगशब्देनोच्यते। 'दूरेण ह्यवरं कर्म बुद्धियोगात्' इति हि वक्ष्यते। तत्र योगे या बुद्धिर्वक्तव्या तामिमामभिधीयमानां शृणु। यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि।

---

गविषयत्वभ्रमं च व्युदस्यन्नाह—संख्येति। बुद्धिर्मतिश्च मेधा-संख्या संपत्तिरुपलब्धिरिति नैघण्टुकाः। पुरुषं निर्गुणं सांख्यमित्याद्यौपनिषदप्रसिद्ध्या परमात्मवदात्मन्यपि सांख्यशब्द उपपन्नः। न च ज्ञानयोगेन सांख्यानामित्यादिष्वर्थवैरूप्यप्रसङ्गः। तद्बुद्धियोगेन सर्वत्र तच्छब्दप्रयोगात्। सदपि च वैरूप्यं प्रकरणाद्यानुगुण्येन सर्वत्र सह्यते। एकवचनस्य जात्यभिप्रायत्वज्ञापनायाऽऽत्मतत्त्वमित्युक्तम्। तज्ज्ञानायेत्यनेन तन्निर्णयमात्रमव्यवहितफलमिति दर्शितम्। बुद्धिरिति। निर्णयफला वाक्ययुक्तिपरामर्शगर्भा बुद्धिर्विवक्षितेति न साध्यसाधनभावविरोधः। अथ वा बुद्धिरिह शास्त्रनिष्पाद्यो निर्णयः। तज्ज्ञानायेति साक्षात्कारादिपरम्। आत्मतत्त्वाभिधानप्रदेशमवच्छिद्याऽऽह—न त्वेवेति। ततः परस्तात्तु स्वधर्ममित्यादिना धर्माधर्माश्रमास्थानस्नेहयोराक्षेपो हि क्रियत इति भावः। योगशब्दस्यात्र प्रकरणादिविशेषितमर्थमाह—आत्मज्ञानेत्यादिना। इहेत्यभिप्रेतं विवृणोति—दूरेणेति। इमामितिनिर्देशसूचितमविलम्बिताभिधानमाह—अभिधीयमानामिति। एतेनानुप्रविष्टबुद्धेस्तद्विषयाभिधीयमानबुद्धेश्च भेदोऽपि दर्शितः। यद्वा, अनुष्ठानप्रकारविषयबुद्धिजनकमभिधानं शृण्वित्यर्थः। एतेन कर्मयोगशब्दोऽप्यत्र बुद्धिविशेषयोगमूल इति दर्शितम्। बुद्ध्या ययेत्यनयोर्वैयधिकरण्येन क्रियाद्वयान्वयभ्रमं निरस्यति—यया बुद्ध्या युक्त इति। कर्म-

कर्मणा बन्धः कर्मबन्धः संसारबन्ध इत्यर्थः ॥ ३९ ॥

वक्ष्यमाणबुद्धियुक्तस्य कर्मणो माहात्म्यमाह—

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

नेहेति । इह कर्मयोगे नाभिक्रमनाशोऽस्ति । अभिक्रम आरम्भः । नाशः फलसाधनभावनाशः । आरब्धस्यासमाप्तस्य विच्छिन्नस्यापि न निष्फलत्वम् । आरब्धस्य विच्छेदे प्रत्यवायोऽपि न विद्यते । अस्य कर्मयोगाख्यस्य स्वधर्मस्य स्वल्पांशोऽपि महतो भयात्संसारभयात्त्रायते । अयमर्थः—' पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ' इत्युत्तरत्र प्रप-

---

बन्धशब्दस्यानतिशयितार्थसमासान्तरमपाकरोति—कर्मणा बन्ध इति । ' तृतीया तत्कृतार्थेन गुणवचनेन ' [ पा० सू० २ । १ । ३० ] इति तत्पुरुषः । बन्धशब्दस्यात्र मुख्यार्थासंभवादभिमेतमाह—संसारेति । एतेनानुष्ठीयमानकर्मसंबन्धहानभ्रमोऽपि निरस्तः ॥ ३९ ॥

नन्विमं शृण्वित्युक्तेऽनन्तरं व्यवसायेत्यादि वक्तव्यम् । मध्ये नेहाभिक्रमेत्येतन्न संगच्छत इत्यत्राऽऽह—वक्ष्यमाणेति । उपक्रमे माहात्म्यकथनेन बुभुत्सातिशयजननाय प्ररोचना क्रियत इति भावः । इहेत्यनेन सूचितं कर्मान्तरेभ्यो वैलक्षण्यमाह—कर्मयोग इति । अभिमुखक्रमणशङ्कां व्युदस्यति—अभिक्रम आरम्भ इति । उपक्रमशब्दवदयमिति भावः । क्रियारूपस्याभिक्रमस्य कथमपि नाशित्वमित्यतो नाशः फलसाधनभावनाश इति तात्पर्यमाह—आरब्धस्येति । प्रत्यवायशङ्काहेतुं दर्शयन् द्वितीयं पादं व्याकरोति—आरब्धस्य विच्छेद इति । उक्तविवरणरूपमुत्तरार्धं व्याख्याति—अस्येति । संसारभयादिति । महत्त्वविशेषितं भयं संसारभयमेव हीति भावः । स्वल्पांशस्यापि संसारनिवृत्तिहेतुत्वं देशकालादिवैगुण्यात्प्रामादिकाकृत्यकरणादिना च विच्छिन्नस्याप्यवश्यं पुनः संधानादिति दर्शयन्नस्य श्लोकस्योक्तार्थैकपरत्वं संग्रहविस्तररूपत्वेन वक्ष्यमाणापौनरुक्त्यं चाऽऽह—अयमर्थ इति । कृतांशस्य

च्छिद्यते। अन्यानि हि लौकिकानि वैदिकानि च साधनानि विच्छिन्नानि न हि फलप्रसवाय भवन्ति प्रत्यवायाय च भवन्ति ॥ ४० ॥

काम्यकर्मविषयाया बुद्धेर्मोक्षसाधनभूतकर्मविषयां बुद्धिं विशिनष्टि—

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

व्यवसायेति। इह शास्त्रीये सर्वस्मिन्कर्मणि व्यवसायात्मिका बुद्धिरेका। मुमुक्षूणामनुष्ठेये कर्मणि बुद्धिर्व्यवसायात्मिका बुद्धिः। व्यवसायो निश्चयः। सा हि बुद्धिरात्मयाथात्म्यनिश्चयपूर्विका। काम्य-

---

कथं न नाशप्रसङ्ग इति शङ्कायामिहेत्यस्य व्यवच्छेद्यं दर्शयति—अन्यानि हीति। लौकिकानीति अतिशङ्काहेतुदृष्टान्त उक्तः। वैदिकानीति सामान्यनिर्देशस्यायं भावः—नित्यनैमित्तिकान्यपि विच्छेदे सति न फलाय स्युः प्रत्यवायाय च भवेयुः। अशक्त्यादिमूलगीषद्वैकल्यमात्रं हि तत्र सह्यम्। काम्येषु त्वङ्गवैकल्येऽपि नैष्फल्यमिति विशेष इति। प्रत्यवायाय च भवन्तीति। न केवलं स्वर्गादेरलाभमात्रं ब्रह्मरक्षस्त्वप्राप्त्यादिरपि स्यादिति भावः। एवं माहात्म्याभिधानव्याजेनास्य कर्मणः सर्वकर्मभ्यो वैषम्यमुक्तम् ॥ ४० ॥

अथोपदेष्टव्यतया प्रतिज्ञातां तद्विषयबुद्धिं काम्यकर्मविषयबुद्धिभ्यो हेतुफलवैषम्येण विशिंषन्नुपदिशतीत्याह—काम्येति। इहेति संगृहीतमाह—शास्त्रीये सर्वस्मिन्कर्मणीति। अविहिताप्रतिषिद्धलौकिककर्मणां भिन्नफलत्वात्तद्विषयत्वेऽप्यैक्यं मा भूदित्यत उक्तम्—शास्त्रीय इति। यद्वा संग्राहकोपाधिकथनमिदम्। प्रस्तुतयुद्धादिमात्रव्युदासाय सर्वस्मिन्निति। नित्यनैमित्तिककाम्यतदवान्तरविधभेदसंग्रहः। नानाकर्मविषयनानाबुद्धेः कथमेकत्वमिति शङ्कायां विशेषणप्रकरणसामर्थ्यफलितेन विषयेण बुद्धिं विशिनष्टि—मुमुक्षुणेति। व्यवसायशब्देन कृत्यध्यवसायभ्रमं निरस्यति निश्चय इति पुनरुक्त्या। व्यवसायविषयं समासांशोत्तरपदलक्ष्यं च दर्शयन्मुमुक्षुणेत्युक्तमुपपादयति—सा हीति। व्यवसायात्मिकेत्येतद्व्यवच्छेद्यमाह—काम्येति। ननु देहाति-

कर्मविषया तु बुद्धिरव्यवसायात्मिका । तत्र हि कामनाधिकारे देहातिरिक्तात्मतत्त्वज्ञानमात्रमपेक्षितम् । नाऽऽत्मस्वरूपयाथात्म्यनिश्चयः। स्वरूपयाथात्म्यनिश्चये सति स्वर्गादिफलार्थित्वतत्साधनानुष्ठानतत्फलानुभ-

रिक्तपारलौकिकात्मज्ञानमन्तरेण कथं देहान्तरानुभाव्यस्वर्गादिसाधनयागादिमहाप्रयासानुष्ठानमित्यत्राऽऽह—तत्रेति । कामनयाऽभिक्रियत इति वा कामेनाधिकारो यत्रेति वा कामाधिकारः काम्यकर्म तदधिकारित्वे वा । यद्वा तच्छास्त्रमधिकारश्च मदभिलषितसाधनत्वान्मदर्थमिदं कर्मेत्यभिमानः । देहातिरिक्तात्मशब्देन देहान्तरपरिग्रहार्हस्थिरत्वमभिप्रेतम् । अन्यथाऽतिरेकमात्रनिर्णयेऽपि देहसमकालनाशित्वभ्रमे सति पारलौकिककाम्यकर्माननुष्ठानप्रसङ्गात् । मात्रशब्दाभिप्रेतं विवृणोति—नाऽऽत्मेति । आत्मस्वरूपयाथात्म्यं चात्र नित्यत्वस्वयंप्रकाशत्वानन्दत्वभगवत्प्रकारकत्वस्वाभाविकापहतपाप्मत्वादिरूपमभिप्रेतम् । ननु देहोत्तरकालमनुभाव्ययोः स्वर्गापवर्गयोः क्वचिदात्मास्तित्वज्ञानमात्रमपेक्षितं क्वचित्तद्याथात्म्यनिश्चय इति कुतोऽयं विवेक इत्यत्राऽऽह—स्वरूपेति । अयमभिप्रायः—कामनाधिकारे याथात्म्यनिश्चयोऽनुपपत्त्या वा शास्त्रबलाद्वा, अपेक्ष्यते । पूर्वत्रापि याथात्म्यनिश्चयाभावे किं स्वर्गादिफलेच्छैव न स्यादुत तत्साधनानुष्ठानमुत तत्फलानुभवः । न प्रथमः । सुखरूपतया प्रमाणसिद्धेषु स्वरसत इच्छासिद्धेः । न द्वितीयः । तदर्थिनस्तदनुकूलकरणकलेवरादिमतः स्वस्य तत्फलकालेऽप्यवस्थानं निश्चिन्वतः पामरकृष्यादिन्यायेनानुष्ठानोपपत्तेः । न तृतीयः । अविकलानुष्ठितोपायस्य फलोत्पत्तेरन्यनिरपेक्षत्वात् । अनुभवार्थमेवोत्पन्नतया च तदनुभवसिद्धौ सार्वभौमादिभोगेष्विव स्वर्गादिभोगेष्वनुभववेलायामात्मयाथात्म्यानुभवनैरपेक्ष्यात्। तदेतदखिलमुक्तम्—संभवादित्यन्तेन । अनुपपत्त्यभावोऽत्र संभवः । नात्र शास्त्रबलादिति वक्तुं युक्तम् । शास्त्रमपि दृष्टार्थं वा विदधीतादृष्टार्थं वा। अत्र केवलदृष्टार्थत्वं दत्तोत्तरम् । अन्यत्रापि न तावद्यागादिकरणशरीरनिर्वर्तिकत्वं तदनालोचनात् । नापि कर्तुरात्मनः संस्कारतयाऽनुभ-

१ क. कामाधि° । २ क. °कात्मास्तित्वमा° ।

सानां संभवादविरोधाच्च। सेयं व्यवसायात्मिका बुद्धिरेकफलसाधनविषयतयैका। एकस्मै मोक्षफलाय हि मुमुक्षोः सर्वाणि कर्माणि विधीयन्ते।

---

वेशः। कामाधिकारभेरणेषु प्रोक्षणादिविधिवदात्मानं तत्त्वतो जानीयादिति विध्यभावात्। वेदान्तविज्ञानस्यातिशयफलान्तरार्थत्वादिना कर्मशेषत्वाभावस्य शारीरके समर्थितत्वादात्मतत्त्वानभिज्ञानामपि च स्वर्गादिफलं प्रतिपादयन्ति 'प्लवा ह्येते अदृढा यज्ञरूपाः' 'अष्टादशोक्तमवरं येषु कर्म' 'एतच्छ्रेयो येऽभिनन्दन्ति मूढाः' इत्याद्याः श्रुतयः। यामिमां पुष्पितां वाचं प्रवदन्ति विपश्चित इत्यादिना चानन्तरमेवोच्यते। अविदुषां धूमादिमार्गेण स्वर्गारोहणादिकं चोपनिषत्सु जोघुष्यते। अतो विध्यभावादेवा[ऽऽरा]दुपकारकत्वमपि निरस्तम्। तदेतदखिलमुक्तम्—अविरोधाच्चेति। शास्त्रादिविरोधाभावादित्यर्थः। पक्षान्तरे च शास्त्रविरोधः स्यादिति भावः। मोक्षाधिकारे तु निखिलमिदमन्यथा। तथाहि—यथावस्थितस्वरूपप्राप्तिरेव हि मोक्षपुरुषार्थः स कथमनिश्चीयमान इष्यते। कथं च तज्ज्ञानं तदिच्छामप्यन्तरेण तत्साधनमनुष्ठीयेत। स्वरूपयाथात्म्यज्ञानस्य च विहिततया साधनानुप्रवेश इति तद्व्यतिरेकेण साधनं पुष्कलमनुष्ठितं स्यात्। कथं च स्वरूपाविर्भावलक्षणफलानुभवः स्वनिश्चयशून्यः स्यादिति युक्तिविरोधः। चोदयन्ति च शास्त्राणि मोक्षस्य सर्वविधोपकारकतयाऽऽत्मतत्त्वज्ञानमतस्तदभावे शास्त्रविरोधोऽपि स्यादिति। ननु व्यवसायात्मिकाया बुद्धेः किमिदमेकत्वम्, न तावद्व्यक्त्यैक्यम्। तथाविधबुद्धिसंतानासंभवात्। नापि विषयैक्यादेकरूपत्वम्, अङ्गप्रधानाद्यवान्तरविषयभेदेन तदयोगात्। नापि समुदायगोचरत्वात्तद्योगः, काम्यकर्मस्वपि तत्साम्यात्, इत्यत उक्तम्—एकफलसाधनविषयतयेति। तदेवोपपादयति—एकस्मा इति। सर्वाणीति। नित्यनैमित्तिककाम्यानां सर्वेषां कर्मणां मुमुक्षुणाऽनुष्ठितानां साक्षात्परम्परया वा मोक्षसाधनोपकारित्वेन मोक्ष एक एव प्रधानं फलम्। सर्वमायुरेतीत्यादि अवान्तरफलाभिधान-

अतः शास्त्रार्थस्यैकत्वात्सर्वकर्मविषया बुद्धिरेकैव। यथैकफलसाधनतयाऽऽग्नेयादीनां षण्णां सेतिकर्तव्यताकानामेकशास्त्रार्थतया तद्विषया बुद्धिरेका तद्वदित्यर्थः। अव्यवसायिनां तु स्वर्गपुत्रपश्वन्नादिफलसाधनकर्माधिकृतानां बुद्धयः फलानन्त्यादनन्ताः। तत्रापि बहुशाखाः। एकस्मै फलाय चोदितेऽपि दर्शपूर्णमासादौ कल्पे 'आयुराशास्ते' 'सुप्रजास्त्वमाशास्ते' इत्याद्यवगतावान्तरफलभेदेन बहुशाखात्वं च

---

मपि तदुपयोगित्वमात्रादिति भावः। अस्तु सर्वेषामेकफलसाधनत्वं तथाऽपि क्रमभाविकर्मस्वरूपनानात्वे कथं तद्बुद्धेरैक्यमित्यत्राऽऽह—अत इति। एकफलसाधनतया सर्वेषां कर्मणामेकविधिगृहीतत्वेनैकशास्त्रार्थत्वात्तद्गोचरबुद्धिरवान्तरकर्मभेदसद्भावेऽप्येकशास्त्रार्थगोचरत्वादेकेत्युच्यत इत्यर्थः। पृथग्विधिसिद्धानां पृथग्वाक्यसिद्धेतिकर्तव्यताकानां कथमेकशास्त्रार्थत्वमित्यत्रोक्तप्रकारेणैकत्वे दृष्टान्तमाह—यथेति। आग्नेयादयो हि सेतिकर्तव्यताकाः षड्यागा उत्पत्तिवाक्यैः पृथगुत्पन्नाः समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नाः कामाधिकारे पुनरेकफलसाधनत्वरूपेणैकतया विधीयन्ते। तथा चैकशास्त्रार्थगोचरतया तद्बुद्धिरेकैव तद्वदित्यर्थः। अव्यवसायिनामिति हेतुपरमित्याह—स्वर्गपुत्रेत्यादिना। फलानन्त्यादनन्ता इति। फलबाहुल्यात्। स्वर्गाद्यनन्तफलभेदेन तत्साधनानामपि कर्मणां भिन्नशास्त्रार्थत्वात्तद्विषयबुद्धयोऽपि यावत्फलभेदं भेदिन्य इत्यर्थः। अनन्ताबहुशाखाशब्दयोः प्रधानाप्रधानस्वरूपभेदप्रकारभेदविषयतया पौनरुक्त्यं परिहरन्कर्मभेदापादकत्वाभावेऽपि वैषम्यान्तरपरं बहुशाखाशब्दं व्याचष्टे—तत्रापीति। एकैकस्यैव बहुशाखात्वमुपपादयति—एकस्मा इति। एकैकमपि हि काम्यकर्म प्रधानफलावच्छिन्नरूपेणैकपादपस्थानीयमविरोधिगुणफलाद्यवच्छिन्नं तत्तदंशभेदेन बहुशाखं भवति। मोक्षशास्त्रे तु सर्वायुःप्राप्त्यादिकमपि साधनानुष्ठानाद्यर्थत्वेन मोक्षोपयोगितया तदेकफलान्तर्भूतमित्युक्तम्। वैषम्यद्व-

विद्यते। अतोऽव्यवसायिनां बुद्धयोऽनन्ता बहुशाखाश्च । एतदुक्तं भवति—नित्येषु नैमित्तिकेषु कर्मसु प्रधानफलान्यवान्तरफलानि च यानि श्रूयमाणानि तानि सर्वाणि परित्यज्य मोक्षैकफलतया सर्वाणि कर्माण्येकशास्त्रार्थतयाऽनुष्ठेयानि । काम्यानि च स्ववर्णाश्रमोचितानि

---

योपपत्तिस्थैर्याभिप्रायेण निगमयति—अत इति। प्रधानावान्तरफलभेदादित्यर्थः । आकाङ्क्षाक्रमेणान्वयप्रदर्शनायानन्ता बहुशाखा इति व्युत्क्रमेण व्याख्यातम्। ननु कथं भिन्नप्रधानावान्तरफलसाधनतयैव विहितानां नित्यनैमित्तिककाम्यकर्मणामेकमेव फलं स्यात्कथंतरामेकशास्त्रार्थत्वम् । काम्यानां च कर्मणां निष्कामेण कथमनुष्ठानम्। यदि च तत्तत्काम्यफलाभावेऽपि तत्तत्कर्मानुष्ठानं तर्हि तत्तदधिकाराभावेऽपि ब्राह्मणादेः क्षत्रियादिधर्मानुष्ठानप्रसङ्गः। सर्वकाम्योपसंहारः फलादिविरोधाद्व्याहतो दुष्करश्च। कतिपयोपसंहारे तु कियदनुष्ठेयमित्यत्र किं नियामकमित्यादिशङ्कापरिहाराय बुद्धयेकत्वबहुत्वोक्तेः प्रयोजनमाह—एतदुक्तमिति । नित्यनैमित्तिकयोः प्रधानफलान्यवान्तरफलानि च प्राजापत्यलोकादिप्राप्त्युपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारादिरूपाणि। संवलितनित्यनैमित्तिकयोरप्यत्र नित्यनैमित्तिकशब्देन संग्रहः। काम्यशब्दः केवलकाम्यपरः। ननु तानि सर्वाणि परित्यज्येत्ययुक्तम् । मुमुक्षोरप्युपात्तदुरितक्षयादेरवश्यापेक्षितत्वादित्यत उक्तम्—मोक्षैकफलतयेति । दुरितक्षयादेरप्यन्तःकरणशुद्धिद्वारेणोपकारकत्वान्न पृथक्फलत्वमिति भावः । एकशास्त्रार्थतयाऽनुष्ठेयानीति । विनियोगभेदादन्यत्र भिन्नफलत्वं भिन्नशास्त्रार्थत्वं च । अत्र तु सर्वेषामप्येकत्र विनियुक्तानां फलैक्यं शास्त्रार्थैक्यं च युज्यते। सिद्धं च नित्यकाम्यज्योतिष्टोमादावपि विनियोगपृथक्त्वमिति भावः। स्ववर्णाश्रमोचितानीति। कस्यचिद्धि किंचित्फलमुद्दिश्य कानिचित्कर्माणि विधीयन्ते। तेषामेव कर्मणां फलान्तरार्थतया विनियोगेऽपि स एवाधिकारी भवितुमर्हति । क्लृप्तसंकल्पविरोधे तु युक्तः क्लृप्तपरिग्रह इति न्यायादधिकार्यन्तरकल्पने प्रमाणाभावात् । यथा नित्यकाम्यज्योतिष्टोमादौ यथा चाध्ययनस्य जपादाविति भावः।

तत्तत्फलानि परित्यज्य मोक्षफलसाधनतया नित्यनैमित्तिकैरेकीकृत्य यथाबलमनुष्ठेयानीति ॥ ४१ ॥

अथ काम्यकर्माधिकृतान्निन्दति—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ४२ ॥

यामिमामिति । यामिमां पुष्पितां पुष्पमात्रफलामापातरमणीयां वाचमविपश्चितोऽल्पज्ञा भोगैश्वर्यगतिं प्रति वर्तमानां प्रवदन्ति । वेदवादरता

---

निष्कामस्य काम्यकर्मानुष्ठानोपपादनायोक्तम्—तत्फलानि परित्यज्य मोक्षसाधनतयेति । नित्यनैमित्तिकैरेकीकृत्येति । एकफलसाधनतयैकशास्त्रार्थीकृत्येत्यर्थः । यथाबलमिति । शक्त्यनुरोधेन हि शास्ति शास्त्रम् । आह च मनुः—तद्धि कुर्वन्यथाशक्ति परमां गतिमिति । एवं नित्यनैमित्तिकयोरिव काम्येष्वपि मुमुक्षोः कतिपयाङ्गवैकल्येऽपि न दोष इत्युक्तं भवति । एतेन विच्छेदे प्रत्यवायाभावकथनमपि न ज्योतिष्टोमाद्येकैकान्तर्विच्छेदपरमपि त्वा मोक्षादनुष्ठेयैकशास्त्रार्थभूतकर्मकलापे प्रयाजादिवदितिकर्तव्यतास्थानीयैकैककर्मानुष्ठानेऽपि देशादिवैगुण्यकृतो [ दोषो नेति ] प्रेरितानुष्ठानपरमिति च दर्शितम् ॥ ४१ ॥

एवं काम्यकर्मविषयबुद्धितो मोक्षसाधनभूतकर्मविषयाया बुद्धेर्वैलक्षण्यमुपपाद्यानन्तरं मोक्षसाधने प्रवृत्तिशैघ्र्यार्थमितरफलवैतृष्ण्यजननाय तत्फलसाधनकर्माधिकृतान्निन्दतीत्युपरितनश्लोकत्रयमवतारयति—अथेति । काम्यकर्माधिकृतानिति । काम्यकर्मसु स्वर्गादिस्वाभिलषितसाधनत्वस्वार्थताबुद्धियुक्तानित्यर्थः । पुष्पितामित्येतत्फलव्यवच्छेदमुखेनासुखोदर्कत्वपरमित्यभिप्रायेणाऽऽह—आपातरमणीयामिति । अल्पज्ञा इति । विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । 'पृषोदरादीनि यथोपदिष्टम्' [ पा० सू० ६ ३ । १०९ ] इति अ(पश्य)च्छब्दावयवस्य यच्छब्दस्य लोपः । तच्च बहुज्ञत्वम् । तद्व्यतिरेकश्चात्रोपनिपत्साध्यस्थिरास्थिरादिविवेकाभावादल्पज्ञत्वमिति भावः । जन्मकर्मेत्यादेर्गतिविशेषणत्वभ्रमव्युदासाय गतिं प्रतीत्यस्यापेक्षितपूरणाय च क्रममुल्लङ्घ्य प्रागेवोक्तम्—भोगैश्वर्यगतिं प्रति । वर्तमानामिति । एतेन वाचमित्यस्य

वेदेषु ये स्वर्गादिफलवादास्तेषु सक्ता नान्यदस्तीतिवादिनस्तत्स- ङ्गातिरेकेण स्वर्गादेरधिकं फलं नान्यदस्तीति वदन्तः ॥ ४२ ॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

कामात्मानः कामप्रवणमनसः स्वर्गपराः स्वर्गपरायणाः स्वर्गादि- फलावसानेषु पुनर्जन्मकर्माख्यफलप्रदां क्रियाविशेषबहुलां तत्त्वज्ञानरहि-

---

काम्यविधिभागपरत्वमुक्तं भवति । सामान्येन वैदिकनिन्दाभ्र- ममपाकरोति—स्वर्गादिफलवादा इति । ' वेदशब्दोऽत्र वेदेषु वेदान्तेषु च गीयते ' इत्यादाविव कर्मभागपरः । तत्रापि विधिभागफलं वादभागविषयतया पुरुषवाक्यवेदवाक्यविषयतया वाचं वेदवादेत्यनयोरपौनरुक्त्यमिति भावः । नान्यदस्तीतिवादे पूर्वोत्तरपदानामर्थं हेतुतयोपादत्ते—तत्सङ्गातिरेकेणेति । अपवर्गस्व- रूपनिषेधोऽशक्य इत्यभिप्रायेणोक्तम्—अधिकफलमिति । अनेन तथावदनशीलत्वविवक्षाव्यञ्जनाय वदन्त इति वर्तमानप्रत्ययान्तेन व्याख्यातम् ॥ ४२ ॥

कामप्रवणमनस इति । कामेषु आत्मा मनो येषां ते कामात्मान इति व्यधिकरणबहुव्रीहिरिति भावः । स्वर्गपरायणा इति । स्वर्गः परं परायणं परमप्राप्यं येषां ते स्वर्गपराः । मोक्षविमुखा इति भावः । कामात्मानः स्वर्गपरा इति पदद्वयस्य सामान्यविशेष- विषयतया दृष्टादृष्टविषयतया वा हेतुसाध्यविषयतया वा कामो- न्मुख्यान्यवैमुख्यपरतया वा पुनरुक्तिपरिहारः । स्वर्गादि- फलभोगमध्ये जन्मादिभ्रमं व्युदस्यति—स्वर्गादिफलावसानेषु इति । ' यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते ' । [ छा० ५ । १० । ५ ]

प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे ॥ [ बृ० ६ । ४ । ६ ]
आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
स्वर्गेऽपि पापभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥

इत्यादिश्रुतिस्मृतय इह द्रष्टव्याः । जन्मवत्कर्मणोऽप्यनुशा- याख्यकर्मशेषफलत्वख्यापनाय समानाधिकरणसमासतां दर्श- यति—जन्मकर्माख्यफलप्रदामिति । कर्मशेषेण पुनरुत्कृष्टापकृष्टजन्म-

ततया क्रियाविशेषप्रचुरां तेषां भोगैश्वर्यगतिं प्रति वर्तमानां यामिमां वाचं ये प्रवदन्तीति संबन्धः ॥ ४३ ॥

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

तेषां भोगैश्वर्यप्रसक्तानां तया वाचा भोगैश्वर्यविषययाऽपहृतात्म-

---

प्राप्तौ श्रुतिस्तावत्—'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति' ॥ 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' [ छा० ५ । १० । ७ ] इत्यादि । जन्मकर्मादेः सर्वस्य कर्मशेषमूलत्वे स्मृतयश्च—'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य स्वकर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्तीति' [ गौ० २ प्र० ११ अं० १२—१३ ] । तथा—'ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते' [ आपस्तम्ब० २ । १ । २ । ३ ] । इत्यादयः । वैराग्यपादे चायमर्थो व्यक्तमनुसंधेयः । अत्र जन्माख्यकर्मफलप्रदामिति केषुचित्कोशेषु पाठः । ननु ज्योतिष्टोमादिक्रियाविशेषस्वरूपमात्रं कामिनो ज्ञानिनश्च समानं तत्कथं क्रियाविशेषबहुलामिति कामिनो विशिष्याभिधीयते तत्रोक्तम्—तत्त्वज्ञानरहितेति । ज्ञानिनां हि सर्वं कर्म क्रियमाणमपि ज्ञानप्रचुरमेव । तच्चैकफलसाधनतयैकशास्त्रार्थरूपम् । न च मोक्षानुपयुक्ताः सर्वे क्रियाविशेषास्तेन क्रियन्ते । अतः प्रयासबहुलं परिमितनश्वरफलं चामुमुक्षोः कर्मेति भावः ॥ ४३ ॥

अन्येषां वाचाऽपहृतचित्तत्वभ्रमं निरस्यन्षष्ठ्यन्तपदयोरदृष्टविशेष्ययोः प्रस्तुतविशेष्यविषयत्वं चाऽऽह—तेषामिति । तयेति । यद्वृत्तप्रतिनिर्देशरूपव्याख्येयोपादानं तत्परामृष्टं प्रकृतं चेतोपहरणहेतुमाह—भोगैश्वर्यविषयतयेति । अपहृतचेतसामित्यस्य पूर्वप-

ज्ञानानां यथोदिता व्यवसायात्मिका बुद्धिः समाधौ मनसि न विधीयते नोत्पद्यते । समाधीयतेऽस्मिन्नात्मज्ञानमिति समाधिर्मनः। तेषां मनस्यात्मयाथात्म्यनिश्चयज्ञानपूर्वकमोक्षसाधनभूतकर्मविषया बुद्धिः कदाचिदपि नोत्पद्यत इत्यर्थः। अतः काम्येषु कर्मसु मुमुक्षुणा न सङ्गः कर्तव्यः ॥ ४४ ॥

एवमत्यन्ताल्पफलानि पुनर्जन्मप्रसवानि कर्माणि मातापितृसहस्रे-

---

देनार्थपौनरुक्त्यपरिहाराय तदर्थस्य प्रकृतव्यवसायात्मकबुद्ध्यभावहेतुत्वाय चोक्तम्——अपहृतात्मतत्त्वज्ञानानामिति । यथोदितेति। प्रागुक्तप्रकारेत्यर्थः । न विधीयते । केनचिद्धेतुना न क्रियत इत्यर्थः । ततः फलितमुच्यते नोत्पद्यत इति। समाधिशब्दस्य बुद्धिविवक्षायामत्रानन्वयान्मनोविषयत्वे व्युत्पत्तिमाह——समाधीयतेऽस्मिन्निति। निधीयतेऽस्मिन्निति निधिरितिवत्। यथोदितेत्याद्युक्तं प्रकारं विवृणोति——तेषां मनसीत्यादिना। विधीयत इति-वर्तमाननिर्देशतात्पर्यसिद्धमुक्तम्——कदाचिदपीति । एषां निन्दा किमर्थमित्यत आह——अत इति । व्यवसायात्मकबुद्धिविरोधादित्यर्थः । मुमुक्षुणा न सङ्गः कर्तव्य इति । निःसङ्गेन काम्यानामपि करणमनुमन्यते तत्स्वरूपमात्रस्य मोक्षविरोधित्वाभावात्। मोक्षेच्छाऽस्तिचेद्बन्धकेच्छा न चा( का )र्येत्युक्तं भवति॥ ४४॥

अथैवं काम्यकर्मसु तदधिकृतेषु च निन्दितेषु हिततमोपदेशिनः शास्त्रस्येदृशकर्मविधानमनुपपन्नम्। विहितस्य चात्र त्याज्यतयोपदेशो व्याहतः। कर्मविधिशास्त्राणामप्रामाण्यं वा तत्प्रामाण्ये वा तन्निषेधोपदेशस्याप्रामाण्यं प्रसज्यत इति शङ्कामुत्तरश्लोकद्वयेन परिहरतीत्याह——एवमत्यन्ताल्पेत्यादिना। पुनर्जन्म येषां प्रसवभूतं तानि पुनर्जन्मप्रसवानि। संसारविपिनवानस्पत्यानां हि कर्मणां परिणिनंसोः फलस्य नियतपूर्वत्वसूचकत्वादिभिर्देहविशेषपरिग्रहप्रसूनस्थानीयं प्रियहितोपदेशितया मातापित्रोरुपादानम्। सर्वजन्मानुत्पत्तिसूचनाय सहस्रशब्दः। सर्वात्मसाधारणतया चतुर्विधपुरुषार्थसकलापुरुषार्थनिवृत्तितत्साधनाभिधायितया कदाचिदप्यनुपरमादिना च वत्सलतरत्वोक्तिः। अतिशयहेतुत्रय(हितत)-

भ्योऽपि वत्सलतरतयाऽऽत्मोपजीवने प्रवृत्ता वेदाः किमर्थं वदन्ति कथं वा वेदोदितानि त्याज्यतयोच्यन्त इत्यत्राऽऽह—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥

त्रैगुण्येति । त्रयो गुणास्त्रैगुण्यं सत्त्वरजस्तमांसि । सत्त्वरजस्तमः-प्रचुराः पुरुषास्त्रैगुण्यशब्देनोच्यन्ते । तद्विषया वेदास्तमःप्रचुराणां रजःप्रचुराणां सत्त्वप्रचुराणां च वत्सलतरतयैव हितमवबोधयन्ति ।

---

मात्मोपजीवने प्रवृत्ता इति त्रिभिः सूचितम् । न हि देहादेरारोग्यादिमात्रे कदाचिदेव व्या[हृ]ता इति क्रमात्त्रयाणां भावः । किमर्थं वदन्तीति । न तावत्प्रकरणार्थं हितोपदेशित्वात् । नापि हितान्तरपर्यवसितोपच्छन्दनार्थं प्रतिप्रकरणं तत्तत्फलमात्रपर्यवसितत्वात् । अतो नाऽऽश्रेयातिशयपरमकारुणिकपुरुषोत्तमाज्ञारूपाणां वेदानामामूलपर्यवसानमपरिमितदुःखदुर्दिनानुबन्धिसुखकणखद्योतसाधनोपदेशो विषसंपृक्तमधुभोजनोपदेशवदयुक्तः । निषेध एव तु तत्र कर्तव्यः । यद्वा न सोऽपि प्रत्यक्षादेस्तत्प्रसञ्जकत्वाभावात् । स्वयं प्रसज्य प्रतिषेधे जम्बालमज्जनक्षालनसमत्वादित्यभिप्रायः । कथं वेति । वेदविरुद्धं हि त्याज्यतयोपदेश्यम् । न तु वेदविहितमिति भावः । त्रयो गुणास्त्रैगुण्यमिति । अत्रार्थान्तरासंभवाच्चतुर्वर्णादीनां स्वार्थ इत्युपसंख्यानात्स्वार्थिकः प्रत्ययः । गुणशब्दस्य प्रयोगप्राचुर्यात्संख्याविशेषान्वयबलाद्वक्ष्यमाणपर्यालोचनाच्च सिद्धमर्थविशेषं निर्दिशति—सत्त्वरजस्तमांसीति । स्वर्गादिफलकरणेतिकर्तव्यताधिकारिविशेषादिविषया हि वेदा न पुनः सत्त्वरजस्तमोविषया दृश्यन्त इत्यत्राऽऽह—सत्त्वरजस्तमः-प्रचुरा इति । तत्तद्गुणप्रचुराः पुरुषास्तच्छब्देनोपचर्यन्ते । भाष्यान्तरोक्ता तु फललक्षणा मन्दा, अधिकारव्यवस्थापनं त्वत्रोपयुक्ततममिति भावः । अस्त्वेवं गुणत्रयप्रचुरपुरुषविषया वेदाः-श्चोद्यस्य किमायातमित्यत्राऽऽह—तम इति । एकस्मिन्नेवाधिकारिणि गुणत्रयप्राचुर्यभ्रमनिरासेन तत्तद्विधिनिषेधविषयाधिकारिवैचित्र्याभिव्यक्त्यर्थं तमःप्रचुराणामित्यादिपृथङ्निर्देशः ।

वेदा यद्येषां स्वगुणानुगुण्येन स्वर्गादिसाधनमेव हितं नाववोधयन्ति तदैव ते रजस्तमःप्रचुरतया सात्त्विकफलमोक्षविमुखाः स्वापेक्षितफलसाधनमजानन्तः कामप्रावण्यविवशा अनुपायेषु उपायभ्रान्त्या प्रण-(न)ष्टा भवेयुः। अतस्त्रैगुण्यविषया वेदास्त्वं तु निस्त्रैगुण्यो भव। इदानीं सत्त्वप्रचुरस्त्वं तदेव वर्धय नान्योन्यसंकीर्णगुणत्रयप्रचुरो भव। न

---

तामसाद्यधिकारिबाहुल्याल्पत्वाल्पतरत्वप्रकाशनाय सत्त्वरजस्तमसामत्र व्युत्क्रमपाठः। ततश्च क्रमादैहिकामुष्मिकापवर्गाभिलाषिण उपलक्ष्यन्ते। सत्त्वप्रचुराणामिति दृष्टान्ताभिप्रायः। अत एव ह्युपपादकग्रन्थे यद्येषामित्यादिना रजस्तमःप्रचुराणामेव ग्रहणम्। स्वगुणानुगुण्येनेति। यथा वातपित्तकफाद्युत्कृष्टसमसंकीर्णप्रकृतीन्पुरुषानालोच्य हितोपदेशिनो वैद्यास्तत्तत्प्रकृत्यनुकूलं भोजनभेषजादि विदधति असात्म्यादीनि च निषेधन्ति। तदभावे च यथा दुरुपदेशादिमूढचेतसः प्राणिनोऽपथ्यगरलादिसेवनया प्रणश्यन्ति यथा च ताम्बूलाद्यर्थिनः पुत्राः पित्रादिभिस्तत्प्रदानाभावे चौर्यादिना प्रणश्यन्ति तथाऽत्रापीति भावः। स्वर्गादिसाधनमेवेति। न हि पिपासादिपीडितानां तदानीं रसायनादिकं विधेयमिति भावः। मोक्षवैमुख्यं साल-( स्वापे ) क्षितफलसाधनाज्ञानं च तमःकृत्यं कामप्रावण्यादिकं तु यथांशं रजस्तमःकृत्यम्। कामप्रावण्यविवशाः। काम्यफलाभिसंधिबलेनाऽऽत्मानं नियन्तुमशक्ताः। अनुपायेष्वित्यादि। यथा बौद्धादय इति भाव्यम्। प्रनष्टा भवेयुरिति। दुष्कर्मविपाकेन स्थावरादिभावमप्याश्रित्याचित्कल्पतया पुरुषार्थयोग्यतागन्धरहिता भवेयुरित्यर्थः। अत इति। उक्तप्रकारेण कास्योपदेशस्य हिततमत्वादित्यर्थः। त्वं त्विति तुशब्देनाधिकारिवैषम्यं द्योतयति। किमस्याधिकारिणो वैषम्यं कथं च संसारिणस्त्रैगुण्यनिषेधः। तथा सति नित्यसत्त्वस्थ इत्यनेन विरोधश्च स्यादित्यत्राऽऽह—इदानीं सत्त्वप्रचुर इति। शिष्यस्तेऽहमित्यादिवचनपरामर्शादिदमुक्तम्। अर्जुनशब्दसंबुद्धितात्पर्यलब्धो विशेषोऽस्य सत्त्वप्राचुर्यमर्जुनशब्दस्यावदातपर्यायत्वात्। सत्त्वस्यापि शुक्लशब्दव्यपदेशादधिकारिवैषम्यस्य चापेक्षितत्वात्तया, प्रसिद्ध्यादिबलाच्चेदमेवात्र तात्पर्यम्। तदेव वर्धयेति। न तु सिद्धसत्त्वप्रा-

सत्त्वप्राचुर्यं वर्धयेत्यर्थः । निर्द्वंद्वो निर्गतसकलसांसारिकस्वभावः । नित्यसत्त्वस्थो गुणद्वयरहितनित्यप्रवृद्धसत्त्वस्थो भव । कथमिति चेत्— निर्योगक्षेम आत्मस्वरूपतत्प्राप्त्युपायबहिर्भूतानामर्थानां योगं प्राप्तानां च क्षेमं परिपालनं परित्यज्याऽऽत्मवान्भव । आत्मस्वरूपान्वेषणपरो भव ।

---

चुर्यं परित्यज्य विहिताकरणनिषिद्धकरणादिना रजस्तमसी वर्धयेत्यर्थः । निस्त्रैगुण्यो भवेति निषेधे गुणत्रयसाधारणे सति कथं सत्त्वं वर्धयेत्युच्यत इत्यत्राऽऽह—नान्योन्येति । सत्यम् । गुणत्रयसाधारणो निषेधः स तु संकीर्णविषयः । अन्यथा नित्यसत्त्वस्थ इति वक्ष्यमाणानुपपत्तेरिति भावः । निस्त्रैगुण्यो भवेत्येतदरोगो भवेत्यादिवत्पुरुषव्यापारासाध्यत्वेन प्रेषणानुपपत्तेराशीरूपमिव दृश्यत इत्यत्राऽऽह—न तदिति । रजस्तमःप्राचुर्यहेतुभूताहारादिकं परित्यजेत्युक्तं भवति । निर्गतेत्यादि । द्वंद्वशब्दः पुण्यपापमूलसांसारिकस्वभाववर्गद्वयपर इति भावः । एतेन फलस्वरूपं वा साधनानुष्ठानदशासमकालीनस्वास्थ्यं वा द्वंद्वतितिक्षारूपेतिकर्तव्यता वा विवक्षिता । गुणद्वयरहितेति । नित्यसत्त्वस्थपदमब्भक्षादिवदसाधारणगर्भमिति भावः । यद्वा नित्यपदेन कदाचिदपि गुणान्तरानभिभूतत्वमिहाभिप्रेतम् । अत एव च प्रवु(वृ)द्धत्वं गुणान्तराभिभवे हि नित्यप्रवृत्तिर्न स्यादिति भावः । सत्त्वसंबन्धमात्रस्य सर्वक्षेत्रज्ञसाधारणत्वान्नित्यप्रवृद्धेत्युक्तम् । ननु रजस्तमःप्राचुर्यं न वर्धयेति निषेधः सत्त्वप्राचुर्यं वर्धयेति विधिश्च नोपपद्यते । न ह्यसावेतद्रज इदं तम इदमहं वर्धयामीति बुद्ध्या प्रवर्तते यतो निषिध्येत यतश्च सिद्धे रजस्तमसी शमयेत् । न चासौ सत्त्वतदुपायौ जानाति येन तत्र प्रवर्तेत । अतः किमसौ कथं कुर्यादित्यभिप्रायेण शङ्कते—कथमिति चेदिति । तत्र निषेधस्य दिश(विधे)श्चोपपादकतया निर्योगक्षेम आत्मवानिति पदद्वयं क्रमाद्व्याचष्टे—आत्मस्वरूपेत्यादिना । निर्योगक्षेम इति सामान्येन निषेधो मुमुक्षोर्विहितव्यतिरिक्तविषय इति ज्ञापनाय बहिर्भूतानामित्यन्तमुक्तम् । आत्मवान्भवेत्यत्र मत्वर्थानुपपत्तिमाशङ्क्याऽऽह—आत्मस्वरूपान्वेषणपर इति । स्वस्यैवाप्रमत्तताग- र्भस्वबुद्धिविशेषप्राप्त्यपेक्षया संबन्धविषयः प्रत्ययः । यद्वा—

अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य परिरक्षणं क्षेमः। एवं वर्तमानस्य ते रजस्तमःप्रचुरता नश्यति सत्त्वं च वर्धते ॥ ४५ ॥

यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।

तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

न च वेदोदितं सर्वं सर्वस्योपादेयं यथा सर्वार्थपरिकल्पिते सर्वतःसंप्लुतोदक उदपाने पिपासोर्यावानर्थो यावदेव प्रयोजनं तावदेव तेनोपादीयते न सर्वम् । एवं सर्वेषु वेदेषु ब्राह्मणस्य विजानतः, ब्रह्मसं-

---

स्वरूपान्वेषणादेव ह्ययमात्मानं लभते । अन्यथाऽऽत्महानिरेव स्यादिति भावः। एवं निषेधस्य विधेश्चानुष्ठानाय विषय उक्तः। ततः किमित्यत्र तदुभयाधीनं फलद्वयमाह—एवमिति । न साक्षाद्गुणान्विषयीकृत्य तत्र किंचित्कर्तव्यम् । तेषां तु निर्योगक्षेमत्वात्मतत्त्वाभ्याससात्त्विकाहारादित्यागहेतुभ्यां स्वयमेव यथार्हं नाशोन्मेषौ स्यातामिति भावः ॥ ४५ ॥

अथ सनिदर्शनमधिकारिभेदं प्रतिपादयन्तं यावानर्थ इति श्लोकं व्याचष्ट—न चेति । वर्णाश्रमप्रवरचरणादिभेदेन प्रतिनियताधिकारिविषया हि वेदोदिता धर्मा इति भावः। सर्वार्थपरिकल्पित इति । तत्तत्प्रयोजनाभिलाषिसर्वाधिकार्यर्थं परिकल्पिते । यद्वा सर्वशब्दः प्रयोजनकार्त्स्न्यपरः। स्नानपानादिना प्रयोजनार्थं परिकल्पिते । एतच्च सर्वतःसंप्लुतोदक इत्यनेनार्थसिद्धमुक्तम्। उदपानं कूपतटाकादि । पिपासोरिति दार्ष्टान्तिकमस्थानानुरोधेनाध्याहारः। नन्वत्र दृष्टान्तदार्ष्टान्तिकयोः का संगतिः। नहि पिपासोरुदपाने यावत्प्रयोजनं तावदेव विजानतः सर्वेषु वेदेष्वित्याशङ्कां परिहर्तुं वाक्यपुरा(पूर)णायाध्याहृत्योक्तम्—तावदेव तेनोपादीयत इत्यादि। सर्वेषु चेति च + शब्द उपादेयानुपादेया-

---

+ एतेन टीकाकृताऽऽदृते रामानुजीयगीताभाष्ये चशब्दघटितः पाठ आसीदित्यनुमीयते । इदानींतनेषु संस्करणायोपयुज्यमानेषु कादिचान्तेषु लिखितपुस्तकेषु एकस्मिन्नपि चशब्दघटितः पाठो नोपलभ्यते ।

न्धी ब्राह्मणः । वेदार्थं विजानन्मुमुक्षुः । वैदिकस्य मुमुक्षोर्यदेव मोक्षसाधनं तदेवोपादेयं नान्यत् ॥ ४६ ॥

अतः सत्त्वस्थस्य मुमुक्षोरेतावदेवोपादेयमित्याह—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

---

शसंकल्प(ल्न)द्योतनार्थः । ननु ब्राह्मणस्येत्येतत्प्रकरणासंगतं क्षत्रियायैव ह्युपदिश्यते । अत्र ब्राह्मणस्य विशेषो ब्रह्मविद्याया अपि त्रैवर्णिकसाधारणत्वाद्विजानत इति चायुक्तम् । विजानन्नेव हि कामनाधिकारादिष्वपि प्रवर्त्तते । ब्राह्मणशब्दश्चात्र न तदधीत इत्याद्यर्थान्तरपरः । 'ब्राह्मो जातौ' [ पा० सू० ६ । ४ । १७१ ] इति निपातनेन जातिव्यतिरिक्तार्थेषु ब्राह्म इत्येव वक्तव्यत्वात्तत्राऽह—वैदिकस्य मुमुक्षोरिति । ब्रह्माण(नि)तीति निरुक्त्या ब्रह्मणः ' शकन्ध्वादिषु पररूपं वाच्यम् ' इति पररूपे कृते प्रज्ञादित्वादण्प्रत्यये च ब्राह्मण इति रूपं भवति । ब्रह्म चात्र वेदः । वेदेष्वित्यत्रैव प्रसक्तत्वात् । अतोऽत्र ब्राह्मणशब्दो वैदिकमात्रपर इति न क्षत्रियार्थोपदेशाद्यनुपपत्तिः । ब्राह्मणशब्दस्यात्र संन्यासिपरत्वेन शंकरव्याख्या त्वतिमन्दा । 'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः ' इति श्रुतिस्तु योगिनः प्रकृष्टतरान्तरसत्त्वमवस्थाविशेषमाह । विजानत इति च विशिष्टज्ञानवत्त्वमुच्यते । विशिष्टत्वं च हेयोपादेयविषयतया । तथाविधज्ञानवांश्च मुमुक्षुरेव स्यादिति । तदेवेत्यस्य व्यवच्छेद्यमाह—नान्यदिति । वेदोदितमपि न मोक्षसाधनव्यतिरिक्तमुपादेयम् । अनधिकृतत्वात् । न ह्यन्यवर्णाश्रमान्यफलकामुकादिधर्मोऽन्यस्योपादेय इति भावः ॥ ४६ ॥

एवं तर्हि मोक्षसाधनेतरसकलपरित्यागे नित्यनैमित्तिकनिषेधशास्त्रातिलङ्घनेन कामचारदोषः स्यात्तावानिति च कियानुच्यत इति शङ्कयामुत्तरश्लोकमवतारयति—अत इति । न कामचारदोषः । एतावत उपादेयत्वात् । नाप्यन्येच्छान्योपायप्रवृत्तिदोषः । तत्तत्फलपरित्यागेन साधारणस्वरूपमात्रस्योपादेयत्वा-

कर्मणीति । नित्ये नैमित्तिके काम्ये च केनचित्फलविशेषेण संबद्धतया श्रूयमाणे कर्मणि नित्यसत्त्वस्थस्य मुमुक्षोस्ते कर्ममात्रेऽधिकारः । अधिकारानुबन्धितयाऽवगतेषु फलेषु न कदाचिदप्यधिकारः । सफलस्य बन्धरूपत्वात्फलरहितस्य केवलस्य मदाराधनरूपस्य मोक्षहेतुत्वाच्च । मा च कर्मफलयोर्हेतुर्भूः । त्वयाऽनुष्ठीयमानेऽपि कर्मणि नित्यसत्त्व-

---

दिति भावः । कर्मणीति सामान्यशब्दस्य योग्यान्विशेषानाह—नित्य इत्यादिना । केनचिदित्यादिकं राशित्रयेऽपि संबध्यते । न नित्यनैमित्तिकयोरपूर्वमात्रार्थतामिच्छतां कुदृष्टीनां दृष्टिरपरिहृता । कर्मान्तराधिकारोपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्राजापत्यादिलोकपशुपुत्रादि यथासंभवं नित्यादेः फलम् । फलविशेषेणेति । यथोत्पत्तिवाक्ये स्वरूपेणैवोत्पन्नानां कर्मणां कामाधिकारे स्वर्गादिफलविशेषेण संबन्धितया श्रुतत्वात्स्वर्गादिकं फलमिष्यत एवं मोक्षाधिकारेऽपि मोक्षाख्यफलविशेषेण संबन्धितया श्रुतत्वात्सोऽपि फलमिति भावः । त इतिशब्दस्य प्रकृतान्वितं तात्पर्यमाह—नित्यसत्त्वस्थस्य मुमुक्षोरिति । मोक्षतत्साधनादिफलव्यवच्छेदाय तत्संबन्धितयाऽवगतेष्वित्युक्तम् । स्वर्गपश्वादिष्विति शेषः । मेति न निषेधविधिः किंत्वभावमात्रबोधक इति न कदाचिदित्युक्तम् । फलयोग्यतानिषेधात्तत्सङ्गनिषेधोऽपि फलितः । कर्ममात्राधिकारे फलानधिकारे च बुद्धिस्थक्रमेण हेतुद्वयं न हि मोक्षमिच्छतो बन्धरूपफलाभिलाष उपपन्नः । न च तद्धेतुपरित्याग उचित इति भावः । केवलस्यैतन्न फलराहित्यमात्रफलं फलरहितस्येत्युक्तत्वात् । अपि तर्हि स्वरूपत एव प्रयोजनत्वपरम् । तत्र हेतुर्मदाराधनरूपस्येति । कर्मफलयोरिति । पुनरुक्तिप्रसञ्जकषष्ठीसमासादप्युभयपदार्थप्रधानो द्वंद्व एवोचितः । वक्ष्यमाणकर्तृत्वानुसंधानसंग्रहश्चात्र युक्त इति भावः । 'कर्मण्येवाधिकारस्ते' 'मा ते सङ्गोऽस्त्वकर्मणि' इति पूर्वोत्तरवचनाभ्यामयं कर्महेतुत्वनिषेधो व्याहन्येतेत्यत्राऽऽह—त्वयेति । नात्र वस्तुतो हेतुत्वं निषिध्यते । अपि तु हेतुत्वानुसंधानमित्यर्थः । ननु

स्थस्य मुमुक्षोस्तवाकर्तृत्वमप्यनुसंधेयम् । फलस्यापि क्षुन्निवृत्त्यादेर्न त्वं हेतुरित्यनुसंधेयम् । तदुभयं गुणेषु वा सर्वेश्वरे मयि वाऽनुसंधेयमित्यु-

---

फलहेतुत्वनिषेधस्तदा तदुपायरागस्यापि निवृत्तेः शरीरधारणादेरप्यभावप्रसङ्गेनोपायानुष्ठानस्यैव लोपः स्यादित्यत्राऽऽह—फलस्यापीति । क्षुन्निवृत्त्यादेरित्यनेन पौनरुक्त्यं परिहृतम् । न त्वं हेतुरित्यनुसंधेयमिति । नात्र क्षुन्निवृत्त्यादिस्वरूपं निषिध्यतेऽपि त्वात्मनस्तद्धेतुत्वानुसंधानमिति भावः । ननु कथं कर्मफलयोर्हेतुः सन्न हेतुरित्यनुसंधीयेत । एवं च चार्वाकादिवदनयोर्निर्हेतुकत्वमनुसंधेयं स्यात्ततश्चोपायानुष्ठानमेव हीयेताहेतुकतया बुध्यमाने प्रयासायोगादित्यत्राऽऽह—तदुभयमिति । उभयं कर्महेतुत्वं फलहेतुत्वं च । उत्तरत्रेति । अयमेव हि तृतीयाध्यायप्रधानार्थः । तथाहि संग्रहः—

> असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम् ।
> सर्वेश्वरे वाऽन्यस्योक्ता तृतीये कर्मकार्यता ॥ इति ।

एवमहेतुकत्वचोद्यं तावत्परिहृतम् । तथाऽप्यात्महेतुकत्वानुसंधाननिषेधादननुष्ठानप्रसङ्गस्तदवस्थ इति चेन्नैवम् । न ह्यत्रानुष्ठानस्यानुष्ठानतया भ्रान्तिरुच्यते । नाप्यनुष्ठातृत्वस्य सतोऽप्यप्रतिपत्तिर्विधीयते । येन विरोधः स्यात् । किं त्वनेकहेतुके कस्मिंश्चिदेकस्यैव हेतुत्वं त्रैगुण्याद्युपाधिकं स्वरूपप्रयुक्तत्वं च भ्रान्तिसिद्धमिति तदुभयं निषिध्यते। वक्ष्यते हि शरीवाङ्मनोभिरित्यादिना तृतीयाध्याये । किं च साक्षात्कर्तृत्वाननुसंधानाकर्तृत्वानुसंधानविधावपि नाकर्तृत्वानुसंधानकर्तृत्वप्रतिपत्तिनिषेधयोरपि अननुष्ठानप्रसङ्गः । स हि कुर्वन्नेव स्वकृतोपकारनिगूहनवदाहार्यबोधेन तथा प्रतिपद्यतेऽन्यत्र वा कर्मणि क्रियमाण इति न कश्चिद्दोषः । सर्वेश्वर इति निर्देशस्तस्मिन्कर्तृत्वाध्यवसायौचित्यार्थम् । जीवस्यापि हि कर्तृत्वं तत्त्वतः परमात्मायत्तमिति 'परात्तु तच्छ्रुतेः' ( ब्र० सू० २ । ३ । ४० ) इत्यधिकरणे स्थापितम् । पूर्वोत्तरवाक्यायाविरोधाय कर्मस्वरूपपरित्यागं परिहरति—

त्तरत्र वक्ष्यते। एवमनुसंधाय कर्म कुरु। अकर्मण्यननुष्ठाने न योत्स्यामीति यत्त्वयाऽभिहितं न तत्र ते सङ्गोऽस्तु। उक्तेन प्रकारेण युद्धादिकर्मण्येव सङ्गोऽस्त्वित्यर्थः ॥ ४७ ॥

एतदेव स्पष्टी करोति—

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥

योगस्थ इति। राज्यबन्धुप्रभृतिषु सङ्गं त्यक्त्वा युद्धादीनि कर्माणि योगस्थः कुरु। तदन्तर्भूतविजयादिसिद्ध्यसिद्ध्योः समो भूत्वा कुरु। तदिदं सिद्ध्यसिद्ध्योः समत्वं योगस्थ इत्यत्र योगशब्देनोच्यते। योगः

---

एवमिति। गुणेभ्यराधीनत्वबुद्धावपि किं मे परित्यक्तफलेन दुःखस्वरूपेण भोजनादिकर्मणेति त्वया नोदासितव्यमिति भावः। अननुष्ठान इति। अकर्मणीत्यत्र कर्मशब्दः क्रियावाची। नेत्यत्र तदभावपर इति भावः। अननुष्ठानस्य प्रतिषेधार्थं प्रसङ्गं स्मारयति—न योत्स्यामीति। असङ्गकर्मनिषेधफलितमन्यत्र सङ्गमाह—उक्तेनेति ॥ ४७ ॥

अनन्तरग्रन्थं संगमयति—एतदेवेति। अवधारणेनार्थान्तरपर्युदासः। स्पष्टी करोतीति पौनरुक्त्यपरिहारः। राज्यबन्धुप्रभृतिष्विति। राज्यप्रभृतिषु सङ्गः फलद्वारा बाधकः। बन्धुप्रभृतिषु सङ्गस्तु युद्धाद्यननुष्ठानद्वारेति तदुभयमपि त्याज्यत्वादत्र सङ्गशब्देन संगृहीतमिति भावः। युद्धादीनीति। प्रकृतविशेषप्रदर्शनम्। आनुषङ्गिकत्वसूचनायोक्तं—तदन्तर्भूतेति। लाभालाभौ जयाजयाविति पूर्वोक्तानुसंधानेनाऽऽह—विजयादीति। योगस्थः सिद्ध्यसिद्ध्योः समो भूत्वेत्यनयोरेकवाक्यत्वे पौनरुक्त्याद्भिन्नवाक्यत्वे तु तादृशश्रुतिवाक्यविशेषोपबृंहणौपयिकयोगशब्दार्थव्याख्यानरूपत्वेनापुनरुक्त्या च कुर्वितीदमावर्तितम्। विद्याविनयसंपन्न इति प्रदेशान्तरोक्तसमत्वान्तरव्यावर्तनायोक्तम्—तदिदं सिद्ध्यसिद्ध्योरिति। सार्वत्रिकयोगशब्दप्रयोगविषयव्युदासार्थमुक्तम्—योगस्थ इत्यत्रेति। योगशब्दस्य सिद्ध्यसिद्धिसाम्ये क्वचिदपि प्रयोगो न दृश्यत इत्यत्राऽऽह—योग इति। चित्तसमाधाने प्रयोगस्तावद्योगानुशास-

सिद्ध्यसिद्ध्योः समत्वरूपं चित्तसमाधानम् ॥ ४८ ॥

किमर्थमिदमसकृदुच्यत इत्यत आह—

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥

दूरेणेति । योऽयं प्रधानफलत्यागविषयोऽवान्तरफलसिद्ध्यसिद्ध्योः समत्वविषयश्च बुद्धियोगस्तद्युक्तात्कर्मण इतरत्कर्म दूरेणावरं महदेतद्द्वयोरुत्कर्षापकर्षरूपं वैरूप्यम् । उक्तबुद्धियोगयुक्तं कर्म निखिलं सांसारिकं दुःखं विनिवर्त्य परमपुरुषार्थलक्षणं मोक्षं प्रापयति । इतरदपरिमित-

---

नादिसिद्धः । इदमपि समत्वं तद्रूपमिति योगशब्दार्थ इत्याकूतम् ॥ ४८ ॥

अभ्यासरूपतात्पर्यलिङ्गविवक्षामभिप्रयन्पौनरुक्त्यशङ्काद्वारेणोत्तरश्लोकमवतारयति—किमर्थमिति । इदं साम्यानुसंधानरूपं तद्ध्यनन्तरं प्रशस्यते । कर्ममात्रनिन्दाभ्रमं परिजिहीर्षन्बुद्धियोगशब्दस्य प्रकरणविशेषितं वाच्यांशं तावदाह—योऽयमिति । अजहल्लक्षणया बुद्धिप्राचुर्यहेतुकया लक्षितमाह—तद्युक्तात्कर्मण इति । इतरदित्यनेन प्रकरणविहितकर्मव्यतिरिक्तविषयाऽत्र कर्मनिन्देति सूचितम् । दूराप( व )रशब्दयोरत्र विवक्षितं निष्कर्षमाह—महदिति । तृतीया प्रकारे । ' कृपणाः फलहेतवः ' इत्यनन्तरवाक्येन बुद्धियुक्त इत्यादिना च वक्ष्यमाणं श्रुतिस्मृत्यन्तरादितश्च सिद्धं वैरूप्यप्रकारमाह—उक्तेति । नीतिमन्त्रौषधकेवलयागादिव्यावर्तनाय निखिलशब्दः । तस्यैवोपाधिविशेषावच्छिन्नकारस्न्र्येऽपि प्रयोगा[ द ]वच्छेदकोपाध्यन्तरव्यावर्तनायोक्तम्—सांसारिकमिति । कर्मसाध्यस्वर्गादिव्यावर्तनाय परमशब्दः । अपरिमितशब्देन स्वभावसंख्याकालादिप्रयुक्तसंभावितसमस्तपरिच्छेदनिरासः । हिशब्दस्य हेत्वर्थतामभिप्रयन्नाह—अत इति । प्रकरणादिविरुद्धसंख्याद्युक्तकर्मस्वरूपपरित्यागपूर्वकज्ञानमात्रोपादानभ्रमव्युदासायोक्तम्—कर्मणि क्रियमाण इति । उक्तायामिति ।

दुःखरूपं संसारमिति। अतः कर्मणि क्रियमाण उक्तायां बुद्धौ शरणमन्विच्छ शरणं वासस्थानं तस्यामेव बुद्धौ वर्तस्वेत्यर्थः। कृपणाः फलहेतवः फलसङ्गादिना कर्म कुर्वाणाः कृपणाः संसारिणो भवेयुः ॥४९॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

बुद्धियोगयुक्तस्तु कर्म कुर्वाण उभे सुकृतदुष्कृते अनादिकालसंचिते

---

तात्पर्यातिशयव्यक्त्यर्थं पूर्वोक्तमभ्यस्यत इति भावः। 'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम्' इत्यादिनाऽवगतं शरणशब्दस्य रक्षकाद्यर्थान्तरं व्यावर्तयन्विवक्षितं वक्तुं वाच्यं तावदाह—वासस्थानमिति। नन्विदमसंगतम्। बुद्धेर्वासस्थानभूतगृ(गृ)हाद्याश्रयत्वाभावादित्यत्राऽऽह—तस्यामेवेति। कर्मयोगनिष्ठा ह्यत्रोपदिश्यत इति भावः। 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः' इति कृपणशब्दस्य पुरुषविशेषे रूढत्वात्, बुद्धियुक्त इत्यादिना फलाभिसंधिरहितपुरुषाणां प्रशस्यमानत्वात्, 'मा कर्मफलहेतुः' इति पुरुषे फलहेतुशब्दस्य प्रकृतत्वात्, कृपणाः फलहेतव इत्यत्रापि फलाभिसंधिपूर्वककर्मकारिणः पुरुषा एव निन्द्यन्ते न तु फलहेतुमात्रमित्यभिप्रायेणाऽऽह—फलसङ्गादिनेति। पुरुषाणामपि हि स्वकर्मद्वारा फलहेतुत्वमस्त्येव। जन्मबन्धविनिर्मुक्ता इत्यादेः प्रतिरूपतया परमनिःश्रेयसवैधुर्यस्यात्र कृपणशब्देनाभिधातुमुचितत्वात्संसारिण इत्युक्तम्। अकृपणप्रदर्शनपरानन्तरश्लोकपरामर्शाचायमेवार्थ उचित इति भावः ॥ ४९ ॥

बुद्धियुक्तो जहातीहेत्यस्येह कर्मणि क्रियमाणे बुद्धियुक्त इत्यन्वयमभिप्रेत्याऽऽह—बुद्धियोगयुक्तस्तु कर्म कुर्वाण इति। यद्वा कर्म कुर्वाण इति प्रकरणापन्नमुक्तम्। इहशब्दस्य तु जहातिनाऽन्वयः। इहैव तैर्जितः स्वर्ग इत्यादिवत्। ततश्च प्रतिबन्धकनिवृत्तिरुक्ता भवति। बुद्धिरहितकेवलकर्मादिभिरनिवर्त्यत्वार्थत्वमाह—अनादिकालसंचिते अनन्ते इति। अनादिकालसंचितत्वमनन्तत्वनिदानम्।

अनन्ते बन्धहेतुभूते जहाति । तस्मादुक्तबुद्धियोगाय युज्यस्व । योगः कर्मसु कौशलं कर्मसु क्रियमाणेष्वयं बुद्धियोगः कौशलमतिसामर्थ्यम-तिसामर्थ्यसाध्यमित्यर्थः ॥ ५० ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥

बुद्धियोगयुक्ताः कर्मजं फलं त्यक्त्वा कर्म कुर्वन्तो जन्मबन्धविनिर्मुक्ता अनामयं पदं गच्छन्ति । हि प्रसिद्धमेतत्सर्वासूपनिषत्स्वित्यर्थः ॥ ५१ ॥

---

सुकृतस्य हानिरपुरुषार्थः स्यादित्यत्रोक्तम्—बन्धहेतुभूते इति । न हि काञ्चनकालायसशृङ्खलयोर्बन्धहेतुत्वे कश्चिद्विशेषः । मुमुक्ष्वपेक्षया च स्वर्गादिकारणं सुकृतमपि दुष्कृतमेव । अलौकिकत्वे सत्यनिष्टसाधनत्वात् । स्वर्गादेरपि हि मुमुक्ष्वपेक्षया निरयत्वम् । 'एते वै निरयास्तात स्थानस्य परमात्मनः' इत्यादिभिः प्रतिपादितमिति भावः । बुद्धियुक्त इत्यस्य योगायेत्यस्य च भिन्नार्थपरत्वव्युदासायाऽऽह—तस्मादुक्तबुद्धियोगायेति । युज्यस्व संनह्यस्व, उद्युक्तो भवेत्यर्थः । समत्वं योग उच्यत इतिवद्योगशब्दव्याख्याभ्रमनिरासायाऽऽह—कर्मस्विति । कौशलशब्दस्य तात्पर्यं वक्तुं वाच्यं तावदाह—अतिसामर्थ्यमिति । बुद्धियोगस्य कर्मसामर्थ्यात्मकत्वं कथमित्यत्राऽऽह—अतिसामर्थ्यसाध्यमित्यर्थ इति । कार्ये कारणशब्द उपचरितः ॥ ५० ॥

अनेन श्लोकेन बन्धकसुकृतदुष्कृतहानमुक्तम् । अथ तत्फलभूतबन्धनिवृत्तिपूर्वकामृतत्वप्राप्तिपरस्य कर्मजमिति श्लोकस्य हेतुफलभावक्रमेणान्वयमाह—बुद्धियोगयुक्ता इति । कर्मजं फलं सांसारिकम् । जन्मबन्धो जन्मना बन्धः स्वच्छन्दत्वहानिः । अथवा जन्मैव बन्ध इति कर्मधारयः । अनामयं पदं स्थानविशेषो वा परमप्राप्यं परमात्मस्वरूपं वा प्रकरणवशादत्र ब्रह्मपर्यन्तजीवस्वरूपं वा । पद्यते गम्यत इति पदम् । त्रयमपि हि साक्षादन्यथा वा मुक्तप्राप्यत्वात्पदशब्दवाच्यम् । हिशब्दस्यात्र हेतुत्वादिपरत्वासंभवात्प्रसिद्धिपरत्वं प्रसिद्धिस्थलं चाऽऽह—प्रसिद्धमिति ॥ ५१ ॥

---

१ ग. घ. ङेषु यत्कौशलं तदेव युज्यत इति योग इत्य° ।

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

उक्तप्रकारेण कर्मणि वर्तमानस्य तया वृत्त्या निधूतकल्मषस्य ते बुद्धिर्यदा मोहकलिलमत्यल्पफलसङ्गहेतुभूतं मोहरूपं कलुषं व्यतितरिष्यति तदाऽस्मत्त इतः पूर्वं त्याज्यतया श्रुतस्य फलादेरितः पश्चाच्छ्रोतव्यस्य च कुले स्वयमेव निर्वेदं गन्तासि गमिष्यसि ॥ ५२ ॥

एवमुक्तप्रकारो हेयोपादेयविभागो युक्त्यागमनिरपेक्षं तवैव स्पष्टो भविष्यतीति चमत्कारार्थमुच्यते—यदेति । मोहतरणहेतुं प्रकृतं दर्शयति—उक्तेति । पुण्यपापरूपसंसारिकर्मणा हि मोहः । तच्च ( स च ) फलाभिसंध्यादिरहितकर्मणा निवर्त्यः । ततः कारणाभावात् कार्याभाव इति भावः । अत्यल्पफलसङ्गहेतुभूतमित्यनेन मोहस्येदानीं निर्वेदप्रतिबन्धकत्वमुच्यते । मोहस्वरूपातिरिक्तस्य तत्साध्यस्य कालुष्यस्याभावान्मो( न्मो )हरूपमित्युक्तम् । कलुषशब्दोऽत्र कालुष्यपरः । अस्मत्त इति । आप्ततमेभ्य इति भावः । त्याज्यतयेति । निर्वेदयोग्यत्वायोक्तम् । न हि श्रोतव्येषु श्रुतेषु चोपादेयांशो निर्वेदहेतुः । यद्वा श्रोतव्यस्येत्यस्योपादेयविषयत्वाय श्रुतस्येत्यत्र त्याज्यतयेति विशेषणम् । हेयसङ्गमुपादेयवैतृष्ण्यं च परामृश्य भवति हि निर्वेदः । स च स्वावज्ञारूपः । यथाऽऽहुर्गान्धर्ववेदिनः— 'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदस्या ( दः स्वा ) वमाननम्' इति । श्रोतव्यस्येत्यादेः संबन्धसामान्यषष्ठ्या विवक्षितविशेषकथनं कृत इति । स्वयमेवेति । अस्मद्वाक्यादिनिरपेक्ष इत्यर्थः । गन्तासीत्यत्र पदभेदभ्रमं निरस्यति—गमिष्यसीति । गन्तासीत्यत्र द्वितीयान्वयात्तृजन्तत्वं न युज्यते । तृजन्तत्वे तु भविष्यत्त्वविवक्षा न स्वारसिकी । अतो द( लुड )न्ततयैकपद्यं युक्तम् । एवं जेतासीति वक्ष्यमाणेऽपि । अनद्यतनविहितलुडन्तोऽपि शब्दो व्यतितरिष्यतीत्येतत्तुल्यतया भविष्यन्मात्रार्थेन व्याख्यातः ॥ ५२ ॥

१ ख. ग. घ. ङ. तदा अस्मैतत्पूर्वं ।

योगे त्विमां शृण्वित्यादिनोक्तस्याऽऽत्मयाथात्म्यज्ञानपूर्वकस्य बुद्धिविशेषसंस्कृतकर्मानुष्ठानस्य लक्ष्यभूतं योगाख्यं फलमाह—

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

श्रुतीति । श्रुतिः श्रवणमस्मत्तः श्रवणेन विशेषतः प्रतिपन्ना सकलेतरविसजातीयनित्यनिरतिशयसूक्ष्मात्मविषया[1] स्वयमचलैकरूपा बुद्धि-

---

नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः ।
द्वितीये स्थितधीलक्ष्या प्रोक्ता तन्मोहशान्तये ॥

इति संग्रहश्लोकमनुसंदधानो ज्ञानयोगाभिधानोपक्रमभूतमुत्तरश्लोकमवतारयति—योगे त्विति । बुद्धिविशेषो व्यवसायात्मिकेत्यादिना पूर्वोक्तः । लक्ष्यभूतम्—उद्देश्यभूतमित्यर्थः । श्रुतिविप्रतिपन्नेत्यस्य प्रकृतानुपयुक्ताप्रकृतवैदिकवाक्यविरोधिताभ्रमं श्रोतव्यस्य श्रुतस्य चेति प्रकृतानुरोधेन व्युदस्यति—श्रुतिः श्रवणमित्यादिना । अस्मत्त इति । सार्वज्ञ्यसर्वशक्तिपरमकारुण्यादिभिरनाघ्रातभ्रमविप्रलम्भप्रमादादिदोषगन्धादव्याजबन्धोरीश्वरादिति भावः । विशब्दस्य विरुद्धार्थताव्युदासाय वैशिष्ट्यार्थतामीश्वराच्छ्रवणेन सिद्धां दर्शयति—विशेषत इति । स्थास्यतीति स्थायित्वं ह्युक्तम् । विशेषं पूर्वोक्तं व्यनक्ति—सकलेतरेति । अर्थेनैव विशेषो हि निराकारतया धियामिति भावः । निश्चलाचलशब्दयोः पौनरुक्त्यपरिहारायोक्तम्—स्वयमित्यादि । उद्देश्यान्तर्गतमचलत्वं तत्र विधेयो विशेष इति । स्वयंशब्दस्य [स्व]भावादेकरूपार्थविषयत्वादेकरूपा विषयान्तरसंचाररहिता चेत्यर्थः । अथवा श्रुतिविप्रतिपन्नेति श्रवणस्योक्तत्वान्मननस्थिरीकृतत्वं कुतर्कैरकम्पनीयत्वं च पदाभ्यां विवक्षितम् । यद्वा पूर्वोक्तबहुशाखत्वानन्तत्वनिषेधपरोऽचलशब्द इत्यभिप्रायेणोक्तम्—एकरूपेति । समाधीयतेऽस्मिन्नात्मज्ञानमिति समाधिर्मन इति निर्वचनेन तैलधारावदविच्छिन्नस्मृतिहेतुतामभिप्रयतोक्तम्—असङ्गेत्यादि । योगशब्दस्यात्र ज्ञानयोगरूपनिश्चलबुद्धिसाध्यफलविषयत्वादात्मावलोकनमित्युक्तम् । समाधिशब्दस्यात्र बुद्धिविशेषपरत्वे पुनरुक्त्यादिस्तत्कालपरत्वे

---

[1] क. °सूक्ष्मतत्त्ववि° ।

रसङ्गकर्मानुष्ठानेन विमलीकृते मनसि यदा निश्चला स्थास्यति तदा योगमात्मावलोकनमवाप्स्यसि। एतदुक्तं भवति—शास्त्रजन्यात्मज्ञानपूर्वककर्मयोगः स्थितप्रज्ञाख्यज्ञाननिष्ठामापादयति ज्ञाननिष्ठारूपा स्थितप्रज्ञता तु योगाख्यमात्मावलोकनं साधयतीति ॥ ५३ ॥

एवमुक्ते सति पार्थो निःसङ्गकर्मानुष्ठानरूपकर्मयोगसाध्यस्थितप्रज्ञताया योगसाधनभूतायाः स्वरूपं स्थितप्रज्ञस्यानुष्ठानप्रकारं च पृच्छति—

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

स्थितेति। समाधिस्थस्य स्थितप्रज्ञस्य का भाषा को वाचकः

---

तु लक्षणा च स्यादिति भावः। योगः संनहनोपायध्यानसंगतियुक्तिष्वित्यादिभिरनेकार्थतया प्रसिद्धोऽयं शब्दस्तत्तद्वाक्यानुकूलमनुसंधेयः। ननूपायतया हि योगो विहितः। स कथं फलतयाऽत्र निर्दिश्यते। आत्मज्ञानपूर्वकस्य च कर्मयोगस्याऽऽत्मज्ञानमेव साध्यं चेदात्माश्रयादिदोषः। श्रवणमननाभ्यां स्थितप्रज्ञस्य ह्यनुष्ठानम्। तथा च कथमनुष्ठानसाध्या स्थितप्रज्ञता निश्चलप्रज्ञास्थितिमन्तरेण च कोऽसावपरस्तदुपायो योग इत्यत्राऽऽह—एतदुक्तमिति। तत्र प्रथमचोद्यं कर्मयोगशब्देन योगाख्यमात्मावलोकनमित्यनेन च परिहृतम्। शास्त्रजन्यात्मज्ञानात्मावलोकनशब्दाभ्यामात्माश्रयादिनिरासः। आत्मज्ञानज्ञाननिष्ठाशब्दाभ्यां श्रवणमात्रसिद्धतत्त्वनिश्चयज्ञानयोगविषयाभ्यां तृतीयस्य परिहारः। चतुर्थोऽप्युक्तप्रकारेण साक्षात्कारतद्धेतुस्मृतिसंततिभेदात्परिहृतः। प्रथमं शास्त्रतस्तत्त्वज्ञानं ततः स्मृतिसंततिरूपमुपासनं, ततस्तन्मूलसाक्षात्कार इति ज्ञानपर्वभेदः प्रदर्शितः॥ ५३ ॥

प्रश्नरूपस्योत्तरश्लोकस्यावतारं तत्र पूर्वोत्तरार्धयोः क्रमान्निष्कृष्टप्रश्नार्थं चाऽऽह—एवमिति। पूर्वार्धस्याभिप्रेतं वक्तुमन्वयं तावदाह—समाधीति। समाधिरत्र पूर्वनिरुक्तप्रकारं मनः, तत्र स्थितिः, तद्वशीकरणेनावस्थानम्। किं प्रभाषेतेत्यनेन पुनरुक्तिपरिहाराय स्थितप्रज्ञस्य का भाषेत्यत्र कर्तृतयाऽन्वयशङ्कामपाकरोति—को वाचकः शब्द इति। ननु स्थितप्रज्ञ इत्येव वाचके सिद्धे किं वाच-

शब्दस्तस्य स्वरूपं कीदृशमित्यर्थः । स्थितप्रज्ञः किं च भाषणादिकं करोति ॥ ५४ ॥

वृत्तिविशेषकथनेन स्वरूपमप्युक्तं भवतीति वृत्तिविशेष उच्यते—

श्रीभगवानुवाच—

प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥

आत्मन्येवाऽऽत्मना मनसाऽऽत्मैकावलम्बनेन तुष्टस्तेन तोषेण तद्व्य-

---

कान्तरं पृच्छ्यते, किं चात्र वाचकप्रश्नस्य प्रयोजनमित्यत्राऽऽह— तस्येति । केनचिद्वाचकेन हि कस्यचित्प्रकारभूतप्रवृत्तिनिमित्तवि-शिष्टं स्वरूपं निर्देष्टव्यमिति भावः । स्थितप्रज्ञशब्दात्स्थितधीश-ब्दस्यार्थान्तरपरत्वभ्रमनिरासाय स्थितप्रज्ञ इति पूर्वार्धोक्तशब्द एवात्राऽऽवर्तितः । किं च भाषणादिकमिति । किं प्रभाषेतेत्यादयः किंशब्दाः क्रियाविशेषणतयाऽन्वीयमानाः क्रियाप्रकारप्रश्नपरा इति भावः । किं प्रभाषेतेति वाचिके किं व्रजेतेति कायिके च पृष्टे किमासीतेति मानसपरम् । ध्यानार्थत्वादत्राऽऽसनस्य ॥५४॥

एवं करणत्रयानुष्ठानप्रकारप्रश्नस्य साक्षादुत्तरेषु प्रजहातीत्या-दिषु चतुर्षु श्लोकेषु प्रथमस्य स्वरूपप्रश्नोत्तरतामपि दर्शयति— वृत्तिविशेषेति । प्रकृष्टानुकूल्ययोगिन्यात्मनि प्रीतिरूपस्य तोषस्य कामान्तरप्रहाणहेतुत्वात्तथाऽन्वयमाह—आत्मन्येवेति । सर्वशब्द-स्याऽऽत्मनि तुष्ट इत्येतत्संनिधानसिद्धं संकोचमाह—तद्व्यतिरिक्ता-निति । यद्वा, आत्मन्येवाऽऽत्मना तुष्ट इति यथाक्रम ए(मे)वान्वयः । आत्मैकविषयेण हि मनसाऽन्यतो जातालंबुद्धिस्वरूपसंतोष इत्यर्थः । एतदभिप्रायेणोक्तम्—मनसाऽऽत्मैकावलम्बनेन तुष्ट इति । तेन तोषेणेति । ' न विवेदाऽऽत्मनो गात्रं तत्स्मृताह्लादसंस्थितः ' इतिवत् । प्रकर्षेणेति । अपुनरङ्कुरमित्यर्थः । स्थितप्रज्ञविषयश्लो-कचतुष्टयं तदवस्थाचतुष्टयविषयमिति मन्वानश्चतुर्थीयमवस्थेत्याह—

---

१ ख. ग. घ. ङ. °मभिव्यक्तं ।

तिरिक्तान्सर्वान्मनोगतान्कामान्यदा प्रकर्षेण जहाति तदाऽयं स्थितप्रज्ञ इत्युच्यते। ज्ञाननिष्ठाकाष्ठेयम् ॥ ५५॥

अनन्तरं ज्ञाननिष्ठस्य ततोऽर्वाचीनाऽदूरविप्रकृष्टावस्थोच्यते—

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥

दुःखेष्विति। प्रियविश्लेषादिदुःखनिमित्तेषूपस्थितेष्वनुद्विग्नमना न दुःखी भवति। सुखेषु विगतस्पृहः प्रियेषु संनिहितेष्वपि निस्पृहः। वीतरागभयक्रोधः। अनागतेषु स्पृहा रागस्तद्रहितः। प्रियविश्लेषाप्रियागमनहेतुदर्शननिमित्तं दुःखं भयं तद्रहितः। प्रियविश्लेषाप्रियागमनहेतुभूत-

---

ज्ञाननिष्ठाकाष्ठेयमिति। उक्तं च हैरण्यगर्भैः—'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' [ यो० सू० १। १५ ] इति। ऐहिकामुष्मिकसकलफलविमुखस्यातस्तेषु फलेषु सवासनरागत्यागः सा वशीकरणसंज्ञेत्युच्यत इत्यर्थः ॥ ५५॥

अथैकेन्द्रियसंज्ञाख्यतृतीयावस्थोच्यत इत्याह—ततोऽर्वाचीनेति। 'ओ विजी भयचलनयोः' इति धातुरत्र चलनार्थः। वीतरागभयेति भयस्य पृथगभिधानात्। यद्वाऽनुद्विग्नेति निर्दुःखत्वमात्रं विवक्षितम्। तत एव दुःखेष्वित्येतदपि दुःखहेतुपरमिति मन्वान आह—दुःखनिमित्तेष्विति। आदिशब्देनाप्रियागमनसंग्रहः। भयहेतुव्यावृत्त्यर्थमुक्तम्—उपस्थितेष्विति। दुःखोत्पादनप्रवृत्तेष्वित्यर्थः। दुःखशब्ददेवात्र सुखशब्दस्यापि हेतुपरतां तत्रापि पृथङ्निर्दिष्टरागविषयाद्विलक्षणतां चाऽऽह—प्रियेषु संनिहितेष्वपीति। विगतस्पृहवीतरागशब्दयोरपुनरुक्ततां व्यनक्ति—अनागतेषु स्पृहा राग इति। स्पृहारागशब्दौ सामान्यविशेषविषयौ। ततश्च विशेषशब्दा(ब्द)संनिधाने गोबलीवर्दन्यायात्सामान्यशब्दस्तद्व्यतिरिक्तपर इति भावः। पुनरुक्तिपरिहाराय भयस्य दुःखविषयतामाह—प्रियेत्यादिना हेतुदर्शननिमित्तं दुःखमित्यन्तेन। प्रियविश्लेषाप्रियागमनयोर्दुःखरूपयोः सामग्रीदशामापन्नो यो हेतुः सूचकश्च निमित्तादिकस्तस्य यद्दर्शनं सकलसहकारिसंपत्त्युत्प्रेक्षागर्भं दर्शनमिति ज्ञानमात्रपरं वा तेन यद्दुःखं तदानीमेवा-

चेतनान्तरगतदुःखहेतुः स्वमनोविकारः क्रोधस्तद्रहितः। एवंभूतो मुनिरात्ममननशीलः स्थितधीरित्युच्यते॥ ५६॥

ततोऽर्वाचीनदशा प्रोच्यते—

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥ ५७॥

य इति। यः सर्वत्र प्रियेष्वनभिस्नेह उदासीनः प्रियसंश्लेपविश्लेषरूपं शुभाशुभं प्राप्याभिनन्दनद्वेषरहितः सोऽपि स्थितप्रज्ञः॥ ५७॥

---

ङ्गकम्पादिहेतुरुत्पद्यते तद्भयमित्यर्थः। क्रोधलक्षणे प्रियविश्लेषादिस्त्वैकालिकः सर्वत्र क्रोधोत्पत्तिदर्शनात्। अचेतनेषु वातातपकण्टकादिषु बाधकेष्वपि क्रोधाभावाच्चेतनेत्युक्तम्। यस्तून्मत्तस्तत्रापि कुप्यति सोऽपि चेतनत्वाध्यासेन। अन्तरशब्देन स्वदुःखहेतुस्वमनोविकारव्यावर्तनम्। स हि तथाविधो निर्वेदादिरूपः स्यात्। क्रोधादात्महननाद्यपि परपीडाभिसंधिगर्भम्। मनोविकारोऽत्र रजस्तमःसमुन्मेषकृतो व्यापारविशेषः। तदधीनो ज्ञानविशेष इह तच्छब्देनोपचर्यते। मुनिर्मननशील इति व्युत्पत्तिः। तस्य मननस्यात्र साक्षात्करिष्यमाणात्मविषयत्वव्यक्त्यर्थमुक्तम्—आत्ममननशील इति। एवमस्यास्तृतीयावस्थाया उद्वेगस्पृहादिविरहसाम्येऽपि औत्सुक्यमात्रक्षमवासनाशेषस्य भस्मच्छन्नदहनवदवस्थितत्वाच्च चतुर्थावस्थातो विशेषः॥ ५६॥

अथ व्यतिरेकसंज्ञाख्या द्वितीया दशोच्यत इत्याह—ततोऽर्वाचीनदशेति। अप्रियेषु स्नेहप्रसङ्गाभावात्प्रियमात्रविषयः सर्वत्रेतिशब्द इति दर्शयति—प्रियेष्विति। अभिस्नेहस्य प्रवृत्तिपर्यन्ततया तदभावोऽत्र तद्विषयोपादानप्रवृत्तिराहित्यपर्यन्त इत्याह—उदासीन इति। एतेन प्रियेत्यादिना च व्यतिरेकसंज्ञात्वं व्यनक्ति—अपक्वान्कषायान् पक्वेभ्यः पृथगनुसंधाय तेपामपि पाकापादनदशा हि व्यतिरेकसंज्ञा तत्र स्वयं प्रियेषु प्रवृत्तिरहितो दैवागतप्रियसंश्लेषविश्लेषयोश्चाभिनन्दनादिरहित इत्युक्ते पक्वेतरेषां रागादीनां पाकाभिलापेण मनोव्यापरविशेषनिवारणमुक्तं स्यात्। अभिनन्दनं चात्राभितो नन्दनम्। अनुबन्धिषु कालान्तरेषु च प्रीत्यनुत्पत्तिहेतुभूतनन्दनमित्यर्थः। एवं द्वेषेऽपि॥ ५७॥

ततोऽर्वाचीनदशा प्रोच्यते—

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

यदेति । यदेन्द्रियाणीन्द्रियार्थान् स्प्रष्टुमुद्युक्तानि तदैव कूर्मोऽङ्गानीवेन्द्रियार्थेभ्यः सर्वतः प्रतिसंहृत्य मन आत्मन्येव स्थापयति सोऽपि स्थितप्रज्ञः ॥ ५८ ॥

एवं चतुर्विधा ज्ञाननिष्ठा पूर्वपूर्वोत्तरोत्तरनिष्पादिकेति प्रतिपादितम् ।

---

अथ यतमानसंज्ञाख्या प्रथमा दशोच्यत इत्याह—ततोऽर्वाचीनदशेति । प्रसक्तप्रतिषेधार्थमाह—स्प्रष्टुमुद्युक्तानीति । तेन वार्धकरोगादिप्रयुक्ताशक्तिसुषुप्त्यादिकृतनिवृत्तिव्यवच्छेदः । तदैवेति । भोगानन्तरनिवृत्तिव्युदासः । कूर्मोऽङ्गानीवेत्यनेनेन्द्रियाणां संकल्पविशेषमात्रनियाम्यत्वमुच्यते—सर्वश इति । विलोकनभाषणविलासपरिहासादिनिवृत्तिपरो विषयदोषदर्शनादिहेतुप्रकारपरो वा। प्रतिसंहृत्येत्यनेनेन्द्रियनिरोधस्याऽऽत्मयननाङ्गता दर्शिता । अत्र च ज्ञाननिष्ठावस्थाविशेषप्रकरणे सुषुप्त्यादिविलक्षणव्यापारोपरतिस्तत्साध्यात्मगोचरमनोवस्थापनपर्यन्ता विवक्षितेत्याह—मन आत्मनीति ॥ ५८ ॥

किमर्थमिदमवस्थाचतुष्टयं विभज्योपदिश्यत इत्यत्राऽऽह—एवमिति । प्रथमं बाह्येन्द्रियाणि विषयेभ्यः प्रतिसंहृत्य मन आत्मनि व्यवस्थापयितुं यतेत । इयं यतमानसंज्ञा । अथ बलात्संहृतान्यपि बाह्येन्द्रियाणि सावशेषरागद्वेषादिदोषकलुषितं मनः पुनः पुनरवसरे प्रेरयेत्, स्वयं चाऽऽत्मनि स्थातुं न शक्नुयात् । अतः पक्वावशिष्टरागद्वेषादीनांदाशि( सी )न्यानभिनन्दनादिक्रमेण पचेत् । इयं व्यतिरेकसंज्ञा । तपः पक्वेऽपि दोषशेषेऽनादिविषयानुभवभावितवासनामात्रमात्मानमनुबुभूषन्तीं शेमुषीं प्रति विभन्स्ने ( रुन्धे ) त् । तत्र निरतिशयानन्दरूपमात्मानं पुरुषद्वेषिण्या योषित इव युवानं प्रदर्श्य क्रमादात्मनि तोषं समुत्पाद्य तेन तोषविशेषेण दवीयसा च स्मृतिविधुरेण कालेन बाह्यविषयवासनाजालमुन्मूलयितुमीहेत । सेयमेकेन्द्रिय-

इदानीं ज्ञाननिष्ठाया दुष्प्रापतां तत्प्राप्त्युपायं चाऽऽह—

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

विषया इति। इन्द्रियाणामाहारो विषयाः। निराहारस्य विषयेभ्यः प्रत्याहृतेन्द्रियस्य देहिनो विषया विनिवर्तमाना रसवर्जं विनिवर्तन्ते। रसो रागो विषयरागो न निवर्तत इत्यर्थः। रसो रागोऽप्यात्मस्वरूपं

---

संज्ञा। या पुनः समस्तवासनाविलयादौत्सुक्यमात्रस्याप्यसंभवे परमवैराग्यदशा सा वशीकरणसंज्ञा ज्ञाननिष्ठाकाष्ठा योगाख्यमात्मावलोकनं साधयति। तच्चावलोकनं परम्परया निरतिशयपुरुषार्थभूतामृतत्वाय कल्पत इति दर्शितं भवति। कामानां तथात्वेनादर्शनं तथादृश्यमानेष्वपि निःसङ्गतासङ्गलेशेन भुज्यमानेष्वपि नातिस्नेहः। प्रचुरेऽपि रागे तन्निरोधसंरम्भ इति चावस्थावैपम्यमात्मरतित्वम्। तस्य स्वरूपमाश्चर्यवद्वदतीति, तस्य तदेकप्रापणं तदनुसंधानरूपं तदासं(सनं) तत्प्राप्त्यर्थप्रवृत्तिरूपं तस्य प्रयोजनं चेति प्रश्नचतुष्कोत्तरं सिद्धम्। अथोत्तरप्रकरणं पूर्वेण पृथगर्थं प्रदर्श्य संगमयन्नवतारयति—इदानीमिति। ज्ञाननिष्ठायाश्चतुर्विधाया अपीति शेषः। निराहारस्येत्यनेन भोजननिषेधभ्रमं व्युदस्यति—इन्द्रियाणामित्यादिना। 'न चैकान्तमनश्नतः' 'युक्ताहारविहारस्य' इति हि वक्ष्यते। अन्यत्राप्यना-(त्या)शनादतीपानादिति ह्युच्यते। मोक्षधर्मे च—'दशैतानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये' इति। सर्वेन्द्रियविषयाणामाहारशब्देन ग्रहणं दृष्टम्। न च प्रसिद्धाहारनिषेधमात्रादशेषविषयनिवृत्तिः। तस्य कतिपयेन्द्रियविषयत्वादिति भावः। रज(स)वर्जमित्येतावति वाक्यतात्पर्यमिति द्योतनाय विनिवर्तमाना इत्यनूदितम्। आत्मगोचररागव्यवच्छेदायाऽऽह—विषयराग इति। प्रस्तुता एव विषयाः। परमिति निर्देशस्यावधित्वमर्हतीति विषयेभ्य इत्युक्तम्। कालादिकृतपरत्वमात्रस्यानुपयुक्तत्वाद्विष-

विषयेभ्यः परं सुखतरं दृष्ट्वा विनिवर्तते ॥ ५९ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥

आत्मदर्शनेन विना विषयरागो न निवर्तते । अनिवृत्ते विषयरागे विपश्चितो यतमानस्यापि पुरुषस्येन्द्रियाणि प्रमाथीनि बलवन्ति मनः प्रसह्य हरन्ति । एवमिन्द्रियजय आत्मदर्शनाधीन आत्मदर्शनमिन्द्रियजयाधीनमिति ज्ञाननिष्ठा दुष्प्रापा ॥ ६० ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

अस्य सर्वस्य दोषस्य परिजिहीर्षया विषयानुरागयुक्ततया दुर्जयानी-

---

परागनिवर्तनौपयिकं परशब्दार्थमाह—सुखतरमिति । विषया हि सुखरूपाः । आत्मस्वरूपं तु ततोऽप्यतिशयेन सुखरूपम् । अत्र दृष्ट्वा निवर्तत इति दर्शनस्य रागकर्तृकतया निर्देश औपचारिकः । यद्वा दृष्ट्वा स्थितस्यास्य देहिनो रागो निवर्तत इत्यन्वयः ॥ ५९ ॥

एवमात्मदर्शनेन विना विषयरागो न निवर्तत इत्युक्तम् । अथानिवृत्ते विषयरागे दुर्जयानीन्द्रियाणीत्युच्यते—यतत इति श्लोकेन । विपश्चित्त्वं यतमानत्वे हेतुरिति द्योतनायोक्तम्—विपश्चितो यतमानस्यापीति । अत्र विपश्चित्त्वं शास्त्रजन्यहेयोपादेयविवेकत्वम् । बलवतां प्रमाथित्वं हि 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति स्मर्यत इति ज्ञापनाय बलवन्तीत्युक्तम् । इन्द्रियाणां बलं च रागादिरेव । उक्तश्लोकद्वयतात्पर्यसिद्धमन्योन्याश्रयणं तत्फलं चाऽऽह—एवमिति ॥ ६० ॥

तदन्योन्याश्रयदूषितेऽर्थे साध्यसाधनभावः पूर्वमुपदिष्ट इत्यत्रोच्यते—तानि सर्वाणीति । अस्येति । अन्योन्याश्रयादिदोषस्येत्यर्थः । संयम्येति । विषयस्पर्शनिवारणमात्रमत्रोच्यते न त्विन्द्रियजयावस्था । मत्पर इत्यत्र वक्तृविग्रहवैशिष्ट्यविवक्षया सिद्धं शुभाश्रयविग्रहविशेषवत्त्वं चेतस इत्यादिना विवृतम् ।

---

१ ङ. सुखं दृ° । २ क. ख. ग. घ. °ख्याप्या ।

न्द्रियाणि संयम्य चेतसः शुभाश्रयभूते मयि मनोऽवस्थाप्य समाहितं आसीत। मनसि मद्विषये सति निर्दग्धाशेषकल्मषतया निर्मलीकृतं विषयानुरागरहितं मन इन्द्रियाणि स्ववशानि करोति। ततो वश्येन्द्रियं मन आत्मदर्शनाय प्रभवति। उक्तं च—

यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्॥ इति।

तदाह—वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठितेति॥ ६१॥

एवंमय्यनिवेश्यं मनः स्वीयगौरवेणेन्द्रियजये प्रवृत्तो विनष्टो भवतीत्याह—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते॥ ६२॥

ध्यायत इति। निरस्तविषयानुरागस्य हि मय्यनिवेशितमनस इन्द्रियाणि संयम्यावस्थितस्यापि अनादिपापवासनया विषयध्यानमवर्ज-

---

शुभशब्देन हिरण्यगर्भादेराश्रयशब्देन परिशुद्धात्मस्वरूपस्य च व्यवच्छेदः। युक्तशब्देनात्र विषयस्वभावात्सुकरं चित्तसमाधानं विवक्षितमित्याह—समाहित इति। मत्पर इत्येतावता कथमन्योन्याश्रयादिपरिहार इत्यत्राऽऽह—मनसीति। अत्राशेषशब्देनोपायविरोधिसर्वकर्मसंग्रहः। निर्मलीकृतं रजस्तमोविरहितं तत एव शब्दादिविषयानुरागरहितम्। अत्र प्रज्ञाशब्दस्य ज्ञाननिष्ठाफलपर्यन्तत्वमात्मदर्शनशब्देनोक्तम्। शुभाश्रयानुसंधानस्य कल्मषविनाशकत्वे स्मृत्यन्तरसंवादमाह—यथेति। आत्मदर्शनमन्तरेणैवेन्द्रियजयसिद्धेर्नान्योन्याश्रयः। अतः पूर्वोक्तसाध्यसाधनोपपत्तिरित्युत्तरार्धेनोच्यत इत्याह—तदाहेति॥६१॥

उक्तान्योन्याश्रयणफलभूताया इन्द्रियजयात्मदर्शनयोरसिद्धेः प्रकारः श्लोकद्वयेन प्रपञ्च्यत इत्याह—एवमिति। अदृष्टात्मस्वरूपस्य विषयान्ध्यायत इत्यनुवादसिद्धां विषयेषु स्वरसवाहितां सहेतुकामाह—अनिरस्तेति। अत्र संयम्येति निमीलनादिमात्रकृतं निवारणमुच्यते। उपजायत इत्यत्रोपसर्गाभिप्रेतं विविच्य

नीयं स्यात्। ध्यायतो विषयान्पुंसः पुनरपि सङ्गोऽतिप्रवृद्धो जायते। सङ्गात्संजायते कामः। कामो नाम सङ्गस्य विपाकदशा। पुरुषो यां दशामापन्नो विषयानभुक्त्वा स्थातुं न शक्नोति स कामः। कामात्क्रोधोऽभिजायते कामे वर्तमाने विषये चासंनिहिते संनिहितान्पुरुषान्प्रति एभिरस्मदिष्टं विहतमिति क्रोधो भवति ॥ ६२ ॥

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥

क्रोधाद्भवति संमोहः। संमोहः कृत्याकृत्यविवेकशून्यता तया सर्वं करोति। ततश्च प्रारब्ध इन्द्रियजयादिके प्रयत्ने स्मृतिभ्रंशो भवति। स्मृतिभ्रंशाद्बुद्धिनाश आत्मज्ञाने यो व्यवसायः कृतस्तस्य नाशः स्यात्।

---

दर्शयति—प्रवृद्धो जायत इति। सङ्गकामयोरभेदात्कार्यकारणभावानुपपत्तिरित्यत्राऽऽह—कामो नामेति। विपाकदशाशब्देन सामान्यत उक्तेऽपि व्यावृत्ताकारप्रतिपत्तिर्न स्यादिति तल्लक्षणमाह—पुरुष इति। सर्वदा कामस्य क्रोधहेतुत्वं नास्तीत्यत उक्तम्—विषयेच्छा ( चा ) संनिहित इति। न केवलं कामप्रतिबन्धकानेव पुरुषान्प्रति क्रोधोऽपि तु कृत्याकृत्यविवेकान्धतया तस्यां दशायामुपलभ्यमानान्प्रत्यपीति द्योतनाय संनिहितानित्युक्तम्। ईश्वरोऽपि हि क्रोधवेगमभिनयन्कस्मिंश्चिदेव वक्षसि (!) श्वाति सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम्, इत्याह। अयं चाभिजायत इत्यत्रोपसर्गाभिप्रेतार्थोऽभितो जायत इत्यर्थः ॥ ६२ ॥

समित्येकीकारे ततोऽत्र संमोहः कृत्याकृत्याविवेकात्मा मोह इत्यभिप्रायेणाऽऽह—कृत्येति। संमोहस्य स्मृतिभ्रंशहेतुत्वेऽवान्तरव्यापारमाह—तयेति। 'क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि' इत्याद्यनुसारेणोक्तम्—सर्वमिति। ततश्चेति। सावान्तरव्यापारात्संमोहादित्यर्थः। स्मर्तव्ये प्रस्तुतविषये स्मृतिभ्रंशं योजयति—प्रारब्ध इति। स्मृतिभ्रंशादित्युत्तरं वाक्यं शृङ्खलावशात्स्मृतिविभ्रमशब्दस्य तदेकार्थत्वायोक्तम्—स्मृतिभ्रंशो भवतीति। बुद्धिनाश इत्यत्र प्रकृतं बुद्धेर्विशेषमाह—आत्मेति। न तावदिह सामान्यतो ज्ञानमात्रं बुद्धिशब्दार्थः। न चेतः पूर्वमात्मदर्शनं सिद्धम्। न च

बुद्धिनाशात् पुनरपि संसारे निमग्नो नष्टो भवति ॥ ६३ ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

उक्तेन प्रकारेण मयि सर्वेश्वरे चेतसः शुभाश्रयभूते न्यस्तमना निर्दग्धशेषकल्मषतया रागद्वेषवियुक्तैरात्मवश्यैरिन्द्रियैर्विषयांश्चरन् विषयांस्तिरस्कृत्य वर्तमानो विधेयात्मा विधेयमनाः प्रसादमधिगच्छति निर्मलान्तःकरणो भवतीत्यर्थः ॥ ६४ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

---

भविष्यदात्मसंदर्शनादिकमिदानीं नाशयोग्यम् । अतस्तल्लिप्सया कृतस्तदुपायानुष्ठानाध्यवसाय इहोपायस्मृतिसाध्यो बुद्धिशब्देनोच्यत इति भावः । प्रणश्यतीत्यत्र नित्यस्याऽऽत्मनो नाशो ह्यसत्समत्वं तच्च यथावस्थिताकारानुपलम्भः । स च देहात्मभ्रमादिकृतः । तत्रापि हेतुर्देहसंबन्ध इत्यभिप्रायेणोक्तम्—संसारे निमग्न इति ॥ ६३ ॥

अथ तानि सर्वाणीत्युक्तार्थकरणेऽन्योन्याश्रयपरिहारप्रकारः प्रयोजनभूतसंसारनिवृत्तिश्च श्लोकद्वयेन प्रपञ्च्यते—रागद्वेषेति । रागद्वेषवियोगोऽपि कुत इत्यत्र पूर्वोक्तहेतुरित्यभिप्रायेणाऽऽह—उक्तेनेति । रागद्वेषवियोगोऽत्रेन्द्रियाणामात्मवश्यताहेतुः । विषयांश्चरन्नित्यनेन विषयभोगभ्रमव्युदासायाऽऽत्मवश्यत्वफलितमाह—विषयांस्तिरस्कृत्य वर्तमान इति । चरतिरत्र गत्यर्थ आक्रमणरूपगतिपरः । भक्षणार्थो वा संहरणपर इत्युभयथाऽपि तत्तिरस्कारार्थत्वमत्र विवक्षितम् । तिरस्कारोऽत्रानादरः । तथा च नैघण्टुकाः—'अनादरः परिभवः परीभावस्तिरस्क्रिया' इति । बाह्येन्द्रियतद्विषयविजयो हि मनोविजयार्थ इत्यभिप्रायेणाऽऽह—विधेयमना इति । विधेयात्मेति मनसः प्रसक्तत्वात्प्रसन्नचेतस इति वक्ष्यमाणत्वाच्च । प्रसादोऽत्र मनोनैर्मल्यमित्याह—निर्मलेति ॥ ६४ ॥

प्रसाद इति श्लोके प्रसादहानिशब्दयोः क्रमात्पष्ठीद्वयान्वय-

अस्य पुरुषस्य मनसः प्रसादे सति प्रकृतिसंसर्गप्रयुक्तसर्वदुःखानां हानिरुपजायते । प्रसन्नचेतस आत्मावलोकनविरोधिदोषरहितमनसस्त-दानीमेव हि विविक्तात्मविषया बुद्धिर्मयि पर्यवतिष्ठते । अतो मनःप्रसादे सर्वदुःखानां हानिर्भवत्येव ॥ ६५ ॥

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

मयि संन्यस्तमनोरहितस्य[1] स्वयत्नेनेन्द्रियदमने प्रवृत्तस्य कदाचि-दपि विविक्तात्मविषया बुद्धिर्न सेत्स्यति । अत एव तस्य तद्भावना च न संभवति । विविक्तात्मानमभावयतो विषयस्पृहाशान्तिर्न भवति ।

---

प्रमं व्युदस्यन्नन्वयप्रकारमाह—अस्येति । दुःखाज्ञानमला धर्माः प्रकृतेस्तेन चाऽऽत्मनेत्याद्यभिप्रेतौपाधिकत्वेन हानियोग्यत्वार्थ-माह—प्रकृतीति । प्रतिबन्धकाभावे ह्याशु कार्योत्पत्तिरित्यभिप्रा-येण प्रसन्नचेतस इत्यस्यार्थमाह—आत्मावलोकनविरोधिदोषरहितमनस इति । मनःप्रसादस्य सर्वदुःखहानिहेतुत्वमात्मदर्शनहेतुत्वादुपपद्यत इति हेत्वर्थस्य हिशब्दस्यार्थमाह—अत इति ॥ ६५ ॥

अथ पूर्वोक्तान्योन्याश्रयफलभूतामात्मदर्शनासिद्धिं बुद्धिना-शात्प्रणश्यतीत्येतद्विवरणरूपेणानूद्य ततः परमप्रयोजनस्याप्यला-भप्रकार उच्यते—नास्तीति । युक्त आसीत मत्पर इति पूर्वो-क्तस्य निवृत्तिरयुक्तशब्देनोच्यत इति तात्पर्येणाऽऽह—मयीति । यततो ह्यपीति पूर्वोक्तं स्मारयति—स्वयत्नेनेति । नास्तीत्यनेना-भिप्रेतमाह—कदाचिदपीत्यादिना । अतिचिरकालप्रयासेनापीत्यर्थः। द्वितीयपादस्थमयुक्तस्येति पदं शृङ्खलौचित्यायायुक्तत्वफलभूतं बुद्ध्यभावलक्षणमिति तात्पर्येणाऽऽह—अत एवेति । यद्वा तस्ये-त्ययुक्तपरामर्शः । अत एवेति तु बुद्ध्यभावादेवेत्यर्थः । अथवा परम्परया हेतुत्वमभिप्रेत्यायुक्तत्वादेवेति विवक्षाभिन्नविषयभावना-न्तरनिषेधायोगात्तद्भावनेत्युक्तम् । रसोऽप्यस्य परं दृष्ट्वा निवर्तते। रागद्वेषवियुक्तैः सुखेषु विगतस्पृह इत्याद्यानुगुण्येन शान्तिं विशिनष्टि—विषयस्पृहाशान्तिरिति । अशान्तस्यैव स्वर्गादिसुखला-

---

१ ख. घ. °मनस्तार° ।

अशान्तस्य विषयस्पृहायुक्तस्य कुतो नित्यनिरतिशयसुखप्राप्तिः ॥ ६६ ॥

पुनरप्युक्तेन प्रकारेणेन्द्रियनियमनमकुर्वतोऽनर्थमाह—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

इन्द्रियाणामिति । इन्द्रियाणां विषयेषु चरतां विषयेषु वर्तमानानां वर्तनमनु यन्मनोऽनुविधीयते पुरुषेणानुवर्त्यते तन्मनोऽस्य विविक्तात्मप्रवणां प्रज्ञां हरति विषयप्रवणतां करोतीत्यर्थः । यथाऽम्भसि नीयमानां नावं प्रतिकूलो वायुः प्रसह्य हरति ॥ ६७ ॥

---

भादस्तत्वं प्रकरणसिद्धम् । सुखस्य विशेषमाह—नित्यनिरतिशयेति । अनेन श्लोकेन मत्याहारादियोगावयवचतुष्टयस्य तत्फलस्य निःश्रेयसस्य च यथासंभवमभिधातात्पर्याभ्यां पूर्वपूर्वाभावादुत्तरोत्तरस्या लाभ इति सूचितो( तं )भवति ॥ ६६ ॥

अथेन्द्रियनिग्रहाभावेऽपि बुद्ध्यभावस्य पूर्वोक्तस्य च प्रकार इन्द्रियाणामित्यनन्तरश्लोकेनोच्यत इत्यपुनरुक्तिः । आदरार्था वा पुनरुक्तिरित्यभिप्रायेणाऽऽह—पुनरपीति । केवलस्पन्दादिमात्रव्युदासाय विषयेष्वित्युक्तम् । इन्द्रियाणां सर्वेषां न विषयेषु संचारोऽस्तीति तदौन्मुख्यमर्थ इति व्यञ्जनाय, इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति प्रयोगान्तरानुसारेण वर्तमानानामित्युक्तम् । यत्तच्छब्दयोर्मनोविषयत्वमेवोचितम् । प्रज्ञास( ह )रणे तस्यैव प्रधानत्वात् । मनसो बाह्येन्द्रियानुविधाने सर्वेन्द्रियसाधारण्येन वक्तव्ये यदितिनिर्धारणस्य प्रयोजनाभावाद् बाह्येन्द्रियस्य मनोनुविधाने प्रज्ञाहरणाभावाच्च । यद्येकं क्षरतीन्द्रियमिति मनुवचने तु मनसो यु( ऽनु )क्तत्वादिन्द्रियशब्दाभ्यासादेकशब्दबलाच्च निर्धारणार्थतैव । न च तत्तुल्यत्वमस्यापि वाक्यस्य निर्बन्धनीयमिति कृत्वा वर्तनमनु यन्मन इत्याद्युक्तम् । विधीयत इत्यस्य कर्त्रपेक्षां पूरयति—पुरुषेणेति । स्वस्यैवायमभिनय इति भावः । अनभिसंहितदेशप्रापणं हि दृष्टान्तेऽभिप्रेतमिति प्रदर्शयन् हरतेर्विनाशनार्थताभ्रमव्युदासाय चाऽऽह—विषयप्रवणतामिति । अम्भसीत्यस्य हरतिनाऽन्वयभ्रान्तिमपाकरोति–अम्भसि नीयमानामिति । अनिष्टविषयप्रापणनिदर्शनत्वायोक्तम्–प्रतिकूल इति ॥ ६७ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

तस्मादुक्तेन प्रकारेण शुभाश्रये मयि निविष्टमनसो यस्येन्द्रियाणीन्द्रियार्थेभ्यः सर्वशो निगृहीतानि तस्यैवाऽऽत्मनि प्रज्ञा प्रतिष्ठिता भवति ॥ ६८ ॥

एवं नियतेन्द्रियस्य प्रसन्नमनसः सिद्धिमाह—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

या निशेति । याऽऽत्मविषया बुद्धिः सर्वभूतानां निशा निशेवाप्रकाशिका तस्यामात्मविषयायां बुद्धाविन्द्रियसंयमी प्रसन्नमना जागर्ति

---

यदा संहरत इत्याद्युपक्रान्तेन्द्रियनिग्रहोपदेश उपसंह्रियते—तस्मादिति श्लोकेन । तस्मादिति । इन्द्रियानुविधायिनो मनसः प्रज्ञाप्रतिष्ठापितत्वादित्यर्थः । निग्रहहेतुं प्रागुक्तमनुकर्षति—उक्तेनेत्यादिना ॥ ६८ ॥

एवमुपायमुपदिश्य फलमुपदिशतीत्याह—एवमिति । प्रागुक्तस्यैव फलस्य प्रशंसापरत्वादपुनरुक्तिः । अतो या निशेत्यादिभिस्त्रिभिः श्लोकैः प्रजहातीत्यादिनोक्तावस्थाचतुष्टयफलं तृतीयेन त्ववस्थाचतुष्टयं निगम्यत इति भावः । येति प्रसिद्धतया निर्देशोऽत्र प्रस्तुतप्रज्ञाविषयः । साक्षान्निशाया देशकालभेदेन परिवर्तमानायाः सर्वभूतसाधारण्याभावादिति तात्पर्येणाऽऽह—याऽऽत्मविषयेति । उपचारनिमित्तं व्यनक्ति—निशेवाप्रकाशिकेति । स्वप्रकाशाया अपि बुद्धेरप्र[सु]तदशायामप्रकाशत्वमुपपद्यते । इन्द्रियनिग्रहस्य प्रकृतत्वात्स एवात्र संयमिशब्दार्थ इत्यभिप्रायेणोक्तम्—इन्द्रियसंयमीति । या पुनः 'त्रयमेकत्र संयमः' इति धारणाध्यानसमाधीनां समुचितानां संयमत्वेन पातञ्जलपरिभाषा साऽत्र न विवक्षितेति भावः । इन्द्रियसंयमस्य बुद्धिजननेऽवान्तरव्यापारं पूर्वोक्तमाह—प्रसन्नमना इति । जागर्तीत्यत्र मुख्यार्थायोगादाह—आत्मानमिति । बुद्धौ जागरणशब्दनिर्दिष्टं प्रबुद्धत्वं

आत्मानमवलोकयन्नास्त इत्यर्थः। यस्यां शब्दादिविषयायां बुद्धौ सर्वाणि भूतानि जाग्रति प्रबुद्धानि भवन्ति सा शब्दादिविषया बुद्धिरात्मानं पश्यतो मुनेर्निशेवाप्रकाशिका भवति॥ ६९॥

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी॥ ७०॥

यथा स्वेनैवाऽऽपूर्यमाणमेकरूपं समुद्रं नादेया आपः प्रविशन्ति। आसामपां प्रवेशेऽप्रवेशे वा समुद्रो न कंचन विशेषमापद्यते। एवं र

---

प्रकाशमानप्रसृतबुद्धिविशिष्टत्वमेव। सा च सविषया प्रकाशत इति भावः। बुद्धिप्रकरणत्वाद्यस्यामिति निर्देशोऽपि बुद्धिविषयः। सा च बुद्धिर्भूतानीत्यसंयमिनिर्दिष्टतया व्यपदेशादात्मदर्शिनो निशात्ववचनाच्च शब्दादिविषयेत्युक्तम्। सर्वभूतानामित्यत्र समासनिमग्नोऽपि सर्वशब्दो भूतानीत्यत्रापि बुद्ध्या निष्कृष्यान्वेतव्य इति सर्वाणीत्युक्तम्। पश्यत इत्यत्र कर्माकाङ्क्षायामात्मानमिति प्रकरणसिद्धमुक्तम्॥ ६९॥

एवं शब्दाद्यदर्शिनः पर्यवसितात्मदर्शनमयी सिद्धिरुक्ता। एतस्या एव सिद्धेरर्वाचीनामदूरविप्रकृष्टां शब्दादिविषयदर्शनेऽप्यविकारतारूपामवस्थामाह—आपूर्यमाणमिति। अत्र प्रवेशाप्रवेशयोरविशेषोपलम्भस्य विवक्षितत्वादापूर्यमाणमिति न प्रविशन्तीभिर्नादेयीभिरद्भिरापूरणं विवक्षितम्। अपि तु दार्ष्टान्तिके विवक्षितायाः स्वात्मावलोकनतृप्तेः प्रतिनिर्देशः क्रियत इति दर्शयति—स्वेनैवेति। अचलप्रतिष्ठशब्दोऽत्र सीमातिलङ्घनादिहेतुभूतवृद्धिह्रासराहित्यपर इत्याह—एकरूपमिति। नादेया इत्यनेन समुद्रप्रयत्ननिरपेक्षं स्वतः समुद्रप्रावण्यं सूच्यते। दृष्टान्ते निर्मथितार्थमाह—आसामिति। कामा इत्यत्र कर्मणि व्युत्पत्तिमभिप्रेत्याऽऽह—

कामाः शब्दादयो विषया यं संयमिनं प्रविशन्ति तदिन्द्रियगोचरतां यान्ति स शान्तिमाप्नोति । शब्दादिष्विन्द्रियगोचरतामापन्नेष्वनापन्नेषु च स्वात्मावलोकनतृप्तो[1] यो न विकारमाप्नोति स एव शान्तिमाप्नोतीत्यर्थः। न कामकामी यः शब्दादिभिर्विक्रियते स कदाचिदपि न शान्तिमाप्नोति ॥ ७० ॥

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

काम्यन्त इति कामाः शब्दादयो विषयाः । यः पुमाञ्शब्दादी-

---

शब्दादयो विषया इति । अविकारतासिद्ध्यर्थं यच्छब्दस्य पूर्वोक्तसंयमित्वाभिप्रायतामाह—संयमिनमिति । रूपादिविषयाणां पुरुषे प्रवेशो नान्नपानादिवच्छरीरान्तःप्रवेशः[ किंतु ]तत्तदिन्द्रियद्वारा ज्ञानविषयत्वमेव विवक्षितमित्यभिप्रायेणाऽऽह—इन्द्रियेति । यस्येति शेषः । तद्वदित्यनेन सिद्धमाह—शब्देति । नित्यनिरवद्यनिरतिशयस्वात्मानुभवानन्दसंदोहप्रमग्नो नश्वरदुःखमिश्रसातिशयविषयानुभवानन्दबिन्दुषु न सज्यत इति भावः । न कामकामीत्येतत्पूर्वोक्तस्यार्थस्य व्यतिरेकेण दृढीकरणमिति व्यञ्जयति—य इति । विकारस्य प्रसक्तत्वात्कामित्वं स्वकार्यं विकारमप्यजहल्लक्षणया लक्षयतीति विक्रियत इत्युक्तम् । कामान् कामयितुं शीलमस्य स कामकामी । कदाचिदपीति । यावत्कामपरित्यागमित्यर्थः । एतेन यो विक्रियते स न शान्तिमाप्नोतीत्यनयोरैकार्थ्यशङ्का परिहृता । विषयदर्शनविक्रियमाणोऽन्यदाऽपि स्पृहारहितो न स्यादित्यर्थः ॥ ७० ॥

किं कामकामिनः सर्वदा शान्तिर्न स्यादिति शङ्कामपाकुर्वन्नदर्शनाविकारत्वावस्थयोः कारणभूतां विषयसंग्रहणस्पृहाममकारदेहात्मभ्रमाणां क्रमात्कार्यकारणभावनिबन्धनानुलोमप्रतिलोमान्वयव्यतिरेकद्वयानां निवृत्तिरूपामवस्थामाह—विहायेति । पूर्वत्रात्र च श्लोके प्रवृत्तं कामशब्दं निर्वक्ति—काम्यन्त इति कामा इति । चर-

---

१ क. °तृप्त्यैव यो ।

न्सर्वान्विषयान्विहाय तत्र निःस्पृहो ममतारहितश्चानात्मनि देह आत्माभिमानरहितश्चरति स आत्मानं दृष्ट्वा शान्तिमधिगच्छति ॥ ७१ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

एषा नित्यात्मज्ञानपूर्विकाऽसङ्गकर्मणि स्थितिः स्थितधीलक्षणा ब्राह्मी ब्रह्मप्रापिका । ईदृशीं कर्मस्थितिं प्राप्य न विमुह्यति न पुनः संसारमाप्नोति । अस्यां स्थित्यामन्तिमेऽपि वयसि स्थित्वा

---

तीति । वर्तेत इत्यर्थः । आत्मदर्शी (र्शि) पुरुषपर्वभेदविषयौ पूर्वश्लोकौ । अयं त्वात्मदर्शनार्थिपुरुषविषय इति विवेकं द्योतयति—आत्मानं दृष्ट्वेति ॥ ७१ ॥

अनयोः श्लोकयोर्विषयानुभवविनिवृत्तिलक्षणा सा निशेति पूर्वश्लोकोक्तशान्तिरुक्ता । एषेति श्लोकेन परमप्रयोजनतया प्रक्रान्तायाः संसारनिवृत्तिलक्षणशान्तेरुपसंहारः क्रियते । यद्वा श्लोकत्रये शान्तिनिर्वाणशब्दाभ्यामेकमेव फलमुच्यते । ' ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ' इत्यत्र परं निर्वाणमाप्नोतीति हि व्याख्यास्यति । ' एषा ब्राह्मी ' इति श्लोकेनाध्यायार्थस्य निगमनं फलाव्यभिचारस्थापनं च । एषेति निर्देशस्य पूर्वोक्तनिखिलप्रकारपरामर्शित्वात्तं प्रकारमाह—नित्येति । स्थितधीर्लक्षणं यस्याः सा स्थितधीलक्षणा ज्ञानयोगाख्यस्थितप्रज्ञतासाधनभूतेत्यर्थः । ब्राह्मीत्यत्र तद्धितविवक्षितसंबन्धविशेषं दर्शयति—ब्रह्मप्रापिकेति । एनामित्यन्वादेशोऽपि सप्रकारपरामर्शीति व्यञ्जयति—ईदृशीमिति । मोहनिषेधफलितमाह—पुनरिति । अन्तकाल इत्युत्क्रान्तिकालभ्रमव्युदासायाऽऽह—अन्तिमेऽपि वयसीति । उत्तमे

---

१ ख. ग. स्थिरधी° ।

ब्रह्मनिर्वाणमृच्छति निर्वाणमयं ब्रह्म गच्छति सुखैकतानमात्मानमाप्नोतीत्यर्थः । एवमात्मयाथात्म्यं युद्धाख्यस्य च कर्मणस्तत्प्राप्तिसाधनतामजानतः शरीरात्मज्ञानेन मोहितस्य तेन च मोहेन युद्धान्निवृत्तस्य तन्मोहशान्तये नित्यात्मविषया सांख्यबुद्धिस्तत्पूर्विका चासङ्गकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिः स्थितप्रज्ञतायोगसाधनभूता द्वितीयेऽध्याये प्रोक्ता ।

---

चेद्वयासि साधुवृत्त इत्यादिवत् । एतेन बाल्यादिषु विषयप्रवणस्यापि पश्चान्निर्विण्णस्याधिकारः सूचितः । किं पुनर्ब्रह्मचर्यादिकमारभ्य स्थित इ( स्ये )ति च भावः । स्थित्यां स्थितिस्तत्संबन्धः । षष्ठीसमासभ्रमापाकरणायाऽऽह—निर्वाणमयं ब्रह्मेति । निर्वाणब्रह्मशब्दयोरर्वाचीनब्रह्मविषयतामाह—सुखेति । ननु नित्यात्मज्ञानतत्साक्षात्कारयोरपि प्रकृतत्वात् कर्मनिष्ठामात्रनिगमनपरोऽयं श्लोक इत्ययुक्तमिति शङ्कायां प्रधानभूततदनुबन्धेनास्य कथनमिति दर्शयन्नुत्तराध्यायचतुष्टयसंगतिं वक्तुमुक्तमर्थं च संकलय्य दर्शयन्नित्यादिकं द्वितीयाध्यायार्थसंग्रहश्लोकमपि व्याख्याति—एवमिति । मोहस्य हेतुस्वरूपकार्याणि विशदयति—आत्मेत्यादिना निवृत्तस्येत्यन्तेन । व्याख्यानव्याख्येयात्मना संग्रहश्लोकस्थसमासान्तर्गतपदद्वंद्वद्वयस्य यथासंख्यं संबन्धं व्यनक्ति—नित्यात्मेत्यादिना । सांख्यबुद्धिरिति कर्मयोगात् प्राक् ' एषा तेऽभिहिता सांख्ये बुद्धिः ' इत्युक्तमात्मतत्त्वज्ञानमुच्यते । तद्व्यक्त्यर्थं हि नित्यात्मविषयेत्युक्तम् । ज्ञानयोगस्तु कर्मयोगसाध्यतयाऽनन्तरं पृथगेवोपादीयते । स्थितधीलक्ष्येत्यत्र स्थितधीशब्दो भावप्रधानः । तल्लक्ष्यत्वं च तत्साधनत्वम् । स्थितप्रज्ञतायोगेत्यत्र स्थितप्रज्ञताशब्दो योगशब्देन सह विशेषणविशेष्यभावेन द्वंद्वेन

तदुक्तम्—नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः ।
द्वितीये स्थितधीलक्ष्या प्रोक्ता तन्मोहशान्तये ॥ इति ॥ ७२ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

वाऽत्र समस्येत । योगाख्यं फलमित्यपि पूर्वं पृथगुक्ते सांप्रदायिकत्वायाऽऽह—तदुक्तमिति ॥ ७२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतौ श्रीमद्रामानुजविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां द्वितीयोऽध्यायः ॥ २ ॥

---

१ ख. ग. स्थिरधी° ।

# अथ तृतीयोऽध्यायः ।

तदेवं *मुमुक्षुभिः परमप्राप्यतया वेदान्तोदितनिरस्तनिखिलाविद्यादि·

अथ संगतिं विवक्षुः साक्षान्मोक्षोपायं वक्ष्यमाणं तत्स्वरूपं तत्प्राप्यं च दर्शयन् द्वितीयाध्यायोक्तार्थस्य साक्षान्मोक्षोपायत्वाभावेनापवर्गप्रधाने शास्त्रे संगत्यभावशङ्कां परिहर्तुमितिकर्तव्यतात्वं प्रथयति—तदेवमिति । शंकराद्युक्तप्रकारनिराकरणेन यथावद्द्वितीयाध्यायनिर्वाहादित्यर्थः। एवमिति स्वोक्त्यौचित्यं निर्दिशति । 'ब्रह्मविदाप्नोति परम्' 'परं ज्योतिरुपसंपद्य परात्परं पुरुषमुपैति' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' 'परमं साम्यमुपैति' इत्यादिश्रुतिशतं 'कर्मकर्तृव्यपदेशाच' [ब्र० सू० १।२।४] इति सूत्रगणं चाभिप्रेत्योक्तम्—मुमुक्षुभिः [परम]प्राप्यतयेति । मुमुक्षुभिरिति बहुवचनेन सर्वविद्यानिष्ठानां प्राप्यमेकमिति द्योतयति। उपबृंहणीयानुरोधेन तदुपबृंहणार्थवर्णनाय वेदान्तोदितेत्युक्तम् । प्राप्यत्वोपयुक्तं प्रकृतिपुरुषवैलक्षण्यं सगुणनिर्गुणादिश्रुतिविषयव्यवस्थम् 'आनन्दादयः प्रधानस्य'। 'अक्षरधियां त्ववरोधः' [ब्र० सू० ३।३।११। ३३] इतिसूत्रोक्तसर्वविद्योपास्यसाधारणाकारं चाभिप्रेत्य निरस्तेत्यादिकमुक्तम् ।

* मुमुक्षवो मोक्षेच्छवः । ते द्विविधाः कैवल्यपरा मोक्षपराश्च । कैवल्यं नाम ज्ञानयोगात्प्रकृतिवियुक्तस्वात्मानुभवरूपोऽनुभवः । अर्चिरादिमार्गेण परमं पदं गत एव क्वचित्कोणे पतिलक्तपत्नीन्यायेन भगवदनुभवव्यतिरिक्तस्वात्मानुभव इत्याहुः । मोक्षपराश्च द्विविधाः—भक्ताः प्रपन्नाश्च । तत्र भक्ता अधीतसाङ्गसशिरस्कवेदाः पूर्वोत्तरमीमांसापरिचयाचिदचिद्विलक्षणमनवधिकातिशयानन्दस्वरूपं निखिलहेयप्रत्यनीकं समस्तकल्याणगुणात्मकं ब्रह्मावधार्य तत्प्राप्त्युपायभूतां साङ्गभक्तिं स्वीकृत्य तया मोक्षं प्राप्तुकामाः । भक्तिर्नाम महनीयविषये प्रीतिः । ते च भक्ता द्विविधाः—साधनभक्तिनिष्ठाः साध्यभक्तिनिष्ठाश्च । प्रथमे व्यासादयः । द्वितीयाः पराङ्कुशनाथादयः । पराङ्कुशनाथश्च रामानुजाचार्यप्राचीनस्ताम्रपर्णीतीरनिवासीति प्रसिद्धम् । अकिंचनानन्यगतिकत्वविशिष्टा भगवन्तमाश्रिताः प्रपन्नाः । मोक्षो नाम सायुज्यमेव । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' (तै० आन० १ । २) इति श्रुतेः । न तु सालोक्यं सामीप्यं सारूप्यं वा । तेषां स्वर्गादिवत्फलान्तरत्वात् । सायुज्यं नाम परमात्मना सह दिव्यभोगोपभुञ्जानत्वम् । सयुग्भावः सायुज्यं भोगसाम्यमिति यावत् ।

दोषगन्धानवधिकातिशयासंख्येयकल्याणगुणगणपरब्रह्मपुरुषोत्तमप्राप्त्युपायभूतं वेदनोपासनध्यानादिशब्दवाच्यं, तदैकान्तिकात्यन्तिक-

कारणशोधकवाक्यैकार्थ्यं सामान्यशब्दानां विशेषोपसंहारं तत एव त्रिमूर्त्यैक्यसाम्यातिरेकव्यक्त्यन्तरत्वनिरासमेकस्यैव जगदुपादाननिमित्तत्वमुदाहरिष्यमाणश्रुतौ स उत्तमः पुरुष इत्युक्तमुत्तमः पुरुषस्त्वन्य इति वक्ष्यमाणप्रकरणार्थं च दर्शयितुं समाख्याद्वयमाह—परब्रह्मपुरुषोत्तमेति । ज्ञानकर्मसमुच्चयान्यतरानुगृहीतान्यतरैकैकमात्रपक्षाणां निराकरणाय ' नान्यः पन्थाः ' ' नायमात्मा ' इत्यादिनिषेधतात्पर्यं वेदनादिसामान्यशब्दानां भक्तिलक्षणचरमविशेषे पर्यवसानं चाभिप्रेत्योक्तम्—उपायभूतमित्यादि । तदैकान्तिकेत्यत्र तत्क्रतुन्यायसिद्धोपास्यप्राप्यैक्यद्योतनाय तच्छब्दः । एकत्रान्तो निश्चय एकान्तः । तन्निबन्धना भक्तिरैकान्तिकी । ऐकान्तिकत्वं नाम देवतान्तरफलान्तरपरित्यागेन प्राप्यप्रापकभूतैकनिष्ठत्वम् । उक्तं च मोक्षधर्मे—

ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥

इत्यादि । स्मरन्ति च—परमात्मनि यो रक्तो विरक्तोऽपरमात्मनीति । वक्ष्यति चात्रैव—भक्त्या त्वनन्यया, मयि चानन्ययोगेन भक्तिरव्यभिचारिणी, इत्यादि । विनाशाभावोऽत्यन्तशब्देन विवक्षितः । अतोऽत्र फलदशायामप्यनिवर्त्यत्वमात्यन्तिकत्वम् ।

सयुक्छब्दश्च भिन्नयोरेकत्र समानयोगं दर्शयति । ' ब्रह्म वेद ब्रह्मैव भवति ' ( मु० ३ । २ । ९ ) इति श्रुतेरपि न ब्रह्मरूपतापत्तौ तात्पर्यं किंतु साम्य एव ब्रह्मसमो भवतीत्यर्थः । तदुक्तम्—

' लोकेषु विष्णोर्निवसन्ति केचित्समीपमृच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ' ॥ इति ।

मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन ।
इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत ॥

इत्यत्र मोक्षमित्यस्य मोक्षत्वेन भासमानं सालोक्यं सारूप्यं च न प्रार्थये किंतु वस्तुतो मोक्षरूपं सायुज्यमेवेच्छामीत्यर्थः । एतेन सालोक्यादिभेदेन मोक्षे तारतम्यमस्तीत्यपास्तम् । सालोक्यादिषु क्वचिन्मुक्तिशब्दप्रयोगस्तु भाक्तः । मुक्तितारतम्यं वदद्भिस्तु मुक्तिरेव शिक्षणीया । सर्वकर्मनिवृत्तौ स्वतःप्राप्तब्रह्मानुभवे तारतम्यायोगात् ।

१ ख. ग. घ. तदेकान्तभ ।

*भक्तियोगं वक्तुं तदङ्गभूतम् 'य आत्माऽपहतपाप्मा' इत्यादिप्रजापतिवा-

---

एकैव भक्तिर्बहुलबहुलतरबहुलतमादिभावनोपायदशामारभ्य फलदशापर्यन्तं प्रचीयमाना निरतिशयतामापद्यते तद्यथा शारीरकेऽपि—इतिवक्तव्यताचिन्तनात्परस्ताद्भक्तिराङ्गिनी स्वरूपतो विशोधिता तद्वदत्रापीत्यभिप्रायेणाऽऽह—भक्तियोगं वक्तुं तदङ्गभूतमित्यादि । अङ्गतायां प्रमाणमाह—य आत्मेति । प्राप्नुरिति परव्याहृत्य-

---

* भक्तियोगो नाम यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टाङ्गवांस्तैलधारावदविच्छिन्नस्मृतिसंतानरूपः । स च साधनसप्तकजन्यः । साधनसप्तकं च—विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षाः । तत्र विवेको नाम जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिः । जातिदुष्टं कलञ्जगृञ्जनादि । आश्रयदुष्टं पतितादिस्वामिकम् । निमित्तदुष्टमुच्छिष्टादि । एतत्त्रिविधदोषरहितादन्नात्कायशुद्धिर्विवेक इत्यर्थः । विमोकः कामानभिष्वङ्गः । अभ्यासः पुनः पुनरालम्बनसंशीलनम् । आलम्बनं शुभाश्रयस्तस्य संशीलनं पुनः पुनः परिशोधनम् । क्रिया नाम शक्तितः पञ्चमहायज्ञाद्यनुष्ठानम् । कल्याणानि सत्यार्जवदयादानाहिंसादीनि । सत्यं भूतहितम् । आर्जवं वाक्कायानामैकरूप्यम् । दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम् । दानं लोभराहित्यम् । अहिंसा कायेन वाचा मनसा च परपीडानिवृत्तिः । आदिपदादनभिध्यानसंग्रहः । अभिध्या परकीये स्वबुद्धिः । यद्वा निष्फलचिन्ता । अथवा परकृतापराधचिन्ता । तद्राहित्यमनभिध्या । अनवसादो दैन्याभावः । दैन्यं चाभीष्टकार्यप्रवृत्त्यक्षमत्वम् । तच्च देशकालवैषम्याच्छोकवस्त्वाद्यनुस्मृतेश्च भवति । अनुद्धर्षस्तुष्ट्यभावः ।

यमादीनां स्वरूपं तु योगसूत्रे प्रत्यपीपदत्पतञ्जलिराचार्यः । तथा हि—'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' ( यो० सू० २ । ३० ) इति । तत्राऽऽश्रमविहितनित्यकर्माविरोधेन सर्वथा सर्वदा सर्वभूतानामनभिद्रोहोऽहिंसा । सत्यं नाम यथा दृष्टं श्रुतमनुमितं तथा वाक्, तथातात्पर्ययुक्तं मनश्च । यदा च दृष्टार्थविपरीतार्थबोधने मनसस्तात्पर्यं तदा यथार्थाऽपि वागसत्यैव । यथाऽश्वत्थामा हत इति युधिष्ठिरवाक्ये । तत्र गजविषये वाक्यस्य सत्यत्वेऽपि न मनसः सत्यत्वम् । दृष्टविपरीतद्रोणपुत्रहननबोधने तात्पर्यात् । परत्र पुरुषे स्वबोधसदृशबोधजननाय या वागुक्ता सा यदि न विपरीतार्थबोधनेच्छया प्रयुक्तत्वरूपवञ्चितत्ववती नापि भ्रमेण प्रयुक्ता नाप्यप्रसिद्धपदादिभिर्बोधजननाक्षमा स्याल्लोकहिताय च स्यात्तदा सत्येत्यर्थः । अस्तेयं स्तेयान्निवृत्तिः । स्तेयं चाशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम् । प्रतिग्रहव्यावृत्तयेऽशास्त्रपूर्वकमिति । स्वीकरणं

च भ्रमसाधारणं ममेति बुद्धिमात्रम् । तन्निवृत्तिस्तत्रास्पृहारूपाऽस्तेयम् । ब्रह्मचर्यं च गुप्तेन्द्रियस्योपस्थसंयमः । उपस्थविषये सर्वेन्द्रियोपरम इति यावत् । संयतोपस्थोऽपि अष्टविधमैथुनान्तर्गतस्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसंकल्पाध्यवसायरूपमैथुनासक्तो न ब्रह्मचर्यवानिति सूचयितुं गुप्तेन्द्रियस्येति । गुप्तानि रक्षितानीन्द्रियाणि येन तथोक्तः । तत्र लोलुपानीन्द्रियान्तराण्यपि रक्षणीयानीति यावत् । अपरिग्रहो नाम विषयाणामर्जनरक्षणक्षयसङ्गहिंसारूपदोषदर्शनादस्वीकरणम् । अशास्त्रीयाणामयत्नोपनतानामपि विषयाणां निन्दितप्रतिग्रहादिरूपार्जनदोषदर्शनाच्छास्त्रीयाणामप्युपार्जितानां च रक्षणादिदोषदर्शनादस्वीकरणमित्यर्थः । सङ्गदोष उक्तो भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणामिति । हिंसालक्षणदोषश्च नानुपहत्य भूतान्युपभोगः संभवतीति । हिंसा चात्र दातॄणां प्रतिग्रहीत्रन्तराणां च द्रष्टव्येति ।

'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' ( यो० सू० २ । ३२ ) । तत्र शौचं द्विविधम् । बाह्यमाभ्यन्तरं च । आद्यं स्थूलशरीरस्य मृज्जलादिजनितं मेध्यगोमूत्रादिभक्षणोपवासादिरूपम् । चित्तस्य रागद्वेषादिमलानां मैत्र्यादिना प्रक्षालनं द्वितीयम् । संतोषोऽत्यावश्यकप्राणयात्रानिर्वाहकसंनिहितसाधनादधिकस्यानुपादित्सा । तपो द्वंद्वसहिष्णुता । द्वंद्वानि च-क्षुत्पिपासे शीतोष्णे स्थानासने काष्ठमौनाकारमौने इति । काष्ठमौनमिङ्गितेनापि स्वाभिप्रायानाविष्करणम् । आकारमौनं त्ववचनमात्रम् । स्वाध्यायो मोक्षशास्त्राध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं तस्मिन्परमगुरौ सर्वकर्मसमर्पणम् ।

'स्थिरसुखमासनम्' (यो० सू० २ । ४६) । स्थिरं निश्चलं यत्सुखकरं च तदासनमिति सूत्रार्थः । आस्यतेऽनेन प्रकारेणेत्यासनम् । तद्यथा पद्मासनं वीरासनं भद्रासनं स्वास्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं क्रौञ्चनिषदनं हस्तिनिषदनमुष्ट्रनिषदनं समसंस्थानं स्थिरसुखं चेत्येवमादि । तत्र पद्मासनम्—

अङ्गुष्ठौ संनिबन्धीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ॥ इति ।
एकपादमथैकस्मिन्विन्यस्योरौ च संस्थितः ।
इतरस्मिंस्तथा पादं वीरासनमुदाहृतम् ॥
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ।
भद्रासनं भवेदेतत्सर्वव्याधिविषापहम् ॥
जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः सुखासीनः स्वास्तिकं तत्प्रचक्षते ॥

दण्डासनमुपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डवच्छयनम्। सोपाश्रयं योगपट्टयोगेनोपवेशनात्। जानुप्रसारितबाहोः शयनं पर्यङ्कः। क्रौञ्चनिषदनोष्ट्रनिषदने तेषामुपविष्टानां संस्थानदर्शनात्प्रत्येतव्ये। जान्वोरुपरि हस्तौ कृत्वा कायशिरोग्रीवाणामवक्रभावेनावस्थानं समसंस्थानम्। स्थिरसुखं च सूत्रोक्तम्। यथासुखमिति तदर्थः।

'तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' ( यो० सू० २। ४९ ) बाह्यस्य वायोराचमनमन्तः प्रवेशः श्वासः। कोष्ठ्यस्य वायोर्निःसरणं प्रश्वासः। सत्यासने तयोर्गतिविच्छेदः प्राणायाम इत्यर्थः। स्वाभाविकश्वासप्रश्वासयोरभाव इति यावत्। स च रेचकपूरककुम्भकेषु सर्वेष्वेवानुगत इति प्राणायामसामान्यलक्षणमेतत्। ननु नेदं प्राणायामसामान्यलक्षणं भवितुमर्हति रेचकपूरकयोः श्वासप्रश्वासैतदुभयगतिविच्छेदाभावात्। रेचके श्वासस्य गतिविच्छेदेऽपि प्रश्वासस्य गतिविच्छेदाभावात्। तथा पूरके प्रश्वासस्य गतिविच्छेदेऽपि श्वासगतेर्विद्यमानत्वात्। किंतु यत्र जलमिव कुम्भे निश्चलतया प्राणाख्यो वायुरन्तरवस्थाप्यते तादृशेऽन्तःस्तम्भवृत्तिरूपे कुम्भके श्वासप्रश्वासयोरुभयोर्गतिविच्छेदसंभवात्तत्रैवेदं लक्षणं समन्वियान्न तु रेचकपूरकयोरिति चेत्। अत्र ब्रूमहे—यत्र कोष्ठ्यो वायुर्विरेच्य बहिर्धार्यते स रेचकः। यत्रापि बाह्यो वायुराचम्यान्तर्धार्यते स पूरकः। कुम्भकस्तु यत्रोभयोः श्वासप्रश्वासयोः सकृदेव विधारकप्रयत्नादभावो भवति सः। तत्र रेचकपूरकयोः स्वस्वगतेर्विद्यमानत्वेऽपि एकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्यनुसारेणोभयगतिविच्छेदस्य वक्तुं शक्यत्वान्न काप्यव्याप्तिरिति सिद्धमिदं प्राणायामसामान्यलक्षणमिति।

'स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' ( यो० सू० २। ५४ )। इन्द्रियाणां स्वस्वविषयासंप्रयोगकाले चित्तस्वरूपानुकारितेव या भवति स प्रत्याहार इत्यर्थः। जितेन्द्रियस्य हि ध्यानकाले चक्षुरादीनि ध्येयवस्त्वाकारेण चित्तेन तुल्याकाराणीव भवन्ति न स्वातन्त्र्येण मनसैकीभूय विषयान्तरं संकल्पयन्ति। अजितेन्द्रियस्य तु तानि तदानीमपि रूपादिषु मनसैव धावन्ति। अतश्चित्तमेव तेषामिन्द्रियानुकारि।

इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरते प्रज्ञा दृतेः पादादिवोदकम्॥

इति स्मृतेः। अजितेन्द्रियस्यापि तानि विषयभोगकाले चित्तानुकारीणीत्यतः 'विषयासंप्रयोगे' इति। ध्यानकाले चाक्षुषादितुल्या वृत्तिश्चित्तस्यैव भवति न तु चक्षुरादीनाम्। तेषां तु तदतिरिक्तवृत्त्यभावमात्रम्। अतः 'इव' इति।

क्योदितं प्राप्तुरात्मनो याथात्म्यदर्शनं तन्नित्यताज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञानयोगसाध्यमुक्तम् । प्रजापतिवाक्ये हि दहरवाक्योदितपरविद्याशेषतया प्राप्तुरात्मनः स्वरूपदर्शनम् ' यस्तमात्मानमनुविद्य विजानाति ' इत्युक्त्वा जागरितस्वप्नसुषुप्त्यतीतं प्रत्यगात्मस्वरूपमशरीरं

---

र्थम् । आत्मदर्शनस्य परविद्याङ्गतायां प्रमाणं प्रपञ्चयति–प्रजापतीति । फलवत्संनिधावफलं तदङ्गम् । तत्र संनिधिस्तावदुच्यते–दहरेति । प्रत्यगात्मविषयत्वव्यक्त्यर्थं तत्प्रकरणोदितप्रत्यगात्मपरिशोधनप्रकारमाह–जागरितेति । प्रजापतिर्हि क्रमाज्जागरिताद्यवस्थात्रयविशिष्टं प्रत्यगात्मानमुपदिदेश । इन्द्रस्तु नाहमत्र भोग्यं पश्यामि तत्र तत्र विमुखः पुनः पुनः पप्रच्छ । ततश्च शुश्रूषोर्योग्यतां विज्ञाय प्रजापतिः 'अशरीरं वाव सन्तम् ' इति परिशुद्धं स्वरूपमुक्तवान् । अत्राङ्गत्वासिद्ध्यर्थं दहरविद्यातः पृथक्फलाभावं तदे-

---

' देशबन्धश्चित्तस्य धारणा ' ( यो० सू० ३ । १ ) । यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाधारदेशविशेषे चित्तस्य बन्धस्तदैकाग्र्यं सा धारणेत्यर्थः । तथा हि–नाभिचक्रे हृदयपुण्डरीके मूर्धस्थे ज्योतिषि नासिकाग्र इत्येवमादिदेशेषु बाह्ये वा विषये चन्द्रसूर्याग्न्यादावीश्वरदेवतादिध्यानदेशे चित्तस्य वृत्तिमात्रेण न तु ध्येयकल्पनया बन्धो धारणेति । धारणासामान्ये द्वादशप्राणायामपरिच्छिन्नकालावच्छिन्नत्वं विशेषणम् । अन्यथा क्षणमात्रेणापि धारणापत्तेः ।

' तत्र प्रत्ययैकतानता ध्यानम् ' ( यो० सू० ३ । २ ) । तत्र देशे ध्येयचतुर्भुजमूर्त्याद्यालम्बनस्य प्रत्ययस्यैकतानता प्रत्ययान्तरापरामृष्टः सदृशः प्रवाहः स ध्यानमित्यर्थः ।

' तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ' ( यो० सू० ३ । ३ ) । ध्यानमेव यदा ध्येयाकारेणैव साक्षिणि निर्भासते चित्तस्य ध्येयस्वरूपावेशेनाहमिदं चिन्तयामीत्येवं-प्रत्ययाकारवृत्त्यन्तरानुदयाद्वृत्त्यंशाभानाद्वा प्रत्ययात्मकेन स्वरूपेण शून्यमिव भवति तदा समाधिरित्युच्यते । इदमत्र बोद्धव्यम्––ध्यातृध्येयध्यानकलनावद्ध्यानं, तद्रहितं समाधिरिति ध्यानसमाध्योर्विभागः । अस्य च समाधिरूपस्याङ्गस्याङ्गिसंप्रयोगादयं भेदो यदत्र चिन्तारूपतया निःशेषतो ध्येयस्य स्वरूपं न भासते । अङ्गिनि तु संप्रज्ञाते साक्षात्कारोदये समाध्यविषया अपि विषया भासन्त इति । तथा च साक्षात्कारयुक्तैकाग्र्यकाले संप्रज्ञातयोगः । अन्यदा तु समाधिमात्रमिति विभागः ।

प्रतिपाद्य 'एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति दहरविद्याफलेनोपसंहृतम्। अन्यत्रापि 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इत्येवमादिषु देवं मत्वेतिविधीयमानपरविद्याङ्गतयाऽध्यात्मयोगाधिगमेनेति प्रत्यगात्मज्ञानमपि विधाय 'न जायते म्रियते वा विपश्चित्'

---

कफलत्वं चाऽऽह–एवमेवेति। एतदुक्तं भवति—प्रजापतिवाक्यं हि दहरविद्याप्रकरणग(ग)तम्। न च प्रजापतिवाक्योदितप्रत्यगात्मदर्शनस्य निःश्रेयसातिरिक्तं फलमुक्तम्। न च केवलप्रत्यगात्मदर्शनं निःश्रेयससाधनम्। नान्यः पन्था इत्यादिविरोधात्। तत्क्रतुन्यायाच्च। न चात्र जीवप्राप्तिरेव फलमुच्यते परं ज्योतिरिति विशेषणात्। नारायणः परं ज्योतिरित्यादिना च परंज्योतिःशब्दस्य परमात्मविषयत्वप्रसिद्धेः। दहरविद्यायां पूर्वत्रापि तस्यैव परं ज्योतिःशब्देनोक्तेः। उपसंपद्युरूपसंपत्तव्ययाद्भेदस्य स्वरससिद्धेः। प्राप्तुरात्मनः परब्रह्मसाम्यापन्नपुरुपलभ्यनिरतिशयस्वच्छन्दभोगानिर्दुःखताद्यभिधानाच्च। अतः प्रधानफलस्यैवात्र तदङ्गेऽपि निर्देशात्परविद्याङ्गं प्रत्यगात्मदर्शनमिति। अथ 'न जायते म्रियते' इत्यादिभिः कतिपदावापोद्वापभेदितैः श्लोकैः प्रत्यभिज्ञातार्थतया भगवद्गीताप्रबन्धसमानाकारां भक्तिशब्दकण्ठोक्तियतीं कठवल्लीमुपनिषदमुक्तस्यार्थस्य निर्विशङ्कं विशदीकरणायोदाहरति–अन्यत्रापीति। साङ्गसफलप्रधानविधिवाक्ये प्रधानांशमङ्गांशं च विभजते–देवं मत्वेति। अध्यात्मयोगाधिगमेनेत्यत्र साक्षात्परयोगपरत्वे मत्वेत्यस्य साध्यत्वायोगात्, शास्त्रजन्यज्ञाने योगशब्दस्यावाचकत्वान्मत्वेत्यत्र शास्त्रेणेत्यध्याहृत्य तद्व्युत्क्रमान्वयानौचित्याज्जीवस्यापि परवत्तत्रैव विवरिष्यमाणत्वाच्च जीवालम्बनयोगपरत्वं युक्तम्। अङ्गतया विहितस्य ज्ञानस्य ज्ञेयैकनिरूपणीयस्वरूपस्यापेक्षितज्ञेयस्वरूपशोधनोपदेशमाह–न जायत इति। एवं प्रथमषट्कोपबृंहणीयांश उक्तः। यथा संगृहीतम्—

ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते॥

इत्यादिना प्रत्यगात्मस्वरूपं विशोध्य "अणोरणीयान्" इत्यारभ्य "महान्तं विभुमात्मानं मत्वा धीरो न शोचति" "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यादिभिः परस्वरूपं तदुपासनमुपासनस्य च भक्तिरूपतां प्रतिपाद्य—

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥

इति परविद्याफलेनोपसंहृतम् । अतः परमध्यायचतुष्टयेनेदमेव प्राप्तुः

---

अथ द्वितीयतृतीयषट्कोपबृंहणीयांशमुदाहरति—अणोरणीयानित्यादिना । इदमपि संगृहीतम्—

मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥
प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम् ।
कर्मधीभक्तिरित्यादिः पूर्वशेषोऽन्तिमोदितः ॥ इति ॥

अणोरणीयानित्यादेरर्थमाह—परस्वरूपमिति । महान्तं विभुमित्याद्युक्तमाह—तदुपासनमिति । नायमात्मेत्यस्याभिप्रेतमाह—उपासनस्य चेति । केवलमनननिदिध्यासनश्रवणनिषेधमुखेन भक्त्याख्यवरणीयताहेतुगुणविशेषविधिपरमिदं वाक्यमिति शारीरकभाष्यादिषु विशदं व्याख्यातम् । मत्वा धीरो हर्षशोकौ जहाति मत्वा धीरो न शोचतीत्युक्तस्यैव परविद्याफलस्योपसंहारेऽपि विशदोपदेशं प्रत्यगात्मज्ञानस्य तदेकफलत्वप्रदर्शनायाऽऽह—विज्ञानेति । एवमुपक्रमोपसंहारादिभिः परविद्यापरेऽस्मिन्प्रकरणे, अध्यात्मयोगाधिगमेन देवं मत्वेति परमात्मज्ञानकरणतया निर्दिष्टं पृथक्फलरहितं च प्रत्यगात्मज्ञानं परविद्याङ्गतया सिद्धमिति तदुपबृंहणतया प्रतीयमानेऽस्मिन्नपि प्रकरणे तथात्वमध्यवसातव्यमित्युक्तं भवति । एवं संक्षेपोक्तिपर्यवसाने प्रतिपत्तिसौकर्याय कुमतिमतभङ्गाय चाऽऽत्मज्ञानस्य वक्ष्यमाणपरविद्याङ्गतामुपपाद्योक्तविस्तररूपस्य प्रथमषट्कशेषस्योक्तांशेन संगतिमाह—अतः परमिति । एकस्मिन्नेव षट्के संग्रहविस्तररूपेण

प्रत्यगात्मनो दर्शनं सन्साधनं प्रपञ्च्यते—

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव॥ १॥

ज्यायसीति। यदि कर्मणो बुद्धिरेव ज्यायसीति ते मता किमर्थं तर्हि घोरे कर्मणि मां नियोजयसि। एतदुक्तं भवति—ज्ञाननिष्ठैवाऽऽत्मावलोकनसाधनं कर्मनिष्ठा तु तस्या निष्पादिका। आत्मावलोकनसाधनभूता च ज्ञाननिष्ठा सकलेन्द्रियमनसां शब्दादिविषयव्यापारोपरतिनिष्पा-

---

टीकाभेदप्रवृत्तिः। इदमेवेत्यवधारणेनाध्यायचतुष्टये परमात्मप्रसङ्गध्यानादेः, युक्त आसीत मत्पर इति पूर्ववदेवाऽऽत्मदर्शनशेषत्वमवगमयति। पुनरुक्तिपरिहाराय प्रपञ्च्यत इत्युक्तम्। सप्रयोजनत्वाय प्रपञ्चनप्रकारमाह—ससाधनमिति। अत्रार्जुनः प्रागेव समरव्यापारविरतिवासनायन्त्रितः कर्मयोगज्ञानयोगाख्यप्रवृत्तिनित्यात्मकसाधनोपदेशे निवृत्त्युपदेशांशरसिकश्रोत्रमुखेन पृच्छति—ज्यायसीति। प्रथमश्लोकस्यान्वयं तावदाह—यदीति। कर्मणो बुद्धिर्ज्यायसीति कुत्रोपदिष्टम्। दूरेण ह्यवरं कर्म बुद्धियोगादित्यादि तु बुद्धिविशेषविशिष्टकर्मयोगपरमिति व्याख्यातम्। ज्यायस्त्वं च किंरूपमिहाभिमतम्। बुद्धेर्ज्यायस्त्वे च कर्मणि यथाधिकारं नियोगस्य को दोषः। घोरशब्दश्च भयंकरपर्यायः। न च कर्मयोगो भयंकरः। किंशब्दश्चात्र प्रश्नपरो वा प्रतिक्षेपपरो वेत्यादिकमाशङ्क्याऽऽह—एतदुक्तमिति। तत्र बुद्धेर्ज्यायस्त्वप्रकारं पूर्वं तदुक्तिप्रकारं चाऽऽह—ज्ञाननिष्ठैवेति। स्थितप्रज्ञताप्रकरणे कर्मणो ज्ञाननिष्ठाहेतुत्वमुक्तम्। ज्ञाननिष्ठाया एव चाऽऽत्मावलोकनहेतुत्वम्। ततश्चाव्यवधानाद्बुद्धिर्ज्यायसीति यथाधिकारं नियोगानर्हत्वायं ज्ञाननिष्ठानिष्पादनस्य कर्मप्रत्यनीकरूपत्वमुक्तं प्रकटयति—आत्मेति। यदा संहरत इत्याद्युक्तं स्मारयति—सकलेन्द्रियेत्यादिना। किंशब्दस्य प्रतिक्षेपपरत्वं ज्यायसी

चेत्यभिहिता । इन्द्रियव्यापारोपरतिनिष्पाद्यमात्मावलोकनं चेत्तिसपाधयिपितं सकलकर्मनिवृत्तिपूर्वकज्ञाननिष्ठायामेवाहं नियोजयितव्यः किमर्थं घोरे कर्मणि सर्वेन्द्रियव्यापाररूप आत्मावलोकनविरोधिनि कर्मणि मां नियोजयसीति ॥ १ ॥

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

अतो व्यामिश्रवाक्येन(ण) मां मोहयसीवेति मे प्रतिभाति । तथा ह्यात्मावलोकनसाधनभूतायाः सर्वेन्द्रियव्यापारोपरतिरूपाया ज्ञाननिष्ठा-

---

चेदित्यत्र चेच्छब्दस्य निश्चितविषयत्वं चाभिप्रेत्य फलितमाह— इन्द्रियव्यापारेति । सकलकर्मेत्यसङ्गकर्मसंग्रहणपरम् । किमर्थमिति । न तावत्स्वप्रयोजनार्थं परिपूर्णत्वात् । न च सांसारिकफलप्रदानार्थं जनार्दनस्य जन[न]निरासकस्य तव सन्निव(वे)र्तनस्वाभाव्यात् । नापि भूभारभूतधार्तराष्ट्रादिवधनिमित्तीकृतमद्विप्रलम्भार्थं प्रपन्नं मां प्रति केशवस्य ब्रह्मरुद्रादिपितुस्ते तदनौचित्यात् । नापि फलशैघ्र्यार्थं पारम्पर्यस्य पूर्वमुपदिष्टत्वात् । न च सौकर्यार्थमकरणनिमित्तप्रत्यवायपरिहारार्थं वा, सकलेन्द्रियव्यापाररूपत्वेन तदुपरतिनिष्पाद्यात्मावलोकनविरोधितया मुमुक्षोर्घोरत्वात् । न च लोकसंग्रहार्थं लोकस्यापि यथावस्थिताकारोपदेशस्यैवोचितत्वात् । अतो भवतः प्राणसमतया भवतैवोद्घोषितं मां भवदनभिमते कर्मणि न नियोजयितुमर्हसीति भावः । घोरशब्दस्यात्र शास्त्रीयपापिपीडनपरत्वायोगात्प्रकृतोपयुक्तमभिप्रेत्याऽऽह—सर्वेन्द्रियव्यापाररूप इति । तथाऽपि कथं घोरत्वमित्यत्राऽऽह—आत्मावलोकनविरोधिनीति ॥ १ ॥

उक्तमर्थं हेतूकुर्वन् द्वितीयश्लोकार्थमाह—अत इति । अचेतनाया बुद्धेर्मोहनस्यौपचारिकत्वान्मामित्युक्तम् । इवशब्दद्योतितमाह—प्रतिभातीति । एतेन कारुणिकत्वात्त्वं तावन्न मोहयसि अहं तु मन्दो मुह्यामीत्युक्तं भवति । व्यामिश्रशब्दाभिप्रेतं व्याघातं तत्प्रकारं चोपपादयति—तथाहीति । तद्विपर्ययरूपं कर्म तस्याः कथं साधनं तद्विरुद्धं च कथं तदर्थिना कर्तव्यम्, इति व्याहतिद्वयमिहाभिप्रेतम् । एकमित्येतन्न ज्ञानकर्मणोरन्यतरविष-

यास्तद्विपर्ययरूपं कर्म साधनं तदेव कुर्विति वाक्यं विरुद्धं व्यामिश्रमेव। तस्मादेकमामिश्ररूपं वाक्यं वद येन वाक्येनाहमनुष्ठेयरूपं निश्चित्याऽऽत्मनः श्रेयः प्राप्नुयाम् ॥ २ ॥

श्रीभगवानुवाच—

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।
*ज्ञानयोगेन सांख्यानां ×कर्मयोगेन(ण) योगिनाम् ॥३॥

यम्। तयोरेकस्यैव कर्मण उपदिष्टत्वात्। तत्र च स्वस्यानुपपन्नतामतिभासे तत्र भ्रमनिवृत्तेश्चानन्तरमपेक्षणीयत्वात्। तस्याश्च व्यामिश्रत्वनिवृत्तिसाध्यत्वाद्वाक्यशब्दस्य चैतच्छ्लोकगतस्य विशेष्यसमर्पकत्वौचित्यादित्यभिप्रेत्योक्तम्—अमिश्ररूपं वाक्यमिति। पूर्वेणान्वयभ्रमव्युदासाय निश्चित्येत्यादेरर्थमाह—येनेति। निश्चित्येत्यस्य न तावद्वदेत्यनेनान्वयः। सर्वज्ञस्य तस्य प्रागप्यनिश्चयायोगात्। व्यामिश्रवाक्येना(णा)पि परव्यामोहनमात्रस्य शङ्कितत्वात्। अतोऽर्जुनस्यैव निश्चयाकाङ्क्षा। ततश्च निश्चित्य श्रेयः प्राप्नुयामित्येवान्वयः। निश्चयसापेक्षं संदिग्धविषयमाह—अनुष्ठेयरूपमिति ॥ २ ॥

एवमसंकीर्णरूपे वाक्ये बुभुत्सिते पूर्वोक्तस्यैवासंकीर्णरूपतां प्रकटयन् भगवानुवाच—लोकेऽस्मिन्निति। मया प्रोक्तेति निर्दे-

* ज्ञानयोगो नाम कर्मयोगान्निर्मलान्तःकरणस्येश्वरशेषत्वेन प्रकृतियुक्तस्यात्मचिन्ताविशेषः। एतस्य साक्षाद्भक्त्युपयोगित्वम्। तदुक्तं न्यायसिद्धाञ्जने—'भक्तियोगः परमप्राप्त्युपायभूतः। तदशक्तस्य तद्भक्तियोगसिद्ध्यर्थमात्मावलोकनमपेक्षितम्। तस्य च ज्ञानयोगकर्मयोगौ द्वौ पृथगुपायौ। तत्र ज्ञानयोगः स्वात्मावलोकनेऽन्तरङ्गः। तथाऽपि प्रथमं स दुष्करः। तदनाधिकारिणस्तुल्यफलः कर्मयोग एव कार्यः। तदधिकारिणोऽपि व्यपदेश्यस्य लोकसंग्रहार्थं कर्मयोग एव कार्यः। अशक्तस्य ज्ञानयोगशक्तिं कर्मयोग एवोत्पादयति। तदा कर्मयोगं परित्यज्य ज्ञानयोगमनुतिष्ठतोऽपि न दोषः' इति। × कर्मयोगो नामोपदेशाज्जीवपरयाथात्म्यज्ञानवता शक्त्यनुसारेण फलसङ्गरहितानिषिद्धकाम्यनित्यनैमित्तिकरूपपरिगृहीतकर्मविशेषः। स तु देवार्चनतपस्तीर्थदानयज्ञादिभेदभिन्नः। अयं तु जीवगतकल्मषापनयनद्वारा ज्ञानयोगमुत्पाद्य तद्द्वारा साक्षाद्वा भक्त्युत्पादको भवति।

पुरोक्तं न सम्यगवधृतं त्वया । पुराऽप्यस्मिँल्लोके विचित्राधिकारिसंपूर्णे द्विविधा निष्ठा ज्ञानकर्मविषया यथाधिकारमसंकीर्णैव मयोक्ता । न हि सर्वो लौकिकः पुरुषः संजातमोक्षाभिलापस्तदानीमेव ज्ञानयोगाधिकारे प्रभवति । अपि त्वनभिसंहितफलेन केवलपरमपुरुषाराधनरूपेणानुष्ठितेन कर्मणा विध्वस्तमनोमलोऽव्याकुलेन्द्रियो ज्ञाननिष्ठायामधिकरोति ।

---

ज्ञात् काङ्क्षा च फलितमाह—पुरोक्तमिति । अस्मिँल्लोक इत्यस्य प्रकृतोपयोगितात्पर्यमाह—विचित्राधिकारिपूर्ण इति । तेन ज्ञानयोगकर्मयोगयोरधिकारिभेदसंभवः । परस्परविरुद्धानामपि धर्माणां प्रतिनियताधिकारिविषयत्वव्यवस्थापकवर्णाश्रमदेशकालकामनानिमित्तादिदृष्टान्तश्च सूचितः । अनघशब्देनाप्येतदेवाभिप्रेतम् । यथाऽस्मिँल्लोकेऽनघतया त्वमपवर्गसाधनेऽधिकरोषि, इतरे तु काम्यादौ तद्वदनघमात्रस्य कर्मयोगेऽधिकारः । अनघतराणां तु ज्ञानयोग इति । संसारदाहज्वरचिकित्सकस्य सर्वज्ञस्य भिषजस्तत्तदवस्थोचितोऽयमुपदेशः । प्रोक्तेत्यस्य सोपसर्गस्याभिप्रेतमाह—यथाधिकारमिति । अधिकारानतिलङ्घनमत्र प्रकर्षः । द्वैविध्यमात्रस्य ज्ञातत्वात्तदुक्त्यभिप्रेतमाह—असंकीर्णेति । मयेति । तत्तदधिकारिभेदवेदिना तत्तद्धितकामेनास्पृष्टभ्रमविप्रलम्भप्रमादाशक्तिगन्धेनेत्यर्थः । ज्यायसि ज्ञानयोगे तिष्ठति कर्मयोगः कथमाद्रियेतेत्यत्राऽऽह—नहीति । मोक्षाभिलाषे जातेऽपि जन्मान्तरसुचरितमृदितकषायाणां केषांचिदेव तदानीमेव ज्ञानयोगाधिकारः । तथा दर्शनात् । ततः शक्ताशक्तविषयतया ज्ञानकर्मयोगयोर्व्यवस्थेति भावः । नन्वशक्तानां कदाचिदपि ज्ञानयोगाधिकारो न स्यात् । तच्छक्तिहेतुतयोक्तस्य कर्मयोगानुष्ठानस्य तत्प्रातिकूल्यचोद्यस्थितेरित्यत्राऽऽह—अनभिसंहितेति । सर्वज्ञत्वसर्वशक्तित्वकारुण्यादिविशिष्टभगवदनुग्रहरूपादृष्टद्वारा ज्ञानहेतुत्वाय परमपुरुषाराधनरूपतोक्तिः । व्याकुलेन्द्रियत्वं हि ज्ञाननिष्ठाविरोधि तच्च स्वान्तमलमूलं तदप्यनादिपुण्यपापरूपदुष्कर्ममूलरजस्तमोमयं तच्च सत्त्वोन्मेषहेतुभूतैवंविधि( ध )कर्मनिवर्हणीयमतो ज्ञाननिष्ठाहेतुभूतशान्तिहेतुत्वात्तदनुकूल एव कर्मयोग इत्युक्तं

' यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ' ॥

इति परमपुरुषाराधनैकवेषता कर्मणो वक्ष्यते । इहापि कर्मण्येवाधिकारस्त इत्यादिनाऽनभिसंहितफलं कर्मानुष्ठेयं विधाय तेन विषयव्याकुलतारूपमोहादुत्तीर्णबुद्धेः प्रजहाति यदा कामानित्यादिना ज्ञानयोग उदितः । अतः सांख्यानामेव ज्ञानयोगेन स्थितिरुक्ता । योगिनां तु कर्मयोगेन(ण) । संख्या बुद्धिस्तयुक्ताः सांख्याः । आत्मैकविषयया बुद्ध्या युक्ताः सांख्याः । अतदर्हाः कर्मयोगाधिकारिणो योगिनः । विषयव्याकुलबुद्धियुक्तानां कर्मयोगाधिकारोऽव्याकुलबुद्धीनां तु ज्ञानयोगाधिकार उक्त इति न किंचिदिह विरुद्धं नापि व्यामिश्रमभिहितम् ॥ ३ ॥

सर्वस्य लौकिकस्य पुरुषस्य मोक्षेच्छायां संजातायां सहसैव ज्ञान योगो दुष्कर इत्याह—

---

भवति । धर्मेण पापमपनुदतीत्यादिकमिहाभिप्रेतम् । अनभिसंहितफलत्वं पूर्वमेवोक्तमिति कृत्वा केवलपरमपुरुषाराधनवेषतायां कर्मणैव सिद्धिप्राप्तौ च वक्ष्यमाणं दर्शयति—यत इति । प्रोक्तशब्दनिर्दिष्टमव्यामिश्राभिधानमनभिसंहितफलत्वोक्तिं च व्यनक्ति—इहापीति । यदा ते मोहकलिलम्, श्रुतिविप्रतिपन्ना ते, इत्याद्यर्थं स्मारयति—विषयेति । आभिप्रायिकमवधारणं व्यञ्जयन्नुत्तरार्धं व्याचष्टे—अतः सांख्यानामेवेति । सांख्यशब्दस्यात्र सिद्धान्तविशेषपरत्वं व्युदस्यति—संख्या बुद्धिरित्यादिना । अतदर्हा इत्यशक्तिविषयत्वं सूचितम् । कर्मयोगाधिकारिण इति । योग(गि)शब्दस्थो योगोऽत्र कर्मयोगः । प्रत्ययार्थः संबन्धश्चात्र तद्योग्यतारूप इत्यर्थः । अतदर्हत्वं तदर्हत्वं च विशदयन्विरोधशङ्कापरिहारस्य फलितत्वेनाव्यामिश्राभिधानमुपसंहरति—विषयेति ॥ ३ ॥

ननु मोक्षेच्छैव हि कर्मयोगेऽपि पुरुषं प्रवर्तयति सा यदि जाता ततः किमव्यवहिते ज्ञानयोगे न प्रवर्तयतीति शङ्का न कर्मणामिति श्लोकेन निराक्रियत इत्याह—सर्वस्येति । लौकिकस्येत्यनेन संसार[स्य] लोकान्तर्गततया विषयव्याकुलेन्द्रिय-

---

१ ख. ग. घ. °कर्मचष्टता ।

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

नेति । न शास्त्रीयाणां कर्मणामनारम्भादेव पुरुषो नैष्कर्म्यं ज्ञाननिष्ठामाप्नोति सर्वेन्द्रियव्यापाराख्यकर्मोपरतिपूर्विकां ज्ञाननिष्ठां न प्राप्नोतीत्यर्थः । न चाऽऽरब्धस्य शास्त्रीयस्य कर्मणस्त्यागात् । यतोऽनभिसंहितफलस्य परमपुरुषाराधनविषयस्य कर्मणः सिद्धिरात्मनिष्ठा ततस्तेन विना तां न प्राप्नोति । अनभिसंहितफलैः कर्मभिरनाराधितगोविन्दैर-

---

त्वमभिप्रेतम् । सहसैवेति । कर्मयोगमकृत्वेत्यर्थः । निषेधस्यान्यविषयत्वज्ञापनाय शास्त्रीयशब्दः । नैष्कर्म्यशब्दस्यानुष्ठानादिपरत्वे साध्याविशेषादिदोषः स्यादतो निष्कर्मा निष्क्रान्तकर्मयोगः पर्यवसितकर्मयोगो ज्ञाननिष्ठ इत्यर्थः । तस्य भावो नैष्कर्म्यमित्यभिप्रायेणाऽऽह—ज्ञाननिष्ठामिति । संन्यसनशब्दस्याप्यत्र कर्मणामित्यनेनान्वयं संन्यसनस्वभावादारब्धविषयत्वं तत एव सव्यसाचिनः समरजिहासावृत्तान्तं चाभिप्रेत्याऽऽह—न चाऽऽरब्धस्येति । नैष्कर्म्यशब्दानुषङ्गेऽपि संभवति पुनः सिद्ध( द्धि )शब्दसाभिधानस्य तात्पर्यं व्यञ्जयति—यत इति । अनारम्भं संन्यसनं च संकलय्याऽऽह—अतस्तेन विनेति । कारणभूतकर्माभावे कथं कार्यं स्यादिति भावः । पञ्चम्या हेतुपरत्वं निषेधान्वयेन निषेध्यान्वयेन वा योज्यम् । पूर्वत्र कर्मयोगानारम्भे ज्ञानयोगासिद्धिः स्यात्, इति वाक्यार्थः । उत्तरत्र तु यत्कर्मयोगत्यागादेव ज्ञानयोगसिद्धिरित्यभिप्रेतम् । तदयुक्तम् । सा हि तेनैव जन्येति तात्पर्यम् । तदिदमुभयी(य)मपि वाक्यवृत्तिमभिप्रेत्य श्लोकाभिप्रेतमर्थमाह—अनभिसंहितेति । कर्मभिरित्यस्यानाराधितेत्यनेनान्वयः । एतेन 'अनाराधितगोविन्दा ये नरा दुःखभागिनः' इत्यादिकं स्मारितम् । अनभिसंहितकर्माभावे निःश्रेयसौपयिकपुरुषप्रीत्यभावः । तदभावाच्च पापसंचयानुपरमः । तेन च रजस्तमोमयमनोमलानपायः । ततश्च रागद्वेषादिदोषाणां दीर्घायुःष्वनन्तेषु च जीवत्सु नेन्द्रियव्याकुलताशान्तिः । बहिर्विषयव्याकुलेषु च तेषु न प्रत्यगर्थनिष्ठेति

विनष्टानादिकालप्रवृत्तानन्तपापसंचयैरव्याकुलेन्द्रियतापूर्विकाऽऽत्मनिष्ठा दुःसंपाद्या ॥ ४ ॥

एतदेवोपपादयति—

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

न हीति। न ह्यस्मिँल्लोके वर्तमानः पुरुषः कश्चित्कदाचिदपि कर्माकुर्वाणस्तिष्ठति । न किंचित्करोमीति व्यवसितोऽपि सर्वः पुरुषः प्रकृतिसमु-

---

तादृशकर्मपरित्यागेन ज्ञाननिष्ठामनुतिष्ठासुः सप्तभूमस्य गोपुरस्य सप्तमं तलं प्रथमं चिकीर्षतीत्युपहास्यमिति भावः ॥ ४ ॥

अनन्वयशङ्कां परिहरन्ननन्तरश्लोकमवतारयति—एतदेवेति । परमपुरुषाराधनवेषस्य कर्मणस्त्यागे ज्ञाननिष्ठायाः दुःसंपादत्वमेवेत्यर्थः । प्रथमो हिशब्दः पूर्वश्लोकार्थोपपादनद्योतको द्वितीयस्त्वेतच्छ्लोकपूर्वार्धोक्तोपपादनार्थः । प्रकरणारम्भे 'लोकेऽस्मिन्' इत्युक्ताधिकारिवैचित्र्यमपि कश्चित्सर्व इत्याभ्यामभिप्रेतमिति ज्ञापनायास्मिँल्लोक इत्युक्तम् । जातुशब्दो हि स्थूलकालपरः । क्षणशब्दस्तत्र 'क्षणो व्यापारवैकल्ये कालभेदाल्पकालयोः' इत्यनेकार्थपाठात्तदन्तर्गताल्पकालविषय इत्यपौनरुक्त्यम् । तदुभयसंग्रहेण कदाचिदपीत्युक्तम् । प्रलयादिदशाव्यतिरिक्ते सर्वस्मिन्काल इत्यर्थः । स्वपतोऽपि हि स्वापाख्यं कर्म । अत एव हि तत्र देशकालादिनियमेनानुज्ञाप्रतिषेधौ भवतः । अकर्मकृदित्यत्राकर्मणः कर्ता न विवक्षितः किंतु कर्मणोऽकर्तेति व्यञ्जनाय कर्माकुर्वाण इत्युक्तम् । सर्वशब्दाभिप्रेतमाह—न किंचित्करोमीति व्यवसितोऽपीति । अयं चार्थः कर्मेन्द्रियाणि संयम्येत्युत्तरश्लोके व्यक्तो भविष्यति । प्रकृतिजत्वेन विशेषणात्सत्त्वरजस्तमो[ रूपो ] भवति विशेषलाभः । प्रकृतौ नित्यं विद्यमानानां कथं प्रकृतिजत्वमित्यत्रोक्तं प्राचीनेत्यादि । तथा चाऽऽह—'कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते' इति । एतेन कर्मयोगतनूकृतगुणकज्ञाननिष्ठव्यवच्छेदः । दृष्टोचितशब्देन

र्द्धैः सत्त्वरजस्तमोभिः प्राक्तनकर्मानुगुणं प्रवृद्धैर्गुणैः स्वोचितं कर्म प्रत्यवशः कार्यते प्रवर्त्यते । अत उक्तलक्षणेन कर्मयोगेन(णा) प्राचीनं पापसंचयं नाशयित्वा गुणांश्च सत्त्वादीन्वशे कृत्वा निर्मलान्तःकरणेन संपाद्यो ज्ञानयोगः ॥ ५ ॥

अन्यथा ज्ञानयोगाय प्रवृत्तोऽपि मिथ्याचारो भवतीत्याह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

कर्मेन्द्रियाणीति । अविनष्टपापतयाऽजितबाह्यान्तःकरण आत्मज्ञानाय प्रवृत्तो विषयप्रवणतयाऽऽत्मविमुखीकृतमना विषयानेव स्मरन्य आस्तेऽन्यथा संकल्प्यान्यथाऽऽचरतीति स मिथ्याचार उच्यते । आत्मज्ञानायोद्युक्तो विपरीतो विनष्टो भवतीत्यर्थः ॥ ६ ॥

---

तृतीये षष्ठे वक्ष्यमाणः प्रकारो दर्शितः । स्वशब्दोऽत्र गुणपरः । अवशः सर्व इत्युद्देश्यविशेषत्वभ्रमव्युदासायावशः कार्यत इत्युक्तम् । कार्यत इत्यस्य प्रयोज्यकर्मपरत्वव्युदासेन प्रयोज्यकर्तृविषयत्वव्यक्त्यर्थं प्रवर्त(र्त्य)त इत्युक्तम् । व्याख्यातश्लोकद्वयतात्पर्यमाह—अत इति । अतो गुणपरतन्त्रतया कर्मयोगमन्तरेण ज्ञानयोगस्य दुःसंपादत्वादित्यर्थः । पापनाशाद्गुणवशीकरणम् । तच्च मोक्षार्थप्रवृत्त्यनुकूलत्वं रजस्तमःप्राचुर्यनिवृत्तिर्वा । तत्कार्यरागद्वेषाद्यभावो निर्मलत्वमिहाभिप्रेतम् ॥ ५ ॥

अकरणे बाधं वदन्तीत्याह—अन्यथेति । कर्मयोगमकृत्वेत्यर्थः । 'मनसा स्मरन्' इत्यनेनार्थसिद्धं हेतुमाह—अविनष्टेति । आत्मविमुखीकृतमना इति । विमूढात्मेत्यत्राऽऽत्मशब्दो मनोविषयः । मूढत्वमात्मवैमुख्यम् । एभ्य एवेन्द्रियाणि निरोद्धुमिष्टानि तानेवेत्येवकारार्थः । मिथ्याचारप्रकारमाह—अन्यथा संकल्प्येति । विपरीतविनष्टशब्दाभ्यामुपायवैपरीत्यात्फलवैपरीत्यमिति दर्शितम् । द्वितीयेऽध्याये ध्यायतो विषयानित्यारभ्य बुद्धिनाशात्प्रणश्यतीत्यन्तेनास्यैवार्थस्य प्रपञ्चनं कृतमिति विनष्टशब्देन स्मारितम् ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

अतः पूर्वाभ्यस्तविषयसजातीये शास्त्रीये कर्मणीन्द्रियाण्यात्मावलोकने प्रवृत्तेन मनसा नियम्य तैः स्वत एव कर्मप्रवणैरिन्द्रियैरसङ्गपूर्वकं यः कर्मयोगमारभते सोऽसंभाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्यते ॥ ७ ॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

---

प्रथमे च ज्ञानयोगमारुरुक्षुमपोद्य कर्मयोगिनं(णं) प्रशंसति—यस्त्विति श्लोकेन। प्रकृतेन संगमयन्व्याख्याति—अत इति। इन्द्रियाणां निःशेषनियमनस्य कर्मयोगारम्भस्य च मिथो विरुद्धत्वादविरोधसिद्ध्यर्थमुक्तम्—शास्त्रीये कर्मणि नियम्येति । न हि कश्चिदित्यादिना ज्ञानयोगस्य दुष्करत्वे यो हेतुरुक्तस्तस्यैव कर्मयोगं प्रति उपकारकत्वेन सौकर्यप्रतिपादनार्थं पूर्वाभ्यस्तविषयसजातीय इत्युक्तम्। यदि पूर्वाभ्यास उपकार[क]त्वेन स्वीक्रियते तर्हि निषिद्धेभ्यो नियमनमशक्यं तेष्वेव वासनायाः प्राचुर्यादितिशङ्कानिरासाय कर्मणः फलान्तरपरित्यागाय चोक्तम्—आत्मावलोकने प्रवृत्तेनेति। निषिद्धानामात्मावलोकनविरोधित्वाध्यवसायात्तेषु स्थिराऽपि वासना निराक्रियत इति भावः। कर्मेन्द्रियैरित्यनेनाभिप्रेतं सौकर्यं विशदयति—स्वत एव कर्मप्रवणैरिन्द्रियैरिति। असङ्गस्य कर्मयोगारम्भापेक्षितत्वादसक्तपदस्य यद्वृत्तवाक्यांशेऽन्वयमाह—असङ्गपूर्वकमिति। वैशिष्ट्यप्रकारं विशेष्य(पस्य)चावधिं दर्शयति—असंभाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपीति ॥ ७ ॥

अथ सौकर्यनिष्प्रमादत्वदुस्त्यजत्वादिहेतुभिः कर्मयोगस्यैव ज्यायस्त्वं दर्शयञ्ज्यायसी चेत्कर्मण इत्यादेः साक्षादुत्तरमाह—नियतमित्यादिना। नियतशब्दस्य मन्दप्रयोजनात्क्रियाविशेषणत्वादपि प्रभूतप्रयोजनसमानाधिकरणकर्मविशेषणत्वमेवोचितम्। ततश्च कर्मणो नियतत्वं स्वभावतः शास्त्रतो वा स्यादुभयतो वा। तत्रै-

नियतं व्याप्तं प्रकृतिसंसृष्टेन हि व्याप्तं कर्म प्रकृतिसंसृष्टस्त्वमनादि-वासनया नियतत्वेन सुशकत्वादसंभावितप्रमादत्वाच्च कर्मणः कर्मैव कुरु। अकर्मणो हि ज्ञाननिष्ठाया अपि कर्मैव ज्यायः। 'नैष्कर्म्यं पुरुषोऽश्नुते' इति प्रक्रमात्। अकर्मशब्देन ज्ञाननिष्ठैवोच्यते। ज्ञाननिष्ठाधिकारिणोऽप्यनभ्यस्तपूर्वतया ह्यनियतत्वेन दुःशकत्वात्सप्रमादत्वाच्च ज्ञाननिष्ठायाः कर्मनिष्ठैव ज्यायसी। कर्मणि क्रियमाणे त्वात्मयाथात्म्यज्ञानेनाऽऽत्मनोऽकर्तृत्वानुसंधानमनन्तरमेव वक्ष्यते। अत आत्मज्ञानस्यापि कर्मयोगान्तर्गतत्वात्स एव ज्यायानित्यर्थः। कर्मणो ज्ञाननिष्ठाया ज्यायस्त्वे-

---

कस्मिन्नुभयविवक्षाक्(क्ल)प्तिस्तावद्गरीयसी। शरीरयात्रेत्यत्र तु शास्त्रीयकर्मणि नियमाभिप्रायो व्याख्यास्यते। अतोऽत्र स्वभावतो नियतत्वं विवक्षितम्। ज्ञाननिष्ठाया दुष्करत्वे प्रस्तुते कर्मनिष्ठायां सौकर्यमेव चानन्तरं वक्तुमुचितमित्येतदखिलमभिप्रेत्याऽऽह—नियतं व्याप्तमित्यादि। केन किंनिबन्धना व्याप्तिरित्यत्राऽऽह—प्रकृतिसंसृष्टेनेति। अकर्मण इति पदे नञस्तदन्यविषयत्वं विभक्तेश्च पञ्चमीत्वेनावधिविषयत्वं व्यञ्जयति—ज्ञाननिष्ठाया अपीति। अत्राकर्मशब्दस्य ज्ञाननिष्ठाविषयत्वं कथं मा ते सङ्गोऽस्त्वकर्मणीत्यत्र हि स एव कर्माभावविषयतया व्याख्यातः। तद्वदत्रानुष्ठानत्यागे प्रसक्ते तस्मादनुष्ठानमेव ज्याय इति वक्तुमुचितमित्यत्राऽऽह—नैष्कर्म्यमिति। अत्र ह्युपक्रमे कर्मयोगज्ञानयोगयोस्तारतम्यमनुयुक्तम्। तस्यैव चोत्तरमिह विवक्षितम्। मुमुक्षुसाध्यत्वेन निर्दिष्टस्य नैष्कर्म्यस्य सुषुप्त्यादिसुलभकर्माभावत्वं च युक्तम्। कर्मानारम्भान्नैष्कर्म्यमित्यत्र साध्याविशेषप्रसङ्गाच्चातो ज्ञाननिष्ठैवात्राकर्मशब्देनाभिधीयत इत्यर्थः। कर्मनिष्ठाया ज्यायस्त्वे वक्ष्यमाणं हेत्वन्तरमाह—कर्मणि क्रियमाणे चेत्यादिना। अनन्तरमेवेत्यासन्नत्वाभिधानेन तस्येहाभिप्रेतत्वं दर्शितम्। ज्ञानयोगशक्तस्यापि कर्मयोगानुष्ठानायाभिप्रेतमर्थमाह—कर्मण इति। इह ज्ञाननिष्ठाया इति पञ्चमी। अप्रसक्तप्रतियोगिकं ज्यायस्त्ववचनमयुक्तमिति भावः। उत्तरार्धस्यावता-

---

१ कं. °स्त्वचने ज्ञा°।

मद्गतं ज्ञाननिष्ठायामधिकारे सत्येवोपपद्यते। यदि सर्वं कर्म परित्यज्य केवलं ज्ञाननिष्ठायामधिकरोषि तर्ह्यकर्मणस्ते ज्ञाननिष्ठस्य ज्ञाननिष्ठोपकारिणी शरीरयात्राऽपि न सेत्स्यति। यावत्साधनसमाप्ति शरीरधारणं चाऽऽवश्यकम्। न्यायार्जितधनेन महायज्ञादिकं कृत्वा तच्छिष्टाशनेनैव शरीरधारणं कार्यम्। आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा

---

रमाह—यदीति। अत्र त्वकर्मण इति बहुव्रीहिः। त इत्यनेन सामानाधिकरण्यादिति व्यञ्जनायाकर्मणस्ते ज्ञाननिष्ठस्येत्युक्तम्। ननु स्वकर्मपरित्यागिनो यदि शरीरयात्राऽपि न स्यात्ततो लब्धोपायस्य स्वरसतः प्रतिबन्धनिवृत्तेरयत्नलभ्यैव मुक्तिः स्यादित्याशङ्क्याऽऽह—यावदिति। नहि साधनानुप्रवेशमात्रात्फलसिद्धिः किंतु साधनसंपूर्तेरेव। सा च न त्रिचतुरादिवि(दि)वश(स)लभ्या येन शरीरमुपेक्षेमहि। चिरकालसाध्यायां च साधनसंपूर्तौ तावन्तं कालं शरीरमप्यवश्यं रक्षणीयम्। अनिष्पन्नोपायस्यौदासीन्यात्तत्परित्यागे प्रत्यवायोऽपि स्यादिति भावः। अस्तु शरीरधारणमपेक्षितम्। तथा च तन्न स्वेच्छया चिरकालं कर्तुं शक्यम्। नाप्यौदासीन्यमात्रात्तन्निवृत्तिः। आरम्भककर्मविशेषेण शरीरस्य नियतावधिकत्वात्। स्मरन्ति च कर्मप्रतिनियतानि विवाहो जन्म मरणमित्यादीनि। अस्तु वा स्वेच्छया शरीरधारणं तथाऽपि यत्किंचिल्लौकिककर्मणैव तत्सुशकमित्यत्राऽऽह—न्यायार्जितेति। अयमभिप्रायः—द्विविधानि कर्मफलानि नियतान्यनियतानि चेति। प्रबलशापादिसंभवानि नियतानि। इतराण्यनियतानि। अनियतत्वं च तेषां देशकालाद्यपेक्षया न तु स्वरूपतो येन कर्मणां निष्फलत्वप्रसङ्गः स्यात्। ततश्च यान्यत्रानियतानि तत्र स्व[व्या]पारविषयता। यान्यधिकृत्य प्रायश्चित्तमन्त्रौषधनीतिशास्त्रादीनि। अन्यथा विजिगीषुभिरुपपन्नपरिपन्थिभिरपि न चतुरङ्गादिकमङ्गी क्रियेत। आतुरैरपि न भेषजमुपभुज्येत। स्वेच्छया किंचित्करणाभावे स्वारसिककर्तृत्वाभावाच्छास्त्रस्याप्यनुदयः। अत एवं ज्ञानयोगमारुरुक्षता त्वया कर्मवश्यत्वमेव जगतो निर्वर्तितमिति सम्यगयत्नसिद्धो मोक्षः समर्थित इति भावः। एवं शरीरधारणाभावे स्वारसिकं

स्मृतिरित्यादिश्रुतेः । 'ते त्वघं भुञ्जते पापाः' इति च वक्ष्यते । अतो ज्ञाननिष्ठस्यापि कर्माकुर्वतो देहयात्रा न सेत्स्यति । यतो ज्ञाननिष्ठस्यापि ध्रियमाणशरीरस्य यावत्साधनसमाप्ति महायज्ञादिनित्यनैमित्तिककर्मावश्यं कार्यम् । अतः कर्मयोगेऽप्यात्मनोऽकर्तृत्वभावनयाऽऽत्मयाथात्म्यानुसंधानमन्तर्भूतम् । अतश्च प्रकृतिसंसृष्टस्य कर्मयोगः सुशकोऽप्रमादश्च । अतो ज्ञाननिष्ठायोग्यस्यापि ज्ञानयोगात्कर्मयोगो ज्यायान् । तस्मात्त्वं कर्मयोगमेव कुर्वित्यभिप्रायः ॥ ८ ॥

एवं तर्हि द्रव्यार्जनादिकर्मणोऽहंकारममकारादिसर्वेन्द्रियव्याकुलतागर्भत्वेनास्य पुरुषस्य कर्मवासनया बन्धनं भविष्यतीत्यत्राऽऽह—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

---

विशरारुत्वं द्योतयति शरीरशब्दः । एवकारेण न्यायार्जनयज्ञशिष्टाशनादेर्नियमविधित्वं द्योतितम् । एवंविधा च शरीरयात्रा ज्ञानयोगसाध्यभक्तियोगदशायामपि अविच्छेद्येत्यभिप्रायेणाऽऽहारशुद्धिश्रुत्युपादानम् । श्रौतस्यार्थस्यात्रापि विवक्षितत्वज्ञापनाय वक्ष्यमाणतामाह—ते त्वघमिति । पूर्वोपपादितान्हेतून्बुद्धिस्थक्रमेण विविच्योद्गृह्णन्नाभिप्रायिकं शाब्दं चाखिलमर्थं सुखग्रहणाय संकलय्य दर्शयति—यत इति । ज्ञाननिष्ठायोग्यस्यापि कर्मयोगो ज्यायांस्तस्मात्त्वं ज्ञानयोगयोग्योऽपि कर्मयोगमधिकुर्विति वा न त्वमिदानीं ज्ञानयोगयोग्योऽतः कैमुत्यात्कर्मयोगमेव कुर्विति वा त्वंशब्दाभिप्रायः ॥ ८ ॥

यज्ञार्थादिति श्लोकः कर्मविधिनिषेधयोर्विषयव्यवस्थापक इति ज्ञापयितुं शङ्कते—एवं तर्हीति । द्रव्यार्जनादेरित्यत्राऽऽदिशब्देन महायज्ञादिग्रहणम् । ममकारादीत्यत्र तु रागद्वेषाभिनिवेशरचनादानविहरणादिग्रहः । अहंकारममकारादेर्मनोवृत्तिविशेषत्वादिन्द्रियव्याकुलतारूपत्वोक्तिः । अस्य पुरुषस्येति । मुमुक्षोरपीति भावः । कर्मवासनयेति । प्राचीनयाऽनुपरतयाऽद्यतनव्यापाराभ्यासोपबृंहितया चेति भावः । बन्धनं भविष्यतीति । उत्तरोत्तरशरीरबन्धादिना संसारानुवृत्तिप्रसङ्ग इत्यर्थः । अत्र यज्ञो वै विष्णुरिति

यज्ञादिशास्त्रीयकर्मशेषभूताद्द्रव्यार्जनादेः कर्मणोऽन्यत्राऽऽत्मीयप्रयोजनशेषभूते कर्मणि क्रियमाणेऽयं लोकः कर्मबन्धनो भवति। अतस्त्वं यज्ञाद्यर्थं द्रव्यार्जनादिकं कर्म समाचर। तत्राऽऽत्मप्रयोजनसाधनतया यः सङ्गस्तस्मात्सङ्गान्मुक्तः सन्समाचर। एवं मुक्तसङ्गेन यज्ञाद्यर्थतया कर्मणि क्रियमाणे यज्ञादिभिः कर्मभिराराधितः परमपुरुषोऽ-

---

श्रुतेर्यज्ञ ईश्वर इति पर्यवसानादित्यरम्। तच्चाविरुद्धमस्माकं तथाऽपि समनन्तरश्लोकपठितयज्ञशब्दैकार्थ्यमुचितमित्यभिप्रायेणाऽऽह—यज्ञादिशास्त्रीयकर्मेति। यज्ञादीत्यादिशब्देन यज्ञशब्दस्योपलक्षणपरत्वं ज्ञाप्यते। शास्त्रीयकर्मशब्देनोपलक्षणोपलक्ष्याणां सामान्यतः संग्राहकाकारं तदर्थकर्मणो निर्दोषत्वहेतुं च दर्शयति। यज्ञार्थाद्यज्ञप्रयोजनात्; तदिदं दर्शितम्—शेषभूतादिति। कर्मैव बन्धनं कर्मणा वा बन्धनं यस्य स कर्मबन्धनः। तस्य च बन्धकत्वं स्ववासनाद्वारा न पुनः पापतया विहितप्रतिषिद्धविषयत्वात्। अत्र कर्मबन्धनशब्दस्य पुरुषस्य कर्मवासनया बन्धनं भविष्यतीति शङ्काग्रन्थेनायमर्थो दर्शितः। लोकोऽत्र संसारिचेतनवर्गः। अत इति। यज्ञार्थस्य कर्मणो बन्धहेतुत्वाभावादित्यर्थः। द्रव्यादिलाभहेतुभूतयुद्धमोत्साहनव्यक्त्यर्थं द्रव्यार्जनादिकमित्युक्तम्। तादर्थ्यं सङ्गत्यागश्चेत्युभयमपि विधेयमिति ज्ञापनाय पृथग्वाक्यकरणम्। कर्तृत्वफलत्यागयो( तो )र्विलक्षणं सङ्गत्यागस्य स्वरूपं दर्शयति—तत्रेति। यत्किंचित्प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति चेत्सत्यम्। प्रयोजनसाधनत्वबुद्ध्यभावेऽपि सुहृदुपचारवद्भगवत्समाराधनरूपतया स्वरूपेण प्रयोजनत्वबुद्ध्या प्रवृत्त्युपपत्तिः। मुक्तसङ्ग इत्यत्र सङ्गस्य बन्धकत्वविवक्षया सङ्गान्मुक्त इत्युक्तम्। प्रकृतचोद्यस्यादृष्टद्वारा फलप्रदत्वेन परिहारं वदन्तदर्थस्य बन्धहेतुत्वोक्त्या फलितं तदर्थस्य मोक्षहेतुत्वप्रकारं दर्शयति—एवमिति। एतेन कर्मप्रामाणिकापूर्वद्वारा फलप्रदत्वमिति कुदृष्टिमतं निरस्तम्। आर्थवादिकापेक्षितदेवताप्रीतिद्वारैव फलप्रदत्वोपपत्तौ स एवं प्रीतः प्रीणातीत्यादिश्रुतहानाश्रुतकल्पनाद्यनुपपत्तेः। कर्मभिराराधित इत्यनेन हरि( रे )ग्रहणं प्रीतिश्चाभिप्रेते। परमपुरुष इति। तदविनाभूतादित्य-

स्यानादिकालप्रवृत्तकर्मवासनां समुच्छिद्यान्याकुलात्मावलोकनं ददातीत्यर्थः ॥ ९ ॥

यज्ञशिष्टेनैव सर्वपुरुषार्थसाधननिष्ठानां शरीरधारणं कर्तव्यम्। अयज्ञशिष्टेन शरीरधारणं कुर्वतां दोषमाह—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

'पतिं विश्वस्याऽऽत्मेश्वरम्' [म० ११। ३] इत्यादिश्रुतेर्निरुपाधिकः प्रजापतिशब्दः सर्वेश्वरं विश्वस्य स्रष्टारं विश्वात्मानं परायणं नारायणमाह।

---

वर्णादिश्रुतिसिद्धविग्रहविशेषवत्त्वं सर्वब्रह्माण्डयुगपत्कर्मसंनिधिशक्तिश्च। ददातीति वरप्रदत्वमिति विग्रहादिपञ्चकप्रदर्शनम्। कर्मवासनामाच्छिद्येति विपरीतवासनाचोद्यं परिहृतम् ॥ ९ ॥

उक्तमर्थद्वयं सह यज्ञैरित्यारभ्य मोघं पार्थ स जीवतीत्यन्तेन निन्दाप्रशंसादिभिर्द्रढयतीत्याह—यज्ञशिष्टेनैवेति। सर्वपुरुषार्थसाधननिष्ठानामित्यनेन प्र (त्येतत्प्र) जाः सृष्ट्वेति सामान्यनिर्देशफलितमुक्तम्। अत्र प्रजापतिशब्दस्य हिरण्यगर्भादिविषयत्वव्युदासायाऽऽह—पतिमिति। विश्वस्येति। हिरण्यगर्भादेरपि न तु हिरण्यगर्भादिवदण्डाद्यवच्छिन्नस्येत्यर्थः। अत एवोक्तम्—निरुपाधिक इति। श्रुतार्थस्वभावादपि स एव सर्वप्रजापतिरिति प्रदर्शनाय सर्वेश्वरत्वादिविशेषणोक्तिः। नारायणमिति। एतदखिलं नारायणशब्दवाच्यस्यैव हि नारायणानुवाकादिषु प्रतिपाद्यत इति भावः। उक्तं च जगत्पतित्वं स्रष्टृत्वादिकं च समुच्चित्य भगवता पराशरेण—

कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ॥ इति।

अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिरित्यादि श्रुत्यनुसारात्प्रयुक्तः, किंच स्वतन्त्रस्य कर्मपरतन्त्रान्प्रति योगो ह्ययम्, अतोऽत्र प्रजाः सृष्ट्वेति प्रजाशब्दः सर्वान्ब्रह्मपर्यन्ताञ्जगदन्तर्व्यवस्थितान्कर्मजनितसंसारवशवर्तिनो यज्ञाद्यधिकारिणः प्राणिनः संगृह्णाति। अतोऽत्र प्रजापतिशब्द उपक्रमस्थप्रजाशब्दानुरोधात्संकोचेन तद्वैरूप्यायोगाच्च परित्यक्तरूढिरकर्मवश्यं नियोक्तारं सर्वेश्वरं नारायणमाह। तथा सृज्यसमस्तक्षेत्रज्ञविषयो ह्ययम-

नवच्छिन्नः प्रजाशब्दः, पुरेति प्रलयानन्तरकालाभिधानात् । ततश्च ' सदेव सोम्येदमग्र आसीत् । तदैक्षत बहु स्यां प्रजायेयेति ' [ छा० ६ । २ । १ । ३ ] । ' सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः ' [ छा० ६ । ८ । ४ ] । ' एको ह वै नारायण आसीन्न ब्रह्मा नेशानः ' इत्यारभ्य ' तत्र ब्रह्मा चतुर्मुखोऽजायत त्र्यक्षः शूलपाणिः पुरुषोऽजायत सिसृक्षुर्विविधाः प्रजाः ' [ महो० १ । १ ] इत्यादिषु हिरण्यगर्भादेरपि प्रजात्वावगमान्नारायणस्य तज्जनकत्वावगतेः प्रजाः सृष्ट्वेत्यनवच्छेदेन निर्दिष्टो विश्वस्य स्रष्टा नारायण एवेति स एवात्र प्रजापतिः । किंच ' तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ' [ पु० सू० ऋ० ९ ] । ' सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ' [ तै० आ० ३ । १२ । ७ ] इति यज्ञैः सह सर्वप्रजानां सृष्टस्रष्टतया निर्दिष्टोऽप्यस्याऽऽदिपुरुषस्यापि सहस्रशीर्षत्वादिविशिष्टो महापुरुष एव । अतोऽपि सह यज्ञैः प्रजाः सृष्ट्वेति निर्दिष्टः प्रजापतिर्विश्वस्य स्रष्टा स एव । तथा ' सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते ' इत्यादिवचनबलाद्धिरण्यगर्भाख्यप्रजापतिमुखेनापि विश्वस्रष्टा सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति श्रुतः स एव विश्वात्मा । किंचात्र निर्दिश्यमानं देवानां भावनादिकं परमात्मकानामेवेति अहं हि सर्वयज्ञानामित्यादौ व्यक्तं भविष्यति । यस्मिन्निदं सं च वि च[रती]ति प्रजापतिश्चरति गर्भे अन्तः, इत्यादि, विश्वस्य स्रष्टारं विश्वात्मानमिति विशेषणाभ्यां सूचितम् । अतोऽप्यत्र विश्वात्मानं तमेवाऽऽह । तथा प्रजापतेः सभां वेश्म प्रपद्य इत्यत्र परमप्राप्यतया प्रजापतिशब्दनिर्दिष्टोऽपि परमात्मैवेति न च कार्ये प्रत्यभिसंधिरिति सूत्रे प्रत्यपादि । अतोऽपि परायणं तमेवाऽऽह । एवं सर्वेश्वरमित्यादिविशेषणैस्तत्तत्प्रमाणसूचनं कृतम् । एवं श्यामैकरूपसप्तदशायातयामाज्यदैवतविष्णुविषयप्रजापतिशब्दश्रुतिरपि अनुसंधेया । पुराशब्दस्य वचनान्वयप्रतीतिव्युदासेन ब्रह्माद्यगोचरसृष्ट्यन्वयंव्यक्तयर्थमाह—

पुरा सर्गकाले स भगवान्प्रजापतिरनादिकालप्रवृत्ताचित्संसर्गविवशा उपसंहृतनामरूपविभागाः स्वस्मिन्प्रलीनाः सकलपुरुषार्थानर्हाश्चेतनेतरकल्पाः

---

पुरा सर्गकाल इति । श्रुतिस्मृत्यादिषु सृष्टिप्रकरणप्रसिद्धिप्रकारमभिप्रैति । स भगवानिति । भगवच्छब्देन सृष्ट्यादिपञ्चकृत्योपयुक्तहेयप्रत्यनीककल्याणगुणविशिष्टत्वं दर्शितम् । तथा मानवे धर्मशास्त्रे प्रथममासीदिदं तमोभूतमिति प्रलयमभिधाय ततः स्वयंभूर्भगवानिति भगवच्छब्देन सर्वस्रष्टा निर्दिष्टः । अनन्तरं च ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः । तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्तित इति हिरण्यगर्भाख्यप्रजापतेः स्रष्टा नारायण इत्युक्तः । अत्र प्रजापतिरुवाचेति पराकृया निर्देशस्तु सारथिभूतस्य स्वस्य प्रजापतिशब्दप्रतिपन्नाद्भेदोपचारेणेति मन्तव्यम् । एवमुत्तरत्रापि सर्वत्र पराक्त्वनिर्देशेषु यथार्हमनुसंधेयम् । सर्वत्र सृष्टेः संहारपूर्वकत्वदर्शनादत्रापि तथा विवक्षा । संहारस्य प्रयोजनं सृष्टेर्हेतुं चाऽऽह—अनादीति । अनवरतसुखदुःखोपभोगायासपरिश्रान्तानां विश्रमार्थमश्रान्तापथप्रवृत्तिवासनाविच्छेदार्थं चोपसंहारः । अतो न संहारे वैषम्यनैर्घृण्यदोषः । तादृशसुखदुःखोपभोगप्रदाने च परमात्मनि नित्यसंकल्पसिद्धजीवस्वातन्त्र्यनिबन्धनानादिकर्मप्रवाहहेतुकाचित्संसर्ग एव हेतुरिति न तत्र वैषम्यनैर्घृण्ये । सूत्रितं च—'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' [ ब्र० सू० २ । १ । ३४ । ३५ ] 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' [ ब्र० सू० २ । ३ । ४१ ] इति । उपसंहृतनामविभागाः स्वस्मिन्प्रलीना इति । असद्व्यपदेश एकत्वव्यपदेशादिश्च निर्व्यूढः । नामरूपप्रहाणं स्वस्मिन्प्रलयश्च मोक्षतत्पुरुषार्थभावः स्यादित्याशङ्क्याऽऽह—सकलेति । त्रिवर्गेऽप्यनर्हाः किं पुनरपवर्ग इति भावः । तत्र हेतुमाह—चेतनेतरकल्पा इति । स्वप्रकाशकत्वेऽप्यन्तर्ज्ञानसंकोचात्तत्कल्पत्वं न तु ज्ञानविनाशात् । प्रजा हिरण्यगर्भादिकाः समीक्ष्य सम्यगवलोक्य । एतेन—जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । नावेक्षसे यदी-

प्रजाः समीक्ष्य परमकारुणिकस्तदुज्जिजीवयिषया स्वाराधनभूतयज्ञनिर्वृत्तये यज्ञैः सह ताः सृष्ट्वैवमुवाच—अनेन यज्ञेन प्रसविष्यध्वमात्मनो वृद्धिं कुरुध्वम् । एष वो यज्ञः परमपुरुषार्थलक्षणमोक्षाख्यस्य कामस्य तदनुगुणानां च कामानां प्रपूरयिता भवत्वित्यर्थः ॥ १० ॥

---

त्यादिकमभिप्रेतम् । एकाकी न रमते[बृ० १।४।३]इत्यादिश्रुतेः। परमकारुणिकः किल त्वमित्यादिस्मृतिसिद्धगुणविशेषतात्पर्यमाह—परमकारुणिक इति । अवाप्तसमस्तकामस्य जगद्व्यापारानुपपत्तिं परिहरति—तदुज्जिजीवयिषयेति । कारुणिका हि स्वार्थनिरपेक्षा एव परोज्जिजीवयिषया प्रवर्तन्ते । स्वैरप्रवृत्तिरस्य लीलाऽपीति न दोष इति भावः । यज्ञैः सहेति निर्देश उज्जीवनोपायविशेषनिष्पत्त्यर्थ इत्यभिप्रायेणाऽऽह—स्वाराधनेति । यज्ञैरिति वैविध्यसूचनाय बहुवचननिर्देशे पूर्वं कृतेऽपि अनेनेत्येकवचनेन परामर्शो जात्येकत्वपर इत्यभिप्रायेणाऽऽह—अनेन यज्ञेनेति । सह यज्ञा इति शंकरयादवप्रकाशीयपाठस्त्वप्रसिद्धेरनादृतः । प्रसविष्यध्वमित्यत्र षूङ्प्राणिप्रसवे, षूङ्प्राणिगर्भविमोचने, इति धातुद्वयेऽपि प्रजननमात्रप्रतीतिः स्यात् । न च द्वादशाहवत्सर्वेषां यज्ञानां प्रजामात्रं फलमतः संतत्युपलक्षिता स्वनिष्पाद्या समृद्धिरत्र विवक्षितेत्यभिप्रायेणाऽऽह—आत्मनो वृद्धिं कुरुध्वमिति । यज्ञसाध्यः कामो निषिद्धेतरधर्माविरुद्धसमस्तकाम्यवर्गस्तत्रापि मोक्षतत्साधनोपकारिषु तात्पर्यभूयस्त्वमित्यभिप्रायेण मोक्षतदनुगुणोपादानम्, रुचिवैचित्र्यज्ञापनायेष्टशब्देन विशेषणं मोक्षस्येष्टकामशब्देन संग्रहाय परमपुरुषार्थलक्षणेत्युक्तम् । अवधीरितस्वर्गायार्जुनायोपदेशात्, मा फलेषु श्रेयः पश्यसीति पूर्वापरानुगुण्याच्चात्र मोक्षार्थतोक्तिर्युक्ता । प्रपूरयितेति । दुह प्रपूरणे, इति हि धातुः । ननु प्रपूरणं हि पूरणाभावे( वो )ऽनुशिष्टः, प्रस्थानप्रस्मरणादिष्विवात्रापि प्रशब्दस्याभावविषयत्वात् । अत एव हि गां दोग्धीत्यादिप्रयोगः । सत्यम् । तथाऽपि गां दोग्धीत्यत्रापि गोरेव पयोरेचनं पयसः स्वरूपवैकल्यम् । तद्वदत्रापि गोस्थानीयाद्यज्ञतः क्षीरस्थानीयाः कामा लभ्यन्ते तैस्तस्य रेचनं स्यात्फलदातुः सकाशात्फलमादाय युष्मभ्यं ददात्वित्यर्थः । तेन यज्ञाराधितोऽहं युष्मभ्यं कामान् ददामीत्युक्तं भवति ॥ १० ॥

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

कथमनेन देवताराधनभूतेन देवान्मच्छरीरभूतान्मदात्मकानाराधयत। अहं हि सर्वयज्ञानां भोक्तेति वक्ष्यते । यज्ञेनाऽऽराधितास्ते देवा

---

यज्ञेनाऽऽत्मनो वृद्धिः कथम् , क्षणिकक्रियारूपश्च यज्ञः कथं कालान्तरभाविफलसाधनम् । ' नान्यः पन्थाः ' इत्यादिना ज्ञानस्यैव मोक्षप्रदत्वे सिद्धे कथं स्वर्गादिसाधनतया निर्दिष्टो यज्ञो मोक्षसाधनम् । स्मरन्ति च—

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ इति ।

तथा—नैव धर्मी न चाधर्मी ज्ञानं संन्यासलक्षणम् ॥ इति च ।

कथं च मोक्षबहिर्भूतानां विचित्रसांसारिककामानां तदनुगुणत्वमिति शङ्कास्तबकमभिप्रेत्याऽऽह—कथमिति । तत्र देवान्भावयतेति प्रथमस्योत्तरम् । देवताराधनं ह्याराधकस्यातिशय एव । अतः स एवाऽऽत्मनो वृद्धिः । यज देवपूजायाम् , इति यज्ञपदप्रकृतिं धातुं स्मारयति—देवताराधनभूतेनेति । यज्ञस्य मोक्षहेतुत्वानुपपत्तिपरिहारायाऽऽह—मदात्मकानिति । परमात्मसमाराधनतया कृतं कर्मैव मोक्षसाधनज्ञानाङ्गतया स्थित्वा मोक्षं साधयतीति प्रागेवोक्तम् । मदात्मकानित्यस्यान्तर्यामिब्राह्मणादिसिद्धत्वसूचनाय मच्छरीरभूतानित्युक्तम् । यज्ञेन देवानां भावनं हि संतोषवत्तया भावनमित्यभिप्रायेणोक्तम्—आराधयतेति । तदभिप्रायेण च ब्राह्मणम्—तस्मादितः प्रदानं देवा उपजीवन्तीति । मदात्मकानित्यस्यानुक्तस्य कथमुपादानमित्यत्राऽऽह—अहं हीति । क्षणिकस्य फलप्रदानानुपपत्तिपरिहाररूपं द्वितीयं पादं व्याख्याति—यज्ञेनेत्यादिना । पुष्णन्त्वित्यनेन प्रस्तुताकारपरामर्शितच्छब्दार्थो यज्ञेनाऽऽराधिता इति देवानां फलप्रदानशक्ति-

मदात्मकाः स्वाराधिता अपेक्षितान्नपानाद्यैर्युष्मान्पुष्णन्तु । एवं परस्परं भावयन्तः परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥ ११ ॥

इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

यज्ञभाविता यज्ञेनाऽऽराधिता मदात्मका देवा इष्टान्भोगान्वो दास्यन्ते परमपुरुषार्थलक्षणं मोक्षं साधयतां य इष्टा भोगास्तान्पूर्वपूर्वयज्ञभाविता देवा दास्यन्त उत्तरोत्तराराधनापेक्षितान्सर्वान्भोगान्वो दास्यन्तीत्यर्थः । स्वाराधनार्थतया तैर्दत्तान्भोगांस्तेभ्योऽप्रदाय यो भुङ्क्ते चोर एव सः । चौर्यं हि नामान्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि

---

सिद्ध्यर्थं पुनर्मदात्मका इत्युक्तम् । एवं च क्षणिकस्यापि देवताप्रीतिरूपापूर्वद्वारा फलसाधनत्वं महाप्रलये त्विन्द्रादिलयेऽपि परदेवताप्रीतिद्वारा पुनः फलप्रदत्वमनुपपन्नमित्युक्तं भवति । चतुर्थशङ्कापरिहारमभिप्रेत्याऽऽह––स्वाराधनेति । देवैराराधकानां भावनं नामापेक्षितैः पोषणमित्यभिप्रायेणोक्तम्—पुष्णन्त्विति । उत्तरार्धमुक्तस्यैवार्थस्य मोक्षोपयोगित्वज्ञापकमित्यभिप्रायेणाऽऽह—एवमिति । स्वर्गादिरूपश्रेयोव्यावृत्त्यर्थं परत्वविशेषणमित्यभिप्रायेणोक्तम्—मोक्षाख्यमिति ॥ ११ ॥

ते देवा भावयन्तु व इत्युक्तस्य पोषणस्य प्रकारो देवान्भावयतेत्यस्य व्यतिरेके प्रत्यवायश्चोच्यते––इष्टानिति श्लोकेन । इष्टानित्यस्यार्थं उत्तरोत्तराराधनापेक्षितानिति । न हि मुमुक्षुभिरुदरपूरणाद्यर्थं भोगा इष्यन्त इति भावः । बहुवचनासंकोचमभिप्रेत्योक्तम्––सर्वानिति । दास्यन्त इति कर्त्रभिप्रायक्रियाफलात्मनेपदस्य भावानुरोधेनाऽऽत्मार्थपाचकानां चोरत्वसिद्ध्यर्थं—स्वाराधनार्थतयेत्युक्तम् । ननु किमत्र चोरत्वम् , न हि देवानां भोगानसौ गूढं प्रसह्य वा हरति । नचैतत्तद्दत्तस्य स(स्व)हस्तागतस्य भोगश्चौर्यम् । न हि राजादिसेवकास्तद्दत्तभोगजीविनश्चोरा इति शूलमारोप्यन्ते । एवं च सर्वेषां यज्ञादिफलभुजामविशेषेण चोरत्वं प्रसज्यत इत्याशङ्क्याऽऽह—चौर्यं हीति । परबुद्ध्या प्रयोजनत्वेन

स्वकीयताबुद्धिं कृत्वा तेन स्वात्मपोषणम् । अतोऽस्य न परमपुरुषार्थानर्हतामात्रमपि तु निरयगामित्वं च भविष्यतीत्यभिप्रायः ॥ १२ ॥

तदेव विवृणोति—

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
ते त्वघं भुञ्जते पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

---

कल्पितस्य स्वकीयस्य परानुमत्या स्वप्रयोजनतया परिकल्पितस्यान्यदीयस्य च व्यवच्छेदायान्यदीय इत्यादि विशेषणद्वयम् । तेन स्वात्मपोषणमिति चौर्यस्य फलम् । अन्यदीये स्वकीयताबुद्धिकरणमित्येव लक्षणम् । तत्प्रयोजनतयेत्यन्यदीयत्वफलं तेन स्वात्मपोषणानौचित्यद्योतनम् । वस्तुशब्देन चोरयितव्यावान्तरभेदाविवक्षां द्योतयति । बुद्धिं कृत्वेत्यनेन चौर्यस्य नाधिकव्यापारोऽवश्यापेक्षित इति सूचितम् । बुद्धिपूर्वत्वं च द्योतितम् । एवं च सति योऽन्यथा सन्तमित्याद्युक्तात्मचौर्यमपि लक्षितं भवति । भगवदीये तद्गतातिशयाधानेच्छयैव परिकल्पिते प्रत्यगात्मनि स्वातिशयावहस्वतन्त्राभिमानरूपत्वात्तस्य । नन्वेवमप्यत्रोदाहरणे कथं चोरत्वम् । उच्यते । देवा हि कर्मभिराराधिता अपि हविर्ग्रहणार्थमेव फलं प्रयच्छन्ति । यथा राजानः षड्भागसंग्रहाय स्वाराधकेभ्यः क्षेत्रादिकम् । तत्र करप्रदानविमुखाः पुरुषा इव हविरादिकमप्रयच्छन्तो दण्ड्या एवेति चोरत्वनिर्देशफलितं व्यनक्ति–अत इति । चोरत्वादित्यर्थः । पुरुषार्थानर्हतेत्यनेन विहितकर्माकरणस्याधिकारित्वनिवृत्तिहेतुत्वमपि ख्यापितम् । भविष्यतीत्यनेन प्रत्यवायस्य देहान्तरभावितया योग्यानुपलम्भबाधाभावः सूचितः॥१२॥

पुनरुक्तिपरिहारायार्थान्तरपरत्वव्युदासाय चाऽऽह—तदेव विवृणोतीति । तत्र पूर्वार्धं श्रेयः परमवाप्स्यथेत्यत्र प्रकारकथनम् । उत्तरार्धं तु तैर्दत्तानित्याद्युक्तचोरत्वप्रपञ्चनरूपम् । यज्ञाकृष्ट(ज्ञशिष्ट)म् । यष्टव्याद्याकारविशेषकथनमिन्द्राद्यात्मनेत्यादि । अवधारणेन केवलेन्द्राद्यर्थत्वस्वार्थत्वयोर्व्यवच्छेदः । द्रव्योपादान-

इन्द्राद्यात्मनाऽवस्थितपरमपुरुषाराधनार्थतयैव द्रव्याण्युपादाय विमुच्य तैर्यथावस्थितं परमपुरुषमाराध्य तच्छिष्टाशनेन ये शरीरयात्रां कुर्वते ते त्वनादिकालोपचितैः किल्बिषैरुपार्जितैः किल्बिषैरात्मयाथात्म्याव-लोकनविरोधिभिः सर्वैर्विमुच्यन्ते । ये तु परमपुरुषेणेन्द्राद्यात्मना

---

पचनदेशयोरपि परमपुरुषाराधनार्थत्वबुद्धिः कार्येति ज्ञापनाय द्रव्याण्युपादायेत्याद्युक्तम् । एतच्च ये पचन्तीत्येतद्व्यतिरेकलब्धम् । केवलेन्द्राद्याराधनस्यापि वस्तुतः परमपुरुषाराधनरूपत्वादत्र तद्व्यवच्छेदाय तत्तद्देवतायजनस्य परमपुरुषपर्यन्तत्वसिद्धये च यथावस्थितमित्युक्तम् । यज्ञशिष्टममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः । रागप्राप्ता शरीरयात्रा यज्ञशिष्टेनैव कार्येति नियमः । सन्तो यज्ञशिष्टाशिन एव वर्तमाना इत्यर्थः । तदेतदु-च्यते—शरीरयात्रां कुर्वत इति । यद्वा सन्त इति पदमुत्तरार्धस्थ-पापशब्दप्रतिस्थानीयत्वात्साधुविषयम् । उत्तरार्धवदत्रापि सा-ध्यसाधनांशविभागद्योतनाय यच्छब्दाभ्यां वाक्यभेदकरणम् । तुशब्देन सञ्चयः पापानां विशेषे बोधिते तेभ्योऽपि न(स)तां विशेषोऽर्थात्सिद्ध इति द्योतनायाऽऽह–ते त्वनादीति। अत्र चुल्ल्या-दिपञ्चसूनाकृतपापमात्रस्य व्यवच्छेदार्थं सर्वशब्दबहुवचनाभ्यां प्रदर्शितं किल्बिषानन्त्यं समर्थयितुमनादिकालोपार्जितेत्युक्तम् । द्विविधानि किल्बिषाणि प्राप्त्य( प्य )विरोधीन्युपायविरो-धीनि चेति । तत्र प्राप्त्य(प्य)विरोधीनि भक्तियोगैकनिवर्त्यानि। तेभ्योऽत्र सर्वशब्दसंकोचमभिप्रेत्योक्तम्–आत्मयाथात्म्यावलोकनवि-रोधिभिरिति । स्मरन्ति च—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ इति ।

एतेन विरोधित्वाविशेषात्सांसारिकपुण्यान्यप्यत्र किल्बिषश-ब्देनोच्यन्त इत्यपि सूचितम् । पूर्वोत्तराघविघातिनो भक्तियोगा-द्विशेषसूचनायोपार्जितेत्युक्तम् । आत्मकारणादित्यत्र कारण-

---

१ ख. ग. घ. °तैस्तथा° ।

स्वाराधनाय दत्तानात्मार्थतयोपादाय विपच्याश्नन्ति ते पापात्मानोऽघमेव भुञ्जते । अघपरिणामित्वादघमित्युच्यते । आत्मावलोकनविमुखा नरकायैव पच्यन्ते ॥ १३ ॥

पुनरपि लोकदृष्ट्या शास्त्रदृष्ट्या च सर्वस्य यज्ञमूलत्वं दर्शयित्वा यज्ञानुवर्तनस्यावश्यकार्यतामननुवर्तने च दोषमाह—

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

---

शब्दः प्रयोजनरूपहेतुत्वपर इति ज्ञापनायोक्तमात्मार्थतयेति । न च पापमात्रस्याघभोजनत्वेन निन्दानुपपत्तेरात्मकारणात्पचन्तीत्यनेनार्थसिद्धमुक्तम् । अश्नन्तीति । पुंलिङ्गोऽत्र पापशब्दः, तद्गुणसारन्यायात् । पापविशिष्टविषय इत्यभिप्रायेणोक्तम् । पापात्मान इति । पापस्वभावा इत्यर्थः । अघशब्दस्य भोज्यनिन्दार्थमौपचारिकत्वद्योतनायाघमेवेत्येवकार उक्तः । उपचारनिमित्तं संबन्धमाह—अघपरिणामित्वादिति । अघहेतुत्वादित्यर्थः । फलितमनिष्टद्वयमाह—आत्मावलोकनविमुखा इति । आत्मार्थं पचमानस्य पूर्वकिल्बिषनिवृत्त्यभावादात्मावलोकनवैमुख्यमुत्तरोत्तरकिल्बिषहेतुत्वाच्च पुनर्नरकप्राप्तिरिति केवलाघो भवति केवलादीति वचनाभिप्रेतमाह—नरकायैवेति । न पुनरैहिकायाऽऽमुष्मिकाय वा सुखायेति भावः ॥ १३ ॥

उक्तस्यैवार्थस्य प्रमाणप्रदर्शनपूर्वकं प्रपञ्चनमन्नाद्भवन्तीत्यादिना क्रियत इति आदरार्थत्वादपौनरुक्त्यमित्यभिप्रायेणाऽऽह—पुनरपीति । यद्यपि लोकदृष्ट्या साक्षाद्यज्ञमूलत्वं दर्शयितुमशक्यं तथाऽपि शास्त्रदृष्टिसमुचितवेषेणैतदुच्यत इत्यदोषः । विभजिष्यते च लोकशास्त्रदृष्ट्योर्विषयांशः । पर्जन्यशब्देन पर्जन्यकार्यं वर्षो लक्ष्यते । अन्नादित्यादौ वृष्टेरन्नं ततः प्रजा इत्ययमंशो लोकसिद्धत्वादनुपात्तः । कर्मसमुद्भव इत्युक्ते पुण्यपापरूपकर्मसमुद्भव इति धीः स्यात्तद्व्युदासाय द्रव्यार्जनेत्याद्युक्तम् । अत्र मुख्यार्थसंभवाद्यज्ञशब्देनापूर्वलक्षणां वदन्तो निरस्ता इति भावः ।

अन्नात्सर्वाणि भूतानि भवन्ति । पर्जन्यादन्नसंभव इति सर्वलोकसाक्षिकम् । यज्ञात्पर्जन्यो भवतीति च शास्त्रेणावगम्यते—

अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

इत्यादिना । यज्ञश्च द्रव्यार्जनादिकर्तृपुरुषव्यापाररूपकर्मसमुद्भवः ॥ १४ ॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

कर्म ब्रह्मोद्भवम् । अत्र च ब्रह्मशब्दनिर्दिष्टं प्रकृतिपरिणामरूपं शरीरम् । 'तदेतद्ब्रह्म नाम रूपमन्नं च जायते' इति ब्रह्मशब्देन प्रकृति-

---

आदिशब्देन द्रव्यस्यार्जितस्य पचनादि गृह्यते । ननु कर्तृव्यापाररूपस्य कर्मणः कथं ब्रह्मोद्भवत्वम् । तद्धि प्रत्यगात्मजन्यं शरीरेन्द्रियादिजन्यमिति वा निर्देष्टुं युक्तम् । न च सर्वसाधारणं ब्रह्मणो हेतुत्वमिह विशिष्य निर्देष्टव्यम् । ब्रह्मणश्चाक्षरसमुद्भवत्वमनुपपन्नम् । ब्रह्मशब्दस्य परमात्मविषयत्वे जीवविषयत्वे वा द्वयोरपि नित्यत्वात्कारणभूतस्य कस्यचिदक्षरस्याभावात् । ब्रह्माक्षरशब्दयोर्वेदपरमात्मविषयतया शंकरव्याख्याऽपि चक्रत्वासंगता । यादवप्रकाशोक्तं ब्रह्मशब्दस्य स्फोटादिपरत्वमक्षराणां तद्व्यञ्जकत्वादिकं च तत्तत्प्रक्रियादूषणादेव निरस्तम् ॥ १४ ॥

स्फोटत्वं वर्णसंशय इति तु वर्णानां स्वार्थस्फुटीकरणशक्तिपरमित्याद्याशङ्क्याऽऽह—अत्र चेति । चः शङ्कानिवृत्तौ । अत्रेत्यनेन ब्रह्मशब्दस्य साक्षात्परमपुरुषे मुख्यत्वेऽपि प्रकरणादिबलात्तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकोऽयमित्यभिप्रेतम् । द्रव्यार्जनादिकर्मणः शरीरेणा साध्यत्वात्तत्र शरीरांशस्याक्षरशब्देन विविच्य वक्ष्यमाणत्वाच्छारीरांशस्य विषयोऽयं ब्रह्मशब्द इति प्रकृतिपरिणामरूपशरीरमित्युक्तम् । प्रकृतिपरिणामरूपे शरीरे तद्द्रव्यत्वेन ब्रह्मशब्दनिर्देशाय प्रकृतौ तत्प्रयोगं तावदाह—तस्मादेतदिति । एतत्प्रधानाख्यं ब्रह्म कार्यकारेण नामरूपविभागविभक्तं चेतनभोग्यं च जायत इति हि श्रुत्यर्थः । न च तत्र ब्रह्मशब्दः परमात्मविषयः, यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तप, तस्मादेतद्ब्रह्मेति परमात्मनः पृथङ्निर्दिष्टत्वात् । नापि प्रत्य-

निर्दिष्टा । इहापि मम योनिर्महद्ब्रह्मेति वक्ष्यते । अतः कर्म ब्रह्मोद्भवमिति प्रकृतिपरिणामरूपशरीरोद्भवं कर्मेत्युक्तं भवति । ब्रह्माक्षरसमुद्भवमित्यत्राक्षरशब्दनिर्दिष्टो जीवात्मा । अन्नपानादिना तृप्ताक्षराधिष्ठितं

---

गात्मविषयः, नामरूपमन्नं चेत्यनेन साक्षात्संबन्धायोगात् । अन्नत्वं चात्यन्तामुख्यं स्यात् । योनिशब्दनिर्देशान्ममेति परमात्मनः पृथङ्निर्देशाच्च मम योनिर्महद्ब्रह्मेत्यत्र ब्रह्मशब्दस्य प्रकृतिविषयत्वं सिद्धम् । अत इति । ब्रह्मशब्दस्य प्रकृतौ प्रयोगाच्छरीरस्य च तत्परिणामरूपत्वाद्द्रव्यार्जनादेः शरीरसाध्यत्वात्परमात्मनश्च जन्यत्वायोगाच्चेत्यर्थः । एवमत्रत्यब्रह्मशब्दस्य शरीरविषयत्वे सिद्धे तदासन्ने प्रत्यगात्मनि अक्षरशब्दो युक्त इत्यभिप्रायेणाऽऽह—ब्रह्माक्षरसमुद्भवमित्यत्रेति । जीवस्य चाक्षरशब्दवाच्यत्वं क्षरं प्रधानममृताक्षरं हरः, कूटस्थोऽक्षर इत्यादिसिद्धम् । नन्वेवमपि ब्रह्माक्षरसमुद्भवमित्ययुक्तम् । स्वशरीरस्य सर्वस्य स्वबुद्धिपूर्वत्वाभावात् । न चात्र चक्रत्वं दृश्यते । अन्नप्रभृतिशरीरपर्यन्तस्य कार्यकारणभावेऽपि शरीरहेतोरक्षरस्यान्नादिजन्यत्वाभावात् । न चान्नाद्भवन्ति भूतानीति जीवो निर्दिष्टः । तत्र भूतशब्दस्यान्नविकारशरीरमात्रविषयत्वात् । तत्राऽऽह—अन्नपानादिनेति । अयमभिप्रायः—न तावदिह शरीरमात्रमक्षरजन्यतया निर्दिष्टम् । किंतु कर्म ब्रह्मोद्भवमिति । अनेन कर्मसाधनभूतं तत्साधनत्वं च शरीरस्य प्रत्यगात्माधिष्ठितस्यैव तस्य चाधिष्ठातृत्वशक्तिरन्नपानादिजनिततृप्तिनिबन्धना, एवं च सति कर्मसाधनत्वविशिष्टशरीरे प्रत्यगात्माधिष्ठानहेतुकत्वादक्षरसमुद्भव- [ त्वं ] युक्तमेव । चक्रत्वं चोपपन्नम् । अक्षरस्यापि शरीराधिष्ठानेऽन्नपानादिसापेक्षत्वात् । नह्यवश्यमुत्पत्तावेवापेक्षा चक्रत्वे हेतुः । यद्वा कर्म बीजा( जीवा )धिष्ठितशरीरजन्यं जीवाधिष्ठितं शरीरं चान्नजन्यम् । अन्नाद्भवन्ति भूतानीति वचनात् । भूतशब्दश्चात्र भ्रामयन्सर्वभूतानीत्यादाविव सजीवशरीरपरः । अतोऽपि चक्रत्वमुपपन्नमिति । इमं च प्रकारमनन्तरं च वक्ष्यति एवमस्मिंश्चक्रेऽनुवर्तनीये पुरुषस्य शास्त्रवश्यस्य कर्तव्यांशानि-

शरीरं कर्मणे प्रभवति। कर्मसाधनभूतं शरीरमक्षरसमुद्भवम्। तस्मात्सर्वगतं ब्रह्म सर्वाधिकारिगतं शरीरं नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः॥ १५॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति॥ १६॥

एवं परमपुरुषेण प्रवर्तितमिदं चक्रम्। अन्नाद्भवन्ति भूतानीत्यत्र भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि पर्जन्यादन्नं यज्ञात्पर्जन्यो

---

प्कर्षायोच्यते—तस्मादिति। संकुचितस्य शरीरस्य सर्वव्याप्तत्वायोगादक्षरस्य च तदाधारस्य निर्दिष्टत्वात्तदवान्तरभेदसंग्रहपरः सर्वशब्द इत्यभिप्रायेणोक्तम्—सर्वाधिकारिगतमिति। न केवलं कर्मयोगाधिकारिणः शरीरं यज्ञसापेक्षं किंतु ज्ञानयोगाधिकारिणोऽपीत्यर्थः। यज्ञे प्रतिष्ठितमित्यत्राधिकरणत्वाद्ययोगादाह—यज्ञमूलमित्यर्थ इति॥ १५॥

प्रवर्तितमित्यस्य प्रवर्तकापेक्षायां सह यज्ञा इत्यादिना प्रकृतो देवान्भावयतेत्यादिना यज्ञेषु प्रजाः प्रवर्तयन् प्रजापतिरेवासौ भवितुमर्हतीत्यभिप्रायेणोक्तम्—परमपुरुषेणेति। लोकदृष्टिशास्त्रदृष्टिभ्यां सिद्धमन्याशक्यत्वमपरोक्षयतेवोक्तमिति अन्नादित्यादिना पुनरन्नादित्यन्तेन चक्रत्वं व्यज्यते। न तावदत्र भूतशब्देन भवनक्रियायोगिमात्रं निर्दिश्यते। महदादेः कार्यस्यान्नजन्यत्वाभावात्। अत एव न महाभूतानि। नापि वेतालादिसहपठितभूतजातिः। तत्कथनस्यात्रानुपयुक्तत्वात्। अतः परिशेषाद्भूतशब्दोऽत्र जीवविशिष्टाचित्परिणामविशेषपरः। अन्यजन्यत्वे विशेषाभावाच्च। नापि शरीरमात्रम्। केवलस्य शरीरस्यानुत्पत्तेः शरीरलक्षणाक्रान्तस्य सर्वस्यान्नजन्यत्वाभावाच्च। नापि केवलजीवः। तत्स्वरूपनित्यत्वादेरुक्तत्वात्। अतः परिशेषाद्भूतशब्दोऽत्र जीवविशिष्टाचित्परिणामविशेषपर इत्यभिप्रायेणोक्तम्—सजीवानि शरीराणीति। 'कर्म ब्रह्मोद्भवम्' 'ब्रह्माक्षरसमुद्भवम्'

यज्ञश्च कर्तृव्यापारानु(र)रूपात्कर्मणः कर्म च सजीवाच्छरीरात्सजीवं शरीरं च पुनरन्नादित्यन्योन्यकार्यकारणभावेन चक्रवत्परिवर्तमानमिह साधने वर्तमानो यः कर्मयोगाधिकारी ज्ञानयोगाधिकारी वा नानुवर्तयति न प्रवर्तयति यज्ञशिष्टेन देहधारणमकुर्वन्सोऽघायुर्भवति । अघारम्भायैवास्याऽऽयुरघपरिणतं चोभयरूपं वा सोऽघायुः । अत एवेन्द्रियारामो भवति नाऽऽत्मारामः इन्द्रियाण्येवास्योद्यानानि भवन्ति । यज्ञशि-

---

इत्याभ्यां फलितं समुच्चित्य चक्रत्वसिद्ध्यर्थं निर्दिशति—कर्म सजीवाच्छरीरादिति । अन्योन्यकार्यकारणभावेनेति । यथासंभवं साक्षात्परम्परया च सिद्धमुक्तम् । नहि साक्षात्सर्वेषामन्योन्यकार्यत्वं कारणत्वं वा । अन्योन्याश्रयग्रस्तत्वात् । यद्वा कस्यचित्कार्यत्वं कस्यचित्कारणत्वं च संकलय्यान्योन्यकार्यकारणभाव उक्तः । चक्रशब्दोपचारनिमित्तं व्यनक्ति—चक्रवत्परिवर्तमानमिति । इह लोके वर्तमानो यः पुरुष इति अधिकरणाधिकर्तव्ययोः सामान्यनिर्देशादपीह साधने वर्तमानो योऽधिकारिविशेष इति विशेषपरामर्श एवोचितः । इदंशब्दादेः संनिहितपरामर्शप्रावण्यात् । अनपेक्षिताभिधानादप्यपेक्षिताभिधानौचित्याच्चेति साधने वर्तमान इत्यादेर्भावः । अनुवर्तयतीत्यत्राकु(नु) मन्त्रत्वादिमात्रव्यवच्छेदार्थं पुरुषव्यापारप्राधान्यद्योतनार्थं च प्रवर्तयतीति व्याख्यातम् । श्लोके चानुशब्दप्रयोगः परमपुरुषप्रवर्तितानुप्रवर्तनरूपत्वात्प्रवाहरूपत्वाद्वा । अघायुरित्यादीनां त्रयाणां पृथक्पृथग्दोषत्वव्यक्त्यर्थं पूर्वपूर्वस्योत्तरोत्तरहेतुत्वज्ञापनार्थं च भवतीति पृथग्वाक्यकरणम् । अघकारणत्वादघकार्यत्वादुभयसंग्राहकाघसंबन्धित्वमात्राद्वा । अत्राघशब्देनाऽऽयुषो लक्षणेत्यभिप्रायेणाघारम्भायैवेत्यादिनिर्वाहत्रयमुक्तम् । अत एवेति । उक्तप्रकारेणाघायुष्ट्वादेवेत्यर्थः । इन्द्रियाराम इत्यस्याभिप्रेतं व्यवच्छेद्यमाह—नाऽऽत्माराम इति । विशेषणत्वादिसिद्धव्यवच्छेदाभिप्रायसिद्ध्यर्थं समासतदंशयोरर्थमाह—इन्द्रियाण्येवेति । इन्द्रियाणां कथमारामत्वमिति शङ्कायामेवं प्रवर्तितमित्यादिनेन्द्रियाराम इत्यन्तेन

---

१ ख. ग. घ. ङ. °ति सोऽघा° । २ ख. ग. घ. °स्योद्यानानि ।

प्रवर्धितदेहमनस्त्वेनोद्रिक्तरजस्तमस्कः आत्मावलोकनविमुखतया विषय-भोगैकरतिर्भवति। अतो ज्ञानयोगादौ यतमानोऽपि निष्फलप्रयत्न-तया मोघं पार्थ स जीवति ॥ १६ ॥

असाधनायत्तात्मदर्शनस्य मुक्तस्यैव महायज्ञादिवर्णाश्रमोचितकर्मा-नारम्भ इत्याह—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

यस्तु ज्ञानयोगकर्मयोगसाधननिरपेक्षः स्वत एवाऽऽत्मरतिरात्माभि-मुख आत्मनैव तृप्तो नान्नपानादिभिरात्मव्यतिरिक्तैरात्मन्येव संतुष्टो

---

फलितमाह—अयज्ञशिष्टेति। स्वत इति। विषयभोगैकमतित्वादि-त्यर्थः। स इति निर्देशस्य पूर्वव्याख्यातप्रकारयच्छब्दार्थविषय-त्वान्मोघशब्दस्य निष्फलप्रयत्नताविषयस्य प्रतिहन्तव्यप्रयत्न-साकाङ्क्षत्वाच्चाऽऽह—ज्ञानयोगादौ यतमानोऽपीति ॥ १६ ॥

एवं ज्ञानयोगाधिकारिणोऽपि कर्मकर्तव्यतया उक्तत्वात् तस्मा-दसक्त इत्यादिना वक्ष्यमाणत्वाच्च तन्मध्ये यस्त्वात्मरतिरित्यादि-श्लोकौ न ज्ञानयोगाद्यधिकारिविषयौ किंतु फलदशाविषयावि-त्यभिप्रायेणाऽऽह—असाधनायत्तेति। एतेनाभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेदित्याद्युक्तसंन्यासाश्रमिपरत्वेन पदव्याख्यानं निर-स्तम्। तस्यापि हि स्वाश्रमधर्मनिवृत्त्यभावात्। वर्णाश्रमविशि-ष्टस्यैव हि वर्णाश्रमधर्मारम्भः, न पुनर्वर्णाश्रमाधीननामरूपवि-निर्मुक्तस्येति मुक्तशब्दस्य भावः। यस्त्विति। तुशब्दः साधन-निष्ठव्यावृत्त्यर्थ इत्यभिप्रायेण—ज्ञानयोगकर्मयोगसाधननिरपेक्ष इत्यु-क्तम्। कथं तर्हि साधनाभावे साध्यसिद्धिरित्यत्राऽऽह—स्वत एवेति। प्रतिबन्धकं हि तन्निवृत्त्यर्थं (क निवृत्त्यर्थं हि तत्)। आत्मा-भिमुख्यं तु स्वतः प्राप्तमिति भावः। रतिशब्दोऽत्राऽऽभिमुख्य-विषयः, तृप्त्यादेः पृथङ्निर्देशादात्मरतिरेव, आत्मन्येवेति पूर्व-पदवदात्मतृप्त इत्यत्रापि अवधारणं विवक्षितमित्यभिप्रायेणाऽऽह—आत्मनैवेति। तृप्तितुष्टिशब्दौ हि पोषकभोग्यजन्यप्रीतिविषयतया प्रसिद्धावित्यभिप्रेत्य तत्तदुचितं व्यवच्छेद्यमाह-नान्नपानादिभिरिति।

नोद्यानस्रक्चन्दनगीतवादित्रनृत्यादौ धारणपोषणभोगादिकं सर्वमात्मैव यस्य तस्याऽऽत्मदर्शनाय कर्तव्यं न विद्यते स्वत एव सर्वदा दृष्टात्मस्वरूपत्वात् ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

अत एव तस्याऽऽत्मदर्शनाय कृतेन तत्साधनेन नार्थो न किंचित्प्रयोजनम् । अकृतेनाऽऽत्मदर्शनसाधनेन न कश्चिदनर्थः । असाधनायत्तात्मदर्शनत्वात् । स्वत एवाऽऽत्मव्यतिरिक्तसकलाचिद्वस्तुविमुखस्यास्य

---

नोद्यानेत्यादि च । आत्मरतिरित्यादेर्व्यवच्छेद्यत्रयं संकलय्य सूचयन्वाक्यार्थमाह—धारणेति । आदिशब्देन भोगस्थानादि विवक्षितम् । यस्य ज्ञानयोगनिष्ठस्यापि धारणादिकमन्नपानादिभिरेव तस्य कर्तव्यं विद्यत एवेति भावः । ननु तस्य कार्यं न विद्यत इत्ययुक्तम् । मुक्तस्यापि जक्षन्क्रीडन्नित्यादिकार्यश्रवणात् । न चात्र कार्यमिति न तस्य कार्यमितिवच्छरीरादि निर्दिश्यते । तन्निषेधस्येदानीमनुपयुक्तत्वात् । तदत्यन्तनिषेधस्य च द्वादशाहवदित्यादिसूत्रतद्विषयश्रुतिभिर्विरुद्धत्वादित्याशङ्क्योक्तम्—आत्मदर्शनाय कर्तव्यं न विद्यत इति । यस्त्वात्मरतिरित्यादिनाऽभिप्रेतं हेतुं व्यनक्ति—स्वत एवेति । स्वत एव सर्वदेत्युभाभ्यामुत्पत्त्यर्थं विनाशपरिहारार्थं च साधनापेक्षा नास्तीति ज्ञापितम् ॥ १७ ॥

अर्थशब्दस्यात्र प्रयोजनविषयतां वदंस्तस्य कार्यं न विद्यत इत्यनेन पौनरुक्त्यं परिहरति—न किंचित्प्रयोजनमिति । प्रयोजनाभावात्कर्तव्यं नास्तीत्युक्तं भवति । नाकृतेनेत्यत्रार्थो न निषेध्यः किंत्वकरणे प्रत्यवाय इत्यभिप्रायेणाऽऽह—न कश्चिदनर्थ इति । अर्थानर्थौ ह्यात्मदर्शनतदभावौ । तत्र पूर्वत्र सिद्धत्वान्न साध्यत्वमुत्तरस्य चाऽऽत्यन्तनिवृत्तत्वान्न निवर्तनीयत्वमित्यभिप्रायेणाऽऽह—असाधनायत्तात्मदर्शनत्वादिति । न चास्येत्यादिना प्रतिबन्धनिवृत्त्यर्थमपेक्षा नास्तीत्युच्यत इत्यभिप्रायेणाऽऽह—स्वत एवेत्यादि । अस्येति शब्द आत्मरतिरित्यादिनिर्दिष्टप्रकारपरामर्शीत्यभिप्रायेणोक्तम्—सकलाचिद्वस्तुविमुखस्येति ।

सर्वेषु प्रकृतिपरिणामविशेषेषु आकाशादिषु भूतेषु सकार्येषु न कश्चित्प्रयोजनतया साधनतया वा व्यपाश्रयः । अतस्तद्विमुखीकरणाय सारस्वारम्भः । स हि मुक्त एव ॥ १८ ॥

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥

यस्मादसाधनायत्तात्मदर्शनस्यैव साधनप्रवृत्तिर्यस्माच्च तत्साधने प्रवृत्तस्यापि सुशकत्वादप्रमादत्वात्तदन्तर्गतात्मयाथात्म्यानुसंधानत्वाच्च ज्ञानयोगिनोऽपि देहयात्रायाः कर्मानुवृत्त्यपेक्षत्वाच्च कर्मयोग एवाऽऽत्मदर्शननिवृत्तौ श्रेयांस्तस्मादसङ्गपूर्वकं कार्यमित्येव सततं यावदात्मप्राप्ति कर्मैव समाचर । असक्तः कार्यमिति वक्ष्यमाणाकर्तृत्वानुसंधानपूर्वकं च

सर्वशब्दस्याधारसंकोचेन स्थावान्तरभेदसमस्तप्राकृतभोग्यविषयतामाह—प्रकृतीत्यादिना सकार्येष्वित्यन्तेन । परिणामशब्देनात्र भूतशब्दस्य भवनक्रियायोगिपरत्वं दर्शितम् । अर्थव्यपाश्रय इत्यत्रार्थशब्दो भावप्रधान इति व्यनक्ति—प्रयोजनतया व्यपाश्रय इति । व्यपाश्रयः स्वीकरणम् । अर्थ एव व्यपाश्रयः स्वीकरणीयमिति चाभिप्रेतम् । एतेन प्रयोजननिमित्तो व्यपाश्रय इति परव्याख्या निरस्ता । न चास्येत्यादेर्हेतुत्वाभिप्रायेण वा मुक्त एव हि साधननिरपेक्ष इति श्लोकद्वयार्थनिगमनाभिप्रायेण वोच्यते—स हि मुक्त एवेति ॥ १८ ॥

तस्मादित्येतत्कर्तव्यतायां पूर्वोक्तसमस्तहेतुपरामर्शीत्यभिप्रायेणाऽऽह—यस्मादिति । असक्तः कार्यमित्युभयमपि कर्मणोऽनुष्ठानप्रकारपरमित्यभिप्रायेणोक्तम्—असङ्गपूर्वकं कार्यमित्येवेति । कार्यमित्येव न तु तत्कार्यं स्वर्गाद्यपेक्षयेति । सततमित्यत्र ज्ञानाधिकारे सत्यपि कर्मयोगस्यैवानुष्ठेयत्वमाह—यावदात्मप्राप्तीति । ज्ञानयोगव्यवधानमन्तरेणापि कर्मयोग एवाऽऽत्मप्राप्तिं साधयतीत्यसक्तो हीत्यादिनोच्यत इत्यभिप्रायेणाऽऽह—असक्त इति । कर्माऽऽचरन् न पुनः कर्माचरणानन्तरमन्यत्कृत्वेत्यर्थः ।

१ ख. ग. घ. °सुकार्या°ि ।

कर्माऽऽचरन्पुरुषः कर्मयोगेनै(णै)व परमाप्नोत्यात्मानं प्राप्नोती-त्यर्थः ॥ १९ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥

यतो ज्ञानयोगाधिकारिणोऽपि कर्मयोग एवाऽऽत्मदर्शने श्रेयानत एव हि जनकादयो राजर्षयो ज्ञानिनामग्रेसराः कर्मयोगेनै(णै)व संसिद्धिमास्थिता आत्मानं प्राप्तवन्तः । एवं प्रथमं मुमुक्षोर्ज्ञानयोगानर्हतया कर्मयोगाधिकारिणः कर्मयोग एव कार्य इत्युक्त्वा ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगात्कर्मयोग एव श्रेयानिति सहेतुकमुक्तम् । इदानीं शिष्टतया व्यपदेश्यस्य सर्वथा कर्मयोग एव कार्य इत्युच्यते—

---

कर्माऽऽचरन्परमाप्नोतीत्युक्तेऽर्थसिद्धं कर्मणः साधनत्वं व्यनक्ति—कर्मयोगेनै(णै)वेति । अत्र प्राप्यतया निर्दिष्टः परो देहातिरिक्तात्मप्रकरणत्वात् प्रकृतेः परो जीव इत्यभिप्रायेणाऽऽह—आत्मानं प्राप्नोतीत्यर्थ इति ॥ १९ ॥

कर्मयोगस्य ज्यायस्त्वं शिष्टानुष्ठानेनोदाह्रियते—कर्मणैवेति । हिशब्दसूचितं ज्ञानयोगाधिकारं दर्शयति—राजर्षयो ज्ञानिनामग्रेसरा इति । राजानो हि विस्तीर्णागाधमनसः, तत्रापि ऋषित्वादतीन्द्रियार्थद्रष्टारस्तत्राप्यात्मविदः, तत्रापि निसर्गगृहीतेन्द्रियत्वात्प्रकृष्टोत्पचिकसत्त्वादिना च तेषामग्रगण्या इत्यर्थः । कर्मणैवेत्येवकारो ज्ञानयोगशक्तस्यापि कर्मयोगानुपरतिपरः । संसिद्धशब्दस्य परमाप्नोतीत्युक्तनिदर्शनपरत्वादात्मानं प्राप्तवन्त इत्युक्तम् । एवं च सति कर्मणैवेति पूर्वप्रसक्तज्ञानयोगनैरपेक्ष्यपरमवधारणमप्युपपन्नं भवति । उत्तरसंगत्यर्थमुक्तं संग्रहेणोद्गृह्णाति—एवमिति । इदानीमित्यनेन लोकसंग्रहमित्यादिकं विद्वान्युक्तः समाचरन्नित्यन्तमवच्छिन्नम् । सर्वथेति । लोकसंरक्षणार्थं लोकोपप्लवजनितस्वपापेन ज्ञानयोगादपि प्रच्यावकेनोभयभ्रष्टत्वपरिहारार्थं चेत्यर्थः । लोकसंग्रहमपीत्यन्वये लोकसंग्रहस्याप्रधानता प्रतीयेत । पश्यन्नपीत्युक्ते तु कर्मकर्तव्यतायां पूर्वोक्तहेतुभ्यो लोकसंग्रहस्याऽऽधिक्यं द्योत्येतेत्ययमन्वय उक्तः । एवकारो

लोकसंग्रहं पश्यन्नपि कर्मैव कर्तुमर्हसि ॥ २० ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

श्रेष्ठः कृत्स्नशास्त्रज्ञातृतयाऽनुष्ठातृतया च प्रथितो यद्यदाचरति तत्तदेवाकृत्स्नविज्जनोऽप्याचरति । अनुष्ठीयमानमपि कर्म श्रेष्ठो यत्प्र-

---

ज्ञानयोगव्यवच्छेदाय कर्तुमेवार्हसीत्यन्वेतव्यमित्यभिप्रायेणोक्तम्—कर्मैव कर्तुमर्हसीति । यद्वा—लोकसंग्रहमेवेत्येवकारो लोकसंग्रहस्य नैरपेक्ष्यपरः । कर्मैवेति तु प्रकरणापन्नमुक्तम् । अर्हसीत्यनेन कर्मयोगैकानुष्ठानकारणमर्जुनस्य वैशिष्ट्यं द्योत्यते ॥ २० ॥

श्रेष्ठ इति । प्रशस्यस्य श्र इत्यनुशासनात् प्रशस्यतम इत्यर्थः । तच्चास्य प्रशस्यतमत्वमनुष्ठातॄणामनुविधेयानुष्ठानोपयोगीति मत्वा 'तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्' इति वक्ष्यमाणं चानुसंधाय कृत्स्नशास्त्रज्ञतयाऽनुष्ठातृतया च प्रथित-इत्युक्तम् । अकृत्स्नविदोऽनुष्ठातुः कृत्स्नवित्त्वेऽपि अननुष्ठातुरुभयाकारवत्त्वेऽपि अप्रसिद्धस्यानुविधेयानुष्ठानता नास्तीति तद्व्यवच्छेदाय पदत्रयम् । स यत्प्रमाणं कुरुत इत्यत्र स यच्छास्त्रं प्रमाणी करोति तदनुवर्तते लोक इत्यस्मिन्नर्थे तदनुवर्तनस्य तदर्थानुष्ठानरूपत्वादर्थतः पुनरुक्तिः स्यात् । कुरुत इति चेद्बुध्यत इत्यस्मिन्नर्थे नेतव्यम् 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' इति पूर्ववाक्ये च कर्तुमर्हसीत्येतावन्मात्रोक्तं श्रुतिस्मृत्यादिकमपि प्रमाणीकर्तुमर्हसीत्यनुपन्यस्तम्, येन तदर्थमिदमुच्येत । यद्यदाचरतीत्यङ्गिन्यनुष्ठेयस्वरूपे निर्दिष्टे तत्प्रकारे त्वपेक्षिते बुभुत्सा जायते । अतस्तदभिधानमेवोचितमित्यभिप्रायेण यत्प्रमाणं यदङ्गयुक्तमित्युक्तम् । प्रमाणशब्दोऽत्रापरोऽनुष्ठेयकर्मस्वरूपस्यावधिरङ्गान्येवात एव हि विध्यन्तरशब्देनेतिकर्तव्यतामुपचरति । यत्प्रमाणं यथाभूतमिति यादवप्रकाशभाष्यमप्येतत्परमेव । अस्मिन्नर्थे कुरुत इति शब्दस्वारस्यप्रदर्शनायानुतिष्ठतीत्युक्तम् ।

मार्ग यदङ्गयुक्तमनुतिष्ठति तदङ्गयुक्तमेवाकृत्स्नविल्लोकोऽनुतिष्ठति । अतो लोकरक्षार्थं शिष्टतया प्रथितेन श्रेष्ठेन स्ववर्णाश्रमोचितं कर्म सकलं सर्वदाऽनुष्ठेयम् । अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्रच्यावयेत् ॥ २१ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

न मे सर्वेश्वरस्यावाप्तसमस्तकामस्य सर्वज्ञस्य सत्यसंकल्पस्य त्रिषु

---

अन्यथाऽर्थान्तरे लक्षणा स्यादिति भावः । यत्प्रमाणमिति निर्दिष्टविशिष्टसिद्ध्यर्थं तच्छब्दार्थमाह—तदङ्गयुक्तमिति । ननु यच्छब्देनाङ्गे निर्दिष्टे कथं तच्छब्देनाङ्गविशिष्टपरामर्शः । इदं यदङ्गयुक्तमनुतिष्ठति तदाचरतीत्युक्ते तदङ्गमाचरतीत्येवशब्दवृत्तिः । अङ्गस्य चाङ्गिपृथग्भावायोगादर्थतस्तदङ्गविशिष्टमिति सिद्धम् । आभिप्रायिकौ करणाकरणयोरर्थौ प्रकाशयति—अत इति । लोकानुविधेयानुष्ठानत्वादित्यर्थः । सर्वदेति । यावदात्मप्राप्तीत्यर्थः । ननु स्वयं यदि ज्ञानयोगेन मुक्तो भवति किमस्य लोकेन संगृहीतेन वेत्यत्राऽऽह—अन्यथेति । ज्ञानयोगाधिकार्यहमिति कृत्वा कर्मयोगपरित्यागे सतीत्यर्थः । ज्ञानयोगादपीत्यपिशब्द उभयभ्रष्टतां द्योतयति ॥ २१ ॥

मयाऽपि हि निरपेक्षेणैव लोकक्षोभे निष्प्रत्यवायेनापि परमकारुणिकतया लोकरक्षार्थं कर्मैव क्रियते त्वया तु सापेक्षेण सप्रत्यवायेन किं पुनरित्युच्यते—न मे पार्थेत्यादि श्लोकत्रयेण। न म इति पदेन कर्मवश्यचेतनान्तरव्यावृत्तो यथावस्थितो हीश्वरः परामृश्यत इत्यभिप्रायेण विलक्षणनित्यसिद्धविभूतिगुणपौष्कल्यस्य व्यञ्जनानि सर्वेश्वरस्येत्यादिविशेषणान्युक्तानि । सर्वेश्वरस्येति । श्रुतिस्मृती हि ममैवाऽऽज्ञा सा चान्यैरनुवर्तनीया नहि मे नियन्त्रन्तरमस्ति यदधीनप्रत्यवायभयात्कुर्या(मि )ति भावः । आप्तकामस्येति । न च मे संकल्पमात्रासाध्यमितः पूर्वमभिलाषदशामात्रापन्नं प्रयोजनमस्ति यदुपायतया कर्म कर्तव्यमिति भावः ।

लोकेषु देवमनुष्यादिरूपेण स्वच्छन्दतो वर्तमानस्य किंचिदपि कर्तव्यमस्ति । यतोऽनवाप्तं कर्मणाऽवाप्तव्यं न किंचिदप्यस्ति । अथापि लोकरक्षार्थं कर्मण्येव वर्ते ॥ २२ ॥

यदि ह्यहं न वर्तेयं(य) जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

अहं सर्वेश्वरः सत्यसंकल्पः स्वसंकल्पकृतजगदुदयविभवलयलीलः

---

सर्वज्ञस्य सत्यसंकल्पस्येति । नापि मे कर्मवश्यानां देवतिर्यङ्मनुष्यतिरश्चां सजातीयतयाऽवतीर्णस्यापि तेषामिव ज्ञानसंकोच इच्छाप्रतिघातो वाऽस्ति, यन्निवृत्त्यर्थं कर्म कार्यमित्याशयः । त्रिषु लोकेष्वित्यत्रार्थसिद्धं विशेषणमध्याहृत्याऽऽह—देवमनुष्येति । उक्तं च भगवता पराशरेण—

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥ इति ।

'नानवाप्तमवाप्तव्यम्' इत्येतत्कर्तव्याभावेऽपेक्षितहेतुपरतया व्याख्याति—यत इति । उत्तरश्लोकपर्यालोचनासिद्धं प्रयोजनमाह—अथापि लोकरक्षाया इति । अथापीति चकारस्यार्थः । कर्मणि वर्त एवेत्युक्ते न कदाचिदपि कर्मणो विरम्य ज्ञानयोगमनुतिष्ठामीति फलितं तद्व्यञ्जनायोक्तम्—कर्मण्येव वर्त इति । यद्वा प्रकरणोचित्यादेवकारोऽत्र भिन्नक्रमः ॥ २२ ॥

कर्तव्यप्रयोजनयोरभावे किमर्थं तर्हि कर्म क्रियत इति शङ्कायामुच्यते—यदि ह्यहमिति । पूर्वश्लोकस्त्रिषु लोकेष्विति निर्देशात् सर्वावतारपरः । अयं तु मनुष्यादिदर्शनात् कृष्णावतारसाधारणः । तस्मादहमिति निर्देशस्येश्वरस्वभावसमुचितकृष्णावतारासाधारणाकारविषयतामाह—सर्वेश्वर इत्यादिभिः । सर्वेश्वरः सत्यसंकल्प इति पूर्ववत् । आप्तकामत्वाविरोधायोच्यते—स्वसंकल्पकृतेति । स्वसंकल्पमात्रेण सर्वं नियन्तुं शक्तोऽपि ज्ञानप्रदानादिद्वारा प्रव-

स्वच्छन्दतो जगदुपकृतये मर्त्यो जातोऽपि मनुष्येषु शिष्टजनाग्रेसरवसुदेवगृहेऽवतीर्णस्तत्कुलोचिते कर्मण्यतन्द्रितः सर्वदा यदि न वर्तेय मम शिष्टजनाग्रेसरवसुदेवसूनोर्वर्त्माकृत्स्नविदः शिष्टाः सर्वप्रकारेणायमेव धर्म इत्यनुवर्तन्ते । ते च स्वकर्तव्याननुष्ठानेनाकरणे प्रत्यवायेन चाऽऽत्मानमनुपलभ्य निरयगामिणो भवेयुः ॥ २३ ॥

---

तेनार्थे जगदुपकृतिमर्त्यो जातोऽपीत्युक्तम् । अन्यथा भूतावेशन्यायेन प्रवर्तितानां शास्त्रवश्यताभावात्तत्तदनुष्ठानाधीनं फलं न स्यात् । छन्दतः संप्रवर्तेत इत्याद्यनुसारेणाऽऽह—स्वच्छन्दत इति । न तु कर्मणेत्यर्थः । कर्मफलभोक्तृत्वं व्युदस्यता जगदुपकृतिमर्त्य इत्यनेन ‘ जगदुपकृतिमर्त्यं को विजेतुं समर्थः’ इति पुराणोक्तिः स्मारिता । अपिशब्देनाकर्मवश्यतावतारोऽपीति अभिप्रेतम् । ‘ अजायमानो बहुधा विजायते ’ ‘ नाकारणात्कारणाद्वा ’ ‘ इच्छागृहीताभिमतोरुदेहः ’ इत्यादिकमत्रानुसंहितम् । अनुविधेयानुष्ठातृत्वसिद्ध्यर्थं हिशब्दद्योतितप्रसिद्धिप्रकारविवरणार्थं चोक्तम्—मनुष्येष्वित्यादि । नन्वयमीश्वरः कस्मिन्कर्मणि वर्तते । न ह्यस्य परमार्थतो वर्णा आश्रमाः सामान्यधर्मयोग्यं मनुष्यत्वादिकं वाऽस्ति । येनाकर्मवश्य इच्छया कर्म कुर्वाणोऽपि तत्तदुदितकर्मोपाददीतेति शङ्कायां कुलोचितं(त)मतिः क्षात्रं धर्मं स्वं बहु मन्यत इत्याद्यनुसारेणाऽऽह—तत्कुलोचित इति । अयं भावः—सत्यमस्य परमार्थतो वर्णाश्रमादिकं नास्ति तथाऽपि तत्तदुचितकर्मकरणायाप्राकृतमेव विग्रहं तत्तज्जातीयसन्निवेशं परिणमयति । तत्र तत्तज्जातीयत्वबुद्ध्या पुरुषाणामनुविधेयानुष्ठानं स्यादित्यतन्द्रितोऽनुदासीनः सर्वदेति जातुशब्दार्थः । जात्वपीति हि तदभिप्रायः । अनुविधेयत्वोपयुक्तप्रकारविवक्षां मम त्वत्रापि दर्शयति—मम शिष्टेति । सर्वश इति प्रमाणपौष्कल्यपरं सेतिकर्तव्यताकत्वपरं वेत्यभिप्रायेणाऽऽह—सर्वप्रकारेणेति । अनुवर्तन्ते । अनुवर्तेरन्नित्यर्थः । प्रसङ्गरूपस्यापि सिद्धवत्काराभिप्रायेण वर्तमानव्यपदेशः । वक्ष्यमाणप्रसङ्गार्थं मनुष्याणां पूर्वसिद्धस्यानुत्पत्तिमात्राभिप्रायेण वाऽनिष्टप्रसङ्गत्वपरत्वायाऽऽह—ते चेति ॥ २३ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

अहं कुलोचितं कर्म न चेत्कुर्यामेवमेव सर्वे शिष्टलोका मदाचारायत्तधर्मनिश्चया अकरणादेवोत्सीदेयुर्नष्टा भवेयुः । शास्त्रीयाचाराणामपालनात्सर्वेषां *शिष्टानां संकरस्य च कर्ता स्याम् । अत एवेमाः सर्वाः प्रजा उपहन्याम् । एवमेव त्वमपि शिष्टजनाग्रेसरपाण्डुतनयो युधिष्ठिरानुजोऽर्जुनः सञ्शिष्टतया यदि ज्ञाननिष्ठायामधिकरोषि ततस्त्वदाचारानुवर्तिनोऽकृत्स्नविदः शिष्टाश्च मुमुक्षवः स्वाधिकारमजानन्तः कर्मनिष्ठाया

---

शास्त्रीयमेवानुसृत्य तदाकरणं नाऽऽद्रियेरन्नित्यत्राऽऽह—उत्सीदेयुरिति । लोकशब्दस्याऽऽचारपरजनविषयतामौचित्यसिद्धामभिप्रेत्योक्तम्—शिष्टलोका इति । इम इतीदंशब्दबहुवचनयोः सामर्थ्यात्सर्व इत्युक्तम् । सर्वेषां शास्त्रार्थानां सर्वैर्निश्चेतुमशक्यत्वाच्छिष्टाचारदत्तदृष्टीनामुक्ताया अनुवृत्तेः प्रकारमालोच्योक्तम्—मदाचारेत्यादि । विशरणाद्यर्थासंभवात्पुरुषार्थहानापुरुषार्थप्राप्तिरूपो नाश इहोत्साद इत्याह—नष्टा भवेयुरिति । असन्नेवेत्यादिवदेतत् । अकरणस्योत्सादहेतुत्वेऽवान्तरव्यापारः संकरः । स च ब्राह्मणादिधर्मस्य युद्धनिवृत्त्यादेः क्षत्रियादिभिरनुष्ठानमपहिः ( हतिः ) पश्चादपि कर्मानर्हता । स्वात्मनि दृष्टान्तभूते दर्शितमर्थं दार्ष्टान्तिकेऽपि अभिमतं व्यञ्जयति—एवमेव त्वमिति । न मे पार्थेति पार्थशब्दसंबुद्ध्यभिप्रेतमनुविधेयत्वोपयोग्याकारत्रयमाह—शिष्टेति । युधिष्ठिरशब्दोपादानं युद्धप्रोत्साहनाय । रणयज्ञाख्यक्षत्रधर्मनिष्ठताद्योतनार्थं किं तत्र पित्रादिप्रतिसंबन्ध्यन्तरेण स्वयमेव हि शिष्टजनाग्रेसरतयोर्वशीविराटतनयादिवृत्तान्तैः प्रसिद्धस्त्वमित्यभिप्रायेणाऽऽह—अर्जुनः सन्निति । धर्मो हि शिष्टेनानुष्ठेयः । ज्ञानयोगश्च परमधर्मः । ततश्च तदनुवर्तनं लोकस्य मोक्षायैव स्यादिति लोकरक्षैव भवेदिति शङ्कायामुक्तम्—स्वाधिकारमजानन्त इति । तद्वच(दन)धिकारिणां तत्रानुप्रवेशेनोभयभ्रष्टता स्यादिति भावः । लोकसंग्रहमित्यादिनोक्तमुपसंहरति—

---

* शिष्टकुलानामित्यर्थः ।

मनधिकुर्वन्तो विनश्येयुः । अतोऽत्यन्तशिष्टतया व्यपदेश्येन विदुषा कर्मैव कर्तव्यम् ॥ २४ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

अविद्वांस आत्मन्यकृत्स्नविदः कर्मणि सक्ताः कर्मण्यवर्जनीयसंबन्धा आत्मन्यकृत्स्नवित्तया तदभ्यासरूपज्ञानयोगेऽनधिकृताः कर्मयोगाधिकारिणः कर्मयोगमेव यथाऽऽत्मदर्शनाय कुर्वते तथाऽऽत्मनि कृत्स्नवित्तया कर्मण्यसक्तो ज्ञानयोगाधिकारयोग्योऽपि व्यपदेश्यः शिष्टो लोकरक्षणार्थं स्वाचारेण शिष्टलोकानां धर्मनिश्चयं चिकीर्षुः कर्मयोगमेव कुर्यात् ॥ २५ ॥

---

अत इति ॥ २४ ॥

लोकस्य कर्मयोगज्ञानयोगयोरधिकारानधिकारप्रकारो विदुषस्तु स्वाधिकारतिरस्कारेण तदधिकारानुरूपाचरणलोकसंग्रहप्रकारश्चोच्यते—सक्ता इत्यादिश्लोकद्वयेन । अवेदनं प्रस्तुतविषयमिति ज्ञापनायोक्तम्—आत्मन्यकृत्स्नविद इति । एवमुत्तरत्र विद्वानज्ञानामिति शब्दयोरपि द्रष्टव्यम् । अत्यन्तानात्मज्ञताव्युदासायाकृत्स्नशब्दः । पूर्वोक्तं प्रकृतिसंबन्धेन कर्मणोऽवर्जनीयत्वं सक्ता इत्यनेन विवक्षितमित्यभिप्रायेणाऽऽह—कर्मण्यवर्जनीयसंबन्धा इति । अविद्वांसः कर्मणि सक्ता इत्युभयं न सांसारिककर्मतत्परपुरुषविषयम् । तथा सति कर्मयोगमपि परित्यज्य सांसारिककर्माण्येव विदुषामप्यनुष्ठेयानि स्युः । तस्माज्ज्ञानयोगानधिकारश्च ताभ्यां सूच्यत इत्यभिप्रायेणाऽऽत्मन्यकृत्स्नवित्तयेत्यादिकमुक्तम् । एवमुत्तरत्राज्ञानां कर्मसङ्गिनाम्, इत्यत्रापि ग्राह्यम् । यथा कुर्वन्ति तथा कुर्यादित्येतदपि न केवलं दृष्टान्तदार्ष्टान्तिकविषयमपि तु येन प्रकारेण स्वानुष्ठानं दृष्ट्वाऽन्ये कर्म कुर्युस्तेन प्रकारेण विद्वानाचरेदित्येतदभिप्रायम् । तथा सति हि चिकीर्षुर्लोकसंग्रहमित्यपि संगतं भवतीत्यभिप्रयन्वाक्यार्थमाह—आत्मनीत्यादिना कुर्यादित्यन्तेन । विद्वान्सक्त इत्युभाभ्यां फलितमुक्तम्—ज्ञानयोगाधिकारयोग्योऽपीति । संग्रहशब्देन लोकरञ्जनादिभ्रमव्युदासायाऽऽह—धर्मनिश्चयमिति । लोकसंग्रहणमेकीकृत्य स्वीकरणं स्वानुष्ठाने समानाभिप्रायतया सयूथ्यतापादनमित्यर्थः ॥ २५ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥

अज्ञानात्मन्यकृत्स्नवित्तया ज्ञानयोगोपादानाशक्तानां मुमुक्षूणां कर्मसङ्गिनामनादिकर्मवासनया कर्मण्येव नियतत्वेन कर्मयोगाधिकारिणां कर्मयोगादन्यदात्मावलोकनसाधनमस्तीति न बुद्धिभेदं जनयेत् । किं तर्हि आत्मनि कृत्स्नवित्तया ज्ञानयोगशक्तोऽपि पूर्वोक्तरीत्या कर्मयोग एव ज्ञानयोगनिरपेक्ष आत्मावलोकनसाधनमिति बुद्ध्या युक्तः कर्मैवाऽऽचरन्

जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥

अज्ञानात्मन्यकृत्स्नवित्तया ज्ञानयोगोपादानाशक्तानां मुमुक्षूणां कर्मसङ्गिनामनादिकर्मवासनया कर्मण्येव नियतत्वेन कर्मयोगाधिकारिणां कर्मयोगादन्यदात्मावलोकनसाधनमस्तीति न बुद्धिभेदं जनयेत् । किं तर्हि

कारविमूढात्माऽहं कर्तेति मन्यते। अहंकारेण विमूढ आत्मा यस्यासा-वहंकारविमूढात्मा। अहंकारो नामानहमर्थे प्रकृतावहमित्यभिमानस्तेनाज्ञा-तात्मस्वरूपो गुणकर्मस्वहं कर्तेति मन्यत इत्यर्थः ॥ २७ ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।

गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

गुणकर्मविभागयोः सत्त्वादिगुणविभागे तत्तत्कर्मविभागे च तत्त्व-वित्, गुणाः सत्त्वादयः स्वगुणेषु स्वेषु कार्येषु वर्तन्त इति मत्वा गुण-कर्मस्वहं कर्तेति न सज्जते ॥ २८ ॥

---

स्यादिति तत्परिहाराय कर्मसु कर्तृत्वाहंत्वोक्तिभ्रमव्युदासाय च कर्माणि प्रतीत्युक्तम्। तृजन्तत्वविवक्षायां त्वियं फलितोक्तिः। अहंकारविमूढात्मेति समासांशत्रयस्य बह्वर्थपरस्यात्रार्थं विवक्षन् विगृह्णाति—अहंकारेणेति। नात्राहंभावमात्रमुच्यते। तस्याऽऽत्म-स्वभावान्तर्गतत्वात्। नाप्यहंकाराख्यमचिद्द्रव्यम्। तस्यापि देहात्मभ्रमं द्वारीकृत्य कार्यकरत्वे सत्यव्यवहितस्यैव वक्तुमुचित-त्वात्। नापि गर्वः। उत्कृष्टपरिभावादिहेतुत्वेनानिर्देशात्। अतोऽ-हंकार इति देहात्मभ्रम एवात्र विवक्षित इत्यभिप्रायेणाऽऽह—अहं-कारो नामानहमर्थे प्रकृतावहमित्यभिमान इति। तेनाहंकारशब्दस्या-भूततद्भावे च्विप्रत्ययेन व्युत्पत्तिर्दर्शिता। अज्ञातस्वरूप इति। विमूढ आत्मा स्वरूपं यस्य स विमूढात्मा। दिशो विमुह्येयुरित्या-दिवन्मूढशब्दोऽत्र मोहविषयसमानाधिकरण इति भावः ॥ २७ ॥

गुणकर्मविभागयोरित्यत्रोपसर्जनान्वयिषष्ठीत्वादपि विषयस-प्तमीत्वमुचितमिति मत्वोक्तम्—सत्त्वादिगुणविभागे तत्तत्कर्मविभागे चेति। विभागशब्दो द्वंद्वात्परत्वात्प्रत्येकमन्वितः। गुणानां साक्षा-द्गुणेषु वृत्त्यभावात् परोक्तप्रक्रिययो(ये)द्रि(न्द्रि)यते(त)द्विषयादि-विवक्षायां पदद्वयोपचारात्सप्तम्यन्तो गुणशब्दो गुणकार्येष्वौ-पचारिक इत्यभिप्रायेणोक्तम्—स्वगुणेषु स्वेषु कार्येष्विति। गुणका-र्याणि च विभजिष्यन्ते। यद्वा कारणस्य प्राधान्यात् कार्यस्य च तदपेक्षया गुणत्वादेवमुक्तम् ॥ २८ ॥

प्रकृतेर्गुणेति श्लोके तावन्न निषिद्धादिसङ्गो विवक्षितः। इदानीमविचाल्यत्वानुपपत्तेः। अतः पुरुषार्थोपायेषु केषुचित्सङ्गो

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥

अकृत्स्नविदः स्वात्मदर्शनाय प्रवृत्ताः प्रकृतिसंसृष्टतया प्रकृतेर्गुणैर्यथावस्थितात्मनि संमूढा गुणकर्मसु क्रियास्वेव सज्जन्ते न तद्विविक्तात्मस्वरूपे । अतस्ते ज्ञानयोगाय न प्रभवन्तीति कर्मयोग एव तेषामधिकारः । एवंभूतांस्तान्मन्दानकृत्स्नविदः कृत्स्नवित्स्वयं ज्ञानयोगस्थो न विचालयेत् । ते किल मन्दाः श्रेष्ठजनाचारानुवर्तिनः कर्मयोगोवस्थितमेनं दृष्ट्वा कर्मयोगान्न प्रचलितमनसो भवेयुरतः श्रेष्ठः स्वयमपि कर्मयोगे तिष्ठन्नात्मयाथात्म्यज्ञानेनाऽऽत्मनोऽकर्तृत्वमनुसंदधानः कर्मयोग एवाऽऽत्मावलोकने निरपेक्षसाधनमिति दर्शयित्वा तानकृत्स्नविदो मन्दाञ्जोषयेदित्यर्थः ॥ २९ ॥

---

वक्तव्यः । प्रस्तुतश्च पुरुषार्थोऽत्राऽऽत्मदर्शनम् । तत्र चाकृत्स्नविदधिकारे कस्मिंश्चित्तदुपाये सङ्गो विवक्षित इत्यभिप्रायेण—अकृत्स्नविदस्स्वात्मदर्शनाय प्रवृत्ता इत्याद्युक्तम् । अहंकारविमूढात्मेत्यात्मविषयो हि संमोहः प्रकृतः । अतो गुणैः संमूढा इत्येव समासः । उपसर्जनस्यापि च गुणशब्दस्य देवदत्तस्य गुरुकुलमित्यादिष्विव प्रकृतेरित्यनेनान्वय उपपन्न एवेत्यभिप्रायेणोक्तम्—प्रकृतेर्गुणैर्यथावस्थितात्मनि संमूढा इति । गुणकर्मस्विति । अन्यैकर्मयोगपर्यवसानायोक्तम्—क्रियास्वेवेति । परिसंख्यापरत्वव्यक्त्यर्थमेवकारार्थः (रः) । तत्सूचितं व्यवच्छेद्यमाह—न तदिति । गुणकर्मसङ्गोक्तिफलितमविचालनहेतुमाह—अतस्त इति । न प्रभवन्ति न समर्था इत्यर्थः । तेषां प्रतिषेध्यविचालनप्रसङ्गाय मन्दानित्युक्तम् । अभिप्रायेण विचलनप्रक्रियामाह—ते किल मन्दा इति । स्वयं मन्दत्वाच्छ्रेष्ठजनाचारानुवर्तिनः । मन्दत्वं चात्र स्वयमाचारनिर्णयापाटवं विवक्षितम् । अकृत्स्नवित्त्वफलितं विचालनीयत्वकारणं नु(त्व)धैर्यलक्षणमल्पत्वं वा 'मूढाल्पापटुनिर्भाग्या मन्दाः' इति नैघण्टुकाः । न विचालयेदित्येतत्पूर्वोक्तजोषणशेषमिति दर्शयति—अत इति ॥ २९ ॥

---

१ क. °गादुत्थित° । २ क. °गात्मच° ।

ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगादस्यैव कर्मयोगस्य ज्यायस्त्वं पूर्वमेवोक्तम् । अतो व्यपदेश्यो लोकसंग्रहाय कर्मैव कुर्यात् । प्रकृतिविविक्तात्मस्वभावनिरूपणेन गुणेषु कर्तृत्वमारोप्य कर्मानुष्ठानप्रकार उक्तः । गुणेषु कर्तृत्वानुसंधानं चेदमेव—आत्मनो न स्वरूपप्रयुक्तमिदं कर्तृत्वमपि तु गुणसंबन्धकृतमिति प्राप्ताप्राप्तविवेकेन गुणकृतमित्यनुसंधानम् । इदानीमात्मनां परमपुरुषशरीरतया तन्नियम्यत्वस्वरूपनिरूपणेन भगवति

ज्ञानयोगाधिकारिणः कर्मयोगे स्थितिर्निकृष्टाधिकारपरिग्रहः स्यादित्याशङ्क्याऽऽह—ज्ञानयोगाधिकारिणोऽपीति । स्वकार्यमात्रसमीक्षयाऽपि कर्तव्यं किमुत परार्थसमुच्चिते स्वार्थत्व इत्यभिप्रायेणाऽऽह—अत इति । उत्तरश्लोकमवतारयितुमुक्तांशमुद्गृह्णाति—प्रकृतीति । वक्ष्यमाणश्लोकप्रकारेण तु सर्वेश्वरे सर्वकर्मसंन्यासः कार्यः । मध्ये गुणेषु कर्तृत्वानुसंधानकथनं तावताऽपि देहात्मविवेकादिकं सिध्यतीत्यभिप्रायेणेति भावः । आरोप्यानुसंधायेत्यर्थः । एतां दशामवलम्ब्य पल्लवग्राहिणां कापिलादीनां मतं समुत्थितमिति तन्मतव्यावर्तनायाचेतनानां कथं ज्ञानचिकीर्षाप्रयत्नलक्षणं कर्तृत्वमिति शङ्काव्युदासाय चाऽऽह—गुणेष्विति । इदमिति । वक्ष्यमाणम् । इदं कर्तृत्वमिति । पुण्यपापादिकर्तृत्वमित्यर्थः । स्वाभाविकं हि कर्तृत्वं मुक्तावस्थायामपि नापैति तस्य गुणसंपर्ककृतत्वाभावात् । प्राप्ताप्राप्तविवेकेनेत्यन्वयव्यतिरेकाभ्यां युक्तायुक्तनिश्चयेन वेत्यर्थः । अत्राकर्तृत्वोक्तेरकरणशेषत्वं पूर्वापरविरुद्धम् । अनुसंधानशेषार्थत्वं तु पूर्वापरसंगतमित्यभिप्रायेणानुसंधानोक्तिः । एतेन ‘ कर्ता शास्त्रार्थवत्त्वात् ’ [ ब्र० सू० २ । ३ । ३३ ] । इत्यधिकरणार्थः सूचितः । अथ तदनन्तरस्य ‘ परात्तु तच्छ्रुतेः ’ [ ब्र० सू० २ । ३ । ४० ] इत्यधिकरणस्यार्थपरोऽयमित्यभिप्रायेणोत्तरश्लोकमवतारयति—इदानीमिति । नि*याम्यतायाः स्वरूपत्वोक्तिः स्वरूपनिरूपकत्वात् । भगवतीत्यादिपदत्रयेण मयीत्यभिप्रेतस्योक्तिः । भगवतीति । नियन्तृत्वोपास्यत्वफलप्रदत्वाद्युपयुक्तकल्याणगुणजातवति हेयप्रत्यनीके चेति भावः ।

* नियाम्येति । णेरदुपधादित्यनेनैव सिद्धे गदमदेति सूत्रे यमिग्रहणस्य नियमार्थत्वेन सोपसर्गाद्यमेर्यत्प्रत्ययो न भवतीति ण्यति रूपसिद्धिः । अत एवाप्प्रत्ययान्तान्नियमशब्दात्तत्र साधुरिति यतं कृत्वा नियम्या इत्यादीनामुपपत्तिरुक्तेति भावः ।

१ क. ख. ग. घ. °न्नियाम्य° ।

पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते—

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

मयि सर्वेश्वरे सर्वभूतान्तरात्मभूते सर्वाणि कर्माणि अध्यात्मचेतसा संन्यस्य निराशीर्निर्ममो विगतज्वरो युद्धादिकं सर्वं चोदितं कर्म कुरुष्व। आत्मनि यच्चेतस्तदध्यात्मचेतस्तेनाऽऽत्मस्वरूपविषयेण श्रुतिशतसिद्धेन ज्ञानेनेत्यर्थः । ' अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा । अन्तः प्रविष्टं कर्तारमेतम् ' । ' य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद ' । 'यस्याऽऽत्मा शरीरम् ।' 'य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' इत्येवमाद्याः श्रुतयः परमपुरुषप्रवर्त्यं तच्छरीरभूतमेतमात्मानं परमपुरुषं च तदुचिते प्रवर्तयितारमाचक्षते । स्मृतयश्च—' प्रशासितारं

---

पुरुषोत्तम इति । नियमनार्थानुप्रवेशादिनाऽप्यस्पृष्टहेयप्रसक्तौ 'उत्तमः पुरुषस्त्वन्यः ' इति वक्ष्यमाणप्रकारवैलक्षण्यप्रतीतिति भावः । सर्वात्मभूते गुणकृतं चेति । त्रिगुणस्याचिद्द्रव्यस्यापि सर्वात्मभूतः स एव हि नियन्तेति भावः । एतेन 'असक्तया लोकरक्षायै गुणेष्वारोप्य कर्तृताम् । सर्वेश्वरे वाऽन्यस्योक्ता तृतीये कर्मकार्यता ' इति तृतीयाध्यायसंग्रहश्लोके तुल्यविकल्पो नाभिमत इत्यपि सूचितं भवति । मयीत्यनेनाभिप्रेते सर्वेश्वरत्वे हेतुतया सर्वभूतान्तरात्मभूतत्वोक्तिः, ईश्वरः सर्वभूतानाम्, इत्यादि वक्ष्यमाणं चानेन ख्यापितम् । सर्वाणीति स्वकृतानि गुणकृतानि चेत्यर्थः । युध्यस्वेत्येतच्छास्त्रीयोपलक्षणमित्यभिप्रायेणोक्तम्—युद्धादिकमिति । आत्मनीति । अध्यात्मेति सप्तम्यर्थे समास इत्यर्थः । अत्र चेतःशब्दस्य श्रुतिशतसिद्धतत्त्वानुसंधानरूपज्ञानगोचरतां व्यनक्ति—आत्मस्वरूपेति । श्रुतिशतसिद्धप्रकारं दर्शयति–अन्तरिति । अन्तःप्रविष्टत्वशासितृत्वाभ्यां नृपादिगगनादिव्यावर्तकाभ्यां सर्वात्मत्वसिद्धिः । कर्तारमिति । जीवव्यापारेषु प्रयोजककर्तारमित्यर्थः । यद्वा— प्रेरणक्रियायाः कर्तारमित्यर्थः । तदुचिते प्रवर्तयितारमिति । उपात्तश्रुतीनामैदंपर्यदृढीकरणाय मन्वाद्युपबृंहणानुग्रहमाह—स्मृतयश्चेति । एतस्मिन्नपि शास्त्रेऽभ्यासलिङ्गायास्यैवार्थस्य वक्ष्यमाण-

सर्वेषाम् ' इत्याद्याः । ' सर्वस्य चाहं हृदि संनिविष्टः ' ।

' ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ '

इति वक्ष्यते । अतो मच्छरीरतया मत्प्रवर्त्यात्मस्वरूपानुसंधानेन सर्वाणि कर्माणि मयैव क्रियमाणानीति मयि परमपुरुषे संन्यस्य तानि च केवलं मदाराधनानीति कृत्वा तत्फले निराशीस्तत एव तत्र कर्मणि ममतारहितो भूत्वा विगतज्वरो युद्धादिकं कुरुष्व । स्वकीयेनाऽऽत्मना कर्त्रा स्वकीयैरेव करणैः स्वाराधनैकप्रयोजनाय परमपुरुषः

---

तामाह—सर्वस्य चेति । मयि सर्वाणीत्यस्याभिप्रायव्यञ्जनाय पार्थसारथेरीश्वरस्य प्रत्यक्पराञ्चि(ङ्चि)दैशयोरीश्वरैकविषयत्वं दर्शयितुं वचनद्वयोपादानम् । एवमर्थस्वरूपमुपपाद्य तज्ज्ञानस्य कर्तृत्वसंन्यासहेतुतां संन्यस्य निराशीर्निर्मम इति त्रयाणां पदानां कर्तृत्वत्यागफलत्यागस्वकीयतासङ्गत्यागविषयतामुत्तरोत्तरस्य च पूर्वपूर्वहेतुतां पाठक्रमसूचितां प्रकाशयति—अत इति । अस्यार्थस्य श्रुतिस्मृत्यन्तरादिसिद्धत्वादित्यर्थः । मयैव क्रियमाणानीति । भृत्यप्रवर्तकेन राज्ञेव सद्वारकमद्वारकं चेति भावः । ऋत्विज इव परस्य कर्तृत्वेऽपि स्वस्य फलाभिसंधिः स्यादिति तन्निरासाय निराशीरित्युक्तमित्यभिप्रायेणाऽऽह—तानि चेति । तत एवेति । फलद्वारा हि कर्मणि ममता मदभिलषितसाधनत्वान्मदर्थं कर्मेति कर्मण्यैश्वर्यबोधो ह्यधिकार इति भावः । ननु यदीश्वरे कर्तृत्वं संन्यस्तं कथं तर्हि युध्यस्वेति जीवः कर्तृतया निर्दिश्यते । यदि चासौ निराशीः कथं परमपुरुषाराधनरूपेऽपि कर्मणि प्रवर्तेत । यदि च निर्ममः स कथं ममेदं कर्मेति बुध्यमानः कर्म कुर्यात् । यदि च स्वव्यापारं नानुसंधत्ते तदा त्यागरूपव्यापारमपि न मन्येत । ततश्च विगतज्वर इत्यनुपपन्नमित्याशङ्क्याऽऽह—स्वकीयेनाऽऽत्मना कर्त्रेति । स्वशेषभूतेन जीवेन प्रयोज्यकर्त्रेत्यर्थः । स्वकीयैश्चोपकरणैरिति । यथाऽसौ जीवः परशेषभूतस्तथा तस्य स्वशेषतया प्रागभिमतं हविरादिकमपि परशेषभूतमिति कैमुतिकन्यायसिद्धमिति भावः । स्वाराधनैकप्रयोजनायेति । शेषस्य शेषिण्य-

सर्वेश्वरः सर्वशेषी स्वयमेव स्वकर्माणि कारयतीत्यनुसंधाय कर्मसु ममतारहितः प्राचीनेनानादिकालप्रवृत्तानन्तपापसंचयेन कथमहं भवि-ष्यामीत्येवंभूतान्तर्ज्वरद्विमुक्तः परमपुरुष एव कर्मभिराराधितो बन्धान्मो-चयतीति स्मरन्सुखेन कर्मयोगमेव कुरुष्वेत्यर्थः ॥ ३० ॥

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं विश्वस्येत्यादिश्रुतिसिद्धं हि सर्वेश्वरत्वं सर्वशेषित्वमीश्वरत्वं नियन्तृत्वं शेषित्वं पतित्वम्। अयमेव साक्षादुपनिषत्सारभूतोऽर्थ इत्याह—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

---

तिशयाधानमेव प्रयोजनमिति भावः। आह च वेदार्थसंग्रहे—पर-गतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः परः शेषीति। स्वकीयेनेत्यादौ प्रमाणसूचनाय सर्वशेषीत्याद्युक्तम्। स्वयमेवेत्यादि। आराध्यभूत एवाऽऽराधनं कारयतीति भावः। एवकारेण प्रवर्तकान्तरं च व्युदस्तम्। कारयतीति। सर्वेश्वरः सन् स्वेष्टं सर्वं स्वयमेव कर्तुं शक्तोऽपि स्वशेषभूतजीवानां शास्त्रवश्यत्व-तत्फलभोक्तृत्वादिसिद्ध्यर्थं तान्कर्तॄन्कारयतीति भावः। प्राकरणिकं प्रतिषेध्यज्वरविशेषप्रसङ्गं दर्शयति—प्राचीनेत्यादिना। अस्तु श्रुतिसिद्धमीश्वरत्वं कारयितृत्वस्य किमायातमिति भावः। ईश्वरत्वं नियन्तृत्वमिति। चेतनगतं शेषित्वं पतित्वमेवेति भावः। यद्वा श्रुतिभाष्यपठितयोः शेषित्वेश्वरत्वयोः को भेद इति शङ्काऽ-पाक्रियते—ईश्वरत्वं नियन्तृत्वमित्यादिना ॥ ३० ॥

ये मे मतमिति श्लोके मतमित्यौपनिषदपुरुषस्य सिद्धान्ताभि-मानप्रदर्शनान्मोक्षसाधनत्वोपदेशमात्रस्य कृतकरत्वाच्च तत्प्राश-स्त्यपरोऽयम्। अयमेव साक्षादिति। ज्ञानयोगनिरपेक्ष इत्यर्थः। सारभूतः प्रधानभूतः। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इति नैघण्टुकाः। प्राधान्यं चात्र मोक्षसाधने ज्यायस्त्वम्। मानवशब्दस्यात्रानधिकृतशूद्रादिसंग्राहकत्वादधिकृतदेवादिप्रतिक्षे-पकत्वाच्च। तदुभयपरिहाराय य इति प्रमाणसिद्धानुवादेनाधिकारि-

ये मानवा आत्मनिष्ठशास्त्राधिकारिणोऽयमेव शास्त्रार्थ इत्येतन्मतं निश्चित्य तथाऽनुतिष्ठन्ति । ये चाननुतिष्ठन्तोऽपि अस्मिञ्शास्त्रार्थे श्रद्दधाना भवन्ति । ये चाश्रद्दधाना अप्येवं शास्त्रार्थो न संभवतीति नाभ्यसूयन्ति अस्मिन्महागुणे शास्त्रार्थे दोषदर्शिनो न भवन्तीत्यर्थः । ते सर्वे बन्धहेतुभिरनादिकालमारब्धैः कर्मभिर्मुच्यन्ते । तेऽपि कर्मभिरित्यपिशब्दादेषां पृथक्करणम् । इदानीमननुतिष्ठन्तोऽपि अस्मिञ्शास्त्रार्थे श्रद्दधाना

---

मात्रोपलक्षकोऽयं शब्द इत्यभिप्रायेणोक्तम्—ये मानवा इति । शास्त्राधिकारिण इति । नित्यमनुतिष्ठन्तीत्युक्तं नित्यमनुष्ठानं निर्णयपूर्वकमेव । प्रामाणिकत्वनिश्चयशून्यस्यानुष्ठानं कदाचिद्भज्येतापीत्यभिप्रायेणोक्तम्—अयमेव शास्त्रार्थ इत्येतत् । अयमेवेत्युक्तमेतन्मे मतं शास्त्रार्थ इति निश्चित्येत्यन्वयः । शासितुर्मतमेवमेव हि शास्त्रार्थ इति भावः । श्रद्धावन्त इति पदमनुष्ठानात्पूर्वावस्थापरमित्याह—ये चाननुतिष्ठन्तोऽपीति । ततोऽप्यर्वाचीनाऽवस्थाऽनसूयेत्याह—ये चाश्रद्दधाना इति । गुणेषु दोषाविष्करणमसूयेत्यसूयालक्षणाभिप्रायेणाऽऽह—अस्मिन्निति । अपिशब्दो वर्गत्रयसमुच्चयपर इति ते सर्व इत्युक्तम् । ननु संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते । श्रद्धावन्त इत्यादौ च भवन्तीत्यध्याहारश्चानुचितः । यच्छब्दस्य चैकत्र प्रयुक्तस्याऽऽवृत्तिरनुपपन्नेत्यत्राऽऽह—तेऽपीति । एषामिति । अधिकारिणां बुद्धिस्थानां वाक्यानां वा । अयमभिप्रायः—नात्रैकवाक्यत्वं संभवति । अपिशब्दानन्वयात् । अपिशब्दो ह्यत्रानुष्ठातृभिः सहाधिकार्यन्तरसमुच्चयपरो वाऽनुष्ठातॄणामपकर्षपरो वा स्यात् । तत्र ज्ञानयोगिनां समुच्चयः संभवन्नत्रानपेक्षितः, कर्मयोगप्रशंसाप्रकरणानुचितश्च । ज्ञानयोगिभ्यः कर्मयोगिना(णा)मपकर्षसूचनं त्वत्रात्यन्तविरुद्धम् । नित्यमनुष्ठातॄणां श्रद्धावन्तोऽनसूयन्त इति विशेषणाभिधानं च निरर्थकम् । न हि नित्यमनुतिष्ठन्तोऽश्रद्दधाना असूयन्तश्च भवेयुः । अवस्थात्रयविषयत्वे तु समुच्चयपरतया वाऽर्वाचीनावस्थापकर्षपरतया वा शङ्क्य(क्य)मपिशब्दो नेतुमिति अनुष्ठातॄणां श्रद्धानसूयामात्रवतां च तुल्यफलत्वेऽनुष्ठानविधायकशास्त्रवैयर्थ्यं स्यादित्याशङ्क्याऽऽह—इदानीमिति । श्रद्धानसूययोः पापनिर्हरणहेतुत्वं च 'धर्मः

अनसूयन्(न्त)श्च श्रद्धया चानसूयया च क्षीणपापा अचिरेणेममेव शास्त्रार्थमनुष्ठाय मुच्यन्त इत्यर्थः ॥ ३१ ॥

भगवदभिमतमौपनिषदमर्थमननुतिष्ठतामश्रद्दधानानामभ्यसूयतां च दोषमाह—

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥

ये त्वेतत्सर्वमात्मवस्तु मच्छरीरतया मदाधारं मच्छेषभूतं मदेकप्रवर्त्यमिति मे मतं नानुतिष्ठन्ति नैवमनुसंधाय सर्वाणि कर्माणि कुर्वते ये च न श्रद्दधते ये चाभ्यसूयन्तो वर्तन्ते तान्सर्वेषु ज्ञानेषु विशेषेण मूढांस्तत एव नष्टानचेतसो विद्धि । चेतःकार्यं हि वस्तुयाथात्म्यनिश्चयः । तदभावादचेतसः । विपरीतज्ञानाः सर्वत्र विमूढाश्च ॥ ३२ ॥

एवं प्रकृतिसंसर्गिणस्तद्गुणोद्रेककृतं कर्तृत्वं तच्च परमपुरुषायत्त-

---

श्रुतो वा दृष्टो वा स्मृतो वा कथितोऽपि वा। अनुमोदितो वा राजेन्द्र पुनाति पुरुषं सदा ' इत्यादिसिद्धम् ॥ ३१ ॥

व्यतिरेकतयाऽप्युक्तार्थप्राशस्त्यातिरेक उच्यत इत्यभिप्रायेणाऽऽह—भगवदिति । पूर्वोक्तव्यतिरेकरूपत्वादभ्यसूयोक्तिरश्रद्धोपलक्षणार्थेत्यभिप्रायेण—अश्रद्दधानानामित्याद्युक्तम् । आधेयं शेषभूतं विधेयं हि शरीरमित्यभिप्रायेण—मदाधारमित्यादि पदत्रयम् । स्वरूपस्थितिप्रवृत्तितादधीन्यपरं च परबुद्धिवृत्तिविशेषरूपं मतं कथमनुष्ठेयमननुष्ठेयं वा । सिद्धवस्तुनि च कथमनुष्ठानमित्यत्राभिप्रेताध्याहारेणाऽऽह—नैवमनुसंधायेति । सर्वेषु ज्ञानेषु विशेषेण मूढानिति । यथावस्थितात्मस्वरूपानभिज्ञतयाऽहं ममेत्यादिषु सर्वेषु ज्ञानेषु ज्ञातव्यवस्तूनां यथावस्थितस्वरूपानभिज्ञानित्यर्थः । नष्टानिति । पुरुषार्थायोग्यानित्यर्थः । किं तत्त्वज्ञानरहितस्यान्तःकरणमपि नास्तीत्यत्राऽऽह—चेतःकार्यमिति । कार्यादर्शनात्कारणं नास्तीत्युपचर्यत इति भावः । विपरीतज्ञानाः सर्वत्र विमूढाश्चेति ॥ ३२ ॥

उत्तरग्रन्थसंगत्यर्थं प्रतिपत्तिसौकर्यार्थं च पूर्वोक्तं संकलय्य दर्शयति—एवमिति । मुक्तानां कर्तृत्वस्य गुणाधीनत्वाभावात्प्र-

मित्यनुसंधाय कर्मयोगयोग्येन ज्ञानयोगयोग्येन च कर्मयोगस्य सुशकत्वादप्रमादत्वादन्तर्गतात्मज्ञानतया निरपेक्षत्वादितरस्य दुःशकत्वात्सप्रमादत्वाच्छरीरधारणाद्यर्थतया कर्मापेक्षत्वात्कर्मयोग एव कर्तव्यो व्यपदेश्यस्य तु विशेषतः स एव कर्तव्य इति चोक्तम् । अतः परमध्यायशेषेण ज्ञानयोगस्य दुःशकतया सप्रमादतोच्यते—

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

प्रकृतिविविक्तमीदृशमात्मस्वरूपं तदेव सर्वदाऽनुसंधेयमिति च शास्त्राणि प्रतिपादयन्तीति ज्ञानवानपि स्वस्याः प्रकृतेः प्राचीनवासनायाः सदृशं प्राकृतविषयेष्वेव चेष्टते । कुतः—प्रकृतिं यान्ति भूतानि । अचित्संसृष्टा

कृतिसंसर्गिण इत्युक्तम् । ज्ञानयोगादनादरहेतुभूतदुःशकत्वादिसमर्थनपरमनन्तरप्रकरणमित्यभिप्रायेणाऽऽह—अतः परमिति । नानुतिष्ठन्तीत्यस्य हेतुरपि सदृशमित्यादिनाऽभिप्रेतः । ज्ञानवानपीत्यत्र न तावल्लौकिकज्ञानमात्रमुच्यते । तस्य प्रकृत्यनुकूलस्य प्रवृत्तिविरोधित्वाभावेनापिशब्दानन्वयात् । नाप्यात्मसाक्षात्कारपर्यन्तं ज्ञानम् । तस्यामवस्थायां प्रकृत्यनुवर्तित्वप्रसङ्गाभावात् । अतो यदालम्ब्य ज्ञानयोगे प्रवर्तितुमुत्सहते तज्ज्ञानमिह विवक्षितम् । तच्च शास्त्रजन्यम् । यथावस्थितात्मतत्त्वज्ञानमित्याभिप्रायेणाऽऽह—प्रकृतिविविक्तमिति । ईदृशमिति यथावस्थितपरशेषत्वादिविशिष्टस्वरूपनिर्देशः । तदेवेति विषयानुभवव्यवच्छेदः । सर्वदेति । आ फलावाप्तेरित्यर्थः । स्वस्याः प्रातिस्विक्या इत्यर्थः । चेतनप्रवृत्तिरूपचेष्टाया असाधारणं कारणं हि रागद्वेषौ तौ चानन्तरश्लोकेऽभिधीयेते । तन्मूलं च प्राचीनवासनैव । अतोऽत्र प्रकृतिशब्देन स्वभावव्यपदेशार्हानादिवासनैव विवक्षितेत्यभिप्रायेणोक्तम्—प्राचीनवासनाया इति । सदृशमित्यनेनाभिप्रेतमानुरूप्यमाह—प्राकृतविषयेष्विति । शब्दादिविषयवासनया पुनरपि तत्रैव प्रवर्तत इत्यर्थः । कुत इति । ज्ञानवांश्चेज्ज्ञानानुरूपं चेष्टताम् । कुतः प्रकृत्यनुरूपं चेष्टत इत्यर्थः । अत्रोत्तरम्—प्रकृतिं यान्ति भूतानीति । पुनरुक्तिशङ्कां परिहरन्नुत्तरं विवृणोति—अचित्संसृष्टा

१ ख. ग. घ. °दनुगता° । २ ख. ग. °नि तद्विशिष्टा ज° ।

जन्तवोऽनादिकालप्रवृत्तवासनामेव यान्ति । तानि वासनानुयायीनि भूतानि शास्त्रकृतो निग्रहः किं करिष्यति ॥ ३३ ॥

प्रकृत्यनुयायित्वप्रकारमाह—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

श्रोत्रादिज्ञानेन्द्रियस्यार्थे शब्दादौ वागादिकर्मेन्द्रियस्य चार्थे वचनादौ प्राचीनवासनाजनिततत्तदनुबुभूषारूपो रागोऽवर्जनीयो व्यवस्थितः । तदनुभवे प्रतिहते चावर्जनीयो द्वेषो व्यवस्थितः । तावेवं ज्ञानयोगाय यतमानं नियमितसर्वेन्द्रियं स्ववशे कृत्वा प्रसह्य

---

जन्तव इति भूतशब्दार्थः । अनादिकालप्रवृत्ताचित्संसर्गकृतापरोक्षाभङ्गुरदेहात्मभ्रमजनितामत्यन्तप्रपञ्चितां वासनामप्रतनपरोक्षशास्त्रजन्यज्ञानं न सहसैव निरोद्धुं क्षममित्यभिप्रायः । तदेव विवृणोति—तानीति । निग्रह इति । नियमनमित्यर्थः । अत्र मम वाऽन्यस्य वेति निग्रहकर्त्रध्याहारो न युक्तः । अनिच्छन्नपीत्यादिप्राकरणिकार्थानुसारेण शास्त्रकृतत्वमेवोचितम् । किं करिष्यतीति । न किंचन किंचिदपि निरोद्धुं शक्यमित्यर्थः ॥ ३३ ॥

वासनायाः स्वानुरूपचेष्टाहेतुत्वेऽवान्तरव्यापारोऽनन्तरमुच्यत इत्यभिप्रायेणाऽऽह—प्रकृत्यनुयायित्वेति । इन्द्रियस्येन्द्रियस्येति वीप्सा सर्वेन्द्रियसंग्रहार्थेत्यभिप्रायेण—ज्ञानेन्द्रियकर्मेन्द्रियोपादानम् । अर्थशब्दोऽत्र विषयपरः । साध्यस्य च व्यापारविषयत्वाद्वचनादेरप्यत्रार्थशब्दार्थता दर्शिता । व्यवस्थित इत्यत्रोपसर्गार्थविवरणमवर्जनीय इति । वासनाया इच्छाद्वारेणैव प्रवृत्तिहेतुत्ववचनाज्ज्ञानवासनैव कर्महेतुत्ववेषेण कर्मवासनेत्युच्यते न तु वासनान्तरमस्तीत्यपि सूचितं भवति । ' इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ' इत्युक्ते शब्दादिविषयेषु रागवद्द्वेषोऽपि किं स्वरसवाहीति शङ्का स्यात्तद्व्युदासायाऽऽह—तदनुभव इति । ततः किमिति शङ्कायां सदृशं चेष्टत इत्यनेनैकीकृत्यानुसंदधानस्तात्पर्यार्थमाह—तावेवमिति । एवमुक्तवासनानुयायित्वप्रकारेण-

स्वकार्येषु नियोजयतः । ततश्चायमात्मस्वरूपानुभवविमुखो विनष्टो भवति। तयोर्न वशमागच्छेज्ज्ञानयोगारम्भेण रागद्वेषवशमागम्य न विनश्येत् । तौ हि रागद्वेषावस्य दुर्जयौ शत्रू आत्मज्ञानाभ्यासं वारयतः ॥ ३४ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

---

त्यर्थः । नियमितसर्वेन्द्रियमित्यनेन बलात्क्षणमात्रनिमीलनादिनियमनमुच्यते । स्वकार्येष्विति । निर्विषयानुभवेषु वचनादानादिषु कर्मसु चेत्यर्थः । 'सङ्गात्संजायते' इत्यारभ्य 'बुद्धिनाशात्प्रणश्यति' इत्यन्तं पूर्वप्रपञ्चितमवसरे स्मारयति—ततश्चायमिति । 'तयोर्न वशमागच्छेत्' इत्येतन्न तावद्रागद्वेषप्रतिषेधमात्रम् । तदा ह्यौचित्याज्ज्ञानयोगाङ्गविधानं स्यात्। तच्च ज्ञानयोगानादरणीयताप्रकरणासंगतम् । अतोऽत्र यया वचनव्यक्त्या ज्ञानयोगानादरणीयता सूच्येत स्यै(सै)व ग्राह्येत्यभिप्रायेणाऽऽह—ज्ञानयोगेति । कर्मयोगारम्भे तु चिराभ्यस्तसजातीयविषयेषु प्रवृत्तेर्न रागद्वेषयोः स्वबलात्कार इति भावः । आगम्य न विनश्येदिति विनाशहेतुभूतं तद्वशगमनं परिहरेदित्यर्थः । तद्वशगमने कथं विनाश इति शङ्कायां चतुर्थपादमवतारयति—तौ हीति । 'काम एष क्रोध एषः' इत्यादिभिः श्लोकैर्विकृष्यमाणमाकारमभिप्रेत्य दुर्जयौ शत्रू इत्युक्तम् । परिपन्थित्वं प्रकृतविषयं योजयति—ज्ञानाभ्यासं वारयत इति । मुक्तिघण्टापथे लुण्टाकवदवस्थितावित्यर्थः ॥ ३४ ॥

श्रेयानित्यत्र श्लोके स्वधर्मपरधर्मशब्दौ न तावद्वर्णाश्रमाद्यपेक्षया प्रयुज्येते । परवर्णाश्रमादिधर्मानुष्ठानस्य दूरतो निरस्तत्वेन तन्निषेधायोगात् । अत्र च तत्प्रसङ्गाभावात्, परधर्मात्स्वनुष्ठितात्स्वधर्मो विगुणः श्रेयानिति चोक्तेः श्रेयःशब्दस्य तदर्हत्वात् स्वनुष्ठितपरधर्मस्य प्रशस्यत्वमात्रं प्रसज्येत । न च तदुपपद्यते । स्वनुष्ठितस्य दुरनुष्ठितस्य वा परधर्मस्याधर्मत्वेन गर्हणीयत्वात् । अथ क्षत्रधर्मभूतयुद्धपरित्यागाभिलाषिणोऽर्जुनस्य

अतः सुशकतया स्वधर्मभूतः कर्मयोगो विगुणोऽप्यप्रमादगर्भः प्रकृतिसंसृष्टस्य दुःशकतया परधर्मभूताज्ज्ञानयोगात्सगुणादपि कंचित्काल-

---

स्वधर्मभूतयुद्धप्रशंसा ब्राह्मणादिधर्मभूततत्परित्यागनिन्दा च क्रियत इति चेदस्त्वेतावताऽपि निषेधस्य प्रसङ्गः। तस्य प्रशस्यत्वमात्रप्रसङ्गचोद्यं तु न परिहृतम्। न चात्र स्वधर्मं परित्यज्य परधर्मं कुर्यामित्यर्जुनस्याभिसंधिः। अत्रैव ह्यस्येदानीं स्वधर्मबुद्धिः। स्वधर्मतया भ्राम्यतः परधर्मत्वमत्र ज्ञाप्यत इति चेत्तन्न। स्वनुष्ठितात्परधर्मादित्यनुवादरूपत्वानुपपत्तेः। परधर्मतया संप्रतिपन्नत्वे ह्येवं व्यपदेश उपपद्यते। तत्र च परधर्मत्वज्ञापनं निष्प्रयोजनमधर्मत्वमात्रस्यैव ज्ञाप्यत्वात्। अतोऽत्र स्वधर्मपरधर्मशब्दौ प्रशस्यतयाऽनादरणीयतया च प्रकृतकर्मयोगज्ञानयोगविषयौ। एवं च सति ज्ञानयोगस्य प्रशस्यत्वमात्रप्रसङ्गोऽपि न दूषणम्। पूर्वश्लोकद्वयप्रकृतवासनानुवर्तित्वेन संगतिश्च स्यात्। अथ केनेत्युत्तरश्लोकस्थप्रश्नोऽप्येवमेवोपपद्यते। अत्र ह्यनिच्छतोऽपि पापाचरणहेतुः क इति प्रश्नः, स च ज्ञानयोगदुष्करत्वकथनेनैव संगच्छेत। अनिच्छतोऽपि मे क्षत्रधर्मत्यागः केनेति प्रश्नार्थ इति चेन्न। अस्यानिच्छत्वाभावात्। काम एष क्रोध एष इत्याद्युत्तरानुपपत्तेश्च। न हि कामक्रोधाभ्यामर्जुनो युद्धं परित्यजति किंतु कारुण्यादिनेत्युपक्रमेऽप्युक्तम्। अतः स्वधर्मपरधर्मशब्दौ स्वशक्यपरशक्यधर्मविषयौ। तदेतदखिलमभिप्रेत्याऽऽह—अतः सुशकतयेति। अतः श्लोकद्वयोक्तवासानुवर्तित्ववशादित्यर्थः। विगुणोऽप्यङ्गवैकल्ययुक्तोऽपीत्यर्थः विगुणस्य कथं श्रेयस्त्वमित्यत्रोक्तम्— अप्रमादगर्भ इति। वैगुण्यमात्रं स्वरूपविच्छेदद्वारमिति भावः। स्वनुष्ठितादित्यस्य वैगुण्यप्रतियोग्याकारपरतया सुशब्दः साद्गुण्यपर इत्याह—सगुणादपीति। अनुष्ठितशब्दस्य भूतार्थप्रत्ययान्तत्वाद्भूतत्वस्य चातिक्रान्ततारूपत्वात् प्रागनुष्ठानं पश्चाद्विच्छेदश्च सूचित इत्याद्यभिप्रायेणोक्तम्—कंचित्काल-

मनुष्ठितात्सप्रमादाच्छ्रेयान्। स्वेनैवोपादातुं योग्यतया स्वधर्मभूते कर्मणि वर्तमानस्यैकस्मिञ्जन्मन्यप्राप्तफलतया निधनमपि श्रेयः। अनन्तरायहततयाऽनन्तरजन्मन्यव्याकुलकर्मयोगारम्भसंभवात् । प्रकृतिसंसृष्टस्य स्वेनैवोपादातुमशक्यतया परधर्मभूतो ज्ञानयोगः प्रमादगर्भतया भयावहः ॥ ३५ ॥

---

मनुष्ठितात्सप्रमादादिति । एवं विच्छेदाविवक्षायां स्वनुष्ठिताज्ज्ञानयोगाद्विगुणः कर्मयोगः श्रेयानित्येतदसंगतं स्यात्। सगुणस्याविच्छिन्नस्य फलाविनाभावादिति भावः। सुशकतयेत्युक्तहेतुविवरणमुखेन स्वधर्मशब्दार्थं च विवृण्वन्विगुणस्य कर्मणः फलाभावात्कथं श्रेयस्त्वमितिशङ्कापरिहारतया तृतीयं पादं व्याख्याति—स्वेनैवेति। स्वेनैव प्रकृतिसंसृष्टतया व्याप्रियमाणेन्द्रियेणैवेत्यर्थः। यद्वा स्वेच्छयैवेति भावः। एकस्मिञ्जन्मनि अप्राप्तफलतयेति। अयमभिप्रायः—यद्यध्यात्मसाक्षात्कारादिफलार्थतया विहितत्वात्कर्मयोगः काम्यकर्मैव तथाऽप्यस्य काम्यकर्मणोऽयं विशेषः—यद्विगुणानुष्ठितमपि [फलसाधकम्।] जन्मान्तरेऽपि विगुणस्य कथं फलसाधनत्वमित्यत्राऽऽह—अनन्तरायहततयेति। इन्द्रियाणामनुभूतसजातीयविषयसमर्पणेन कर्मयोगस्वरूपस्यात्यन्तविच्छेदाभावादित्यर्थः। अव्याकुलत्वमत्राविकलत्वम्। एतच्च सर्वं नेहाभिक्रमनाशोऽस्तीति पूर्वं संग्रहेणोक्तम्। पार्थ नैवेह नामुत्रेत्यनेन प्रपञ्चयिष्यते च । अव्यवहितानन्तरजनिपौष्कल्यनिर्णयाभावेन संभवादित्युक्तम्। अनन्तरे ततोऽनन्तरे वा फलं तावत्सिद्धमिति भावः। यदि [वि]गुणस्य कर्मयोगस्य जन्मान्तरस्थं फलमभिप्रेत्य श्रेयस्त्वमुच्यते तर्हि ज्ञानयोगस्यापि तथा किं न स्यादित्यत्र चतुर्थं पादं व्याख्याति—प्रकृतीति । जन्मान्तरेऽपि फलं न संभवतीत्यभिप्रायेण भयावह इत्युच्यते । स्वरूपेण विच्छिन्नस्य कथं जन्मान्तरेऽपि फलम्। अविच्छिन्नस्य गुणस्य फलं विलम्बितमिति भावः ॥ ३५ ॥

---

१ ख. ग. °अन्तरायाह ।

अर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

अथायं ज्ञानयोगाय प्रवृत्तः पुरुषः स्वयं विषयाननुभवितुमनिच्छन्नपि केन प्रयुक्तो विषयानुभवरूपं पापं बलान्नियोजित इवाऽऽचरति ॥ ३६ ॥

श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

---

ननु सदृशं चेष्टत इत्यादिना वासनानुवर्तित्वमुक्तम् । वासना चेतनस्येच्छाद्वारेण प्रवर्तिका । एवं च सति ज्ञानयोगमिच्छतस्तद्विरोधितया विषयानुभवमनिच्छतोऽपि कथं वासना विषयानुभवे प्रवृत्तिहेतुरिति पृच्छति—अथ केनेति । अत्रानिच्छमानोऽपि बलादाताय्ये(ज्ये)व नियोजित इति यादवप्रकाशपाठोऽपपाठः । अथ शब्दोऽत्र प्रश्नार्थकः कात्स्न्र्यपरो वा । ज्ञानवानपीति ज्ञानवत्त्वेन निर्दिष्टपरामर्शकोऽयंशब्द इत्यभिप्रायेणोक्तम्— अयं ज्ञानयोगाय प्रवृत्त इति । न ह्ययं वासनयाऽप्यनिच्छापूर्वं प्रवर्तते चेतनत्वात्, इति पुरुषशब्दस्य भावः । अनिच्छन्तोऽपि वायूदकादिप्रेरिताः प्रवर्तन्ते तद्वदत्रापि केनचित्प्रेरकेण बलवता भवितव्यमिति मत्वोक्तम्—बलादित्यादि । बलादिव नियोजित इत्यस्य केनेत्यादिप्रश्नविरुद्धार्थतां परिहर्तुं क्रमभेदेनान्वय उक्तः। वायूदकबलान्नियोजितो यथाऽनिच्छन्नप्याचरति तथाऽयमप्याचरति । तत्र केन प्रयुक्त इति प्रश्नार्थः ॥ ३६ ॥

अथेन्द्रियस्येत्यादिना संग्रहेणोक्तमेवार्थं प्रश्नस्योत्तरतया प्रपञ्चयन्भगवानुवाच—काम एष इति । विषयानुभववासनाबीजानां कामक्रोधाद्यङ्कुरोत्पादने रजोगुणः सलिलसेकः । कामादिर्हि सम्मते ज्ञानविशेषरूपात्मधर्मः । रजस्तु प्रकृतिगुणः । अन्यधर्मस्य

अस्योद्भवाभिभवादिरूपेण वर्तमानगुणमयप्रकृतिसंसृष्टस्य ज्ञानयोगारब्धस्य रजोगुणसमुद्भवः प्राचीनवासनाजनितः शब्दादिविषयोऽयं कामो महाशनः सर्वविषयेष्वेनमाकर्षति । एष एव प्रतिहतगतिः प्रति-

कथमन्यत्र कार्यकरत्वमित्यत्रोक्तम्---गुणमयप्रकृतिसंसृष्टस्येति । औष्ण्याश्रयदहनसंयोगाद्यथा करतलादौ स्फोटादिस्तथा गुणाश्रयप्रकृतिसंसर्गादात्मनि कामादिरिति भावः । तर्हि गुणत्रयप्रकृतिसंसर्गात्सत्त्वादिकार्यज्ञानादिरपि युगपदेव किं न स्यादित्यत्रोक्तम्---उद्भवाभिभवादिरूपेण वर्तमानेति । पूर्वश्लोकोक्तार्थशब्दस्यात्रापेक्षयाऽस्येति विपरिणतयाऽनुषङ्गः । रजोगुणप्रचुरस्यास्य कथं ज्ञानयोगप्रारम्भमात्र[त्व]मपीति चोद्यम्, उद्भवाभिभवक्रमेण मात्रया मध्ये कदाचित्सत्त्वोन्मेषसंभावनया निरस्तमित्यभिप्रेत्य ज्ञानयोगारब्धस्येत्युक्तम । आरब्धेति भुक्ता ब्राह्मणा इतिवत्कर्तरि क्तः । एष इतिपदेन पापाचरणाप्रयोजकः प्रश्नविषयः परामृश्यते । तेनैव सदृशं चेष्टते, इन्द्रियस्येन्द्रियस्यार्थ इति श्लोकद्वयोक्तार्थोऽप्यत्र स्मारित इत्यभिप्रेत्य प्राचीनेत्यादिविशेषणद्वयमुक्तम् । पूर्वोक्तरागद्वेषाववस्थापन्नावत्र कामक्रोधशब्देन व्यपदिश्येते इति भावः । महाशनत्वविवरणम्---विषयेष्वेनमाकर्षतीति । महदशनं भोग्यं यस्य स महाशनः । एष इति निर्देशस्याऽऽवृत्त्या वाक्यभेदः । तत्र च वाक्यद्वयस्यैकमेव मुखभेदेन प्रतिपाद्यम् । अन्यथा कः पापत(च)रणे प्रयोजक इति प्रश्ने काम एष क्रोधश्चेत्यादिप्रकारेण निर्देष्टव्यम् । अनन्तरं च विद्ध्येताविह वैरिणाविति वक्तव्यम् । उत्तरत्र च षट्स्वपि श्लोकेषु तेन कामरूपेण, अस्य, एनम्, यः, कामरूपमिति सर्वत्रैकवचनानिर्देशः काममात्रनिर्देशश्च क्रियते न तु कामात्क्रोधस्य पृथक्त्वेनाभिधानम् । ततश्च काम एवावस्थाभेदेन क्रोधतयाऽत्र विवक्षितः । तदवस्थाद्वयविषयतया च वाक्यभेद उचितः । महाशनो महापाप्मेति पदद्वयमपि बाहुल्यानुसारेणौचित्यात्क्रमेण तदुभयविषयमित्येतदखिलमित्यभिप्रेत्याऽऽह---एष एवेति । प्रति-

हननहेतुभूतचेतनान्यति क्रोधरूपेण परिणतो महापाप्मा परहिंसादिषु प्रवर्तयति । एवं रजोगुणसमुद्भवं सहजं ज्ञानयोगविरोधिनं वैरिणं विद्धि ॥ ३७ ॥

धूमेनाऽऽव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

यथा धूमेन वह्निराव्रियते यथा चाऽऽदर्शो मलेन यथा चोल्बेनाऽऽवृतो गर्भस्तथा तेन कामेनेदं जन्तुजातमावृतम् ॥ ३८ ॥

---

हतगतिरिति क्रोधाख्यपरिणामे हेतुरुक्तः । एकस्यैव शब्दादिविषयकामावस्थातः क्रोधावस्थाया विषयत्वे भेदप्रदर्शनार्थमिति प्रसङ्गपरिहारार्थं चोक्तम्—प्रतिहतेत्यादि । महापाप्मतां विवृणोति—परहिंसादिषु प्रवर्तयतीति । महान्पाप्मा कार्यतया यस्यास्तीति स महापाप्मा । क्रुद्धो हन्याद्गुरूनपीति हि प्रसिद्धमेतच्छ्लोकोक्तम् । रजोगुणाख्यं पूर्वोक्तप्रकृतिशब्दव्यपदेशार्हं वासनाख्यं कारणं चोपस्थाप्य तदुभयकार्यताविशिष्टमेनमित्यन्वादेशः परामृशतीत्यभिप्रायेण रजोगुणसमुद्भवं सहजमिति पदद्वयमुक्तम् । इह वैरिणमित्यत्रेहशब्दः प्रमादवत्तया बुभुत्सितज्ञानयोगविषय इत्यभिप्रायेणोक्तम्—ज्ञानयोगविरोधिनमिति ॥ ३७ ॥

वैरित्वप्रकार उच्यते—धूमेनेति । तत्र यथेत्यन्तमेकं वाक्यम् । आदर्शो मलेन चेत्यत्र चकाराद्यथाशब्दोऽनुषक्त इति व्यञ्जनाय यथा धूमेनेत्युक्तम् । पूर्वस्मिञ्श्लोके क्रोधस्यापि कामावस्थान्तरत्वव्यपदेशादुत्तरत्र च कामरूपेण कामरूपमिति तस्यैवानुवृत्तेरत्रापि तच्छब्देन काम एव परामृश्यत इति व्यञ्जनाय तेन कामेनेत्युक्तम् । इदमिति सामान्यनिर्देशेऽप्यचिद्ग्रहणासंभवात्सर्वक्षेत्रज्ञग्रहणौचित्यादिदंशब्दस्य वक्ष्यमाणपरत्वादपि लोकप्रतीतिपरत्वस्वारस्याच्च यथा क्षेत्रज्ञशक्तिः सा वेष्टितेत्यादिवत् क्षेत्रज्ञानामावरणमिहोच्यत इत्यभिप्रायेणोक्तम्—इदं जन्तुजातमिति । जन्तुशब्देन शरीरत्वस्य च विवक्षितत्वादावरणार्हत्वं दर्शितम् । नपुंसकनिर्देशस्य सामान्यविषयत्वप्रदर्शनाय जातशब्दोऽनादिवासनानुबन्धत्वेन सहजत्वं निवृत्तस्यापि पुनः पुनरुपाधिवशादागमं स्वेच्छया निवर्तयितुमशक्यत्वं च दर्शयितुं दृष्टान्तत्रयोपादानम् ॥ ३८ ॥

आवरणप्रकारमाह—

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥

अस्य जन्तोर्ज्ञानिनो ज्ञानस्वभावस्याऽऽत्मविषयं ज्ञानमेतेन कामाकारेण विषयव्यामोहजननेन नित्यवैरिणाऽऽवृतं दुष्पूरेण पूर्त्यनर्हविषयेणानलेन च पर्याप्तिरहितेन ॥ ३९ ॥

कैरुपकरणैरयं काम आत्मानमधितिष्ठतीत्यत्राऽऽह—

---

आवृतं ज्ञानमित्यादेः पौनरुक्त्यव्युदासायाऽऽह—आवरणप्रकारमाहेति । अत्र तेनेदमावृतमित्युक्ते किं तदावृतमित्याकाङ्क्षया अपि कथमाकाङ्क्षा युक्तेति भावः । अत्र ज्ञानशब्दो नी(न) ताव[द्] निष्पन्नज्ञानविषयः । तदवस्थस्य कामावृतज्ञानत्वाभावात् । ततश्च निष्पन्नज्ञानसर्वक्षेत्रज्ञपरत्वमेवोचितमित्यभिप्रायेणास्य जन्तोर्ज्ञानिन इत्युक्तम् । ज्ञानिन इत्यत्र प्रत्ययस्य श्रुतिसिद्धस्वाभाविकसंबन्धपरत्वप्रदर्शनायाऽऽवरणस्यौपाधिकत्वद्योतनाय च ज्ञानस्वभावस्येत्युक्तम् । क्षेत्रज्ञस्यापि कर्मफलभोक्तुः शब्दादिविषयज्ञानावरणाभावादात्मविषयं ज्ञानमित्युक्तम् । कामरूपशब्दस्य स्वेच्छागृहीतरूपत्वे प्रसिद्धेस्तद्भ्रमव्युदासायोक्तम्—कामाकारेणेति । कामस्वभावादर्थान्तराक्षिप्तमात्मविषयज्ञानावरणप्रकारं व्यञ्जयति—विषयव्यामोहजननेति । नित्यवैरिणा । आत्मसाक्षात्कारोत्तरावधिनाऽनादिवैरिणेत्यर्थः । नित्यसंसारिसद्भावपक्षे चास्य केषुचिदात्मसु नित्यवैरित्वं सिद्धम् । योग्यैर्लब्धैरलंभावराहित्यमनलशब्दार्थः ।

तृष्णा खनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥

इत्युक्तप्रकारेणायोग्येषु दुर्लभेषु प्रवृत्तिहेतुत्वं दुष्पूरशब्दविवक्षितमित्यभिप्रायेणोक्तम्—दुष्पूरेण प्राप्त्यनर्हविषयेणानलेन च पर्याप्तिरहितेनेति । यद्वाऽनलशब्दोऽग्निपर्यायः कामे गौणः । न ह्यग्नेर्विषयविभागः पर्याप्तिर्वा स्यात् । तद्वदिति भावः ॥ ३९ ॥

एवमावरणप्रकार उक्तः । अथाऽऽवरणोपकरणान्यनन्तरं नियन्तव्यत्वोपदेशायोच्यन्त इत्यभिप्रायेणाऽऽह—कैरिति । आत्मानम-

---

१ क. °हजन ।

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

अधितिष्ठन्त्येभिरयं काम आत्मानमितीन्द्रियाणि मनो बुद्धिरस्याधिष्ठानम् । एतैरिन्द्रियमनोबुद्धिभिः कामाधिष्ठानभूतैर्विषयप्रवणैर्देहिनं प्रकृतिसंसृष्टं ज्ञानमावृत्य विमोहयति विविधं मोहयति आत्मज्ञानविमुखं विषयानुभवपरं करोतीत्यर्थः ॥ ४० ॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

यस्मात्सर्वेन्द्रियव्यापारोपरतिरूपे ज्ञानयोगे प्रवृत्तस्यायं कामरूपशत्रुर्विषयाभिमुख्यकरणेनाऽऽत्मनि वैमुख्यं करोति तस्मात्प्रकृतिसंसृष्टत-

---

धितिष्ठति स्वतन्त्रमात्मानमाक्रम्य परतन्त्रं करोतीत्यर्थः। इन्द्रियशब्दोऽत्र गोबलीवर्दन्यायाद्बाह्येन्द्रियपरः। बुद्धिरत्रापुरुषार्थेषु पुरुषार्थाध्यवसायः। प्रकृतानुपयुक्ताधिकरणादिव्युदासाय करणव्युत्पत्तिं दर्शयति—अधितिष्ठन्त्येभिरिति । एतैर्विमोहयतीति सूच्यत इति भावः। अधिष्ठानक्रियाकरणभूतानामिन्द्रियादीनामवान्तरव्यापारप्रदर्शनाय विषयप्रवणैरित्युक्तम्। प्रकृतिसंसृष्टमिति। देहिशब्देनेन्द्रियादेरवर्जनीयत्वं गुणवश्यत्वं च सूच्यत इति भावः। विशब्दः 'अनात्मन्यात्मबुद्धिर्या, अस्वे स्वमिति या मतिः' इत्याद्युक्तभ्रान्तिवैविध्यपर इत्यभिप्रायेणाऽऽह—विविधं मोहयतीति। भ्रान्तिवैविध्यं भोग्ये स्वात्मन्यभोग्यताभ्रमेण(णा)-भोग्येषु च विषयेषु भोग्यताभ्रमेण विद्रूण्वन्प्रकृतोपयोगित्वं च दर्शयति—आत्मज्ञानेति ॥ ४० ॥

अथ कामस्याऽऽत्माधिष्ठाको(नो)पकरणेष्विन्द्रियमनोबुद्धिषु प्रथममिन्द्रियाणां नियमनं कामविजयोपायतयोपदिश्यते—तस्मादिति श्लोकेन। तस्मादित्येतत्प्रकृतस्य ज्ञानयोगस्योक्तप्रकारदुष्करत्वपरामर्श इ(कमि)त्याह—यस्मादित्यादिना। त्वमिति निर्देशोऽर्जुनस्य तदानींतनावस्थापर इत्यभिप्रायेणोक्तम्—प्रकृतिसंसृष्टतये-

येन्द्रियव्यापारप्रवणस्त्वमादौ मोक्षोपायारम्भसमये एवेन्द्रियव्यापाररूपे कर्मयोगे इन्द्रियाणि नियम्यैनं ज्ञानविज्ञाननाशनमात्मस्वरूपविषयस्य ज्ञानस्य तद्विवेकविषयस्य च नाशनं पाप्मानं कामरूपं वैरिणं प्रजहि नाशय ॥ ४१ ॥

ज्ञानविरोधिषु प्रधानमाह—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥

---

न्द्रियव्यापारप्रवणस्त्वमिति । आदावित्यनेनाभिप्रेतमाह—मोक्षेति । नात्रेन्द्रियनियमनमत्यन्तव्यापारोपरमः । आदौ तस्याशक्यत्वात् । प्रपञ्चितं च तत्प्रागेव कर्मयोगार्थं चेन्द्रियनियमनम् । प्रागपि यस्त्विन्द्रियाणि मनसेत्यादावुक्तमतोऽत्रापि तथैव वर्णनीयमि-त्यभिप्रायेणोक्तम्—इन्द्रियव्यापाररूप इत्यादि । ज्ञानविज्ञानयो-र्द्वयोरप्यात्मविषयत्वं प्रकरणात्सिद्धम् । तत्र ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धय इतिवत्स्वरूपविषयत्वादपौनरुक्त्य-मित्यभिप्रायेणोक्तम्—आत्मस्वरूपेत्यादि । विज्ञानं विविच्य ज्ञानं व्यावृत्ततया ज्ञानमित्यर्थः । प्रत्यगानन्दत्वादिविशिष्टमात्मनः स्वरूपम् । अणुत्वनित्यत्वज्ञातृत्वभोक्तृत्वकर्तृत्वादिभेदको धर्मोऽत्र विवेकः । यद्वा देहातिरिक्तः कश्चिदात्माऽस्तीत्येतावत्स्वरूपमिह विवक्षितम् । प्रत्यक्त्वादयोऽप्यणुत्वादिवद्विवेकतया विवक्षिताः । अथवा तत्सर्वं स्वरूपम् । विवेको विवेककरणं शास्त्रम् । ततः प्रमेयं प्रमाणं चोक्तं भवति । एनं पाप्मानमित्यन्वादेशात्प्रस्तुत-कामविषयः पाप्मशब्दः । तस्य पाप्मशब्देनाभिधानं निषेधविष-यतया ज्ञानविरोधित्वेनानिष्टफलं चेत्यभिप्रेत्य कामरूपं वैरिण-मित्युक्तम् ॥ ४१ ॥

एवं विरोधिमात्राणामिन्द्रियाणां नियन्तव्यत्वमुक्तम् । अथ मनोबुद्धिकामा नियन्तव्यतरतमत्वादिसिद्ध्यर्थमुत्तरोत्तरविरोधि-तमत्वेन निर्दिश्यन्त इत्यभिप्रायेणाऽऽह—ज्ञानविरोधिष्विति । परशब्दस्यात्र कारणादिपरत्वायोगात्प्राधान्यमेव विवक्षितम् ।

ज्ञानविरोधिषु प्रधानानीन्द्रियाण्याहुः। यत इन्द्रियेषु विषयव्यापृतेष्वात्मनि ज्ञानं न प्रवर्तते। इन्द्रियेभ्यः परं मनः। इन्द्रियेषूपरतेष्वपि मनसि विषयप्रवण आत्मज्ञानं न भवति। मनसस्तु परा बुद्धिः। मनसि विषयान्तरविमुखेऽपि विपरीताध्यवसायप्रवृत्तायां बुद्धौ नाऽऽत्मज्ञानं प्रवर्तते। सर्वेषु बुद्धिपर्यन्तेषूपरतेष्वपीच्छापर्यायः कामो रजःसमु-

---

तच्च प्रकरणवशाज्ज्ञानविरोधापेक्षयेत्यभिप्रायेणोक्तम्—ज्ञानविरोधे प्रधानानीति। प्राधान्यं चेन्द्रियाणां देशकालादिरूपसामान्यविरोध्यन्तरापेक्षया शरीरापेक्षया वा। सूक्ष्मत्वदुर्ग्रहत्वादिभिरिन्द्रियाणां प्राधान्यहेतुं विरोधित्वप्रकारमाह—यत इति। इन्द्रियेभ्यो मनसः परत्वे हेतुमाह—इन्द्रियेष्विति। पूर्ववाक्याद्यत इत्यनुषञ्जनीयम्। एवमुत्तरत्रापि हेतुवाक्ये भाव्यम्। विषयासंनिधानहठात्करणादिका [दृ] बाह्येन्द्रियेषु विषयेभ्य उपरतेष्वपि मनसा तत्तद्विषयेषु चिन्त्यमानेषु आत्मज्ञानं न स्यात्ततो बाह्येन्द्रियोपरतिवेलायामपि विरोधित्वादस्य तेभ्यः परत्वम्। मनसो बुद्धेः परत्वे हेतुमाह—मनसि विषयान्तरेति। ननु मनसो विषयान्तरवृत्तिवैमुख्ये कथं तद्गोचराध्यवसायप्रवृत्तिः। मनसा किंचिद्विषयमालम्ब्य तत्रैव हि कुर्यां न कुर्यामित्याद्यध्यवसीयते। उच्यते—नात्र मनसो निःशेषव्यापारनिवृत्तिर्दृश्यन्तरवैमुख्यं विवक्षितं किंतु बलादप्यशक्यनिरोधस्वारसिकविषयान्तरप्रावी(व)ण्यनिवृत्तिः। सूचितं चैतत्पूर्ववाक्ये मनसि विषयप्रवण इति। अतो यदृच्छया निद्रालस्यादिभिर्मनसः स्वरसतो विषयैकशरणत्वाभावेऽपि दुराग्रहादिमात्रेण विपरीताध्यवसायप्रवृत्तौ मनसस्तथाविधमपि प्रावण्यं स्यादेव। एवं च मनसास्त्विति शब्दः शङ्कानिरासार्थः। एवंविधवैलक्षण्यार्थो वा। अध्यवसायादपि कामस्य परत्वे हेतुमाह—सर्वेष्विति। वासनाकार्यत्वस्य स्वानुरूपाध्यवसायहेतुत्वस्य च द्योतनायेच्छापर्याय इत्युक्तम्। इन्द्रियमनोबुद्ध्युपरतिवेलायां कथं कामस्योत्पत्तिरित्यत उक्तम्—रजःसमुद्भव इति। प्राचीनकर्मोन्मिषितरजोदूषितमनोमात्रसमुद्भव इत्यर्थः। नन्विन्द्रियाणां विषयान्तरवैमुख्ये सिद्धे विषयेच्छायाः

द्भवो वर्तते चेत्स एवैतानीन्द्रियादीन्यपि स्वविषयेषु वर्तयित्वाऽऽत्मज्ञानं निरुणद्धि तदिदमुच्यते यो बुद्धेः परतस्तु स इति । बुद्धेरपि यः परः

सद्भावेऽपि को विरोधः । आत्मानुभवेच्छया तत्रैवाध्यवसायमनःप्रावी(व)ण्ययोरुपपत्तेरित्यत्रोक्तम्—स एवेत्यादि । सत्यमात्मेच्छाऽप्यस्त्येव सा हि कादाचित्कालवसत्त्वमूला विषयेच्छा न तु प्रचितप्राचीनकर्मोद्भावितनिरन्तरानुवृत्तरजोमूला । तस्मादात्मेच्छा यावदात्मदर्शनाध्यवसायादिकं करोति तावद्विषयेच्छा प्रबलविषयानुभवाध्यवसायादिकमेव कुर्यादिति भावः । एवमत्र कामस्य पूर्वेषां प्रवर्तकत्ववचनं बुद्धिमनसोऽ[र]पि पूर्वप्रवर्तकत्वस्योपलक्षणं मन्तव्यम् । रजःसमुद्भवो वर्तयित्वेति पदाभ्यां कामस्याध्यवसायादिनिरपेक्षोत्पत्तिकत्वतदुपकरणत्वलक्षणं वैषम्यं तुशब्दद्योतितम् । विवृतमर्थान्तरपरत्वमनन्वयभ्रमं च निरस्यन्मु(न्नु)क्तार्थपरतया चतुर्थं पादमुपादत्ते—तदिदमुच्यत इति । परत इति शब्दस्य पूर्ववाक्यत्रयस्थपदशब्दतुल्यार्थत्वात्सार्वविभक्तिकप्रत्ययेन प्रथमार्थत्वम् । स इत्यस्य प्रकरणसिद्धविशेष्यं च व्यञ्जयति—बुद्धेरपीति । अहंकारस्य भोक्त्रधिष्ठानाद्बुद्धेः परत्वम् । स काम इति केषांचिद्व्याख्यानं प्रकृतासंगत्यादिभिरनादरणीयम् । ननु—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।<br>
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥<br>
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।<br>
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥

इति हि कठवल्ल्यां नियन्तव्यवर्गः श्रूयते । स्पष्टं चेदमानुमानिकमप्येकेषामित्यधिकरणे व्याख्यातम् । अस्मिन्नपि श्लोके तत्प्रत्यभिज्ञायते । न चेन्द्रियमनसोर्मध्येऽर्थानामदर्शनात् 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।' इत्यनयोरनुपादानाच्च भिन्नार्थत्वमिति वाच्यम् । संग्रहविस्तररूपेण कतिपयानभिधानसकलाभिधानयोरुपपत्तेः । सृष्टिप्रकरणादिषु कतिपयसृष्टतत्त्वादिनिर्देशवत् । आहुरिति बहुवचनात्क्वचिदन्यत्रास्यार्थस्याभिधान-

स काम इत्यर्थः ॥ ४२ ॥

---

मवश्याभ्युपगन्तव्यम्। ततश्च 'यो बुद्धेः परतस्तु सः' इत्यस्य 'बुद्धेरात्मा महान्पर' इत्यनेन तुल्यार्थत्वादात्मविषयत्वमेवोचितम्। एवं च सत्येवं बुद्धेः परं बुद्ध्वेत्यादावुत्तरश्लोकेऽपि द्वितीयान्तात्मशब्दश्चेतनविषयतयोपपन्नतरः स्यात्। अतः कथं स काम इति व्याख्यायते। उच्यते—यद्यदीन्द्रियादित्रयं तदेवात्र प्रत्यभिज्ञातं तथाऽपि स एवात्र क्रमो न कात्स्न्येंन विवक्षितः। पूर्वत्रेन्द्रियाणि मनो बुद्धिरिति श्लोके निर्दिष्टानामिन्द्रियादीनां कामपर्यन्तानां चतुर्णां विरोधिनामेवात्र तारतम्यनिर्देशोपपत्तेः। इन्द्रियमनोबुद्धीनां च क्रमस्यात्र न कश्चिद्भङ्गः। कठवल्ल्यर्थपरत्वे त्वर्थानामत्रानिर्देशान्मात्रया क्रमभङ्गः स्यात्। विरोधित्वे जेतव्यत्वे च प्रधानतया पूर्वत्रोत्तरत्र काम एव व्यपदिश्यते। अतः स एवात्र सर्वप्रधानतया 'यो बुद्धेः परतस्तु सः' इति निर्देशमर्हति। अन्यथा स इति शब्दस्य विशेष्यमौपनिषदं दूरस्थं स्यात्। यदि त्वात्माऽप्यत्र नियन्तव्यतयाऽभिमतस्तदेन्द्रियाणि मनो बुद्धिरित्यत्राप्यात्माऽप्यधिष्ठानतया व्यपदिश्येत। न चैतत्तथा कृतम्। आत्मा हि तत्र चतुर्भिर्मोहनीयतया व्यपदिष्टः। अतश्चतुर्णां नियमनमेवानेन कार्यम्। तथा सत्युत्तरश्लोकस्थात्मशब्दोऽप्येतदनुरोधेन वर्णनीयः। एतस्यैवानुवादो ह्येवं बुद्धेः परमिति वक्तव्यः। पादद्वयस्थितस्य बुद्ध्वेत्यादिक्रियाद्वयस्य कर्मद्वयं च भिन्नमेव स्वरसप्रतीतम्। अतस्तत्र द्वितीयान्तात्मशब्दो नियन्तव्यतया निर्दिष्टमनोविषयः। तृतीयान्तस्तु मनोनियमनकरणभूताध्यवसायविषयः। आहुरिति निर्देशस्तु नावश्यमुपनिषदभिप्रायेण

'इन्द्रियाणां हि चरतां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्॥

इत्याद्यनुसारेण मन्वादय आहुरित्यपि विवक्षोपपत्तेः। तस्मात् 'यो बुद्धे परतस्तु सः' इति काम एव निर्दिश्यते। तदेतदखिलमभिप्रेत्योक्तम्—तदिदमुच्यत इत्यारभ्य स काम इत्यर्थ इत्यन्तम्॥४२॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो
नाम तृतीयोऽध्यायः ॥ ३ ॥

एवं बुद्धेरपि परं कामं ज्ञानविरोधिनं बुद्ध्वाऽऽत्मानं मन आत्मना बुद्ध्या कर्मयोगेऽवस्थाप्यैनं कामरूपं दुरासदं शत्रुं जहि नाशयेति ॥ ४३ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

सदृशं चेष्टत इत्याद्युपक्रान्तज्ञानयोगसप्रमादतोपसंहारद्वारा मनसः कर्मयोगेऽवस्थापनमभिधायार्थोऽप्युपसंह्रियते—एवमिति श्लोकेन। कामविजयात्पूर्वं मनसः संस्तम्भनं कामकर्मयोगे स्थापनमेव न पुनरत्यन्तवशीकृतत्वम् । सति हि कामे मनसोऽपि क्षोभः स्यादिति पूर्वमेवोक्तमित्यभिप्रायेण कर्मयोगेऽवस्थाप्येत्युक्तम् । दुरासदमननुष्ठितकर्मयोगैरनिरस्तपापैरगृहीतसुदृढसत्त्वकवचैर्दोपदर्शनेऽप्यपाकर्तुमवश्यमशक्यमित्यर्थः । अचेतनस्य कामस्य शत्रुत्वारोपेण हिंसनीयत्वोक्तिफलितं तु नाशनमेवेत्यभिप्रायेण प्रजहि जहीत्यनयोर्नाशयेति व्याख्या ॥ ४३ ॥

इति श्रीकवितार्किकसिंहस्य कृतौ श्रीमद्रामानुजाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ।

तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोः सहसा ज्ञानयोगेऽनधिकारात्कर्मयोग एव कार्यः । ज्ञानयोगाधिकारिणोऽप्यकर्तृत्वानुसंधानपूर्वकं कर्मयोग एव श्रेयानिति सहेतुकमुक्तम् । विशिष्टतया व्यपदेश्यस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तम् । * चतुर्थे त्विदानीमस्यैव

---

अथ चतुर्थसंगतिं वक्तुं तृतीयाध्यायार्थं संग्रहेणोद्गृह्णाति—तृतीयेऽध्याय इति । सहेतुकमिति । ज्ञानयोगकर्मयोगयोः सप्रमादत्वनिष्प्रमादत्वादिहेतुपूर्वकमित्यर्थः । एतेन—

असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम् ।
सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता ॥

इति संग्रहश्लोकोऽपि व्याख्यातः । अशक्तस्य शक्तत्वेऽपि अप्रसिद्धस्य च स्वार्थनिपुणस्य कर्मयोग एव कार्यः । प्रसिद्धस्य स्वशक्तस्य शक्तस्य वा स्वार्थं लोकरक्षार्थं च स एव कार्य इति तृतीयाध्यायेनाधिकारिचिन्तनं कर्मयोगस्य ज्ञानयोगाद्वैषम्यचिन्तनं च कृतमिति भावः । अथाधिकर्तव्यतयोक्तस्य कर्मयोगस्य प्रामाणिकत्वं ज्ञानमिश्रत्वं स्वरूपं तद्वैविध्यं ज्ञानांशप्राधान्यं प्रासङ्गिको भगवदवतार इति षडर्था इहोच्यन्त इत्याह—चतुर्थे त्विति । ननु—

'प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मताऽस्य च ।
भेदा ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते' ॥

इति चत्वारोऽर्थाः संगृहीताः । तत्कथमत्र षडर्थानुकीर्तनम् । उच्यते—प्रसङ्गात्स्वस्वभावोक्तिरित्यत्र सङ्गः प्रामाणिकत्वप्रसङ्गः ।

---

* असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम् ।
सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता ॥
प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मताऽस्य च ।
भेदा ज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते ॥ २ ॥
इति अध्यायद्वयार्थसंग्राहकौ श्लोकौ मू. पुस्तके टिप्पण्याम् ।

कर्मयोगस्य निखिलजगदुद्धरणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वाऽन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारतां प्रदर्श्य कर्मयोगस्वरूपं तद्भेदाः कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते । प्रसङ्गाच्च भगवदवतारयाथात्म्यमुच्यते—

श्रीभगवानुवाच—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥

योऽयं तवोदितो योगः स केवलं युद्धप्रोत्साहनायेदानीमुदित इति न मन्तव्यम् । मन्वन्तरादावेव निखिलजगदुद्धरणाय परमपुरुषार्थ-

---

अस्य च भेदा इत्यत्र स्वरूपमन्तरेण तद्भेदस्य दुर्ज्ञानत्वात्स्वरूपमपि विवक्षितम् । चकारेण वा तत्समुच्चय इति संग्रहेऽपि षडर्था एव विवक्षिताः । स्वस्वभावोक्तिः स्वस्याकर्मवश्यावतारत्वादिस्वभावोक्तिः । कर्मणोऽकर्मता कर्मयोगस्यान्तर्गतज्ञानतया ज्ञानयोगाकारता । ज्ञानस्य माहात्म्यं कर्मयोगान्तर्गतज्ञानांशस्य प्राधान्यम् । एवं चतुर्थे त्वित्यादिभाष्येणायमपि श्लोको व्याख्यातः । कर्तव्यता हि तृतीयाध्याये प्रोक्ता । अतस्तद्दार्ढ्यमात्रमत्र पुरावृत्ताख्यानेन क्रियत इति कर्तव्यतां द्रढयित्वेत्यस्य भावः । साक्षादध्यायार्थानां संगतिं प्रदर्श्य प्रासङ्गिकं पुनराह—प्रसङ्गाच्चेति । इममिति निर्देशपूर्वकमुपदेशपरम्पराकथनस्य तात्पर्यमाह—योऽयमित्यादिना मन्तव्यमित्यन्तेन । योगोऽत्र कर्मयोगः । अत्र ज्ञानयोगपरत्वेन परव्याख्यानं प्रकृतासंगतं कुरु कर्मेत्यादि वक्ष्यमाणविरुद्धं चेति भावः । मनोरपि जनयितृ तदुपदेष्टृ च विवस्वते प्रोक्तत्वादर्जुनेन चाऽऽदावित्यनुवदिष्यमाणत्वात्फलितमुक्तम्—मन्वन्तरादाविति । निखिलजगदुद्धरणायेति । न केवलं युद्धप्रोत्साहनार्थमर्जुनमात्रार्थं वा किंतु समस्ताधिकारिवर्गापवर्गदानायेत्यर्थः । मन्वन्तरादा-

लक्षणमोक्षसाधनतयेमं योगमहमेव विवस्वते प्रोक्तवान् । विवस्वांश्च मनवे मनुरिक्ष्वाकव इत्येवं संप्रदायपरम्परया प्राप्तमिमं योगं पूर्वे राजर्षयो विदुः । स महता कालेन तत्तच्छ्रोतृबुद्धिमान्द्याद्विनष्टप्रायोऽभूत् ॥ १ ॥ २ ॥

---

वुपदेशात्तस्य निखिलजगत्साधारण्यं सूचितम् । नित्यसर्वज्ञे भगवति स्थितत्वादव्ययत्वम् । अथवाऽव्ययत्वमिह फलद्वारा । इममिति निर्देशश्च पूर्वोक्तमोक्षसाधत्वमभिप्रैतीति ज्ञापनाय परेत्याद्युक्तम् । प्रागपि न प(फ)लान्तरार्थमुक्तमिति भावः । अहं प्रोक्तवानित्यनेन मन्वन्तरादौ महाकल्पारम्भे वा भारतसमरारम्भे वा मदन्यः कश्चिदस्य यथावज्ज्ञाता वक्ता च दुर्लभ इत्यभिप्रेतम् । प्रसङ्गादवश्यं ज्ञातव्यं स्वावतारयाथात्म्यं वक्तुं स्वस्य मन्वादिकालविरोधरूपशङ्कोत्थापनं च कृतमिति व्यञ्जनायाहमेवेत्युक्तम् । विवस्वते प्रोक्तवानिति । न ह्ययमसुरादिभ्यो मयोपदिष्टो बुद्धाद्यागमार्थः किंतु सर्ववेदात्मने विवस्वत इति भावः । विवस्वान्मनवे मनुरिक्ष्वाकव इति । यद्वै किंच मनुरवदत्तद्भेषजमिति सकलजगद्भेषजभूतवचनतया प्रसिद्ध।ो दामवर्तनविशदाधिकृतकोटिनिविष्टपित्रादिक्रमेण ह्युपदेशपरम्पराप्राप्तं न तु संभवद्विप्रलम्भकुहकपापण्ड्यादिसंसर्गप्रवर्ते(प्राप्तमि)ति भावः । एतत्सर्वमेवं संप्रदायपरम्परयेत्यनेन व्यक्तम् । परम्पराशब्देनेक्ष्वाकर्वाचीनानामपि ग्रहणात् । कृतादियुगे संप्रदायाविच्छेदो विवक्षित इति चाभिप्रायः । इदानीं नाशस्याभिधानात्पूर्वे राजर्षय इत्युक्तम् । राजर्षयो विदुः । राजानो हि विस्तीर्णागाधमनसस्तत्रापि ऋषित्वादतीन्द्रियार्थदर्शनक्षमाः । ते च बहवः । ते चाश्वपतिजनकाम्बरीषप्रभृतयः सर्वेऽप्यविगानेवे(ने)मं कर्मयोगमनुष्ठितवन्त इति भावः । कालदैर्घ्यस्य विच्छेदहेतुप्रकारत्वमिहशब्दसूचितमाह—तत्तच्छ्रोतृबुद्धिमान्द्यादिति । इह विचित्राधिकारिपूर्णे जगति कृतत्रेतादिषु युगेषु कालक्रमेण बुद्धिशक्त्यनुष्ठानादयोऽपचीयमाना दृष्टाः श्रुताश्चेति भावः । नष्ट इत्यत्रात्यन्तविच्छेदो नाभिमतः, व्यासभीष्माक्रूरादेरिदानीमपि विद्यमानत्वादित्यभिप्रायेणोक्तम्—विनष्टप्रायोऽभूदिति ॥ १ ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

स एवायमस्खलितस्वरूपः पुरातनो योगः सख्येनातिमात्रभक्त्या च मामेव प्रपन्नाय ते मया प्रोक्तः सपरिकरः सविस्तरमुक्त इत्यर्थः । मदन्येन केनापि ज्ञातुं वक्तुं वा न शक्यम् । यत इदं वेदान्तोदितमुत्तमं रहस्यं ज्ञानम् ॥ ३ ॥

अस्मिन्प्रसङ्गे भगवदवतारयाथात्म्यं यथावज्ज्ञातुम्—

---

स एवायमिति सप्रत्यभिज्ञसावधारणनिर्देशफलितमुक्तम्—अस्खलितस्वरूप इति । पुरातनोऽद्येतिनिर्देशाभ्यां कालभेदमात्रेणापि न स्वरूपे वा प्रकारे वा भेद इति सूचितम् । भक्तोऽसीति वर्तमाननिर्देशादनिवृत्ता भक्तिः सूचिता । अल्पीयसी तु भक्तिः कदाचिन्निवर्तेतापीत्यभिप्रायेणोक्तम्—अतिमात्रेति । भक्तोऽसि शास्त्रदृष्टमहत्त्वानुसंधानेन प्रीतिमानसीत्यर्थः । सखा चासि अवतारदृष्टसौलभ्यविशेषेण प्रणयविस्रम्भवानसीत्यर्थः । ते मयेति शब्दावपि 'शाधि मां त्वां प्रपन्नम्' इति प्रागुक्तप्रपत्तृप्रपत्तव्ययोः प्रत्यभिज्ञापरावित्ययमपि प्रवचनहेतुरिति ज्ञापनायोक्तम्—मामेव प्रपन्नाय ते मया प्रोक्त इति । प्रोक्त इत्यत्र सोपसर्गधात्वर्थं विवृणोति—सपरिकरः सविस्तरमिति । परिकरोऽङ्गं शब्दस्य प्रपञ्चो विस्तरः । अङ्गोक्तिरप्यत्र सविस्तरेति भावः । अहं प्रोक्तवान्मयाऽद्य प्रोक्त इत्याभ्यां सूचितमाह—मदन्येनेति । प्रलयेन वा युगादिस्वभावेन वा संप्रदायविच्छेदे सति पुनरहमेव संप्रदायप्रवर्तकः स्याम् । करणायत्तज्ञानेन मदन्येन हिरण्यगर्भादिनाऽपि मदुपदेशमन्तरेण ज्ञातुं वक्तुं चाशक्यमित्यर्थः । सख्यभक्तिप्रपत्त्यादिगुणपौष्कल्ययुक्तायोपदेश्यत्वे भगवद्व्यतिरिक्तेन ज्ञातुं वक्तुं चाशक्यत्वे हेतुपदं रहस्यमित्यादीति दर्शयति—यत इति । हिशब्दोऽत्र हेतुपरः । रहस्यत्वाद्योग्यायोपदेश्यम् । उत्तमरहस्यत्वादन्येन ज्ञातुं वक्तुं चाशक्यमिति भावः । उत्तमरहस्यत्वे हेतुर्वेदान्तोदितमिति । नपुंसकनिर्देशयोग्यविशेष्यमुक्तम्—ज्ञानमिति ॥ ३ ॥

प्रसङ्गात्स्वस्वभावोक्तिरिति संग्रहश्लोकानुसारेणाऽऽह—अस्मिन्प्रसङ्ग इति । कर्तव्यतादृढीकरणार्थकथाप्रसङ्ग इत्यर्थः । भगवदवतारयाथात्म्यमकर्मवश्यत्वादिरूपम् । यथावदिति । भ्रान्ति-

अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

कालसंख्ययाऽपरमस्मज्जन्मसमकालं हि भवतो जन्म । विवस्वतश्च कालसंख्यया परमष्टाविंशतिचतुर्युगसंख्यया संख्यातम् । त्वमेवाऽऽदौ प्रोक्तवानिति कथमेतदसंभावनीयं विशेषेण यथार्थं जानीयाम् । ननु जन्मान्तरेणापि वक्तुं शक्यं जन्मान्तरकृतस्य महतां स्मृतिश्च युज्यत

---

भासिकत्वादिप्रतिक्षेपकप्रमाणोपपत्तिपूर्वकमित्यर्थः । परापरशब्दाभ्यां न देवमानुपस्वरूपं जातिवैषम्यमुच्यते । तस्योपदेशविरोधित्वाभावात् । देवानामपि देवत्वेन कृष्णस्य विदितत्वात् । जन्मशब्दस्य जननवाचितया साक्षाज्जातिवाचकत्वाभावात् । आदाविति कालविरोधस्य च व्यक्तमुक्तत्वात् । 'बहूनि मे व्यतीतानि यदा यदा युगे युगे' इत्येवमादिरूपस्योत्तरस्य च कालविरोधपरिहाररूपत्वात् । अतः परापरशब्दौ कालसंख्योत्कर्षापकर्षविषयावित्यभिप्रायेणोक्तम्—कालसंख्ययेति । अपरत्वहेतुतया विवक्षितं कालावधिं दर्शयति—अस्मदिति । समकालमिति । अदूरविप्रकृष्टमित्यर्थः । त्वंशब्द इदानींतनत्वाभिप्रायतया विरोधपर इति द्योतनाय त्वमेवेत्युक्तम् । कथमेतदित्याक्षेपसूचितमुक्तम्—असंभावनीयमिति । विजानीयामित्यत्रोपसर्गविवक्षितमाह—यथार्थमिति । जन्मान्तरस्यैवाभावाद्वा जन्मान्तरानुभूतस्य स्मृत्ययोगाद्वा वक्तुर्जन्मान्तरस्मृतिमत्तया श्रोतुरविदितत्वाद्वा खल्वेतज्जन्मावलम्बनेन विरोधचोद्यं चैतदखिलमत्र संभवतीति प्रश्नमाक्षिपति—नन्विति । जन्मान्तरेणापि वक्तुं शक्यमिति । नहि तदानींतनेन जन्मना तदानींतनायोपदेशो विरुद्ध इत्यर्थः । महतामिति । न केवलमीश्वरस्य कृष्णस्यान्येषामपि महतामिति भावः । श्रूयते हि जातिस्मरवृत्तान्तः । जातिं स्मरति पौर्विकीमिति च मनुः । युज्यत इति । अनुभवेन संस्कारे प्रागेव निष्पन्ने तस्य चादृष्टविशेषादिवशादुद्बोधे जन्मान्तरानुभूतस्मृतौ न कदाचिदयुक्तिः । यथा प्रथमस्तन्यपाने

---

१ क. ख. ग. °मसंख्या° ।

इति नात्र कश्चिद्विरोधः। न चासौ वक्तारमेनं वसुदेवतनयं सर्वेश्वरं न जानाति। यतः स एवं वक्ष्यति—

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥ इति।

युधिष्ठिरराजसूयादिषु भीष्मादिभ्यश्चासकृच्छ्रुतम्—

कृष्ण एव हि लोकानामुत्पत्तिप्रभवाप्ययः।
कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्॥

---

स्तन्यस्य पिपासाशान्तिहेतुत्वस्मृताविति भावः। महतामन्येषां स्मृतिः, ईश्वरस्य तु प्राचीनवृत्तान्तगोचरः साक्षात्कारः स्मृतिरित्युपचर्यते। कश्चिदिति। कालविप्रकर्षरूपो वा कारणाभावादिरूपो वेत्यर्थः। असाविति। वृद्धोपसेवादिभिः श्रुतादिबहुलोऽर्जुनः। वक्तारमिति। विवस्वते प्रोक्तवानहमिति स्वस्मै वक्तारम्। यद्वा विवस्वते वक्तारमित्यर्थः। एनं वसुदेवतनयमिति। मानुषव्यापारजन्मभ्यां तिरोहितेश्वरभावमपीत्यभिप्रायः। सर्वेश्वरमिति। विवस्वदादीनामपीश्वरमिति भावः। यद्वा गोवर्धनोद्धरणाद्यतिमानुषवृत्तान्तैरवतारदशायामेव चतुर्भुजत्वादिना च व्यञ्जितेश्वरत्वमिति भावः। उक्तज्ञानसद्भावं कार्येण व्यवहारेण कारणेनोपदेशेन च स्थापयति—यतः स एवमिति। एवमनेकाप्ततमोपदेशादिभिरीश्वरत्वनिष्कर्षपूर्वकमित्यर्थः। अर्जुनस्य स्ववाक्येन स्वोक्तमहर्षिगणोपदेशेन च ज्ञानानुमानमुक्तम्। भारतकथावगतेन बन्धूपदेशेन च ज्ञानवत्तामाह—युधिष्ठिरेति। बहुष्वपि वृत्तान्तेष्वाप्ततमेभ्यो बहुभ्यो बहुधा श्रुतमित्यर्थः। कृष्ण एवेति। स्थितिहेतुत्वेन प्रसिद्धः स एवोत्पत्त्यादेरपि हेतुः। न तु ब्रह्मरुद्रादिः प्रधानादिर्वा। यद्वा लौकिकैः पुरुषैर्वसुदेवतनयतया प्रतीयमानः कृष्ण एवेत्यर्थः। एको ह वै नारायण आसीदित्यादिश्रुतिप्रसिद्धिं दर्शयति—लोकानामिति। लोकस्तु भुवने जने। तत्रान्यतरविवक्षायामितरदार्थम्(र्थम्)। उ(त्पत्त्यप्यय)शब्दावत्रोत्पादकनाशकपरौ। चकारः प्रसिद्धिप्रकर्षादनुक्तं स्थितिहेत्वादिकं

इत्येवमादि । कृष्णस्य हि कृते कृष्णस्य शेषभूतमिदं कृत्स्नं जगदित्यर्थः । अत्रोच्यते जानात्येवायं भगवन्तं वसुदेवतनयं पार्थः । जानतोऽप्यजानत इव पृच्छतोऽयमाशयः—निखिलहेयप्रत्यनीककल्या-

---

समुच्चिनोति । एवं यतो वा इमानि भूतानीत्यादिना ब्रह्मलक्षणतयोक्तं सर्वकारणत्वमुक्तम् । अत एव हि परं ब्रह्मेत्यर्जुनोक्तिः । कृष्णस्य हीत्यत्र हिशब्देन पतिं विश्वस्य, करणाधिपाधिप इत्यादिप्रसिद्धिः सूच्यते । कृत इत्यस्यानेकार्थसाधारणत्वात्तादर्थ्यपरत्वव्यञ्जनायाऽऽह—कृष्णस्य शेषभूतमिति । अत्र च्विप्रत्ययाभावात्स्वाभाविकत्वं सूचितम् । दासभूताः स्वतः सर्वे इत्यादिवत् । कृष्णस्य कृते भूतमिति कृष्णार्थमुत्पन्नं सत्तायोगि चेत्यर्थः । 'जन्माद्यस्य यतः' [ ब्र० सू० १ । १ । २ ] इमानि भूतानीत्यादिपरत्रापीदंशब्दस्तत्तत्प्रमाणसिद्धविचित्रचेतनाचेतनसमुदायपरः । पुरार्धोक्तसृज्यत्वसंहार्यत्वादिप्रकारानुवादपरो वा तेन तदधीनोत्पत्त्यादिमत्त्वात्तादर्थ्ये हेतुरुक्तो भवति । कस्योदर इत्यादिवत् । अथ चोद्यपाद्विनोक्ताभ्युपगमेन प्रतिपत्तिम्—जानात्येवेति अवधारणेन नास्मिन्नंशे विवाद इति सूचितम् । अयमिति निर्देशः पूर्ववच्छ्रुतार्थत्वं सूचयति—वसुदेवसूनुं भगवानिति जानातीत्यर्थः । नामपरो वा गुणपरो वाऽत्र भगवच्छब्दः । वसुदेवसूनुपार्थशब्दाभ्यां मातुलसुतत्वपैतृष्वसेयत्वसूचनेनेतरपुरुषवदीश्वरत्वादि तिरोधाय प्राकृतसंबन्धे सत्यपि सुकृतवशादुपदेशवशाच्च जानातीत्यभिप्रेतम्, तत्प्रश्नो निरवकाश इत्यत्राऽऽह—जानतोऽपीति । नात्यन्ताज्ञातमनेन पृच्छ्यते । ज्ञातमेव विशेषान्तरजिज्ञासया परिपृष्टमिति भावः । अजानत इवेत्यनेन विनयगर्भपरिप्रश्नप्रकारश्च सूचितः । अज्ञातांशबुभुत्सां जन्मादेर्मिथ्यात्वादिशङ्कां च जनयन्तो भगवति ज्ञाता विशेषा उपादीयन्ते निखिलेत्यादिषष्ठ्यन्तपदैः । निखिलहेयप्रत्यनीकेति । यः परगतमपि जन्मजरादिहेयं निवर्तयति स कथं स्वयं तदेवोपाददीतेति भावः । कल्याणैकतानस्येति । स्वरूपानन्दतृप्तस्य किं जन्मनेति भावः ।

णैकतानस्य सर्वेश्वरस्य सर्वज्ञस्य सत्यसंकल्पस्य चाऽऽप्तसमस्तकामस्य कर्मपरवशादेव मनुष्यादिसजातीयं जन्म किमिन्द्रजालवन्मिथ्या

---

सर्वेश्वरस्येति । यदि कश्चित्स्वच्छन्दोऽस्य नियन्ता स्यात्तदा जन्मादि घटि(टे) त न सोऽस्तीत्याशयः । सर्वज्ञस्येति । यद्यसौ स्वस्य हितमहितं च न जानाति तदा हि स्वेच्छयैव बालादीनामग्न्यादिस्पर्शवज्जन्मादिपरिग्रहः स्यादित्यभिप्रायः । सत्यसंकल्पस्येति । हिताहितज्ञाने सत्यपि कश्चिच्छुष्के एतिष्यामीति कर्दमे पतति न चासौ तथेति हृदयम् । यद्वा लोकरक्षाद्यर्थमवतार इति परमोक्तं स्यात् । तदप्ययुक्तम्-संकल्पमात्रेण रक्षाद्युपपत्तेरिति भावः । अवाप्तसमस्तकामस्येति । यदि साध्यं किंचित्प्रयोजनं स्यात्तदा तदर्थं जन्मादि परिगृह्णीत न च तदप्यस्तीति भावः । एवं च सतीश्वरो न वस्तुतो जन्मादिमान्, अकर्मवश्यत्वात्, मुक्तात्मवदित्यन्वयेन, यो जन्मादिमान्स कर्मवश्यः, यथा संसारीति व्यतिरेकेण चैकमनुमानम् । तत्रैव पक्षसाध्यादौ जन्मकारणभूतेश्वरादिनियोगाविषयत्वादिति द्वितीयम् । द्वयोरप्यनुमानयोर्यो यत्कारणरहितो न स तत्कार्यवान्, यथा संप्रतिपन्न इति सामान्यतो वा व्याप्तिः । सर्वेश्वरत्वादित्युक्ते तु न दृष्टान्तः । केवलव्यतिरेकिविवक्षा तु देहपरिग्रहरहितघटादिसपक्षसद्भावात्, केवलव्यतिरेकिप्रामाण्यस्य च सामान्यतो यामुनाचार्यादिभिर्निरस्तत्वादयुक्ता । एवं देहपरिग्रहाद्यभावे संकुचितज्ञानशून्यत्वात्, प्रतिहतसंकल्परहितत्वात्, अपूर्णकामत्वरहितत्वात्, साध्यप्रयोजनरहितत्वादिति मुक्तात्मघटादिदृष्टान्तेन हेतवः । यद्वा परमसाम्यापन्नान्मुक्तानेव दृष्टान्तीकृत्य सर्वज्ञत्वात्सत्यसंकल्पत्वादवाप्तसमस्तकामत्वादित्येव हेतवः । एवं यदि जन्मादयः स्युस्तदा कर्मवश्यत्वमनीश्वरत्वमसर्वज्ञत्वमसत्यसंकल्पत्वमपूर्णकामत्वं च क्षेत्रज्ञवत्स्यादिति प्रसङ्गाश्च विवक्षिताः । निखिलहेयेत्याद्युक्तोभयलिङ्गत्वे च हेतवः सर्वेश्वरत्वादयः पूर्वोक्ताः । अविरोधितया मिथ्यात्वशङ्काहेतुः सामान्यतो विदितो जन्मप्रकार उच्यते-कर्मपरवशादेवमनुष्यादिसजातीयमिति । कर्मपरवशा देवमनुष्यादयस्तेषां सजातीयं तज्जन्मसमानतया प्रतीयमानमित्यर्थः । यद्वा [ जन्म ] शब्दोऽत्र जायमानविग्रहपरः ।

किंवा सत्यं, सत्यत्वे च कथं जन्मप्रकारः किमात्मकोऽयं देहः कश्च जन्महेतुः कदा च जन्म किमर्थं वा जन्मेति परिहारप्रकारेण प्रश्नार्थो विज्ञायते ॥ ४ ॥

परिहरन्—

श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

---

ईश्वरेण परिगृह्यमाणत्वात्, इन्द्रजालादिवदित्युक्तम् । स्वेच्छया परेषां विचित्रभ्रमजननं हीन्द्रजालम् । तेनात्र तत्प्रतिभानलक्षणादिशब्देन शैलूषभूमिकापरिग्रहादि गृह्यते । मिथ्यात्वपक्षे न तत्र कश्चित्प्रकारो निरूपणीय इति कृत्वा सत्यत्वपक्षे शङ्कते—सत्यत्व इति । कथमिति । किं पारमैश्वरस्वभावपरित्यागेनान्यथा वेत्यर्थः । किमात्मक इति । किं त्रिगुणात्मक उताप्राकृत इत्यर्थः । अयमिति । भूतसंस्थानवत्प्रतीयमान इति भावः । देह इति । उपचयरूपतया ह्युपलभ्यत इति भावः । कश्च जन्महेतुरिति । किं संकल्पमात्रमुतेश्वरस्य स्वेच्छापरिगृहीते पुण्यपापे इत्यर्थः । कदा चेति । किं पुण्यपापविपाककाले, उत धर्मग्लान्यादिकाल इत्यर्थः । किमर्थं वेति । किं सुखदुःखोपभोगार्थमुत साधुपरित्राणाद्यर्थमित्यर्थः । इति अयमाशय इत्यन्वयः । नन्वपरमिति श्लोके व्याघातमात्रमेव चोद्यते । तत्र बहुषु प्रश्नेष्वाशय इति कुतोऽवगतमित्यत्राऽऽह—परिहारेति । अयमभिप्रायः—न ह्यन्यस्य प्रश्ने तदन्यविषयतया प्रतिवचनमुपपद्यते । तथा सति प्रतिवक्तुरनभिप्रायज्ञतादिप्रसङ्गात् । अतो यावद्विषयं प्रतिवचनं तावद्विषय एवायं प्रश्न इत्युपगन्तव्यम् । अत्र प्रतिवचने चतुर्थश्लोके जन्मसत्यत्वं जन्मप्रकारो देहयाथात्म्यं जन्मनो हेतुकालप्रयोजनानि च क्रमात्प्रतिपाद्यानि प्रतीयन्ते । अतस्तान्येव प्रष्टव्यतयाऽभिप्रेतानीति ॥४॥

एषूत्तरं क्रमाद्भगवानुवाच बहूनीत्यादिभिः । न हि पूर्वजन्म-

अनेन जन्मनः सत्यत्वमुक्तम् । बहूनि मे व्यतीतानि जन्मानीति वचनात्तव चेति दृष्टान्ततयोपादानाच्च ॥ ५ ॥

आत्मनोऽवतारप्रकारं देहयाथात्म्यं जन्महेतुं चाऽऽह—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

---

नामेकत्वबहुत्वे पृष्टे न च तज्ज्ञानाज्ञाने इति शङ्कयाऽऽह—अनेनेति । कथं जन्मनः सत्यत्वमुक्तम् । बहुत्वातीतत्वतज्ज्ञानादि हि वाचनिकतया प्रतीयत इत्यत्राऽऽह—बहूनीति । अयमभिप्रायः—इदानींतनस्त्वं तदानींतनाय कथमुक्तवानिति प्रश्ने जन्मान्तरेणाहमुक्तवान्, तच्चेदानीमनुसंधाय वदामीति साक्षादुत्तरमुच्यते । तस्य च प्रश्नस्यान्यपरत्वस्य च पूर्वं सहेतुकमुक्तत्वादवश्यं पृष्टेष्वर्थेषु यत्परत्वमत्र व्याकर्तुं शक्यं तत्परा-ण्येव बहूनीत्यादिविशेषणानि । सत्यत्वे हि बहुत्वातीतत्वानि स्वरसानि जन्मानीति चोक्तं न जन्मप्रतिभासा इति तव चेत्यपृष्टस्यार्थस्योपादानमप्येतत्सत्यत्वदृष्टान्ताभिप्रायमन्तरेण न घटते। न चार्जुनस्य जन्म मिथ्या, तस्य वा तथात्वप्रतिभासः । तत्संभवे वा कृष्णजन्मनि कुतोऽस्य संशयः ॥ ५ ॥

अथ प्रकारादिप्रश्नत्रयोत्तरमनन्तरश्लोक इत्याह—अवतारेति । अजाव्ययशब्दाभ्यां प्रकृतिपुरुषयोरिव स्वरूपतो धर्मतश्च विकारा न सन्तीत्युच्यते । अजाव्ययशब्दौ कर्मकृतजन्ममरणनिवृत्तिपरौ वा । तेन हेयप्रत्यनीकत्वमुक्तं भवति । भूतानामीश्वरोऽपीति कल्याणगुणाकरत्वाप्रच्युतिरुपलक्ष्यते । यद्वा—अजशब्देन स्वरूपतः शरीरद्वारा च जन्मयुक्ताचित्क्षेत्रज्ञाभ्यां व्यावर्तनम् । अव्ययात्मेत्यात्मशब्दस्य स्वभावपरतया नञोऽत्यन्ताभावपरतया च कदाचिज्ज्ञानसंकोचादिमतो मुक्ताद्व्यावृत्तिः । ईश्वरशब्देन नित्यासंकुचितज्ञानेभ्यो नित्यमुक्तेभ्यो व्यवच्छेदः । अव्ययात्मेत्यत्रापि पूर्वोत्तरवदपि सन्नित्यनुषञ्जनीयम् । अत्र च पूर्वार्धेन तृतीयचतुर्थपादाभ्यां च प्रश्नत्रयस्य क्रमात्परिहारः । आदिशब्देनेश्वरत्व-

अजत्वाव्ययत्वसर्वेश्वरत्वादिसर्वपारमैश्वर्यप्रकारमजहदेव स्वां प्रकृतिमधिष्ठायाऽऽत्ममायया संभवामि प्रकृतिं स्वभावं स्वमेव स्वभावमधिष्ठाय स्वेनैव रूपेण स्वेच्छया संभवामीत्यर्थः । स्वरूपं तु 'आदि-

लक्षितसर्वज्ञत्वसत्यसंकल्पत्वादीनि गृह्यन्ते । सर्वमिति । न कस्यचिदपि स्वभावातिशयस्य हानिरित्यर्थः । परमेश्वरसंबन्धि पारमैश्वरं परमेश्वरत्वप्रयुक्तमित्यर्थः । अपि सन्नित्यस्य वर्तमानस्य निर्देशस्य तात्पर्यमाह—अजहदेवेति । एतेन तत्तदवतारेषु तासु तास्ववस्थासु च पारमैश्वरस्वभावस्य सत एव स्वेच्छया तिरोधानमात्रमिति सूचितम् । तथा चाऽऽहुर्गुणैः षड्भिरित्युपक्रम्य भवान्सर्वत्रैव त्वगणितमहामङ्गलगुण इति । अवतारेषु हि परमेश्वरत्वं व्यपदिश्यते—ईशः सन्नपि महायोगी, कृष्ण एव हि लोकानाम्, व्यक्तमेष महायोगी परमात्मेत्यादिभिः । नात्र प्रकृतिशब्देन प्रकृतिं स्वामवष्टभ्य विसृजाम्यात्ममाययेत्यादिष्विव त्रिगुणा प्रकृतिरुच्यते । अवतारेष्वपि तद्विग्रहस्य त्रिगुणोपादानकत्वाभावात् । तथोक्तम्—

न भूतसंघसंस्थानो देहोऽस्य परमात्मनः ।
न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा । इति ।

अतोऽत्रावतारयुक्ताऽन्या प्रकृतिरुच्यत इत्यभिप्रायेणाऽऽह—प्रकृतिं स्वभावमिति । प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे, इति नैघण्टुकाः । विग्रहस्यापि नित्याऽलिङ्गस्वभावसंसिद्धिरित्येकायनश्रुत्यनुसारेण निरुपाधिकस्वासाधारणविशेषणत्वात्स्वभावशब्देनोपादानं गोबलीवर्दन्यायाच्च । अत्र विग्रहाख्यस्वभावविशेषपरतास्वभावपर्यायप्रकृतिशब्देनापृथक्सिद्धिलाभेऽपि स्वामिति निर्देशो जीवसाधारणत्रिगुणप्रकृतिव्यवच्छेदार्थ इत्यभिप्रायेणोक्तम्—स्वमेवेति । अन्तरधिकरणभाष्येऽप्येतद्व्याख्यातम्—स्वमेव स्वभावमास्थाय न संसारिणां स्वभावमित्यर्थ इति । प्रकृतिशब्दस्यात्र विग्रहपरत्वमधिष्ठायेत्यनेन सूचितम् । स्वानन्त्यं दर्शयति—स्वेनैव रूपेणेति । यद्वा स्वमेव स्वभावमित्याद्येकवाक्यं संकलितार्थपरमधिष्ठायेत्येतदन्तं पूर्वार्धस्यार्थः । स्वेनैव रूपेणेति तु तृतीयपादस्य । स्वेच्छयेति चतुर्थपादस्य । अस्यां योजनायां प्रकृतिशब्दोऽवतारोपादानभूतदिव्यविग्रहमेवाऽऽह । अवतारविग्रहोपादानभूतप्रकृतेर्बहुश्रुतिसिद्धतामाह—स्वरूपमिति । स्वरूपं

त्यवर्णं तमसः परस्तात्। क्षयं तमस्य रजसः पराके। य एषोऽन्तरादित्ये हिरण्मयस्तस्मिन्नयं पुरुषो मनोमयोऽमृतमयो हिरण्मयः। सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः। महारजतं वासः' इत्यादि-

---

ब्रह्मणोदरमिति प्रयोगात्स्वरूपशब्दोऽत्र विग्रहपरः। आदित्यवर्णं तमसः परस्तादित्यनेनाप्राकृतत्वं स्वासाधारणं निरतिशयदीप्तियुक्तत्वं च सिद्धम्। तत्प्रकरणे च देशविशेषवर्तित्वनित्यसूरिसेव्यत्वलक्ष्मीपतित्वादिकमपि भाव्यम्। क्षयं तमित्यत्र रजःशब्दो मूलप्रकृतिविषयः। न तु लोकविषयः। तमसः परस्तादित्यनेन तुल्यार्थत्वात्। रजोगुणकत्वाच्च रजःशब्देनोपादानम्। व्याप्तस्य देशे विशेषे क्षयं तमिति निवासवचनाद्विग्रहवत्त्वं सिद्धम्। एवं परमपदनित्यनिरवद्यविग्रहसद्भावः श्रुतिद्वयेन दर्शितः। तस्यैव विग्रहस्यावस्थानस्थलं दर्शयति—य एष इति। आदित्यवर्णं हिरण्मय इति चैक एव वर्णः प्रतियोगिभेदाधीनप्रातिकूल्यानुकूल्याभ्यां शब्दभेदेन निर्दिश्यते। यदाहुर्द्रमिडाचार्याः—हिरण्मय इति। रूपसामान्याच्चन्द्रमुखवदिति। यद्वा हिरण्यविकारत्वव्यवच्छेदार्थं द्रमिडभाष्यम्। तत्र मयूरकण्ठच्छविशुद्धहेमेति स्वशाखानुसाराच्छ्यामत्वसिद्धिः। अथवा स्वेच्छया तत्र तत्र रूपभेदेऽपि न दोषः। युगादिभेदे पर्यायतः सितरक्तादिविकल्पितवासुदेवादिव्यूहरूपभेदवत्। तस्यैव हृदयान्तर्वर्तित्वे श्रुतिमुदाहरति—तस्मिन्निति। मनोमय इति। विशुद्धेन मनसा प्रचुरः, ग्राह्य इत्यर्थः। आभ्यां श्रुतिभ्यामुपासनस्थानविशेषस्थितिर्दर्शिता। कारणवाक्येऽपि तस्य सद्भावं दर्शयति—सर्व इति। विद्युत इति। परं विद्युद्वर्णादित्यन्यत्र व्याख्यातम्। शान्त उपासीतेति पूर्वोक्तमुपासनं स क्रतुं कुर्व(वी)तेत्यत्र तच्छेषतया विधीयमानेषु पारमार्थिकेषु विग्रहस्य सह पाठं दर्शयति—भारूप इति। भास्वररूप इत्यर्थः। माहारजनं वास इत्येषा श्रुतिः शारीरके व्याख्याता। तस्य ह वा एतस्य पुरुषस्य रूपम्, यथा—माहारजनं वास इत्यादिनाऽऽकारविशेषं चाभिधास्यतीति।

श्रुतिसिद्धम् । आत्ममायया ऽऽत्मज्ञानेन । माया वयुनं ज्ञानमिति ज्ञानपर्यायोऽत्र मायाशब्दः । तथा चाभियुक्तप्रयोगः—

मायया सततं वेत्ति प्राणिनां च शुभाशुभम् ।

इति । आत्मीयेन ज्ञानेनाऽऽत्मसंकल्पेनेत्यर्थः । अतोऽपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैश्वरं स्वभावमजहदेव स्वमेव रूपं

---

सर्वासु चाऽऽसु श्रुतिषु विलक्षणस्थानविशिष्टत्ववर्णविशेषपुरुषशब्दादिभिः पूर्वोपात्तपुरुषसूक्तवाक्यैकार्थत्वं सिद्धम् । षष्ठीसमासे स्वस्वामित्वलक्षणः संबन्धोऽत्र विवक्षित इत्याह—आत्मीयेनेति । माया वयुनं ज्ञानमिति निघण्टूपादानं स्वेच्छयाऽवतरणकरणे स एवार्थ उचित इति भावः । निघण्टुसिद्धमर्थं तन्मूलभूताभियुक्तप्रयोगेण द्रढयति—तथा चेति । मायया वेत्तीति निर्देशादियं माया निघण्टुसिद्धं ज्ञानमेव, परनिसिद्धमायायास्तत्त्वार्थप्रकाशकत्वाभावादिति भावः । एतेन प्रकृतिशब्दस्यात्र त्रिगुणात्मकप्रकृतिविषयत्वं मायाशब्दस्य मिथ्यार्थपरत्वं च शंकरोक्तं प्रत्युक्तम् । आत्ममाययेत्यस्य परमार्थतो लोकवदिति व्यवच्छेदश्चायुक्तः । अन्येषामपि जन्मनस्तन्मते मिथ्यात्वाद्यविशेषात्फलितं वक्तुमाह—आत्मीयज्ञानेनेति । ज्ञानमात्रस्य कथमवतारहेतुत्वं तथा सति सर्वदाऽवतारप्रसङ्गादित्यत्राऽऽह—आत्मसंकल्पेनेत्यर्थ इति । श्लोकस्य प(पि)ण्डितार्थं विशदयति—अत इति । अपहतपाप्मत्वादीत्यनेन दहरविद्यासुबालोपनिषत्प्रभृतिषु निर्दोषत्वमङ्गलगुणाकरत्वप्रतिपादकानां वाक्यानां स्मारणम्—

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥

इत्यादि स्मारितम् । ईश्वरस्वभावः सर्वोऽप्युभयलिङ्गत्वेन संगृह्यत इत्यभिप्रायेणोक्तम्—सर्वमैश्वरं स्वभावमिति । स्वमेव रूपमित्यादिना—

'समस्तशक्तिरूपाणि तत्करोति जनेश्वरः ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥ [वि० पु० ६।७।७०]

इत्यादि भगवत्पराशरवचनं स्मारितम् । अजत्वश्रुत्या स्मृति-

देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसंकल्पेन देवादिरूपः संभवामि। तदिदमाह–'अजायमानो बहुधाऽभिजायते' इति श्रुतिः। इतरपुंसांसाधारणं जन्म कुर्वन्देवादिरूपेण स्वसंकल्पेनोक्तप्रक्रियया जायत इत्यर्थः। बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि। तदाऽऽत्मानं सृजाम्यहम्। जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वत इति पूर्वापराविरोधाच्च ॥ ६ ॥

जन्मकालमाह–

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥**

न कालनियमोऽस्मत्संभवस्य। यदा यदा हि धर्मस्य वेदोदितस्य चातुर्वर्ण्यचातुराश्रम्यव्यवस्थया व्यवस्थितस्य कर्तव्यस्य ग्लानि-

रियं बाध्येतेत्यत्राऽऽह–तदिदमाहेति। अजायमानत्वजायमानत्वोक्त्या व्याहतत्वादन्यपरेयं श्रुतिरित्यत्राऽऽह–इतरेति। अजायमान इति सामान्यनिषेधो बहुधा विजायत इति विशेषविधानसंनिधानात्संकुचितविषयः। अतो विरोधे शान्ते तात्पर्यान्तरं न कल्प्यम्। न चेदं बहु स्यामितिवज्जगद्रूपेण बहुवचनम्। सत्य-(तस्य)धीराः परिजानन्ति योनिमित्यनन्तरवाक्यैर्मुमुक्षूणामत्यन्तोपकारकावताररहस्यज्ञानस्यैव वक्तुमुचितत्वात्। अस्य च तथैकार्थ्यादिति भावः। सत्यमिथ्यात्वाभ्यां विरोधपरिहारशङ्कां प्रतिक्षेप्तुं प्रकृतिं स्वामधिष्ठायेत्यस्य विग्रहपरत्वे मायाशब्दस्य ज्ञानपरत्वे च हेत्वन्तरमाह–बहूनीति। सृजामि दिव्यमिति शब्देन जन्मनो बुद्धिपूर्वत्वेच्छामात्रकृतत्वदिव्यत्वादि प्रतीयते। मायादिशब्दस्याविद्यादिपरत्वे तु तदखिलं विरुध्येत। न ह्यत्र जन्मशब्दो जन्मप्रतिभासवाची। न च प्रध्वस्तपर्यायो व्यतीतशब्दो बाधपरः। न च मायागृहीतस्य सर्ववेदित्वं नापि मिथ्याभूते सृष्टिशब्दः। न च त्रिगुणप्रसूतस्य दिव्यत्वमिति भावः॥६॥

कदेति प्रश्नस्योत्तरमुच्यत इत्याह–जन्मकालमाहेति। युगानियमस्य वक्ष्यमाणत्वाद्यदा यदेति वीप्सा युगान्तर्वर्तिकालानियमपरेत्यभिप्रायेणाऽऽह–न कालेति। जीवपुण्यापुण्यवि-

१ क. ख. ग. °रुपस°। २ क. ख. ग. जन्माकु°। ३ क. ख. घ. प्रकृत्या जा°।

र्भवति। यदा यदा च तद्विपर्ययस्याधर्मस्याभ्युत्थानं तदाऽहमेव स्वसंकल्पेनोक्तप्रकारेणाऽऽत्मानं सृजामि ॥ ७ ॥

जन्मनः प्रयोजनमाह—

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

---

पाककृतो वा व्यवस्थितस्वसंकल्पकृतो वा मन्वन्तरमहाकल्पादिरूपो वा कालनियमो नास्तीत्यर्थः। प्रमाणतः स्वरूपतश्च ग्लानिप्रकारसूचनाय बाह्यधर्मैकदेशव्यवच्छेदाय च वेदोदितस्येत्यादि विशेषणम्। वेदोदितस्य कर्तव्यस्येति धर्मलक्षणमप्युक्तं भवति। अधर्मशब्दे नञो विरोधिविषयकत्वमभिप्रेत्योक्तम्—तद्विपर्ययस्येति। ततश्चावैदिकागमोदितस्य वर्णाश्रमादिव्यवस्थारहितस्य तत एवाकर्तव्यस्येति पूर्वोक्तप्रकारवैपरीत्यं फलितम्। धर्मग्लानेरधर्मोत्थानस्य च तुलाग्रनमनोन्नमनवत्परस्पराविनाभावित्वं च दर्शितम्। तदेत्यत्रापि यदा यदेत्येतत्प्रतिनिर्देशरूपत्वाद्वीप्साऽनुसंधेया। धर्मस्य ग्लानिमपि न सहे किं पुनर्विच्छेदमिति ग्लानिशब्दतात्पर्यम्। एवमधर्मस्योद्गममात्रमपि न सहे किमुत शाखानुशाखतामित्यभ्युत्थानशब्दाभिप्रेतम्। अहं सृजामीत्यत्रापेक्षणीयान्तरादर्शनादहमेव स्वसंकल्पेनेत्युक्तम्। तेन कालस्याप्यधिष्ठातुस्तस्य कालपरतन्त्रत्वं परिहृतं भवति। आत्मानं सृजामीत्येतन्न तावत्स्वरूपविषयं तस्य नित्यत्वात्। आत्माश्रयादिप्रसङ्गाच्च। नापि जीवविषयम्। प्रकरणासंगतत्वात्। नाप्याद्यविग्रहविशिष्टस्वात्मविषयं तस्यापि रूपस्य नित्यत्वात्। अतोऽवतारविग्रहविशिष्टस्वात्माऽत्राऽऽत्मानमिति निर्दिश्यत इति अभिप्रायेणोक्तम्—उक्तप्रकारेणेति ॥ ७ ॥

किमर्थमिति प्रश्नस्योत्तरमुच्यत इत्याह—जन्मन इति। साधुशब्दोऽत्र नासमर्थादिविषयः, दुष्कृच्छब्दप्रतियोगिरूपत्वात्। अतः

साधव उक्तलक्षणा धर्मशीला वैष्णवाग्रेसरा मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणामवाङ्मनसगोचरतया मद्दर्शनादृते स्वात्मधारणपोषणादिसुखमलभमाना अणुमात्रकालमपि कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषां

---

सुकृतिविषयोऽयमित्यभिप्रायेणोक्तम्— उक्तलक्षणधर्मशीला इति । उक्तलक्षणशब्देन वेदोदितस्येत्यादि परामृश्यते । ये पुनरुक्तलक्षणधर्मेण देवतान्तराण्येवोपासते ये चावैष्णवाः प्रतर्दनविद्यादिन्यायेन तत्तद्देवताविशिष्टवेषेणैव भगवन्तमुपासते न तेषामवतारप्रदर्शनेऽत्यन्तनिर्बन्धः, तत्तद्देवताकञ्चुकितवेषेणैव तदपेक्षितसकलप्रधानोपयुक्तेरित्यभिप्रायेणोक्तम्—वैष्णवाग्रेसरा इति । भगवद्भक्तवर्या इत्यर्थः । उक्तलक्षणधर्मशीला ये वैष्णवाग्रेसरा इति पदाभ्यां न चलति निजधर्मधर्मतो यः, वर्णाश्रमाचारवतेत्यादि सूचितम् । यथावस्थितमुपायं प्राप्यं चावलम्बमान इति फलितम् । त्राणं हि नामानिष्टनिवर्तनपूर्वकेष्टप्रापणम् । एवंविधवैष्णवाग्रेसराणामनिष्टश्च भगवदलाभः । तत्समाश्रयणपूर्वतल्लाभेनैव तस्यानिष्टस्य निदर्शनमित्यभिप्रायेणोच्यते—मत्समाश्रयण इत्यारभ्याऽऽलापादिदानेनेत्यन्तेन । अत्यन्तेष्टभोज्यपानादिताम्बूलादिस्वात्मधारणपोषणादिकं सुखं किं त्वहं कृष्ण एव सर्वमित्यभिप्रायेणोच्यते—मद्दर्शनात्स्वात्मधारणपोषणादिकमलभमाना इति । अदर्शनं चानिष्पन्नयोगावस्थत्वात् । यद्यमी मत्साक्षात्कारात्पूर्वमल्पं कालं लोचने मीलयित्वा सहेरंस्तदाऽहमपि तादृशीं तेषामवस्थां सहेयापि । न त्वेते तथेत्यभिप्रायेणोक्तम्—अणुमात्रेत्यादि । त्रुटिर्युगायते त्वामव(प)श्यतामित्यादिकमिह भाव्यम् । अदर्शनदुःखस्य च प(च)रमावस्थोच्यते—प्रशिथिलसर्वगात्रा भवेयुरिति । स्वविश्लेषपरिक्लिष्टानामुज्जीवनाय प्रवृत्तस्य क्रमाद्भक्तानुभाव्याकारा उच्यन्ते—मत्स्वरूपचेष्टितावलोकनालापादिदानेनेति । नह्यपवर्गसुखादिवदवतारमन्तरेण स्वसंकल्पमात्रेणैतद्दातुं शक्यमिति भावः । परित्राणायेत्यत्रोपसर्गेण विविधानिष्टनिवृत्तिपूर्वकविविधेष्टप्राप्तिः सूचितेत्यभिप्रायेण मन्नामकर्मेत्यादिकं धारणेत्यादिकं स्वरूपचेष्टितेत्यादिक-

परित्राणाय तद्विपरीतानां विनाशाय च क्षीणस्य वैदिकधर्मस्य मदाराधनरूपस्याऽऽराध्यस्वरूपप्रदर्शनेन तस्य स्थापनाय च देवमनुष्यादिरूपेण युगे युगे संभवामि । कृतत्रेतादियुगविशेषनियमोऽपि नास्तीत्यर्थः ॥ ८ ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

एवं कर्ममूलभूतहेयत्रिगुणप्रकृतिसंसर्गरूपजन्मरहितस्य सर्वेश्वरत्व-

---

मुक्तम्। स्वरूपमत्र विग्रहः । एवं साधूनामान्तरभयात्परित्राणमुक्तम्।अथ तेषामेव बाह्यभयात्परित्राणमुच्यत इत्यभिप्रायेणाऽऽह—तद्विपरीतानां विनाशाय चेति। चकारोऽन्वाचयार्थः। इदमप्युक्तमन्तरित्यधिकरणभाष्ये—साधवो ह्युपासकास्तत्परित्राणमेवोद्देश्यमानुषङ्गिकस्तु दुष्कृतां विनाशः, संकल्पमात्रेणापि तदुपपत्तेरिति भावः । भागवतानामपराधो हि दुष्कृत्त्वकाष्ठेत्यभिप्रायेण—तद्विपरीतानामित्युक्तम्। 'रिपूणामपि वत्सलः। मच्छरैस्त्वं रणे शान्तस्ततः पूता भविष्यसि' इतिवद्दुष्कृतामपि विनाशो नात्यन्तविनाशः किंतु वैपरीत्यहेतुभूतराक्षसप्रभृतिशरीरग्रन्थ्यादिविनिवर्तनं तन्निवृत्तौ च तेषामपि धार्मिकत्वं संभवेदिति सोऽपि धर्मसंस्थापनपर्यवसितः। मच्छेषभूतमाराधनं मयैव हि स्थापनीयमित्यभिप्रायेण—मदाराधनरूपस्येत्युक्तम्। अनुष्ठानमुखेनोपदेशमुखेन च धर्मप्रवर्तनं व्यासादिद्वाराऽपि शक्यम्। आराध्यरूपप्रदर्शनेन भक्त्युत्पादनमवतारासाधारणप्रयोजनम् । परःशतपरुषवादी जन्मत्रयशत्रुः शिशुपालोऽपि हि कृष्णदर्शनप्रीतिमान्भूत्वा मुक्तिं गत इत्यभिप्रायेणाऽऽराध्यस्वरूपप्रदर्शनेनेत्युक्तम्। 'रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणाम्' इत्यादि च भाष्यम्, एतेन धर्मस्य सम्यक्स्थापनं हि स्वपर्यन्ततया स्थापनमित्युक्तं भवति। युगे युग इति वीप्सातात्पर्यं व्यनक्ति—कृतत्रेतादीति। न तु प्रतियुगमवश्यं संभवामि नापि युगविशेषनिर्बन्ध इति भावः ॥ ८ ॥

प्रासङ्गिकस्यावतारयाथात्म्यकथनस्य परमप्रकृतमोक्षोपयोगित्वमुच्यते—जन्मकर्मेति श्लोकेन। एवमिति। अजोऽपीत्यादिनो-

सर्वज्ञत्वसत्यसंकल्पत्वादिसमस्तकल्याणगुणोपेतस्य साधुपरित्राणमत्समाश्रयणैकप्रयोजनं दिव्यमप्राकृतं मदसाधारणं मम जन्म चेष्टितं च तत्त्वतो यो वेत्ति स वर्तमानं देहं परित्यज्य पुनर्जन्म नैति मामेव प्राप्नोति। मदीयदिव्यजन्मचेष्टितयाथात्म्यविज्ञानेन विध्वस्तसमस्तमत्समाश्रयणविरोधिपाप्माऽस्मिन्नेव जन्मनि यथोदितप्रकारेण मामाश्रि

---

क्तप्रकारेणेत्यर्थः। दिव्यमित्यस्यैवार्थोऽप्राकृतमिति। मदसाधारणमित्यनेन बहु स्यां प्रजायेयेत्युक्तम्। जन्मव्यवच्छेदो वह्न्यौष्ण्यादिवद्धर्मिग्राहकप्रमाणसिद्धः। पदार्थान्तरेष्वदृष्टश्च प्रकारो न तर्कबाध्य इति भावः। जन्म कर्म च मे दिव्यमित्युक्ते जन्मवत्तद्धेतुभूतं पुण्यमपि किमस्तीति शङ्काव्युदासाय चेष्टितमिति व्याख्यातम्। तत्त्वत इति। संशयविपर्ययरहितमित्यर्थः। देहं परित्यज्येत्युक्ते प्रारब्धकर्मपर्यवसानदेहं परित्यज्येति साधारणप्रतीतिः स्यात्तद्व्यवच्छेदाय वर्तमानं देहं परित्यज्येत्युक्तम्। एतच्च यो वेत्ति स पुनर्जन्म नैतीति वेदितृत्वावस्थापेक्षया पुनर्जन्मप्रतिषेधात्फलितम्। पुनर्जन्म नैतीत्यनेन विरोधिनिवृत्तिरुच्यते मामेतीतीष्टप्राप्तिः। न केवलं विरोधिनिवृत्तिमात्रेण स्वात्मानन्दानुभवमात्रमपि त्ववतारहस्यज्ञानवान्मामेव प्राप्नोतीत्यवधारणार्थः। ननु वर्तमानं देहं परित्यज्येत्याद्ययुक्तम्। प्रारब्धकर्मावसानेऽपि मोक्षः शारीरके निर्णीतः। प्रारब्धस्य च कर्मणः कियन्ति जन्मानि साध्यानीति न नियमः। व्यासादिष्वनियमदर्शनात्। न च जन्मकर्मज्ञानमात्रान्मोक्षः। दीर्घकालनैरन्तर्यादरसेवनीयदुष्कृततरकर्मज्ञानानुगृहीतोपासनाशास्त्रार्थनैरर्थक्यप्रसङ्गादित्यत्राऽऽह—मदीयेति। दिव्यजन्मचेष्टितज्ञानेनोपासनाविरोधिनां समस्तानां पापानां निवृत्तत्वादस्मिन्नेव जन्मनि जन्मान्तरारम्भकपापांशप्रशमनसमर्थपुष्कलोपासननिर्वृत्तेर्न जन्मान्तरपरिग्रहः। स्मरन्ति च—' सुनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ' इति। एवं चोपासनपौष्कल्यहेतुतयाऽस्याभिधानात्परम्परया मोक्षसाधनत्वमिति नोपासनशास्त्रवैयर्थ्यमिति भावः। यथोदितप्रकारेण मामाश्रित्येति पुष्कलध्या-

यदेकप्रियो मदेकचित्तो मामेव प्राप्नोति ॥ ९ ॥

तदाह—

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

मदीयजन्मकर्मतत्त्वज्ञानाख्येन तपसा पूता बहव एवं संवृत्ताः ।

---

नादन्योच्यते । मदेकप्रिय इति तु भक्तिरूपापन्नतोक्तिः । अहमेक एव प्रियः प्रीतिविषयो यस्य स मदेकप्रियः । प्रियो हि ज्ञानिनोऽत्यर्थमहमिति वक्ष्यते । एतेन पुरुषार्थान्तरनिष्ठव्यवच्छेदः । मदेकचित्त इति समाध्यवस्था । मय्येकस्मिन्नेव चित्तं यस्य स मदेकचित्तः ॥ ९ ॥

उपासनैश्वर्यमित्यादिश्लोकोत्तरत्वेन योऽयमर्थ उक्तः, अयमेव वीतरागेति श्लोकेनोच्यत इत्याह—तदाहेति । तदेव पूर्वप्रस्तुतं ज्ञानमिह ज्ञानतपसेत्युच्यते । मन्मया मामुपाश्रिता इति तु परम्परया तत्साध्यज्ञानमित्यभिप्रायेणाऽऽह—मदीयेति । अस्य श्लोकस्य पूर्वश्लोकेन व्याख्यातप्रायत्वादेवं संवृत्ता इति संग्रहेणोक्तम् । तथाहि ज्ञानतपसा पूता इत्यस्यार्थो मदीयेत्यारभ्य पापमित्यन्तेन प्रपञ्चितः । मामाश्रित्येत्यनेन मामुपाश्रिता इत्यस्यार्थ उक्तः । मदेकप्रिय इत्यनेन वीतरागभयक्रोधा इत्यस्यार्थोऽभिप्रेतः । विषयान्तरेषु प्रीतिर्हि रागः । तद्विरोधिषु निरसनेच्छा क्रोधः । आगामीष्टविरोध्यनिष्टागमोत्प्रेक्षा भयम् । तदेतदखिलमपि न वासुदेवभक्तानामस्ति । तदेकप्रियत्वेन विषयान्तरे रागाभावात् । तत एव तन्मूलक्रोधाभावात् । तल्लाभालाभव्यतिरिक्तेष्टानिष्टाभावेन भयाभावाच्च । इदं च न क्रोधो न च मात्सर्यमित्यादिषु प्रसिद्धम् । मदकेचित्त इति मन्मया इत्यस्यार्थः । ज्ञानविषयभूतेन मया प्रचुरा मन्मयाः । तादात्म्यविकारार्थयोरत्रानुपपन्नत्वादन्तर्यामित्वविवक्षायास्तस्य सर्वसाधारणत्वाच्च । मन्मया इत्यत्रेश्वरभेददर्शिन इति शंकरोक्तं शास्त्रोपक्रमादिविरोधाच्छब्दस्य चावाचकत्वान्निरस्तम् । मामेव प्राप्नोतीत्यनेन मद्भावमागता इत्यस्यार्थो दर्शितः । मुक्त्यवस्थायामपि ताद्वा-

तथा च श्रुतिः—' तस्य धीराः परिजानन्ति योनिम् ' इति । धीरा धीमतामग्रेसरा एव तस्य जन्मप्रकारं जानन्तीत्यर्थः ॥ १० ॥

कथमित्यत्राऽऽह —

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

न केवलं देवमनुष्यादिरूपेणावतीर्य मत्समाश्रयणापेक्षाणां परित्राणं करोमि अपि तु मत्समाश्रयणापेक्षा यथा येन प्रकारेण स्वापेक्षानुरूपं मां संकल्प्य प्रपद्यन्ते समाश्रयन्ते तान्प्रति तथैव तन्मनीषितप्रकारेण

---

रम्यस्य श्रुतिस्मृतितदर्थापत्तिसूत्रादिविरुद्धत्वात् । अत्रापि मामेति सोऽर्जुन इति कर्मकर्तृव्यपदेशान्मम साधर्म्यमागता इति परस्ताद्वक्ष्यमाणत्वाच्च मद्भावमागता इत्यस्य मत्स्वभावमपहतपाप्मत्वादिकं प्राप्ता इत्यर्थः । यद्वा ब्रह्मैव भवतीत्यादाविवात्यन्तसाम्यात्तद्व्यपदेशः । अवताररहस्यस्य च ज्ञातव्यत्वे श्रुतिरप्यस्तीत्याह—तथा चेति । उक्तार्थसंवादित्वं विवृणोति—धीमतामग्रेसरा इत्यादिना । एवं धीरशब्दस्य निर्वचनेन प्रागुक्तभगवत्प्राप्तिपर्यन्ताभङ्गुरज्ञानवत्त्वमुक्तं भवति । परिजानन्तीत्यत्रोपसर्गेण पूर्वोक्तयथावस्थितप्रकारोऽभिप्रेत इति ज्ञापनायैतस्य जन्मप्रकारं जानन्तीत्युक्तम् । धीमतामग्रेसरा एवेति पाठे तु विशेषविधेर्विशेषानिषेधः फलित इति भावः ॥ १० ॥

एवं साधुपरित्राणाद्यर्थदेवमनुष्यादिसजातीयस्वेच्छावतारवर्णनमुखेनोपासनोपयुक्तं स्वस्य सौलभ्यमुक्तम् । अथ तस्यैव काष्ठाप्राप्तां दशां दर्शयति—ये यथेति श्लोकेन । अत्र कृष्णावतारवृत्तान्तेन सहार्चावतारवृत्तान्तोऽपि संगृहीतः । ये यथा तांस्तथैवेति शब्दाः पूर्वोक्ताधिकारितदनुष्ठानप्रकारादिनियमनिवृत्तिपरा इत्यभिप्रायेणाऽऽह—न केवलमिति । स्वापेक्षानुरूपमिति । पतित्वपुत्रत्वसारथित्ववराहनरसिंहादिप्रक्रिययेत्यर्थः । संकल्प्य मनोरथविषयं कृत्वेत्यर्थः । एतदेवात्र प्रपदनमित्याह—समाश्रयन्त इति । तांस्तथैव भजाम्यहमित्यत्र तद्भजनप्रकारेणापि तान्भजामीत्येतदसंगतमिति शङ्कानिरासाय तथैवेत्यस्यार्थमाह—तन्मनीषितप्र-

भजामि मां दर्शयामि किमत्र बहुना सर्वे मनुष्या मदनुवर्तनैकमनोरथा मम वर्त्म मत्स्वभावं सर्वं योगिनां वाङ्मनसागोचरमपि स्वकीयैश्चक्षुरादिकरणैः सर्वशः स्वापेक्षितैः सर्वप्रकारैरनुभूयानुवर्तन्ते ॥ ११ ॥

---

कारेणेति। न तु स्वकीयपरत्वानुरूपप्रकारेणेति भावः। अत्र यथाभिलषितफलप्रदानेन पक्षपातपरिहारार्थत्वं परोक्तं पूर्वोत्तराभ्यां नात्यन्तसंमतं चातुर्वर्ण्यमित्यादिनाऽर्थतः पुनरुक्तिश्च स्यात्। सेवकान्प्रति सेव्यस्य भजनं नाम सुलभदर्शनत्वमित्यभिप्रायेण प्रदर्शयामीत्युक्तम्। उत्तरार्धस्य लोकेऽपि प्रदर्शनपरमुत्तरार्धं न पुनर्यदि ह्यहं न वर्तेयेत्यादाविव स्वस्य लोकानुविधेयानुष्ठानवत्त्वपरम्। तस्येहासंगतत्वादित्यभिप्रायेण वाङ्मनसागोचरसौलभ्यपरतां विवृणोति—किमत्र बहुनेति। मनुष्यशब्दः रुयादीनामपि संग्राहक इत्यभिप्रायेण सर्वशब्दः। वर्त्मशब्दो न साक्षात्सरणिवाचकः। असंगतवाक्यार्थत्वप्रसङ्गात्। नाप्याचारपरः। तस्याप्यत्रासंगतत्वेनोक्तदूषणत्वात्। एतयैवेनं (वेनैव) प्रवर्तितं चक्रं तेनैव स्थापिता ब्रह्मकु(म)र्यादा लोकभाविनीत्याद्युक्तशास्त्रमर्यादानुवर्तनपरत्वमपि निरस्तम्। अतोऽत्र सौलभ्योपदेशप्रकरणेऽस्यासाधारणविग्रहचेष्टासौशील्यादिस्वभावसमुदायपरत्वमेवोचितमित्यभिप्रेत्योक्तम्—मम वर्त्म मत्स्वभावं सर्वमिति। सरणिवाचकमपि हि शब्दमुपचारात्स्वभावविषयतया प्रयुञ्जते। यथा—'कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्' इति। मनुष्या इत्यनेन सूचितमुच्यते—योगिनामिति। योगपरिशुद्धमनसां वाङ्मनसागोचरमपि मां सचक्षुषो मनुष्या बाह्येन्द्रियैरप्यनुभवन्तीत्यर्थः। प्रियतमपितृपुत्रसुहृद्भ्रातृभृत्यसारथित्वरूपाण्यर्चावताररूपाणि च सर्वश इत्यनेन विवक्षितानीत्याह—स्वापेक्षितैरिति। अनुभूयानुवर्तन्ते। अनुभवन्तो वर्तन्त इत्यर्थः। अलंकरणयात्रोत्सवसेवादिर्वा प्रकारः। अत्र योगिनां वाङ्मनसागोचरमपि चक्षुरादिकरणैरिति वचनादर्चावताररूपेऽपि पररूपत्वानुसंधानं दर्शितम्। यथा स्मरन्ति—तामेव ब्रह्मरूपिणीम्। इति। वक्ष्यति च भगवान्—भुजैश्चतुर्भिरित्यादि। एवं प्रसङ्गात्कृतं सौलभ्यातिरेकं सारथ्यादिना पश्यतोऽपि

पाण्डवस्योपासिसिक्षापूर्त्यर्थं कण्ठोक्त्या व्युपदिदेश। न चैतावताऽपि चोद्यानुमानतर्काणां कः परिहार उक्तो भवति। तदुच्यते। हेयप्रत्यनीकः स्वयं हेयं कथमुपाददीतेति चोद्यम्, अवतारादेर्हेयत्वाभावादेव निरस्तम्। तदभावश्चाकर्मवश्यत्वाप्राकृतत्वस्वेच्छाकृतत्वादिः। पुण्यपापाद्यभावे नियन्त्रन्तराभावे च कथं जन्मादीत्येतदपि स्वेच्छया परिहृतम्। हिताहिताज्ञानाशक्त्यादिचोद्यमकर्मवश्यस्य लीलयाऽवतरतो ह्यस्याहिताभावात्तदज्ञानाभावाच्च निरस्तम्। प्रयोजनाभावचोद्यं तु साधुपरित्राणादिप्रयोजनवर्णने * सप्राकृतम्। यत्तु साधुपरित्राणादौ संकल्पमात्रेणापि शक्ये किमवतारादिनेति तदपि 'परित्राणाय साधूनाम्' इत्यत्र मन्नामेत्यारभ्याऽऽलापनदानेन तेषां परित्राणायेत्यन्तेन भाष्येण धर्मसंस्थापनायेत्यत्राऽऽराध्यस्वरूपप्रदर्शनेनेत्यनेन ये यथेत्यत्र सर्वसाधारणत्वसौलभ्यातिरेकप्रदर्शनेन च परिहृतम्। यदुक्तमीश्वरो न वस्तुतो जन्मादिमान्, अकर्मवश्यत्वात्, मुक्तात्मवदिति। तत्रेश्वराभ्युपगमानभ्युपगमयोर्धर्मिग्राहकबाधाश्रयासिद्धिः। किंच किमत्र कर्महेतुकजन्मादिरहित इति साध्यार्थः, उताकर्महेतुजन्मादिरहित इति। अथवा सामान्येन जन्मादिमात्ररहित इति। न प्रथमः—सिद्धसाधनात्। न द्वितीयः—हेतोरप्रयोजकत्वात्। नहि कर्मनिवृत्तिरकर्महेतुकं जन्मापि निवर्तयति। निषेध्यस्वरूपसमर्पकप्रमाणेन बाधश्च। यथाऽग्नेरौष्ण्यानुमाने। न तृतीयः—दृष्टान्तस्य साध्यविकलत्वात्। मुक्तस्यापि शरीरपरिग्रहो जक्षत्क्रीडन्प्रमाणः स एकधा (धा) भवति त्रिधा भवतीत्यादिश्रुतिसिद्धः। तर्हि मुक्तोऽपि पक्षीकृत इति चेत्तदा को दृष्टान्तः, घटादिरिति चेन्न। तत्र शरीरपरिग्रहाद्यभावस्याचेतनत्वोपाधिकत्वात्। एतेन यो जन्मादिमान् स कर्मवश्य इति व्यतिरेकोऽपि भग्नः। यस्त्वीश्वरनियोगाविषयत्वादिति सोऽपि प्रथमेन तुल्यार्थः। पुण्यपापनिरूपकशास्त्रस्यैवेश्वराज्ञारूपत्वात्। यत्तु तत्कारणर[हि]तत्वात्, यो यत्कारणरहितो न स तद्वान्, इति। तदप्यसत्। उपादानकारणविवक्षया प्रयोगे त्वप्राकृताकर्मनिमित्तावतारोपादाननित्यविग्रहसद्भावोपपादनाद्धेत्वसिद्धेः।

* सप्राकृतमिति। प्रकृष्टमकृतमकरणं तेन सहितम्। अयोग्यमित्यर्थः।

इदानीं प्रासङ्गिकं परिसमाप्य प्रकृतस्य कर्मयोगस्य ज्ञानाकारताप्रकारं वक्तुं तथाविधकर्मयोगाधिकारिणो दुर्लभत्वमाह—

---

निमित्तविवक्षया प्रयोगे तु संकल्पादिनिमित्तोपपादनात् । सामान्यविवक्षाऽपि तत एवोक्तोत्तरा । एवं संकुचितज्ञानशून्यत्वादित्यादिष्वपि धर्मिग्राहकबाधादिकं भाव्यम् । साध्यप्रयोजनरहितत्वादित्यत्र हेत्वसिद्धेश्च । साधुपरित्राणलीलादिप्रयोजनस्योक्तत्वात् । तथाऽपीदानींतनं सुखं प्राङ्नास्तीति तेनांशेनापूर्णत्वं प्रसज्यत इति चेन्नेदमपूर्णत्वम् । इष्टविघाताभावात् । इष्टकाले च तत्सिद्धेः । इदानीमपि यदीच्छेत्तत्सिध्येदिति योग्यतासद्भावात् । उत्तरकालीनस्यापि तस्य प्रागपीश्वरेण सर्वज्ञेन स्वसुखतयाऽनुसंधीयमानत्वात् । एवमतीतेऽपि भाव्यम् । भविष्यतोऽपि सुखत्वेन प्रकाशमानत्वे किमर्थं तत्रेच्छेति चेत् । उत्पत्त्यर्थेति ब्रूमः । तया किं प्रयोजनमिति चेत्सैव । सा तर्हि पूर्वोत्तरकालयोर्नास्तीति तयोः कालयोरपूर्णत्वमिति चेन्न । तत्कालीनतया तयैव सर्वदा ज्ञायमानतया पूर्णत्वात् । ननु कस्यचिदिष्यमाणत्वं तदलाभे दुःखादिति चेन्न । तल्लाभस्य प्रयोजनत्वेनैव तदुपपत्तेः । अशक्तस्य हि तदिच्छतस्तदसिद्धेर्दुःखं जायते । शक्तस्य तु तदिच्छैव तत्सुखं पुष्यतीति न संकटं किंचिदिति । एतेन साध्यप्रयोजन[र]हितत्वे हेतौ मुक्तदृष्टान्तोऽपि साधनविकलः, जक्षत्क्रीडन्नित्यादिश्रुतेः । ये तु परमसाम्यापन्नदृष्टान्तेन सर्वज्ञत्वादित्यादिहेतवस्तेष्वपि साध्यविकलत्वादिदोषः समानः । प्रसङ्गाश्चानुमानवद्व्याप्त्याद्यभावेन दूषिता इति । तदेवं सिद्धम्—जन्मादिकमीश्वरस्य सत्यम् । तत्प्रतिपादकं च वचः प्रमाणमिति । यत्त्ववतारेषु दुःखशोकभयादिकं क्वचिदुच्यते तदस्यापहतपाप्मत्वादिबलात्तेन वक्ष्यते लोकानित्यादिवचनबलाच्चाभिनयमात्रं मन्तव्यमिति । एवमध्यायार्थतयाऽभिहितेषु षट्सु प्रासङ्गिकं प्रसञ्जकं चोक्तम् ॥ ११ ॥

अथ प्रकृतस्य कर्मयोगस्य ज्ञानाकारताप्रकारं वक्तुं तदुपोद्घाततया षट्श्लोकाः प्रवर्तन्ते । तत्राधिकारिविषयाश्चत्वारः कर्मस्वरूपविषयौ द्वावित्यवान्तरविभागः । तदिदमभिप्रयन्प्रथमं श्लोकमवतारयति—इदानीमिति । काङ्क्षन्त इत्यत्र विशेषनिर्देशाभा-

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

सर्व एव पुरुषाः कर्मणां फलं काङ्क्षमाणा इन्द्रादिदेवता यथाशास्त्रं यजन्त आराधयन्ति। न तु कश्चिदनभिसंहितफल इन्द्रादिदेवतात्मभूतं सर्वयज्ञानां भोक्तारं मां यजते। कुत एतत्—यतः क्षिप्रमस्मिन्नेव मानुषे लोके कर्मजा पुत्रपश्वन्नाद्या सिद्धिर्भवति । मनुष्यलोकशब्दः स्वर्गादिलोकप्रदर्शनार्थः । सर्व एव हि लौकिकाः पुरुषा अक्षीणानादिकालप्रवृत्तानन्तपापसंचयतयाऽविवेकिनः क्षिप्रफलाकाङ्क्षिण

---

त्वात्सर्व एव पुरुषा इत्युक्तम् । ये मुमुक्षुतया संभाव्यन्ते तेऽपि हि प्रथमं त्रिवर्गप्रवणा इत्येवकाराभिप्रायः । कर्मणां सिद्धिमित्यत्र कर्मस्वरूपशङ्काव्युदासायोक्तम्—फलमिति । इहशब्दाभिप्रेतमाह—इहेन्द्रादिदेवता यथाशास्त्रमिति । इह या देवतात्वेन प्रतीयन्ते ता इत्यर्थः । यज देवतापूजायामिति धात्वर्थव्यञ्जनायाऽऽराधयन्तीत्युक्तम् । एतेन तत्तद्देवताराधनभूतानां होमादीनामपि संग्रहः । सर्वाणीन्द्रियकर्माणीत्यनन्तरमेव तद्व्यञ्जयिष्यति । व्यतिरेकरूपप्राभिप्रायिककर्मयोगाधिकारिदौर्लभ्यमाह—न तु कश्चिदिति । सर्वयज्ञानां भोक्तारमित्यनेन—'अहं हि सर्वयज्ञानाम्' 'भोक्तारं यज्ञतपसाम्' इत्यादि वक्ष्यमाणं सूचितम् । हेतुपरहिशब्दार्थव्यञ्जनाय शङ्कते—कुत एतदिति । महति फले स्थिते क्षुद्रफलाकाङ्क्षा किंनिबन्धनेत्यर्थः । क्षिप्रमानुषशब्दाभ्यां कालतो देशतश्चाऽऽसत्तिरुच्यते । वायुर्वै क्षेपिष्ठा देवतेत्यादिकं क्षिप्रशब्देन स्मारितम् । अस्मिन्नेवेत्यनेन मानुषशब्दफलितदेशासत्तिद्योतनम् । क्षिप्रलाभादस्मिन्नेव लोके लाभाच्च क्षुद्रेष्वपि फलेषु प्रथमसाकाङ्क्षा स्यादिति भावः । मानुषलोकौचित्येन सिद्धिं विशेषयति—पुत्रपश्वित्यादि । अपवर्गप्रकरणफलितमाह—मनुष्येति । अतिशयितफलसद्भावेऽपि क्षुद्रफलाकाङ्क्षायां तदनुषङ्गिदुःखसंतानेऽनुद्वेगे च हेतुं दर्शयन्कण्ठोक्तमाभिप्रायिकं च संकलय्य वाक्यार्थमाह—सर्व एव हि लौकिका इति । त्रिवर्गप्रावण्यदर्शनार्थमुक्तम्—अविवेकिन इति । अविवेकित्वादित्यर्थः । क्षिप्रफलकाङ्क्षिण इति ।

पुत्रपश्वन्नाद्यस्वर्गाद्यर्थतया सर्वाणि कर्माणीन्द्रादिदेवताराधनमात्राणि कुर्वते । न तु कश्चित्संसारोद्विग्नहृदयो मुमुक्षुरुक्तलक्षणं कर्मयोगं मदाधारभूतमारभत इत्यर्थः ॥ १२ ॥

यथोक्तकर्मारम्भविरोधिपापक्षयहेतुमाह—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

*चातुर्वर्ण्यप्रमुखं ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्सत्त्वादिगुणवि-

---

क्षुद्रत्वनश्वरत्वदुःखानुबन्धित्वादिदोषपुञ्जानादरणे वरमद्य कपोतः श्वो मयूरादितिवन्मन्यमाना इति भावः । उपलक्षणोपलक्ष्यभूतैहिकामुष्मिकसंकलनेनोक्तम्—पुत्रपश्वन्नाद्यस्वर्गादीति । एतेन कर्मणां सिद्धिमित्यत्र सिद्धिशब्दः सामान्यविषय इति दर्शितम् । सर्वाणि कर्माणि—यागदानहोमादीनि ॥ १२ ॥

नन्वक्षीणानन्तपापसंचयत्वं सर्वेषां समं ततश्चाविवेकित्वात् क्षिप्रफलाकाङ्क्षित्वमपि समानम् । अतः कस्यापि मुमुक्षाविरहान्मोक्षोपायशास्त्रमप्रमाणं स्यादित्याशङ्क्य श्लोकद्वयेन तत्परिहारः क्रियत इत्यभिप्रायेणाऽऽह—यथोक्तेति । पूर्वश्लोकोक्तेषु देवतान्तराधीनेषु क्षुद्रफलेष्वपि सर्वकर्तुः स्वस्यैव हेतुत्वं चातुर्वर्ण्यमित्यादिना दर्शितम् । व्यष्टिसृष्ट्यन्तर्गतचातुर्वर्ण्यकथनं समस्तव्यष्टिसंग्रहार्थमित्यभिप्रायेण—चातुर्वर्ण्यप्रमुखमित्युक्तम् । वैषम्यनैर्घृण्यपरिहारप्रस्तावाय व्यष्टिसृष्ट्युपादानम् । गुणकर्मविभागश इत्येतत्प्रपञ्चयिष्यमाणसत्त्वादिविभागविषयमित्यभिप्रायेण—सत्त्वादीत्युक्तम् ।

---

* चत्वारो वर्णाश्चातुर्वर्ण्यम् । 'चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्' ( वा० ५ । १ । १२४ ) इति वार्तिकेन स्वार्थे ष्यञ् । मयेश्वरेण सृष्टमुत्पादितं गुणकर्मविभागशो गुणविभागशः कर्मविभागशश्च । तथा हि—सत्त्वप्रधाना ब्राह्मणास्तेषां च सात्त्विकानि शमदमादीनि कर्माणि । सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियास्तेषां च तादृशानि शौर्यतेजःप्रभृतीनि कर्माणि । तमउपसर्जनरजःप्रधाना वैश्यास्तेषां च कृष्यादीनि तादृशानि कर्माणि । तमःप्रधानाः शूद्रास्तेषां च तादृशानि त्रैवर्णिकशुश्रूषादीनि कर्माणीति मानुषे लोके व्यवस्थितानि ।

भागेन तदनुगुणशमादिकर्मविभागेन च प्रविभक्तं मया सृष्टम्। सृष्टिग्रहणं प्रदर्शनार्थम्। मयैव रक्ष्यते मयैवोपसंह्रियते। तस्य विचित्रसृष्ट्यादेः कर्तारमपि अकर्तारं मां विद्धि ॥ १३ ॥

कथमित्यत्राऽऽह—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

यत इमानि विचित्रसृष्ट्यादीनि कर्माणि न मां लिम्पन्ति न संबध्नन्ति। न मत्प्रयुक्तानीमानि देवमनुष्यादिवैचित्र्याणि, सृज्य

---

सत्त्वादिमूलत्वात्सर्वव्यापाराणां तदनुगुणेत्युक्तम्। तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्तममित्यादिगुणविभागः। ब्राह्मणक्षत्रियविशामित्यादि कर्मविभागः। शमादिकर्मेति। शमाद्यनुष्ठेयमित्यर्थः। शमो दम इत्युपक्रम्य ब्राह्मं कर्म स्वभावजमिति वक्ष्यते। एवं देवतिर्यङ्मनुष्यादिजातिषु वाराहपाद्मेशानकल्पादिषु च पुराणेषु प्रपञ्चितस्तत्तद्गुणोद्रिक्तविषमसृष्टिप्रकारो द्रष्टव्यः। श्रुत्यादिषु सृष्ट्यादिसमस्तहेतुतयेश्वरस्य ज्ञातव्यत्वविधानादत्र सृष्टिग्रहणं रक्षादेरपि प्रदर्शनपरमित्याह—सृष्टेति। एतेन व्यष्टिसृष्ट्यादिव्यापारत्रयस्यापि स्वकर्तृकत्ववचनात् ‘सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते’ इत्यादेरर्थोऽप्युक्तो भवति। सूत्रितं चैतत्—‘संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्’ [ब्र० सू० २।४।१७] इति ॥ १३ ॥

एककार्यापेक्षयैकस्यैव कर्तृत्वं तदभावश्चेति व्याहतमित्यभिप्रायेण चोदयति—कथमिति। कर्तृत्वं तावन्मुख्यमकर्तृत्वं वैषम्यप्रयोजकत्वाभावादुच्यत इति व्यञ्जयति—यत इति। कर्मशब्दोऽत्र न पुण्यपापविषयः, प्रकृतानुपयुक्तत्वात्, इदानीं कर्मवश्यत्वशङ्काभावात्, शङ्कितविरोधपरिहारात्मकत्वस्यैव युक्तत्वात्, अनपेक्षितविधानादपेक्षितविधानप्राबल्याच्चेत्यभिप्रायेण—इमानि विचित्रसृष्ट्यादीनि कर्माणीत्युक्तम्। न मां कर्माणि लिम्पन्तीत्यस्य मुख्यासंगतेर्लक्ष्यं तावदाह—न मां संबध्नन्तीति। कथमेतावता विरोधपरिहार इत्यत्राऽऽह—न मत्प्रयुक्तानीति। वैषम्यांशे विशेषहेतुत्वं निषिध्यत इति न विरोध इति भावः। कस्तर्हि विषमसृष्टेर्विशेषहेतुरित्याह—इमानीति। उक्तहेतुवशादकर्तृत्वव्यपदेशौचित्यं

पुण्यपापरूपकर्मविशेषप्रयुक्तानीत्यर्थः। अतः प्राप्ताप्राप्तविवेकेन विचित्रसृष्ट्यादेर्नाहं कर्ता। यतश्च सृष्टाः क्षेत्रज्ञाः सृष्टिलब्धकरणकलेवराः सृष्टिलब्धं भोग्यजातं फलसङ्गादिहेतुभिः स्वकर्मानुगुणं भुञ्जते। सृष्ट्यादिकर्मफले च तेषामेव स्पृहेति न मे स्पृहा। तथाऽऽह सूत्रकारः—'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र० सू० २।१।३४) इति।

तथाऽऽह भगवान्पराशरः—

---

निगमयति—अत इति। प्राप्ताप्राप्तविवेकेन पुण्यपापतारतम्यानुगुणसुखदुःखादिविषमसृष्टितारतम्यदर्शनकृतविशेषनिष्कर्षेणेत्यर्थः। यथा विचित्रेष्वङ्कुरेषु क्षितिजलादीनि सामान्यकारणानि वैचित्र्यं तु स्वबीजवैचित्र्यहेतुकं तद्वदिति भावः। एवं विशेषप्रयोजकत्वाभावेन कर्तृत्वमुक्तम्। अथ विशेषसृष्टिफलनिःस्पृहत्वेनाकर्तृत्वमुच्यत इत्यभिप्रायेण न मे कर्मेत्यादिकं व्याख्याति—यतश्चेति। स्वस्य स्पृहानिषेध इतरेषां स्पृहावत्त्वाभिप्राय इति व्यञ्जनाय सृष्टा इत्यादिकमुक्तम्। सृष्टाः क्षेत्रज्ञा इति क्रमनिर्देशेन भोक्तृत्वदशापन्नक्षेत्रज्ञसिद्ध्यर्था सृष्टिरित्यभिप्रेतम्। भोक्तृत्वोपयुक्ताकार उच्यते—सृष्टिलब्धकरणकलेवरा इति। नहि मदीयकरणादिबलार्था सृष्टिरिति भावः। फलसङ्गादिहेतुशब्दो बहुव्रीहितत्पुरुषयोरन्यतरेण स्वकर्मविशेषकः। फलसङ्गादिहेतुभिरिति वा पाठः। स्वकर्मानुगुणम्। न तु निरपेक्षकेवलमत्संकल्पविशेषानुगुणमिति भावः। कर्मफल इत्यत्रापि कर्मशब्दः प्रकृतसृष्ट्यादिकर्मविषयः। फलस्वभावात्तु पुण्यपापरूपकर्म फलितमित्यभिप्रायेण—सृष्ट्यादिफले कर्मफले चेत्युक्तम्। प्रवाहानादिवासनादिमूलतत्तदिच्छानुरूपं प्रवर्तयंस्तत्तदिच्छाहेतुकतत्तत्पुण्यपापानुगुणफलं प्रयच्छामि न तु स्वेच्छानुरूपं प्रयच्छामि नापि स्वातन्त्र्यमात्रेण विषमं फलं ददामि। न च स्वप्रयोजनार्थं परान्पीडयामीत्येतदखिलमपि न मे स्पृहेत्यन्तेनोक्तं भवति। अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीदिति पञ्चमवेदगीतोपनिषत्संग्रहीतुः शारीरकसूत्रोक्तार्थं संवादयति—तथाहीति। पितुर्देवतापारमार्थ्यविदो वचनं च दर्शयति—तथाऽऽहेति। तत्र हि वाराहप्रादुर्भावमभिधाय 'भूराद्यांश्चतुरो लोकान्पूर्ववत्समकल्पयत्' इत्यन्तेन पृथिवीसमुद्धरण-

निमित्तमात्रमेवायं सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः ॥
निमित्तमात्रं मुक्त्वेदं नान्यत्किंचिदपेक्षते ।
नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम् ॥ इति ।

---

भूपर्वतादिविभागलोकविभागादिकमुक्त्वा—

ब्रह्मरूपधरो देवस्ततोऽसौ रजसा वृतः ।
चकार सृष्टिं भगवांश्चतुर्वक्त्रधरो हरिः ॥

इति चतुर्मुखशरीरस्य भगवतो विष्णोः स्वर्गादिलोकान्तर्वर्तिसृष्टिरेवं प्रसक्ता । ततो निमित्तमात्रमिति श्लोकद्वयमुक्तम् । अनन्तरं च—

यथा ससर्ज देवोऽयं देवर्षिपितृदानवान् ।
मनुष्यतिर्यग्वृक्षादीन्भूव्योमसलिलौकसः ॥

इत्यादिविस्तरादित्यन्तो मैत्रेयप्रश्नोऽपि देवादिविषमसृष्टिविषयः । प्रतिवक्त्रा च भगवता पराशरेण—

मैत्रेय कथयाम्येष शृणुष्व सुसमाहितः ।
यथा ससर्ज देवोऽसौ देवादीनखिलान्विभुः ॥

इत्यारभ्य, किमन्यच्छ्रोतुमिच्छसि, इत्यन्तेनाल्पविस्तरे कृते पुनरतिविस्तरे[ ण ] मैत्रेयेण—

कर्मभिर्भाविताः पूर्वैः कुशलाकुशलास्तु ताः ।
ख्यात्या तयाऽप्यनिर्मुक्ताः संहारेऽप्युपसंहृताः ॥
स्थावरान्ताः सुराद्याश्च प्रजा ब्रह्मंश्चतुर्विधाः ॥

इत्यादिना तत्तत्कर्माधीनदेवादिविषमसृष्टिर्हि प्रपञ्च्यते । अतः पूर्वापरपर्यालोचनया सृज्यशब्देनात्र देवमनुष्यादयः सृज्यविशेषा निर्दिश्यन्ते । शक्तिशब्देन च तत्तत्कर्मैव । वक्ष्यति हि कर्मण्यपि शक्तिशब्दम्—' अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ' इत्यादौ । निमित्तमात्रमिति च नोपादानत्वनिषेधः । श्रुतिस्मृतिसूत्रपूर्वापरकोपप्रसङ्गात् । अतस्तत्तत्कर्मविशेषप्रयुक्ततया प्रकरणोदितविषमसृष्टेर्वैषम्यांशं प्रति प्राधान्यमनेन निषिध्यते । ' मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ' इतिवत् । 'प्रधानकारणीभूता यतो वै सृज्यशक्तयः' इति ह्यत्राप्युच्यते । नन्वेवं सत्यप्रधानत्वमीश्वरस्योक्तं स्यात्तत्रापि सूत्रा-

सृज्यानां देवादीनां क्षेत्रज्ञानां सृष्टेः कारणमात्रमेवायं परमपुरुषः। देवादिवैचित्र्ये तु प्रधानकारणं सृज्यभूतक्षेत्रज्ञानां प्राचीनकर्मशक्तय एव। अतो निमित्तमात्रं मुक्त्वा सृष्टेः कर्तारं परमपुरुषं मुक्त्वेदं क्षेत्रज्ञवस्तु देवादिविचित्रभावे नान्यदपेक्षते। स्वगतप्राचीनकर्मशक्त्यैव हि देवादिवस्तुभावमुपनीयत इत्यर्थः। एवमुक्तेन प्रकारेण सृष्ट्यादेः कर्तारमप्यकर्तारं सृष्ट्यादिकर्मफलसङ्गरहितं च यो मामभिजानाति स

---

दिविरुद्धं कर्तृत्वविरुद्धं च। 'स्वतन्त्रः कर्ता' [ पा० सू० १। ४। ५४ ] इति हि कारकचक्रं प्रति प्राधान्यं कर्तृत्वलक्षणं स्मरन्ति। अतोऽयं प्रधानशब्द उपादानपर इति चेत्तन्निमित्तोपादानैक्यश्रुत्यादिविरोधात्, उपादाने करणशब्दानौचित्याच्च। न चास्वातन्त्र्यप्रसङ्गः। विशेषप्रयोजकस्य करणभूतस्यादृष्टस्यापि तत्सापेक्षत्वात्। अतो द्वितीयश्लोकेनापि साधारणकारणतयेश्वराकाङ्क्षणमसाधारणकारणान्तरनैरपेक्ष्यं चोच्यते। तदेतदखिलमभिप्रेत्य श्लोकद्वयं व्याख्याति—सृज्यानामिति। सृज्यशब्दस्य प्रकरणविशेषोऽर्थः क्षेत्रज्ञानामित्यनेनोक्तः। निमित्तशब्दमात्रोपादानसहपठितनिमित्तपरत्वव्युदासायाऽऽह—कारणमात्रमिति। सृज्यशक्तय इत्यत्र समानाधिकरणसमानभ्रमव्युदासाय सृज्यभूतेत्याद्युक्तम्। प्रलयकाले करणकलेवरादिरहितानामविभागापन्नानां कथं कर्मेति शङ्काव्युदासाय प्राचीनेत्युक्तम्। पूर्वकल्पसंभवशरीरैः कर्माणि निष्पन्नानि। 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति हि स्मरन्ति। न च नित्यानां प्रलयेऽप्यत्यन्ताविभागः। सूत्रितं चैतत् 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' [ ब्र० सू० २। १। ३५ ] इति। वस्तुशब्दोऽत्र प्रकरणादिसिद्धसृज्यविशेषविषय इत्यभिप्रायेणेदं क्षेत्रज्ञवस्त्वित्युक्तम्। स्वशक्त्या वस्तु वस्तुतां नीयत इत्युक्ते वस्त्वन्तरं नीयत इत्येवोक्तं भवति। प्रागसतः सत्त्वोपाधित्वविवक्षायां सत्कार्यवादसिद्धान्तविरोधात्। स्वशक्त्या वस्तु वस्तुतामित्यत्राऽऽत्माश्रयादिप्रसङ्गाच्च। तच्चावस्थान्तरमस्मिन्प्रकरणे प्रलयदशापन्नानां देवादिभाव एवेत्यभिप्रायेण देवादिवस्तुभावमित्युक्तम्। तदेवं कर्तृत्वाकर्तृत्वयोरविरोध उपपादितः। उक्तार्थस्य प्रकृतोपयोग उच्यते—इति मामित्यादिना। इति शब्दश्चातुर्वर्ण्यमित्यादिकं सर्वं परामृशतीत्यभिप्रायेणाऽऽह—एवमिति। कर्मभि-

कर्मयोगारम्भविरोधिभिः फलसङ्गादिहेतुभिः फलसङ्गप्राचीनकर्मभिर्न संबध्यते मुच्यत इत्यर्थः ॥ १४ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

एवं मां ज्ञात्वा विमुक्तपापैः पूर्वैरपि मुमुक्षुभिरुक्तलक्षणं कर्म कृतम् । तस्मात्त्वमुक्तप्रकारं मद्विषयज्ञानविधूतपापः पूर्वैर्विवस्वन्मन्वादिभिः कृतं पूर्वतरं पुरातनं तदानीमेव मयोक्तं वक्ष्यमाणाकारं कर्मैव कुरु ॥ १५ ॥

---

रिति सामान्यतो निर्देशेऽपि प्रकृतज्ञानमात्रात्सर्वकर्मविनाशायोगात्, एवं ज्ञात्वा कृतं कर्मेत्यनन्तरं वाक्यानुरोधाच्च संकोचे कार्ये प्रकृतोपयुक्तो विशेषोऽयमेवेत्यभिप्रेत्य प्रायेण कर्मयोगारम्भविरोधिभिरित्याद्युक्तम् । विरोधित्वेऽवान्तरव्यापारकथनं फलसङ्गादिहेतुभिरिति । यद्वा फलसङ्गादिना कृतत्वात्फलादिद्वारा कर्मयोगारम्भविरोधिभिरिति भावः । अत्र प्राचीनशब्देन निष्पन्नोपासनस्य ह्युत्तराघाश्लेष इत्यभिप्रेतम् । प्राचीनैः प्रागेव बद्धस्य कर्तैरबन्ध इत्यत्राऽऽह—मुच्यत इत्यर्थ इति ॥ १४ ॥

इत्येवं श्लोकद्वयेन यथोक्तकर्मयोगारम्भविरोधिपापक्षयहेतुरुक्तः । तत्पूर्वकं कर्मयोगं शिष्टानुष्ठानप्रदर्शनेन द्रढयन्नर्जुनं प्रत्यनुशास्ति—एवमिति श्लोकेन । एवमिति । कर्तृत्वाकर्तृत्वादिनोक्तप्रकारेणेत्यर्थः । ज्ञात्वा कृतं कर्मेत्युक्ते ज्ञानस्य कर्मकरणहेतुत्वं सूचितम् । कर्मभिर्न स बध्यत इति च पूर्वमुक्तम् । अतो विरोधिपापनिवर्तनद्वारा ज्ञानस्य कर्महेतुत्वमिति व्यञ्जनाय ज्ञात्वा विमुक्तपापैरित्युक्तम् । कर्मशब्दोऽत्र मुमुक्षुकर्तव्यविषयत्वाद्व्यवहितमपि प्रधानप्रकृतं कर्मयोगमवलम्बत इत्यभिप्रायेणोक्तलक्षणमित्युक्तम् । त्वंशब्दो गृहीतस्वयाथात्म्योपदेशतां सूचयतीत्यभिप्रायेण त्वमुक्तप्रकारमद्विषयज्ञानविधूतपाप इत्युक्तम् । इमं विवस्वत इत्यादावुदाहृतानुष्ठातारः पूर्वैरिति परामृश्यन्त इत्यभिप्रायेण विवस्वन्मन्वादिभिरित्युक्तम् । पूर्वतरमित्यस्य क्रियाविशेषणत्वव्युदासायाऽऽह—पुरातनमिति । तदभिप्रेतमाह—तदानीमेव मयोक्तमिति । एवं प्रवाहानादित्वमिह विवक्षितम् । कर्मयोगस्वरूपनिष्कर्षोपोद्घातरूपत्वादस्य वक्ष्यमाणाकारमित्युक्तम् ॥ १५ ॥

वक्ष्यमाणस्य कर्मणो दुर्ज्ञानतामाह—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥

मुमुक्षुणाऽनुष्ठेयं कर्म किंस्वरूपमकर्म च किम् । फलाभिसंधिरहितं भगवदाराधनरूपं कर्म । अकर्मेति कर्तुरात्मनो याथात्म्यज्ञानमुच्यते । अनुष्ठेयं कर्म तदन्तर्गतं ज्ञानं च किंस्वरूपमित्युभयत्र कवयो विद्वांसोऽपि मोहिता यथार्थतया न जानन्ति । एवमन्तर्गतज्ञानं यत्कर्म तत्ते प्रवक्ष्यामि । यज्ज्ञात्वाऽनुष्ठायाशुभात्संसारबन्धान्मोक्ष्यसे ॥ १६ ॥

किं कर्मेति श्लोके कर्माकर्मशब्दाभ्यां पृथग्ज्ञातव्यभ्रमः स्यादिति तद्व्युदासायाऽऽह—वक्ष्यमाणस्य कर्मण इति । कर्मण्यकर्म यः पश्येदित्यादिना कर्माकर्मणोर्द्वयोरप्येककर्मयोगांशत्वं विवक्ष्यते । अत्र श्लोके तत्ते कर्म प्रवक्ष्यामीति ह्युच्यत इत्यभिप्रेत्य वक्ष्यमाणस्य कर्मण इति । दुर्विज्ञानत्वज्ञापनायाऽऽह—मुमुक्षुणाऽनुष्ठेयमिति । कर्माभावादिव्युदासायाऽऽह—आत्मनो याथात्म्यज्ञानमिति । कर्मेति । अनुष्ठानोपयोगित्वज्ञापनाय कर्तुरित्युक्तम् । कवयः क्रान्तदर्शिन इति प्रसिद्ध्याऽर्थान्तरप्रसिद्धेरत्रानुपयोगाच्च विद्वांस इत्युक्तम् । मोहिता इत्यत्राज्ञानमयथाज्ञानं च विवक्षितम् । तदुभयसंग्रहायाऽऽह—यथावन्न जानन्तीति । मोहिताः प्रकीर्णैः शास्त्रैरिति शेषः । किं कर्म किमकर्मेति द्वयोः प्रकृतत्वेऽपि कर्म प्रवक्ष्यामि, कुरु कर्मैव, गहना कर्मणो गतिरिति पूर्वापरपरामर्शेन कर्मणः प्राधान्यमकर्मणस्तद्विशेषणत्वं च विवक्षितमित्यभिप्रायेण तच्छब्दाभिप्रेतं वैशिष्ट्यं व्यनक्ति—एवमन्तर्गतज्ञानमिति । संसारबन्धादिपरमप्रयोजनविवक्षया ज्ञात्वा मोक्ष्यस इत्येतावति निर्दिष्टेऽनुष्ठायेति कुतो लब्धमित्यत्राऽऽह—कर्तव्यकर्मज्ञानेनेति । अत्र ज्ञात्वेति पदमजहल्लक्षणया कर्मानुष्ठानमपि गृह्णाति, कुरु कर्मैव तस्मात्त्वमित्यनन्तरमेवोक्तमन्यथा कर्मानुष्ठानविधिनैरर्थक्यं च स्यादिति भावः ॥ १६ ॥

---

१ क. °मुक्षूणामनु° ।

कर्तव्यकर्मज्ञानं ह्यनुष्ठानफलं कुतोऽस्य दुर्ज्ञानतेत्यत आह—

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

यस्मान्मोक्षसाधनभूते कर्मणः स्वरूपे बोद्धव्यमस्ति । विकर्मणि च नित्यनैमित्तिककाम्यकर्मरूपे तत्साधनद्रव्यार्जनद्वारेण विविधतामापन्ने विकर्मणि च बोद्धव्यमस्ति । न कर्माकर्म तस्मिन्नकर्मणि ज्ञाने च बोद्धव्यमस्ति । गहना दुर्ज्ञाना मुमुक्षोः कर्मणो गतिः । विकर्मणि बोद्धव्यं नित्यनैमित्तिककाम्यद्रव्यार्जनादौ कर्मणि फलभेदकृतं वैविध्यं परित्यज्य मोक्षैकफलतयैव शास्त्रार्थत्वानुसंधानम् । तदेतद्व्यवसायात्मिका बुद्धिरेकेत्यत्रैवोक्तमिति नेह प्रपञ्च्यते ॥ १७ ॥

---

तत्ते कर्म प्रवक्ष्यामीत्युक्तेऽनन्तरं कर्मैवोपदेश्यं कर्मणो ह्यपीत्यादि तु कस्यामाकाङ्क्षायामुच्यत इत्यत्राऽऽह—कुतोऽस्येति । यस्मादिति हिशब्दार्थः । कर्मणो बोद्धव्यमित्यादिरूपेण वचनं बोद्धव्यांशविशेषनिष्कर्षपरमिति व्यञ्जनाय—कर्मस्वरूपे बोद्धव्यमस्तीत्युक्तम् । अत्र संबन्धसामान्ये षष्ठी । गहना कर्मणो गतिरित्यत्र गतिशब्दो बोद्धव्यप्रकार इत्यपि स्वरूपशब्दाभिप्रायः । अत्र विकर्मशब्देन पाषण्डिनो विकर्मस्थानित्यादाविव न विरुद्धं कर्मोच्यते । तस्यात्रोपयोगाभावात् । अतोऽत्र विशब्दोऽनुष्ठेयवैविध्यपरः । वैविध्यं च तत्र नित्यादिरूपं प्रसिद्धमित्यभिप्रायेणाऽऽह—नित्येति । आदिशब्देन रक्षणतदुपायप्रवृत्त्यादि गृह्यते । अत्र विकर्माकर्मशब्दयोः प्रतिषिद्धकर्मतूष्णींभावपरत्वेन परव्याख्यानं गहना कर्मणो गतिरिति निगमनेन विरुद्धम् । अत्रापि विकर्माद्युपलक्षणार्थत्वं क्लिष्टम् । एवमुत्तरेष्वपि श्लोकेष्वैदमर्थ्येन व्याख्यानं निरस्तम् । यस्मादिति पूर्वमुक्तत्वाद्गहनेत्यत्र तस्मादिति भाव्यम् । गहनत्वं दुष्प्रवेशत्वम् । तच्चात्र ज्ञानत इत्यभिप्रायेण दुर्विज्ञानेत्युक्तम् । न मुमुक्षोः फलान्तरार्थेऽपि कर्मणि किं बोद्धव्यमिति शङ्कायां बोद्धव्यं वक्तव्यं परिशेषयितुं तस्योक्ततामाह—विकर्मणीति । किमत्र प्रामाण्यमित्यत्राऽऽह—तदेतदिति । नेह प्रपञ्च्यते । अस्माभिर्भगवता चेति भावः ॥ १७ ॥

---

१ क. °तं त्रैवि° ।

कर्माकर्मणोर्वैविध्यमाह—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

अकर्मशब्देनात्र कर्मेतरत्प्रस्तुतमात्मज्ञानमुच्यते । कर्मणि क्रियमाण एवाऽऽत्मज्ञानं यः पश्येदकर्मणि चाऽऽत्मज्ञाने वर्तमान एव यः कर्म पश्येत् । किमुक्तं भवति । क्रियमाणमेव कर्माऽऽत्मयाथात्म्यानुसंधानेन ज्ञानाकारं यः पश्येत्तच्च ज्ञानं कर्मण्यन्तर्गततया कर्माकारं यः पश्येदित्युक्तं भवति । क्रियमाणे हि कर्मणि अकर्तृभूतात्मयाथात्म्यानुसंधानेन

---

स्वयमुपोद्घातः स्थितः । अथ प्रकृतमुपदिश्यत इत्यभिप्रायेणाऽऽह—कर्माकर्मणोरिति । कर्मण्यकर्म यः पश्येदिति कर्मणि बोद्धव्यमुच्यते । अकर्मणि च कर्म य इति तु ज्ञाने । अकर्मशब्दस्यात्र परोक्तकर्माभावस्वरूपज्ञाननिष्ठाविषयतामु(म)पास्य तदन्यव्युत्पत्त्याऽऽसत्त्या च सिद्धमाह—अकर्मेति । अत्र कर्मयोगोपदेशप्रकरण इत्यर्थः । अन्वयार्थं दर्शयति—कर्मणीति । अवधारणं शङ्काहेतुभूतविरोधद्योतनेन ज्ञानकर्मणोरनन्वितत्वपरिहारार्थम् । नन्विदमयुक्तमन्यानुष्ठानेऽन्यदर्शनस्यानपेक्षितत्वात् । अन्यस्मिन्ननुष्ठीयमाने तदन्यज्ञानस्य दुष्करत्वात् । अन्यस्मिंश्चानुसंधीयमाने तदन्यस्य कर्तुमशक्यत्वात् । इतरेतरदर्शनेन च तदन्यप्रतिक्षेपश्च स्यादित्यभिप्रायेण चोदयति—किमुक्तं भवतीति । यदेतद्युगपदशक्यत्वं चोदितं तत्किं शास्त्रार्थस्वाकारभेदेनान्यथा वेति विकल्पमभिप्रेत्य प्रथमं दूषयति—क्रियमाणमेवेति । ज्ञानविशिष्टस्य कर्मण उपायतया विहितत्वेन परस्परमन्वितत्वमिति न भिन्नशास्त्रार्थत्वमिति भावः । एतेन परस्परनिरपेक्षार्थद्वयपरतया परस्परप्रतिक्षेपशङ्काऽपि प्रत्युक्ता । द्वितीयेऽपि किं स्वरूपभेदमात्रेण दुष्करत्वमुक्त(त) विरुद्धत्वात् । न प्रथमः—एकेनैव प्रेक्षणगमनभाषणादेर्युगपदनुष्ठानात् । न द्वितीयः—गमनस्थानयोरिव ज्ञानकर्मणोर्विरोधाभावात् । न चानुपयोगः । ध्यानविशेषविशिष्टविषनिर्हरणार्थचेष्टाजपादिन्यायादित्यभिप्रायेणाऽऽह—क्रियमाण इति ।

---

१ ख. ग. घ. °ज्ञानुगत° । २ क. ङ. °णि क° ।

तदुभयं संपन्नं भवति । एवमात्मयाथात्म्यानुसंधानगर्भं कर्म यः पश्येत्स बुद्धिमान्कृत्स्नशास्त्रार्थविन्मनुष्येषु स युक्तो मोक्षार्हः स एव कृत्स्नकर्मकृत्कृत्स्नशास्त्रार्थकृत् ॥ १८ ॥

प्रत्यक्षेण क्रियमाणस्य कर्मणो ज्ञानाकारता कथमुपपद्यत इत्यत्राऽऽह—

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

---

तदुभयं कर्मणो ज्ञानविषयत्वं ज्ञानस्य कर्मविशिष्टत्वं च । बुद्धिमानित्यत्र

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' ॥

इति मत्ययवशात्प्रकृष्टा बुद्धिर्विवक्षितेत्याह—कृत्स्नशास्त्रार्थविदिति । कृत्स्नकर्मकृदिति ह्यनन्तरमुच्यते । तदनुरूपैव च बुद्धिरत्राभिधेयेति भावः । बुद्धिमान्कृत्स्नकर्मकृदिति ज्ञानेऽनुष्ठाने चाभिहिते तदधीनफलयोग्यत्वमेव हि योग्यपर्यायेण युक्तशब्देनात्राभिधेयमित्यत्र मोक्षार्ह इत्युक्तम् । स बुद्धिमान्स युक्त इति तच्छब्दद्वयेन वाक्यभेदे सिद्धे कृत्स्नकर्मकृदित्येतदपि भिन्नवाक्यमेव भवितुमर्हति । ज्ञानफलयोः पौष्कल्यस्येवानुष्ठानपौष्कल्यस्यापि प्रशंसाहेतुत्वे प्राधान्यादित्यभिप्रायेण तच्छब्दानुषङ्गमाह—स एव कृत्स्नकर्मकृदिति ॥ १८ ॥

प्रत्यक्षेणेति । प्रत्यक्षविरुद्धं न शास्त्रेणोपपत्त्या वा प्रतिपादयितुं शक्यमिति भावः । क्रियमाणस्येति । नहि चिरप्रध्वस्तं स्मृतिदशापन्नं ज्ञानमात्रपरिशेषाज्ज्ञानाकारमित्युच्यते किंतु क्रियमाणमेवेदं कर्मेति भावः । यद्वा प्रत्यक्षेण क्रियमाणस्येति पदाभ्यां ज्ञानविषयस्य ज्ञानाकार्यस्य च कथं ज्ञानैक्यमित्यभिप्रेतम् । कथमुपपद्यत इति । नेदमुपपत्तिसहं यदि परं दृष्टिविधानादावित्र विभावनीयमिति भावः । सर्वशब्दासंकोचाद्द्रव्यार्जनादिसंग्रहः । कामसंकल्पवर्जिता इत्यत्र न तावत्काम एव संकल्प इति समासः पर्यायत्वादिप्रसङ्गात् । नापि कामानां संकल्प इति । उपयुक्तोभयपदार्थप्रधाने द्वंद्वे संभवत्येकपदार्थप्रधानतत्पुरुषायोगात् । अतः कामसंकल्पाभ्यां वर्जिता इत्येवार्थ इत्यभिप्रेत्याऽऽह—

यस्य मुमुक्षोः सर्वे द्रव्यार्जनादिलौकिककर्मपूर्वकनित्यनैमित्तिककाम्यरूपकर्मसमारम्भाः कामवर्जिताः फलसङ्गरहिताः संकल्पवर्जिताश्च। प्रकृत्या तद्गुणैश्चाऽऽत्मानमेकीकृत्यानुसंधानं संकल्पः। प्रकृतिवियुक्तात्मस्वरूपानुसंधानयुक्ततया तद्रहिताः। तमेवं कर्म कुर्वाणं पण्डितं कर्मान्तर्गतात्मयाथात्म्यज्ञानाग्निना दग्धप्राचीनकर्माणमाहुः। तत्त्वज्ञानतः कर्मणो ज्ञानाकारत्वमुपपद्यते ॥ १९ ॥

---

कामवर्जिता इति। वर्जितशब्दस्य प्रत्येकमन्वयं दर्शयता द्वंद्वो ह्ययं समासान्तरात्प्रबल इति सूचितम्। कर्मप्रकरणे कामो हि फलसङ्ग इत्यभिप्रायेणाऽऽह—फलसङ्गरहिता इति। संकल्पोऽत्र न कर्मानुष्ठानसंकल्पः। तदभावेऽनुष्ठानायोगात्। नापि फलसंकल्पः। कामशब्देन कृतकरत्वात्। अतोऽत्र प्रकृतिवियुक्तात्मोपदेशप्रकरणे तदुपयुक्तः कश्चिदर्थो वक्तव्य इत्यभिप्रायेणाऽऽह—प्रकृत्येति। समित्येकीकारे। कल्पो भ्रान्तिज्ञानम्। प्रकृत्येति देहरूपेण परिणतयेति शेषः। तद्गुणैरात्मन एकीकरणं नाम गुणहेतुककर्मविशेषे स्वहेतुत्वानुसंधानम्। यद्वा प्रकृतिगुणभूतानां सत्त्वरजस्तमसां देवत्वमनुष्यत्वादिसंनिवेशानां स्थौल्यकार्श्यशुक्लकृष्णादीनां च स्वात्मानं प्रति गुणत्वेनानुसंधानम्। एतेनास्वे गृहादौ स्वमिति बुद्धिरपि संगृहीता भवति। एवंविधकामसंकल्पराहित्ये पण्डितशब्दाभिप्रेतं हेतुमाह—प्रकृतिवियुक्तेति। पण्डितं हेयोपादेयभूतदेहात्मादिविवेकज्ञानवन्तम्। ऊहापोहादिक्षमा बुद्धिः पण्डा। चरमोक्तस्यापि पण्डितशब्दस्य तं पण्डितमित्युद्देश्यनिर्देशः, पापनिवर्तकत्वलक्षणज्ञानप्राशस्त्यविध्यौचित्यात्। अप्रस्तुतस्वतन्त्रज्ञानान्तरव्यवच्छेदायोक्तम्—कर्मान्तर्गतेति। नह्यत्र क्रियमाणमेव कर्म ज्ञानाग्निना दह्यते। निष्फलत्वप्रसङ्गात्। नाप्युक्ताङ्गं तस्य विद्यामाहात्म्यनिवर्त्यत्वात्। अतः प्राचीनेत्युक्तम्। तत्त्वज्ञा इति। प्राप्यस्य प्राप्तुश्चाऽऽत्मनः प्रापकस्य च कर्मयोगस्यासंदिग्धाविपरीतस्वरूपज्ञा बुधशब्देन विवक्षिता इति भावः। शङ्कोत्तरत्वं निगमयति—अत इति ॥ १९ ॥

---

१ क. °त्त्वज्ञाः। अतः।

एतदेव विवृणोति—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥

कर्मफलासङ्गं त्यक्त्वा नित्यतृप्तो नित्ये स्वात्मन्येव तृप्तो निराश्रयोऽस्थिरप्रकृतावाश्रयबुद्धिरहितो यः कर्माणि करोति स कर्मण्याभिमुख्येन प्रवृत्तोऽपि नैव किंचित्कर्म करोति । कर्मापदेशेन ज्ञानाभ्यासमेव करोतीत्यर्थः ॥ २० ॥

पुनरपि कर्मणो ज्ञानाकारतैव विशोध्यते—

---

अनन्तरश्लोकस्यार्थान्तरपरत्वपौनरुक्त्ययोर्व्युदासायाऽऽह—एतदेव विवृणोतीति । नित्यतृप्त इत्यत्र नित्यं तृप्त इति नार्थः । तृप्तिहेत्वनुक्तेः । कर्मफलासङ्गं त्यक्त्वेति । कामशब्दविवरणेनानित्यत्यागेऽभिहिते संकल्पवर्जितत्वविवरणतया नित्यस्वीकारस्य वक्तुमुचितत्वादित्यभिप्रेत्य नित्ये स्वात्मन्येव तृप्त इत्युक्तम् । निराश्रय इत्यत्र न तत्तदाश्रयभूतदेशादिमात्रं निषिध्यते । तत्परित्यागस्याशक्यत्वात् । अतोऽत्र लौकिकानां य आश्रयणीयत्वबुद्धिविषयस्तस्याऽऽश्रयणीयत्वबुद्धिरेव निषिध्यत इत्यभिप्रेत्योक्तम्—अस्थिरेत्यादि । तद्वृत्तस्याऽऽकाङ्क्षया य इत्यध्याहृतम् । अभिशब्दार्थ आभिमुख्यं तदेकपरता । नैव किंचिदित्युक्ते सामान्यतो ज्ञानमपि निषिद्धं स्यादिति तद्व्युदासायोचितं विशेष्यमाह—नैव किंचित्कर्मेति । कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोतीति व्याहतमित्याशङ्क्याऽऽह—कर्मापदेशेनेति । विपरीतविषयसंचरणेन ज्ञानाभ्यासविरोधिनामिन्द्रियाणामनुरूपविषयसंचारणमात्रं हि कर्मयोग इति भावः ॥ २० ॥

यस्येति श्लोकेन ज्ञानाकारत्वमुपपादितम् । त्यक्त्वेति श्लोकेन तदेव विवृतम् । अतः परं श्लोकत्रयेण तदेव विशोध्यत इत्यपुनरुक्ततामाह—पुनरपीति । उक्तार्थस्य दुर्ज्ञानत्वाद्विशदप्रतिपत्त्यर्थं पूर्वं बहुषु प्रदेशेषु व्याकीर्णताभिहितानां संकलय्य प्रतिपत्त्यर्थमस्यैवार्थस्याऽऽदरविषयत्वद्योतनार्थं चोक्त एवार्थः पुनरपि विविच्य प्रतिपाद्यते । कर्मपौष्कल्यादिविषयसर्वाशीर्निषेधपरत्वव्युदासाय

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥ २१ ॥

निराशीर्निर्गतफलाभिसंधिर्यतचित्तात्मा यतचित्तमनास्त्यक्तसर्वपरिग्रह आत्मैकप्रयोजनतया प्रकृतिप्राकृतवस्तुनि ममतारहितो यावज्जीवं केवलं शारीरमेव कर्म कुर्वन्किल्बिषं संसारं नाऽऽप्नोति। ज्ञाननिष्ठाव्यवधानरहितकेवलकर्मयोगेनै(णै)वंरूपेणाऽऽत्मानं पश्यतीत्यर्थः ॥ २१ ॥

---

निर्गतफलाभिसंधिरित्युक्तम् । यतचित्तात्मेत्येतन्नियन्तव्यविषयम् । तत्र नियन्तव्यस्य नियन्तृव्यतिरेकः स्वारसिकः । आत्मशब्दस्य चित्तस्वरूपाद्यर्थकत्वं तु निरर्थकम् । अतो मनोविषयत्वे युक्ते तदवस्थाविशेषरूपस्य बुद्ध्यहंकाराख्यवृत्तिसहपठितस्य चित्तस्य वाचकोऽयं चित्तशब्द इत्यभिप्रायेण यतचित्तमना इत्युक्तम् । विषयान्तरचिन्तारहितमना इत्यर्थः । अध्यवसायाभिमानचिन्तावृत्तिभेदान्मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यत इति शारीरकभाष्ये व्यक्तमुक्तम् । सृष्ट्यादिप्रकरणेषु तु बुद्ध्यादिशब्दो महदादिवाचकः । अत्र चित्तस्य पृथगभिधानं मनसो बुद्ध्यहंकारावस्थयोरप्युपलक्षणम् । प्रकृतिप्राकृतेति । सर्वशब्दाभिप्रेतभोग्यभोगोपकरणादिसंग्रहः । सर्वविषयः परिग्रहः। स च स्वकीयताभिमानः ।

'पर्याप्तौ च परीवार आलवाले परिच्छदे ।
पत्नीस्वीकारशपथमूल्येष्वपि परिग्रहः ' इति वैजयन्ती ॥

शारीरशब्दसामर्थ्याच्छरीरावधिकत्वं सिद्धमिति यावज्जीवमित्युक्तम् । शारीरं शरीरसंबन्धि शरीरिणो दुस्त्यजमिति भावः । यद्वा बुद्धिव्यापारभूतफलसङ्गादिराहित्याच्छारीरमित्युक्तम् । अथवा शारीरमेव शरीरधारणाद्यर्थमेव न तु स्वर्गाद्यर्थमिति भावः । मनोनियमनातिशयसापेक्षज्ञानयोगव्यवच्छेदाय वा शारीरशब्दः। अत्र पारिव्राज्यासंगतेर्द्रव्यार्जनसाध्यकर्मव्यवच्छेदः परोक्तो न युक्तः । किल्बिषशब्दफलितमुक्तम्—संसारमिति । शारीरं केवलं कर्मेत्युक्ते यज्ञादिकर्मणोऽपि निषेधः प्रतीयेतेति तद्व्युदासार्थं केवलशब्दस्यात्र व्यवधाननिषेधपरत्वमाह—ज्ञानेति ॥ २१ ॥

यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥

यदृच्छोपनतशरीरधारणहेतुवस्तुसंतुष्टो द्वंद्वातीतो यावत्साधनसमाप्त्यवर्जनीयशीतोष्णादिसहो विमत्सरोऽन्यकृतोपद्रवोपनिपातहेतुभूतस्वकर्मनिरूपणेन परेषु विगतमत्सरः समः सिद्धावसिद्धौ च युद्धादिकर्मसु जयादिसिद्ध्यसिद्ध्योः समचित्तः कर्मैव कृत्वाऽपि ज्ञाननिष्ठां विनाऽपि न निबध्यते न संसारं प्रतिपद्यते ॥ २२ ॥

---

शारीरं कर्म कुर्वन्तीत्युक्ते शरीरधारणार्थद्रव्यादिष्ववश्यं प्रवृत्तिः स्यात्ततश्चावर्जनीयाः शस्त्रपातादिशीतोष्णमृदुपरुषादिस्पर्शाः, ततश्च प्रवृत्तिविघातिषु क्रोधः स्यात् । विहतायां च प्रवृत्तौ मोघप्रयत्नतया संतापो लाभे प्रहर्षश्च स्यातामिति कर्मयोग एवाऽऽत्मदर्शनविरोधिसमस्तवैरिणामुत्थापकः प्रसज्यत इतिशङ्कानिरासाय दृष्टफलेष्वसङ्ग उच्यते यदृच्छेति श्लोकेन । तत्र शरीरधारणाद्यर्थेषु साभिसंधिकात्यन्तव्यापारनिवृत्तिपरं प्रथमं पादं व्याख्याति—यदृच्छोपनतेति । समस्तव्यापारनिवृत्तौ विवक्षितायां स्वयमुपनतानां न(नि)गि(गि)रणादिव्यापारोऽपि निवृत्तः स्यात् । ततो ग्याप्रियमाणस्यैवाभिसंध्यादिनिवृत्तिरिह विवक्षिता । एतेन यदा स्वयमेव यत्किंचिच्छरीरधारणवस्त्वागमस्तदा ततोऽतिशयितमाधुर्यादिविशिष्टे न प्रवर्तितव्यमित्युपदिष्टं भवति । यावदित्यादिना मात्रास्पर्शास्त्वित्यादि पूर्वप्रपञ्चितं स्मारितम् । अनिष्टेत्यादि । यथा तापादिहेतुषु तपनादिषु स्वकर्मनिरूपणेनाक्रोधः । यथा छत्रादिभिरातपनिवारणादिमात्रमेव क्रियते तावदत्रापि कर्तव्यमिति भावः । युद्धादीत्यादिना सुखदुःखे समे कृत्वा सिद्ध्यसिद्ध्योः समो भूत्वेत्यादिकं स्मारितम् । कृत्वेत्यस्य सामर्थ्यात् कर्मैवेत्युक्तम् । बन्धहेतौ सत्यपि न बध्यत इति विरोधव्युदासायापिशब्दतात्पर्यमाह—ज्ञाननिष्ठां विनेति । कर्मयोगानुष्ठानपूर्वकस्वतन्त्रज्ञानयोगं विनाऽपीत्यर्थः । न निबध्यत इत्यस्य कर्मणैव ज्ञाननिष्ठाफलसिद्धौ तात्पर्यमाह—न संसारमिति ॥ २२ ॥

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

आत्मविषयज्ञानावस्थितमनस्त्वेन विगततदितरसङ्गस्य तत एव निखिलपरिग्रहविमुक्तस्योक्तलक्षणयज्ञादिकर्मनिर्वृत्तये वर्तमानस्य पुरुषस्य बन्धहेतुभूतं प्राचीनं कर्म समग्रं प्रविलीयते निःशेषं क्षीयते ॥ २३ ॥

प्रकृतिवियुक्तात्मस्वरूपानुसंधानयुक्ततया कर्मणो ज्ञानाकारत्वमुक्तम् । इदानीं सर्वस्य सपरिकरस्य कर्मणः परब्रह्मभूतपरमपुरुषात्मकत्वानुसं-

---

'त्यक्त्वा कर्मफलासङ्गम्' 'त्यक्तसर्वपरिग्रहः' 'यतचित्तात्मा' इत्येतैः पूर्वं बुद्धिपूर्वः सङ्गपरित्यागादिरुक्तः । इदानीं तथाविधनियमवतोऽवस्थान्तरे यज्ञाद्यर्थद्रव्यार्जनादिव्यापृतस्यापि स्वरसत एव सङ्गाभावादिकं वदन्ननन्तस्यापि विरोधिकर्मणः कर्मयोगप्रभावान्निवृत्तिमाह—गतसङ्गस्येति श्लोकेन । पूर्वोक्तैर्बुद्धिपूर्वसङ्गत्यागादिभिरात्मज्ञाने मनोऽवस्थितमतो नेदानीं नियन्तव्यम् । ततश्च सङ्गोऽपि निरतिशयभोग्यस्याऽऽत्मनोऽनुसंधानात्सवासनं स्वयमेव गतः । एवं सङ्गे निवृत्ते न स्वयं सर्वपरिग्रहास्त्याज्याः किंतु तैरयं मुक्तः । एवं जितसमस्तजेतव्यस्य यथावस्थितोपाये निष्प्रत्यूहं प्रवर्तमानस्याऽऽत्मसाक्षात्कारतत्प्राप्तिविरोधि पूर्वकृतं पुण्यपापरूपं सर्वकर्म विनश्यतीत्येतदखिलं दर्शयति—आत्मविषयेति । कर्मशब्दः प्रथमान्तः प्रविलीयत इत्यनेनान्वितः । आचरत इत्यस्य तु कर्मविषयत्वं स्वरससिद्धम् । अन्यथा समग्रं प्रविलीयत इत्येतदपि साकाङ्क्षं स्यादित्येतदभिप्रेत्य—यज्ञादिकर्मनिर्वृत्तये वर्तमानस्येत्याद्युक्तम् । यज्ञायेत्यनेन स्वकुक्षिभरणादिमात्रनिरासः । समग्रशब्दस्योपसर्गस्याभिप्रायान्निःशेषमित्युक्तम् । सहाग्रेण फलेन वर्तत इति परव्याख्यानमप्रसिद्धार्थत्वादर्थसिद्धकथनरूपत्वाच्च हेयम् । धातोः श्लेषे कारणापत्तौ च प्रयोगात्तद्व्युदासाय क्षीयत इत्युक्तम् ॥ २३ ॥

ब्रह्मार्पणमिति श्लोकोऽपि प्रकारभेदेन कर्मणो ज्ञानाकारत्वोपपादक इति पूर्वेण संगतिं दर्शयति—प्रकृतीति । सर्वस्य नित्यनैमित्तिकादिरूपस्य । सपरिकरस्य स्रुक्स्रुवहविरादिविशिष्टस्ये-

धानयुक्ततया ज्ञानाकारत्वमाह—

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

ब्रह्मार्पणमिति। हविर्विशेष्यते। अर्प्यतेऽनेनेत्यर्पणं स्रुगादि तद्ब्रह्मकार्यत्वाद्ब्रह्म। ब्रह्म यस्य हविषोऽर्पणं तद्ब्रह्मार्पणं ब्रह्म हविः स्वयं च ब्रह्मभूतम्। ब्रह्माग्नौ ब्रह्मभूतेऽग्नौ ब्रह्मणा कर्त्रा हुतम्। इति सर्वं कर्म ब्रह्मात्मकत्वाद्ब्रह्ममयमिति यः समाधत्ते स ब्रह्मकर्मसमाधिः। तेन ब्रह्मकर्म-

---

त्यर्थः। ब्रह्मशब्दः पुरुषोत्तम एव मुख्यवृत्त इति शारीरकभाष्यारम्भे प्रपञ्चितम्। तत्र च मुख्ये संभवति गौणत्वमन्याय्यम्। सर्वस्य च परमपुरुषात्मकत्वानुसंधानं शास्त्रसिद्धम्। स्वयं च वक्ष्यति—'मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम्' इत्यभिप्रायेण परब्रह्मभूतपरमपुरुषात्मकत्वानुसंधानोक्तिः। अत्र ब्रह्मव्यतिरिक्तार्पणहविरादिमिथ्यात्वभावनं ब्रह्मण एव यज्ञत्वकल्पनादिकं च परोक्तं प्रत्यक्षादिविरोधप्रकृतासंगत्यादिभिर्निरसनीयम्। एकवाक्यत्वे संभवति वाक्यभेदायोगात्। ब्रह्मार्पणमित्यस्य व्यस्तपदत्वेन वाक्यभेदव्युदासायाऽऽह—ब्रह्मार्पणमिति। हविर्विशेष्यत इति। ब्रह्मण्यर्पणं प्रक्षेपो यस्येति समासे व्यधिकरणबहुव्रीहिः स्यात्। ब्रह्माग्नौ हुतमित्यनेन पौनरुक्त्यं च। अतः समानाधिकरणबहुव्रीहिरयम्। अर्पणशब्दश्चात्र करणव्युत्पत्त्या स्रुगादिविषयः। अधिकरणादिव्युत्पत्तावपि पूर्वोक्तपौनरुक्त्यादिदोष इत्येतदभिप्रेत्याऽऽह—अर्प्यतेऽनेनेति। ब्रह्मकार्यत्वादिति हेतुः सर्वत्रानुषञ्जनीयः। ब्रह्मणि स्रुगादिदृष्टिविधिभ्रमव्युदासाय ब्रह्मकार्यत्वाद्ब्रह्म स्वयं च ब्रह्मभूतं ब्रह्मभूतेऽग्नावित्याद्युक्तम्। ब्रह्मणा हुतमित्यत्रार्पणहविरग्निशब्दवद्विशेष्यनिर्देशाभावात्करणस्य च ब्रह्मार्पणमित्युक्तत्वात्पारिशेष्यात्कर्तरि तृतीयेति व्यञ्जनाय ब्रह्मणा कर्त्रा हुतमित्युक्तम्। नन्वत्र पूर्वोत्तरार्धयोरन्वयो न दृश्यते। न च पूर्वार्धं पृथग्वाक्यम्, अपूर्वत्वात्। अत आह—इतीत्यादि समाधत्त इत्यन्तम्। ब्रह्मात्मकत्वाद्ब्रह्ममयमिति। तत्कार्यत्वेन तच्छरीरतया वा तदात्मकत्वात्तदिति व्यपदेशार्हमित्यर्थः। एतेन ब्रह्मकर्मसमाधिशब्दोऽपि व्याख्यात इत्याह—स इति। ब्रह्मात्मके कर्मणि समाधिरनुसंधानं

समाधिना ब्रह्मैव गन्तव्यं ब्रह्मात्मकतया ब्रह्मभूतमात्मस्वरूपं गन्तव्यम् । मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसंधानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनसाधनं न ज्ञाननिष्ठाव्यवधानेनेत्यर्थः ॥ २४ ॥

एवं कर्मणो ज्ञानाकारत्वं प्रतिपाद्य कर्मयोगभेदानाह—

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

दैवं देवार्चनरूपं यज्ञमपरे कर्मयोगिणः पर्युपासते सेवन्ते तत्रैव निष्ठां

---

यस्य स तथोक्तः । गत्यभावादिह व्यधिकरणबहुव्रीहिः । यद्वा समाधत्त इति समाधिशब्दार्थः । ब्रह्मरूपं कर्म समाधत्तेऽनुसंधत्ते ब्रह्मैव तेन गन्तव्यमित्यत्रापि कर्मयोगसाक्षात्कार्यमात्मस्वरूपमात्रं स्रुग्घविरग्न्यादिवद्ब्रह्मशब्देनोच्यत इत्याह—ब्रह्मात्मकतयेति । फलितं ज्ञानाकारत्वं वदन्वाक्यार्थमाह—मुमुक्षुणेति । आत्मावलोकनसाधनमित्यनेन ब्रह्म गन्तव्यमित्यस्यार्थो दर्शितः । साक्षाच्छब्देन न ज्ञाननिष्ठेत्यादिना च, एवकारार्थो विवृतः ॥ २४ ॥

उक्तार्थसंगतिपूर्वकं दैवमेवेत्यादेः प्राणान्प्राणेषु जुह्वतीत्यन्तस्य प्रघट्टकस्यार्थमाह—एवं कर्मण इति । देवसंबन्धि दैवम् । तत्संबन्धित्वं च तदर्चनरूपत्वमित्युक्तम् । दैवमेवेत्यवधारणेनापर इत्यादिना च विकल्पः सिद्धः । ततश्च देवसंबन्धमात्रं साधारणं नात्र वाच्यमतोऽर्चनशब्देन वक्ष्यमाणयागहोमादिभ्यो व्यावृत्तिः सूचिता । यागादेरपि देवार्चनत्वेऽपि तत्तद्देवतारूपादिसपर्यायां ह्यर्चनशब्दः प्रसिद्धः । कर्मयोगिना(णा)मित्युपक्रमवदत्रापि योगिशब्दः कर्मयोगनिष्ठविषय इति ज्ञापनाय कर्मयोगिन(ण) इत्युक्तम् । दैवस्य यज्ञत्वेन दृष्टिरत्र विधीयत इतिभ्रमव्युदासाय निरन्तरानुष्ठानप्रयुक्तचरेण पर्यायेण व्याख्याति—सेवन्त इति । सेवा भक्तिरुपास्तिरित्यत्र सेवोपासनशब्दौ सेव्यं प्रति करणत्रयस्यानुकूलवृत्तिनैरन्तर्यपरौ न तु ध्यानपरौ । भक्तिशब्दस्तु ध्यानस्य प्रीतिरूपतां वक्ति । ननु मन्वादिभिः 'देवताभ्यर्चनं चैव समिदाधानमेव च' इति नित्यकर्मतया स्मरणाद्देवतार्चनरूपो यज्ञः सर्वेषामपि कर्मयोगिना(णा)मवश्यकर्तव्यः स कथं विकल्प्यत इत्यत्राऽऽह—तत्रैव निष्ठां कुर्वन्तीत्यर्थ इति । ननु ब्रह्मार्पणमित्यत्र

कुर्वन्तीत्यर्थः । अपरे ब्रह्माग्नौ यज्ञं यज्ञेनैवोपजुह्वति । यज्ञं यज्ञरूपं ब्रह्मात्मकमाज्यादिद्रव्यं यज्ञेन यज्ञसाधनभूतेन स्रुगादिना जुह्वति । अत्र यज्ञशब्दो हविःस्रुगादियज्ञसाधने वर्तते । ब्रह्मार्पणं ब्रह्म हविरिति न्यायेन होम एव निष्ठां कुर्वन्तीत्यर्थः ॥ २५ ॥

श्रो *त्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

---

श्लोके कश्चित्कर्मयोगभेदोऽभिहितः । अर्पणहविरग्न्यादिविशेषनिर्देशेनावान्तरभेदप्रतीतेः । तत्र च तेनेति कर्ताऽपि निर्दिष्टः । तत्प्रतियोगिकोऽयमपरशब्द इति किं नाङ्गी क्रियते तदुच्यते— ब्रह्मार्पणमिति श्लोको न कर्मयोगस्वरूपभेदविषयः किंतु सर्वेषामपि कर्मयोगानां (णां) ब्रह्मात्मकत्वानुसंधानाख्यसाधारणगुणविषयः । तत्रैव ‘ ब्रह्मकर्मसमाधिना ’ इति सामान्येनोक्तेः । अतोऽर्पणहविरादिग्रहणं तत्तत्कर्मयोगभेदापेक्षिततत्तत्कारकविशेषोपलक्षणार्थम् । अत एव निवृत्तिलक्षणयज्ञप्रसङ्गाद्दैवमेवापर इत्यादिभिः प्रवृत्तिलक्षणयज्ञोक्तिरिति परोक्तं परास्तम् । ‘ ब्रह्माग्नावपरे यज्ञम् ’ इत्यत्र यज्ञस्वरूपस्य परमात्मादेर्वा साक्षाद्धोतव्यत्वहोमसाधनत्वानुपपत्तेर्यज्ञसाधनत्वानुपपत्तेर्यज्ञसाधनलक्षणया द्वितीयान्तयज्ञशब्दो हविर्विषयः । तृतीयान्तस्तु स्रुगादिविषय इत्याह—अत्रेति । ननु ब्रह्माग्नौ ब्रह्मणा हुतमिति पूर्वोक्तमत्रापि ब्रह्माग्नावपर इत्युच्यते । अतोऽत्र यज्ञं यज्ञेनेत्यनयोरर्थोऽन्यथा वर्णनीयः । इतरथा पौनरुक्त्यप्रसङ्गः । सर्वकर्मयोगसाधारणस्यार्थस्य विशेषतया निर्देशोऽप्यनुपपन्न इत्यत्राऽऽह— ब्रह्मार्पणं ब्रह्म हविरिति न्यायेनेति । अत्र यज्ञशब्दाज्जुह्वतिशब्दाच्च यागहोमयोर्निष्ठाया एव हि विवक्षितत्वादवान्तरभेदत्वमपौनरुक्त्यं चोपपन्नमिति भावः । अत्राग्नित्वेन कल्पिते ब्रह्मणि यज्ञशब्दनिर्दिष्टं जीवमपूर्वं वा हविष्ट्वेन परिकल्प्य प्रक्षिपन्ति, इत्यादिपरव्याख्यानानि शब्दवृत्तिपरिक्लेशादेव निरस्तानि । कर्मप्रकरणाच्चात्र सर्वमानसयज्ञत्वक्लृप्तिपक्षोऽपि अयुक्तः ॥ २५ ॥

---

* अस्य श्लोकस्य मधुसूदनसरस्वतीकृता व्याख्या त्वित्थम्—श्रोत्रादीनि ज्ञानेन्द्रियाणि

तानि शब्दादिविषयेभ्यः प्रत्याहृत्यान्ये प्रत्याहारपराः संयमाग्निषु धारणा ध्यानं समाधिरिति त्रयमेकविषयं संयमशब्देनोच्यते । तथा चाऽऽह भगवान्पतञ्जलिः—'त्रयमेकत्र संयमः' (यो० सू० ३ । ४ ) इति । तत्र हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनं धारणा । एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोऽन्तराऽन्तराऽन्याकारप्रत्ययव्यवहितो ध्यानम् । सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः । स तु चित्तभूमिभेदेन द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्च । चित्तस्य हि पञ्च भूमयो भवन्ति क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति । चित्तं हि सात्त्विकराजसतामसगुणयुक्तम् । सत्त्वरजस्तमआत्मकत्वात् । तत्र तत्त्वज्ञानादयः सात्त्विकाः । प्रवृत्त्यादयो राजसाः । निद्रादयस्तामसाः । एते हि सत्त्वादिद्रव्याश्रितत्वाद्गुणा उच्यन्ते । सत्त्वादीनि तु द्रव्याण्यपि रज्ज्वारम्भकतन्तुवदेव गुणा उच्यन्ते । तत्र सत्त्वप्रधानमपि चित्तं यदा स्वोपसर्जनरजस्तमःसंसर्गादणिमाद्यैश्वर्यशब्दादिविषयानुरक्तं तदा क्षिप्तावस्थमित्युच्यते । यथा दैत्यदानवादीनाम् । तन्द्राद्विग्रस्तं मूढम् । यथा रक्षःपिशाचादीनाम् । सर्वदा विषयासक्तमपि कदाचिद्ध्याननिष्ठं क्षिप्ताद्विशिष्टतया विक्षिप्तम् । यथा हिरण्यगर्भादिदेवानाम् । तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि कादाचित्कः समाधिर्विक्षेपप्राधान्यात्तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति । एकाग्रं तु एकविषयकधारावाहिकवृत्तिसमर्थं सत्त्वोद्रेकेण तमोगुणकृततन्द्रादिरूपलयाभावादात्माकारा वृत्तिः । सा च रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैवेति शुद्धे सत्त्वे भवति चित्तमेकाग्रम् । अयमेव च संप्रज्ञातः समाधिः । सम्यक्प्रज्ञायते साक्षात्क्रियते ध्येयमस्मिन्नित्यर्थात् । तत्र ध्येयाकारा वृत्तिरपि भासते । तस्यां अपि निरोधे निरुद्धं चित्तमसंप्रज्ञातसमाधिभूमिः । तदुक्तम्—'तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिः' (यो० सू० १ । ५१ ) इति । अयमेव सर्वतो विरक्तस्य समाधिफलमपि सुखमनपेक्षमाणस्य योगिनो दृढभूमिः सन्धर्ममेघ इत्युच्यते । तदुक्तम्—'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' 'ततः क्लेशकर्मनिवृत्तिः' ( यो० सू० ४ । २९–३० ) इति । अनेकरूपेण संयमानां भेदादग्निष्विति बहुवचनम् । तेषु इन्द्रियाणि जुह्वति । धारणाध्यानसमाधिसिद्ध्यर्थं सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहरन्तीत्यर्थः । तदुक्तम्—'स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' ( यो० सू० २ । ५४ ) इति । विषयेभ्यो निगृहीतानीन्द्रियाणि चित्तरूपाण्येव भवन्ति । ततश्च विक्षेपाभावाच्चित्तं धारणादिकं निर्वहतीत्यर्थः । तदनेन प्रत्याहारधारणाध्यानसमाधिरूपं योगाङ्गचतुष्टयमुक्तम् । तदेवं समाध्यवस्थायां सर्वेन्द्रियवृत्तिनिरोधो यज्ञत्वेनोक्तः । इदानीं व्युत्थानावस्थायां रागद्वेषराहित्येन विषयभोगो यः सोऽप्यपरो यज्ञ इत्याह—'शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति' । अन्ये व्युत्थितावस्थाः श्रोत्रादिभिरविरुद्धविषयग्रहणं स्पृहाशून्यत्वेनान्यसाधारणं कुर्वन्ति । स एव तेषां होमः । इति ।

अन्ये श्रोत्रादीनामिन्द्रियाणां संयमने प्रयतन्ते । अन्ये योगिन इन्द्रियाणां शब्दादिविषयप्रवणतानिवारणे प्रयतन्ते ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

---

श्रोत्रादीनित्यत्र संयमस्य साक्षादग्नित्वाभावाच्छ्रोत्रादेश्च होतव्यत्वाभावात्तात्पर्यमाह—अन्य इति । संयमस्याग्नित्वं श्रोत्रादीनां निर्व्यापारत्वलक्षणभस्मसात्करणात् । ननु इन्द्रियनियमनमपि सर्वकर्मयोगसाधारणं कथमत्र विशिष्योच्यत इत्यत्रोक्तम्—संयमने प्रयतन्त इति । एवमुत्तरत्रापि प्रयतन्त इत्यनयोस्तात्पर्यं ग्राह्यम् । तथा निष्ठाशब्देऽपि । अत्र प्रतीन्द्रियसंयमभेदात्संयमाग्निष्विति बहुवचनम् । शब्दादीनित्यत्रेन्द्रियेषु शब्दादिविषयान्समर्पयन्तीति भ्रमव्युदासायाऽऽह—इन्द्रियाणां शब्दादिविषयप्रवणतानिवारण इति । इन्द्रियाणां नियमनं हि श्रोत्रादीनित्यादिनोक्तम् । अत्र त्विन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः, इतिवद्विषयमनसोर्हि नियमनं क्रमेणोच्यते । विषयस्य नियमनं नाम दूरीकरणं तत्संनिधिपरिहार इति यावत् । तत एवेन्द्रियाणां तत्प्रवणता निवर्तत इति भावः । कस्तर्हीन्द्रियाग्निषु शब्दादेर्होमो नाम । उच्यते—होमेन हविषो विनाशः क्रियते तद्वदत्र शब्दादेरिन्द्रियेषु विनाशो नाम तत्संबन्धविनाशो विवक्षित इति । यद्वा श्रोत्रादीनित्यत्र विषयसंनिधिपरिहारो विवक्षितः । इह तु संनिहितानामपि विषयाणामकिंचित्करत्वापादनमिति विभागः । विषयप्रवणतानिवारण इत्यनेनात्यन्तसमस्तविषयनिवृत्तेर्दुष्करत्वान्निषिद्धादिभ्योऽत्यन्तनिवारणं धर्माविरुद्धेष्वतिसङ्गनिवृत्तिश्च विवक्षिता ॥ २६ ॥

---

* एतत्पद्यस्य श्रीमधुसूदनसरस्वतीकृता व्याख्या शिष्यबुद्धिचमत्कारकारिणी वैराग्यकारिणीति च प्रदर्श्यते—द्विविधो हि समाधिर्भवति लयपूर्वको बाधपूर्वकश्च । तत्र ' तदनन्यत्वमारम्भणशब्दादिभ्यः ' ( ब्र० सू० २ । १ । १४ ) इति न्यायेन कारणव्यतिरेकेण कार्यस्यासत्त्वात्पञ्चीकृतपञ्चभूतकार्यं व्यष्टिरूपं समष्टिरूपविराट्कार्यत्वात्तद्व्यतिरेकेण नास्ति । तत्रापि पृथिवी शब्दस्पर्शरूपरसगन्धाख्यपञ्चगुणा गन्धेतरचतुर्गुणाप(प्)कार्यत्वात्तद्व्यतिरेकेण नास्ति । ताश्चतुर्गुणा आपो गन्धरसेतरत्रिगुणात्मकतेजःकार्यत्वात्तद्व्यतिरेकेण न सन्ति तदपि त्रिगुणात्मकं तेजो गन्धरसरूपेतरद्विगुणवायुकार्यत्वात्तद्व्यतिरेकेण नास्ति ।

सोऽपि द्विगुणात्मको वायुः शब्दमात्रगुणाकाशकार्यत्वात्तद्व्यतिरेकेण नास्ति। स च शब्दगुण आकाशो बहु स्यामिति परमेश्वरसंकल्पात्मकाहंकारकार्यत्वात्तद्व्यतिरेकेण नास्ति। सोऽपि संकल्पात्मकोऽहंकारो मायेक्षणरूपमहत्तत्त्वकार्यत्वात्तद्व्यतिरेकेण नास्ति। तदपीक्षणरूपं महत्तत्त्वं मायापरिणामत्वात्तद्व्यतिरेकेण नास्ति। तदपि मायाख्यं कारणं जडत्वेन चैतन्येऽध्यस्तत्वात्तद्व्यतिरेकेण नास्तीत्यनुसंधानेन विद्यमानेऽपि कार्यकारणात्मके प्रपञ्चे चैतन्यमात्रगोचरो यः समाधिः स लयपूर्वक उच्यते। तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाविद्यातत्कार्यस्याक्षीणत्वात्। एवं चिन्तनेऽपि कारणसत्त्वेन पुनः कृत्स्नप्रपञ्चोत्थानादयं सुषुप्तिवत्सबीजः समाधिर्न मुख्यः। मुख्यस्तु तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेणाविद्याया निवृत्तौ सर्गक्रमेण तत्कार्यनिवृत्तेरनाद्यविद्यायाश्च पुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्बीजो बाधपूर्वकः समाधिः। स एवानेन श्लोकेन प्रदर्श्यते। तथा हि—सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि चेन्द्रियकर्माणीन्द्रियाणां श्रोत्रत्वक्चक्षुरसनघ्राणाख्यानां पञ्चानां वाक्पाणिपादपायूपस्थाख्यानां च पञ्चानां बाह्यानामान्तरयोश्च मनोबुद्ध्योः कर्माणि शब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि वचनादानविहरणोत्सर्गानन्दाख्यानि च संकल्पाध्यवसायौ च। एवं प्राणकर्माणि च प्राणानां प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि बहिर्नयनमधोनयनमाकुञ्चनप्रसारणादि अशितपीतसमनयनमूर्ध्वनयनमित्यादीनि। अनेन पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनो बुद्धिश्चेति सप्तदशात्मकं लिङ्गमुक्तम्। तच्च सूक्ष्मभूतसमष्टिरूपं हिरण्यगर्भाख्यमिह विवक्षितमिति वदितुं सर्वाणीति विशेषणम्। आत्मसंयमयोगाग्नौ, आत्मविषयकः संयमो धारणाध्यानसंप्रज्ञातसमाधिरूपस्तत्परिपाके सति योगो निरोधसमाधिः। यं पतञ्जलिः सूत्रयामास—'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः' (यो० सू० ३। ९) इति। व्युत्थानं क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयं तत्संस्काराः समाधिविरोधिनस्ते योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते। तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति। ततश्च निरोधमात्रक्षणेन चित्तान्वयो निरोधपरिणाम इति। तस्य फलमाह—'ततः प्रशान्तवाहिता संस्कारात्' (यो० सू० ३। १०) इति। तमोरजसोः क्षयाल्लयविक्षेपशून्यत्वेन शुद्धसत्त्वरूपं चित्तं प्रशान्तमित्युच्यते। पूर्वपूर्वप्रशमसंस्कारपाटवेन तदाधिक्यं प्रशान्तवाहितेति। तत्कारणं च सूत्रयामास— 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः' (यो० सू० १। १८) इति। विरामो वृत्त्युपरमस्तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येन संपादनं तत्पूर्वकस्तज्जन्योऽन्यः संप्रज्ञाताद्विलक्षणोऽसंप्रज्ञात इत्यर्थः। ईदृशो य आत्मसंयमयोगः

अन्ये ज्ञानदीपित आत्मसंयमयोगाग्नौ सर्वाणीन्द्रियकर्माणि प्राणकर्माणि च जुह्वति। मनसेन्द्रियप्राणानां कर्मप्रवणतानिवारणे प्रयतन्त इत्यर्थः ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

---

इन्द्रियार्थयोर्नियमनेऽभिहिते 'अर्थेभ्यश्च परं मनः' इति क्रमेण मन एव नियन्तव्यतया वक्तव्यम्। अतोऽत्राऽऽत्मसंयमशब्देन मनोनियमनमुच्यत इति ज्ञापयति—मनःसंयमयोगाग्नाविति। मनःसंयम एव योगसाधनत्वादिना योगः। मनःसंयमस्य वा योगः प्राप्त्यादि। तस्य ज्ञानदीपितत्वं देहातिरिक्तशुद्धात्मस्वरूपानुसंधानमूलत्वम्। श्रोत्रादीनां शब्दादीनामिव चात्रापि होतव्यतयोक्तानामिन्द्रियकर्मणां प्राणकर्मणां च नियमनमुच्यते चेत्पौनरुक्त्यादिदोषः स्यादितिशङ्काव्युदासायाऽऽह—मनस इति। इन्द्रियकर्म दर्शनस्पर्शनादिकं वचनादानादिकं च। प्राणकर्मोच्छ्वासनिःश्वासादिकम्। यद्वा प्राणसंवादादिसिद्ध इन्द्रियव्यापारादिहेतुः सूक्ष्मो व्यापारविशेषः। तेन वक्ष्यमाणप्राणायामाद्व्यवच्छेदः। अत्रापि प्रवणतानिवारणशब्दतात्पर्यं पूर्ववत्। श्रोत्रादीनां पूर्वमुपादानात्कर्मेन्द्रियमात्रनियमनपरो वाऽयं श्लोकः ॥ २७ ॥

प्रत्येकं यज्ञशब्दप्रयोगाद्बहुविधकर्मयोगभेदनिष्ठा उच्यन्ते। तत एवापरशब्दोऽपि प्रत्येकमन्वितः। तत्र द्रव्यैर्यज्ञा येषां ते द्रव्ययज्ञाः। यद्वा द्रव्यात्मका यज्ञा येषामिति विग्रहः। द्रव्यशब्दसामर्थ्यात्तत्साध्ययज्ञविशेषाः सर्वे संगृहीता इति देवतार्चनदानयागमो (हो) माः पृथगुक्ताः। अतो द्रव्ययज्ञा इत्यादि। बहुव-

---

स एवाग्निस्तस्मिञ्ज्ञानदीपिते ज्ञानं वेदान्तवाक्यजन्यो ब्रह्मात्मैक्यसाक्षात्कारस्तेनाविद्यातत्कार्यनाशद्वारा दीपितेऽत्यन्तोज्ज्वलिते बाधपूर्वके समाधौ समष्टिलिङ्गशरीरमपरे जुह्वति प्रविलापयन्तीत्यर्थः।

---

१ क. ङ. °पिते मनःसं°।

केचित्कर्मयोगिणो द्रव्ययज्ञा न्यायतो द्रव्याण्यादाय देवार्चने प्रयतन्ते। केचिच्च दानेषु केचिच्च यागेषु केचिच्च होमेषु। एते सर्वे द्रव्ययज्ञाः। केचित्तपोयज्ञाः कृच्छ्रचान्द्रायणोपवासादिषु निष्ठां कुर्वन्ति। योगयज्ञाश्चापरे पुण्यतीर्थपुण्यस्थानप्राप्तिषु निष्ठां कुर्वन्ति। इह योगशब्दः कर्मनिष्ठाभेदप्रकरणात्तद्विषयः। केचित्स्वाध्यायाभ्यासपराः केचित्तदर्थज्ञाना-

---

चनमपि तत्तदवान्तरभेदविषयमिति भावः। ननु देवतार्चनयागादेः पूर्वमेवोक्तत्वान्निरर्थकं पुनर्वचनमिति चेन्न। द्रव्यशब्दस्य साधारणत्वेन दानस्यापि संग्रहात्। पूर्वं च तस्यानुक्तत्वेनापौनरुक्त्यात्। तर्हि दानयज्ञा इति विशिष्य वक्तव्यम्। तदपि न। अर्चनदानयागहोमयज्ञानां चतुर्णामपि तपोयज्ञादिभ्यो व्यावृत्तावान्तरसंग्राहकसूचनार्थतया न्यायार्जितद्रव्यसाध्यत्वज्ञापनार्थतया च सामान्यशब्दप्रयोगात्। तदेतदभिप्रेत्योक्तम्—एते सर्वे द्रव्ययज्ञा इति। यद्वा—अर्चनादिस्वरूपस्य यज्ञत्वं प्रागुक्तम्। इह तु तदर्थद्रव्यार्जनादेरेवेत्यभिप्रायेण—न्यायत इत्यादि प्रयतन्त इत्यन्तमुक्तम्। तपः शास्त्रीयोपभोगसंकोचः। तदवान्तरभेदप्रदर्शनम्—कृच्छ्रेत्यादि। योगयज्ञा इत्यत्र योगः संयोगः प्राप्तिरित्यर्थः। सा चात्र पुण्यतीर्थाद्यभिगमनतन्निवासादिरूपा विवक्षितेत्यभिप्रायेणाऽऽह—पुण्यतीर्थेति। पुण्यस्थानशब्दोऽत्र देवतास्थानाश्रमज(ज)नपदविशेषादिसंग्राहकः। नन्विह योगशब्दः साक्षाद्योगे कर्मयोगमात्रे वा किं न वर्तत इत्यत्राऽऽह—इहेति। कर्मनिष्ठाप्रकरणत्वात्साक्षाद्योगविषयत्वं न युक्तं तद्भेदप्रकरणत्वात्तत्सामान्यविषयत्वं चानुचितम्। तद्भेदेषु च पारिशेष्याद्योगशब्दसामर्थ्याच्च तीर्थादिप्राप्तिरेव ग्राह्या। सूचितं चैतत्संग्रहे परमाचार्यैः—कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनमितीति भावः। स्वाध्यायाभ्यासतदर्थज्ञानयोः पृथग्धर्मत्वेन पृथग्यज्ञत्वनिर्देशानु(शो)पपत्तेर्द्वंद्वस्य प्राधान्याच्च विभज्य निर्दिशति—केचित्स्वाध्यायाभ्यासपरा इति। स्वाध्यायसहपाठौचित्यादात्मज्ञानस्य च सर्वसाधारणत्वादर्थज्ञानस्यानुष्ठानेऽप्युपयोगात्केचित्तदर्थज्ञानाभ्यासपरा इत्युक्तम्। पर-

भ्यासपरा यतयो यतनशीलाः संशितव्रता दृढसंकल्पाः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

अपरे कर्मयोगिणः प्राणायामेषु निष्ठां कुर्वन्ति। ते च त्रिविधाः पूरकरेचककुम्भकभेदेन। अपाने जुह्वति प्राणमिति पूरकः । प्राणेऽपानमिति रेचकः । प्राणापानगती रुद्ध्वा प्राणानपानेषु जुह्वतीति कुम्भकः। प्राणायामपरेषु त्रिष्वप्यनुषज्यते नियताहारा इति। द्रव्ययज्ञप्रभृतिप्राणायाम-

---

शब्दोऽत्र साधारण्यव्यवच्छेदाय तन्निष्ठतामाह । यतिशब्दस्यात्राऽऽश्रमविशेषपरत्वानौचित्यात्सर्वकर्मयोगनिष्ठासाधारणश्च संकल्पोऽत्र व्रतशब्दार्थ इत्यभिप्रेत्य--दृढसंकल्पा इत्युक्तम्। संशितत्वमत्राकुण्ठत्वम्। तच्च दृढत्वमेव ॥ २८ ॥

प्राणायामपरायणा इत्यनेन वर्गत्रयस्य सामान्यसंग्रहः क्रियत इति व्यञ्जनाय प्राणायामेषु निष्ठां कुर्वन्तीति पृथग्वाक्यं कृतम्। प्राणायामनिष्ठानामवान्तरभेद [ ज्ञा ] नाय पूरकेत्यादिना प्राणायामावान्तरभेदप्रदर्शनम्। तत्तद्भेदप्रतिपादकांशं विविनक्ति-- अपर इत्यादिना । ऊर्ध्वप्रवृत्तस्य प्राणस्याधःप्रवेशनं हि पूरकः । ततश्चापाने जुह्वतीत्येतदुपचारादुपपन्नम् । एवमव ( धः ) स्थितस्य वायोरूर्ध्वप्रवर्तनं हि रेचक इति प्राणेऽपानमित्यप्युपचरितम्। वायोरूर्ध्वाधोगमननिवारणेनावस्थापनं कुम्भक इति प्राणापानगती रुद्ध्वेत्यादेरभिप्रायः।प्राणान्प्राणवृत्तिभेदानित्यर्थः। आहारनियमस्तु दृष्टादृष्टोपकारद्वारा सर्वप्राणायामसाधारणतया विहित इत्याह--प्राणायामेषु त्रिष्वपीति। किमेतेषामुच्चावचकर्मयोगभेदनिष्ठानामवान्तरफलभेदोऽस्तीति किं प्राणायामनिष्ठानां यज्ञादिकं त्याज्यमिति शङ्काद्वयं निराक्रियते--सर्वेऽपीति श्लोकेन। स्वसमीहितेष्विति वचनादविशिष्टफलतया विकल्पे न्याय्ये तत्तत्सामर्थ्याद्यनुसारिणी स्वेच्छैव हि विशेषनियामिकेति सूचितम्।

पर्यन्तेषु कर्मयोगभेदेषु स्वसमीहितेषु प्रवृत्ता एते सर्वे सह यज्ञैः प्रजाः सृष्ट्वेत्यभिहितमहायज्ञपूर्वकनित्यनैमित्तिककर्मरूपयज्ञविदस्तन्निष्ठास्तत एव क्षपितकल्मषाः ॥ २९ ॥ ३० ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

यज्ञशिष्टामृतेन शरीरधारणं कुर्वन्त एव कर्मयोगे व्यापृताः सनातनं च ब्रह्म यान्ति। अयज्ञस्य महायज्ञादिपूर्वकनित्यनैमित्तिककर्मरहितस्य नायं लोको न प्राकृतलोकः प्राकृतलोकसंबन्धिधर्मार्थकामाख्यः पुरुषार्थः स न सिध्यति कुत इतोऽन्यो मोक्षाख्यः पुरुषार्थः। परमपुरुषार्थतया

सामान्यस्य यज्ञशब्दस्यासंकोचप्रदर्शनाय सह यज्ञैरित्यादिकमुक्तम् ॥ २९ ॥ ३० ॥

यज्ञक्षपितकल्मषाः, यज्ञशिष्टामृतभुजः, इत्याभ्यां 'यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः' इत्यादिप्रागुक्तप्रत्यभिज्ञानात्तत्प्रकरणे च यज्ञशिष्टाशनस्य शरीरयात्रार्थत्वप्रपञ्चनात्तत्स्मारणायोक्तम्—यज्ञशिष्टामृतेन शरीरधारणं कुर्वन्त एवेति। प्राणायामादिषु निष्ठावतामपि नित्यत्वादिना यज्ञादिकमवश्यकार्यमित्यपि सिद्धम्। एवकारेणैवंविधशरीरधारणादिव्यापार आ(रो नाऽऽ-)त्मावलोकनविरोधी किंतूपयुक्त इत्यभिप्रेतम्। व्यापृता इति। अन्यथा व्यापार एवाशक्य इति भावः। ब्रह्मैव तेन गन्तव्यमिति पूर्वव्याख्याततुल्यार्थत्वादुपसंहारस्थं सनातनं ब्रह्म यान्तीत्येतद्व्याख्यातम्। कर्मयोगावान्तरभेदनिष्ठत्वाभिमानेन सामान्यधर्मभूतनित्यनैमित्तिकादिपरित्यागिनः सकलपुरुषार्थानर्हतोच्यतेनायमित्यर्थेन। अयज्ञस्येति व्याख्येयं पदम्। नायं लोक इत्यत्रायमिति निर्देशाभिप्रेतं दर्शयति—न प्राकृतलोक इति। लोकस्वरूपमात्रनिषेधभ्रमव्युदासायाऽऽह—प्राकृतलोकसंबन्धीति। अयं लोक इति प्रत्यक्षसिद्धभूलोकपरत्वौचित्यात्कुतोऽन्य इति। इदं स्वर्गादिपरं किं न स्यादित्याशङ्क्याऽऽह—परमपुरुषार्थतयेति। अयज्ञस्य मोक्षाभावे प्रतिपादिते हि तदर्थं तदुपादानं स्यादिति भावः। मोक्षव्यतिरिक्तदृष्टानुश्रविकपुरुषार्थवर्गत्रयस्यायं लोक इति निर्देशहेतुभूतसाधारणोपाधिं प्रस्तुतपरमपुरुषार्थविरुद्धरूपं च व्यञ्ज-

मोक्षस्य प्रस्तुतत्वात्तदितरपुरुषार्थोऽयं लोक इति निर्दिश्यते स हि प्राकृतः ॥ ३१ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

एवं हि बहुप्रकाराः कर्मयोगा ब्रह्मणो मुखे वितता आत्मयाथात्म्यावाप्तिसाधनतया स्थिताः । तानुक्तलक्षणानुक्तभेदान्कर्मयोगान्सर्वान् कर्मजान्विद्धि । अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मानुष्ठानजान्विद्धि । एवं ज्ञात्वा यथोक्तप्रकारेणानुष्ठाय विमोक्ष्यसे ॥ ३२ ॥

---

यितुमाह–स हि प्राकृत इति । प्रकृतिपरिणामविशेषरूपत्वात्तत्संसृष्टस्य प्राप्यत्वाच्च प्राकृतत्वोक्तिः ॥ ३१ ॥

एवं कर्मयोगावान्तरभेदाननुपदिश्य तत्तद्भेदेऽपि साधारणानां नित्यनैमित्तिकानामनुष्ठेयत्वं तत्परित्यागे प्रत्यवायश्चाभिहितः । अस्यैवार्थस्योपसंहारः क्रियत एवमिति श्लोकेन । बहुप्रकारकर्मयोगभेदोपदेशानन्तरमेवं बहुविधा यज्ञा इति वचनं प्रकृतविषयमेव भवितुमर्हतीति अभिप्रायेणाऽऽह–एवं हि बहुप्रकाराः कर्मयोगा इति । ब्रह्मशब्दोऽत्र यथावस्थितात्मविषयः । वेदादिपरत्वे प्रकृतौचित्याभावात् । मुखशब्दश्चोपायविषयः । आहुश्च नैघण्टुकाः–मुखं तु वदने मुख्ये ताप्ते द्वाराभ्युपाययोरिति । आत्मनः प्राप्त्युपाये कर्मयोगेऽवान्तरभेदतया वितता इत्यर्थः । तदाह–आत्मयाथात्म्येति । तानिति निर्देशः प्रस्तुतसमस्ताकारपरामर्शी, सर्वानिति चाशेषावान्तरभेदसंग्रह इत्यभिप्रायेणोक्तलक्षणानुक्तभेदानित्युक्तम् । उभाभ्यां पदाभ्याम्, एवंशब्दबहुविधशब्दयोरर्थोक्तिर्वा । अन्तर्गतज्ञानतया ज्ञानाकारत्वम् । उक्तलक्षणानितिवदत्रा ( ताऽ- ) ध्यायार्थतयाऽऽरम्भे निर्दिष्टेषु कर्मयोगस्वरूपाभिधानमपि कृतं भवतीति सूचितम् । सर्वान्कर्मजान्विद्धीति । पृथग्वचनात्प्राणायामादीनां प्राधान्यं नित्यनैमित्तिकानां तदर्थं (तदर्थत्वं)चाऽऽह–अहरहरिति । अनेन तस्याकरणे सर्वानर्हतया यावत्फलमनुष्ठेयत्वं प्रतिदिवसं पापहरणेनोत्तरसत्त्वोन्मेषहेतुत्वेनात्यन्तोपयुक्तत्वं च सूचितम् ॥ ३२ ॥

---

१ क. ख. ग. ° कर्मसक्तान्वि°।

अन्तर्गतज्ञानतया कर्मणो ज्ञानाकारत्वमुक्तम्। तत्रान्तर्गतज्ञाने कर्मणि ज्ञानांशस्यैव प्राधान्यमाह—

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

---

श्रेयानित्यादेराऽध्यायपरिसमाप्तेर्ज(ज्ञा)नविषयस्यैकप्रघट्टकस्य संगतिपूर्वकमर्थमाह—अन्तर्गतेति। अवान्तरभेदप्रतिपादनरूपावान्तरप्रकरणात्प्राचीनकर्मणो ज्ञानाकारत्वप्रतिपादकप्रघट्टकेनास्य साक्षात्संगतिः। ननु द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः श्रेयानिति निर्दिष्टे सति आत्मसाक्षात्कारान्तरङ्गज्ञानयोगप्राधान्यं ग्रहीतुमुचितम्। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यनेन कर्मफलस्य सर्वस्य ज्ञानान्तर्भावः प्रतीयते। 'अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः' 'ज्ञानाग्निः सर्वकर्माणि' 'योगसंन्यस्तकर्माणम्' इत्यादिनिर्देशाश्चानन्तरभाविनः कर्मयोगविरोधिनः। 'नहि ज्ञानेन सदृशम्' इति श्लोकोऽपि कर्मयोगाज्ज्ञानयोगस्य पावनत्वातिरेकपर इति प्रतीयते। 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इत्येतदपि ज्ञानयोगस्यान्तरङ्गतया शीघ्रकारित्वमितरस्य विलम्बितफलं(लत्वं) व्यनक्ति। 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' इति ज्ञानस्वरूपकथनमपि ज्ञानयोगत्वं द्रढयति। नहि कर्मयोगान्तर्गतेनाऽऽत्मज्ञानेनैव सर्वं साक्षात्क्रियते। स्वाध्यायज्ञानयज्ञाश्चेत्यत्र च द्रव्ययज्ञादेः पृथक्त्वेन [ज्ञान]यज्ञो निर्दिष्टः। अतो ज्ञानयोगप्रशंसाप्रकरणमिति। अत्रोच्यते। श्रेयान्द्रव्यमयाद्यज्ञादित्यत्र तावत्प्राधान्यमात्रात् ज्ञानयोगविवक्षा वक्तुमुचिता। 'कर्म ज्यायो ह्यकर्मणः' इत्यादिषु सर्वत्र तद्विपरीतकर्मप्राधान्यस्यैव प्रपञ्चितत्वात्। उत्तराध्यायेऽपि 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' इत्यादेर्वक्ष्यमाणत्वात्, मध्ये तद्विरुद्धार्थप्रतिपादनायोगात्। अतोऽत्र ज्ञानयज्ञशब्दः कर्मयोगांशविषयः। स्वाध्यायज्ञानयज्ञाश्चेत्यत्र तु स्वाध्यायार्थाभ्यासरूपज्ञानयज्ञपरत्वमुक्तम्। आत्मयाथात्म्यमपि स्वाध्यायार्थ एवेति

उभयाकारे कर्मणि द्रव्यमयादंशाज्ज्ञानमयोंऽशः श्रेयान् । सर्वस्य कर्मणस्तदितरस्य चाखिलस्योपादेयस्य ज्ञाने परिसमाप्तेः । तदेव सर्वैः साधनैः प्राप्यभूतं ज्ञानं कर्मान्तर्गतत्वेनाभ्यस्यते । तदेव ह्यभ्यस्यमानं क्रमेण प्राप्यदशां प्रतिपद्यते ॥ ३३ ॥

---

तस्य चास्य च नातिप्रकर्षः । तस्मादज्ञानसंभूतमित्यध्यायोपसंहारश्लोके च ज्ञानासिना संशयं छित्त्वा योगमातिष्ठोत्तिष्ठेति युद्धोत्साहविधानेन कर्मयोगस्तदन्तर्गतज्ञानं च व्यक्तं प्रतीयते । नहि ज्ञानयोगस्य श्रेयस्तया युद्धार्थमुत्तिष्ठेति संगच्छते । सर्वं कर्मेत्येतत्तु कर्मान्तर्गतज्ञानांशस्य प्राधान्यहेतुमात्रपरमेव । 'अपि चेदसि, ज्ञानाग्निः सर्वकर्माणि, नहि ज्ञानेन सदृशम्' इत्यादेरपि ज्ञानयोगैकान्त्यं [ कर्मयोगान्तर्गत ]ज्ञानांशस्य पापनिवर्तकत्वरूपप्रशंसापरत्वात् । 'योगसंन्यस्तकर्माणम्' इत्यत्र ना(त्रा)पि कर्मणः फलसङ्गादिराहित्यज्ञानाकारतापत्तिमात्रं विवक्षितम् । 'ज्ञानं लब्ध्वा परां शान्तिम्' इति श्लोके कर्मयोगान्तर्गतज्ञानांशस्य साक्षात्काररूपपरिपाकावस्थोच्यते । 'तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विन्दति । श्रद्धावाल्ँलभते ज्ञानम्' इत्यनन्तरमेव परिपाकावस्थाया विशदीकरणात् । एतेन 'येन भूतान्यशेषेण द्रक्ष्यसि' इत्येतदपि निर्व्यूढम् । तदेतदखिलमभिप्रेत्याऽऽह—उभयाकार इति । कर्मणि । कर्मयोग इत्यर्थः । अनुष्ठेयपरो वाऽत्र कर्मशब्दः । द्रव्यमयादंशादिति । यज्ञशब्दोऽत्र यज्ञांशविषय इति भावः । सर्वाखिलशब्दयोर्विषयभेदादपौनरुक्त्यमाह—तदितरस्येति । कर्मेतरत्किमन्यदिहोपादेयं कथं च कर्मणोऽस्था(ज्ञा)ने परिसमाप्तिरित्यत्राऽऽह—तदेवमिति । सर्वैः साधनैरिति तदितरोपादेयप्रदर्शनम् । प्राप्यभूतमिति । तत्र तत्परिसमाप्तिज्ञापनम् । कर्मणस्तत्र परिसमाप्तिं विवृणोति—तदेव ह्यभ्यस्यमानमिति । अवधारणेन साध्यसाधनभावोऽवस्थाभेदमात्रनिबन्धन इत्यभिप्रेतम् । एतेन कर्मणः स्वान्तर्भूतज्ञाने परिसमाप्तिः साक्षात्कारलक्षणसाध्यदशाविवक्षयेत्युक्तं भवति ॥ ३३ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

तदात्मविषयं ज्ञानमविनाशि तु तद्विद्धीत्यारभ्य, एषा तेऽभिहितेत्यन्तेन मयोपदिष्टं मदुक्तकर्मणि वर्तमानस्त्वं विपाकानुगुणकाले प्रणिपातपरिप्रश्नसेवाभिर्विशदाकारं ज्ञानिभ्यो विद्धि । साक्षात्कृतात्मस्वरूपास्तु ज्ञानिनः प्रणिपातादिभिः सेविता ज्ञानबुभुत्सया परितः

---

उपदिष्टमेव ज्ञानं तत्तद्विपाकदशायां प्रतिक्षणवैशद्याय पुनः पुनर्ज्ञानिभ्यः श्रोतव्यमित्युच्यते—तद्विद्धीति श्लोकेन । तदिति परोक्षनिर्देशः प्रारम्भोक्तप्रकारपरामर्शीति व्यञ्जनायाविनाशीत्यादि मयोपदिष्टमित्यन्तमुक्तम् । इतः पूर्वमनुपदिष्टस्याज्ञातस्य कस्यचिच्छ्रोतव्यत्वं नात्रोच्यत इति भावः । मदुक्तकर्मणि वर्तमानस्त्वमिति विपाकहेतुः । विपाकानुगुणं काले काल इति प्रश्नावसरोऽदृष्टद्वारा प्राणिपातादेर्विपाकानुगुण्यं वा विवक्षितम् । गुरुमेवाभिगच्छेदित्यादिविधिप्राप्तं चैतत् । प्रणिपातादेरितरेतरयोगो विवक्षित इति व्यञ्जनाय—प्रणिपातपरिप्रश्नसेवादिभिरिति द्वंद्वसमासेन व्याख्या । 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्' इत्यादीनि शास्त्राणि काले काल इति वीप्सया द्योतितानि । विशदाकारमिति पुनः श्रवणस्य नैष्फल्यपरिहारः । नन्विदानीं भगवता ज्ञानमविशदमुपदिष्टं किंवा बीभत्सुनाऽविशदेन ज्ञातं येनैतदुच्यत इत्येतदपि विपाकानुगुणशब्देन परिहृतम् । विशदमेवोपदिष्टं भगवता, अवधानादिमांश्चार्जुनः । तथाऽप्यनादिकर्मोपार्जितैरनन्तैः पापकवाटैरन्तःकरणरूपस्य तत्त्वज्ञानप्रसरद्वारस्योपरुद्धत्वादिदानीं नातिवैशद्यं जायते । वि(पि)त्तप्रमञ्जनमनाप्नु(पु)षि जातु नेत्रे नैव प्रभाभिरपि शङ्खसिततत्त्वबुद्धिरितिवत् । यथावस्थितकर्मयोगनिरस्तेषु विशदज्ञानार्हाऽवस्था स्यात् । तथा च पूर्वोद्दिष्टस्य सामान्यतो ज्ञातस्यार्थस्य ज्ञातांशसंवादायाज्ञातांशज्ञानाय विस्तृतप्रतिबोधनाय च पुनः श्रवणं कार्यमित्ययमर्थोऽनुगीतावृत्तान्तेन व्यक्तो भविष्यति । ज्ञानिनः—अहमन्ये वेति भावः । तत्त्वदर्शिन इति विशेषणेन तेषामेव ज्ञानोपदेष्टृत्वाधिकारं सूचयतीति व्यञ्जनाय—साक्षात्कृतात्मस्वरूपा इत्युक्तम् । तत्त्वदर्शिभिरपि नासंवत्सरवासिने विनयरहिताय च वक्तव्य-

पृच्छतस्तवाऽऽशयमालक्ष्य ज्ञानमुपदेक्ष्यन्ति ॥ ३४ ॥

आत्मयाथात्म्यविषयस्य ज्ञानस्य साक्षात्काररूपस्य लक्षणमाह—

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥

यज्ज्ञानं ज्ञात्वा पुनरेवं देहाद्यात्माभिमानरूपं तत्कृतं ममताद्यास्पदं च मोहं न यास्यसि । येन देवमनुष्याद्याकारेणानुसंहितानि सर्वाणि भूतानि स्वात्मन्येव द्रक्ष्यसि । यतस्तवान्येषां च भूतानां प्रकृतिवियु-

मित्यत्राऽऽह—प्रणिपातादिभिरिति । तस्मै स विद्वानुपसन्नाय सम्यगित्युपक्रम्य प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् [मु० १ । २ । १३] इति श्रुतेः । विधिपरत्वं च तत्त्वं च तत्त्वदर्शित्वाज्ज्ञानन्तस्ते यथावदुपदेक्ष्यन्तीति भावः । प्रकर्षेण नीचैः पतनं प्रणिपातः । प्रश्नपूर्वाङ्गभूतः प्रणाम उपसंग्रहणादिर्विवक्षितः । परिप्रश्नः— स्वबुद्धिमत्तातिरेकगूहनेनाजानत इव साक्षात्प्रष्टव्यानभिधानेन तदनुबन्धिविषयः प्रश्नः । प्रतिवादिवत्कुयुक्तिभिः प्रत्यवस्थानं न कर्तव्यमिति भावः । सेवा तु भक्तिश्चिरानुवर्तनं वा ॥३४॥

कर्मान्तर्भूतस्याऽऽत्मयाथात्म्यज्ञानस्य विपाकानुगुणं कालेन वेदनीयं साक्षात्कारावस्थायाश्चिह्नं यज्ज्ञात्वेत्यनेन श्लोकेनोच्यत इत्याह—आत्मयाथात्म्येति । एवमित्यस्यार्थो देहेत्यादिनोक्तः । अशेषेणेत्यस्य तात्पर्यार्थमाह—देवमनुष्येत्यादि । तेन विद्याविनयसंपन्न इत्यादि वक्ष्यमाणं स्मारितम् । भूतशब्देनाचित्संसृष्टक्षेत्रज्ञा विवक्षिताः । तेन देवाद्याकारानुसंधाने हेतुर्दर्शितः । आत्मन्यथो मयीति सप्तम्योः सामानाधिकरण्यभ्रमव्युदासाय— स्वात्मन्येवेत्युक्तम् । एवंविधस्य प्राकरणिकस्य साक्षात्कारस्य स्वात्मविषयत्वादथो मयीत्यनेन पृथग्भावसूचनाद्वक्ष्यमाणसमदर्शित्वविपाकक्रमाच्च व्यधिकरणतैवोचितेति भावः । सर्वाणि भूतानि स्वात्मनि द्रक्ष्यसि—प्रकृतिसंसर्गेण विषमतया प्रतिपन्नानि भूतानि परिशुद्धतया ज्ञाते स्वात्मनि निदर्शनभूते स्थालीपुलाकादिन्यायेन द्रक्ष्यसीत्यर्थः । आधाराधेयभावाद्यर्थान्तरभ्रमव्युदासाय प्रकृतार्थे हेतुमाह—यतस्तवेति । प्रकृतिवियुक्तानामिति ।

१ क. घ. °णानु° । २ ग. घ. जीवानां ।

त्मानां ज्ञानैकाकारतया साम्यम्। प्रकृतिसंसर्गदोषविनिर्मुक्तमात्मस्वरूपं समिति च वक्ष्यते—'निर्दोषं हि समं ब्रह्म' इति। अथो मयि सर्वाणि भूतान्यशेषेण द्रक्ष्यसि। स्वरूपसाम्याच्च परिशुद्धस्याऽऽत्मवस्तुनः 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति हि वक्ष्यते। 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्येवमादिषु नामरूपविनिर्मुक्तस्याऽऽत्मवस्तुनः परस्वरूपसाम्यमवगम्यते। प्रकृतिविनिर्मुक्तं सर्वमात्मवस्तु परस्परं सर्वेश्वरेण च समम् ॥ ३५ ॥

---

औपाधिकरूपभेदविगमावस्थायामिति भावः। पुमान्न देवो न नरः, नायं देवो न मर्त्यो वेत्याद्यनुसारेणाऽऽह—ज्ञानाकारतयेति। स्वात्मनि सर्वानुसंधानहेतुतयोक्तं साम्यं परस्ताद्वक्ष्यमाणत्वादिहानुक्तमित्यभिप्रायेणाऽऽह-प्रकृतिसंसर्गेति। अथो मयीत्यादिमन्निदर्शनेन स्वात्मानं परांश्च द्रक्ष्यसीत्यर्थः। अनीश्वराणां कर्मवश्यानामीश्वरदर्शनेनानुसंधानमित्यत्राऽऽह—स्वरूपसाम्याच्च परिशुद्धस्येति। हेतुतयोक्तमीश्वरसाम्यमपि परस्ताद्वक्ष्यत इति नेहोक्तमित्याह—इदमिति। परिशुद्धात्मनः परमात्मसाम्ये श्रुतिरप्यस्तीत्याह—तदेति। पुण्यपापे विधूय निरञ्जनः—पुण्यपापविगमात्तत्र कृतप्रकृतिसंसर्गतत्प्रयुक्तक्लेशादिरहितः। नामरूपविमुक्तस्येति पदेन 'तदा विद्वान्नामरूपाद्विमुक्तः' इति तत्रत्यं वाक्यान्तरमपि स्मारितम्। ईश्वरसाम्यस्य क्वाचित्कताशङ्कां निरस्य श्रुतिस्मृतिसिद्धं हेतुं संकलय्य दर्शयति—अत इति। एतेन श्रुत्यादिसिद्धमीश्वरसाम्यमपि जीवानां परस्परसाम्ये हेतुरित्यप्युक्तम्। एतेन क्षेत्रज्ञानां परस्परमीश्वरेण चैक्यमिहोच्यत इति वदन्तः प्रत्युक्ताः। ननु स्वात्मनि सर्वेश्वरे च सर्वेषामाधेयतया दर्शनमिह विधीयत इति प्रतीयते। मैवम्। स्वात्मनः सर्वाधारत्वायोगात्। परमात्मपर्यन्तबुद्ध्योपपद्यत इति चेत्—जीवसमाधेः प्रकरणार्थत्वात्। अतः स्वात्मनि परेषां दर्शनं सर्वसमानाकारानुसंधानम्। एवं ज्ञानांशस्य प्राधान्यं विपाकानुगुणं काले काले वेदनीयत्वलक्षणं चोक्तम् ॥ ३५ ॥

---

१ ख. ग. घ. °रमं सा°।

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

यद्यपि सर्वेभ्यः पापेभ्यः पापकृत्तमोऽसि सर्वं पूर्वार्जितं वृजिनरूपं समुद्रमात्मविषयज्ञानरूपप्लवेनैव संतरिष्यसि ॥ ३६ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

सम्यक्प्रवृद्धोऽग्निरिन्धनसमुच्चयमिवाऽऽत्मयाथात्म्यज्ञानरूपोऽग्निर्जीवात्मगतमनादिकालप्रवृत्तानेककर्मसंचयं भस्मी करोति ॥ ३७ ॥

---

अथ तस्य विरोधिनिवर्तकत्वं रूपं माहात्म्यमुच्यते—अपि चेति श्लोकेन । चेच्छब्दस्य पर्यायो यदिरपिश्च सहितौ यद्विषयौ तद्विषयावत्रापि चेत्येतावद्द्वयञ्जनाय—यद्यपीत्युक्तम् । पापकृत्तमशब्दप्रतियोगिकत्वात्पापेभ्य इति शब्दः पापविशिष्टविषयः । पापमात्रे वा । हेतौ पञ्चमी । ज्ञानप्लवेन संतरिष्यसीत्यनयोः सामर्थ्याद्वृजिनरूपं समुद्रमिति रूपितम् । समुद्रत्वानुगुणं सर्वशब्दोक्तमानन्त्यमनादिकालप्रवृत्तयेत्याद्यभिप्रायेणाऽऽह—पूर्वार्जितमिति ॥ ३६ ॥

नन्वेकस्य कथमनादिकालप्रयुक्तानन्तपापनिवर्तकत्वम्, 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिवचनाच्च पापस्वरूपनिवर्तकत्वमनुपपन्नं केवलविलम्बाय स्यादित्याशङ्क्योच्यते—यथैधांसीति । समुद्रसंतरणदृष्टान्तः पुनःप्रवेशाविरोधी । काष्ठभस्मसात्करणदृष्टान्तेन तु पुनः कार्यकरत्वप्रसङ्गोऽपि प्रतिषिद्धः । भस्मसात्कुरुते—भस्मभूतानि कुरुते, अकार्यकराणि कुरुत इत्यर्थः । समिद्ध इत्यत्र सर्वदहनयोग्यत्वायोपसर्गधात्वर्थयोर्व्यञ्जनम्—सम्यक्प्रवृद्ध इति । एधांसीति बहुवचनमेकस्यानेकनिवर्तकत्वाभिप्रायमिति दर्शयति—इन्धनसंचयमिति । सर्वकर्माणीति वचनाद्विरोधित्वेन स्थितस्य सांसारिकपुण्यविशेषस्यापि निवर्तकत्वमवगतम् । नाभुक्तमित्यादि तु अन्यपरम् । अन्यथा प्रायश्चित्तशास्त्राण्यपि कुप्येयुरिति भावः ॥ ३७ ॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विन्दति ॥ ३८ ॥

यस्मादात्मज्ञानेन सदृशं पवित्रं शुद्धिकरमिह जगति वस्त्वन्तरं न विद्यते तस्मादात्मज्ञानं सर्वं पापं नाशयतीत्यर्थः । तत्तथाविधं ज्ञानं यथोपदेशमहरहरनुष्ठीयमानज्ञानाकारकर्मयोगेन( ण ) संसिद्धः कालेन स्वात्मनि स्वयमेव लभते ॥ ३८ ॥

तदेव स्पष्टमाह—

लोकदृष्टान्तेन दर्शितोऽर्थो वह्नेः पदान्तरा ( प्रत्यक्ष ) दृष्ट दाहकत्ववदत्पवित्रतमस्वभावत्वेनोपपाद्यते—नहीत्यर्थं(र्धे)न । तदाह—यस्मादिति । वस्त्वन्तरमिति । ज्ञानरहितकर्मपुण्यस्थानादिकम् । क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिरित्युक्तत्वादीश्वरज्ञानादर्वाचीनेषु परिशुद्धात्मज्ञानतुल्यं पावनं नास्तीत्यर्थः । नन्विदानीं तथाविधं ज्ञानं कुर्यामिति साभिसंधिकस्यापि तन्न ज्ञा(जा)यते । अतस्तस्य पुरुषव्यापाराविषयत्वादविधेयत्वमिति शङ्का परिह्रियते—तत्स्वयमित्यर्धेन । तच्छब्देन विपाकावस्थं परामृश्यत इत्याह—तथाविधमिति । यथोपदेशमिति शास्त्रीयत्वमविकलत्वं काले काले वेदनीयत्वं च सूचितम् । तथाविधज्ञानस्य संस्कारप्राचुर्याद्विरोधिपापनिवर्तनाच्च । स्वयमागमे हेतुर्योगसंसिद्ध इत्यनेनोच्यत इत्यभिप्रायेणाऽऽह—ज्ञानाकारकर्मयोगसंसिद्ध इति । पक्वकषायत्वलक्षणयोग्यतापन्न इत्यर्थः । स्वयंशब्देन तदानीमुपदेशनैरपेक्ष्यमुच्यत इत्यभिप्रायेणाऽऽह—स्वयमेवेति । ज्ञानस्वरूपस्य साक्षात्स्वप्रयत्नागोचरत्वेऽपि तन्मूलभूतोक्ताकारकर्मयोगद्वारा तस्य विधेयत्वमुपपद्यत इति भावः । अत्राऽऽत्मनीति विषयसप्तमी । इदानीं तद्रहितेऽपीत्यभिप्रायेणाधिकरणार्थत्वं वा स्वात्मसाक्षिकमिति वा विवक्षितम् ॥ ३८ ॥

पूर्वश्लोकार्थयोरनन्तरश्लोकार्थो व्युत्क्रमेण विवरणरूप इत्यभिप्रायेणाऽऽह—तदेव विस्पष्टमाहेति । श्रद्धावत्त्वादिकं स्वयं ज्ञान-

१ ख. ग. ङ. °हरुपजीय° ।

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥३९॥

उपदिष्टज्ञानवृद्धौ श्रद्धावांस्तत्परस्तत्रैव नियमितमनास्तदितरविषया-स्संयतेन्द्रियोऽचिरेण कालेनोक्तलक्षणविपाकदशापन्नो ज्ञानं लभते। तथाविधं ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति परं निर्वाणं प्राप्नोति ॥ ३९ ॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥

अज्ञ एवमुपदेशलब्धज्ञानरहित उपदिष्टज्ञानवृद्ध्युपाये चाश्रद्दधा-

---

लाभे हेतुः । अज्ञश्चाश्रद्दधानश्चेति वक्ष्यमाणत्वादत्रापि ज्ञः श्रद्धावांश्चेति विवक्षितमिति ज्ञापनार्थं तत्र दशाभेदव्यञ्जनार्थं श्रद्धोत्पत्तिसिद्ध्यर्थं चोक्तम्—उपदेशाज्ज्ञानं लब्ध्वेति । श्रद्धावांस्त्व-रमाणः । अश्रद्दधान इत्यत्रात्वरमाण इति हि व्याख्यास्यति । तदेव परमुपादेयतयाऽभिसंध्यास्पदं यस्य स तत्परस्तदाह—तत्रैव नियमितमना इति । अचिरेणेत्येतदुत्तरवाक्यस्थमपि कालेनेत्येतत्सू-चितविलम्बशङ्कापरिहारार्थमपेक्षितत्वात्पूर्वार्धेऽप्यन्वेतव्यमित्यभि-प्रायेणाचिरेण कालेनोक्तलक्षणेत्युक्तम् । भक्तियोगव्यवहितप्रारब्ध-कर्मावसानभावी च मोक्षः कथमचिरेणेत्युच्यत इति भावः । पूर्वं कालेनेति पदं द्वित्रिदिनादिव्यवच्छेदार्थम्, अचिरेणेति तु ज्ञानयोगदेहान्तरादिविलम्बनिषेधार्थमित्यविरोधः । शान्तिशब्दोऽ-त्रोपायस्य निःशेषनिष्पन्नत्वान्न तदङ्गभूतशमविषय इति व्यञ्ज-नाय—परं निर्वाणमाप्नोतीत्युक्तम् । स शान्तिमाप्नोति न कामकामी, स शान्तिमधिगच्छति, इत्येतदत्रापि प्रत्यभिज्ञातम् । तत्पूर्वोत्तर-श्लोकस्मारणायाऽऽप्नोतिपदं निर्वाणपदं चोक्तम् ॥ ३९ ॥

उक्त एवार्थो व्यतिरेकेण स्थाप्यते—अज्ञश्चेति श्लोकेन । उप-देशलब्धज्ञानरहित इति । पूर्वक्रमनिर्देशौचित्यादश्रद्धाहेत्वाकाङ्क्ष-त्वात्संशयदशासमभिव्याहाराच्च ज्ञशब्दोऽत्र शास्त्रजन्यज्ञाननि-वृत्तिपर इति भावः । संशयस्य पृथगभिहितत्वादश्रद्दधान

नोऽत्वरमाण उपदिष्टे च ज्ञाने संशयात्मा संशयमना विनश्यति नष्टो भवति। अस्मिन्नुपदिष्ट आत्मयाथात्म्यविषये ज्ञाने संशयात्मनोऽयमपि प्राकृतलोको नास्ति न च परः। धर्मार्थकामरूपपुरुषार्थाश्च न सिध्यन्ति कुतो मोक्ष इत्यर्थः। शास्त्रीयकर्मसिद्धिरूपत्वात्सर्वेषां पुरुषार्थानां शास्त्रीयकर्मजन्यसिद्धेश्च देहातिरिक्तात्मनिश्चयपूर्वकत्वात्। अतः सुखलवभागित्वमात्मनि संशयात्मनो न संभवति ॥ ४० ॥

इत्येतन्न विश्वासनिषेधपरं किंत्वाकाङ्क्षानिषेधपरम्। प्रकृष्टाकाङ्क्षैव हि त्वरेत्यभिप्रायेणात्वरमाण इत्युक्तम्। संशयमना इति। संशय्यतेऽनेनेति संशयः। संशयकारणम्। संशयहेतुभूतमना इत्यर्थः। यद्वा संशये मनो यस्येति विग्रहः। नित्यस्याऽऽत्मनः पुरुषार्थशून्यत्वलक्षणस्य विनाशस्य पूर्वापरभावेन संतन्यमानस्य प्राचीनस्यैवानुवृत्तिप्रदर्शनाय प्रकृतिप्रत्ययार्थभेदविवक्षया नष्टो भवतीत्युक्तम्। विनष्टा वा प्रनष्टा वेत्यादिषु प्रध्वंसव्यतिरिक्तविषये प्रयोगोऽप्यनेन सूचितः। विनश्यतीत्यस्य विवरणमुत्तरार्धम्। अपीत्यनेनायंशब्दनिर्दिष्टक्षुद्रतासूचनम्। नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तमेतिवदत्रापि लोकशब्दः पुरुषार्थविषयः। कैमुतिकन्यायप्रदर्शनार्थं चायं लोक इत्युक्तम्। मोक्षप्रकरणत्वाच्चात्रायंशब्दपरशब्दयोर्न भौमदिव्यविषयत्वमुचितमित्यभिप्रायेणाऽऽह—धर्मार्थेति। मोक्षोपायभूतार्थे संशयात्मनः कथं पुरुषार्थान्तरासिद्धिरित्यत्राऽऽह—शास्त्रीयेति। अस्तु तच्छास्त्रैरेव तत्तत्सिद्धिः किं तेन मोक्षोपयुक्तेनेत्यत्राऽऽह—शास्त्रीयकर्मजन्यसिद्धेश्चेति। अयमभिप्रायः—नह्यायुर्वेदादिवत्केवलमेतद्देहान्तरभाविफलसाधनं कर्म तत्तच्छास्त्रैः प्रतिपाद्यते। येन देहातिरिक्तात्मज्ञाननिरपेक्षता स्यात्। देहान्तरभाव्येव हि यज्ञादिसाध्यं स्वर्गादिफलं प्राचुर्येण प्रतिपाद्यते। अतो देहातिरिक्तात्मनिश्चयोऽत्यन्तापेक्षित इति। उभयविधपुरुषार्थराहित्योपसंहारपरं न सुखमित्येतदिति व्यञ्जनायाऽऽह—अत इति। यद्वाऽनन्तसुखदुःखोपभोगरूपनिःश्रेयसनिरयपर्यन्तसंशयस्य मनस्तापहेतुत्वात्तदानींतनदुःखाभिप्रायेण—न सुखमित्युक्तम्। अथवा पुरुषार्थयोग्यत्वाभिमानमूलसुखाभावोऽभिप्रेतः॥ ४० ॥

१ ख. ग. घ. °गित्वं सं°।

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥

यथोपदिष्टयोगेन संन्यस्तकर्माणं ज्ञानाकारतापन्नकर्माणं यथोपदिष्टेन चाऽऽत्मज्ञानेनाऽऽत्मनि संछिन्नसंशयमात्मवन्तं मनस्विनमुपदिष्टार्थे दृढावस्थितमनसं बन्धहेतुभूतप्राचीनानन्तकर्माणि न निबध्नन्ति ॥ ४१ ॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

अध्यायप्रधानार्थ उपसंह्रियते—योगसंन्यस्तेति श्लोकेन । यथोपदिष्टेन योगेनेति । कर्मण्यकर्म यः पश्येदित्यादिनोपदिष्टबुद्धियोगेनेत्यर्थः । एतेनाऽऽत्मावलोकनरूपयोगव्युदासः । संन्यस्तकर्माणमित्यत्र कर्मस्वरूपत्यागभ्रमव्युदासाय—ज्ञानाकारतापन्नकर्माणमित्युक्तम् । कर्तृत्वादित्यागगर्भज्ञानाकारतापत्त्या कर्माकारत्वतिरस्कारोऽत्र कर्मणः संन्यासशब्देनोपचर्यते । स्वरूपत्यागपरत्वे तु पूर्वापरादिविरोध इति भावः । ज्ञानयोगादिव्युदासाय—यथोपदिष्टेन चाऽऽत्मज्ञानेनेत्युक्तम् । आत्मनो देहातिरिक्तत्वादिसंशयो ह्यत्र निषिध्यत इति व्यञ्जनायाऽऽत्मनीत्युक्तम् । आत्मवन्तमित्यत्राऽऽत्मशब्दः संबन्धिविषयः । प्रत्ययसामर्थ्यात्प्रयोगप्रौढ्या च मनोविषय इत्यभिप्रायेण—मनस्विन इत्युक्तम् । अतिशयेन संबन्धोऽत्र मतुबर्थः । स चातिशयः केनाप्यविचाल्यत्वमिति द्योतनायोक्तम्—उपदिष्टार्थे दृढावस्थितमनसमिति । परमप्रयोजनोपसंहाररूपत्वव्यञ्जनाय—बन्धहेतुभूतेत्यादिकमुक्तम् ॥ ४१ ॥

एवं विस्तरेणोपपाद्योपसंहृतार्थोऽर्जुनं प्रति कर्तव्यतया निगम्यते—तस्मादिति श्लोकेन । संशयस्याज्ञानसंभूतत्वं विशेषाग्रहस्य संशयहेतुत्वात् । हृत्स्थं हृदि शल्यमिवार्पितम् । यद्वा हृत्स्थमित्य-

तस्मादनाद्यज्ञानसंभूतं हृत्स्थमात्मविषयं संशयं मयोपदिष्टेनाऽऽत्मज्ञानासिना छित्त्वा मयोपदिष्टं कर्मयोगमातिष्ठ तदर्थमुत्तिष्ठ भारतेति॥४२॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

---

स्याऽऽन्तरमिति भावः। आत्मन इति षष्ठ्या विषयविषयित्वलक्षणसंबन्धविशेषे पर्यवसानमत्र विवक्षितमिति द्योतनाय—आत्मविषयं संशयमित्युक्तम्। यद्वैनं संशयमित्युक्तम्। यद्वैनं संशयमितिनिर्देशादात्मविषयत्वं सिद्धम्। आत्मन इत्यस्य तु ज्ञानासिनेत्यनेनान्वयात्—आत्मज्ञानासिनेत्युक्तम्। काकाक्षिन्यायेन वोभयत्रान्वयः। मयेत्यनेनोपदेष्टुः सर्वज्ञत्वकारुणिकत्वादिपौष्कल्यादाप्ततमत्वं विवक्षितम्। कर्मयोगोपदेशोपसंहारतया योगशब्दोऽत्र नेतरविषय इति ज्ञापनाय—मयोपदिष्टं कर्मयोगमित्युक्तम्। भरतकुलसंभूतस्यार्जुनस्य स्वधर्मभूतयुद्धार्थमुत्थानमेव कर्मयोगार्थमुत्थानमिति भारतशब्दाभिप्रायव्यञ्जनाय—तदर्थमुत्तिष्ठ भारतेत्युक्तम्। तेनैव मोक्षोपाययोग्यत्वाय योगिवंशप्रसूतत्वमप्यर्जुनस्य सूच्यते ॥ ४२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतौ श्रीमद्रामानुजविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां चतुर्थोऽध्यायः ॥ ४ ॥

# अथ पञ्चमोऽध्यायः ॥

चतुर्थेऽध्याये कर्मयोगस्य ज्ञानाकारतापूर्वकस्वरूपभेदो ज्ञानांशस्य च प्राधान्यमुक्तम् । ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुकरत्वान्निरपेक्षत्वाच्च ज्यायस्त्वं तृतीय एवोक्तम् । इदानीं कर्मयोगस्याऽऽत्मप्राप्तिसाधनत्वे ज्ञाननिष्ठायाः शैघ्र्यं कर्मयोगान्तर्गताकर्तृत्वानुसंधानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च परिशोध्यते—

अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

---

अथ पञ्चमस्यांशतस्तृतीयचतुर्थाभ्यां संगतिप्रदर्शनायोक्तानुक्तांशविवेकेन पञ्चमस्यानुक्तांशे तात्पर्यप्रदर्शनाय चाऽऽह—चतुर्थेऽध्याय इति । कर्मयोगस्य ज्ञानाकारतेत्यादिकं चतुर्थाध्यायप्रधानार्थोऽयमिति द्योतनार्थं संगतिप्रदेशप्रदर्शनार्थं च तृतीय एवेति। कर्तव्यतोपदेशलक्षण एवेत्यर्थः । पञ्चमार्थमाह—इदानीमिति। अत्रैवं संग्रहश्लोकः—

कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः ।
ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते ॥ इति ।

अत्र सौकर्यशैघ्र्ययोः संगृहीतत्वेऽपि भाष्ये शैघ्र्यमात्रवचनं सौकर्यस्य तृतीयाध्यायोक्तस्यैवानुवादः पञ्चमे शैघ्र्यौपायिकतया क्रियत इति ज्ञापनार्थं शैघ्र्यं तु तत्रानुक्तत्वादत्र साक्षात्प्रतिपाद्यम् । काश्चन तद्विधा ब्रह्मज्ञानप्रकारश्चेत्युभयोर्व्याख्यानरूपेण कर्मयोगेत्यादिना तृतीयचतुर्थाभ्यामंशतः संगतिरुक्ता भवति । ज्ञाननिष्ठाया इति पञ्चमी । अत्र प्रकरणशब्देन विशोध्यत इति वचनाच्चानुक्तांशतात्पर्येणापौनरुक्त्यं दर्शितम् । तन्मूलज्ञानमिति विपाकदशापन्नज्ञानं विवक्षितम् । अथ तद्विद्धि प्रणिपातेनेत्येतदनुसंदधानोऽनुक्तमपेक्षितमंशं जिज्ञासुरुक्तमेवार्थं परिपृच्छन्—अर्जुन उवाच—संन्यासमिति । संन्यासयोगशब्दावत्र प्रकृतवक्ष्यमाण-

संन्यासमिति। कर्मणां संन्यासं ज्ञानयोगं पुनः कर्मयोगं च शंससि। एतदुक्तं भवति—द्वितीयेऽध्याये मुमुक्षोः प्रथमं कर्मयोग एव कार्यः। कर्मयोगेन( ण ) मृदितान्तःकरणकषायस्य ज्ञानयोगेनाऽऽत्मदर्शनं कार्यमिति प्रतिपाद्य पुनस्तृतीयचतुर्थयोर्ज्ञानयोगाधिकारदशामापन्नस्यापि कर्मनिष्ठैव ज्यायसी। सैव ज्ञाननिष्ठानिरपेक्षाऽऽत्मप्राप्त्येकसाधनमिति कर्मनिष्ठां प्रशंससीति। तत्रैव तयोर्ज्ञानयोगकर्मयोगयोरात्मप्राप्तिसाधनभावे यदेकं सौकर्याच्छैघ्र्याच्च श्रेयः श्रेष्ठमिति सुनिश्चितं तन्मे ब्रूहि ॥ १ ॥

सांख्ययोगविषयतया नार्थान्तरपरावित्यभिप्रायेणाऽऽह–कर्मणां संन्यासं ज्ञानयोगमिति। कर्मणामित्येतदुभयान्वितम्। ननु कर्मयोगस्य त्याज्यत्वं क्वचिदपि नोक्तम्। प्रत्युत तदेवोपादेयतया प्रपञ्चितम्। न च ज्ञानयोगस्य प्रशंसा क्वापि कृता येन संन्यासं योगं च शंससीत्युच्यते। उभयोः प्रशंसने कृतेऽपि विकल्प इत्येव मन्तव्यम्। न पुनरन्यतराधिक्यप्रश्नावकाश इत्यत्राऽऽह–एतदुक्तमिति। प्रतिपाद्येत्यनेन संन्यासं कर्मणामित्यस्याभिप्रायो विवृतः। कषायनिवृत्त्यर्थः कर्मयोगः। तन्निवृत्तौ कर्मयोगं परित्यज्य ज्ञानयोग उपादेयः। अतो ज्ञानयोग एवाऽऽत्मदर्शने साक्षात्साधनमिति हि द्वितीये प्रतिपादितमिति भावः। पूर्वं संन्यस्तस्य पुनर्योगं शंससीति भ्रमव्युदासाय शंससीत्यनेन पुनःशब्दान्वयमाह—तृतीयचतुर्थयोरिति। द्वितीय इत्येतत्तृतीयचतुर्थयोरित्येतच्च भाष्यकारैः स्वानुसंधानेनोक्तं पुनरर्जुनवाक्यानुकारः। अत्र मृदितकषायस्य कर्मयोगस्त्याज्यश्चेत्कथमुपादेयो ज्ञानयोगस्य दर्शनसाधनत्वे विवक्षित इत्यर्थः। एतयोरित्यत्र निर्धारितान्यत्रिषय एकशब्दः। तत्र सामान्याकारविवक्षया नपुंसकत्वं श्रेयःशब्दविशेषणतया वा। सौकर्याच्छैघ्र्याच्चेति। फलस्यैकत्वात्तन्निबन्धनं श्रैष्ठ्यमिहायुक्तमिति भावः। श्रेयः सुनिश्चितमित्यन्वयः। श्रेयस्त्वेन सुनिश्चितमित्यर्थः। क्रियाविशेषणत्वं तु निरर्थकमित्यभिप्रायेणाऽऽह–श्रेष्ठमिति। श्रेयःशब्दस्य फलादिष्वपि प्रयोगप्राचुर्यात्तद्व्युदासाय तारतम्यप्रश्नानुगुण्येन प्रकृतिप्रत्ययव्यञ्जनाय श्रेष्ठशब्देन व्याख्यातम्। अत्रैकफलसाधनत्वाद्विकल्पे प्राप्ते सौकर्यादिगुणयोगाच्छ्रेयस्त्वोक्तिः ॥ १ ॥

१ ख. ग. घ. ङ. °र्याच्छैघ्र्याच।

भगवानुवाच—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

संन्यासो ज्ञानयोगः कर्मयोगश्च ज्ञानयोगशक्तस्याप्युभौ निरपेक्षौ निःश्रेयसकरौ । तयोस्तु कर्मसंन्यासाज्ज्ञानयोगात्कर्मयोग एव विशिष्यते ॥ २ ॥

कुत इत्यत आह—

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वंद्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

---

अथ सद्वारकत्वाभिधानस्याधिकारिविशेषनियततया द्वयोरव्यवहितसाधनत्वार्थमुपपादयंस्तत एव मृदितकषायस्यापि सौकर्यशैघ्र्यसङ्गिनस्तस्यैव कर्तव्यतां च द्रढयन्—भगवानुवाच—संन्यास इति । ज्ञानयोगाशक्तस्य कर्मयोगसापेक्षत्वात्तच्छक्तस्यैव निरपेक्षसाधनत्वोक्तिरुपपन्नेत्यभिप्रायेणाऽऽह—ज्ञानयोगाशक्तस्यापीति । उभौ निःश्रेयसकराविंत्येतत्सामर्थ्यादेकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्, इति वक्ष्यमाणानुसंधानाच्च—निरपेक्षावित्युक्तम् । चकारेणाप्येतदेव व्यज्यते । अन्वाचयेतरेतरयोगसमाहारा हि पृथक्फलसाधनत्वप्रकरणविरुद्धाः । अतः पृथक्स्वातन्त्र्यगर्भः समुच्चय एवात्रार्थः । तत्र तावप्यनियमेन यथेच्छमुपादेयौ । कर्मयोगस्य तु किमर्थं प्रशंसेतिशङ्काव्युदासाय तुशब्दः । तदभिप्रायव्यञ्जनार्थमेवकारः ॥ २ ॥

द्वयोः श्रेयःसाधनत्वाविशेषे कर्मयोग एव विशिष्यत इति प्रतिज्ञामात्रं तत्र हेत्वाकाङ्क्षायां सौकर्याख्यं हेतुमाहेत्याह—कुत इत्यत्राऽऽहेति । ज्ञेय इति श्लोको नित्यसंन्यासीत्येतावता ज्ञानयोगनिष्ठविषय इति न मन्तव्यम् । कर्मयोगो विशिष्यत इति प्रतिज्ञाय ज्ञानयोगनिष्ठस्य सुखेन मोक्षोक्तेरसंगतत्वात् 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः, इति वक्ष्यमाणविरोधाच्च ।

क्तानां ज्ञानैकाकारतया साम्यम् । प्रकृतिसंसर्गदोषविनिर्मुक्तमात्मस्वरूपं सममिति च वक्ष्यते--' निर्दोषं हि समं ब्रह्म ' इति । अथो मयि सर्वाणि भूतान्यशेषेण द्रक्ष्यसि । मत्स्वरूपसाम्याच्च परिशुद्धस्याऽऽत्मवस्तुनः ' इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ' इति हि वक्ष्यते । ' तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ' इत्येवमादिषु नामरूपविनिर्मुक्तस्याऽऽत्मवस्तुनः परस्वरूपसाम्यमवगम्यते । प्रकृतिविनिर्मुक्तं सर्वमात्मवस्तु परस्परं सर्वेश्वरेण च समम् ॥ ३५ ॥

---

औपाधिकवैषम्यविगमावस्थायामिति भावः । पुमान्न देवो न नरः, नायं देवो न मर्त्यो वेत्याद्यनुसारेणाऽऽह—ज्ञानाकारतयेति। स्वात्मनि सर्वानुसंधानहेतुतयोक्तं साम्यं परस्ताद्वक्ष्यमाणत्वादिहानुक्तमित्यभिप्रायेणाऽऽह-प्रकृतिसंसर्गेति। अथो मयीत्यादिप्रतिनिर्देशनेन स्वात्मानं परांश्च द्रक्ष्यसीत्यर्थः । अनीश्वराणां कर्मवश्यानामीश्वरदर्शनेनानुसंधानमित्यत्राऽऽह—मत्स्वरूपसाम्यात्परिशुद्धस्येति। हेतुतयोक्तमीश्वरसाम्यमपि परस्ताद्वक्ष्यत इति नेहोक्तमित्याह—इदमिति । परिशुद्धात्मनः परमात्मसाम्ये श्रुतिरप्यस्तीत्याह—तथेति । पुण्यपापे विधूय निरञ्जनः—पुण्यपापविगमात्तत्र कृतप्रकृतिसंसर्गतत्प्रयुक्तक्लेशादिरहितः । नामरूपविमुक्तस्येति पदेन ' तदा विद्वान्नामरूपाद्विमुक्तः ' इति तत्रत्यं वाक्यान्तरमपि स्मारितम् । ईश्वरसाम्यस्य क्वाचित्कताशङ्कां निरस्य श्रुतिस्मृतिसिद्धं हेतुं संकलय्य दर्शयति—अत इति । एतेन श्रुत्यादिसिद्धमीश्वरसाम्यमपि जीवानां परस्परसाम्ये हेतुरित्यप्युक्तम् । एतेन क्षेत्रज्ञानां परस्परमीश्वरेण चैक्यमिहोच्यत इति वदन्तः प्रत्युक्ताः । ननु स्वात्मनि सर्वेश्वरे च सर्वेषामाधेयतया दर्शनमिह विधीयत इति प्रतीयते । मैवम् । स्वात्मनः सर्वाधारत्वायोगात् । परमात्मपर्यन्तबुद्ध्योपपद्यत इति चेत्—जीवसमाधेः प्रकरणार्थत्वात् । अतः स्वात्मनि परेषां दर्शनं सर्वसमानाकारानुसंधानम् । एवं ज्ञानांशस्य प्राधान्यं विपाकानुगुणं काले काले वेदनीयत्वलक्षणं चोक्तम् ॥ ३५ ॥

---

१ ख. ग. घ. °रमं सा° ।

ज्ञानयोगकर्मयोगौ फलभेदात्पृथग्भूतौ ये प्रवदन्ति ते बाला अनिष्पन्नज्ञाना न पण्डिता न तु कृत्स्नविदः । कर्मयोगो ज्ञानयोगमेव साधयति ज्ञानयोगस्त्वात्मावलोकनं साधयतीति तयोः फलभेदेन पृथक्त्वं वदन्तो न पण्डिता इत्यर्थः । उभयोरात्मावलोकनैकफलयोरेकफलत्वेनैकमप्यास्थितस्तदेव फलं लभते ॥ ४ ॥

---

न्तीति । स्वरूपपृथक्त्वं निषिध्यते तस्य प्रामाणिकत्वात् । न च तत्समुच्चयविधानपरमिदम् ।

'एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ।
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' ।

इत्यादिभिः पृथगनुष्ठानस्यैव सिद्धत्वात् । अतः फलैक्यस्यैकमप्यास्थित इत्यादिना विधानादत्र फलभेदकृतभेदनिषेधतात्पर्यमित्याह—फलभेदात्पृथग्भूताविति । अस्य वाक्यस्य पृथक्फलवादिनां निन्दारूपत्वात्, ये प्रवदन्ति ते बाला इति बालत्वस्योपादेयतया वचनव्यक्तिर्दर्शिता । उत्तरश्लोकेऽप्येकफलत्ववादिप्रशंसायां यः पश्यतीत्यनूद्य स पश्यतीति विधीयते । बालशब्दस्यात्र मुख्यायोगादुपचरितमाह—अनिष्पन्नज्ञाना इति । अपक्वयौक्तिकज्ञानेष्वपक्वपर्यायशब्दोपचारः । बालसाम्याद्वा । बाला न पण्डिता इत्यत्राशास्त्रीयानुष्ठानपर्यन्ताज्ञानव्युदासायोक्तम्—न कृत्स्नविद इति । तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्येत्यादि प्रसिद्धम् । सदाचार्यप्रसादैकसमधिगम्यमर्थविषयं ज्ञानमिह पाण्डित्यम् । अतो बाल इत्युक्तेऽपि तदभावोक्तिर्न पुनरुच्यत इति भावः । फलाद्भिेदभ्रमप्रकारं न पण्डिता इत्यस्यापि बाला इतिवद्विधेयविषयत्वं च दर्शयति—कर्मयोग इति । ज्ञानयोगमेवेति । न तु कस्मिन्नप्यधिकारिणि साक्षादात्मावलोकनमित्यर्थः । ये तु बालास्त एवं वदन्ति ये पण्डितास्ते तु नेति वचनव्यक्तिमाहुः, तेषामप्ययमेवार्थः फलतोऽङ्गीकार्यः । उभयोः फलमेकेन कथं लभ्यमित्यत्राऽऽह—उभयोरिति । निर्धारणषष्ठी । एकशब्दश्चान्यतरपर्यायः । द्वयोरपि तुल्यफलत्वादन्यतर(रा)स्था(नुष्ठा)नेऽपि तत्फलं प्रसिध्यतीत्यर्थः ॥ ४ ॥

एतदेव विवृणोति—

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

सांख्यैर्ज्ञाननिष्ठैर्यदात्मावलोकनरूपं फलं प्राप्यते । तदेव कर्मयोगनिष्ठैरपि प्राप्यते । एवमेकफलत्वेनैकं वैकल्पिकं सांख्यं योगं च यः पश्यति स पश्यति स एव पण्डित इत्यर्थः ॥ ५ ॥

---

भिन्नफलत्वेन पृथक्त्वाभिधायिनां निन्दा कृता । अथैकफलत्वेनैक्याभिधायिनां प्रशंसनं क्रियत इत्यभिप्रायेणाऽऽह—एतदेव विवृणोतीति । सांख्यैरित्यत्र सिद्धान्तविशेषनिष्ठभ्रमव्युदासायाऽऽह—ज्ञाननिष्ठैरिति । सांख्यमात्मज्ञानं तद्वेदिन इह सांख्याः । यद्वा संख्या बुद्धिर्ज्ञानयोगस्तन्निष्ठाः सांख्याः । अथवा सांख्य आत्मा तद्वेदिनोऽपि सांख्याः । स्थानशब्दोऽत्र विन्दते फलमितिवत्फलविषयः । न तु देशविशेषविषयः । ज्ञानयोगादिमात्रप्राप्यदेशविशेषाभावात् । तच्च फलं पूर्वोत्तरानुवृत्तमात्मावलोकनमित्यभिप्रायेण—यदात्मावलोकनरूपं फलमित्युक्तम् । अत्र यदेव सांख्याः पश्यन्तीति यादवप्रकाशोक्तः पाठोऽप्रसिद्धत्वादनादृतः । योगैरित्येतल्लक्षणया वा मत्वर्थविशेषाद्वा तन्निष्ठमिति व्यञ्जनाय कर्मयोगनिष्ठैरित्युक्तम् । अत्र सांख्ययोगशब्दौ नोपायपरौ बहुवचनानौचित्यादिति भावः । एकमित्युक्तेरेकशास्त्रार्थत्वादिभ्रमव्युदासायाऽऽह—एवमेकफलत्वेनेति । अङ्गाङ्गिभावेतरेतरयोगरहितयोरुपाययोरेकफलत्वलक्षणं ह्यैक्यमनुष्ठाने विकल्पाय स्यात् । तथा च सूत्रम्—विकल्पोऽविशिष्टफलत्वादिति । तदाह—वैकल्पिकमिति । स पश्यतीत्यनेन न पण्डिता इत्येतत्प्रतिरूपं दर्शयति—स एव पण्डित इति ॥ ५ ॥

ननु कर्मयोगो विशिष्यत इति वचनमत्र वैकल्पिकत्ववचनं च कथमुपपद्यते । अत्यन्ततुल्यत्वे हि विकल्प इति शङ्कायां सौकर्यशैघ्र्याभ्यां वैशिष्ट्यफलस्यात्यन्ततुल्यतया च विकल्पः । अधिकारिभेदप्रतिनियतत्वाच्च न दुष्करविलम्बितोपायनैरर्थ-

इयांस्तु विशेष इत्याह—

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥

संन्यासो ज्ञानयोगस्तु अयोगतः कर्मयोगादृते प्राप्तुमशक्यः । योगयुक्तः कर्मयोगयुक्तः स्वयमेव मुनिरात्ममननशीलः सुखेन कर्मयोगं साधयित्वाऽचिरेणैवाल्पकालेनैव ब्रह्माधिगच्छत्यात्मानं प्राप्नोति । ज्ञानयोगयुक्तस्तु महता दुःखेन ज्ञानयोगं साधयति । दुःखसाध्यत्वाद्दुःखप्राप्यत्वादात्मानं चिरेण प्राप्नोतीत्यर्थः ॥ ६ ॥

---

वयमित्यभिप्रायेण वैषम्यमुच्यत इत्याह—इयान्विशेष इत्याहेति । तुशब्दोऽन्योन्यवैषम्यपरः । अयोगत इत्यनेन कर्मयोगमन्तरेण ज्ञानयोगस्वरूपमेव न सिध्यतीत्यभिप्रेतं तदाह—कर्मयोगादृत इति । शक्यमञ्जलिभिः पातुं वाता इत्यादिवद्दुःखशब्दस्यात्र नपुंसकत्वम् । मुनिशब्दे प्रकृतापेक्षितं प्रकृतिप्रत्ययार्थविवरणम्—मननशील इति । तत्राकर्तृत्वानुसंधानप्रकरणबलान्मननस्याऽऽत्मविषयत्वोक्तिः । स्वयमेव ज्ञानयोगमन्तरेणेत्यर्थः । दुःखमाप्तुमयोगत इत्येतद्व्यतिरेकानुसंधानात्—सुखेन कर्मयोगं साधयित्वेत्युक्तम् । नचिरेणेति । नञः क्रियान्वये चिरेणाप्यधिगमो न स्यादिति भ्रमः स्यात्तद्व्युदासाय—अचिरेणेत्याद्युक्तम् । नैकादिवन्नचिरेणेति समस्तः प्रयोगः । ब्रह्मशब्दोऽत्र शुद्धात्मस्वरूपलक्षणकर्मयोगाव्यवहितफलविषय इति व्यञ्जनाय—आत्मानं प्राप्नोतीत्युक्तम् । प्राप्तिरिह साक्षात्कारः । एवमव्यवहितात्मप्राप्तिसाधनत्वं वदता प्रकृतः संन्यासो ब्रह्मशब्देनोच्यत इति शंकरोक्तं प्रत्युक्तम् । तद्व्यतिरेकेण पूर्वोक्तं पूरयति—ज्ञानयोगयुक्त इति । दुःखसाध्यत्वाद्विलम्बितफलो ज्ञानयोगः कर्मयोगस्तु सुखसाध्यत्वादविलम्बितफल इति वैषम्यमनेन श्लोकेनोक्तं भवति ॥ ६ ॥

कर्मयोगस्य सुखसाध्यत्वे शीघ्रफलाधिगमे च हेतुरुच्यते—

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते॥ ७॥

कर्मयोगयुक्तस्तु शास्त्रीये परमपुरुषाराधनरूपे विशुद्धे कर्मणि वर्तमानमनस्त्वेन विशुद्धमना विजितात्मा स्वाभ्यस्ते कर्मणि व्याप्तमनस्त्वेन सुखेन विजितमनास्तत एव जितेन्द्रियः कर्तुरात्मनो याथात्म्यानुसंधाननिष्ठतया सर्वभूतात्मभूतात्मा सर्वेषां देवादिभूतानामात्मभूत आत्मा यस्यासौ सर्वभूतात्मभूतात्मा। आत्मयाथात्म्यमनुसंदधानस्य हि देवादीनां स्वस्य चैकाकार आत्मा। देवादिभेदानां प्रकृतिपरिणामविशेषरूपतयाऽऽत्माका-

---

योगयुक्त इति श्लोकेन। पूर्वात्मशब्दौ मनोविषयौ, जितेन्द्रियसमभिव्याहारात्। योगयुक्त इत्यनेनैव सिद्धो विशुद्धमनस्त्वे हेतुः शास्त्रीय इत्यादिनोच्यते। विशुद्धिरत्र रजस्तमोनिवृत्तिस्तन्मूलरागद्वेषादिकषायनिवृत्तिश्च। प्राक्समर्थितं स्मारयति—स्वाभ्यस्ते कर्मणीति। प्रधानस्य मनोनिग्रहस्य वक्तुमुचितत्वात्—विजितदेह इति परव्याख्यानं मन्दमिति भावः। सर्वेन्द्रियकूटस्थे मनसि जिते बाह्येन्द्रियाणि सर्वाणि जितानि भवन्तीत्यभिप्रायेण—तत एवेत्युक्तम्। सर्वभूतेत्युपपादनाय—कर्तुरित्याद्युक्तम्। प्रथमस्य भूतशब्दस्यात्र देवादिदेहमात्रविषयतां द्वितीयस्य क्रियात्मतां विग्रहं च दर्शयति—सर्वेषामिति। भिन्नानामैक्यं हि विरुद्धमित्यत्राऽऽह—आत्मयाथात्म्यमिति। अयमभिप्रायः—सत्यं न स्वरूपैक्यं विधीयते। तस्य प्रत्यक्षानुमानागमपूर्वापरविरुद्धत्वात्, किंत्वेकाकारत्वम्। यथा सर्वस्मिन्गृहे वर्तमानो व्रीहिरयमेवेत्युक्ते तज्जातीयत्वमुक्तं भवति तद्वदत्रापि सर्वस्मिन्देहे वर्तमानोऽयमेवाऽऽत्मेति प्रयोगेऽपि देहान्तरवर्तिनामस्य चाऽऽत्मनः समानत्वमुक्तं भवति। ननु समानत्वमपि प्रत्यक्षादिविरुद्धं देवतिर्यग्ब्राह्मणक्षत्रियब्रह्मचारिगृहस्थपण्डितापण्डितशक्ताशक्तधनिकदरिद्रस्थविरतरुणा[ नां ] निरवधिकवैषम्यनिर्भरत्वादात्मनाम्। अन्यथा ब्राह्मणो यजेतेत्याद्यात्मपर्यन्तशास्त्रीयप्रयोगोऽपि भज्येतेत्यत्राऽऽह—देवादिभेदानामिति। अयं भावः—सत्यम्, देवादिवैषम्यं प्रामाणिकमेव।

---

१ ख. ग. घ. ङ. °रत्वात्। दे°।

रत्वासंभवात् । प्रकृतिवियुक्तः सर्वत्र देवादिदेहेषु ज्ञानैकाकारतया समानाकार इति 'निर्दोषं हि समं ब्रह्म' इत्यनन्तरमेव वक्ष्यते । स एवंभूतः कर्म कुर्वन्नपि अनात्मन्यात्माभिमानेन न लिप्यते न संबध्यते । अतोऽचिरेणाऽऽत्मानमाप्नोतीत्यर्थः । अतः सौकर्याच्छैघ्र्याच्च कर्मयोग एव श्रेयान् ॥ ७ ॥

अतस्तदपेक्षितं शृणु—

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

एवमात्मतत्त्ववित्छ्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि कर्मेन्द्रियाणि

---

तत्तु न स्वर इव[रूप]मुक्तम् । तस्य कर्मौपाधिकप्रकृतिपरिणामभेदनिबन्धनत्वात् । शुद्धाकारविवक्षया तु समानत्वमिहोच्यत इति । साम्यस्यात्र विवक्षितत्वे संवादकमनन्तरमेव साम्याभिधानं दर्शयति—प्रकृतिवियुक्त इति । कुर्वन्नपि न लिप्यत इत्यत्र न तावन्निषिद्धमपि कुर्वन्न दुष्टो भवतीत्युच्यते । तथा सति बहुव्याकोपप्रसङ्गात् । न च कर्मयोगं कुर्वन्नपि तेनैव न लिप्यत इति । तथा च सति निष्फलप्रयासत्वेन तस्याननुष्ठानप्रसङ्गात् । अतोऽत्र न केवलं ज्ञानयोगनिष्ठोऽपि तु कर्मयोगं कुर्वन्नप्यात्मसाक्षात्काराख्यफलविरोधिना केनचिन्न लिप्यत इत्येवार्थ इत्यभिप्रायेण—अनात्मन्यात्माभिमानेनेत्याद्युक्तम् । नैव किंचित्करोमीत्यादिकं ह्यनन्तरमुच्यत इति भावः । न लिप्यत इत्यत्र संबन्धनिषेधो विवक्षित इत्याह—न संबध्यत इति । प्रस्तुतार्थतया निगमयति—अत इति ॥ ७ ॥

एवमर्जुनस्य पृच्छतः साक्षात्प्रश्नोत्तरमुक्तम् । अथ तदाशयविदो भगवत आभिप्रायिकमवान्तरवाक्यमुत्तरसंगत्यर्थं दर्शयति—यत इति । युक्तोऽत्र योगनिष्ठस्तत्त्ववित्, तदन्तर्गतात्मतत्त्वं विज्ञानवांस्तदाह—एवमात्मतत्त्वविदिति । पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्न-

---

१ ख. ग. घ. ङ. °र्याच्छैघ्र्याच्च ।

प्राणाश्च स्वस्य विषयेषु वर्तन्त इति धारयन्ननुसंदधानो नाहं किंचित्करोमीति मन्येत । ज्ञानैकस्वभावस्य मम कर्ममूलेन्द्रियप्राणसंबन्धकृतमीदृशं कर्तृत्वं न स्वरूपप्रयुक्तमिति मन्यत इत्यर्थः ॥ ८ ॥ ९ ॥

---

न्निति चक्षुःश्रोत्रत्वग्घ्राणजिह्वाख्यज्ञानेन्द्रियव्यापाराः । गच्छन्प्रलपन् विसृजन्गृह्णन्निति पादादिकर्मेन्द्रियव्यापाराः । तत्र विसृजन्निति पायूपस्थव्यापारसंग्रहः । उक्तं च—

' पायूपस्थे विसर्गार्थमिन्द्रिये तुल्यकर्मणी ।
विसर्गे च पुरीषस्य विसर्गे चाभिकामिके ' इति ।

स्वपञ्श्वसन्नुन्मिषन्निमिषन्निति तु प्राणव्यापाराः । स्वापस्य तमो(मउ)त्पत्तित्वेऽपि प्राणाधीनत्वं सिद्धम् । उन्मिषन्निमिषन्निति तु व्यानाख्यप्राणव्यापरः । श्वसन्निति तु प्राणसंज्ञकप्राणविशेषव्यापारः । गृह्णन्निति पाणिव्यापारपरोऽप्यपानव्यापारस्यापि तन्त्रेण ग्राहकः । तदपानेनाजिघृक्षत्तदावयत्सैषोऽन्नस्य ग्रहो यद्वायुरिति । एवं विभागज्ञापनाय श्रोत्रादीनि ज्ञानेन्द्रियाणि वागादीनि च कर्मेन्द्रियाणि प्राणाश्चेत्युक्तम् । इन्द्रियशब्दोऽत्र सर्वेन्द्रियप्रवृत्त्यादिहेतुतया प्राणसंवादिषु प्रसिद्धं मुख्यप्राणमजहल्लक्षणया लक्षयतीति तात्पर्यम् । इन्द्रियार्थेष्वित्येतदपि तथैव लक्षकमिति व्यञ्जनाय स्वविषयेष्वित्युक्तम् । नन्विन्द्रियप्राणेष्वकर्तृषु कर्तृत्वस्य ' कर्ता शास्त्रार्थवत्त्वात् ' [ ब्र० सू० २ । ३ । ३३ ] इत्यादिभिः स्थापितत्वादित्यत्राऽऽह—ज्ञानैकस्वभावस्येति । कर्मणां मिथ्यात्वानुसंधानमिह परोक्तमयुक्तम् । इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इत्यस्याप्यनुसंधेयत्वप्रसङ्गात् । उक्तस्य स्वेच्छागृहीतेन्द्रियादिव्यवच्छेदायोपाधीनामप्यौपाधिकत्वव्यञ्जनाय च कर्ममूलशब्दः । ईदृशमिति । पुण्यपापरूपमित्यर्थः । अत्र तत्त्वविदिति निरुपाधिकस्वरूपपरत्वात्कार्यकारणेत्यादाविव न चिदचिद्व्यापारविभागोक्तिः ॥ ८ ॥ ९ ॥

नन्वेवं फलाभिसंधिपूर्वकेऽपि कर्मणि क्रियमाणे नैव किंचित्करोमीति भावनया तत्करणेऽपि न दोषः स्यात् । यदि च परमार्थतः स्वस्यैव कर्तृत्वं किं तस्यौपाधिकत्वानुसंधानेन प्रयोजनम् । तथाऽनुसंधानेऽपि प्रकृतिसंसर्ग एवैनं देहात्मभ्रमे निम-

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

ब्रह्मशब्देन प्रकृतिरिहोच्यते । 'मम योनिर्महद्ब्रह्म' इति हि वक्ष्यते । इन्द्रियाणां प्रकृतिपरिणामविशेषरूपत्वेनेन्द्रियाकारेणावस्थितायां प्रकृतौ पश्यञ्शृण्वन्नित्यादिनोक्तप्रकारेण कर्माण्याधाय फलसङ्गं त्यक्त्वा नैव किंचित्करोमीति यः कर्माणि करोति स प्रकृतिसंसृष्टतया वर्तमानोऽपि

---

ज्जयतीति शङ्का निराक्रियते—ब्रह्मणीति श्लोकेन । न तावद्ब्रह्मशब्देन जीव उच्यते तत्कर्तृत्वतिरस्कारप्रकरणत्वात् । नापि परं ब्रह्म, औपाधिकत्वप्रतिपादनप्रकरणे तदनपेक्षणात् । अनन्तरं च सर्वकर्माणि मनसेति श्लोकेन देहकर्तृत्वाभिसंधानाभिधानात् । अतः पूर्वोक्तस्यार्थस्याऽऽकाङ्क्षितफलनिर्देशपरत्वोपपत्तेर्ब्रह्मशब्दोऽत्रेन्द्रियाकारपरिणतप्रकृतिगोचरः । भवति हि प्रकृतिकार्येऽपि ब्रह्मशब्दप्रयोगः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत इति । तदेतदखिलमभिप्रेत्याऽऽह—ब्रह्मशब्देनेति । ब्रह्मशब्दस्य प्रयोगं भगवद्गीतायामेवोदाहरति—मम योनिरिति । भवतु प्रकृतौ ब्रह्मशब्दः, प्रस्तुतस्य किमायातमिति शङ्कायां पूर्वश्लोकार्थन्यायाभ्यामुपबृंहितं वाक्यार्थमेवाऽऽह—इन्द्रियाणामिति । ननु बृहत्त्वगुणात्प्रयोगबलाच्च मूलप्रकृतिर्ब्रह्मशब्देनोच्यताम् । तत्र दर्शनश्रवणादिकर्तृत्वानुसंधानमशक्यम् । मूलप्रकृतिरूपे तद्धेतुत्वाभावादितिशङ्कानिराकरणाय—अवस्थितायामित्यन्तमुक्तम् । औपचारिकोऽपि कारणविषयः प्रयोगो द्रव्यैक्यात्कार्यमपि गोचरयोरि- ( येदि )ति भावः । कर्मणीति बहुवचनं पूर्वोक्तवैविध्यपरमिति प्रदर्शनायोक्तम्—पश्यञ्शृण्वन्नित्याद्युक्तप्रकारेणेति । यः करोतीत्यात्मन्येव कर्तृत्वनिर्देशात्तदौपाधिकत्वस्मारणाय पूर्वोक्तमाकृष्टम्—नैव किंचित्करोमीति । पापशब्दोऽत्र देहात्मभ्रमविषयः ।

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा ॥

इत्यादिषु चाऽऽत्मान्यथात्वज्ञानस्य पापत्वं प्रसिद्धम् । आत्म-

प्रकृत्यात्माभिमानरूपेण बन्धहेतुना पापेन न लिप्यते। पद्मपत्रमिवाम्भसा यथा पद्मपत्रमम्भसा संसृष्टमपि न लिप्यते तथा न लिप्यत इत्यर्थः ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥ ११ ॥

कायमनोबुद्धीन्द्रियसाध्यं कर्म स्वर्गादिफलसङ्गं त्यक्त्वा योगिन आत्मविशुद्धये कुर्वन्ति आत्मगतप्राचीनकर्मबन्धनविनाशाय कुर्वन्तीत्यर्थः ॥ ११ ॥

---

नोऽकर्तृत्वादिसंधानप्रकरणे तन्निवृत्तिरेव वक्तुमुचितेत्यभिप्रायेण—प्रकृत्यात्माभिमानरूपेणेत्युक्तम् । बन्धहेतुनेति तत्र पापलक्षणद्योतनम् । अलौकिकमनिष्टफलासाधारणकारणं हि पापम् । प्रयुक्तश्च पापशब्दोऽनेकेष्वर्थेषु, यथा न सुकृतं दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त इति । ननु पद्मपत्रमम्भसा संसृष्टं कथमत्र दृष्टान्त इत्यत्राऽऽह—यथेति । न संसर्गमात्रनिषेधायात्र दृष्टान्तः, किंतु यथा पद्मपत्रस्य जन्मस्थित्यादिकं सर्वमम्भस्येव तथाऽपि न तत्कार्यक्लेदादि, तद्वत्प्रकृत्यधीनभोगस्थित्यादेरस्य तत्कार्यदेहात्मभ्रमादिर्न स्यादिति भावः ॥ १० ॥

एवमुक्तार्थदृढीकरणाय शिष्टाचारसिद्धतोच्यते—कायेनेति । बुद्धिरत्र कृत्यध्यवसायः । केवलैरिति कर्तृत्वाभिमानत्यागो विवक्षितः । अथ वा ममत्वबुद्धिविषयतारहितैरित्यर्थः । तदा कायेनेत्यादौ केवलेनेत्यादि विपरिणाम्यम् । यद्वा कायशब्देन कर्मेन्द्रियवर्गस्यापि लक्षणया संग्रहणात्केवलैरिन्द्रियैरिति ज्ञानेन्द्रियाण्युच्यन्ते । तेषां च केवलत्वं वचनादिकर्मरहितत्वम् । ततश्च धर्मः श्रुतो वा दृष्टो वेत्यादिकमपि सूचितम् । आत्मशुद्धेरत्रैव फलतया निर्देशान्निष्फलप्रवृत्त्ययोगाच्च—स्वर्गादिफलसङ्गमित्युक्तम् । शुद्धिर्हि केनचिद्दूषितस्यापेक्षिता । स च दोषोऽत्र स्वतः शुद्धस्याऽऽत्मनोऽनादिकालकृतमात्मतत्त्वसाक्षात्कारविरोधिकर्मेत्यभिप्रायेणाऽऽह—आत्मगतेति ॥ ११ ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

युक्त आत्मव्यतिरिक्तफलेष्वचपल आत्मैकप्रवणः कर्मफलं त्यक्त्वा केवलात्मशुद्धये कर्मानुष्ठाय नैष्ठिकीं शान्तिमाप्नोति स्थिरामात्मानुभवरूपां निर्वृतिमाप्नोतीति । अयुक्त आत्मव्यतिरिक्तफलेषु चपल आत्मावलोकनविमुखः कामकारेण फले सक्तः कर्माणि कुर्वन्नित्यं कर्मभिर्बध्यते नित्यसंसारी भवति । अतः फलसङ्गरहित इन्द्रियाकारेण परिणतायां प्रकृतौ कर्माणि संन्यस्याऽऽत्मनो बन्धमोचनायैव कर्माणि कुर्वित्युक्तं भवति ॥ १२ ॥

अथ देहाकारपरिणतायां प्रकृतौ कर्तृत्वसंन्यास उच्यते—

सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

---

एकस्यैव कर्मणो बन्धहेतुत्वं मोक्षहेतुत्वं च फलसङ्गतदभावादिरूपसहकारिविशेषाद्भवत इतीममर्थं विशदयति—युक्त इति श्लोकेन । अत्र युक्तशब्देन समाहितचेतस्त्वमुच्यते, तच्चात्र फलान्तरविरक्तिपूर्वकमात्मप्रावण्यमेवेति व्यञ्जनाय—आत्मव्यतिरिक्तेत्याद्युक्तम् । कर्मफलं त्यक्त्वेतिवचनात्कर्मस्वरूपानुष्ठानं पूर्वोक्तमिहार्थसिद्धं दर्शितम् । नैष्ठिकीं शान्तिमित्यनेन साक्षान्मोक्षप्रतीतिः स्यात्तद्व्युदासायाऽऽह—स्थिरामिति । प्रकरणलभ्योऽयं विशेषः । निष्ठायां भवतीति नैष्ठिकी । कामकारेणेति न स्वैरचारो विवक्षितः, तस्य दूरनिरस्तत्वात् । अतः कामकर्तृकं प्रेरणं कामकारः । तेन यथाभिमतफलसङ्गमात्रं विवक्षितमित्याह—कामकारेण फले सक्त इति । निबध्यत इत्यत्रोपसर्गेण नितरां बन्धो विवक्षितः । नित्यसंसारी भवतीतिवर्तमानव्यपदेशाद्वा तथा विवक्षा । नैव किंचित्करोमीत्यादेः फले सक्तो निबध्यत इत्यन्तस्य संकलितार्थमुत्तरश्लोकेन संगत्यर्थमाह—अत इति । १२ ॥

अनन्तरश्लोकार्थमाह—अथेति । शरीराश्रितेषु इन्द्रियप्राणेषु कर्तृत्वसंन्यासाभिधानादनन्तरं तदाश्रये शरीर एव कर्तृत्वसं-

आत्मनः प्राचीनकर्ममूलदेहसंबन्धप्रयुक्तमिदं कर्मणां कर्तृत्वं न स्वरूपप्रयुक्तमिति विवेकविषयेण मनसा सर्वाणि कर्माणि नवद्वारे पुरे संन्यस्य वशी देही स्वयं देहाधिष्ठानप्रयत्नमकुर्वन्देहेन नैव कारयन्सुखमास्ते ॥ १३ ॥

साक्षादात्मनः स्वाभाविकं रूपमाह—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

न्यास उच्यत इति संगतिः । शरीरे कर्तृत्वसंन्यासं प्रति करणतयोक्तस्य मनसः करणीभावानुगुणव्यापारं दर्शयितुमात्मन इत्याद्युक्तम् । नहि देवादिदेहसंबन्धमात्रकृतं पुण्यपापकर्तृत्वम्, तत्संबन्धमात्रस्याकर्मवश्येऽपि सद्भावात् । अतः—प्राचीनकर्ममूलेत्युक्तम् । मुखे सप्तभिरवाग्द्वाभ्यां च नवद्वारता । पुरमेकादशद्वारमिति श्रुतौ तु नाभिब्रह्मरन्ध्राभ्यां सहैकादशद्वारतोक्तिः । पुरे संन्यस्येति । पुरस्याऽऽसनक्रियाधिकरणत्वेनान्वयः प्रकृतानुपयुक्त इति भावः । नवद्वारे पुर इति निर्देशः सावयवत्वनिरवयवत्वसच्छिद्रत्वनिश्छिद्रत्वपृथुत्वाणुत्वस्वतन्त्रत्वपरतन्त्रत्वनियन्तृत्वनियन्तव्यत्वादिभिर्देहात्मनोर्विवेकस्य सुखप्रदर्शनार्थः । स्वयमिति । देहादिपारतन्त्र्यरहित इत्यर्थः । यद्वा परिशुद्धेन स्वेन रूपेणेति भावः । वशी, अभिमानबलात्काराद्यविषय इत्यर्थः । प्रयत्नाश्रयत्वशरीरस्पन्दनादिहेतुत्वयोरपि विकल्पत्वात्—नैव कुर्वन्नित्याद्युक्तम् । सुखमास्ते कर्तृत्वाभिमानप्रयुक्तक्लेशातिरेकरहित आस्त इत्यर्थः । पुरमिव शरीरं पौरानिवेन्द्रियाणि सार्वभौममिव परमात्मानं भृत्यमिव स्वात्मानं पश्यतो भवति हि स्वास्थ्यम् । देहात्मभ्रमे हि पुरादिष्वासीनोऽहमिति मन्यते । तन्निवृत्तौ च देह एव पुरस्थानीयो भवतीति भावः ॥ १३ ॥

एवमौपाधिकस्य स्वरूपस्योपाधिषु संन्यास उक्तः । ततः स्वस्मिन्ननुसंधेयं स्वाभाविकरूपमुच्यत इति संगत्यभिप्रायेणाऽऽह—साक्षादिति । विचित्रजनविषयेण लोकस्येत्यनेनाभिप्रेतमुपाधिवैचि-

१ ख. घ. °न्ममन्म° । ग. °न्म । २ च. छ. °न्देहं नै° ।

अस्य देवतिर्यङ्मनुष्यस्थावरात्मना प्रकृतिसंसर्गेण वर्तमानस्य लोकस्य देवाद्यसाधारणं कर्तृत्वं तत्तदसाधारणानि कर्माणि तत्तत्कर्मजन्यदेवादिफलसंयोगं चायं प्रभुरकर्मवश्यः स्वाभाविकस्वरूपेणावस्थित आत्मा न सृजति नोत्पादयति। कस्तर्हि--स्वभावस्तु प्रवर्तते । स्वभावः प्रकृतिवासना । अनादिकालप्रवृत्तपूर्वपूर्वकर्मजनितदेवाद्याकारप्रकृतिसंस-

---

र्ग्यादिकं दर्शयितुम्—अस्येत्याद्युक्तम् । कर्तृत्वं प्रयत्नादिरूपं कर्माणि शरीरेन्द्रियादिचेष्टाः, यद्यात्मनां स्वाभाविकमिदं कर्तृत्वादिकं तदा सर्वेषामेकरूपं तत्स्यात् । न च तथा दृश्यत इत्यभिप्रायेण देवाद्यसाधारण कर्तृत्वमित्युक्तम् । देवाद्यसाधारणं देवत्वादिजातिमत्पिण्डपरिग्रहदशामतिनियतमित्यर्थः । फलसंयोगः फलानुभवः । प्रकरणश्च ज्ञात्प्रभुशब्दोऽत्र जीवविषय इति प्रदर्शनार्थम्—अयं प्रभुरित्युक्तम् । जीवे प्रभुशब्दाभिमेतमाह—अकर्मवश्यः स्वाभाविकस्वरूपेणावस्थित इति । अत्र हि प्रकरणे मयि सर्वाणीत्यादिना जीवस्य कर्तृत्वं परमात्मन्यध्यस्यते । अतोऽत्राकर्तृविषयः प्रभुशब्दो न परविषय इति भावः । न सृजतीत्यत्र 'सृज विसर्गे' इति धातोस्त्यागार्थत्वेन कर्तृत्वादित्रयं स्वी करोतीति वाक्यार्थः स्यादिति तद्व्युदासायाऽऽह—नोत्पादयतीति । कारणान्तरादर्शनात्तस्यैव कर्तृत्वमित्यभिप्रायेण चतुर्थपादस्य शङ्कामाह—कस्तर्हीति । सृजतीति शेषः । स्वभावशब्दं प्रकरणोपयुक्ते विशेषे स्थापयितुं वाच्यं तावदाह—प्रकृतीति । ननु चेतनस्याऽऽत्मनः कर्तृत्वादिकं नास्ति अचेतनायास्तु वासनायाश्चेतनगुणमात्रभूतायाः कर्तृत्वादिकमिति कथमिदं जाघटीति । यद्यात्मनः स्वतः शुद्धस्य न कर्तृत्वादि तर्हि तस्य वासनाऽपि कुतः समागता । यदि न कुतश्चित्तदा वासनैव स्वाभाविकीति तत्कृतकर्तृत्वादिकमपि स्वाभाविकं स्यात् । यदि कुतश्चिद्धेतोस्तदा तस्यापि स्वाभाविकत्वे पूर्वदोषः । औपाधिकत्वे कर्तुरात्मनस्तदागमोऽपि कुतः । यदि वासनया तर्ह्यन्योन्याश्रयणम्, यद्यन्यस्मात्कुतश्चित्तत्रापि तथेत्यनवस्थेत्यादिचोद्यनिरसनाय तुशब्दस्तदाह—अनादिकालेति । बीजाङ्कुरन्यायादन्योन्याश्रयादिपरिहारः । वासनाहेतुवैचित्र्यसिद्ध्यर्थम्—देवाद्याकारेत्याद्युक्तम् । यथा तप्तायःपिण्डे वह्निसंसर्गा-

गेकृततत्तदात्माभिमानजनितवासनाकृतमीदृशं कर्तृत्वादिकं सर्वं न स्वरूपप्रयुक्तमित्यर्थः ॥ १४ ॥

नाऽऽदत्ते कस्यचित्पापं न चैव सुकृतं विभुः।
अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥

कस्यचित्स्वसंबन्धितयाऽभिमतस्य पुत्रादेः पापं दुःखं नाऽऽदत्ते नापनुदति। कस्यचित्प्रतिकूलतयाऽभिमतस्य सुकृतं सुखं च नाऽऽदत्ते नापनुदति। यतोऽयं विभुर्न क्वचित्केनचिद्देवादिदेहेन साधारणदेहः। अत एव न कस्यचित्संबन्धी न कस्यचित्प्रतिकूलश्च सर्वमिदं वासनाकृतम्। एवंस्वभावस्य कथमियं विपरीतवासनोत्पद्यते—

---

द्बुद्धित्वबुद्धिस्तथाऽत्रेति दर्शयितुम्—संसर्गकृतशब्दः। वासनाकृतं वासनाख्यविशेषहेतूपाधिकमित्यर्थः ॥ १४ ॥

आत्मनोऽकर्तृत्वादिकस्य वासनायाः कर्तृत्वादिकस्य च विवरणम्—नाऽऽदत्त इति श्लोकस्यार्थ (र्थं) द्वयन्। परगतपापसुकृतयोरादानप्रसङ्गाभावात्तत्प्रतिषेधोऽनुचितः। अतस्तत्कार्यं दुःखं सुखं च लक्ष्यभूते। तथापि परगतदुःखसुखयोः स्वस्मिन्नाकर्षणं न शक्यम्। अतस्तदपनयनमात्रं विवक्षितमित्यभिप्रायेणाऽऽह—कस्यचिदिति। कस्यचिदित्यनेन सूचितमपनोदनहेतुविशेषं दर्शयितुम्—स्वसंबन्धितयाऽभिमतस्येत्याद्युक्तम्। आदत्त इत्यस्य करोत्याद्यर्थत्वानौचित्यादपहरणार्थत्वे च प्रयोगादपहरणनिषेधेनैव तुल्यतया करणनिषेधसिद्धेर्नापनुदतीति व्याख्यातम्। विभुरिति न परिमाणविशेषाद्यभिप्रायम्। जीवस्याणुतया श्रुत्यादिसिद्धेः। नापि प्रभुत्वपरम्। अत्रानुपयुक्तत्वात्। अतस्तत्कर्मानुकूलसमस्तदेहानुप्रवेशयोग्यतामात्रप्रतिनियतदेशराहित्यं विवक्षितम्। अत एवाऽऽगन्तुकेषु मित्रामित्रादिषु संबन्धित्वं प्रतिकूलत्वं च, आगन्तुकानां तत्तद्देहानामेव न त्वात्मन इति। तत एव चानुकूलप्रतिकूलपुरुषविषयदुःखाद्यपनयनमौपाधिकमित्यायातम्। तदेवं कार्याभावौपयिकहेत्वभावप्रतिपादनपरो विभुशब्द इत्यभिप्रायेणाऽऽह—यतोऽयमिति। उत्तरार्धोत्थानाय शङ्कते—एवंस्वभावस्येति। विपरीतवासना स्वभावविरुद्धवा-

अज्ञानेनाऽऽवृतं ज्ञानं ज्ञानविरोधिना पूर्वकर्मणा स्वफलानुभवयोग्यत्वायास्य ज्ञानमावृतं संकुचितम् । तेन ज्ञानावरणरूपेण कर्मणा देवादिदेहसंयोगस्तत्तदात्माभिमानरूपमोहश्च जायते । ततश्च तथाविधात्माभिमानवासना तदुचितकर्मवासना च । वासनातो विपरीतात्माभिमानः कर्मारम्भश्चोपपद्यते ॥ १५ ॥

'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' 'न हि ज्ञानेन सदृशं पवित्रम्' इति पूर्वोक्तं स्वकाले संगमयति—

---

सनेत्यर्थः । अत्रोत्तरम्—अज्ञानेनाऽऽवृतं ज्ञानमिति ।

'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥
संसारतापानखिलानवाप्नोत्यतिसंततान् ।
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥

इति भगवत्पराशरवचनमनुस्मरन्नाह—ज्ञानविरोधिनेति । अत्र नञस्तदन्यतदभावार्थत्वमावरणानुपयुक्तमिति भावः । स्वफलेत्यादि । न ह्यसंकुचितज्ञानः संसारतापानुभवयोग्य इति भावः । अत्यन्तविलोपपरिहारायाऽऽवरणशब्दोपचरितमाह—संकुचितमिति । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतिसिद्धमनेन स्मारितम् । देवादिदेहसंयोग इति जन्तुशब्दाभिमतोऽर्थः । स च मोहजनने कर्मणो द्वारम् । शङ्कोत्तरमाह—ततश्चेति । आत्मनि प्रतिषिद्धेष्टानिष्टाचरणस्यान्यहेतुतामाह—वासनात इति ॥ १५ ॥

एवं तृतीयाध्यायोक्ताकर्तृत्वानुसंधानस्य प्रकारविशेषाः प्रतिपादिताः । अथ चतुर्थाध्यायोक्तस्य ज्ञानविशेषस्य शोधनं क्रियत इत्यभिप्रायेणाऽऽह—सर्वमिति । स्वकालेऽकर्तृत्वानुसंधानप्रकारकथनादनन्तरं ज्ञानस्वरूपकथनावसर इत्यर्थः । यद्वा तद्विद्धि प्रणिपातेनेत्यत्रोपदेक्ष्यन्तीति स्वेनैव निर्दिष्टे विपाककाल इत्यर्थः । एवं वर्तमानेषु प्रवृत्तस्वपीत्यर्थः । यद्वा कर्मयोगनिष्ठेष्वित्यर्थः । अज्ञानेन ज्ञानमावृतं चेत्कथं ज्ञानेन तस्य नाश इति शङ्कां व्यव-

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

एवं वर्तमानेषु सर्वात्मसु येषामात्मनामुक्तलक्षणेनाऽऽत्मयाथात्म्योपदेशजनितेनाऽऽत्मविषयेणाहरहरभ्यासाधेयातिशयेन निरतिशयपवित्रेण ज्ञानेन तज्ज्ञानावरणमनादिकालप्रवृत्तानन्तकर्मसंचयरूपाज्ञानं नाशितं तेषां तत्स्वाभाविकं परं ज्ञानमपरिमितमसंकुचितमादित्यवत्सर्वं यथावस्थितं प्रकाशयति । तेषामिति विनष्टाज्ञानानां बहुत्वाभिधानादात्मस्वरूपबहुत्वम् । 'न त्वेवाहं जातु नाऽऽसं न त्वं नेमे' इत्युपक्रमावगतमत्र

च्छिन्दता तुशब्देन द्योतितं ज्ञानस्य विशेषं दर्शयितुम्—उक्तलक्षणेनेत्यादि निरतिशयपवित्रेणेत्यन्तमुक्तम् । आत्मनो ज्ञानेनेत्यन्वयः । आत्मविषयेणेति । आत्मन इति षष्ठ्याः संबन्धसामान्यपरत्वं कर्तृविषयत्वं चात्रानुपयुक्तमिति भावः । तच्छब्दपरामृष्टं प्रकारमाह—ज्ञानावरणेति । अज्ञानस्वरूपस्यातिगहनत्वसूचनार्थं निरतिशयपवित्रस्य ज्ञानस्य भास्वतो निःशेषाज्ञानतिमिरक्षिंभरित्वप्रदर्शनार्थं च—अनादिकालेत्याद्युक्तम् । उत्तरार्धगततच्छब्दार्थः—स्वाभाविकमिति । सामानाधिकरण्यस्वारस्यात्परमिति ज्ञानविशेषणम् । तदर्थमाह—अपरिमितमसंकुचितमिति । ज्ञानस्य परत्वं ह्यनवच्छिन्नविषयत्वं तत्र च हेतुः संकोचाभाव इत्यभिप्रायः । सर्वमिति प्रकाशयतेरर्थसिद्धकर्मोक्तिः । अज्ञाननिवृत्तौ च ज्ञानस्य सर्वगोचरत्वं श्रौतमिति भावः । आदित्यवदित्युदाहृतिदृष्टान्तसामर्थ्यसिद्धमर्थमाह—यथावस्थितमिति । एतेन परमित्यत्र पदमिति विशेष्याध्याहारः परमार्थतत्त्वमिति विवक्षा परोक्ता निरस्ता । भेदव्यपदेशबलादद्वैतमतस्योपक्रमविरोधः प्रागुक्तः । मध्येऽपि स एव तात्त्विको भेदः स्पष्टमुपदिश्यत इति तस्य तात्पर्यविषयत्वं दर्शयति—तेषामिति । विनष्टाज्ञानानामिति । नहीदं बहुत्वं भ्रान्तिसिद्धमुपाधिसिद्धं वा वक्तुं शक्यमिति भावः । सत्यमिथ्योपाधिकृतभेदवादिनोर्भास्करशंकरयोर्मतमनूद्य परिहरति—मिथ्याभूतस्याज्ञानाख्योपादानस्य विनाशे तदुपात्तमिथ्याभूतान्तःकरणाद्युपाधेरपि निवृत्तेरिति शंकरं प्रति हेत्वर्थः । इतरं प्रत्यज्ञानशब्दवाच्यस्य कर्मादेर्विनाशे तन्निमित्तशरीरान्तःकरणाद्युपा-

स्पष्टतरमुक्तम् । न चेदं बहुत्वमुपाधिकृतम् । विनष्टाज्ञानानामुपाधिगन्धाभावात् । तेषामादित्यवज्ज्ञानमिति व्यतिरेकनिर्देशाज्ज्ञानस्य स्वरूपानुबन्धिधर्मत्वमुक्तम् । आदित्यदृष्टान्तेन च ज्ञातृज्ञानयोः प्रभाप्रभावतोरिवावस्थानं च । तत एव संसारदशायां ज्ञानस्य कर्मणा संकोचो मोक्षदशायां विकासश्चोपपन्नः ॥ १६ ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

तद्बुद्धयस्तथाविधात्मदर्शनाध्यवसायास्तदात्मानस्तद्विषयमनसस्तन्नि-

---

धिनिवृत्तिरित्यर्थः । शंकरमतदूषणप्रसङ्गे तदुक्तं ज्ञानमात्रात्मवादं दूषयितुं शुद्धदशायां ज्ञातृत्वमत्र सिद्धमिति दर्शयति—तेषामिति । संबन्धविषयतया षष्ठी व्यतिरेकगर्भेति—व्यतिरेकनिर्देशादित्युक्तम् । विनष्टोपाधीनामात्मनां धर्मतया निर्देशाज्ज्ञानस्य स्वरूपानुबन्धित्वसिद्धेरागन्तुकचैतन्यवादोऽपि निरस्तः । आदित्यशब्दोऽत्राऽऽदित्यप्रभापरः । प्रभाद्वारेणैवाऽऽदित्यस्य प्रकाशकत्वात् । धर्मभूतज्ञाने च सैव दृष्टान्तो भवितुमर्हति ।

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥

इत्यादि सामान्याच्च । तदेतदभिप्रेत्य तत्फलितमाह—आदित्यदृष्टान्तेनेति । ततः प्रस्तुतस्य किमित्यत्राऽऽह—तत एवेति । यथा प्रभाया आवारकसंनिधौ संकोचस्तन्निवृत्तौ पुनर्विकासश्च दृश्यते तथा ज्ञानस्यापीति भावः । यद्वा तेषामादित्यवदवस्थितानां प्रभातुल्यज्ञानमित्यर्थः । प्रभायाः प्रदीपादित्याद्यपृथक्सिद्धतेजोद्रव्यविशेषत्वं ज्ञानस्याऽऽत्मधर्मत्वेऽपि द्रव्यत्वं संकोचविकासयोगित्वादीनि च शारीरकभाष्ये प्रपञ्चितानि । एवं प्रभातुल्यद्रव्यत्वोपपादने प्रकृतमावृत्त्यादिकं युज्यत इत्याह—तत एवेति ॥ १६ ॥

आत्मानुभवसौधसोपानस्य ज्ञानस्याऽऽरोहणक्रमं दर्शयति—तद्बुद्धय इति श्लोकेन । तच्छब्देनात्र पूर्वप्रस्तुतस्वाभाविकात्मस्वरूपं पूर्वश्लोकोक्तज्ज्ञानं वा परामृश्यत इत्यभिप्रायेण—तथाविधात्मदर्शनाध्यवसाया इत्युक्तम् । तदात्मान इत्यनेन द्रष्टव्यात्माध्यवसायादनन्तरो दर्शनार्थप्रवृत्तियोग उच्यत इत्यभिप्रायेण—तद्विषयमनस इत्युक्तम् ।

ष्ठास्तदभ्यासनिरतास्तत्परायणास्तदेव परमयनं येषां ते। एवमभ्यस्यमानेन ज्ञानेन निर्धूतप्राचीनकल्मषास्तथाविधमात्मानमपुनरावृत्तिं गच्छन्ति। यदवस्थादात्मनः पुनरावृत्तिर्न विद्यते स आत्माऽपुनरावृत्तिः स्वेन रूपेणावस्थितः, तमात्मानं गच्छन्तीत्यर्थः ॥ १७ ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

विद्याविनयसंपन्ने केवलब्राह्मणे गोहस्तिश्वपचादिषु अत्यन्तविषमा-

---

तन्निष्ठत्वं विषयान्तरवैमुख्यतत्तत्परायणत्वे हेतुः । अयनशब्दोऽत्र कर्मणि ल्युडन्तः प्राप्यपरः । वाक्यार्थज्ञानादिमात्रव्यावृत्त्यर्थम्—एवमभ्यस्यमानेनेत्युक्तम् । प्राप्तिप्रतिबन्धककल्मषनिवृत्तिर्ह्युपान्त्यपर्व । अतोऽन्तिमं प्राप्यमत्रापुनरावृत्तिशब्देन विवक्षितम् । स च यथावस्थित आत्मैवेत्यभिप्रायेण—तथाविधमात्मानमिति । अपुनरावृत्तिशब्दस्यात्रानुदिष्टावध्यन्तरपरामर्शसापेक्षसमासान्तरव्युदासेनाऽऽत्मविशेषणत्वायाऽऽह—यदवस्थादिति। नन्वात्मन एव क्षीणे पुण्ये मर्त्यलोकं विशन्तीति पुनरावृत्तिरुच्यते। यदवस्थादिति चायुक्तम् । मोक्षस्याप्यवस्थाविशेषत्वे नित्यत्वायोगात्पुनरावृत्तिप्रसङ्गादित्यत्राऽऽह—स्वेन रूपेणेति । औपाधिकसमस्ताकारनिवृत्तिरूपावस्थाविनाशकासंभवात्, परमतेऽपि प्रध्वंसरूपत्वादनिवर्त्येति भावः ॥ १७ ॥

कीदृशोऽयमात्मसाक्षात्कार इत्याकाङ्क्षायाम् ‘ येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ’ इति प्रागुक्तं व्यनक्ति—विद्याविनयेति श्लोकेन। विद्याविनयसंपन्ने ब्राह्मण इति पदद्वयं न समानाधिकरणम् । निर्विशेषणसमुदायसहपठितत्वात् । विद्याविनयसंपन्नविशेषणप्रातिशीर्ष्यानुक्तेश्च । गवि हस्तिनीत्याभ्यामाकारवैषम्यं दर्शितम् । श्वश्वपचशब्दाभ्यां वृत्त्या वैषम्यम् । तद्वत्पूर्वाभ्यामपि मिथो वैषम्यमेवाभिप्रेतमतो ब्राह्मण इति ब्राह्मणत्वजात्याक्रान्ततामात्रं विवक्षितमिति दर्शयति—केवलब्राह्मण इति । सात्त्विकराजसतामसरूपानेकोदाहरणाभिप्रेतमाह—अत्यन्तविषमेति ।

कारतया प्रतीयमानेषु चाऽऽत्मसु पण्डिता आत्मयाथात्म्यविदो ज्ञानैकाकारतया सर्वत्र समदर्शिनः । विषमाकारस्तु प्रकृतेर्नाऽऽत्मनः । आत्मा तु सर्वत्र ज्ञानैकाकारतया सम इति पश्यन्तीत्यर्थः ॥ १८ ॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥

इहैव साधनानुष्ठानदशायामेव तैः सर्गो जितः संसारो जितः ।

---

आत्मस्विति । शरीराणामन्योन्यवैषम्यनिषेधो दुःशक इति भावः । अत्र समदर्शित्वोपयुक्तमूहापोहक्षमत्वं पण्डितत्वमिति दर्शयितुम्—आत्मयाथात्म्यविद इत्युक्तम् । समं द्रष्टुं शीलं येषां ते समदर्शिनः । ननु प्रत्यक्षसिद्धं शरीरवैषम्यं शरीरिणामपि तत्तद्विशिष्टत्वात्तत्कृतज्ञानादिवैषम्यं च दुरपह्नवम् । अतोऽत्यन्तविषमेषु पदार्थत्वादिवत्स्थूलं सामान्यमकिंचित्करमित्यत्राऽऽह—विषमाकारस्त्विति । प्रकृतेरिति संबन्धसामान्ये षष्ठी । तेन साक्षात्प्रकृतिगतं देवत्वादिकं प्रयुक्तं सुखत्वादिकं च कथंचित्संबन्धमात्रात्प्रकृतेरित्युक्तम् । न शरीरगतं वैषम्यं प्रतिषिध्यते किंतु तदेवात्र प्रतिपाद्यते । न च तत्तच्छरीरविशिष्टत्वलक्षणं तन्मूलज्ञानसंकोचादिलक्षणं वा वैषम्यमपह्नूयते, अपि तु तस्यौपाधिकत्वमुच्यते । न च शरीरादिविशिष्टत्वं विरोधि स्वाभाविकस्वरूपसाम्यमात्रपरत्वात् । न चैतदत्यन्तस्थूलम् । शुद्धानामात्मनां स्वरूपभेदस्य दुर्वचत्वात् । स्फुटविशेषाकारान्तराभावादिति भावः । ननु तथाऽपि ब्राह्मणादिषु पूज्यत्वादिसाम्यबुद्धौ च भोज्यान्नत्वादिदोषः स्मृतस्तत्राऽऽह—आत्मा त्विति ॥ १८ ॥

इदं समदर्शित्वं न कालान्तरभाविफलसाधनत्वमात्रं किंतु तदानीमेव निःश्रेयसकल्पां क्लेशनिवृत्तिं दिशतीति समदर्शिनां प्रशंसा क्रियते—इहैवेति श्लोकेन । साधनानुष्ठानदशायामेवेति । इहशब्दस्यात्र लोकपरत्वादपि स्वावस्थाविशेषपरत्वमेवोचितमिति भावः । संसारो जित इति । मुक्तप्रायास्त एवेत्यर्थः । सृष्ट्यादेरत्रानन्वयात्सर्गशब्दः सृज्यत इति व्युत्पत्त्याऽत्र संसारवाचकः ।

येषामुक्तरीत्या सर्वेष्वात्मसु साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म। प्रकृतिसंसर्गदोषवियुक्ततया सममात्मवस्तु हि ब्रह्म। आत्मसाम्ये स्थिताश्चेद्ब्रह्मणि स्थिता एव ते। ब्रह्मणि स्थितिरेव हि संसारजयः। आत्मसु ज्ञानैकाकारतया साम्यमेवानुसंदधाना मुक्ता एवेत्यर्थः ॥ १९ ॥

येन प्रकारेणावस्थितस्य कर्मयोगिनः समदर्शनरूपो ज्ञानविपाको भवति तं प्रकारमुपदिशति—

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

यादृशदेहस्थस्य यदवस्थस्य प्राचीनकर्मवासनया यत्प्रियं यच्चाप्रियं तदुभयं प्राप्य हर्षोद्वेगौ न कुर्यात्। कथम्—स्थिरबुद्धिः स्थिर आत्मनि बुद्धिर्यस्य स स्थिरबुद्धिः। असंमूढोऽस्थिरेण शरीरेण स्थिरमा-

---

ब्राह्मणचण्डालास्पृश्यत्वादिसाम्यप्रसङ्गव्युदासाय—उक्तरीत्येत्युक्तम्। निरुपाधिकात्मस्वरूपं ज्ञानैकाकारतया सममिति पूर्वभाष्योक्तप्रकारेणेत्यर्थः। नन्वात्मन्येव स्थितिः संसारजयहेतुर्नतु तत्साम्ये तत्राऽऽह—निर्दोषं हि समं ब्रह्मेति। ब्रह्मत्वमेव विधेयम्, अन्यथा तस्माद्ब्रह्मणि ते स्थिता इत्यनन्वयात्। समदर्शिनो ब्रह्मणि स्थिताः समस्य ब्रह्मत्वादित्यन्वयः स्यात्ततश्चोक्तचोद्यपरिहार इत्यभिप्रायेणाऽऽह—आत्मसाम्ये इति। ततः किं प्रकृतस्येत्यत्राऽऽह—ब्रह्मणि स्थितिरिति। ब्रह्मशब्दोऽत्र शुद्धात्मनि ब्रह्मसाम्यात्। अत्र फलितं पिण्डितार्थमाह—आत्मस्विति ॥ १९ ॥

प्रियाप्रिये तदधीनहर्षोद्वेगौ च देहतदवस्थाद्युपाधिभेदनिबन्धनाविति व्यञ्जयितुं—यादृशदेहस्थस्येत्याद्युक्तम्। यदवस्थस्येत्येतद्देहादिकृतज्ञानसंकोचाद्यवस्थाविषयं वा। प्रियाप्रियरूपकारणागमे तत्कार्यहर्षोद्वेगनिवृत्तिर्दुःशकेत्यभिप्रायेणाऽऽह—कथमिति। अत्रोत्तरं—स्थिरबुद्धिरिति। समानाधिकरणसमासादपि उपयोगातिशयादत्र व्याधिकरणसमास उपपन्न इत्यभिप्रायेणाऽऽह—स्थिर आत्मनीति। असंमूढ इत्यत्र समित्युपसर्ग एकीकारपरः। एवंविधस्थिरबुद्धित्वासंमूढत्वयोर्हेत्वाकाङ्क्षां दर्शयति—

त्मानमेकीकृत्य मोहः संमोहस्तद्रहितः। तच्च कथम्। ब्रह्मविद्ब्रह्मणि स्थित उपदेशेन ब्रह्मवित्संस्तस्मिन्ब्रह्मण्यभ्यासयुक्तः। एतदुक्तं भवति– तत्त्वविदामुपदेशेनाऽऽत्मयाथात्म्यविद्भूत्वा तत्रैव यतमानो देहाभिमानं परित्यज्य स्थिररूपात्मावलोकनप्रियानुभवे व्यवस्थितोऽस्थिरे प्राकृतप्रियाप्रिये प्राप्य हर्षोद्वेगौ न कुर्यादिति ॥ २० ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥

एवमुक्तेन प्रकारेण बाह्यस्पर्शेष्वात्मव्यतिरिक्तविषयानुभवेष्वसक्तमना अन्तरात्मन्येव यः सुखं विन्दति लभते स प्रकृत्यभ्यासं विहाय ब्रह्मयोगयुक्तात्मा ब्रह्माभ्यासयुक्तमना ब्रह्मानुभवरूपमक्षयं सुखं प्राप्नोति ॥ २१ ॥

---

तच्च कथमिति। स्थिरबुद्धित्वासंमूढत्वे द्वे अपि संकलय्य तदिति परामृश्येते—ब्रह्मविद्ब्रह्मणि स्थित इति शब्दाभ्यां सिद्धमवान्तरदशाविशेषं विशदयति—उपदेशेनेत्यादिना। सन्नित्यनेनोपदेशजनितज्ञानमनूद्य विशिष्टं विज्ञानं विधीयत इति सूचितम्। उक्तमेवार्थं समदर्शित्वरूपज्ञानविपाकाभिलाषिणामव्याकुलानुष्ठानपूर्वक्रमप्रदर्शनार्थं श्लोकस्थपादानां हेतुकार्यभावेन महावाक्यान्वयं दर्शयति–एतदुक्तमिति। बाह्यकुदृष्ट्युपदेशनिवृत्त्यर्थं तत्त्वविदामित्युक्तम्। भूत्वेत्येतदनुवादत्वसूचनार्थम् ॥ २० ॥

एवं हर्षोद्वेगावकुर्वतः समदर्शित्वप्रयुक्तं निरतिशयसुखं स्वयमापततीत्युच्यते—बाह्येति श्लोकेन। सुखं विन्दतीत्यस्य सुखमक्षयमश्नुत इत्यतोऽभेदप्रदर्शनाय लभत इत्युक्तम्। अक्षयसुखप्रारम्भोऽयमिति भावः। प्रकृत्यभ्यासं विहायेत्यर्थलब्धोक्तिः। प्रकृत्यभ्यासः पुनः पुनः प्राकृतशब्दादिभोग्यचिन्ता। 'विन्दत्यात्मनि यत्सुखम्' इत्युपदेशादिजन्यज्ञानमूलं—सुखमित्युक्तम्। सुखमक्षयमश्नुते, इति तु साक्षात्कारानन्तरभावि नित्यं सुखमुच्यत इति विशेषं दर्शयितुम्—ब्रह्मानुभवरूपमित्युक्तम् ॥ २१ ॥

प्राकृतस्य भोगस्य सुत्यजतामाह—

ये * हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

---

अनादिकालं बाह्यस्पर्शरसिकस्य तत्परित्यागः कथमित्याकाङ्क्षायामर्जनरक्षणादिदोषदर्शनात्तत्रोपरमः शक्य इति ये हीत्यादिश्लोकेनोच्यत इत्यभिप्रायेणाऽऽह—प्राकृतस्येति। संस्पर्शजा

---

* अस्य श्लोकस्य मधुसूदनसरस्वतीकृतं व्याख्यानमात्मयाथात्म्यवेदनोपयोगियोगशास्त्रानुगतत्वाज्जिज्ञासूनां योगशास्त्रार्थपरिचयार्थं प्रदर्श्यते—ननु बाह्यविषयप्रीतिनिवृत्तावात्मन्यक्षयसुखानुभवस्तस्मिंश्च सति तत्प्रसादादेव बाह्यविषयप्रीतिनिवृत्तिरितीतरेतराश्रयवशान्नैकमपि सिध्येदित्याशङ्क्य विषयदोषदर्शनाभ्यासेनैव तत्प्रीतिनिवृत्तिर्भवतीति परिहारमाह-ये हीति। हि यस्माद्ये संस्पर्शजा विषयेन्द्रियसंबन्धजा भोगाः क्षुद्रसुखलवानुभवा इह वा परत्र वा रागद्वेषादिव्याप्तत्वेन दुःखयोनय एव ते, ते सर्वेऽपि दुःखहेतव एव। तदुक्तं विष्णुपुराणे—

यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः॥ इति।

एतादृशा अपि न स्थिराः किंतु आद्यन्तवन्तः, आदिर्विषयेन्द्रियसंयोगोऽन्तश्च तद्वियोग एव तौ विद्येते येषां ते पूर्वापरयोरसत्त्वान्मध्ये स्वप्नवदाविर्भूताः क्षणिका मिथ्याभूताः। तदुक्तं गौडपादाचार्यैः—'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति। यस्मादेवं तस्मात्तेषु बुधो विवेकी न रमते प्रतिकूलवेदनीयत्वान्न प्रीतिमनुभवति। तदुक्तं भगवता पतञ्जलिना—'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' (यो० सू० २। १५) इति। सर्वमपि विषयसुखं दृष्टमानुश्रविकं च दुःखमेव प्रतिकूलवेदनीयत्वात्, विवेकिनः सुखदुःखसाक्षात्कारवतो न त्वविवेकिनः। अक्षिपात्रकल्पो हि विद्वानल्पेनाप्युद्विजते। यथोर्णातन्तुरतिसुकुमारोऽप्यक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नेतरेष्वङ्गेषु तद्वद्विवेकिन एव मधुविषसंपृक्तान्नभोजनवत्सर्वमपि भोगसाधनं कालत्रयेऽपि क्लेशानुविद्धत्वाद्दुःखं न मूढस्य बहुविधदुःखसहिष्णोरित्यर्थः। मूढस्तु सुखकाले दुःखतया न जानातीति विवेकिन इत्युक्तम्। स हि सुखकालेऽपि दुःखात्मकत्वं पश्यति। दुःखसंभिन्नत्वात्। सुखमेव तु न सर्वम्। दुःखे बलवद्द्वेषाद्दुःखबाहुल्याच्च।

कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः ।
क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम् ॥

इति स्मृतेः । तत्र परिणामतापसंस्कारदुःखैरिति भूतवर्तमानभविष्यत्कालेऽपि दुःखानुविद्धत्वादौपाधिकं दुःखत्वं विषयस्योक्तं, गुणवृत्तिविरोधाच्चेत्यनेन स्वरूपतोऽपि दुःखत्वम् । तत्र परिणामश्च तापश्च संस्कारश्च त एव दुःखानि तैरित्यर्थः । इत्थंभूतलक्षणे तृतीया । तथाहि—रागानुविद्ध एव सर्वोऽपि सुखानुभवः । नहि तत्र न रज्यति तेन सुखी चेति संभवति । राग एव पूर्वमुद्भूतः सन्विषयप्राप्त्या सुखरूपेण परिणमते । तस्य च प्रतिक्षणं वर्धमानत्वेन स्वविषयाप्राप्तिनिबन्धनदुःखस्यापरिहार्यत्वाद्दुःखरूपतैव । या हि भोगेष्विन्द्रियाणामुपशान्तिः परितृप्तत्वात्तत्सुखम् । या लौल्यादनुपशान्तिस्तद्दुःखम् । न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम् । यतो भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम् । स्मृतिश्च—' न जातु कामः कामानामुपभोगेन शाम्यति ' इत्यादिः । तस्माद्दुःखात्मकरागपरिणामत्वाद्विषयसुखमपि दुःखमेव कार्यकारणयोरभेदादिति परिणामदुःखत्वम् । तथा सुखानुभवकाले तत्प्रतिकूलानि दुःखसाधनानि द्वेष्टि । नानुपहत्य भूतान्युपभोगः संभवतीति भूतानि च हिनस्ति । द्वेषश्च सर्वाणि दुःखसाधनानि मे मा भूवन्निति संकल्पविशेषः । न च तानि सर्वाणि कश्चिदपि परिहर्तुं शक्नोति । अतः सुखानुभवकालेऽपि तत्परिपन्थिनं प्रति द्वेषस्य सर्वदैवावस्थितत्वात्तापदुःखं दुष्परिहरमेव । तापो हि द्वेषः । एवं दुःखसाधनानि परिहर्तुमशक्तो मुह्यति चेति मोहदुःखताऽपि व्याख्येया ।

तथा चोक्तं योगभाष्यकारैः—सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति । तत्रास्ति द्वेषजः कर्माशयः । सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते । ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति । स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते । तथा वर्तमानः सुखानुभवः स्वविनाशकाले संस्कारमाधत्ते । स च सुखस्मरणं, तच्च रागं, स च मनःकायवचनचेष्टां, सा च पुण्यापुण्यकर्माशयौ, तौ च जन्मादीति संस्कारदुःखता । एवं तापमोहयोरपि संस्कारौ व्याख्येयौ । एवं कालत्रयेऽपि दुःखानुवेधाद्विषयसुखं दुःखमेवेत्युक्त्वा स्वरूपतोऽपि दुःखतामाह—गुणवृत्तिविरोधाच्च, गुणाः सत्त्वरजस्तमांसि सुखदुःखमोहात्मकाः परस्परविरुद्धस्वभावा अपि तैलवर्त्यग्निवद् दीपं पुरुषभोगोपयुक्तत्वेन त्र्यात्मकमेकं कार्यमारभन्ते । तत्रैकस्य प्राधान्ये द्वयोर्गुणभावात्प्रधानमात्रव्यपदेशेन सात्त्विकं राजसं तामसमिति त्रिगुणमपि कार्यमेकेन गुणेन व्यपदिश्यते । तत्र सुखोपभोगरूपोऽपि प्रत्यय उद्भूतसत्त्वकार्यत्वेऽप्यनुद्भूतरजस्तमःकार्यत्वात्त्रिगुणात्मक एव । तथाच सुखात्मकत्ववद्दुःखात्मकत्वं

विषादात्मकत्वं च तस्य ध्रुवमिति दुःखमेव सर्वं विवेकिनः । न चैतादृशोऽपि प्रत्ययः स्थिरः । यस्माच्चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् । नन्वेकः प्रत्ययः कथं परस्परविरुद्धसुखदुःखमोहत्वान्येकदा प्रतिपद्यत इति चेन्न–उद्भूतानुद्भूतयोर्विरोधाभावात् । समवृत्तिकानामेव हि गुणानां युगपद्विरोधो न विषमवृत्तिकानाम् । यथा धर्मज्ञानवैराग्यैश्वर्याणि लब्धवृत्तिकानि लब्धवृत्तिकैरेवाधर्माज्ञानावैराग्यानैश्वर्यैः सह विरुध्यन्ते न तु स्वरूपसद्भिः । प्रधानस्य प्रधानेन सह विरोधो न तु दुर्बलेनेति हि न्यायः । एवं सत्त्वरजस्तमांस्यपि परस्परं प्राधान्यमात्रं युगपन्न सहन्ते न तु सद्भावमपि । एतेन परिणामतापसंस्कारदुःखेष्वपि रागद्वेषमोहानां युगपत्सद्भावो व्याख्यातः । प्रसुप्ततनुविच्छिन्नोदाररूपेण क्लेशानां चतुरवस्थत्वात् । तथाहि 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः' (यो० सू० २ । ३) 'अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्' (यो० सू० २ । ४) 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' (यो० सू० २ । ५) 'दृग्दर्शनशक्त्योरेकात्मकतेवास्मिता' (यो० सू० २ । ६) 'सुखानुशयी रागः' (यो० सू० २ । ७) 'दुःखानुशयी द्वेषः' (यो० सू० २ । ८) 'स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः' (यो० सू० २ । ९) 'ते प्रतिप्रसवहेयाः सूक्ष्माः' (यो० सू० २ । १०) 'ध्यानहेयास्तद्वृत्तयः' (यो० सू० २ । ११) 'क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः' (यो० सू० २ । १२) 'सति मूले तद्विपाको जात्यायुर्भोगाः' (यो० सू० २ । १३) इति पातञ्जलसूत्राणि । तत्रातस्मिंस्तद्बुद्धिर्विपर्ययो मिथ्याज्ञानमविद्येति पर्यायाः । तस्याविशेषः संसारनिदानम् । तत्रानित्ये नित्यबुद्धिर्यथा–ध्रुवा पृथिवी ध्रुवा सचन्द्रतारका द्यौरमृता दिवौकस इति । अशुचौ परमबीभत्से काये शुचिबुद्धिर्यथा नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयतीवेति कस्य केन संबन्धः ।

'स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः' ॥

इति च वैयासिकः श्लोकः । एतेनापुण्ये पुण्यप्रत्ययोऽनर्थे चार्थप्रत्ययो व्याख्यातः । दुःखे सुखख्यातिरुदाहृता 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति । अनात्मन्यात्मख्यातिर्यथा–शरीरे मनुष्योऽहमित्यादिः । इयं चाविद्या सर्वक्लेशमूलभूता तम इत्युच्यते । बुद्धिपुरुषयोरभेदाभिमानोऽस्मिता मोहः । साधनरहितस्यापि सर्वं सुखजातीयं मे भूयादिति विपर्ययविशेषो रागः । स एव महामोहः । दुःखसाधने विद्यमानेऽपि किमपि दुःखं मे मा भूदिति विपर्ययविशेषो द्वेषः । स तामिस्रः । आसुरमात्रेऽप्येतैः शरीरेन्द्रियादिभिरनित्यैरपि वियोगो मे मा भूदित्याविद्वदङ्गनाबालं

स्वाभाविकः सर्वप्राणिसाधारणो मरणत्रासरूपो विपर्ययविशेषोऽभिनिवेशः । सोऽन्धतामिस्रः । तदुक्तं पुराणे —

तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ इति ।

एते च क्लेशाश्चतुरवस्था भवन्ति । तत्रासतोऽनुत्पत्तेरनभिव्यक्तरूपेणावस्थानं सुप्तावस्था । अभिव्यक्तस्यापि सहकार्यलाभात्कार्याजनकत्वं तन्वस्था । अभिव्यक्तस्य जनितकार्यस्यापि केनचिद्बलवताऽभिभवो विच्छेदावस्था । अभिव्यक्तस्य प्राप्तसहकारिसंपत्तेरप्रतिबन्धेन स्वकार्यकरत्वमुदारावस्था । एतादृगवस्थाचतुष्टयविशिष्टानामस्मितादीनां चतुर्णां विपर्ययरूपाणां क्लेशानामविद्यैव सामान्यरूपा क्षेत्रं प्रसवभूमिः, सर्वेषामपि विपर्ययरूपत्वस्य दर्शितत्वात् । तेनाविद्यानिवृत्त्यैव क्लेशानां निवृत्तिरित्यर्थः । ते च क्लेशाः प्रसुप्ता यथा प्रकृतिलीनानां, तनवः प्रतिपक्षभावनया तनूकृता यथा योगिनाम् । त उभयेऽपि सूक्ष्माः प्रतिप्रसवेन मनोनिरोधेनैव निर्बीजसमाधिना हेयाः । ये तु सूक्ष्मवृत्तयस्तत्कार्यभूताः स्थूला विच्छिन्ना उदाराश्च विच्छिद्य विच्छिद्य तेन तेनाऽऽत्मना पुनः प्रादुर्भवन्तीति विच्छिन्नाः, यथा रागकाले क्रोधो विद्यमानोऽपि न प्रादुर्भूत इति विच्छिन्न इत्युच्यते, एवमेकस्यां स्त्रियां चैत्रो रक्त इति नान्यासु विरक्तः किंतु एकस्यां रागो लब्धवृत्तिरन्यासु च भविष्यद्वृत्तिरिति स तदा विच्छिन्न उच्यते, ये यदा विषयेषु लब्धवृत्तयस्ते तदा सर्वात्मना प्रादुर्भूता इति उदारा उच्यन्ते, त उभयेऽप्यतिस्थूलत्वाच्छुद्धसत्त्वभवेन भगवद्ध्यानेन हेया न मनोनिरोधमपेक्षन्ते । निरोधहेयास्तु सूक्ष्मा एव । तथा च परिणामतापसंस्कारदुःखेषु प्रसुप्ततनुविच्छिन्नरूपेण सर्वे क्लेशाः सर्वदा सन्ति । उदारता तु कदाचित्कस्यचिदिति विशेषः । एते च बाधनालक्षणं दुःखमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति । यतः कर्माशयो धर्माधर्माख्यः क्लेशमूलक एव । सति च मूलभूते क्लेशे तस्य कर्माशयस्य विपाकः फलं जन्मायुर्भोगश्चेति । स च कर्माशय इह परत्र च स्वविपाकारम्भकत्वेन दृष्टादृष्टजन्मवेदनीयः । एवं क्लेशसंततिर्घटीयन्त्रवदनिशमावर्तते । अतः समीचीनमुक्तं ‘ ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः ’ इति । दुःखयोनित्वं परिणामादिभिर्गुणवृत्तिविरोधाच्च । आद्यन्तवत्त्वं गुणवृत्तस्य चलत्वादिति योगमते व्याख्या । औपनिषदानां तु अनादिभावरूपमज्ञानमविद्या । अहंकारधर्म्यध्यासोऽस्मिता । रागद्वेषाभिनिवेशास्तद्वृत्तिविशेषा इत्यविद्यामूलत्वात्सर्वेऽप्यविद्यात्मकत्वेन मिथ्याभूता रज्जुभुजंगाध्यासवन्मिथ्यात्वेऽपि दुःखयोनयः स्वप्नादिवद्दृष्टिसृष्टिमात्रत्वेनाऽऽद्यन्तवन्तश्चेति बुधोऽधिष्ठानसाक्षात्कारेण निवृत्तभ्रमस्तेषु न रमते, मृगतृष्णिकास्वरूपज्ञानवानिव तत्रोदकार्थी न प्रवर्तते । न संसारे दुःखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा ततः सर्वाणीन्द्रियाणि निवर्तयेदित्यर्थः ।

विषयेन्द्रियस्पर्शजा ये भोगा दुःखयोनयस्ते दुःखोदर्का आद्यन्तवन्तोऽल्पकालवर्तिनो ह्युपलभ्यन्ते न तेषु तद्याथात्म्यविद्रमते ॥ २२ ॥

---

इत्यनेनाभिप्रेतमौपाधिकत्वं व्यञ्जयति—विषयेन्द्रियस्पर्शजा इति। स्पर्शोऽत्र संबन्धमात्रम्। एतेन सुखस्वरूपस्य क्षुद्रत्वमुक्तम्। दुःखयोनय इत्यत्र तत्पुरुषविवक्षां दर्शयितुम्–दुःखोदर्का इत्युक्तम्। संस्पर्शजत्वात्परलोकेऽपि दुःखयोनित्वं त्वध्यवसानमित्येवकाराभिप्रायः। न खलु हिरण्यगर्भभोगादभ्यधिकः प्राकृतो भोगोऽस्ति। स स्वमानेन शतसंवत्सरपरिमिततया मानुषादिसम इति दर्शयितुम्—अल्पकालवर्तिन इत्युक्तम्। क्षणरुचिबुद्बुदादिष्विवावान्तरस्थितिकालवैषम्यम्, आद्यन्तवत्त्वं त्वविशिष्टमिति भावः। एवं संस्पर्शजा इत्यादिविशेषणत्रयेणाल्पत्वदुःखमिश्रत्वान्तवत्त्वानि दर्शितानि। प्रत्यक्षसिद्धेषु दोषेषु निपुणस्य किमुपदेशापेक्षयेति दर्शयितुम्—उपलभ्यन्त इत्युक्तम्। बुधशब्देनात्र पञ्चविधोपरमोपयुक्तविवेकज्ञानवत्त्वं विवक्षितमिति दर्शयितुम्—तद्याथात्म्यविदित्युक्तम्। न तेषु रमते किं तु क्रमादुपरमत इति भावः। सागरतरणराजसेवादिषु शरीरविनाशपर्यन्ता अर्जनदोषाः। सहस्रप्राकारपरिवृतगर्भगृहे निवेशितस्यापि रक्ष्यवस्तुनो राजदहनचोरमूषिकादयस्तन्निवारणक्लेशादयश्च रक्षणदोषाः।

स्वर्गेऽपि पापभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः।

इत्यादयः क्षयदोषाः।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।
अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता ॥

इत्यादिवदुत्तरोत्तररागप्रबन्धानर्थहेत्वयोग्यविषयप्रवृत्त्यादयो भोगदोषाः। सर्वस्य चास्य प्रायशः परहिंसागर्भत्वात्तदधीना ऐहिकामुष्मिकदुःखसंततयो हिंसादोषाः। पञ्चविधाश्चैते दोषाः प्रत्यक्षादिसिद्धा इति तद्भावनावतां प्राकृतस्यानादिकालशीलितस्यापि सुत्यजत्वं सिद्धमिति भावः। उक्तं च तुष्टिप्रकरणे सांख्यैरपि—बाह्यविषयोपरमाः पञ्चेति ॥ २२ ॥

---

१ क. ख. ग. घ. तेष्वध्यात्मवि°।

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

शरीरविमोक्षणात्प्रागिहैव साधनानुष्ठानदशायामेवाऽऽत्मानुभवप्रीतया कामक्रोधभवं वेगं सोढुं निरोद्धुं यः शक्नोति स युक्त आत्मानुभवायार्हः । एवं शरीरमोक्षणोत्तरकालमात्मानुभवसुखं संपत्स्यते ॥ २३ ॥

योऽन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

---

एवं बाह्यस्पर्शेष्वसक्तस्याऽऽत्मनि सुखं विन्दतः प्राकृतभोगेषु दोषदर्शिनः स्वरसवाहिनीं दशामनुवदंस्तथाभूतस्याऽऽत्मसाक्षात्कारे तदधीनसुखे च योग्यतामाह—शक्नोतीति । आ शरीरपातात्कामक्रोधौ दुर्जयावित्यभिप्रायेणाऽऽह—शरीरविमोक्षणात्प्रागिति । साक्षात्कारदशायां कामक्रोधप्रसङ्गो न विद्यत इति तत्प्रसङ्गनिवारणदशाज्ञापनार्थेनेहैवेत्यनेन साधनानुष्ठानदशोच्यते । विन्दत्यात्मनि यत्सुखमिति पूर्वोक्तहेतुं स्मारयति—आत्मानुभवप्रीत्येति । वेगोऽत्र मनोवाक्कायानामतित्वरिता प्रवृत्तिः । तत्रानुचितविषयाभिध्याननीचचाटुनरपतिशुद्धान्तप्रवेशादयः कामजा वेगाः । परहिंसाद्युपायचिन्तनपरुषभाषणप्रहारादयः क्रोधजा वेगाः । सोढुमित्यस्य तितिक्षार्थत्वव्युदासायोक्तम्—निरोद्धुमिति । शक्नोति शक्तः समुत्सहत इत्यर्थः । युक्तशब्दोऽत्र समाधिलाभपर इत्याह—आत्मानुभवायार्ह इति । प्राक्शरीरविमोक्षणादित्यस्य शरीरानन्तरमेव प्राप्तौ तात्पर्यम् । अन्यथा तद्वचनस्य निष्फलत्वप्रसङ्गादित्यभिप्रायेण—स एव शरीरमोक्षोत्तरकालमित्युक्तम् । सुखमक्षयमश्नुत इत्याद्युक्तफलभूतभविष्यत्सुखयोगोऽत्रापि स सुखीति व्यपदिश्यत इत्यभिप्रायेणाऽऽह—आत्मानुभवैकसुखः संपत्स्यत इति ॥ २३ ॥

एवं परित्यक्तं प्राकृतं भोग्यभोगोपकरणादिकं सर्वमात्मनि तदेकरसिकत्वाय कल्पयन् विन्दत्यात्मनि यत्सुखमित्युक्तमुपायदशास्थं प्रपञ्चयति- योऽन्तःसुख इति श्लोकेन । अन्तःशब्दाभिप्रायं

यो बाह्यविषयानुभवं सर्वं विहायान्तःसुख आत्मानुभवैकसुखोऽन्तराराम आत्मैकाधीनः स्वगुणैरात्मैव सुखवर्धको यस्य स तथोक्तः। तथाऽन्तर्ज्योतिरात्मैकज्ञानो यो वर्तते स ब्रह्मभूतो योगी ब्रह्मनिर्वाणमात्मानुभवसुखं प्राप्नोति ॥ २४ ॥

---

पूर्वोक्तं चानुसंधायोक्तम्—यो बाह्यविषयानुभवं सर्वं विहायेति। अन्तःशब्दोऽत्र बाह्यव्यतिरेकादात्मपरः। आत्मैवाऽऽत्मन्येव वा सुखं यस्य सोऽन्तःसुखः। तत्र फलितोक्तिरात्मानुभवैकसुख इति। अवधारणस्याविशेषेण सर्वत्रान्वयादेकशब्दः। अन्तराराम इत्यस्याभिप्रेतं वक्तुं पदार्थं तावदाह—आत्मैकाधीन इति। आरामो हि भोगस्थानभूतश्छायापल्लवपुष्पफलादिभिः स्वगुणैः सुखवर्धकस्तद्वदत्रापि स्वगुणैरपहतपाप्मत्वज्ञानानन्दादिभिः स्वविषयवादकरणसंवादकरणग्रन्थकरणादिक्रीडोपकरणैरात्मैव सुखवर्धक इत्यारामशब्देनोपचर्यत इत्याह—स्वगुणैरिति। एवं भोग्यं भोगस्थानं चाऽऽत्मैवेत्युक्तम्। अथ भोगोपकरणादिकमपि स एवेत्यन्तर्ज्योतिःशब्देनोच्यत इत्यभिप्रायेणाऽऽह—आत्मैकज्ञानो यो वर्तत इति। अन्येषां हि भोग्यानां स्वरूपादुपकरणस्य भिन्नत्वादुपकरणमपि हि तदर्थतया पृथग्ज्ञातव्यम्। अतस्तेषु तदेकज्ञानत्वं नास्तीति भावः। यद्वा प्रकाशकान्तरनैरपेक्ष्यं बाह्यं प्रकाशाभावमात्रं वाऽत्र विवक्षितम्। पूर्वं शरीराभिमानाद्देवमनुष्यादिभूतो य इदानीं तु तन्निवृत्त्या यथावस्थितासंकुचितज्ञानादिस्वरूपेणावस्थित इति ब्रह्मभूतशब्दाभिप्रायः। ब्रह्मैव निर्वाणमिति वा ब्रह्मणि निर्वाणमिति वा समासार्थमभिप्रयन्नत्र विवक्षितमाह—आत्मानुभवसुखमिति। अत्र निर्वाणशब्दस्य परोक्तं शान्त्यर्थत्वं सुखप्रकरणानौचित्यान्मन्दमिति भावः ॥ २४ ॥

समदर्शित्वरूपज्ञानविपाकसिद्ध्यर्थमनुष्ठानप्रकारो हि न प्रहृष्येदित्यादिनोच्यते। तत्र हर्षोद्वेगविनिवृत्तिर्बाह्यविषयनिःसङ्गत्वं तदर्थदोषदर्शनं कामक्रोधवेगनिवारणमात्मन्येव सर्वविधभोग्यताकल्पनं च क्रमाच्छ्लोकपञ्चकेनोक्तम्। अथ प्रागुक्तद्वंद्वसहत्वादिस्मारणपूर्वकं सर्वभूतहिते रतत्वं नाम समदर्शित्वेऽत्यन्तान्त-

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

छिन्नद्वैधाः शीतोष्णादिद्वंद्वैर्विमुक्ता यतात्मान आत्मन्येव नियमितमनसः सर्वभूतहिते रता आत्मवत्सर्वेषां भूतानां हितेषु निरता ऋषयो द्रष्टार आत्मावलोकनपरा य एवंभूतास्ते क्षीणाशेषात्मप्राप्तिविरोधिकल्मषा ब्रह्मनिर्वाणं लभन्ते ॥ २५ ॥

उक्तगुणानां ब्रह्मात्यन्तसुलभमित्याह—

---

रङ्गं साधनमुपदिश्यते—लभन्त इति श्लोकेन । छिन्नद्वैधा इत्यनेन भेदस्वरूपनिषेधभ्रमव्युदासायाऽऽह—शीतोष्णादिद्वंद्वैर्विमुक्ता इति । द्वैधशब्दस्यात्र संशयाद्यर्थत्वं चानुचितमिति भावः । नियन्तव्येषु प्रधानं मन इहाऽऽत्मशब्देनोच्यते । नियमनं च तस्योचितविषयव्यवस्थापनमित्यभिप्रायेण—आत्मन्येव नियमितमनस इत्युक्तम् ।

श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

इति पञ्चमवेदद्रष्ट्रा परमर्षिणा निर्णीतोऽयमर्थ इति ज्ञापनाय—आत्मवदिति । दृष्टान्तो हितेष्वेवेत्यवधारणं च । सर्वशब्दोऽत्र दृष्टान्तभूतं स्वात्मानमात्मान्तरं च संगृह्णातीति भावः । एवमवस्थितस्य परिशुद्धान्योन्यसदृशात्मस्वरूपसाक्षात्कारवत्त्वमृषिशब्देन विवक्षितमिति ज्ञापनायाऽऽह—द्रष्टार इति । एवंविधसाक्षात्कारसिद्धावनिष्टनिवृत्तीष्टप्राप्तिसिद्धिश्च क्षीणकल्मषा ब्रह्मनिर्वाणं लभन्त इत्युभाभ्यामुच्यत इत्याह—य एवंभूता इति । 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति ज्ञानस्य कल्मषनिवर्तकत्वं प्रागेवोक्तमिह स्मारितम् ॥ २५ ॥

एवं षड्भिः श्लोकैः समदर्शित्वसाधकमनुष्ठानप्रकारमुपदिश्य तत्र शीघ्रप्रवृत्तिसिद्ध्यर्थं फलस्याविलम्बितत्वमनन्तरमुच्यत इत्यभिप्रायेणाऽऽह—उक्तगुणानामिति । कामक्रोधवियुक्तत्वोक्तिः शक्नोतीतिश्लोकार्थानुवादः । क्रोधनिवृत्तस्यैव सर्वभूतहिते रतत्व-

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

कामक्रोधवियुक्तानां यतीनां यतनशीलानां यतचेतसां नियमितमनसां वि × जि(दि)तात्मनां विजितमनसां ब्रह्मनिर्वाणमभितो वर्तते । एवंभूतानां हस्तस्थं ब्रह्मनिर्वाणमित्यर्थः ॥ २६ ॥

उक्तं कर्मयोगं स्वलक्ष्यभूतयोगशिरस्कमुपसंहरति—

---

मिति सूचितम् । यतीनामित्यत्र रूढेरयुक्तत्वात्प्रकृतिप्रत्ययार्थवैशद्याय यतनशीलानामित्युक्तम् । तेन न प्रहृष्येदिति श्लोकार्थोऽनूदितः । यतचेतसामित्येतदात्मन्येव सर्वाकारकल्पनानुवाद इति दर्शयितुम्—नियमितमनसामित्युक्तम् । विजितात्मनामित्यनेन दोषप्रदर्शनेनान्तःकरणावर्जनपरस्य ये हीति श्लोकस्यार्थः सूचित इति प्रदर्शनाय विजितमनसामित्युक्तम् । एवं पुनरुक्तिपराङ्गानाद्विदितात्मनामिति परैः पठितम् । अभितो वर्तत इत्यासन्नकालत्वं विवक्षितमिति दर्शयति—एवंभूतानामिति । हस्तस्थं न तु हस्तोद्धृतदण्डादिग्राह्यफलादिवद्व्यवहितलाभमिति भावः ॥ २६ ॥

ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥

इति संग्रहमनुसंदधान उत्तरश्लोकानां संगतिमाह—उक्तं कर्मयोगमिति । स्पर्शशब्दस्यात्रानुभवपरस्यानुभाव्यार्थज्ञापनाय—

---

× विशिष्टाद्वैतमतानुसारिगीताभाष्यादर्शभूतनिखिलपुस्तकेषु कामक्रोधेत्यादिपद्विंशश्लोकव्याख्यानभाष्ये यतीनां यतनशीलानामित्यादिविवरणसरण्यनुरोधाद्विविक्तमनसामित्यस्य विजितात्मनामितिपदव्याख्यानपरत्वावगमेन विजितात्मनामित्यस्य व्याख्यातव्यत्वनिश्चयाद् व्याख्यातव्यस्य च श्लोकस्थत्वेनापेक्षणाद्विदितात्मनामित्यस्य स्थाने विजितात्मनामिति पाठेन भाष्यकारसंमतेन भाव्यमिति भाति । परंतु रामानुजभाष्ययुक्तकादिचान्तेषु हस्तलिखितपुस्तकेषु शांकरमतानुसारिव्याख्यायुक्तमुद्रितपुस्तकेषु च यथास्थित एव पाठ उपलभ्यते ।

---

१ ख. ग. घ. ङ. च. विविक्तम° ।

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

बाह्यान्विषयस्पर्शान्बहिः कृत्वा बाह्येन्द्रियव्यापारं सर्वमुपसंहृत्य योगयोग्यासन ऋजुकाय उपविश्य चक्षुर्भ्रुवोरन्तरे नासाग्रे विन्यस्य नासाभ्यन्तरचारिणौ प्राणापानौ समौ कृत्वोच्छ्वासनिःश्वासौ समगती कृत्वाऽऽत्मावलोकनादन्यत्रप्रवृत्त्यनर्हेन्द्रियमनोबुद्धिस्तत एव विगतेच्छाभयक्रोधो मोक्षपरायणो मोक्षैकप्रयोजनो मुनिरात्मावलोकनशीलो यः सदा मुक्त एव साध्यदशायामिव साधनदशायामपि मुक्त एव स इत्यर्थः ॥ २७ ॥ २८ ॥

---

विषयस्पर्शानित्युक्तम् । फलितमाह—बाह्येन्द्रियव्यापारं सर्वमुपसंहृत्येति । उपविश्याऽऽसन इतिवक्ष्यमाणानुसंधानेन—योगयोग्येत्याद्युक्तम् । चक्षुरित्येकवचनं करणाकारैक्यादिति दर्शयितुं–चक्षुषी इत्युक्तम् । संप्रेक्ष्य नासिकाग्रं स्वमिति वक्ष्यमाणेन नासाग्रन्यस्तलोचन इत्यादिप्रकरणान्तरोक्त्या च भ्रुवोरन्तरे कृत्वेत्यस्यैकार्थ्यमाह– नासाग्र इति । नासाभ्यन्तरचारमात्रस्य स्वतः सिद्धस्य विधेयत्वायोगात्समौ कृत्वेत्येतदेव विधेयमिति दर्शयितुं–नासाभ्यन्तरचारिणौ प्राणापानावित्यनुवादः । अपानस्य नासाभ्यन्तरसंचारव्यञ्जनाय—उच्छ्वासनिःश्वासावित्युक्तम् । एक एव हि वायुर्नासापुटेन निष्क्रामन्प्रविशंश्च प्राणोऽपान इति चोच्यते । वृत्तिस्थानादिसाम्यायोगात्तद्वृत्तिसाम्योक्तिः । न दीर्घमुच्छ्वसन्नापि निःश्वसन्नित्यर्थः । साक्षात्कारात्यन्ताव्यवहितपूर्वावस्थाविषयत्वाद्यतशब्दस्य प्रवृत्त्यनर्हेत्यर्थ उक्तः । स्पर्शान्कृत्वा बहिर्बाह्यानित्यत्र प्रवृत्तिनिवारणं यतेन्द्रियेत्यादौ तु तत्फलभूता प्रवृत्त्यनर्हतेत्यपुनरुक्तिरिति भावः । ज्ञानार्थे धातौ विःनिष्पन्नस्य मुनिशब्दस्य योगावस्थायामात्मसाक्षात्काररूपज्ञानविशेषतात्पर्यमाह—आत्मावलोकनशील इति । अत्र वाचंयमत्वादप्यन्तरङ्गभूतोऽयमर्थ इति भावः । सदाशब्दाभिप्रेतं व्यनक्ति—साध्यदशायामिवेति । मुक्त एव मुक्तप्राय इत्यर्थः ॥ २७ ॥ २८ ॥

उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगाशिरस्कस्य सुशक्यतामाह–

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं मां ज्ञात्वा शान्तिमृच्छति कर्मयोगकरण एव सुखमृच्छति। सर्वलोकमहेश्वरं सर्वेषां लोकेश्वराणामपीश्वरम्। 'तमीश्वराणां परमं महेश्वरम्' इति

---

अध्यायारम्भे संन्यासं कर्मणां कृष्णेत्यादिना वैषम्ये पृष्टे ज्ञानयोगस्य दुष्करत्वादिकं कर्मयोगस्य सौकर्यं शैघ्र्यं चोक्तम्। ततश्च सेतिकर्तव्यताकसशिरस्ककर्मयोगो विशदीकृतः। अथात्रोपसंहारेऽपि प्रश्नप्रत्युत्तरतया प्रक्रान्तसौकर्यादिकमेव प्रकारान्तरेण स्थिरी क्रियत इत्यभिप्रायेणाऽऽह—उक्तस्येति। अत्र कर्मयोगशब्देन दैवमेवेत्याद्युक्तप्रातिस्विकप्रधानांशो गृहीतः। नित्यनैमित्तिककर्मेतिकर्तव्यताकस्येत्यनेन सर्वकर्मयोगभेदनिष्ठानां ज्ञानयोगभक्तियोगनिष्ठानां चावर्जनीयः साधारणांशः सुशकत्वमनिर्वेदेन प्रवृत्तिविषयत्वम्। शान्तिशब्दोऽत्र न भगवत्प्राप्तिरूपमोक्षपरः। जीवोपासनप्रकरणत्वात्। नापि कर्मयोगसाध्यफलपरः। ततोऽप्युपयुक्तस्य प्रसिद्धस्वारस्यानुरोधिनः कर्माङ्गोपशमस्य वक्तुमुचितत्वात्। ज्ञात्वेत्यत्रानुष्ठायेत्यध्याहारसापेक्षत्वप्रसङ्गात्। अतः 'सुखं बन्धात्प्रमुच्यते' इत्यादिनोक्तं मनःक्लेशशान्त्यादिरूपं सुखमत्र शान्तिशब्देन विवक्षितमित्यभिप्रायेणाऽऽह–कर्मयोगकरणक्षण एव सुखमृच्छतीति। भगवत्समानाधिकरणतया सर्वलोकप्रतिसंबन्धितया च महेश्वरशब्दस्यात्र न रूढिविशेषेण वृत्तिरित्याह—सर्वेषां लोकेश्वराणामपीति। सर्वेषां लोकानां महान्तमीश्वरमित्येव तु समासार्थः। तत्र प्रमाणमाह—तमीश्वराणामिति। श्रुतावपि महेश्वरशब्दः सप्रतिसंबन्धिकत्वात्परमतत्त्वविशेष-

श्रुतेः । मां सर्वलोकमहेश्वरं सर्वसुहृदं ज्ञात्वा मदाराधनरूपः कर्मयोग[1] इति सुखेन[3] तत्र प्रवर्तत इत्यर्थः । सुहृदमाराधनाय सर्वे प्रवर्तन्ते ॥ २९ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

णत्वाच्च न रुद्रस्तद्वदत्रापि सर्वशब्दासंकोचान्महत्त्वविशेषणाच्च रुद्रादिलोकेश्वरान्तरव्यवच्छेद उक्तः । सर्वेश्वरेश्वरः कृष्ण इति हि स्मर्यते । कर्मयोगस्य दुःखरूपस्यानुष्ठानदशायामेव कथं सुखमिति शङ्कां विशेषणत्रयेण व्युदस्यति—मामित्यादिना । महोदारसार्वभौमप्रियसरससेवायामिव कर्मयोगे सुखबुद्ध्यैव प्रवर्तत इति भावः । मदाराधनरूपः कर्मयोग इत्यनेन भोक्तारं यज्ञतपसामित्यस्यार्थो विवृतः । यज्ञस्तपांसि च कर्मयोगवर्गोपलक्षणमिति भावः । सौहार्दस्य प्रयोजनान्तरनिरपेक्षसमाराधनहेतुत्वे लोकदृष्टान्तमाह—सुहृदामिति । सर्व इति । न केवलं शास्त्रनिष्ठाः किंतु पामरास्तिर्यञ्चोऽपि स्वेषु सौहार्दवन्तं पुरुषमिङ्गिताकारैरुपलक्ष्य तावन्मात्रेण संप्रीतास्तदनुवर्तनमतिप्रयत्नेन कुर्वन्तीत्यर्थः । पुरुषान्तरवदैश्वर्यमदगर्वमूलदौर्मुख्यादिवर्जनं चास्य सुहृत्त्वेन लभ्यते ॥ २९ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतौ श्रीमद्रामानुजविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां पञ्चमोऽध्यायः ॥ ५ ॥

---

१ ख. ग. ङ. °रूपे क°। २ ख. ग. ङ. °न प्रवृ°। ३ ख. ग. ङ. °न प्र°।

## अथ षष्ठोऽध्यायः ।

उक्तः कर्मयोगः सपरिकरः। इदानीं ज्ञानयोगसाध्यात्मावलोकन-रूपयोगाभ्यासविधिरुच्यते। तत्र कर्मयोगस्य निरपेक्षयोगसाधनत्वं द्रष्टयितुं ज्ञानाकारः कर्मयोगो योगशिरस्कः प्रदर्श्यते–

श्रीभगवानुवाच––

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥

कर्मफलं स्वर्गादिकमनाश्रितः कार्यं कर्मानुष्ठानमेव कार्यं सर्वात्मनाऽस्मत्सुहृद्भूतपरमपुरुषाराधनरूपतया कर्मैव मम प्रयोजनं तत्साध्यं न

---

षष्ठाध्यायोपक्रमस्य पूर्वोक्तार्थानुवादरूपतां दर्शयितुं पूर्वेणाविच्छिन्नानुसंधानार्थमध्यायसंगतिवचनात्पूर्वमेव व्याख्येयोपादानं वृत्तवर्तिष्यमाणाभिधानमुखेन संगतिं दर्शयति––उक्त इति। कर्मयोग उक्तः, तत्साध्यतयोपक्षिप्तः समाधिलक्षणो योग एवात्र सानुबन्धं प्रतिपाद्यत इति संगतिः । योगाभ्यासविधिरुच्यत इति ।

'योगाभ्यासविधिर्योगी चतुर्धा योगसाधनम् ।
योगसिद्धिः स्वयोगस्य पारम्यं षष्ठ उच्यते' ॥

इति संग्रहश्लोके प्रथमं योगाभ्यासविधेरुपादानादन्येषां च तदर्थत्वात्स एवाध्यायप्रधानार्थतया संगृहीत इति भावः॥ अनाश्रित इत्यादीनां समबुद्धिर्विशिष्यत इत्यन्तानां नवानां श्लोकानां प्रागुक्तानधिकार्थत्वान्निष्प्रयोजनत्वमाशङ्क्याऽऽह––तत्रेति। अभ्यासो हि तात्पर्यलिङ्गम् । अव्यवहितनिर्देशश्च नैरपेक्ष्यं सूचयेदिति भावः। ज्ञानाकारो योगशिरस्क इति पदाभ्यां साध्यस्य प्रागुक्तमन्तर्गतात्मज्ञानत्वादिलक्षणं पौष्कल्यं साध्यस्याऽऽत्मावलोकनस्याव्यवहितत्वाभिमतम् । अनाश्रित इति श्लोकेन पूर्वार्धेन ज्ञानाकारकर्मयोगानुवादः। उत्तरार्धे नैरपेक्ष्यदृढीकरणम् भोक्तारं यज्ञतपसामित्य[त्र]वहितपूर्वश्लोकालोचनया—सर्वात्मनाऽस्मत्सुहृद्भूतेत्यादिकमुक्तम् । ततश्च कर्मफलपदानाश्रित इत्युक्ते

किंचिदिति यः कर्म करोति स संन्यासी च ज्ञानयोगनिष्ठश्च योगी च कर्मयोगनिष्ठश्च । आत्मावलोकनरूपयोगसाधनभूतोभयनिष्ठ इत्यर्थः । न निरग्निर्न चाक्रियः । न चोदितयज्ञादिकर्मस्वप्रवृत्तो न केवलं ज्ञाननिष्ठः । तस्य हि ज्ञाननिष्ठैव । कर्मयोगनिष्ठस्य तूभयमस्तीत्यभिप्रायः ॥ १ ॥

उक्तलक्षणे कर्मयोगे ज्ञानमप्यस्तीत्याह—

यं संन्यास इति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

---

निष्फलप्रवृत्तिः स्यादिति शङ्कायां कर्मस्वरूपफलत्वस्य वक्तुमुचितत्वात्कार्यशब्दः प्रयोजनविषय इति दर्शयितुं—कर्मानुष्ठानमेव कार्यमिति व्यक्तिर्दर्शिता । कार्यशब्दस्य चोदितविषयत्वे मन्दप्रयोजनं स्यादिति भावः । ननु कर्मयोगनिष्ठमनूद्य तस्यैव ज्ञानयोगनिष्ठत्वं कर्मयोगनिष्ठत्वं च विधातुमयुक्तम् । प्रथमे विरोधात्, द्वितीये तूद्देश्योपादेयाविभागपौनरुक्त्यनिष्प्रयोजनत्वेभ्य इति शङ्कायामाह—आत्मावलोकनेति । पृथक्साधनभूतोभयसाध्यं फलमनेन लब्धमित्युभयनिष्ठत्वमुपचारादुच्यते । ततश्च कर्मयोगस्य निरपेक्षसाधनत्वं विवक्षितमिति भावः । यद्वा कर्मयोगांशभूतज्ञानक्रियाभेदेन परिहार इति भावः । अग्निशब्दस्यात्राग्निसंबन्धिलक्षकत्वव्यञ्जनाय—यज्ञादिशब्दः । लक्ष्यार्थानां संग्राहकं चोदितत्वम् । निरग्निरित्यनेनैव कर्मनिवृत्तेरुक्तत्वात्, अक्रियशब्दः क्रियानिवृत्तिमुखेन क्रियाव्यतिरिक्तनिष्ठत्वलक्षकः । व्यतिरिक्तश्चात्राऽऽसन्नो ज्ञानयोग इति दर्शयितुम्—केवलज्ञाननिष्ठ इत्युक्तम् । यद्वा न निरग्निर्नचाक्रिय इत्युभाभ्यां श्रौतस्मार्तक्रियाविशेषनिषेधात्ताभ्यां फलितमाह—न चोदितेत्यादि । तदभिप्रेतमाह—केवलज्ञाननिष्ठ इति । अनग्निरनिकेतः स्यात्, त्यक्त्वा द्रव्याग्निसाध्यानि कर्माणीत्यादिप्रतिपादितसंन्यासाश्रमव्यवच्छेद इहासंगत इति भावः ॥ १ ॥

संन्यासमनूद्य योगत्वे विधीयमाने ज्ञानयोगे कर्मयोगसद्भावप्रतिपादनभ्रमः स्यात्तच्च न ह्यसंन्यस्तेत्युपपादनविरुद्धमत्रानुप-

---

१ ख. ग. घ. ङ. च. °नसा° । २ ङ. °रूमिति ।

यं संन्या×स इति । ज्ञानयोग इति आत्मयाथात्म्यज्ञानविदः प्राहुस्तं कर्मयोगमेव विद्धि । तदुपपादयति न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चनेति । आत्मयाथात्म्यानुसंधानेनानात्मनि प्रकृतावात्मसंकल्पः संन्यस्तः परित्यक्तो येन स संन्यस्तसंकल्पः । अनेवंभूतो यः सोऽसंन्यस्तसंकल्पः । न ह्युक्तेषु कर्मयोगेष्वनेवंभूतः कश्चन कर्मयोगी भवति 'यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः' इत्युक्तं हि ॥ २ ॥

कर्मयोग एवाप्रमादेन योगं साधयतीत्याह—

युक्तं चेत्यभिप्रायेणाऽऽह—उक्तलक्षण इति । योगोद्देशेन संन्यासत्वविधिपरं वाक्यमित्यर्थः । संन्यासस्याभिप्रेतं वक्तुं प्राकरणिकं वाच्यं तावदाह–ज्ञानयोग इति । अत्र तदभिप्रेतमाह–आत्मयाथात्म्यज्ञानमिति । समुदायवाचकः शब्दस्तदंशेऽपि प्रयुज्यत इति भावः । तं कर्मयोगं विद्धीति । कर्मयोगान्तर्गतमेव विद्धीत्यर्थः । आत्मयाथात्म्येत्यादि । अयमभिप्रायः—संकल्पशब्दो न तावदत्र कुर्यामिति संकल्पविषयः । तदभावे च कर्मकरणस्यैवाशक्यत्वात् । नापि फलाभिसंधिविषयः । तथात्वेऽपि कर्मयोगे ज्ञानान्तर्भावप्रतिज्ञाया उपपादकत्वासिद्धेः । अत एव—

संकल्पमूलः कामो हि यज्ञाः संकल्पसंभवाः ।

इत्यादिस्मृतिपठितकामस्य कर्मणां च हेतुः संकल्पोऽत्र न विवक्षितः । तस्मादेकीकृत्य कल्पोऽत्र संकल्पः । स चात्र देहात्मगोचरः । तत्परित्यागश्च तत्त्वज्ञानात् । एवं सत्येव नहीत्यादेरुक्तोपपादकत्वमुपपद्यते । कश्चनेति निर्देशः प्रागुक्तकर्मयोगनिष्ठवैविध्यसूचक इत्यभिप्रायेण—उक्तेषु कर्मयोगेष्वित्युक्तम् । सिद्धो ह्यत्रोपपादको भवति । तत्सिद्धिरत्र कुत इत्याकाङ्क्षायां हिशब्दाभिप्रेतमाह—यस्येति ॥ २ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इत्यत्र विशेषविधिः शेषनिषेधपर इत्यभिप्रायेणाऽऽह–कर्मयोग एवेति । कर्मयोगमात्र-

× कांदिचान्तेषु सर्वपुस्तकेषु भाष्ये संन्यास इतीत्युपादानादेतच्छ्लोके यं संन्यास इति, इत्येव पाठेन रामानुजाचार्यसंमतेन भाव्यमित्यनुमीयते न तु 'यं संन्यासमिति' इत्यनेन ।

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

योगमात्मावलोकनं प्राप्तुमिच्छोर्मुमुक्षोः कर्मयोग एव कारणमुच्यते । तस्यैव योगारूढस्य प्रतिष्ठितयोगस्यैव शमः कर्मनिवृत्तिः कारणमुच्यते । यावदात्मावलोकनरूपमोक्षप्राप्तिस्तावत्कर्म कार्यमित्यर्थः ॥ ३ ॥

कदा प्रतिष्ठितयोगो भवतीत्यत्राऽऽह—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

यदाऽयं योगी स्वात्मैकानुभवस्वभावतयेन्द्रियार्थेष्वात्मव्यतिरिक्त-

---

साध्यो हि योगो न परमात्मावलोकनमित्यभिप्रायेणाऽऽह—आत्मावलोकनमिति । आ मोक्षाद्यत्किंचित्कर्म कर्तव्यमित्यभिप्रायेणाऽऽह—मुमुक्षोरिति । आत्मावलोकनस्यात्र मोक्षकल्पनया मोक्षशब्दोपचारः । योगारूढस्येति । युक्तावस्थाविषयत्वभ्रमव्युदासाय—प्रतिष्ठितयोगस्येत्युक्तम् । कर्म कारणमित्युक्तकर्मप्रतियोगिकसमस्तनिवृत्तिरेवात्र भवितुमर्हतीत्यभिप्रायेण शमः कर्मनिवृत्तिरित्युक्तम् । एतेन मुनिरित्यत्र परिव्राजकः शमश्च पारिव्राज्यरूप इति परोक्तं निरस्तम् । ननु प्रतिष्ठितयोगस्य किं कारणापेक्षया नह्यन्यदस्य कार्यमस्तीति शङ्कायां योगारूढस्येत्यादिना कर्मनिवृत्तिविधानं ततः पूर्वमनिवृत्त्यभिप्रायमिति दर्शयति—यावदिति ॥ ३ ॥

संगमयति—कदेति । अयं योगी त्विति । यावदात्मावलोकनं कर्मयोगे वर्तमान इति भावः । अर्थसिद्धं हेतुमाह—आत्मैकानुभवस्वभावतयेति । अनित्यत्वहेयत्वादिसूचनाय—प्राकृतशब्दः । कर्मस्विति न चोदितकर्ममात्रविषयम्, वैदिकस्य तत्र निःसङ्गत्वायोगात् । अतो यो हि यदिच्छति तस्य तस्मिंस्तत्साधने वा कार्यताबुद्धिरिति न्यायादिन्द्रियार्थेषु सङ्गिनां तदुपायभूतेषु विहितेषु निषिद्धेष्वनुभवेषु च कर्मसु यथासंभवं सङ्गः स्यादिति तन्नि-

प्राकृतविषयेषु तत्संबन्धिषु कर्मसु च नानुषज्जते न सङ्गमर्हति तदा हि सर्वसंकल्पसंन्यासी योगारूढ इत्युच्यते । तस्मादारुरुक्षोर्विषयानुभवार्हतया तदनुषङ्गाभ्यासरूपः कर्मयोग एव निष्पत्तिकारणम् । अतो विषयानुषङ्गाभ्यासरूपं कर्मयोगमेवाऽऽरुरुक्षुः कुर्यात् ॥ ४ ॥

तदेवाऽऽह—

उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

आत्मना मनसा विषयाननुषक्तेन मनसाऽऽत्मानमुद्धरेत् । तद्विपरीतेन मनसाऽऽत्मानं नावसादयेत् । आत्मैव मन एव ह्यात्मनो बन्धुस्तदेवाऽऽत्मनो रिपुः ॥ ५ ॥

बन्धुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ॥ ६ ॥

---

पेक्ष एवोचित इत्यभिप्रायेण—तत्संबन्धिषु कर्मस्वित्युक्तम् । सङ्गं त्यजति निवर्तयतीत्यादिषु प्रयोगेषु जायमानस्य सङ्गस्य बलान्निवर्तनं प्रतीयते । अत्र तु नानुषज्जत इत्युक्तम् । सङ्गः स्वयमेव न जायत इत्यर्थः । ततः फलितमाह—न सङ्गमर्हतीति । हिशब्दस्य वाक्यार्थान्वयौचित्यात्तर्हीं युक्तम् । तदा ह्यसौ सर्वसंकल्पसंन्यासयोगारूढो भवति न तु सङ्गकाल इति भावः । व्याख्यातश्लोकद्वयतात्पर्यार्थमाह—तस्मादिति । इष्टकारणत्वोपदेशो हि तत्र प्रवृत्त्यर्थ इति तात्पर्येणाऽऽह—अत इति ॥ ४ ॥

श्लोकद्वयाभिप्रेतमर्थं विवृणोतीत्याह—तदेवाऽऽहेति । आत्मनेत्यस्य कारणार्थत्वौचित्यात्—मनसेत्युक्तम् । विषयाननुषक्तेन तद्विपरीतेनेत्युभयं क्रियाद्वयसामर्थ्यात्पूर्वोत्तरानुसंधानाच्चोक्तम् । उद्धरेत्—योगारूढतापादनेन संसारसमुद्रादुत्तारयेदित्यर्थः । आत्मोद्धरणात्मावसादयोर्द्वयोरपि मनसो हेतुत्वं प्रपञ्च्यते—आत्मैवेति । अन्ये बन्धवोऽपवर्गविरोधित्वादबन्धवः, अन्ये च रिपव आत्मप्रवृत्तिमूला इत्यवधारणाभिप्रायः ॥ ५ ॥

एकस्यैवैकं प्रति बन्धुत्वं रिपुत्वं च व्याहतमिति शङ्का परिहि-

येन पुरुषेण स्वेनैव स्वमनो विषयेभ्यो विजितं तन्मनस्तस्य बन्धुः। अनात्मनोऽजितमनसः स्वकीयमेव मनः स्वस्य शत्रुवच्छत्रुत्वे वर्तेत। स्वनिःश्रेयसविपरीते वर्तेतेत्यर्थः। यथोक्तं भगवता पराशरेणापि–

मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः॥ इति॥ ६॥

योगारम्भयोग्यावस्थोच्यते—

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः॥ ७॥**

शीतोष्णसुखदुःखेषु मानापमानयोश्च जितात्मनो जितमनसो विका-

---

यते- बन्धुरात्मेति श्लोकेन। स्वेनैवेति। स्वात्मनेत्यर्थः। मनसो विजयो नाम विषयेभ्यो व्यावर्तनमित्यभिप्रायेणोक्तम्—विषयेभ्यो विजितमिति। बन्धुत्वोपपादनं हि मनसो विजयेनोक्तम्। शत्रुत्वोपपादनमपि हि तदभावेनेत्यभिप्रायेणोक्तम्—अनात्मनोऽजितमनस इति। आत्मैवेत्येवकाराभिप्रेतमाह—स्वकीयमेव मन इति। स्वशेषभूतमेव हि विरोध (धि) संजातमिति भावः। शत्रुशब्दयोः पुनरुक्तिभ्रमव्युदासायान्वयमाह—शत्रुवच्छत्रुत्वे वर्तेतेति। संप्रतिपन्नो बाह्यशत्रुरिह दृष्टान्तितः। शत्रुकृत्यमिह शत्रुत्वं विवक्षितमित्याह—स्वनिःश्रेयसविपरीत इति। नन्वात्मनेत्यादीनां मनोविषयत्वं कथं कार्यकारणसंघातविषयत्वं हि परैरुक्तमैकरूप्येण सर्वेषामात्मशब्दानां स्वात्मविषयत्वं किं न स्यात्, कथं च मनसो जयादिर्विषयव्यावर्तनादिरूप इति शङ्कायां कर्मकर्त्रादिभेदव्यपदेशौचित्यात्पूर्वोत्तरानुसंधानाच्च सिद्धमेवार्थं संवादेन द्रढयति—यथोक्तमिति॥६॥

प्रतिष्ठितयोगत्वावस्था तदारोहणोपायश्चोक्तौ। अथ योगप्रक्रियां वक्तुं तदारम्भदशा ज्ञाप्यत इत्याह—योगारम्भेति। सप्तम्याः समाहित इत्यनेनान्वयभ्रमव्युदासायान्वयं पदार्थांश्च व्यञ्जयति—शीतोष्णेति। एतेन मानापमानयोः समस्येति परोक्ताध्याहारोऽनपेक्षित इति दर्शितम्। शीतादिद्वंद्वेष्वनुभूयमानेषु कथं

ररहितमनसः प्रशान्तस्य मनसि परमात्मा समाहितः सम्यगाहितः स्वरूपेणावस्थितः। प्रत्यगात्माऽत्र परमात्मेत्युच्यते तस्यैव प्रकृतत्वात्तस्यापि पूर्वपूर्वावस्थापेक्षया परमात्मत्वात्। आत्मा परं समाहित इति वा संबन्धः ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

ज्ञानविज्ञानतृप्तात्माऽऽत्मस्वरूपविषयेण ज्ञानेन तस्य च प्रकृतिविसजा-

---

मनसो विजय इत्यत्राऽऽह—विकाररहितमनस इति। विकारश्च हर्षोद्रेकादिरूपः प्रागुक्तः। प्रशान्तस्येत्येतद्बाह्येन्द्रियव्यापारनिवृत्तिपरम्। मनोविकारनिवृत्तेरुक्तत्वात्। संनिहितफलाभिसंध्यादिराहित्यपरं वा। समाहित इत्यस्याऽऽकाङ्क्षितं प्रकृतमुचितं चाधिकरणमाह—मनसीति। सम्यगाहित इति। विशदानुसंधानयोग्यो जात इत्यर्थः। जीवात्मप्रकरणे परमात्मा कथमुच्यत इत्यत्राऽऽह—स्वरूपेणेति। अत्रेति प्रकरणौचित्यसूचनम्। तदेव दर्शयति—तस्यैवेति। एवकारेण प्रासङ्गिको हि पूर्वं परमात्मप्रसङ्ग इति ज्ञापितम्। अपरस्य जीवस्य परमात्मविषयत्वं कथमित्यत्राऽऽह—तस्यापीति। तथाऽपि परमात्मशब्दस्य प्रसिद्धार्थः परित्यक्तः स्यात्। परत्वं च संकुचितम्। परमशब्दनिर्वचनं च न घटते। परो माऽस्मादिति हि तत्। न च पूर्वावस्थापेक्षया परो माऽस्मादित्यन्वयः सिध्यतीत्यरुचेरन्वयान्तरमाह—आत्मा परमिति। अत्र चाधिकं केवलमिति वा परशब्दार्थः ॥ ७ ॥

इन्द्रियविजयो द्वंद्वसहत्वं चोक्तम्। अथ तयोर्हेतुरुच्यते—ज्ञानेति श्लोकेन। ज्ञानविज्ञानशब्दयोः पौनरुक्त्यव्युदासायोपसर्गद्योतितं विषयविशेषं व्यञ्जयति—आत्मस्वरूपेत्यादिना। पारलौकिकसमस्तकर्मापेक्षितदेहादिव्यतिरिक्तत्वधीरिह ज्ञानम्। मोक्षाधिकारिणो विशेषतोऽपेक्षितनित्यत्वनिरतिशयानन्दत्वधीस्तु विज्ञानम्। न पुनरुपासनरूपज्ञानं तत्सामग्रीपरत्वाद्वाक्यस्येति भावः। कूटे तिष्ठतीति कूटस्थः। कूटशब्दश्च परिशुद्धात्मन्यौपचारिकः।

सीयाकारविपर्ययेण विज्ञानेन च तृप्तमनाः कूटस्थो देवाद्यवस्थास्वनुवर्तमानः सर्वसाधारणज्ञानैकाकारात्मनि स्थितस्तत एव विजितेन्द्रियः समलोष्टाश्मकाञ्चनः प्रकृतिविविक्तस्वरूपनिष्ठतया प्राकृतवस्तुविशेषेषु भोग्यत्वाभावाल्लोष्टाश्मकाञ्चनेषु समप्रयोजनो यः कर्मयोगी स युक्त इत्युच्यते। आत्मावलोकनरूपयोगाभ्यासार्ह इत्युच्यते ॥ ८ ॥

तथा च—

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

---

कूटस्य ह्यागन्तुकविनश्वरायःपिण्डादिसंश्लेषप्रवाहे वर्तमाने स्वस्वरूपे न शैथिल्यादिरूपो विकारस्तद्वदत्रापि देवादिशरीरसंश्लेषविश्लेषरूपावस्थाप्रवाहेऽपि न जायते म्रियत इत्यादिनोक्तप्रकारेण निर्विकारत्वं सिद्धमिति कूटशब्देनोपचारो युज्यत इत्यभिप्रायेणाऽऽह—देवादीति । शिखरपर्यायकूटविवक्षया वोपचारः। कूटस्थ इव वा साधारणस्तथाऽनुसंधानादसौ कूटस्थ इत्यभिप्रायेणाऽऽह—देवाद्यवस्थास्विति। देवशब्दोऽत्र भावप्रधानः। अनुवर्तमानत्वात्सर्वसाधारणत्वमित्यपौनरुक्त्यम् । यद्वा सर्वात्मसाधारणेत्यर्थः । पूर्वश्लोकोक्तजितेन्द्रियत्वादौ हेतुरयमुक्त इत्याह—तत एवेति । स्वरूपकार्यकारणादिभिरत्यन्तविषमाणां लोष्टादीनां समत्वं कथमित्यतिशङ्कानिराकरणाय—प्रकृतीत्यादि समप्रयोजन इत्यन्तमुक्तम्। लोष्टाश्मभेदवदश्मकाञ्चनभेदेऽपीत्यनेकदृष्टान्ताभिप्रायः। अत्रोद्देश्योपादेयांशौ विभजते—य इत्यादिना। युक्तशब्द एवात्र योगपर्यायः। प्रकरणवशात्तु योगाभ्यासत्वं सिद्धम् । यद्वा प्रकृतिप्रत्ययार्थभेदविवक्षया—योगाभ्यासार्ह इत्युक्तम् ॥ ८ ॥

समलोष्टाश्मकाञ्चन इति अचेतनेषूक्त एवार्थश्चेतनविषयतया प्रपञ्च्यत इत्यभिप्रायेणाऽऽह—तथा चेति । यद्वा सुहृदादिषु समबुद्धित्वस्य दुष्करत्वादत्र विशिष्यत इत्युक्तेश्च समदर्शित्वातिशयोऽत्र विवक्षितः। तथा च-अपि चेत्यर्थः। सुहृन्मित्रबन्धु-

वयोविशेषानङ्गीकारेण स्वहितैषिणः सुहृदः। सवयसो हितैषिणो मित्राणि। अरयो निमित्ततोऽनर्थेच्छवः। उभयहेतुत्वाभावादुभयरहिता उदासीनाः। जन्मत एवोभयरहिता मध्यस्थाः। जन्मत एवानिष्टेच्छवो द्वेष्याः। जन्मत एव हितैषिणो बन्धवः। साधवो धर्मशीलाः। पापाः पापशीलाः। आत्मैकप्रयोजनतया सुहृन्मित्रादिभिः प्रयोजनाभावाद्विरो-

---

शब्दानामरिद्वेष्यशब्दयोरुदासीनमध्यस्थशब्दयोश्च पौनरुक्त्यमपाकर्तुं तत्तत्पदव्याख्या। बन्धुशब्दस्तावत्पित्रादिषु प्रसिद्धो मित्रशब्दश्च सवयसि, अतः पारिशेष्यात्सुहृच्छब्दस्तदुभयव्यतिरिक्तविषय इत्यभिप्रायेणाऽऽह—वयोविशेषानङ्गीकारेणेति। सवयस इत्यनेन मित्राणां क्रीडादिरूपप्रियैषित्वमप्यस्तीति सूचितम्। बन्धुशब्दात्सत्तेर्द्वेष्यस्तावत्सहजशत्रुविषयः प्राप्तस्ततोऽत्रापि पारिशेष्याद्दरिशब्दं कृत्रिमशत्रुविषयमाह—अरयो निमित्ततोऽनर्थेच्छव इति। मध्यस्थशब्दोऽपि द्वेष्यबन्धुशब्दासत्तेर्हेतुतो हिताहितप्रवृत्तियोग्येषु प्रयोगाभावाच्च जन्मत एवोभयरहितविषय उचितः, परिशेषादौदासीन्यस्य प्रवृत्तिप्रतिसंबन्धिकत्वेन तत्स्मारकत्वात् कारणागमे हिताहितप्रवृत्तियोग्यास्तदभावमात्रेण तद्रहिता उदासीना इत्यभिप्रायेणाऽऽह—उभयेति। उभयं हितैषित्वमहितैषित्वं च। जन्मतः संबन्धिनो बन्धव इत्येतावन्मात्रस्य दुर्योधनादिष्वतिव्याप्तेर्जन्मत एव हितैषिणो बन्धव इत्युक्तम्। एवं संगतिसंबन्धिनः पुरुषा उक्ताः। अथ साधारण्येन श्लाघ्यत्वनिन्द्यत्वाभ्याश्रयाः पुरुषाः साधुपापशब्दाभ्यामभिधीयन्त इत्यभिप्रायेणाऽऽह—साधव इति। वाक्यार्थमाह—आत्मैकेति। सुहृदादिभिः प्रयोजनाभावादितरैर्विरोधाभावाच्चेत्यर्थः। ननु युक्तं नाम सुहृदादिषु समबुद्धित्वं न तु साधुषु पापेषु च योगिनां समप्रयोजनत्वम्। सत्सङ्गादेरसत्परित्यागादेश्च ज्ञानवृद्धिहेतुत्वेन तेषामवश्यापेक्षितत्वात्। उच्यते—नेदानीमुपजीवकदशापन्नो योगी निर्दिश्यते, किंतु श्रुतसकलश्रोतव्यः कृतसकलकर्तव्यः साक्षात्कारात्यन्तयोगदशापन्नः। तथाविधस्य च तस्य साधुभिः पापैश्च प्रयोजनाभावः समः। केवलं योगोपयुक्तरहस्यस्थानादेरेवोपादे-

धाभावाच्च तेषु समबुद्धिर्योगाभ्यासार्हत्वे विशिष्यते ॥ ९ ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

योगि उक्तप्रकारकर्मयोगनिष्ठः सततमहरहर्योगकाल आत्मानं युञ्जीत युक्तं कुर्वीत स्वदर्शननिष्ठं कुर्वीतेत्यर्थः । रहसि जनवर्जिते निःशब्दे देशे स्थित एकाकी तत्रापि न सद्वितीयस्तत्रापि यतचित्तात्मा

---

यत्वादिति भावः । योगाभ्यासदशा हि प्रागप्युक्ता । इयं तु तत्र काष्ठां प्राप्ताऽवस्थेति विशिष्यत इत्यस्य भावः । तदाह—योगाभ्यासार्हत्वे विशिष्यत इति । अत्र विमुच्यत इति परैः पठितात्पाठविकल्पादयमेव पाठ उचित इति भावः ॥ ९ ॥

अथाध्यायप्रधानभूतयोगाभ्यासविधिरुच्यते—योगी युञ्जीतेत्यादिना । युञ्जीतेति साक्षात्काररूपस्य योगस्य विधीयमानत्वाद्योगीत्यनेन कर्मयोगनिष्ठत्वानुवादः क्रियत इत्यभिप्रायेणाऽऽह—उक्तप्रकारेति । सततमित्येतन्न सर्वकालविषयम् । तथा योगशास्त्रैरभिहितत्वादशक्यत्वाच्च । प्रतिदिवसं योगयोग्यतया विहितस[ म ]त्वोत्तरकालसामस्त्यपरमित्यभिप्रायेणाऽऽह—अहरहर्योगकाल इति । युञ्जीतेत्यत्र विवक्षितमर्थं वक्तुं प्रकृतिप्रत्ययार्थभेदं दर्शयति—युक्तं कुर्वीतेति । तत्र युज समाधाविति प्रकृत्यंशस्य विवक्षितं व्यनक्ति—स्वदर्शनेति । आत्माऽत्र मनः स्वात्मा वा । जनवर्जितेऽपि देशे बाह्यदेशस्थितानां शब्दस्याऽऽगमे सति मनःसमाधानं न स्यादिति तन्निवृत्त्यर्थमुक्तम्—निःशब्द इति । रहसीति विजनदेशाभिधानेऽपि पुनरेकाकीति पदं रहस्याहृत्यासन्नशिष्यसब्रह्मचार्यादिसंनिधिपरित्यागार्थमित्यभिप्रायेणाऽऽह—तत्रापि न सद्वितीय इति । यद्वा रहःशब्देन जनवर्जनद्वारा निःशब्दत्वं लक्ष्यते । एकाकीति शब्देन तु जनवर्जनमेवोच्यत इति भावः । व्युत्थानकालेऽपि एकाकित्वमनेनोच्यत इत्येके । ततोऽप्यस्यार्थस्यात्यन्तोपकारित्वादेवं योगा ( गः । ) एतेन रहसि स्थित एकाकी चेति विशेषणात्संन्यासं कृत्वेत्यर्थ इति शंकरोक्ति

यतचित्तमनस्को निराशीरात्मव्यतिरिक्ते कृत्स्ने वस्तुनि निरपेक्षोऽपरिग्रहस्तद्व्यतिरिक्ते कस्मिंश्चिदपि ममतारहितः ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥

शुचौ देशेऽशुचिभिः पुरुषैरपरिगृहीते चाशुचिभिर्वस्तुभिरस्पृष्टे च पवित्रीभूते देशे दार्वादिनिर्मितं नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरमासनं प्रतिष्ठाप्य ॥ ११ ॥

---

प्रत्युक्तम् । आत्मशब्देन मनसोऽभिधानेऽपि तस्यैव चिन्तारूपवृत्त्यपेक्षया तद्विशिष्टापेक्षया वा चित्तशब्द इत्यभिप्रायेणाऽऽह—यतचित्तमनस्क इति । आशीःशब्दस्यानेकार्थत्वादिह निषेध्यविशेषव्यक्त्यर्थमुक्तम्—निरपेक्ष इति । अपरिग्रहशब्देन बुद्धिस्वीकारपर्यायः परिग्रहोऽत्र निषिध्यत इत्यभिप्रायेणाऽऽह—ममतारहित इति ॥ १० ॥

बाह्योपकरणनियमनमाह—शुचौ देश इत्यादिना । शुचिशब्दः संकोचकाभावात्संसर्गजं स्वाभाविकं चाशुचित्वं निवर्तयतीत्यभिप्रायेणाऽऽह—अशुचिभिरिति । अशुचयः पुरुषाः पाषण्डपतितादयः । अनधिष्ठितेऽपरिगृहीते चेति । अधिष्ठानं परकीयेषु निर्वा-(वास)कत्वादिरूपेण संसर्गः, परिग्रहः स्वकीयत्वाभिमानः, तदुभयवर्जिते शुचिशब्दः शास्त्रान्तरोक्तं शोधकत्वमपि लक्षयतीत्यभिप्रायेणोक्तम्—पवित्रीभूत इति । च्विप्रत्ययरहितप्रयोगात्स्वतः शुद्धिरुक्ता । नात्युच्छ्रितं नातिनीचमित्यादि दृष्टसौकर्यार्थम् । स्थिरत्वे हेतुः—दार्वादिनिर्मितत्वम् । तस्य कठिनत्वान्मृदुत्वार्थं चैलम् । तत्रापि निस्तरङ्गत्वार्थं शुद्ध्यर्थं चाजिनम् । सर्वस्योपरि शुद्ध्यर्थं सत्त्वोन्मेषार्थं च कुशाः । कुशाजिनचैलोत्तरमिति क्वचिद्भाष्यपाठः । तथा सत्युत्तरोत्तरमार्दवसिद्ध्यर्थमुक्तमिति मन्तव्यम् । विपरीतोऽत्र क्रमश्चैलादीनामिति च शांकरम् । केचिदव्यवस्थितक्रमत्वमाहुः । प्रतिष्ठाप्य-दृढं स्थापयित्वा॥११॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

तस्मिन्मनःप्रसादकरे[1] समाश्रय उपविश्य योगैकाग्र्यमव्याकुलं मनः कृत्वा यतचित्तेन्द्रियक्रियः सर्वात्मनोपसंहृतचित्तेन्द्रियक्रिय आत्मविशुद्ध्यै बन्धविमुक्तये योगं युञ्ज्यादात्मावलोकनं कुर्वीत ॥ १२ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरम् ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

---

तत्राऽऽसन उपविश्येत्यन्वयव्यक्त्यर्थम्—तस्मिन्नित्यादिकमुक्तम् । उक्तानां शुचिदेशादीनां दृष्टादृष्टद्वारा योगोपयोगं दर्शयितुम्—मनःप्रसादकर इत्युक्तम् । समाश्रय उपविश्येति । अन्यथा पश्चार्धधारणप्रयत्नः समाधिविरोधी स्यादिति भावः । उपविश्य न तु तिष्ठञ्शयानो वा । तथा च सूत्रम्—आसीनः संभवादिति । स्थानशयनयोश्चाऽऽयासनिद्रादिप्रसङ्गेन योगो न संभवेत् । तत्रैकाग्रमित्यन्वयक्रमव्युदासाय—योगै(गै)काग्रमित्युक्तम् । निरुद्धान्यवृत्तेरेकवृत्तिप्रधानत्वमिहैकाग्रत्वम् । अव्याकुलमेकाग्रमिति केषुचिद्भाष्यकोशेषु पाठः । आत्मावलोकनोन्मुखं कृत्वेत्यर्थः । सार्वभौमो हि चित्तस्य वृत्तिनिरोधो योगतया योगशास्त्रैरभिहित इत्यभिप्रायेण—सर्वात्मनोपसंहृतचित्तेन्द्रियक्रिय इत्युक्तम् । चित्तमिह चिन्तावृत्तिः । इन्द्रियाणि च बाह्यानि । एकाग्रं मनः कृत्वेति वचनात् । बाह्यविषयेभ्य एवायमुपसंहारः । अन्यथाऽऽत्मावलोकनमपि न स्यात् । एतेन मनसो निःशेषवृत्तिविलयो योग इति वदन्तो निरस्ताः । शुद्धान्तःकरणस्य साक्षात्कारसाध्यात्मविशुद्धिर्मोक्ष एवेत्यभिप्रायेण—बन्धनिवृत्तय इत्युक्तम् । ‘ अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ’ इति कर्मबन्धो स्या(ह्या)त्मनामशुद्धिरुच्यते । योगं युञ्जीतेत्येतदोदनपाकं पचतीतिवदित्यभिप्रायेण—आत्मावलोकनं कुर्यादित्युक्तम् ॥ १२ ॥

एवं शुचिदेशासनादिरूपं बाह्यं योगोपकरणं मनसश्चैकाग्र्यमुक्तम् । अथान्तरान्तरतमयोः कायमनसोः क्रमात्कर्तव्यनियमविशेषा उच्यन्ते—सममित्यादिश्लोकद्वयेन । कायशिरोग्रीवमिति

---

१ क. ङ. °रे सापाश्र° ।

कायशिरोग्रीवं सममचलं समाश्रयतया स्थिरं धारयन्दिशश्चानवलोकयन् स्वं नासिकाग्रं संप्रेक्ष्य ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

प्रशान्तात्माऽत्यन्तनिर्वृतमना विगतभीर्ब्रह्मचर्ययुक्तो मनः संयम्य

---

द्वंद्वैकवद्भावः। तत एव नपुंसकता। अत्र मध्यापरनामा शरीरस्य मध्यप्रदेशः कायशब्देन विवक्षितः। सममचलं स्थिरमिति धारणक्रियाविशेषणानि। सममित्यनार्जवविवर्जितम्। अचलशब्देन निष्कम्पत्वेऽभिहितेऽपि स्थिरमित्येतदङ्गकम्पकरश्र(श्र)महेतुभूतपश्चार्धधारणप्रयत्ननिवृत्तिहेत्वभिप्रायमिति दर्शयितुम्—समाश्रयतया स्थिरमित्युक्तम्। अनेनाचलत्वस्य चिरानुवर्तनयोग्यत्वमुक्तं भवति। दाक्षिभ्यो व्यावर्तनं नासिकाग्रे स्थापनं चेति क्रमप्रदर्शनाय—दिशश्चानवलोकयन्स्वं नासिकाग्रं संप्रेक्ष्येति व्युत्क्रमेणोक्तम्। यद्वा शतुरत्र हेत्वर्थत्वाद्दिक्शब्दोपलक्षितबाह्यसकलपदार्थावलोकननिवृत्त्यर्थं योगारम्भक्षणे स्वनासिकाग्रप्रेक्षणमिति भावः। भोग्येतरानुपयुक्तविषयनिरीक्षणमपि निवर्तनीयमित्यभिप्रायेण—दिशश्चेत्युक्तम्। निमीलनेनापि बाह्यानवलोकनसिद्धौ नासिकाग्रावेक्षणं निद्रादिनिवृत्त्यर्थम्। संप्रेक्ष्य नासिकाग्रमित्येतावत्यभिहिते परनासिकाग्रप्रेक्षणमपि शङ्क्येतेति तद्व्यवच्छेदार्थमुक्तम्—स्वमिति। मनस्यन्तर्मुखे नासाग्रसंप्रेक्षणस्यासंभवाच्चक्षुषो दृष्टिसंनिपातमात्रमिह विवक्षितम्। अतः संप्रेक्ष्येत्यत्र, इवशब्दो लुप्तो द्रष्टव्य इति शांकरम्। नायनस्य तेजसः स्वच्छन्दवृत्त्या नासाग्रसंनिपातमात्रमिह विवक्षितम् ॥ १३ ॥

मनः संयम्येति संयमस्याभिधानात्प्रशान्तात्मशब्दोऽयं योगोपयुक्तसंतोषपर इत्यभिप्रायेण—अत्यन्तनिर्वृतमना इत्युक्तम्। ब्रह्मचारिव्रते स्थित इत्यनेन ब्रह्मचर्याश्रमप्रतीतिः। शंकरोक्तप्रक्रियया ब्रह्मचर्यगुरुशुश्रूषाभिक्षाचर्यादिधीः स्यादिति तद्व्यवच्छेदायाऽऽह—ब्रह्मचर्ययुक्त इति। ब्रह्मचर्यं च स्तनवति पिशित-

---

१ क. ङ. ‘लं साश्र’।

मच्चित्तो युक्तोऽवहितो मत्पर आसीत मामेव चिन्तयन्नासीत ॥ १४ ॥

युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

एवं मयि परस्मिन् ब्रह्मणि पुरुषोत्तमे मनसः शुभाश्रये सदाऽऽत्मानं मनो युञ्जन्नियतमानसो मत्स्पर्शपवित्रीकृतमानसतया निश्चलमा-

---

पिण्डे भोग्यताधीगर्भस्मरणालोकनालापादिरहितत्वमत्र विवक्षितम् । स्मरन्ति च—'ब्रह्मचर्यं च योषित्सु भोग्यताबुद्धिवर्जनम्' इत्यादि । तथा—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ इति ।

युक्तशब्दस्य पूर्वोत्तरप्रतिपन्नात्मावलोकनाभिधानादपि तदुपयुक्तावधानविषयत्वमत्रोचितमित्यभिप्रायेण—अवहित इत्युक्तम् । मच्चित्तशब्दो भगवति चित्तस्यानुप्रवेशपरः । मत्परशब्दस्तु तदेकचित्तत्वपरः, तदनुवृत्तिपरो वेत्यपौनरुक्त्यमाह—मामेवेति । यद्वा स्त्र्यादौ भोग्यताचिन्ता राजादौ च महति परधीर्लोके विभक्ता मयि तु तदुभयमित्यपुनरुक्तिः ॥ १४ ॥

जीवात्मयोगप्रकरणे मच्चित्तो मत्पर इति परमात्मचिन्तनं किमर्थं विधीयत इत्यत्रोच्यते—युञ्जन्नेवमिति । एवमित्यनुवादे । मच्चित्तो मत्पर इत्युक्तमच्छब्दाभिप्रेतं परत्वादिकं विवृण्वन्नाह—एवं मयीति । परस्मिन्ब्रह्मणीत्यनेन सर्वकारणत्वेन सर्वात्मत्वादिकं विवक्षितम् । तथात्वेऽपि समस्तवैलक्षण्येन तद्गतदोषासंस्पर्शो देवताविशेषनिष्कर्षश्च पुरुषोत्तमशब्दाभिप्रेतः । उक्ताकारविशिष्टत्वाच्च मनसः शुभाश्रयत्वम् । एतेन शुभाश्रय इत्युक्त्या प्रकरणान्तरोक्तदिव्यमङ्गलविग्रहविशिष्टत्वमभिप्रेतम् । तत्राऽऽत्मशब्दः प्रकृतानुवादपरतया मनोविषयः । युञ्जन्नित्यस्य प्रयोजनं नियतमानसत्वं तच्च निश्चलमानसत्वम् । तदुत्पत्तौ हेतोरवान्तरव्यापारोऽयमित्यभिप्रायेणाऽऽह—मत्स्पर्शेति । मत्संस्थामित्या-

---

१ ९. ग. घ, ङ. °हिताऽत्मा म° ।

न्सो मत्संस्थां निर्वाणपरमां शान्तिमधिगच्छति निर्वाणकाष्ठारूपां मत्संस्थां मयि संस्थितां शान्तिमधिगच्छति ॥ १५ ॥

एवमात्मयोगमारभमाणस्य मनोनैश्चल्यहेतुभूतां मनसो भगवति शुभाश्रये स्थितिमभिधायान्यदपि योगोपकरणमाह—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

अत्यशनानशने योगविरोधिनी अतिविहाराविहारौ च। तथाऽतिमात्रस्वप्नजागर्ये अत्यायासानायासौ च ॥ १६ ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

---

दिपरमप्रयोजनम्। निर्वाणपरमामित्यत्र निर्वाणं परमं यस्याः सा, इति समासे विशेषणव्यत्यासास्वारस्यम्। निर्वाणहेतुशान्तेश्च नियतमानस इत्यनेन सिद्धत्वात्पुनरुक्तिश्च स्यात्परमशब्दश्चास्वरसः। अतो निर्वाणस्य परमामिति समासः। परमशब्दश्च परमावस्थाविषय इत्यभिप्रायेणाऽऽह—निर्वाणकाष्ठेति। परमात्मनि संस्थिता च शान्तिरशनायादिषडूर्मिराहित्यरूपा। यद्वा मयि संस्थितां शान्तिमित्येतदेव शुभाश्रये स्थितिमित्यन्तेन विवृतम् ॥ १५ ॥

उचितदेशप्रभृति परमात्मचिन्तनपर्यन्तं ह्यत्र योगोपकरणमेव। अतोऽन्यदपीत्युक्तम्। योगोपकरणं योगोपकारकम्। अत्यशनादेर्योगविरोधित्वं नात्यश्नत इति श्लोकस्यार्थः, मिताहारादेस्तु योगोपयुक्तत्वं युक्ताहारेति श्लोकेनोच्यत इति व्यतिरेकतोऽन्वयतश्चैक एवार्थः स्थिरी क्रियत इति विभागमभिप्रेत्याऽऽह—अत्यशनेति। युक्ताहारेति श्लोके विहारायासयोरप्युक्तत्वात्पूर्वत्रापि तावभिमताविति दर्शयितुम्—अतिविहाराविहारावत्यायासानायासावित्युक्तम्। जाग्रत इत्यत्राप्यतिरनुषञ्जनीयः ॥ १६ ॥

पूर्वश्लोकोक्तातिशब्दप्रतियोगिकत्वाद्युक्तशब्दो मितत्वपर इत्य-

मिताहारविहारस्य मितायासस्य मितस्वप्नावबोधस्य सकलदुःखहा बन्धनाशनो योगः संपन्नो भवति ॥ १७ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यदा प्रयोजनविषयं चित्तमात्मन्येव विनियतं विशेषेण नियतं निरतिशयप्रयोजनतया तत्रैव नियतं निश्चलमवतिष्ठते तदा सर्वकामेभ्यो निस्पृहः सन् युक्त इत्युच्यते योगारूढ इत्युच्यते ॥ १८ ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

---

भिप्रायेण—मिताहारेत्यादिकमुक्तम् । श्रूयते हि—यद्धचात्मसंमितमन्नं तदवति तन्न हिनस्ति तद्यत्कनीयो न तदवतीति । स्मरन्ति च—

उदरस्यार्धमन्नस्य तृतीयमुदकस्य च ।
वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥ इति ।

अतो न्यूनाधिकादिसमस्तदोषराहित्यं युक्तशब्देनाभिप्रेतम् । द्वंद्वात्पूर्वमपि परमिद प्रत्येकमन्वेतव्यम् । विहारशब्दः संचारपरः । तन्द्रीपरिहारार्थविनोदपरो वा । पारिशेष्यादौचित्याच्च चेष्टाशब्दार्थोऽत्र श्रमहेतुरायासः । दुःखशब्दासंकोचाद्योगसामर्थ्याच्च सकलेति विशेषितम् । तत्फलितमाह—बन्धनाशन इति । एवंविधस्य योगो दुःखहा भवतीत्यन्वये योगस्य पूर्वसिद्धताभ्रमः स्यात्तद्व्युदासाय—संपन्नो भवतीत्युक्तम् ॥ १७ ॥

एवं परिकरोक्तसमनन्तरं योगदशां प्रदर्शयितुं ततः पूर्वं प्रागुक्तैव योगयोग्यदशा परामृश्यते—यदा विनियतमेतेन । आत्मन्येवेत्येवकारस्य व्यवच्छेद्यक्षुद्रप्रयोजनान्तरज्ञापनाय सामान्यतः प्रयोजनेत्युक्तम् । प्रयोजनान्तरेषु क्वचिद्विशेषेण नियतत्वे को हेतुरित्यत्राऽऽह—निरतिशयेति । युक्त इत्येतावतोऽत्र विधेयत्वान्निःस्पृह इत्यस्याप्युद्देश्यकोट्यनुप्रवेशाय—निःस्पृहः सन्नित्युक्तम् । सर्वकामेभ्यो निर्गता स्पृहा यस्य स तथोक्तः । सर्वकामेषु निःस्पृह इत्यर्थः ॥ १८ ॥

निवातस्थो दीपो यथा नेङ्गते न चलति अचलः सप्रभस्तिष्ठति। यतचित्तस्य निवृत्तसकलेतरमनोवृत्तेर्योगिन आत्मनि योगं युञ्जत आत्मस्वरूपस्य सोपमा। निवातस्थतया निश्चलसप्रभदीपवन्निवृत्तसकलेतर-

अथ योगदशा लक्ष्यते—यथेत्यादिना। दीपस्याचलत्वे हेतुर्निवातस्थत्वम्। इङ्गतेश्चेष्टार्थत्वे विवक्षिते दीपे तदनन्वयात्साधारण्यसिद्ध्यर्थमाह—न चलतीति। निश्चलत्वे पर्वतादिनिदर्शनसद्भावेऽपि दीपदृष्टान्ताभिप्रेतमर्थं दर्शयितुमाह—अचलः सप्रभस्तिष्ठतीति। यतचित्तस्येत्यनेन चिन्तारूपवृत्तिनियमनवचनमुपलक्षणमित्याह—निवृत्तेति। मनोमात्रपर्यायो वाऽत्र चित्तशब्दः। इतरशब्देनाऽऽत्मविषयवृत्तिरस्तीति सूचितम्। अन्यथा युञ्जतो योगमित्येतद्व्याहन्येतेत्यभिप्रायेणाऽऽह—आत्मनि योगं युञ्जत इति। आत्मनि विषये साक्षात्कारं कुर्वत इत्यर्थः। नेङ्गत इति [न] शरीरस्य निष्कम्पत्वमुदाह्रियते

'समं कायशिरोग्रीवं धारयन्नचलं स्थिरम्'

इति तस्योक्तत्वात्। ध्यानदशासाधारणत्वेन समाधिदशाविशेषकत्वानुपपत्तेश्च। नापीन्द्रियाणां निष्कम्पत्वं योगिनः सोपमेत्यन्वयायोगात्। नाप्यात्मस्वरूपस्य निश्चलत्वमवस्थान्तरेऽपि तत्सिद्धेः। अतः स्वयंप्रकाशज्ञानप्रभनिरस्तसमस्तवृत्त्यन्तरपरिशुद्धात्मस्वरूपप्रदर्शनार्थोऽयं दृष्टान्त इति सूचयितुं योगिन इत्युक्तेऽपि पुनरप्यात्मन इत्युक्तमित्यभिप्रायेण—आत्मस्वरूपस्य सोपमेत्युक्तम्। योगिन आत्मन इति व्यधिकरणे षष्ठ्यौ। ननु सोपमेत्यत्रोपमाशब्द उपमितिपरो वा [दृष्टान्तपरो वा,] उभयथाऽपि न संभवति। यथेति निर्दिष्टप्रकारपरामर्शित्वादत्र तच्छब्दस्य, उपमाशब्दस्य च तत्समानाधिकरणत्वात्। सप्रभस्तिष्ठतीत्येतच्च कथं दार्ष्टान्तिके निर्वाह्यम्, अयोगिनामप्यात्मस्वरूपस्य चलत्वप्रतीत्यभावात्किमर्थं च निश्चलत्वोपदेश इत्यत्राऽऽह—निवातस्थितयेति। अयमभिप्रायः—उपमेति दृष्टान्तगतं साधर्म्यमत्र निर्दिश्यते। तस्माद्यथेत्यनेन सोपमेत्यस्यान्वय उपपन्नः। प्रभायाश्च प्रतिधर्मोऽत्र ज्ञानम्। आत्मनो निश्चलत्वं चात्र प्रभाभूतज्ञानस्य विविधप्रसरणनिवृत्तिः। सा च बाह्यविषयेषु मनो-

मनोवृत्तितया निश्चलज्ञानप्रभ आत्मा तिष्ठतीत्यर्थः ॥ १९ ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥२०॥

योगसेवया हेतुना सर्वत्र निरुद्धं चित्तं यत्र योग उपरमतेऽतिशयितसुखमिदमेवेति रमते । यत्र च योग आत्मना मनसाऽऽत्मानं पश्यन्नन्यनिरपेक्षमात्मन्येव तुष्यति ॥ २० ॥

---

वृत्तेरेवाभावात् । संसारदशायां च ज्ञानस्येन्द्रियद्वारैव प्रसरणादिति स्मृता समाधिदशा संदर्शिभिर्योगिभिरिति शेषः ॥ १९ ॥

पुनरपि योगदर्शेवाऽऽदरातिरेकाय निरतिशयपुरुषार्थत्वप्रतिपादनेन प्रपञ्च्यते—यत्रेत्यादिभिः । निरुद्धमित्यत्र परिगृहीतत्वविनष्टत्वादिभ्रमव्युदासाय—योगसेवया हेतुना सर्वत्र निरुद्धमित्युक्तम् । सर्वतो निरुद्धमित्युक्ते प्रवृत्तस्य निवारणमात्रं प्रतीयेत सर्वत्रेत्युक्ते तूत्तरोत्तरप्रवृत्त्यनुदयोऽपि सिध्यतीति सप्तमीनिर्देशः । योगसेवया निरुद्धं यत्रोपरमत इत्युक्ते योगस्य पृथगुपादानाद् यच्छब्दार्थस्य योगाद्व्यतिरेकः प्रतीयेतेति तद्व्युदासाय योगसंज्ञितमिति वक्ष्यमाणान्वयेन—यत्र योग इत्युक्तम् । यत्र काल इति परोक्तं त्वयुक्तम्—उपरितनयच्छब्दभिन्नार्थत्वप्रसङ्गात्, प्रतिनिर्देशस्थयोगशब्दानन्वयाच्चेति भावः । यत्रोपरमत इत्यत्र यतो विच्छिद्यत इति भ्रमापाकरणायाऽऽह—अतिशयितेति । यत्र सिद्धेऽन्यत उपरमत इति अध्याहारेण योजना न युक्ता । तथा सति निरुद्धमित्यनेन पुनरुक्तिश्च स्यात् । उपसर्गाणां च नानार्थत्वादयमेवातिशयार्थ उपपन्नः । आसक्तिप्रतिपादनद्वारा वा तात्पर्येणायमर्थः सिध्यतीति भावः । यत्र चैवेत्येवकारस्य यथाक्रमान्वये प्रयोजनाभावादुचितान्वयप्रदर्शनाय—आत्मन्येव तुष्यतीत्युक्तम् । अन्यनिरपेक्षमित्यवधारणतोषशब्दाभ्यामर्थसिद्धोक्तिः । यद्वा—आत्मानं पश्यन्स तुष्यतीत्येतावतैव विवक्षितसिद्धौ पुनरात्मनीति निर्देशस्तदन्यव्युदासार्थ इत्यभिप्रायः । आत्मनि परमात्मानमिति योजना तु जीवयोगविषयत्वादिह संत(म)ता ॥ २० ॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥

यत्तदतीन्द्रियमात्मबुद्ध्येकग्राह्यमात्यन्तिकं सुखं यत्र च योगे वेत्ति-अनुभवति । यत्र च योगे स्थितः सुखातिरेकेण तत्त्वतस्तद्भावान्न चलति ॥ २१ ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ २२ ॥

यं योगं लब्ध्वा योगाद्विरतस्तमेव काङ्क्षमाणो नापरं लाभं मन्यते ।

---

अतीन्द्रियमित्युक्तत्वात्परिशेषादौचित्याच्च बुद्धिग्राह्यमित्यत्र बुद्धिं विशिनष्टि—आत्मबुद्ध्येकग्राह्यमिति । आत्यन्तिकं पुनर्दुःखसंभेदरहितमित्यर्थः । यदेवंविधं सुखं तद्यत्र वेत्तीत्यन्वयः । यद्वा यत्तदिति पिण्डितं प्रसिद्ध्यतिशयार्थं तदित्येवार्थः । केचित्तु यत्तच्छब्दान्वयप्रकारमजानन्तः सुखमात्यन्तिकं यत्रेति पठन्ति । वेत्ति यत्रेति यत्रशब्दः पूर्वोत्तरवाक्यसाधारणतया मध्ये प्रयुक्तः । वेत्तीत्यस्यापवर्गदशानुभाव्यसुखमतिसंधानपरत्वव्युदासाय योगरूपापारोक्ष्याभिप्रायेण—अनुभवतीत्युक्तम् । आत्मनि तुष्यतीति पूर्वमितरसुखनिरपेक्षत्वपरम् । सुखमात्यन्तिकमित्यादि तु स्वरूपसुखानुभवपरमित्यपौनरुक्त्यम् । सुखातिरेकेणेति । उक्त एवाचलनहेतुरुचित इति भावः । प्रामाणिकार्थाच्च चलतीति वा सम्यङ् न चलतीति वा निर्वहणं मन्दम् । योगदशायां च सुखातिरेकेण स्वरसतस्तदवस्थतयैव चिरतयाऽवस्थानाभिधानमुचितम् । अपेक्षितं चेत्यभिप्रायेण तत्त्वत इत्यस्य तद्भावादिति प्रतिपदमुक्तम् ॥ २१ ॥

इतरविषयनिरोधकनैरपेक्ष्ये यत्रेति श्लोकेनोक्ते, तत आत्मस्वरूपसुखानुभवस्तस्य स्वरसवाहितया दुर्विच्छेदत्वं च सुखमिति श्लोकेनाभिहिते यं लब्ध्वेति श्लोकेन योगाविरतिकालेऽपि तस्यैवाभिलाषपदत्वाद्बाह्यसुखाभिलाषेण दुःखेन चानास्कन्दनमुच्यत इति विभागज्ञापनाभिप्रायेण—योगाद्विरत इत्यादिकम् । योगदशायां

---

१ ख. ग. घ. ङ. °ब्ध्वा ततः° ।

यस्मिंश्च योगे स्थितोऽविरतोऽपि गुणवत्पुत्रवियोगादिना गुरुणाऽपि दुःखेन न विचाल्यते ॥ २२ ॥

तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

तं दुःखसंयोगवियोगं दुःखसंयोगप्रत्यनीकाकारं योगशब्दाभिधेयं ज्ञानं विद्यात् । स एवंभूतो योग इत्यारम्भदशायां निश्चयेनानिर्विण्णचेतसा हृष्टचेतसा योगो योक्तव्यः ॥ २३ ॥

---

तु लाभान्तरप्रतिसंधानमेव हि नास्तीति भावः । गुरुणाऽपीत्युक्तगौरवव्यञ्जनाय–गुणवत्पुत्रवियोगादिनेत्युक्तम् । 'पुत्रजन्मविपत्तिभ्यां न परं सुखदुःखयोः' इत्याहुः । न विचाल्यते योगप्रतिकूलमवसादं न गच्छतीत्यर्थः ॥ २२ ॥

दुःखसंयोगस्य वियोगस्तत्स्यासंबन्धः, अभाव इत्यर्थः । स च भावान्तरमिति ज्ञापनायाऽऽह—दुःखसंयोगप्रत्यनीकाकारमिति । दुःखसंयोगस्य वियोगो यत्रेति व्यधिकरणबहुव्रीहौ फलितोक्तिरियम् । अथवा वियोगशब्दोऽत्र वियुज्यतेऽनेनेति करणार्थघञन्तो वियोगहेतुपर इति भावः । निर्विण्णचेतसेति पदच्छेदे संसारे तापत्रये वेत्यध्याहारः स्यात् । तत्र सप्रयोजनयोजनान्तरे संभवति न युक्तः । तस्मादनिर्विण्णचेतसेति पदच्छेदः । निश्चयशब्दोऽपि तेनैव हेतुसमर्पणेनान्वितः । न तु योक्तव्य इत्यनेन निरर्थकान्वयप्रसङ्गात् । अनिर्विण्णत्वहेतुनिश्चयः पूर्वोक्तनिरतिशयपुरुषार्थत्वेनैव स्यात् । तदेतदखिलमभिसंधायाऽऽह—स एवमिति । एवंरूपो निरतिशयपुरुषार्थरूप इत्यर्थः । योक्तव्य इत्युक्तत्वात्, आरम्भोपकारकत्वद्योतनाय—आरम्भदशायामित्युक्तम् ।

मनसा क्लिश्यमानस्तु समाधानं च कामयेत् ।
अनिर्वेदं मुनिर्गच्छन्कुर्यादेवाऽऽत्मनो हितम् ॥

इति ह्युच्यते । अतो विरक्त्युपयुक्तो निर्वेदोऽन्योऽयं तु ह्यन्यादृश इति हृष्टचेतसेत्युक्तम् । योक्तव्यः कर्तव्य इत्यर्थः ॥ २३ ॥

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

स्पर्शजाः संकल्पजाश्चेति द्विविधाः कामाः । स्पर्शजाः शीतोष्णादयः । संकल्पजाः पुत्रपौत्रक्षेत्रादयः । तत्र संकल्पप्रभवाः स्वरूपेणैव त्यक्तुं शक्यास्तान् सर्वान् मनसैव तदनन्वयानुसंधानेन त्यक्त्वा स्पर्शजेष्ववर्जनीयेषु तन्निमित्तहर्षोद्वेगौ त्यक्त्वा समन्ततः सर्वस्माद्विषयात्सर्वमिन्द्रियग्रामं विनियम्य ॥ २४ ॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥

शनैः शनैर्धृतिगृहीतया विवेकविषयया बुद्ध्या सर्वस्मादात्मव्यतिं-

---

अथ ममकारपरित्यागादिकं प्राग्विकीर्णोक्तमखिलमिदानीं सुखग्रहणाय सौकर्यप्रदर्शनाय च संकलय्य योगदशापर्यन्ततया स्मार्यते–संकल्पेत्यादिभिः श्लोकैः । संकल्पप्रभवान्कामांस्त्यक्त्वेत्येतावतैव सिद्धौ पुनरशेषत इति पदं निःशेषत्यागानर्हाणां विषयाणां सूचकम् । न चोत्तरवाक्ये तदन्वयः । ग्रामशब्देन पर्याप्तत्वात् । अतः प्रयुक्तपदवैयर्थ्यपरिहारायाशेषतश्च कामांस्त्यक्त्वेति चकाराभावेऽपि योज्यः । अपिच संकल्पभवत्वेन विशेषणमेवासंकल्पप्रभवकामसूचकमित्यभिप्रायेण विभजते—स्पर्शजा इति । मनसैवेति पदं मध्यस्थत्वादपेक्षितत्वाच्च काकाक्षिन्यायेन पूर्वोत्तरान्वितमिति दर्शयितुम्—तान्सर्वान्मनसैवेत्यादिकमुक्तम् । कामत्यागकरणस्य मनसोऽवान्तरव्यापारस्तदनन्वयानुसंधानम् । कर्मोपाधिकशरीरान्विता हि पुत्रादयो न त्वात्मस्वरूपान्विता इत्यनुसंधानेनेत्यर्थः । न प्रहृष्येदित्यादिभिः प्रागुक्तमेव स्मारयति—स्पर्शजेष्वित्यादिना । समन्तत इत्यत्र पदच्छेदभ्रमव्युदासायाऽऽह—सर्वस्माद्विषयादिति ॥ २४ ॥

प्रक्रान्ततदशिथिलत्वरूपाया धृतेर्हेतुमाह–विवेकविषययेति । उपरम्य बाह्यार्थे मानसमुद्योगं वारयित्वेत्यर्थः । उपरम्येति

---

१ क. ख. ङ. त्यक्तुमश° ।

रिक्तादुपरम्याऽऽत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

चलस्वभावतयाऽऽत्मन्यस्थिरं मनो यतो यतो विषयप्रावण्यहेतोर्बहिर्निश्चरति ततस्ततो यत्नेन मनो नियम्याऽऽत्मन्येवातिशयितसुखभावनया वशं नयेत् ॥ २६ ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥**

प्रशान्तमनसमात्मनि निश्चलमनसं तत एव हेतोर्दग्धाशेषकल्मषं तत एव शान्तरजसं विनष्टरजोगुणं तत एव ब्रह्मभूतं स्वस्वरूपेणावस्थितमेनं

---

व्याख्यानप्रकृत्वद्योतनाय । किंचिदपीति । आत्मव्यतिरिक्तमनुकूलप्रतिकूलोदासीनं सर्वमित्यर्थः ॥ २५ ॥

पूर्वोक्तमेव दुर्ग्रहत्वद्योतनायावधानविधानाय च प्रपञ्चयति—यतो यत इति । चञ्चलमस्थिरमित्यनयोः पौनरुक्त्यनिरासायोक्तम्—चलस्वभावतयाऽऽत्मन्यस्थिरमिति । सामान्यविशेषविषयत्वादपुनरुक्तिः । चञ्चलमिति स्वभावातिरिक्तहेतुनिवृत्तिपरं वा । यतो यतो निश्चरति येन येनेन्द्रियद्वारेण निश्चलतीत्यर्थः । यद्वा यं विषयमभिमुखीकृत्येत्यर्थः । प्रयोजनतया वा हेतौ पञ्चमी, तद्व्याख्यानायाऽऽह—विषयप्रावण्यहेतोरिति । विषयसंबन्धार्थमित्यर्थः । विषयप्रावण्यस्य हेतोरिति वा । संभवन्ति ह्यतर्कितोपनता विषयसंनिधानतत्कीर्तनादयो विषयप्रावण्यहेतवः । सुखभावनया वशीकरणं शक्यमित्युच्यते—अतिशयितसुखभावनयेति । आत्मनि वशीकरणोपायः प्रागुक्तः ॥ २६ ॥

अनन्तरं च तदेवाऽऽह—प्रशान्तमनसमिति श्लोकेन । तत्र विकीर्णावस्थितानां पदानामन्वयक्रममर्थं च दर्शयति—एनमित्यादिना । योगिनमकल्मषं शान्तरजसं ब्रह्मभूतमेनमिति हेतुकार्यभावेनान्वयक्रमः । स्वविषयज्ञानस्य स्वकल्मषनिवर्तकत्वं पञ्चगव्यप्राशनादेरिव परसंकल्पायत्तम् । ब्रह्मभूतमिति देहात्मभ्रमादिप्रयुक्तक्लेशादिदशारूपाब्रह्मत्वव्यवच्छेदार्थं तदाह—स्वरूपेणावस्थितमिति ।

योगिनमात्मानुभवरूपमुत्तमं सुखमुपैति हीति हेतोरुत्तमसुखरूपमात्मस्वरूपमुपैतीत्यर्थः ॥ २७ ॥

युञ्जन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

एवमुक्तप्रकारेणाऽऽत्मानं युञ्जंस्तेनैव विगतप्राचीनसमस्तकल्मषो ब्रह्मसंस्पर्शं ब्रह्मानुभवरूपं सुखमत्यन्तमपरिमितं सुखेनानायासेन सदाऽश्नुते ॥ २८ ॥

अथ योगविपाकदशा चतुष्प्रकारोच्यते—

---

' अणोरपि हि जीवस्य स चाऽऽनन्त्याय कल्पते ' इति श्रुतेर्धर्मतो बृहत्त्वमस्त्येव । उत्तमशब्देन वैषयिकसुखव्यवच्छेदो विवक्षित इति व्यञ्जनाय—स्वरूपानुभवमित्युक्तम् । ब्रह्मसंस्पर्शमिति ह्यनन्तरमुच्यते । निरतिशयसुखत्वाद्दुःखसंभेदविरहादुत्तमत्वम् । पूर्वश्लोकोक्तमनोवशीकरणे वैतच्छ्लोकोक्तसुखापागमे वा हेतुपरो हिशब्द इत्याह—हीति हेताविति । हेतुस्वरूपं विशदयति—उत्तमेति ॥ २७ ॥

एवं योगप्रभावादाविर्भवतः सुखस्याऽऽत्मानुभवरूपत्वं साक्षात्कारात्पश्चादपि निरतिशयत्वमनिवर्तनीयत्वमनायाससाध्यत्वं चोच्यते—एवमिति । एवंशब्देन योगी युञ्जीतेत्यारभ्योक्तः प्रकारः परामृश्यत इत्यभिप्रायेण—उक्तप्रकारेणेत्युक्तम् । संस्पर्शशब्दोऽनुभवलक्षको बुद्ध्या सह संबन्धपरो वेत्यभिप्रायेण—ब्रह्मानुभवरूपमित्युक्तम् । एवं युञ्जन्नित्यनेनैव सर्वस्योक्तत्वात्तत्र च नियतकाले सदाशब्दान्वयायोगात्सुखस्य चाविनाशित्ववचनस्यापेक्षितत्वात्सदाऽश्नुत इत्यन्वयः । ततश्चात्यन्तशब्दोऽपि सावधिकतत्स्वरूपान्तनिवृत्तिद्वारा निरतिशयपर इत्यभिप्रायेण—अपरिमितमित्युक्तम् । सुखेन सुखमश्नुत इति सुखसाधनसुखान्तराभावात्सुखेनेत्यनायासत्वं विवक्षितम् ॥ २८ ॥

एवं योगाभ्यासविधिः प्रपञ्चितः । ' आत्मलाभसुखं यावत्तावद्ध्यानमुदाहृतम् ' इत्यभ्युक्तं फलपर्यन्तत्वं चोक्तम् । अथ चतुर्धा योगी प्रतिपाद्यत इति चतुर्णां श्लोकानामर्थमाह—अथेति ।

सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

स्वात्मनः परेषां च भूतानां प्रकृतिवियुक्तस्वरूपाणां ज्ञानैकाकारतया साम्याद्वैषम्यस्य च प्रकृतिगतत्वाद्योगयुक्तात्मा प्रकृतिवियुक्तेष्वात्मसु सर्वत्र ज्ञानैकाकारतया समदर्शनः सर्वभूतस्थं स्वात्मानं सर्वभूतानि च स्वात्मनीक्षते । सर्वभूतसमानाकारं स्वात्मानं स्वात्मसमानाकाराणि च सर्वभूतानि पश्यतीत्यर्थः । एकस्मिन्नात्मनि दृष्टे सर्वस्याऽऽत्मवस्तुनस्तत्साम्यात्सर्वभूतमात्मवस्तु दृष्टं भवतीत्यर्थः । 'सर्वत्र समदर्शनः' इति

समदर्शित्वरूपयोगविपाकस्य पर्वक्रमेण तारतम्याच्चतुष्प्रकारत्वम् । तत्र प्रथमदशोच्यते सर्वभूतस्थमिति श्लोकेन । समदर्शनत्वोपपत्तये स्वरूपतः साम्यप्रकारं वैषम्यस्य चौपाधिकत्वं दर्शयति—स्वात्मन इत्यादिना गतत्वादित्यन्तेन । भूतशब्दोऽत्राचिद्वारकोऽपि सत्यं भूतहेतुं मोक्तमित्यादिष्विव चेतनांशपरः । योगयुक्तात्मा योगयुक्तमनाः । यद्वा योगसमधिगतात्मस्वरूप इत्यर्थः । योगयुक्तात्मत्वं समदर्शनत्वे हेतुः । समदर्शनत्वस्यैव प्रतियोगिविशेषनिर्देशेन प्रपञ्चनं सर्वभूतस्थमित्यादि । आत्मशब्दस्यात्राऽऽत्मसामान्यविषयत्वपरमात्मविषयत्वव्यावर्तनेन स्वपर्यायत्वद्योतनाय स्वात्मशब्दः। नन्वन्योन्याधाराधेयभावः कथमुपपद्यते । कथं चाणोः स्वात्मनः सर्वभूतस्थत्वम् । विप्रकीर्णदेशावस्थितानां च सर्वभूतानां कथमेकदेशस्थिते स्वात्मनि स्थितिः । अतोऽयमात्मशब्दः परमात्मविषयः स्यादिति तत्राऽऽह—सर्वभूतसमानाकारमिति । नन्वसौ स्वात्ममात्रानुसंधानरूपे योगे प्रयुक्तः कथं स्वगतसाम्यप्रतियोगितया स्वप्रतियोगिकसाम्याश्रयतया च स्वव्यतिरिक्तात्मवर्गमीक्षेतेत्यत्राऽऽह—एकस्मिन्निति । एकजातीयेषु पदार्थेषु एकव्यक्तिदर्शनेनैव स्थालीपुलाकन्यायात्तज्जातीयं सर्वमपि तथात्वेनानुसंहितं हि भवतीति भावः । सर्वभूतस्थमित्यादेः साम्यमेव विवक्षितमिति दर्शयितुमेतद्ग्रन्थैकदेशं पूर्वोत्तरप्रकरणग्रन्थं चोदाहरति—सर्वत्रेति । अयमभिप्रायः—सर्वत्र समदर्शन इति सर्वेषामात्मनां परस्परसाम्यदर्शनमुच्यते । तदेव च सर्वभूतस्थमिति प्रपञ्च्यते । अत

वचनात् 'योऽयं योगस्त्वया प्रोक्तः साम्येन' इत्यनुभाषणाच्च 'निर्दोषं हि समं ब्रह्म' इति वचनाच्च ॥ २९ ॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

ततो विपाकदशामापन्नः मम साधर्म्यमुपागतः 'निरञ्जनः परमं साम्यमुपैति' इत्युच्यमानं सर्वस्याऽऽत्मवस्तुनो विधूतपुण्यपापस्य स्वरू-

---

एव च बाह्यभूतेष्वात्मतत्त्वस्य तस्मिंश्च तेषां स्थितिदर्शनमिहासंगतम् । न चेदं परमात्मयोगप्रकरणं येन तथाविधपरमात्मानुसंधानमुपदिश्येत । तेन च जीवात्मयोगोपयुक्तपरमात्मध्यानमिदमुच्यते समाधिदशाभेदविषयत्वात् । न च जीवानां परमात्मनश्च साम्यमिहोच्यते । तस्यापि यो मामिति विशेषनिर्देशयुक्ते श्लोकद्वये प्रतिपादयितुमुचितत्वात् । अस्य च परमात्मविषयत्वे यो मामिति श्लोकद्वये न मात्रया पौनरुक्त्यं च स्यात् । योऽयं योग इत्येतदनुवादे च साम्यमात्रमेवोच्यते न तु परस्पराधाराधेयभावः । प्रागपि विद्याविनयेत्यादौ साम्यमात्रमेवोक्तम् । अतोऽत्र जीवानां परस्परसाम्यमेव विवक्षितमिति ॥ २९ ॥

एवं देवमनुष्यादिप्रकृतिपरिणामविशेषरूपभेदनिरसनेन ज्ञानैकाकारतयैकरूपत्वानुसंधानमुक्तम् । अथ तस्यैव देवादिभेदहेतुभूतपुण्यपापतारतम्यविधूननेन परमात्मना परमसाम्यानुसंधानमुच्यते—यो मामिति । अस्यापि श्लोकस्य साम्यविषयत्वे हेतुः प्रागेवोक्तः । ततोऽपि विपाकदशापन्नः प्रथमदशातोऽधिकां विपाकदशां प्राप्त इत्यर्थः । जीवात्मनां परमात्मनश्च साधर्म्यं वक्ष्यमाणं स्मारयति—मम साधर्म्यमिति । उपागतो बुद्ध्या प्राप्त इत्यर्थः । नह्यसाविदानीं मुक्तः । पुण्यपापविधूननेन साम्यप्रतिपादनाय निरञ्जन इति श्रुतिरुपात्ता । तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति हि सा । यो मां पश्यतीत्यनुवादस्तत्सिद्धो हि भवति । स कुत इति शङ्कायां साम्यं तावदुपात्तश्रुत्यादिसिद्धं

१ क. ख. ग. घ. ङ. °र्म्यमागतः ।

पेणावस्थितस्य मत्साम्यं पश्यन् यः सर्वत्राऽऽत्मवस्तुनि मां पश्यति सर्वं-मात्मवस्तु च मयि पश्यति अन्योन्यसाम्यादन्यतरदर्शनेनान्यतरदपी-दृशमिति पश्यति तस्य स्वात्मस्वरूपं पश्यतोऽहं तत्साम्यान्न प्रणश्यामि नादर्शनमुपयामि । ममापि मां पश्यतो मत्साम्यात्स्वात्मानं मत्समवलो-कयन् स नादर्शनमुपयाति ॥ ३० ॥

ततोऽपि विपाकदशामाह—

---

तदनुसंधानं च विहितम् , ततश्च तदनुवादोऽप्युपपन्न इति ज्ञाप-नाय—मत्साम्यं पश्यन् यः सर्वत्राऽऽत्मवस्तुनि मां पश्यतीत्यवान्तरवचन-व्यक्तिभेदो दर्शितः । परमात्मनः सर्वव्यापितया सर्वेषां परमात्म-निष्ठतया च प्रतीतिरत्र स्वरसतो जायते । तच्चात्र प्रकरणवशादनु-चितं ततश्च सामान्यदर्शनमेव विवक्षितमिति वाच्यम् । तदप्ययुक्तम् । स्वात्मानुसंधानस्वरूपयोगविपाके परमात्मनोऽन्येषां च स्फुरणा-भावादिति पूर्ववच्छङ्कयामाह—अन्योन्येति । अन्यतरदर्शनेनान्य-तरदपीति । एकव्यक्तिदर्शनेन व्यक्त्यन्तरमपीत्यर्थः । तस्याहमि-त्यादौ न तावत्प्रध्वंसनिषेधः क्रियते । नित्यतया बहुप्रमाणप्रति-पादितयोर्जीवेश्वरयोरिदानीमनित्यत्वशङ्काभावात्तस्य न प्रण-श्यामीत्यादिपरस्परप्रतियोगिनिर्देशानुपपत्तेश्च । नहि किंचिद्वस्तु किंचित्प्रत्यनष्टं किंचित्प्रति च नष्टं भवति । अतोऽसावदर्शन-विषय एवात्र नाशशब्दः । णशधातोश्चादर्शनार्थत्वं धातुपाठपठि-तम् । ततश्च न प्रणश्यामीति कोऽर्थः, नादर्शनमुपयामीति । तदेतद्द-र्शयति—तस्येत्यादिना । तादृशत्वानुसंधानस्याभावो निषिध्यत इति भावः । स च मे न प्रणश्यतीत्येतद्दृष्टान्तार्थं साम्यस्य सर्वज्ञ-बुद्धिविषयतया प्रामाणिकत्वार्थं पूर्ववच्छङ्कापरिहारार्थं चेत्यभिप्रा-येणाऽऽह—ममापीति । सर्वसाक्षात्कारिणोऽपि मम स्वरूपानुसंधानां-शेऽपि तत्साम्यात्तत्स्वरूपमप्यनुसंहितं भवति हीत्यर्थः । स इत्यनेन तदवस्थस्य मुक्तप्रायत्वं विवक्षितमिति व्यञ्जयितुमाह—साम्यात्स्वात्मानं मत्समवलोकयन्निति ॥ ३० ॥

तृतीयां विपाकदशामाहेत्याह—तत इति । अकर्मवश्यत्वाका-रेणेश्वरसाम्यदर्शनं पूर्वश्लोकोक्तम् । सर्वभूतस्थितमित्यनेन तु

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

योगदशायां सर्वभूतस्थितं मामसंकुचितज्ञानैकाकारतयैकत्वमास्थितः प्राकृतभेदपरित्यागेन सुदृढं यो भजते स योगी व्युत्थानकालेऽपि यथा तथा वर्तमानः स्वात्मानं सर्वभूतानि च पश्यन्मयि वर्तते मामेव पश्यति स्वात्मनि सर्वभूतेषु च सर्वदा मत्साम्यमेव पश्यतीत्यर्थः ॥ ३१ ॥

---

कर्मरूपाविद्यावेष्टनविधुरत्वादसंकुचितज्ञानाकारतया साम्यानुसंधानं तत्संस्कारप्रभावेन च व्युत्थानकालेऽपि स्वरसतस्तथाविधानुसंधानानुवृत्तिश्चेत्येतदुच्यते—यो भजत इति। सर्वथा वर्तमानोऽपीत्यनेन कालभेदः सिद्धः। न च समाधिदशायामेव यथा तथा वर्तमानत्वमुपपद्यते। सर्वभूतस्थितेन परमात्मनैकत्वानुसंधानं नाम स्वस्यापि सर्वभूतस्थितत्वेन तदेकप्रकारत्वानुसंधानम्। तच्चाणोरात्मनः स्वरूपेण न संभवति। धर्मतश्च परिशुद्धात्मनो व्याप्तिर्बालाग्रेत्यारभ्य स चाऽऽनन्त्याय कल्पत इति श्रुतिसिद्धा। सूत्रं च—'प्रदीपवदावेशस्तथाहि दर्शयति' [ ब्र० सू० ४। ४। १५ ] इति। अतोऽत्रापि तथैव साम्यं विवक्षितमिति दर्शयितुम्—असंकुचितज्ञानाकारतयैकत्वमास्थित इत्युक्तम्। प्राकृतभेदपरित्यागेन कर्मोपाधिकप्रकृतिविशेषसंसर्गकृतज्ञानतारतम्यरूपभेदपरित्यागेनेत्यर्थः। अनेनैकत्वोक्तेः स्वरूपभेदानिरासार्थत्वं परिहृतम्। सर्वात्मनां ब्रह्मापृथक्सिद्धत्वविवक्षयाऽप्येकत्वोक्तिश्च घटते। आस्थितशब्दतात्पर्यार्थः सुदृढमिति। ततश्च व्युत्थानकालेऽपि न तथाविधानुसंधानप्रवाहहेतुभूतसंस्कारप्राबल्यं सूचितम्। मां भजति मत्समात्मावलोकनं हि मद्भजनमित्यभिप्रायः। सर्वदेत्यस्य लौकिकक्रियाव्यापृतोऽपीत्यभिप्रायः। मयि वर्तत इत्यस्य परमात्मनि स्थितिर्नार्थः। तस्या योग्ययोग(गि)साधारणत्वात्। अतो वृत्तिरत्र बुद्धिवृत्तिरित्यभिप्रायेणाऽऽह—मामेव पश्यतीति। जीवदर्शनमात्रेण कथं परमात्मदर्शनमित्यत्राऽऽह—स्वात्मनीति। व्युत्थानकाले स्वात्मसाक्षात्काराभावेऽपि तथाविधानुसंधाने परेषामपि तथात्वसिद्धेः फलितोक्तिरियम् ॥ ३१ ॥

ततोऽपि काष्ठामाह—

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

आत्मनश्चान्येषां चाऽऽत्मनामसंकुचितज्ञानैकाकारतयौपम्येन स्वात्मनि चान्येषु च सर्वत्र वर्तमानं पुत्रजन्मादिरूपं सुखं तन्मरणादिरूपं च दुःखमसंबन्धसाम्यात्समं यः पश्यति परपुत्रजन्ममरणादिसमं स्वपुत्रजन्ममरणादिकं यः पश्यतीत्यर्थः । स योगी परमयोगकाष्ठां गतो मतः ॥ ३२ ॥

अर्जुन उवाच—

---

प्रबलदुःखहेत्वागमेऽपि निर्विकारत्वरूपादिकां योगविपाककाष्ठाभूतां कर्मज्ञानतारतम्यप्रयुक्तसुखदुःखतारतम्यनिवृत्त्यनुसंधानरूपां चतुर्थीं दशामाहेत्याह—ततोऽपि काष्ठामाहेति । आत्मौपम्येनेत्यस्य न पश्यतिनाऽन्वयः । सममित्यनेन पौनरुक्त्यप्रसङ्गात् । अतः सर्वत्राऽऽत्मौपम्येनेत्यन्वयः । उपमाशब्दस्तुल्यवचनः, तस्य भाव औपम्यम् । सर्वेषामात्मनां पूर्वोक्तेन देहविलक्षणत्वादिसाम्येनेत्यर्थः । सर्वत्रेत्येतदेव काकाक्षिन्यायेन समं पश्यतीत्यत्राप्यन्वितम् । सर्वेषामत्यन्तविषमतयोपलक्ष्यमाणसुखदुःखान्वयसाम्यभ्रमम्युदासेन व्यतिरेकसाम्यानुसंधानं दर्शयति—असंबन्धसाम्यादिति । परेष्वसंबन्धानुसंधानस्य निष्प्रयोजनत्वादिहाभिप्रेतमाह—परेति । परपुत्रजन्मादेः स्वात्मनि स्वपुत्रजन्मादेश्च परेषु यथा न संबन्धस्तथा स्वात्मन्यपीत्युक्तं भवति । परमशब्दाभिप्रेतमाह—योगकाष्ठां गतो मत इति । जीवात्मयोगकाष्ठेयम्, परमात्मयोगस्य परस्ताद्वक्ष्यमाणत्वात् ॥ ३२ ॥

एवं ज्ञानैकाकारतया निर्दोषतया ब्रह्मतद्गुणसंबन्धेनेतरासंबन्धेन च साम्यं श्लोकचतुष्टयेनोक्तम् । अत्र श्लोकद्वयेन साम्यानुसंधानोक्तिस्तृतीयचतुर्थश्लोकाभ्यां तद्दृढतरदृढतमसाम्यानुसंधानफलपर्वद्वयोक्तिरित्येके । योगाभ्यासविधिश्चतुर्धा योगी चोक्तः । अथ प्रागुक्तमेव योगसाधनं विशदं ज्ञातुं पुनः—अर्जुन

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥

योऽयं देवमनुष्यादिभेदेन जीवेश्वरभेदेन चात्यन्तभिन्नतयैतावन्तं कालमनुभूतेषु सर्वेष्वात्मसु ज्ञानैकाकारतया परस्परसाम्येनाकर्मवश्यतया चेश्वरसाम्येन सर्वत्र समदर्शनरूपो योगस्त्वयोक्त एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ॥ ३३ ॥

तथाहि—

---

उवाच–योऽयमिति। देवेत्यारभ्यानुभूतेष्वित्यन्तमनाद्युपचितसुदृढविपरीतवासनया साम्यानुसंधानस्याशक्यत्वप्रदर्शनार्थम्। परस्परवैषम्यप्रदर्शनार्थं देवमनुष्यादिभेदेनेति। जीवेश्वरभेदेन कर्मवश्यत्वाकर्मवश्यत्वादिभेदेनेत्यर्थः। अत्यन्तभिन्नतयेति। नह्यत्र खण्डमुण्डादिवच्छेदकधर्ममात्रं किंतु विरुद्धस्वभावत्वमेव हि दृश्यत इति भावः। एतावन्तं कालमिति। कालाध्वनोरत्यन्तसंयोगे द्वितीया। अकर्मवश्यतया चेश्वरसाम्येनेति। चः सामान्यद्वयसमुच्चयार्थः। अकर्मवश्यतया चेश्वरसाम्येन चेति क्वचि(क्वचि)त्पाठः। तदा पूर्वश्चकार ईश्वरसाम्येऽपि ज्ञानैकाकारत्वसंग्रहार्थः। द्वितीयस्तु पूर्ववत्। ज्ञानपुरुषार्थवैषम्ययोः कर्मवैषम्यफलत्वात्। अकर्मवश्यतयेत्यनेनैव तयोरपि निवृत्तिसंग्रहः फलित इति तयोरनुपादानम्। त्वया प्रोक्तः स्वतः सर्वज्ञेन त्वयैव ह्येतदनुसंधातुं प्रवक्तुं च शक्यमिति भावः। अहं न पश्यामीति। अनादिभेदानुसंधानाजितचित्तश्चाहं न पश्यामीति भावः। स्थिरां स्थितिं चिरानुवृत्तामित्यर्थः। मधुसूदन रजस्तमोमयप्रबलविरोधिनिरसनशील त्वमेव मनोनिग्रहोपायमुपदिशेति भावः। चञ्चलं हि मन इति वाक्यानुसंधानेन मनस इत्यध्याहृतम् ॥ ३३ ॥

हीति निपातस्य यादवप्रकाशेनोक्ताद्विशेषणार्थत्वादपि स्फुटमुचितं चात्र हेत्वर्थमाह—तथा हीति। हेतुभूतं चलत्वं संप्रतिपन्नस्थले प्रदर्शनीयमतश्चलस्वभावत्वमत्र चञ्चलशब्दार्थ इति

---

१ ङ. च. °म्येन क°।

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

अनवरताभ्यस्तविषयेष्वपि स्वत एव चञ्चल पुरुषेणैकत्र स्थापयितुमशक्यं मनः पुरुषं बलात्प्रमथ्यान्यत्र चरति तस्य स्वाभ्यस्तविषयेष्वपि चञ्चलस्वभावस्य मनसस्तद्विपरीताकारात्मनि स्थापयितुं निग्रहं प्रतिकूलगतेर्महावातस्य व्यजनादिनेव सुदुष्करमहं मन्ये । मनोनिग्रहोपायो वक्तव्य इत्यभिप्रायः ॥ ३४ ॥

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

चलस्वभावतया मनो दुर्निग्रहमेवेत्यत्र न संशयः । तथाऽप्यात्मनो

---

दर्शयितुम्—अनवरतेत्यादिकम् । चलत्वफलमाह—पुरुषेणेति । प्रमाथि प्रमथनशीलम् । प्रमथ्य व्याकुलीकृत्वे (त्ये) त्यर्थः । बलवच्छब्दः प्रमथनक्रियाविशेषणं वा बलवत्त्वात्प्रमाथीति हेतुपरो वेत्यभिप्रायेण—बलात्प्रमथ्येत्युक्तम् । वैपरीत्ये दार्ढ्यमित्याह—दृढमन्यत्रेति । तस्येति परामर्शनीयमाह—स्वाभ्यस्तेति । तद्विपरीताकार इति । अनभ्यस्तपूर्वेत्यर्थः । स्थापयितुं स्थापनार्थम् । दार्ष्टान्तिके मनसि प्रदर्शितस्य चञ्चलत्वादेर्दृष्टान्ते विवक्षितत्वप्रदर्शनाय—प्रतिकूलेत्यादिकमुक्तम् । मनोनिग्रहोपायदुर्बलत्वज्ञापनाय वायोर्मन्दैर्निग्रहासंभावनार्थं च—व्यजनादिनेवेत्युक्तम् । एवं दुष्करत्ववचनं न प्रतिक्षेपार्थं किंतूपायपरिप्रश्नार्थमित्याह—मन इति ॥ ३४ ॥

अथार्जुनेन कण्ठोक्तमनुवदन्बुभुत्सितमुपायं श्लोकद्वयेनाऽऽह भगवान् । दुर्निग्रहं चलमिति पदद्वयमर्जुनोक्तप्रतिज्ञाहेत्वनुवादरूपमाह—चलस्वभावतयेति । असंशयमित्येतत्सत्यमितिवदर्धाङ्गीकारपरम् । तुशब्दाभिमतं विशेषं दर्शयति—तथाऽपीति । अनुकूलतयाऽभ्यासो हि तत्र प्रावण्यहेतुः स्यादित्यभ्यासविशेषं तत्फलं च व्यनक्ति—आत्मन इति । नित्यत्वज्ञानत्वानन्दत्वाक-

गुणाकारत्वाभ्यासजनिताभिमुख्येनाऽऽत्मव्यतिरिक्तेषु विषयेष्वपि दोषाकारत्वदर्शनजनितवैतृष्ण्येन च कथंचिद्गृह्यते ॥ ३५ ॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

असंयतात्मनाऽजितमनसा महताऽपि बलेन योगो दुष्प्राप एव। उपायतस्तु वश्यात्मना पूर्वोक्तेन मदाराधनरूपेणान्तर्गतज्ञानेन कर्मणा जितमनसा यतमानेनायमेव समदर्शनरूपो योगोऽवाप्तुं शक्यः ॥ ३६ ॥

अथ 'नेहाभिक्रमनाशोऽस्ति' इत्यादावेव श्रुतं योगमाहात्म्यं यथा-

---

मेववश्यत्वादयोऽत्र गुणाः। कथंचिदित्यवधानार्थम् ॥ ३५ ॥

एवं मनसो ग्रहण उपाय उक्तः। ततश्चैतस्याहं न पश्यामीत्युक्तमर्थं विषयविशेषे व्यवस्थापयति—असंयतेति श्लोकेन। मनोनिग्रहप्रकरणत्वात्, असंशयवश्यशब्दसमभिव्याहारसामर्थ्याच्चात्राऽऽत्मशब्दो मनोविषयः। महाबाहुसंबुद्धिसूचितमाह—महताऽपि बलेनेति। 'उपायेन तु यच्छक्यं न तच्छक्यं पराक्रमैः' इति भावः। मे मतिरित्यनेन निःसंदेहत्वं विवक्षितमित्याह—दुष्प्राप एवेति। उपायतस्तु वश्यात्मनेति व्याख्येयान्वयप्रदर्शनम्। तद्व्याख्यानं पूर्वेत्यादि। उक्तलक्षणं कर्ममात्रं मनोनिग्रहोपायः। अभ्यासवैराग्ये तु तस्यैवाङ्गतयोक्ते इति भावः। यतमानेन योगमभ्यस्यतेत्यर्थः ॥ ३६ ॥

एवं प्रागुक्तमेव योगसाधनं यथावच्छ्रुतम्। अथ प्रागुक्तमेव योगमाहात्म्यं श्रोतव्यं सर्वप्रकारान्वितं प्रपञ्चेन श्रोतुं पृच्छतीत्याह—अथेति। योगमाहात्म्यशब्देन संग्रहश्लोकस्थयोगसिद्धिशब्दो व्याख्यातः। सिद्धिकारणं हि माहात्म्यम्। सिद्धिश्चात्र शिथिलस्यापि योगस्य चिरतरमनेकपुण्यलोकावाप्तिः पुनर्योगयोग्ययोगिकुलसंभवस्तद्द्वारा पुनर्योगपौष्कल्यं ततश्चापवर्ग इत्येवंरूपा। एषा च सिद्धिरनितरसाधारणेन माहात्म्येन। ननु नेहाभिक्रमनाशोऽस्तीत्यादौ कर्मयोगस्य माहात्म्यमुक्तम्, अत्र तु तत्फलभूतस्याऽऽत्मावलोकनरूपयोगस्य, अतः कथं श्रुतमेवेत्युक्तं

वच्छेतुमन्तर्गतात्मज्ञानतया योगशिरस्कतया च कर्मयोगस्य माहात्म्यं तत्रोदितं तच्च योगमाहात्म्यमेव पृच्छति—

अर्जुन उवाच—

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

श्रद्धया योगे प्रवृत्तो दृढतराभ्यासरूपयत्नवैकल्येन योगसंसिद्धिमप्राप्य योगाच्चलितमानसः कां गतिं गच्छति ॥ ३७ ॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥

उभयविभ्रष्टोऽयं छिन्नाभ्रमिव कच्चिन्न नश्यति । यथा मेघशकलः पूर्वस्मान्महतो मेघाच्छिन्नः परं महान्तं मेघमप्राप्य मध्ये विनष्टो भवति तथैव कच्चिन्न नश्यति । कथमुभयविभ्रष्टता—अप्रतिष्ठो विमूढो ब्रह्मणः पथीति । यथावस्थितस्वर्गादिसाधनभूतकर्मफलाभिसंधिरहितस्यास्य पुरुषस्य फलसाधनत्वेन प्रतिष्ठा न भवतीति अप्रतिष्ठः । प्रक्रान्ते

तत्राऽऽह—अन्तर्गतेति । ततः किमित्यत्राऽऽह—तच्चेति । योगाङ्कुरभूतात्मज्ञानगर्भतया पुष्कलयोगस्वरूपसाधनतया च हि कर्मयोगस्य माहात्म्यं तत्रोदितम् । ततश्च योगोपाधिके तदङ्गभूतकर्मयोगमाहात्म्येऽभिहितेऽङ्गिभूतयोगमाहात्म्यमेवोक्तं भवतीति भावः । अयतिरित्यादिपदानामयथौचित्यात्क्रमभेदेनान्वयो दर्शितः । तत्र प्रवृत्तस्य हि ततश्चलितत्वं वाच्यम् । न तु तत्र श्रद्धोपेतमात्रस्य । अतः श्रद्धया तत्कार्यलक्षणेत्यभिप्रायेण—योगे प्रवृत्त इत्युक्तम् । उपेतशब्द एव वाऽत्र योगाधिगमपर इत्यभिप्रायः । योगसंसिद्धिमप्राप्य योगसिद्धेः पूर्वमेवेत्यर्थः । योगाच्चलितमानसः पुष्कलयोगं कर्तुमननुगुण इत्यर्थः । कां भोगमोक्षनिरयेषु कतमामित्यर्थः ॥ ३७ ॥

कां गतिं गच्छतीति सामान्यनिर्दिष्टमेव कच्चिदित्यादिना विवृतं दृष्टान्तेऽप्युभयभ्रष्टत्वप्रकारं दर्शयति—यथेति । उभयभ्रष्टताविवरणरूपत्वाद्विमूढो ब्रह्मणः पथीत्येक(त)स्याभिधानाच्च पारिशेष्यादप्रतिष्ठपदं सांसारिकफलसाधनकर्मांशाभिप्रायमित्याह—यथावस्थितेति । कर्म स्वरूपानुष्ठानप्रयासो(से) न किंचिन्न्यू-

१ क. ङ. °स्य संफ ।

ब्रह्मणः पथि विमूढस्तस्मात्पथः प्रच्युतः । अत उभयभ्रष्टतया किमयं नश्यत्येवोत न नश्यति ॥ ३८ ॥

एतं मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।

त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ३९ ॥

तमेनं संशयमशेषतश्छेत्तुमर्हसि । स्वतः प्रत्यक्षेण युगपत्सर्वं सर्वदा स्वत एव पश्यतस्त्वत्तोऽन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ३९ ॥

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।

नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥

श्रद्धया योगे[1] प्रक्रान्तस्य तस्मात्प्रच्युतस्येह चामुत्र च विनाशो न

---

नमभिसंधिवैषम्यात्तु निष्फलं संवृत्तमित्यभिप्रायः। विमूढो ब्रह्मणः पथीति ब्रह्मपथेऽज्ञानं न विवक्षितम्। ज्ञात्वोपक्रम्य निवृत्तं प्रति पृच्छ्यमानत्वात्। अतो विमोहकार्ययोगनिवृत्तिरत्र विमूढशब्देन लक्ष्यत इत्यभिप्रायेण—प्रक्रान्त इत्यादि प्रच्युत इत्यन्तमुक्तम्। ब्रह्मणः पथि ब्रह्मप्राप्त्युपायभूते योग इत्यर्थः। एतं मे संशयमिति निर्दिश्यमानस्य संशयस्यार्थसिद्धं शिरोन्तरमाह—किमयं नश्यत्येवेति ॥ ३८ ॥

अर्हसि—सर्वज्ञत्वकारुणिकत्वप्रियसखत्वादियुक्तस्त्वं योग्योऽसीत्यर्थः। कृष्णशब्देन त्वच्छब्देन चाभिप्रेतमाह—स्वत इति। करणाधीनमविशदानुमानादिमायं क्रमभावि कतिपयविषयं कादाचित्कमपि हि [न]त्वदन्येषां ज्ञानमिति भावः। एतेन—

यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः।
तं प्रणम्य हरिं शास्त्रं न्यायतत्त्वं प्रचक्ष्महे ॥

इति भगवन्नाथमुनिमिश्राणां वचनमनुसंहितम्। न ह्युपपद्यत इति युक्तिविरोधाभिप्रायम् ॥ ३९ ॥

अथोभयपुरुषार्थान्वयमुखेनोभयविभ्रष्टतां परिहरति—पार्थेति। तस्येत्यनेन परामृष्टमाकारद्वयमाह—श्रद्धयेति। इहामुत्रशब्दयोर्भू-

---

[1] ख. ग. घ. योगोपक्रा°।

विद्यते । प्राकृतस्वर्गादिभोगानुभवे ब्रह्मानुभवे, चाभिलषितानवाप्तिरूपः प्रत्यवायाख्योऽनिष्टावाप्तिरूपश्च विनाशो न विद्यत इत्यर्थः । नहि निरतिशयकल्याणरूपयोगकृत्कश्चित्कालत्रयेऽपि दुर्गतिं गच्छति ॥ ४० ॥

कथमयं भविष्यतीत्यत्राऽऽह—

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

यज्जातीयभोगाभिकाङ्क्षया योगात्प्रच्युतोऽयमतिपुण्यकृतां प्राप्य-

---

लोकस्वर्गलोकादिपरत्वं परिहृत्यात्र विवक्षितमाह—प्राकृतेति । यथा मुमुक्षोः पुण्यमपि पापकोटौ निक्षिप्यते तथा तस्य स्वर्गादिकमपीहशब्दनिर्देशार्हं प्रकरणसंगतं चेति भावः । विनाशशब्दः प्रत्यवायो न विद्यत इति प्रागुक्तमप्यत्र संगृह्णातीत्याह—प्रत्यवायाख्य इति । कल्याणशब्दस्यात्र प्रस्तुतविशेषपर्यवसानव्यञ्जनायाऽऽह—निरतिशयेति । गच्छतीत्यनवच्छिन्नवर्तमाननिर्देशात्कालत्रयेऽपीत्युक्तम् । अनेककालोपचितानन्तपुण्यसाध्यत्वेन प्रागपि दुष्कृताभावः, इदानीं च निरतिशयकल्याणरूपयोगे प्रवृत्तिः, परस्तादपि पुण्यलोकावाप्तियोगसिद्ध्यपवर्गप्रभृतिभिरिति कालत्रयेऽपि दुर्गत्यभावः । दुर्गतिर्निरयोऽनिष्टमात्रं वा । हि हेतौ प्रसिद्धौ वा । नहि योगे प्रक्रान्तस्य कस्यचित्कस्मिंश्च काले दुर्गतिप्राप्तिः कुतश्चित्प्रमाणात्सिद्धेति भावः ॥ ४० ॥

उभयभ्रष्टतापरिहारायोक्तमुभयान्वयं प्रपञ्चयति—प्राप्येत्यादिना परां गतिमित्यन्तेन । योगभ्रंशहेतुपुण्यकृल्लोकप्राप्तिकृतातिशयितप्राकृतपुरुषार्थयो(भो)गे कर्माख्यसाधनरहितत्वेऽपि योगमाहात्म्यस्यैव साधनत्वं भोगावसानहेतुं वैतृष्ण्यमुत्पाद्य पुनर्योगमाहात्म्यस्यैव योगारम्भयोग्यकुलोद्भवहेतुत्वं च प्रदर्शयति—यज्जातीयेति । सर्वेषां मात्रया पुण्यकृत्त्वसद्भावेऽपि केषुचित्पुण्यकृच्छब्दस्तेषामतिशयितपुण्यकृत्त्वनिबन्धन इत्याह—अतिपुण्यकृतामिति । तज्जाती-

---

१ क. ख. ग. घ. ङ. °तां लोका° ।

ल्लोकान्प्राप्य तज्जातीयानतिकल्याणान्भोगाञ्ज्ञानोपाययोगमाहात्म्यादेव भुञ्जानो यावत्तद्भोगतृष्णावसानं शाश्वतीः समास्तत्रोषित्वा तस्मिन्भोगे वितृष्णः शुचीनां श्रीमतां योगोपक्रमयोग्यानां कुले योगोपक्रमे भ्रष्टो योगमाहात्म्याज्जायते ॥ ४१ ॥

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

परिपक्वयोगश्चलितश्चेद्योगिनां श्रीमतां योगं कुर्वतां स्वयमेव योगोप-

---

यत्वेऽपि ततोऽतिशयितत्वाय—अतिकल्याणानित्युक्तम् । दृश्यते ह्येकजातीयेष्वपि रूपरसगन्धादिषु भूलोकेऽपि तारतम्यमेवं दिव्यादिव्यभेदः । यदि पुराकृतैः पुण्यैः पुण्यलोकावाप्तिः पापैरपि पुराकृतैः पापलोकप्राप्तिः स्यादित्यत्राऽऽह—योगमाहात्म्यादेवेति । धर्मार्थसंपादितद्रव्यस्य भोगार्थविनियोगवदिति भावः । नह्यसौ पुण्यक्षयादिव योगमाहात्म्यक्षयान्निवर्तते तस्याक्षयत्वादिति दर्शयितुम्—यावदित्यादिकमुक्तम् । विषमविपाकरागमयकर्ममूलसत्त्वोन्मेषकृतविवेकोदयवशान्निरन्तरभोगप्रकर्षादिवशाच्च वैतृष्ण्यसंभवः सौभरिप्रभृतिवृत्तान्तेषु भाव्यः । शुचित्वं श्रीमत्त्वं चादृष्टद्वारा दृष्टद्वारा च योगोपकारकमित्याह—योगोपक्रमयोग्यानामिति । योगभ्रष्टस्य स्वान्वयाद्योगोपक्रमानुगुणस्वभावानामित्यर्थः । अथवा योगिनामेव कुल इति, इतोऽप्यतिशयितजन्मनो वक्ष्यमाणत्वाच्छुचीनामित्यादिविशेषसामर्थ्याच्च—योगोपक्रमे भ्रष्ट इत्युक्तम् ॥ ४१ ॥

अथवेति व्यवस्थितविकल्पार्थम् । अतिशयितजन्मनिर्देशोऽतिशयितहेतुसाकाङ्क्ष इति दर्शयितुम्—परिपक्वयोगश्चलितश्चेदित्युक्तम् । योगिनां कुल इति कस्यचिद्योगिनः संताने प्रसूतिर्नोच्यते तावन्मात्रस्यात्यन्तयोगोपकारकत्वाभावात् । किंतूपदेशार्हत्वाय योगिनां सतामेव पुत्रादित्वेन जायत इति दर्शयितुम्—योगं कुर्वतामिति वर्तमाननिर्देशः । शुचीनां श्रीमतामित्यन्यस्मादुपदेष्टुर्योगाधिगमं प्रत्यानुगुण्यमात्रमुक्तमिह तु धीमतामिति वचनात्तेषामेवोपदेष्टृत्वयोग्यतोच्यत इत्याह—स्वयमेवेति । पशुर्मनुष्यः,

देष्टॄणां कुले भवति । तदेतदुभयविधं योगयोग्यानां योगिनां च कुले जन्म लोके प्राकृतानां दुर्लभतरमेतत्तु योगमाहात्म्यकृतम् ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

तत्र जन्मनि तमेव पौर्वदेहिकं योगविषयं बुद्धिसंयोगं लभते । ततः सुप्तप्रबुद्धवद्भूयः संसिद्धौ यतते । यथा नान्तरायहतो भवति तथा यतते ॥ ४३ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

तेन पूर्वाभ्यासेन पूर्वेण योगविषयेणाभ्यासेन स योगभ्रष्टो ह्यव-

---

ये च वैष्णवसंश्रयाः, तव दास्यसुखैकसङ्गिनामित्यादिप्रतिपादितवैभवयुक्तेर्महत्त्वम् । पूर्वश्लोकस्थगेहशब्दतुल्यार्थत्वादत्रापि कुलशब्दो गृहवाची । एतदुभयविधमिति । साधारणस्येदृशमित्यनुवादस्योभयान्वयित्वमेव ह्युचितमिति भावः । प्रकृतिमात्रदर्शिजनविषयेण लोकशब्देन मुमुक्षुव्यतिरिक्तविवक्षामाह— प्राकृतानामिति । दुर्लभतरं कथं लभ्येतेत्यत्रेदमशब्दाभिप्रेतमाह— एतत्त्विति ॥ ४२ ॥

ततः किमायातमपवर्गस्य पूर्वदेहारब्धस्य योगस्य शिथिलत्वाद्योगिकुलजन्ममात्रस्य च मोक्षहेतुत्वाभावादित्यत्रोत्तरम्— तत्र तमिति । तत्रशब्दस्य सप्तमीसाम्याद्देहविषयत्वभ्रमव्युदासाय पूर्वोक्तवाक्यार्थेनान्वयमाह—तत्र जन्मनीत्यादि । पूर्वदेहे संस्कारहेतुबुद्धेरपि सद्भावात्तद्व्यवच्छेदाय तमित्युक्तमित्याह— योगविषयमिति । ततः बुद्धिसंयोगादित्यर्थः । जन्मान्तरे समस्तसंस्कारतिरोधानस्य दृश्यमानत्वात्कथमिदमुपपद्यत इति शङ्कायां पुण्यकृतां तथाविधः संस्कारभ्रंशो नास्तीति प्रदर्शनाय— सुप्तप्रबुद्धवदिति दृष्टान्त उक्तः । संसिद्धावित्यत्रोपसर्गाभिप्रेतमाह— यथेति ॥ ४३ ॥

तेनेत्यस्यार्थो योगविषयेणेति । तेनैवेत्यवधारणफलितमाह—

शोऽपि योग एव ह्रियते प्रसिद्धं ह्येतद्योगमाहात्म्यमित्यर्थः । अप्रवृत्त-योगो योगजिज्ञासुरपि ततश्चलितमानसः पुनरपि तामेव जिज्ञासां प्राप्य

---

योग एव ह्रियत इति । हिशब्दार्थमाह–प्रसिद्धमिति । प्रसिद्धिश्चाऽऽदिभरतविदुरभीष्मादिवृत्तान्तेषु द्रष्टव्या । पार्थकुरुनन्दनशब्दाभ्यामुभयकुलशुद्ध्यादिसूचकाभ्यामर्जुनस्यादि(पि) शुचीनां श्रीमतामित्यन्वयः सूचितः । जिज्ञासुरित्यादिप्रकरणवशाद्वासनया विच्छिन्नघटत्वप्रदर्शनार्थमित्याह—अप्रवृत्तेति । जिज्ञासुरपीति सन्नन्तापिशब्दयोः सामर्थ्यादप्रवृत्तयोग इत्युक्तम् । यद्यपि 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा० सू० २ । ३ । ६९) इति कर्मणि षष्ठी (ष्ठ्या) निषेधस्तथाऽप्यत्र संबन्धसामान्यविवक्षया योगस्येति षष्ठी । योगिनश्चलितस्य योगः प्रक्रान्तयोगस्य चलितस्य तत्प्रक्रमः, योगमारुरुक्षोश्चलितस्याऽऽरुरुक्षेति तत्तदवस्थारूपं प्रतिसमाधानमिति भावः । कर्मयोगादिकं कर्मयोगज्ञानयोगावित्यर्थः । यद्वा कर्मयोग उपक्रमो यस्याऽऽत्मसाक्षात्काररूपस्य योगस्य स तथोक्तः। ब्रह्मशब्दोऽत्र न परब्रह्मविषयः । तस्यातिवर्तनीयत्वानुपपत्तेः । शब्दब्रह्मेतिविशेषणायोगाच्च । अत एव न जीवविषयः। नापि वे[द]विषयः। तस्याप्यतिवर्तनीयत्वानिरूपणात् । नापि लक्षणया वेदप्रतिपाद्यकर्मविषयः, तत्फलविषयो वा। तत्रापि वेदे ब्रह्मशब्दस्य गौणः प्रयोगः, तदस्य परस्ताल्लक्षणा, उपनिषदंशात्संकोच इति बहुदोषप्रसङ्गात्। नापि शब्दजन्यं ज्ञानमत्र शब्दब्रह्म । योगं जिज्ञासोस्तदतिवृत्तेर्विरुद्धत्वात् 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्' इत्यादिप्रकोपप्रसङ्गाच्च । योगमारुरुक्षुः पुरुषः शब्दश्रवणजनितज्ञानमात्रवतः पुरुषादधिकः—

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥

इतिवदिति चेत्तदपि न । अध्याहाराद्यापातात्, अप्रस्तुताभिधानप्रसङ्गात्, पूर्वोत्तरवाक्यानन्वयाच्च । अतः प्रकृतावपि ब्रह्मशब्दप्रयोगस्या[न्य]त्रापि प्राचुर्यादतिवर्तनीयत्वौचित्याच्च ब्रह्मशब्दोऽत्र, प्रकृतिविषयः । तस्या एव भोग्यभोगोपकरणभोग-

कर्मयोगादिकं योगमनुष्ठाय शब्दब्रह्मातिवर्तते । शब्दब्रह्म देवमनुष्यपृथिव्यन्तरिक्षस्वर्गादिशब्दाभिलापयोग्यं ब्रह्म प्रकृतिं प्रकृतिसंबन्धाद्विमुक्तो देवमनुष्यादिशब्दाभिलापानर्हं ज्ञानानन्दैकतानमात्मानं प्राप्नोतीत्यर्थः ॥ ४४ ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

यत एवं योगमाहात्म्यं ततोऽनेकजन्मार्जितपुण्यसंचयैः संशुद्धकिल्बिषः संसिद्धः संजातः प्रयत्नाद्यतमानस्तु योगी चलितोऽपि पुनः परां गतिं यात्येव ॥ ४५ ॥

---

स्थानाख्यपरिणामप्रदर्शनाय शब्दब्रह्मव्यपदेशः ‘ सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वा ’ इत्यादिश्रुतेः । विभक्तरूपा हि प्रकृतिर्देवादिशब्दाभिलप्या । तदेतदखिलमभिप्रेत्य— देवमनुष्येत्यादिकमुक्तम् । प्रकृत्यतिवर्तनशब्दार्थं फलं च दर्शयति—प्रकृतिसंबन्धादिति । देवमनुष्येत्यादिना पुमान्न देवो न नर इत्यादिकं स्मारितम् । ज्ञानानन्दैकतानमित्यनेन च ‘ ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः ’ इत्यादिकम् ॥ ४४ ॥

तदेवं योगभ्रष्टस्य पुनः संसिद्धौ यत्नपर्यन्तमुक्तम् । अथ तत एव तस्याऽऽत्मप्राप्तिलक्षणपरमपुरुषार्थयोगो विधीयते—प्रयत्नादिति । तत इति पदं यथास्थानान्वये प्रयोजनाभावात्प्रकृतहेतुपरमाह—यत इति । अनेकजन्मसंसिद्धः, अनेकैर्जन्मभिः सम्यग्योगयोग्यो जात इत्यर्थः । तत्र हेतुः संशुद्धकिल्बिषत्वम् । प्रयत्नाद्यतमानस्तु, इन्द्रियनियमनादिप्रयत्नाद्योगे यतमान इत्यपुनरुक्तिः । अथवा धिया यतमान इत्यर्थः । तुशब्दद्योतितं पूर्वोक्तं व्यञ्जयितुम्—चलितोऽपीत्युक्तम् । चलितोऽपि पुनरिति वा ततःशब्दव्याख्या । परां गतिमिति योग एव वा तत्साध्यात्मप्राप्त्यादिर्वोच्यते ॥ ४५ ॥

अतिशयितपुरुषार्थनिष्ठतया योगिनः सर्वस्मादाधिक्यमाह—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥

केवलतपोभिर्यः पुरुषार्थः साध्यत आत्मज्ञानव्यतिरिक्तैर्ज्ञानैश्च यो यश्च केवलैरश्वमेधादिभिः कर्मभिस्तेभ्यः सर्वेभ्योऽधिकपुरुषार्थसाधनत्वाद्योगस्य तपस्विभ्यो ज्ञानिभ्यः कर्मिभ्यश्चाधिको योगी। तस्माद्योगी भवार्जुन ॥ ४६ ॥

तदेवं परविद्याङ्गभूतं प्रजापतिवाक्योदितं प्रत्यगात्मदर्शनमुक्तम्। अथ परविद्यां प्रस्तौति—

---

एवंविधं योगस्य माहात्म्यं तपःप्रभृतिषु न कस्यचिदप्यस्ति। अतस्तपस्विप्रभृतिभ्यो योगी समधिक इति योगं योगिनं च प्रदर्शयञ्जीवात्मयोगोपदेशमुपसंहरतीत्यभिप्रायेणाऽऽह—अतिशयितेति। योगिनोऽपि तपोज्ञानकर्मणां सद्भावात्तद्व्यवच्छेदाय केवलादिशब्दः। आत्मज्ञानव्यतिरिक्तैर्ज्ञानैरिति। सन्ति हि तत्तद्योगशास्त्रोक्तानि औपनिषदानि च देवतान्तरचन्द्रसूर्यादिग्रहप्राणेन्द्रियविषयाणि ज्ञानानि। तपःशब्दार्थात्कर्मशब्दार्थस्य वैषम्यं दर्शयितुम्—अश्वमेधाद्युपादानम्। तपःप्रभृतीनां योगस्य च फलद्वारा तारतम्यमिह विवक्षितमिति दर्शयितुम्—पुरुषार्थाभिधानम् ॥ ४६ ॥

एवं सर्वस्मादाधिक्ये जीवात्मयोगिनः प्रतिपादिते ततः परमपुरुषार्थो नास्तीति श्रोता चलितबुद्धिः स्यादिति शङ्कमानो भूमविद्यामिव स्वयमेव ततोऽप्यतिशयितपुरुषार्थसाधकं तदङ्गिनं स्वविषयभक्तियोगं मध्यमषट्केन प्रतिपादयितुं स्वयमेव प्रस्तौतीत्याह—तदेवमिति। उक्तैः प्रमाणतर्कैरुपपादितप्रकारेणेत्यर्थः। संगत्यर्थं प्रथमषट्कस्य मध्यमषट्कशेषत्वमाह—परविद्याङ्गभूतमिति। तत्र प्रमाणद्योतनम्—प्रजापतिवाक्योदितमिति। प्रागेवेदं प्रपञ्चितम्। एतेन परिशुद्धप्रत्यगात्मदर्शनमात्रस्य परमयोगत्वादिकं वदन्तोऽन्तिमयुगवेदान्तिप्रभृतयो निरस्ताः। परविद्यां परां विद्यामित्यर्थः। अथ परा यया तदक्षरमधिगम्यत इत्यादिवत्। यद्वा परमात्मनो विद्यामित्यर्थः। प्रस्तौति। प्रस्तावमात्रमिदं

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योग-
शास्त्रे श्रीकृष्णार्जुनसंवादे योगाभ्यासयोगो
नाम षष्ठोऽध्यायः ॥ ६ ॥

---

योगिनामिति पञ्चम्यर्थे षष्ठी । सर्वभूतस्थमित्यादिना चतुर्विधा योगिनः प्रतिपादितास्तेष्वनन्तर्गतत्वाद्वक्ष्यमाणस्य योगिनो न

---

प्रपञ्चो ह्यनन्तरं भविष्यतीति भावः । तपस्विभ्योऽधिक इत्यादिप्रकरणादत्रापि योगिभ्य इत्यर्थोऽभिप्रेत इति मन्वान आह—योगिनामिति । पञ्चम्यर्थे षष्ठी । संबन्धसामान्यषष्ठ्याः संबन्धविशेषे विवक्षावशात्पर्यवसानमिति भावः । नन्वेवं किमर्थं परिक्लिश्यते निर्धारणे षष्ठ्यत्र संभवति । तथाहि—प्रागुक्तेषु 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः' इति योगी कश्चिदुक्तः । अत्रापि श्रद्धावान्भजते यो मामिति स एव प्रत्यभिज्ञायते । अतस्तन्निर्धारणेन युक्ततम इति प्रशंसाऽत्र क्रियते । युक्ततम इत्यत्र प्रत्ययश्च निर्धारणार्थत्वसूचकः । तस्मान्नासौ पञ्चम्यर्थे षष्ठीति । तत्राऽऽह—सर्वभूतस्थमिति । एतेन पूर्वश्लोके योगीत्येकवचननिर्देशेऽप्यत्र बहुवचनेनानुवादस्य विषयोऽपि दर्शितः । ततः किमित्यत्राऽऽह—तेष्विति । अयमभिप्रायः—परमात्मोपासको हि योगी मध्यमषट्केन वक्ष्यते । तस्य च प्रस्तावोऽत्र क्रियते । न चासौ प्रागुक्तः । 'सर्वभूतस्थितं यो माम्' इत्यादेश्च साम्यानुसंधानविषयत्वं प्रागेव प्रतिपादितमतो न तस्यात्र प्रत्यभिज्ञा । किंचाऽऽत्मौपम्येनेति श्लोके सर्वभूतस्थितमित्याद्युक्तयोगिनोऽपि परतरो योगी प्रागुक्तः । ततश्च सर्वभूतस्थितमित्यादिनोक्तयोगिनोऽत्र सर्वस्मादाधिक्यप्रतिपादने पूर्वेण विरोधः स्यादतोऽस्य योगिनस्तेष्वन्यतमत्वायोगान्न निर्धारणे षष्ठीयम् । तदिदमुक्तम्—तेष्वनन्तर्गतत्वादिति । ननु पूर्वोक्तान्वक्ष्यमाणं च

निर्धारणे षष्ठी संभवति। अपि सर्वेषामिति सर्वशब्दनिर्दिष्टास्तपस्विप्रभृतयस्तत्राप्युक्तेन न्यायेन पञ्चम्यर्थो ग्रहीतव्यः। योगिभ्योऽपि सर्वेभ्यो वक्ष्यमाणो योगी युक्ततमस्तद्पेक्षयाऽवरत्वे तपस्विप्रभृतीनां योगिनां च

---

योगिनं सामान्येन संगृह्य तेष्वन्यतमस्य वक्ष्यमाणस्य निर्धारणं किं न स्यात्। मैवम्। प्रतिपन्नेषु केषुचित्प्रतिपन्न एव हि कश्चिन्निर्धार्यः। अन्यथाऽतिशयविधानार्थमनुवादायोगात्। न च वक्ष्यमाणो योगी श्रोतुरर्जुनस्येतः पूर्वं प्रतिपन्नः। इदमपि वक्ष्यमाणस्येति पदेन सूचितम्। अतः प्रागुक्तेभ्योऽधिकस्य वक्ष्यमाणस्य योगिनः प्रस्तत्व एवार्ये भवितुमर्हति। ततश्च पञ्चम्यर्थत्वे विवक्षणीये न निर्धारणे षष्ठी संभवतीति। योगिनामपि सर्वेषामिति सामानाधिकरण्येन योजनायामपिशब्दस्य मन्दप्रयोजनता स्यात्। योगिनां हि प्रशंसा तदा सूचिता स्यात्। सा च प्रागेव प्रतिपन्नत्वादत्र न सूचनमपेक्षते। समुद्रादपि विपुलोऽयमित्यादिव्यवहारेष्विव विपरीतप्रतीतिश्च स्यात्। अपिशब्दस्य च समुच्चयार्थत्वं प्रसिद्धिप्रकर्षवदत्रापि संभवदपरित्याज्यम्। योगिनामपीत्यनेनैव गतार्थत्वेन सर्वशब्दश्च नात्यन्तापेक्षितः। यदि चापेः समुच्चयार्थत्वं सर्वशब्दस्य च समुच्चेतव्यार्थान्तरपरत्वं संभवति अतस्तदेवोपादातुमुचितम्। संभवन्ति चात्र सर्वशब्दार्थतया तपस्विप्रभृतयः प्रसक्ताः। ते च न योगिशब्देन संगृहीताः। मुख्ये संभवति चेन(न्न) तल्लक्षणा युक्ता। योगिभ्यो न्यूनानामपि तेषामुपादानं दृष्टान्तार्थतयाऽत्यन्तोचितमेव। योगिनां तपस्विप्रभृतीनां च समुच्चयः परत्वसाम्यप्रतिपादनोपयिकत्वादत्यन्तापेक्षितः। तदेतत्सर्वमभिप्रयन्नाह—अपि सर्वेषामिति। उक्तेन न्यायेनेति। प्रकरणवशाचेष्वनन्तर्गतत्वादन्तर्भावयितुमशक्यत्वाच्चेति भावः। तपस्व्यादिसंग्रहाभिप्रायं वक्तुं फलितमन्वयमाह—योगिभ्यश्चेति। युक्तम इति। अधिक इत्यर्थः। यद्वा—योगिनां तपस्विप्रभृतीनां च यथास्वमुपाययुक्तत्वात्तेभ्यः सर्वेभ्योऽयमतिशयितोपाययुक्त इत्यर्थः। अथवा योग्यतम इत्यर्थः। एतदखिलमभिप्रेत्य श्रेष्ठतम इति वक्ष्यति। योगिभ्योऽपि न्यूनतमाः (मांस्त) पस्विप्रभृतीनत्र संगृह्य दृष्टान्तार्थतां विशदयति—तदपेक्षयेति। लौकि-

न कश्चिद्विशेष इत्यर्थः । मेर्वपेक्षया सर्षपाणामिव । यद्यपि सर्षपेष्वन्योन्य-न्यूनाधिकभावो विद्यते तथाऽपि मेर्वपेक्षयाऽवरत्वनिर्देशः समानः । मत्प्रियत्वातिरेकेणानन्यसाधारणस्वभावतया मद्भक्तेनान्तरात्मना मनसा बाह्याभ्यन्तरसकलवृत्तिविशेषाश्रयभूतं मनो ह्यन्तरात्माऽत्यर्थमत्प्रियत्वेन

---

कोदाहरणेन द्रढयति—मेर्वपेक्षयेति । नन्ववरत्वे न कश्चिद्विशेष इत्ययुक्तम् । तथा सति तपस्विप्रभृतीनां योगिनां चात्यन्तसमत्वप्रसङ्गात् । अस्ति च विशेषो मेर्वपेक्षयाऽपि सर्षपाणां मात्रया न्यूनाधिकभावेनावरत्वावरतरत्वरूपस्तत्राऽऽह—यद्यपीति । नेदानीं मिथस्तारतम्यं निषिध्यते । किंतु मिथस्तारतम्यवतामप्यतिशयितापेक्षया न्यूनत्वमात्रमविशिष्टम् । तावतैव चावरत्वव्यवहारोऽप्यविशिष्टो जायत इति भावः । मत्प्रियत्वातिरेकेणेति । अहं प्रियः प्रीतिविषयो यस्य स मत्प्रियस्तस्य भावस्तत्त्वं भक्त्यतिरेकेणेत्यर्थः । अनन्यसाधारणस्वभावतयेति । स्वाभिमतभोग्यमेव हि धारकमिति भावः । बाह्येन्द्रियशरीराद्यपेक्षयाऽत्र मनसोऽन्तरात्मशब्दवाच्यत्वम् । भक्तिकाष्ठादशायां श्रद्धाशब्दस्येच्छादिमात्रविषयत्वमनुचितमत इच्छाकार्यत्वराविषयतामिच्छायाश्च त्वराहेतुं तीव्रदशापत्तिं दर्शयति—अत्यर्थेत्यादिना । भजनीयतया निर्दिष्टस्य श्रुतिस्मृत्यादिशतैर्वक्ष्यमाणषट्कद्वयेन चोक्तानुपासनोपयुक्ताकारान्मामित्यनेन विवक्षितान् दर्शयति—विचित्रेत्यादिनाऽऽप्याययन्तमित्यन्तेन । तत्रापि वाङ्मनसापरिच्छेद्यस्वरूपस्वभावमित्यन्तानि विशेषणानि परत्वौपयिकानि । ततः पराणि तु सौलभ्योपयिकानीति विवेकः । तदुभयाभिधानं चातिसुलभस्य तृणादेरतिदुर्लभस्य मेर्वादेश्चान्यतरवैकल्येनानुपादेयत्वात् । कारणवाक्यस्थानां सद्ब्रह्मात्मादिसामान्यशब्दानामनन्यथासिद्धविशेषोपस्थापकनारायणपदार्थपर्यवसानमभिप्रयन् 'जन्माद्यस्य यतः' [ ब्र० सू० १ । १ । २ ] इति सूत्रनिरूपितार्थेन यतो वा इमानीत्यादिना वाक्येन प्रतिपादितं जिज्ञास्यस्य ब्रह्मणो लक्षणं दर्शयिष्यमाणो जगत्कारणत्वैश्वर्यादिवैभवे धवलज-

मया विना स्वधारणालाभान्मद्गतेन मनसा श्रद्धावानत्यर्थमत्प्रियत्वेन क्षणमात्रवियोगासहतया मत्प्राप्तिप्रवृत्तौ त्वरावान्यो मां विचित्रानन्तभोग्य-भोक्तृवर्गभोगोपकरणभोगस्थानपरिपूर्णं निखिलजगदुदयविभवलयलीलमस्पृष्टाशेषदोषानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यसंख्येयकल्याणगुणगणनिधिं स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूपं वाङ्मनसापरिच्छेद्यस्वरूपस्वभावमपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यमहोदधिमनालोचितविशेषाशेषलोकशरण्यं प्रणतार्ति-

---

यसारथौ दर्शयति—विचित्रेति । कारणत्वमुखेन लीलाविभूतियोगः प्रतिपादितः । अथ कारणत्वशङ्कितदोषवत्त्वगुणवैकल्यशङ्कानिवृत्त्यर्थं शोधकवाक्यादिसिद्धमुभयलिङ्गत्वं दर्शयति—अस्पृष्टेति । अस्पृष्टाशेषदोषेत्यस्य गुणविशेषणत्वे दोषसामानाधिकरण्याभावो विवक्षितः । गुणिविशेषणत्वे दोषात्यन्ताभावः । अथ शुभाश्रयाप्राकृतविग्रहविशिष्टत्वप्रतिपादनमुखेन दिव्याभरणायुधमहिषीपरिजनस्थानादियोगमुपलक्षयन् नित्यविभूतियोगं सूचयति—स्वाभिमतेति । एवमुभयविभूतियोगादुभयलिङ्गत्वाच्च फलितं परत्वातिशयमाह—वाङ्मनसेति । स्वरूपमीश्वरत्वादिकमानन्दत्वादिकं वा । स्वभावस्तु निरूपितस्वरूपविशेषका धर्माः । उक्तं परत्वमेव स्वरूपं वक्ष्यमाणं सौलभ्यं तु स्वभाव इत्येके । अवतारसौलभ्यहेतूनाह—अपारेत्यादिना । प्रत्येकमेषां महोदधिम् । 'स्त्रियो वैश्यास्तथा शूद्राः' 'अभयं सर्वभूतेभ्यः' 'सर्वलोकशरण्याय' 'यदि वा रावणः स्वयम्' इत्यादिसिद्धं दर्शयति—अनालोचितेति । विशेषो जातिगुणवृत्तविद्यादिरूपः । उक्ताः कारुण्यादिगुणा एवंविधशरण्यत्वे हेतवः । शरण्यशब्देनाभिगमनीयत्वमुक्तम् । तत्फलभूतविरोधिनिरसनशीलतामाह—प्रणतार्तिहरमिति । सर्वसाधारणतया गुणान्तरैः सह निर्दिष्टमपि वात्सल्यगुणं भूयोऽपि विशेषसंबन्धानुसंधाय विशेषतोऽवतारेषु कार्यकरत्वज्ञापनाय सापराधानामभीतये ज्ञानादिरहितदशायामपि स्वयमेव रक्षक इति प्रदर्शनाय तत्प्रतिबन्धकभूतपरमात्मवैमुख्य-

इरमाश्रितवात्सल्यैकजलधिमखिलमनुजनयनविषयतां गतमजहत्स्वस्व-भावं वसुदेवगृहेऽवतीर्णमनवधिकातिशयतेजसा निखिल जगद्भासय-न्तमात्मकान्त्या विश्वमाप्याययन्तं भजते सेवत उपास्त इत्यर्थः । स मे युक्ततमो मतः स सर्वेभ्यः श्रेष्ठतम इति सर्वं सर्वदा यथावस्थितं स्वत एव साक्षात्कुर्वन्नहं मन्ये ॥ ४७ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
योगाभ्यासयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

निवृत्तये च पृथगनुसंधत्ते—आश्रितवात्सल्यजलधिमिति । उक्तका-रुण्यादिगुणगणफलितं प्रकृतावतारस्यावतारान्तरवैलक्षण्यमाह—अखिलेति । 'अजोऽपि सन्नव्ययात्मा' इत्यादिना पूर्वोक्तं स्मार-यति—अजहदिति । अवतारविशेषमाश्रितो हि मामित्याहेत्यभि-प्रायेणाऽऽह—वसुदेवेति । तेजःकान्तिरूपावतारविग्रहगुणविशेषा-भ्यामवतारदशायामेव परत्वसौलभ्यव्यञ्जकाभ्यामुपासकचित्ताक-र्षणमभिप्रेत्याऽऽह—अनवधिकेति । अत्रापि भास्वरत्वं तेजस्तत एवानभिभवनीयत्वमपि सिद्धम् । कान्तिस्तु रामणीयकं लाव-ण्यापरपर्याया चन्द्रिकाकल्पप्रभा वा । अत एव ह्याप्याययन्तमि-त्युक्तम् । एतेन विश्वमाप्याययन्कान्त्येत्यादिकं स्मारितम् । भजत इत्यस्य विवक्षितं वक्तुं धातुपाठपठितमर्थं तावद्दर्शयति—सेवत इति । सेवा भक्तिरुपास्तिरिति नैघण्टुकप्रसिद्धिमाश्रित्य विवक्षितं श्रुतिप्रसिद्धं स्थापयति—उपास्त इत्यर्थ इति । योगि-नामपि सर्वेषाम्, इत्युक्तवर्गद्वयं संकलय्य—सर्वेभ्य इत्युक्तम् । मे मत इत्यस्मदस्मच्छब्दाभिप्रेतमाह—सर्वमित्यादिना । अत्रापि यो वेत्ति युगपदित्यादिकमनुसंहितम् ॥ ४७ ॥

इति श्रीमत्कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतौ श्रीमद्रामानुजमुनिविरचितश्रीमद्भगवद्गीता-
भाष्यटीकायां तात्पर्यचन्द्रिकायां षष्ठोऽध्यायः ॥ ६ ॥

# अथ सप्तमोऽध्यायः ।

## मध्यमं षट्कम् ।

प्रथमेनाध्यायषट्केन परमप्राप्यभूतस्य परस्य ब्रह्मणो निरवद्यस्य निखिलजगदेककारणस्य, सर्वज्ञस्य सर्वभूतस्य सत्यसंकल्पस्य महाविभूतेः श्रीमतो नारायणस्य प्राप्त्युपायभूतं तदुपासनं वक्तुं तदङ्गभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनमु-

---

षट्कसंगतिमाह—प्रथमेनेति । परमेत्यादिना वक्तुमित्यन्तेन द्वितीयषट्कार्थ उक्तः । ततः परं प्रथमषट्कार्थः । प्रथमेनाध्यायषट्केनोक्तमित्यन्वयः । मामुपेत्येत्यादीनामर्थं दर्शयति—परमप्राप्यभूतस्येति । तेन परिशुद्धजीवमात्रव्यावर्तनम् । परमप्राप्यत्वे हेतुः परब्रह्मत्वादिकं परं ब्रह्म परं धामेत्यादि वक्ष्यति । पुरुषोत्तमत्वप्रकरणादीनामर्थो निरवद्यत्वम् । एतेनाचिद्गता विकारादयश्चिद्गताः क्लेशादयश्च परिहृताः । अहं सर्वस्य प्रभव इत्यादेरर्थमाह—निखिलेति । चिदचिदात्मकं सर्वं जगत्प्रति निमित्तोपादानभूतस्येत्यर्थः । एवं परमप्राप्यस्यैव कारणत्वप्रतिपादनाद्व्योमातीतमतं निरस्तम् । निमित्तोपादानतोपयुक्तं मत्तः परतरमित्याद्यभिप्रेतं सर्वज्ञत्वादिकम् । सर्वभूतस्य सर्वान्तर्यामितया सर्वशरीरकस्येत्यर्थः । सर्वं समाप्नोषि ततोऽसि सर्व इति हि वक्ष्यति । भूमिराप इत्यादिना विभूत्यध्यायादिना च वक्ष्यमाणं महाविभूतित्वं नारायणशब्दनिर्वचनमपि परमप्राप्यभूतस्य महाविभूतेरित्यादिना सूचितम् । एतदुक्तं भवति—

> परत्वान्निरवद्यत्वात्पितृत्वाद्धितवेदनात् ।
> अन्तरात्मतया दोषप्रतिक्षेपक्षमत्वतः ॥
> भोगलीलार्थनिःसीमविभूतिद्वययोगतः ।
> श्रीमत्त्वादप्युपास्योऽयं प्राप्यो नारायणः परः ॥

इति प्राप्त्युपायभूतं तदुपासनमिति । परमात्मोपासनमेव तत्क्रतुन्यायात्तत्प्राप्त्युपायः । जीवज्ञानं कर्मानुष्ठानं च तन्निवर्तकत्वेन परम्परयोपाय इति भावः । अङ्गप्राप्त्योर्वचनानन्तरमाङ्गि-

क्तम् । इदानीं मध्यमेन षट्केन परब्रह्मभूतपरमपुरुषस्वरूपं तदुपासनं च भक्तिशब्दवाच्यमुच्यते । तदेतदुत्तरत्र—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवः ॥

इत्यारभ्य—

'विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ॥

प्राप्ययोः प्रतिपादनमिति संगत्यभिप्रायेणाऽऽह—इदानीमिति । पूर्वोक्तात्परिशुद्धात्मनो व्यावृत्तिं वक्ष्यमाणवैभवसंग्रहं चाभिप्रेत्याऽऽह—परब्रह्मभूतपरमपुरुषस्वरूपमिति । एतेन तत्त्वपरेषु सामान्यब्रह्मशब्दस्य विशेषे स्थितिर्दर्शिता । अथ मोक्षोपायपरेषु वेदान्तेषु वाक्येषु वेदनोपासनादिशब्दानां विशेषपर्यवसानमाह—तदुपासनं च भक्तिशब्दवाच्यमिति । एवं वाक्यद्वयेन षट्कद्वयसंग्रहश्लोकावपि अर्थाद्व्याख्यातौ । तथाहि—

ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते ।
आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥
मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥ इति ।

आत्मज्ञानपूर्वकेत्यनेन सुसंस्कृतशब्दो व्याख्यातः । बुद्धिविशेषसंस्कृतत्वं हि प्रागेव प्रतिपादितम् । योगलक्ष्ये आत्मानुभूतिसिद्ध्यर्थे इत्यत्र योगो विषयान्तरेभ्यश्चित्तवृत्तिनिरोधः, तज्जन्यः साक्षात्कारस्त्विहाऽऽत्मानुभूतिशब्देनोच्यत इति अपौनरुक्त्यमित्यभिप्रायेण—याथात्म्यदर्शनमित्युक्तम् । तत्त्वयाथात्म्यशब्दविवरणं परमब्रह्मभूतेत्यादि । तत्त्वशब्दोऽत्र स्वरूपपरः । याथात्म्यं यथावस्थितः प्रकारः । भक्तेः कर्मानुष्ठानसाध्यात्मदर्शनहेतुकत्वमष्टादशे वक्ष्यत इत्याह—तदेतदिति । ननु विदित्वाऽति मृत्युमेतीत्यादिबलाद्वेदनमात्रेण मोक्षः प्रतीयते । अस्तु वोपासीतेति बलादुपासनरूपेण वेदनेन मोक्षस्तथाऽपि न भक्त्या मोक्ष इति क्वचिदपि श्रुतम् । कर्मसमुच्चयश्च श्रुतिसिद्धो दुस्त्यजः । परमपुरुषविषयस्यैवोपासनस्य मोक्षसाधनत्वमित्यपि दुर्वचम् ।

१ ख. ग. घ. 'रमेश्वरस्व° ।

समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ' ।

इति वक्ष्यते । उपासनं तु भक्तिरूपापन्नमेव परमप्राप्त्युपायभूतमिति वेदान्तवाक्यसिद्धम् । 'तमेव विदित्वाऽति मृत्युमेति'। 'तमेवं विद्वानमृत इह भवति' इत्यादिनाऽभिहितं वेदनं तु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।' 'आत्मानमेव लोकमुपासीत'। 'सत्त्वशुद्धौ ध्रुवा स्मृतिः'। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः'।

रुद्रेन्द्राद्युपासनस्यापि मोक्षसाधनत्वेनाथ( थ )र्वशिरःप्रतर्दनविद्यादिषु श्रुतेरित्याशङ्क्याऽऽह—उपासनं त्विति । उपासनमेव न तु ज्ञानमात्रमित्येका प्रतिज्ञा । तत्रापि भक्तिरूपापन्नोपासनमात्रमिति द्वितीया । एवंविधमुपासनमेव न तु कर्मसमुच्चितमिति तृतीया । तच्च परविषयमेवेति चतुर्थी । एषा तु परमप्राप्त्युपायभूतमित्यनेन तत्क्रतुन्यायात्सूचिता । वेदान्तवाक्यसिद्धमिति । एतच्चतुष्टयमपि वेदान्तवाक्यैरेव सिद्धम् । न तु कल्प्यम् । नाप्युपबृंहणसापेक्षमिति भावः । तत्र प्रथमां प्रतिज्ञां समर्थयति—तमेवेत्यादिनाऽवगम्यत इत्यन्तेन । श्रोतव्यो मन्तव्य इत्येतयोस्तु रागप्राप्तश्रवणमननादिरूपत्वात्तत्परित्यागेन द्रष्टव्यो निदिध्यासितव्य इति विध्यंश उपात्तः । ध्यानोपासनशब्दयोरप्यैकार्थ्यं दर्शयितुमुभयविशिष्टवाक्योपादानम् । द्रष्टव्यो निदिध्यासितव्य इत्यनयोर्भिन्नार्थत्वप्रसिद्धेरेकवाक्यस्थयोरेकार्थत्वे पौनरुक्त्यादिदोषाच्च दर्शनं ध्यानं च पृथगेव विहितमिति शङ्कायां तयोरपि सामान्यविशेषन्यायविशेषेणैकार्थ्यमेवेति दर्शयितुं स्मृतिमात्रं दर्शनमात्रं च पृथक्सर्वग्रन्थिमोक्षहेतुतया वदतोरत एवैकार्थ्यविषययोर्वाक्ययोरुपादानम् । एतदुक्तं भवति—समानप्रकरणपठितविशेषे सामान्यशब्दानां पर्यवसानं न्यायसिद्धम् । अतोऽत्र वेदनादिसामान्यशब्दानां ध्यानोपासनशब्दवाच्ये विशेषे पर्यवसानमभ्युपेयम् । ध्यानं च तैलधारावदविच्छिन्नस्मृतिसंततिरूपमिति ध्रुवा स्मृतिरित्यादि सिद्धम् । सा च ध्रुवा स्मृतिः सर्वग्रन्थिप्रमोक्षहेतुतया विहिता । दर्शनं च तद्धेतुतया विहितम् । नचेदमुपायद्वयम् । गुरुलघुतारतम्यात्फलस्य

१ ख. ग. घ. 'रूपापन्नमभिहितम् । एवंदेव प°।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

इत्यादिभिरैकार्थ्यात्स्मृतिसंतानरूपं दर्शनसमानाकारं ध्यानमुपासनशब्दवाच्यमित्यवगम्यते । पुनश्च-

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' ॥

इति विशेषणात्परेणाऽऽत्मना वरणीयताहेतुभूतं स्मर्यमाणविषयस्या-

---

चाविशिष्टत्वाल्लब्धौ सति नियमेन गुरोरपरिग्रहेणानुपायत्वप्रसङ्गात् । न च द्वारद्वारिभावः । एकस्मिन्वाक्ये विशिष्टैकविधिसंभवे पृथग्विधेयपरिग्रहायोगात् । न च दर्शने स्मृतिशब्देनोपचारे कश्चिद्गुणः, अतो मुख्या स्मृतिरेव दर्शनशब्देन विशेषिता । स्मृतेश्च दर्शनरूपत्वं नाम विशदतमतया दर्शनसमानाकारत्वमेव भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनसमानाकारता भीरुकामुकादिषु । यथा- 'वृक्षे वृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम् । गृहीतधनुषं रामं पाशहस्तमिवान्तकम्' इत्यादि । तल्लीनेव प्रतिदिग्धितेव लिखितेवेत्यादि । एवं च स्मृतिदर्शनयोरैकार्थ्ये सिद्धे द्रष्टव्यो निदिध्यासितव्य इत्यनयोरेकवाक्यस्थयोरपि सामान्यविशेषरूपेणैकार्थ्यमेवेति । अथ द्वितीयां प्रतिज्ञामुपपादयितुमाह—पुनश्चेति । एतदुक्तं भवति—नायमात्मेत्यादिना केवलश्रवणमनननिदिध्यासननिषेधः, अत्यन्तनिषेधे त्वनेकप्रमाणविरोधात् । यमेवैष इत्यादिना विवरणीयत्वहेतुभूतस्वक्रियासाध्यो गुणविशेषो विधीयते । ईश्वरस्वाच्छन्द्यमात्राभिधाने वैषम्यनैर्घृण्यादिदोषप्रसङ्गाच्छास्त्रानर्थक्याच्च । तथा सिद्धगुणाभिधानेऽपि शास्त्रानर्थक्यमेव विधेयान्तराभावात् । स च वरणीयताहेतुः साध्यो गुणो भक्तिरेव । प्रियतम एव हि वरणीयो भवति । परमात्मविषयप्रीतिमानेव च परमात्मना वरणीयः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति स्ववचनादितस्तथाऽवगतेरिति । तस्याश्च प्रीतेः स्वयमपि स्वादुतमत्वमुपायान्तरेष्वदृष्टपूर्वं दर्शयति—स्मर्यमाणेत्यादिना । या प्रीतिरविवेकानामित्यारभ्य—

---

१ ख. ग. घ. °द्विविवेकात्स्मृ° । २ ख. ग. घ. °माणात्य° ।

स्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियरूपं स्मृतिसंतानमेवोपासनशब्दवा-च्यमिति हि निश्चीयते । तदेव भक्तिरित्युच्यते ।

'स्नेहपूर्वमनुध्यानं भक्तिरित्युच्यते बुधैः'

इति वचनात् । अतः 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते'।

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' ॥

---

तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि ।
क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ॥
क जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ।

इत्यादिभिर्भगवद्भक्तेः स्वादुतमत्वं सिद्धम् । स्मृतिः संतन्यते यत्रेति वा, स्मृतेः संतानो यत्रेति वा स्मृतिसंतानशब्देन प्रकृतं वेदनं विशेष्यत इति नपुंसकोपपत्तिः । पुंलिङ्गतया वा पठितव्यम् । अस्त्वेवं तथाऽपि भक्तेर्मोक्षोपायत्वं कथमित्यत्राऽऽह—तदेव हीति । महनीयविषये प्रीतिरेव हि भक्तिरिति भावः । तत्र प्रमाणमाह—स्नेहेति । महनीयविषये स्नेहपूर्वमनुध्यानमिति भाव्यम् । अन्यथा स्नेहपूर्वस्वप्रियतमानुध्यानस्यापि भक्तित्वप्रसङ्गात् । एवं भक्तिरूपत्वानभ्युपगमे श्रुतिस्मृत्योः परस्परविरोधः । अभ्युपगमे तूपबृंहणीयत्वोपबृंहणत्वाभ्यां परस्परानुकूल्यमित्यभिप्रायेणाऽऽह—अत इति । वेदनशब्दनिर्दिष्टस्य मुक्त्युपायस्य भक्तिरूपत्वादित्यर्थः । परमपुरुषव्यतिरिक्तोपायनिषेधमुखेन तज्ज्ञानव्यतिरिक्तोपायनिषेधः श्रुतौ सिद्धस्तद्भक्तिव्यतिरिक्तोपायनिषेधः स्मृतौ, तदेतद्भक्तिवेदनशब्दयोरैकार्थ्ये हि घटतेऽन्यथा तु मिथो व्याघात इति । एवं प्रतिज्ञाद्वयं कण्ठोक्त्योपपादितम् । अन्यप्रतिज्ञाद्वयं त्वर्थतः स्थापितम् । तथाहि— वेदनव्यतिरिक्तनिषेधात् समुच्चयपक्षो निरस्तः । कर्मापेक्षणं तद्भङ्गयेति तत्तद्वाक्यार्थनिरूपणेन सिद्धं भवति । श्वेताश्वतरपुरुषसूक्तवाक्ययोर्विषययोरेकविषयतयोपादानात् । सर्वशाखागतपुरुषसूक्तवाक्यैकार्थ्ये

इत्यनयोरेकार्थत्वं सिद्धं भवति । तत्र सप्तमे तावदुपास्यभूतपरमपुरुषस्वरूपयाथात्म्यं प्रकृत्या तत्तिरोधानं तन्निवृत्तये भगवत्प्रपत्तिरुपासकविधाभेदो ज्ञानिनः श्रैष्ठ्यं चोच्यते—

श्रीभगवानुवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

मय्याभिमुख्येन सक्तमना मत्प्रियत्वातिरेकेण मत्स्वरूपेण गुणैश्चेष्टितेन मद्विभूत्या विश्लेषे सति तत्क्षणादेव विशीर्यमाणस्वभावतया

---

सर्वोपनिषदां दर्शितम् । तत्र च 'महान्प्रभुर्वै पुरुषः स त्व(त्त्व)स्यैष प्रवर्तकः' इत्यादिबलात्पुरुषविषयत्वमेव व्यक्तम् । शिवादिशब्दास्तु शुद्धिगुणयोगादिना परमपुरुष एव मुख्याः । अथ(थ)र्वशिरःप्रतदेनविद्यादिष्वपि रुद्रेन्द्राद्यन्तर्यामिपरमपुरुषोपासनमेव विधेयमिति स्थापितं शारीरके । तत्रेति मध्यमषट्क इत्यर्थः । उपास्यभूतेत्यनेन प्रकृतसंगतिः सूचिता । उपास्यभूतः परमपुरुषो हि षष्ठाध्यायान्तिमश्लोके मामिति प्रसक्तः । एतेन—

स्वयाथात्म्यं प्रकृत्याऽस्य तिरोधिः शरणागतिः ।
भक्तिभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते ॥

इति सङ्ग्रहश्लोकोऽपि व्याख्यातः । अथ भजनीयतया मामिति प्रस्तुतं स्वात्मानं भजननिवृत्तये यथावस्थितमुपदिशामीति भगवानुवाच—मय्यासक्तेति । आसक्तेत्यत्रोपासनार्थमाभिमुख्यमुपसर्गाद्विवक्षितमित्याह—आभिमुख्येनेति । तदेव सहेतुकं प्रपञ्चयति—मत्प्रियत्वेत्यादिना । अहं प्रियः प्रीतिविषयो यस्य स मत्प्रियस्तस्य भावस्तत्त्वम् । यद्वा मम प्रियत्वातिरेकेण मत्प्रियत्वातिरेकेणेत्यर्थः । मद्विभूतिशब्देनात्र भगवदसाधारणपरिजनपरिबर्हादीनि गृह्यन्ते । न तु विभूतिमात्रं कदाचिदपि तद्विश्लेषायोगात् । यद्वा विभूतित्वेनाननुभवो विभूत्या विश्लेषः । स्वरूपादिभिरपि हि विश्लेषो यथाभिलषितानुभवाभावः । एवं विशीर्यमाणस्वरूपतयेति । कार्याक्षमत्वलक्षणशैथिल्येनेत्यर्थः । तेन चात्र मनो-

मयि सुगाढं बद्धमना मदाश्रयस्तथा स्वयं च मया विना विशीर्यमाणतया मदाश्रयो मदेकाधारो मद्योगं युञ्जन्योक्तुं प्रवृत्तो योगविषयभूतं मामसंशयं निःसंशयं समग्रं सकलं यथा ज्ञास्यसि येन ज्ञानेनोक्तेन ज्ञास्यसि तज्ज्ञानमवहितमनाः शृणु ॥ १ ॥

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

अहं ते मद्विषयमिदं ज्ञानं विज्ञानेन सहाशेषतो वक्ष्यामि । विज्ञानं विविक्ताकारविषयं ज्ञानम् । यथाऽहं मद्व्यतिरिक्तात्सदसद्विद्वि-

---

विशेष्यते । पौनरुक्त्यप्रसङ्गं परिहर्तुं स्वयं चेत्युक्तम् । मदाश्रय इत्यत्राव्भक्ष इत्यादाविवावधारणं विवक्षितमिति दर्शयति—मदेकाधार इति । मदनुभवैकधारक इत्यर्थः । योगोपकारकं भजनीयविषयतत्त्वज्ञानमिहोच्यते न तु योगस्य साक्षादनुष्ठानमित्यभिप्रायेण युञ्जन्निति शत्रभिप्रेतमाह—योक्तुं प्रवृत्त इति । प्रारब्धापरिसमाप्तिरूपवर्तमाने प्रारम्भोऽत्र विवक्षित इति भावः । योगात्पूर्वमेव तत्त्वतो ज्ञातव्यत्वार्थं योगविषयभूतमित्युक्तम् । असंशयं समग्रमित्युभयं क्रियाविशेषणम् । समग्रशब्दो निःसंशयत्वाय सर्वप्रकारविशिष्टत्वपर इति दर्शयितुं—सकलमिदम् । विशेषदर्शनेन हि संशयनिवृत्तिः । तच्छृण्विति प्रतिनिर्देशवशादुत्तरश्लोकालोचनयोक्तिश्रवणयोरेकविषयत्वसिद्धेश्च यथेतिशब्दो ज्ञानपर इत्यभिप्रायेण—येन ज्ञानेनोक्तेन ज्ञास्यसीत्युक्तम् । उक्तेन—वक्ष्यमाणवाक्यप्रतिपाद्येनेत्यर्थः । श्रूयमाणविषयस्यातिदुष्करत्वाच्छ्रोतुरवधानकरणं प्रथमश्लोकप्रयोजनमिति दर्शयति—अवहितमना इति ॥ १ ॥

तच्छृण्वित्युक्तमर्थं पुनः सावधानत्वातिशयसंपादनायाहमानि सर्वज्ञः सर्वशक्तिर्वक्ष्यामीति वदन्नसंशयं समग्रं मामित्युक्तमर्थं किंचिद्विशदयति—ज्ञानं तेऽहमिति । श्लोकेन । ज्ञानविज्ञानशब्दयोः पौनरुक्त्यव्युदासायोपसर्गसिद्धं विशेषं दर्शयति—विज्ञानं विविक्ताकारविषयं ज्ञानमिति । अत्र ज्ञानविज्ञानशब्दाभ्यां तज्जनकवाक्यलक्षणा । श्रोतव्यत्ववक्तव्यत्वे वा तज्जनकवाक्यद्वारा तत्रोपचरिते । ज्ञानं ज्ञात्वेत्योदनपाकं पचतीतिवत् । एतेन विज्ञानशब्दस्य निदिध्यासनविषयत्वं परोक्तं प्रत्युक्तम् । अथे-

स्तुजाताखिलहेयप्रत्यनीकतयाऽनवधिकातिशयासंख्येयकल्याणगुणगणानन्तमहाविभूतितया च विविक्तः । तेन विविक्तविषयज्ञानेन सह मत्स्वरूपविषयज्ञानं वक्ष्यामि । किं बहुना यज्ज्ञानं ज्ञात्वा मयि पुनरन्यज्ज्ञातव्यं नावशिष्यते ॥ २ ॥

वक्ष्यमाणस्य ज्ञानस्य दुष्प्रापतामाह—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

मनुष्याः शास्त्राधिकारयोग्यास्तेषां सहस्रेषु कश्चिदेव सिद्धिपर्यन्तं यतते । सिद्धिपर्यन्तं यतमानानां सहस्रेषु कश्चिदेव मां विदित्वा सिद्धये यतते । मद्विदां सहस्रेषु कश्चिदेव तत्त्वतो यथावस्थितं मां वेत्ति न कश्चि-

---

स्थितिपरिज्ञानं ह्यत्र यज्ज्ञात्वेत्यादिनाऽपि व्यज्यते । अतः स्वरूपनिरूपकनिरूपितस्वरूपविशेषकधर्मविषयतया ज्ञानविज्ञानशब्दयोरपुनरुक्तिः । उभयलिङ्गत्वोभयविभूतिविशिष्टतया च वक्ष्यमाणं विविक्तत्वं दर्शयति—यथाऽहमिति । अनवधिकातिशयासंख्येयकल्याणगुणगणश्चानन्तमहाविभूतिश्चेति पृथग्बहुव्रीहिभ्यां ज्ञानं विज्ञानगुणोपपन्नं कर्माशुभं पश्यति वर्जनीयमित्यत्रापि विज्ञानशब्देनैतदेव विवक्षितम् । अतिशयितविषयज्ञानस्यान्यानादरहेतुत्वादशेषत इत्येतस्यैव विवरणरूपं चोत्तरार्धं(र्धं) व्याख्याति—किं बहुनेति । इह भूय इत्यस्यार्थो मयि पुनरिति । अवश्यज्ञातव्यसमस्ताकारविशिष्टमिहोपदिशामीत्युक्तं भवति ॥२॥

पुनरपि प्रकारान्तरेण प्रशंसा क्रियत इत्यभिप्रायेणाऽऽह—वक्ष्यमाणस्येति । मनुष्यशब्दोऽत्र न जातिविशेषाभिप्रायः । देवादीनामप्यधिकारस्य शारीरके समर्थितत्वात्, अतः सिद्ध्यर्थयतनयोग्यमात्राभिप्राय इति दर्शयति—शास्त्राधिकारयोग्या इति । सिद्ध्यर्थयतनमात्रं प्रायेण सर्वसाधारणमतः सिद्धय इत्यस्य कश्चिदित्युक्तविशेषान्वयाय सिद्धिपर्यन्तमित्युक्तम् । मां वेत्तीत्युक्तवेदनस्य तदधीनसिद्धिपर्यन्तयतनार्थत्वं यततामपि सिद्धानामित्यनुवादेनाभिप्रेतमित्याह—मां विदित्वा मत्तः सिद्धये यतत इति । प्राप्यस्यैव प्रापकत्वादिकमिह तत्त्वम् । तत्त्वत इति विशिष्टं वेदनं

दित्यभिप्रायः । 'स महात्मा सुदुर्लभः' 'मां तु वेद न कश्चन' इति हि वक्ष्यते ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अस्य विचित्रानन्तभोग्यभोगोपकरणभोगस्थानरूपेणावस्थितस्य जगतः प्रकृतिरियं गन्धादिगुणकपृथिव्यप्तेजोवाय्वाकाशादिरूपेण मनः-

---

सामान्यतोऽपि वेदनमात्रे सत्येव हि भवति । अतो यततामपि सिद्धानां कश्चिन्मां वेत्ति मद्विधेषु(त्सु) कश्चिन्मां तत्त्वतो वेत्तीति वाक्यद्वयं विवक्षितमित्यभिप्रायेण सिद्धिपर्यन्तं यतमानाना-मित्यादिवाक्यभेदः । कश्चिन्मां वेत्तीत्यत्र कश्चिदेवेति न द्वाविति विवक्षा व्यासभीष्माद्यनेकदर्शनादयुक्ता । कश्चिद्वेत्त्येवेति विवक्षा-चात्र निरर्था, दौर्लभ्यवचनविरुद्धा च । अतोऽर्थस्वभावाद्वक्ष्य-माणसंवादाच्च फलितदुर्लभत्वाभिप्रायं दर्शयति—न कश्चि-दिति ॥ ३ ॥

अथ भूमिरित्यादिना न त्वहं तेषु ते मयीत्यन्तेन स्वयाथा-त्म्यमुपदिश्यते । तत्र प्रथमं कार्यकारणरूपाचिद्विलक्षणत्वं तच्छे-षत्वादिमुखेन दर्शयति । भूम्यादीनां प्रकृतकार्याणामत्र प्रकृतित्वे-नोच्यमानत्वाद्व्यष्टिसृष्ट्यपेक्षया प्रकृतित्वमिह विवक्षितमित्यभिप्रा-येणाऽऽह—अस्येति । केचिदाहुः—अष्टौ प्रकृतय इति श्रुतेरिह भूम्यादिशब्दैस्तन्मात्राणि गृह्यन्ते । मनःशब्देन मनसः कारण-भूतोऽहंकारः । अहंकारशब्देनाहंकारवासनावदव्यक्तं मूलकारण-मिति । एवं समस्तपदमुख्यार्थभङ्गक्लेशाद्व्यष्ट्यपेक्षया प्रकृतित्वं परमिति भावः । यद्वा—प्रकृतिशब्देन मूलप्रकृतिरेवोच्यते द्रव्यै-क्यात् । सैवाष्टधाऽवस्थितेत्युच्यते । एषा हि पूर्वमेका पश्चादष्ट-धा परिणता । अत्र स्वोपदेशे प्रवृत्तस्य प्रकृतेरष्टविधत्वाद्युपदेशो न संगतः । न च स्वकीयत्वात्तत्संगतिः । तथात्वेनेतः प्रागनुपदि-ष्टत्वात् । अतः प्रत्यक्षादिपृथिव्याद्यहंकारपरिणतप्रकृतिरिहानूद्यते । स्वस्य तद्विलक्षणत्वतच्छेषित्वतन्नियामकत्वादिसिद्ध्यर्थं मे इति

प्रभृतीन्द्रियरूपेण च महदहंकाररूपेण चाष्टधा भिन्ना मदीयेति विद्धि ॥४॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

इयं ममापरा प्रकृतिः । इतस्त्वन्यामितोऽचेतनायाश्चेतनभोग्यभूतायाः प्रकृतेर्विसजातीयाकारां जीवभूतां परां तस्या भोक्तृत्वेन प्रधानभूतां चेतनरूपां मदीयां प्रकृतिं विद्धि । ययेदमचेतनं कृत्स्नं जगद्धार्यते ॥ ५॥

---

तस्य स्वकीयत्वं विधीयत इत्यभिप्रायेणोक्तम्—मदीयेति । विद्धीति । पृथिव्यादीनामितरेतरवैषम्यार्थं भोग्यत्वसिद्ध्यर्थमनुक्तानां तन्मात्राणां कार्यविशेषप्रतिपादनार्थं च—गन्धादिगुणके-त्युक्तम् । एतेन भूतोक्तिस्तन्मात्रोपलक्षणार्थेत्यपि दर्शितम् । तदभिप्रायेणाऽऽकाशादीत्यादिशब्दोऽपि पठ्यते। तन्मात्राणां भूतानामप्यदूरविप्रकर्षात्संख्यानिवेशः । मनःशब्दः करणभूतेन्द्रियवर्गोपलक्षणार्थ इति दर्शयितुम्—मनःप्रभृतीन्द्रियरूपेणेत्युक्तम् । बुद्ध्यहंकारयोरत्र ज्ञानगर्वाद्यर्थान्तरभ्रमव्युदासाय तत्त्वविशेषविषयत्वं ज्ञापयति—महदहंकाररूपेणेति । एवं समष्टिसृष्टितत्त्वमखिलमुक्तं भवति । म इत्यत्र संबन्धसामान्यविहिताऽपि षष्ठी स्वस्वामित्वसंबन्धविशेषपर्यवसिता ॥ ४ ॥

एवमचिद्विलक्षणत्वं प्रतिपादितम्। अथ तथाभूताज्जीवादपि विलक्षणत्वं प्रतिपाद्यते–अपरेयमिति श्लोकेन । अपरा, अनुत्कृष्टा, अप्रधानभूतेत्यर्थः । तुशब्दोऽत्यन्तवैलक्षण्यपरः । इतः परामित्येतावतैव स्वरूपभेदे सुवचेऽन्यशब्दो वैजात्यदृढीकरणार्थ इत्यभिप्रायेण—अचेतनाया इत्यादिकमुक्तम् । भोक्ता भोग्यमित्यादिश्रुत्यनुसारेण भोक्तृत्वभोग्यत्वाभ्यां परत्वापरत्वे दर्शिते । इदं जगदिति प्रमाणसिद्धनिर्देशासंकोचात्—कृत्स्नमित्युक्तम् । तत्रेदमिति पराक्त्वनिर्देशेन सूचितमचेतनत्वमिदं च धारणं जागरादिषु संकल्प्यत इति प्रत्यक्षादिसिद्धमन्यदाऽपि स्वरूपतो धारणमिति ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

एतच्चेतनाचेतनसमष्टिरूपमदीयप्रकृतिद्वययोनीनि ब्रह्मादिस्तम्ब-पर्यन्तानि उच्चावचभावेनावस्थितानि चिदचिन्मिश्राणि सर्वाणि भूतानि मदीयानीत्युपधारय । मदीयप्रकृतिद्वययोनीनि हि तानि मदीयान्येव । तथा प्रकृतिद्वययोनित्वेन कृत्स्नस्य जगतस्तयोर्द्वयोरपि मद्योनित्वेन मदीयत्वेन च कृत्स्नस्य जगतोऽहमेव प्रभवोऽहमेव प्रलयोऽहमेव च शेषीत्युपधारय । तयोश्चिदचित्समष्टिभूतयोः प्रकृतिपुरुषयोरपि परमपुरुषयोनित्वं श्रुतिस्मृतिसिद्धम् । महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते तमः परे देव एकी भवति । 'विष्णोः

---

एवं समष्टिदशोक्ता । एतद्योनीनीत्यर्धे न तु व्यष्टिरुच्यते । अहं कृत्स्नस्येति कृत्स्नसमष्टिव्यष्ट्योः संकलितयोः कार्यत्वादिकथनम् । सर्वाणि भूतानीति चिदचिन्मयकार्यनिर्देशादेतच्छब्दः प्रस्तुतप्रकारप्रकृतिपुरुषपरामर्शी न तु परप्रकृतिमात्रपर इति दर्शयति—एतच्चेतनेत्यादिना । एतेन स्वरूपतो निर्विकारस्यापि चेतनस्य देवादिशरीरेन्द्रियतदधीनज्ञानक्रियाभोगादिविशिष्टत्वपापेक्षया तत्पूर्वाचित्कल्पावस्थस्य प्रकृतित्वमुपपन्नमिति सूचितम् । व्याख्येये मदीयानीत्येतन्न दृश्यते तत्कथमत्र निर्दिश्यत इत्यत्राऽऽह— मदीयप्रकृतिद्वययोनीनीति । इतिशब्दाप्रयोगेऽपि वाक्यार्थसिद्धावितिशब्दः स्वकीयत्वपरामर्शार्थ इति भावः । भगवदभिप्रायस्थवचनानुरूपत्वादत्र मदीय शब्दोक्तिः । तथेत्यस्य तथा सतीत्यर्थः । तस्यैव विवरणं प्रकृतिद्वयेत्यादि । पूर्वोक्तशेषित्वादिसमुच्चयार्थो वा तथाशब्दः । प्रभवप्रलयशब्दावत्रोत्पत्तिलयस्थानपरौ । ननु 'अजामेकाम्' 'नित्यो नित्यानाम्' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिषु सत्सु कार्यविषयकृत्स्नशब्दे प्रकृतिद्वयस्यापि संग्रहः कथमवगम्यत इत्यत्राऽऽह—चिदचित्समष्टीति । प्रकृतिपुरुषयोः परमात्मनि प्रलयश्रुतिबलात्तयोस्तस्मादुत्पत्तिरपि श्रुतिसिद्धैवेत्यभिप्रायेणोपादत्ते- महानित्यादि । प्रकृतिपुरुषयोः परमात्मनि लयो नाम क्षीरनीरस्येव विभागानर्हः संश्लेषः ।

स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र ’ ।

प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥
इत्यादिका हि श्रुतिस्मृतयः ॥ ६ ॥

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

यथा सर्वकारणस्यापि प्रकृतिद्वयस्य कारणत्वेन सर्वाचेतनवस्तुशेषिणश्चेतनस्यापि शेषित्वेन कारणतया शेषितया चाहं परतरस्तथा ज्ञानश-

---

तेन द्रव्यस्वरूपस्य नित्यत्वादजामित्यादेरविरोधः । उक्तार्थे स्मृतिमुदाहरति—विष्णोरिति । परतोदिते परत उदिते इत्यर्थः । आर्षः संधिभेदः । यद्वा स्मृतिरपीयं प्रलयपरैव तत्प्रकरणस्थत्वात् । ‘ दो अवखण्डने ’ इत्यस्य दिते इति निष्ठान्तं पदं पृथग्भूते इत्यर्थः । तेन प्रलयदशायामपि प्रधानपुरुषेश्वराणां मिथः स्वरूपभेदोऽस्त्येवेत्युक्तं भवति । अदिते इति वा पदच्छेदः । अपृथग्भूते इत्यर्थः । तेन विभागानर्हः संश्लेषविशेष उक्तो भवति। प्रलयप्रकरणस्थत्वादत्रापि पूर्वोत्तरोपादीयमानश्रुतिस्मृतिसमानार्थत्वाभिप्रायाच्च । स्वाभिमतार्थे स्फुटार्थं वचनमुदाहरति—प्रकृतिरिति ॥ ६ ॥

मत्तः परतरमित्यत्र पूर्वोक्तस्यैवार्थस्य व्यतिरेकेण दृढीकरणमात्रपरत्वे मन्दप्रयोजनवत्त्वम् । अहं परतर इत्येवंरूपेण पूर्वमनुक्तेश्च तत्तद्व्यतिरेकनिषेधोऽपि नातीवोचितः । अतोऽनुपादिष्टापूर्वार्थपरत्वमेव शब्दस्य संभवदपरित्याज्यमित्यभिप्रायेणाऽऽह—यथेति । पूर्वश्लोकस्थस्तथाशब्दोऽत्रानुषक्तस्ततश्चानन्तमहाविभूतियोगोऽनन्तगुणयोगे दृष्टान्तित इत्यभिप्रायेणाऽऽह-तथ ज्ञानशक्तीति । शेषित्वेनेत्यन्तमर्थस्थितिप्रदर्शनम् । कारणतया च शेषितया चेति परतरत्वप्रकारकथनमित्यपुनरुक्तिः । नन्वहमेवेत्यवधारणमशक्यं स्वस्मात्परतरनिषेधेऽपि समनिषेधाप्रतीतेरित्यत्राऽऽह—मत्तोऽन्यदिति । मद्व्यतिरिक्तमिति । अयमभिप्रायः— मत्त इति पञ्चमी न

क्तिबलादिगुणयोगेन चाहमेव परतरो मत्तोऽन्यन्मद्व्यतिरिक्तं किंचिज्ज्ञानबलादिगुणान्तरयोगि परतरं नास्ति। सर्वमिदं चिदचिद्वस्तुजातं कार्यावस्थं कारणावस्थं च मच्छरीरभूतं सूत्रे मणिगणवदात्मतयाऽवस्थिते मयि प्रोतमाश्रितम्। 'यस्य पृथिवी शरीरं यस्याऽऽत्मा शरीरमेष सर्वभूतान्तरात्मा, अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यात्मशरीरभावेनावस्थानं च जगद्ब्रह्मणोरन्तर्यामिब्राह्मणादिषु प्रसिद्धम् ॥ ७॥

---

परतरमित्यनेनान्विता। तथा सत्यन्यशब्दानन्वयप्रसङ्गात्। अतो मत्तोऽन्यत्परतरं नास्तीत्यन्वयेऽहमेव परतर इति फलितम्। ततश्च समाभ्यधिकदरिद्रत्वमुक्तं भवतीति ज्ञानबलादिगुणान्तरयोगि किंचिदपीत्यनेन ब्रह्मेशानादयोऽधिकारिणः परिशुद्धात्मानश्च क्रोडीकृताः। एवं भूमिराप इत्यादिना निरपेक्षप्रकृतिपरिणामवादः केवलचेतनसंनिधिमात्रपरिणामित्वं प्रकृतिपुरुषयोरीश्वरं प्रत्यशेषत्ववादश्च निरस्तः। मत्तः परतरमित्यनेन त्रिमूर्त्यैक्यसाम्योत्तीर्णव्यक्त्यन्तरत्वब्रह्मेश्वरपक्षाः प्रतिक्षिप्ताः।

अथ पूर्वोक्तसर्वोपादानत्वप्रसक्तसविकारत्वपरिहारार्थं पृथक्प्रसिद्धप्रकृतिपुरुषादिवादनिरासार्थं च सर्वाधारत्वमुखेन सर्वशरीरत्वमुच्यते मयीत्यर्धेन। सर्वमिदमित्यनेन सर्वावस्थसमस्तचिदचिद्वस्तुसंग्रह इत्यभिप्रायेणोक्तम्—चिदचिद्वस्तुजातमित्यादि। सूत्रमणिगणदृष्टान्तसामर्थ्यात् प्रोतमित्यनेन चानुप्रवेशाश्रयाश्रयिभावप्रतीतेश्च शरीरलक्षणमपि सूचितमित्यभिप्रायेण—मच्छरीरभूतमित्यादिकमुक्तम्। एकस्यैव सर्वाधारत्वमनुप्रविष्टस्य गूढत्वमाधेयभूतप्रकृत्याद्यधीनस्थितिविरहश्च सूत्रदृष्टान्तसिद्धः। प्रोतशब्देन सूत्रवद्बहिर्व्याप्त्यभावप्रतीतिव्युदासायाऽऽह—आश्रितमिति। अत्र सुबालोपनिषद्वाक्योपादानमन्तर्यामिणो नारायणत्वव्यक्त्यर्थमन्तर्यामिब्राह्मणानुक्ततत्त्वान्तरसंग्रहार्थं च ॥ ७॥

---

१ च. छ. °ह्मणे प्र°।

अतः सर्वस्य परमपुरुषशरीरत्वेनाऽऽत्मभूतपरमपुरुषप्रकारत्वात्सर्वप्रकारः परमपुरुष एवावस्थित इति सर्वैः शब्दैस्तस्यैवाभिधानमिति तत्तत्सामानाधिकरण्येनाऽऽह रसोऽहमिति चतुर्भिः—

रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

---

एवं भूमिरापः इत्यादिना भेदश्रुत्यर्थ उपबृंहितः। मयि सर्वमिति तु घटकश्रुत्यर्थः। अथ तदुभयनिर्वाह्याभेदश्रुत्यर्थोपबृंहणं क्रियत इत्यभिप्रायेणाऽऽह-- अत इति। केचित्तु मयि सर्वमिदं प्रोतमित्यस्य रसादिधर्मविशिष्टे मयि प्रोतमित्यर्थः। तद्विवरणं रसोऽहमित्यादीति व्याचख्युः। तत्परिहारायाऽऽह—सर्वस्य परमपुरुषशरीरत्वेनेति। परोक्ते तु आधाराधेयभाववैपरीत्यादिदोष इत्यपि भावः। प्रकारवाचिशब्दानां प्रकारिणि पर्यवसानस्वाभाव्यं जातिगुणादिशब्देष्वपि सामान्यतः सिद्धमिति दर्शयितुं प्रकारत्वोपादानम्। अभिधानं मुख्यवृत्त्या बोधनम्। यद्यपि रसादिशब्दा लोके निष्कर्षकाः प्रयुज्यन्ते, व्यधिकरणतया चात्राबादिद्रव्योपादानं तथाऽपि रसादीनां परमात्मशरीरभूतद्रव्यप्रकारत्वेन परमात्मप्रकारत्वाद्रसादिशब्दानां चात्र तत्समानाधिकरणतया प्रयोगाच्चात्र निष्कर्षकत्वं नास्तीत्यभ्युपगन्तव्यम्। द्रव्योपादानं तु तत्र तत्र द्रव्ये प्रधानभूतरसगन्धादिप्रकारभूतोऽहमिति ज्ञापनार्थम्। द्रव्यप्रकाराणां तत्प्रकारत्वं काठिन्यचान्यो विभर्तीत्यादिप्रयुक्तमिति भावः। रसस्य पृथिव्यां वृत्तौ सत्यामप्यपां रूपादिगुणान्तरसद्भावेऽपि रसोऽहमप्स्विति विशिष्योपादानं तेजस्तत्त्वादब्रूपपरिणामपूर्वतत्त्वान्तत्पन्नरसप्रधानत्वात्। अन्यत्र च 'आत्तगन्धा तथा भूमिः प्रलयत्वाय कल्पते' इत्यादिना च पृथिव्यादीनां गन्धरसाद्यनधीनत्वमुक्तम्। एवमुत्तरत्रापि प्राधान्यतो विशेषनिर्देशे यथोचितं भाव्यम्। प्रभा—स्वाश्रयातिरिक्तप्रसारिततेजोद्रव्यविशेषः। प्रभयैव चन्द्रसूर्यौ जगदुपकारहेतुभूता इति तौ तत्प्रधानौ। सर्वेषां वेदानां बीजत्वादिना तेषु प्रणवः प्रधानभूतः। पौरुषं पुरुषस्य भावो यत्नः पुंवृद्धिरित्येके। संतानपरम्पराहेतुभूतं रेत इत्यपरे। यद्वा--

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

---

पौरुषं सामर्थ्यं कर्तृत्वशक्तिरित्यर्थः । तयैव हि कर्तुरात्मनः कारकान्तरेभ्यः प्राधान्यम् । नृषु जीवेष्वित्यर्थः । यद्वा पौरुषं पुंस्त्वं स्त्रीनपुंसकव्यावृत्तः सत्त्वादिस्वभावविशेषः । नृशब्दश्च पुरुषपर्यायः । पुण्यो गन्धस्तुलस्यादिगन्धः सुरभिगन्धमात्रं वा । तद्योगेन हि पृथिवी सत्त्वोन्मेषस्य सुखस्य वा हेतुर्भवति । विभावसुरग्निः । तत्र च तेजो दाहकत्वशक्तिः । भूतशब्देनात्र शरीरिणो गृह्यन्ते । सर्वशब्देनात्र शब्दादीनामपि संग्रहः । तेषु जीवनं प्राणनं प्राणस्थितिहेतुर्वा । येन भूतानि जीवन्ति तदुपजीवनीयं वा[यु]रूपम् । सर्वभूतानां सनातनं बीजं प्रकृतितत्त्वम् । अथवा प्रधानधर्मनिर्देशप्रकरणत्वाद्बीजशब्दोऽत्रोपादानत्वाख्यस्वभावपरः । सर्वेषां परिणामिद्रव्याणां स्वकार्यपरिणामसामर्थ्यमित्यर्थः । अथवा बीजं प्ररोहकारणं जङ्गमस्थावरभूतानां तत्तदुपादानद्रव्यम् । बुद्धिरध्यवसायो ज्ञानमात्रं वा । तेजस्विनः प्रतापशीलास्तेषां तेजोऽनभिभवनीयत्वं पराभिभवनसामर्थ्यं वा । तेजोऽभिमान इति केचित् । प्रागल्भ्यमित्यपरे । बलं धारणादिशक्तिः । कामरागवशात्स्वकार्ये प्रवृत्तस्य बलस्य परपीडादिहेतुत्वाद्धर्मोपयुक्तशरीरादिधारणमात्रविषयत्वाय—कामरागविवर्जितमित्युक्तम् । काम इच्छायाः काष्ठाप्राप्तदशा रागः इच्छा । यद्वा कामशब्दः काम्यपरः । तद्विषयो रागः । भूतेषु देवमनुष्यादिरूपेणावस्थितेषु जन्तुषु धर्माविरुद्धः कामः स्वदारप्रीत्यादिः । अथ रसोऽहमि-

एते सर्वे विलक्षणा भावा मत्त एवोत्पन्ना मच्छेषभूता मच्छरीरतया मय्येवावस्थिता अतस्तत्तत्प्रकारोऽहमेवावस्थितः ॥८।९।१०।११॥

किं विशिष्याभिधीयते—

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

सात्त्विका राजसास्तामसाश्च जगति देहत्वेनेन्द्रियत्वेन भोग्यत्वेन तत्तद्धेतुत्वेन चावस्थिता ये भावास्तान्सर्वान्मत्त एवोत्पन्नान्विद्धि । ते

---

त्यादिसामानाधिकरण्यं सहेतुकमुपपादयति—एत इति । न चायं तदधीनसामर्थ्यप्रदर्शनार्थो राजा राष्ट्रमित्यादिवदारोपः । मुख्यसंभवे वृत्त्यन्तरायोगादिति भावः । एत इत्यनेनेश्वरव्यतिरिक्तैरशक्यक्रियत्वमभिप्रेतम् । सर्वे इत्यनेन ब्रह्मरुद्रादिभिरन्यैश्च क्रियमाणानामपि ब्रह्मादिशरीरकपरमात्माधीनस्रष्टृत्वमहं कृत्स्नस्येति पूर्वोक्तं स्मारितम् । वक्ष्यमाणराजसतामसेभ्यो वैलक्षण्यार्थमुक्तम्—विलक्षणा इति । मत्त एव पृथग्विधा इति च वक्ष्यते । एतेन 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' [ ब्र० सू० २ । १ । ४ ] इत्यधिकरणार्थोऽपि स्मारितः । मत्त एवोत्पन्ना इत्यादि । तत्तद्वस्त्वनुरूपं यथासंभवं सामानाधिकरण्यहेतुगुणजातिशरीरेषु अनुगतः सामानाधिकरण्यहेतुरपृथक्सिद्धिरिति प्रदर्शनायोक्तम्—मय्येवावस्थिता इति ॥ ८ । ९ । १० । ११ ॥

रसोऽहमित्यादेः प्रदर्शनार्थत्वं ये चेत्यस्योपसंहारतां च दर्शयति—किं विशिष्येति । तत्तद्धेतुत्वेनेति समष्टिदशाया अपि सु(सं)ग्रहः । अयं च देहत्वादिविभागोऽनुभूयमानप्रकारानुवादियच्छब्दाभिप्रेतः । सात्त्विकतादिकं देहादिषु प्रत्येकमन्वितम् । अपि च 'प्रकाशः प्रीतिरानन्दः सुखं संशान्तचित्तता' इत्यादयः सात्त्विका भावाः । 'अतुष्टिः परितापश्च शोको मोहस्तथा क्षमा' इत्यादयो राजसाः । 'अविविक्तं तथा मोहप्रमादस्वप्नतन्द्रिताः' इत्यादयस्तामसाः । एते चान्यत्र प्रपञ्चिता इहाभिप्रेताः । मत्त एवेत्यवधारणेन निमित्तोपादानैक्यं सात्त्विकत्वादि-

मच्छरीरतया मय्येवावस्थिता इति च । न त्वहं तेषु नाहं कदाचिदपि तदायत्तस्थितिः । अन्यत्राऽऽत्मायत्तस्थितित्वेऽपि शरीरस्य शरीरेणाऽऽत्मनः स्थितावपि उपकारो विद्यते । मम तु तैर्न कश्चित्तथाविध उपकारः केवलं लीलैव प्रयोजनमित्यर्थः ॥ १२ ॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

तदेवं चेतनाचेतनात्मकं कृत्स्नं जगन्मदीयं काले काले मत्त एवोत्पद्यते मयि च प्रलीयते मय्येवावस्थितं मच्छरीरभूतं मदात्मकं चेत्यहमेव कार्यावस्थायां कारणावस्थायां च सर्वशरीरितया सर्वप्रकारोऽवस्थितः। अतः कारणत्वेन शेषित्वेन च ज्ञानाद्यसंख्येयकल्याणगुणगणैश्चाहमेव सर्वैः प्रकारैः

---

वैचित्र्यशक्तिस्तत्तदुचितानेकनिमित्तत्वादिप्रतिक्षेपश्च कृतः । कारणत्वेन सह सामानाधिकरण्यनिबन्धनं नियमनगर्भं शरीरत्वेन तादधीन्यमपि सप्तम्या विवक्षितमिति दर्शयितुम्——मच्छरीरतया मय्येवावस्थिता इत्युक्तम् । न त्वहं तेष्वित्यत्र व्याप्तिप्रतिक्षेपभ्रमनिरासायाऽऽह——नाहमिति । किमर्थमिदमप्रसक्तं प्रतिषिध्यत इत्याशङ्क्याऽऽह—अन्यत्रेति । तुशब्दोऽत्र शङ्कानिवृत्त्यर्थः । सर्वोपकारनिषेधे तदुत्पादनादिवैयर्थ्यपरिहाराय—तथाविध इत्युक्तम् । अभिमतमुपकारान्तरमहंशब्दाभिमतं परिपूर्णत्वमुखेन विशदयति—केवलमिति ॥ १२ ॥

एवं स्वयाथात्म्यमुपदिष्टम् । अथ त्रिभिरित्यादिना प्रकृत्याऽस्य तिरोधिमुपदिशति । अत्र मामित्यनेन भूमिराप इत्यारभ्योक्तं यथावस्थितस्वरूपं गुणमयभावेभ्यः परत्वप्रतिपादनायानूदितमिति दर्शयितुमाह——तदेवमिति । उत्पत्तिप्रलययोरविरोधं सर्वेषु कल्पेषु तस्यैव कारणत्वं चाभिप्रेत्योक्तम्—काले काल इति । त्रिभिर्गुणमयैरेभिरिति पदत्रयेण दुःखमिश्रत्वनश्वरत्वसातिशयत्वानि विवक्षितानि । रजस्तमोमिश्रत्वाद्दुःखमिश्रत्वं सुखदुःखमोहात्मकास्त्रयो गुणास्तत्कार्यत्वादनित्यत्वमिन्द्रियपरिच्छिन्नत्वात्क्षुद्रत्वमिति भावः। 'मामेभ्यः परमव्ययम्' इति तु त्रिभिर्निखिलहेयप्रत्यनीकस्वरू-

---

१ क. ख. ग. °रीरत° ।

परतरो मत्तोऽन्यत्केनापि कल्याणगुणगणेन परतरं न विद्यते । एवंभूतं मामेभ्यस्त्रिभ्यः सात्त्विकराजसतामसेभ्यो भावेभ्यः परं मदसाधारणैः कल्याणगुणगणैस्तत्तद्भोग्यताप्रकारैश्च परमुत्कृष्टतममव्ययं सदैकरूपमपि तैरेव त्रिभिर्गुणमयैर्निहीनतरैः क्षणविध्वंसिभिः पूर्वकर्मानुगुणदेहेन्द्रिय-

---

पत्वनिरतिशयानन्दत्वनित्यत्वान्यभिमतानीति दर्शयति—एवंभूतमिति । कारणत्वेन पितृत्वाद्धितैषिणं शेषित्वेन शेषभूतानामुज्जीवनं स्वात्मलाभं मन्वानं सर्वज्ञत्वसर्वशक्तित्वादिभिरनिष्टानिवर्तनेष्टप्रापणयोरन्यानिरपेक्षं चेत्येवंभूतशब्दाभिप्रायः । दुःखमिश्रत्वादिविशिष्टतया प्रस्तुता एव भावा एभ्य इत्यवधित्वेन परामृश्यन्त इति प्रदर्शनाय—त्रिभ्य इत्यादिकमुक्तम् । एभ्यः परमित्यनेन तमसः परस्तादित्यादिष्विव देशादिविवक्षाव्युदासाय—उत्कृष्टत्वोक्तिः । तत्तद्भोग्यताप्रकारैश्चेति समुद्रे गोष्पदमस्तीतिवत् । श्रूयते हि—यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति । शब्दस्पर्शादिरूपेण प्राकृता भावा भोग्याः, परमात्मा तु ज्ञानशक्त्यादिगुणगणैः स्वरूपसमवेतैः शब्दादिसजातीयानुकूल्यप्रकारैरप्राकृतैः शब्दादिभिः प्राकृतैश्च तैरेव स्वपर्यन्ततावबोधादप्राकृतकल्पैः प्रत्येकं भोग्यतायामनवधिकातिशयपरत्वविशिष्ट इति भावः । एवं निर्दिष्टभोग्यतमस्वरूपस्याविकारित्वेन कालावच्छेदव्युदासपरोऽव्ययशब्द इत्यभिप्रायेणाऽऽह—सदैकरूपमिति । तैरेवेति । उक्तदोषत्रययुक्तैरेवेत्यर्थः । त्रिभिरिति । गुणाः परस्परन्यूनाधिकभावेनावस्थिता अपृथग्विनाभूताः । ततश्च गुणत्रयमयानां भावानां दुःखमिश्रत्वमवर्जनीयमिति भावः । निहीनतरैरिति । कर्मानुरूपगुणत्रयमयभोगास्तत्तत्कर्मानुरूप्येण क्षुद्रा इति भावः । क्षणध्वंसिभिरिति । कर्मावसाने क्षणान्तरे स्थातुं न प्रभवन्तीत्यर्थः । ननु सत्त्वेन कथं मोहः । इत्थम्—यथा विषसंपृक्तेऽप्यन्ने मधुनिषेको मन्दस्य भोजनाभिलाषमुत्पादयति तथा तत्तत्कर्मानुरूपानर्थपर्यवसितसुखलवहेतुत्वेन युक्तं सत्त्वस्यैव मोहहेतुत्वमिति । सर्वशब्दोऽत्र देवजात्यनुप्रविष्टब्रह्मरुद्रादेरपि संग्रहपरः । इदंशब्दोऽनुभूयमानभोक्तृवैचित्र्याभिप्रायः । जगच्छ-

भोग्यत्वेनावस्थितैः पदार्थैर्मोहितं देवतिर्यङ्मनुष्यस्थावरात्मनाऽवस्थितमिदं जगन्नाभिजानाति ॥ १३ ॥

कथं स्वत एवानवधिकातिशयानन्दे नित्ये सदैकरूपे लौकिकवस्तुभोग्यताप्रकारैश्चोत्कृष्टतमे त्वयि स्थितेऽप्यत्यन्तनिहीनेषु गुणमयेषु अस्थिरेषु भावेषु सर्वस्य भोक्तृवर्गस्य भोग्यत्वबुद्धिरुपजायत इत्यत्राऽऽह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

ममैषा गुणमयी सत्त्वरजस्तमोमयी माया यस्माद्दैवी देवेन क्रीडाप्रवृत्तेन मयैव निर्मिता तस्मात्सर्वैर्दुरत्यया दुरतिक्रमा । अस्या मायाशब्दवाच्यत्वमासुरराक्षसास्त्रादीनामिव विचित्रकार्यकरत्वेन । यथा च—

---

ब्दश्चाचिद्विशिष्टचेतनवाचीत्यभिप्रायेण देवेत्यादिकमुक्तम् ।

ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ।
विष्णुमायामहावर्तमोहान्धतमसावृताः ॥

इत्यादिकमत्रानुसंधेयम् ॥ १३ ॥

उक्तायामर्थस्थितौ मोह एवायं न घटत इति शङ्कायां दैवीत्यादिकमवतारयति—कथमिति । सदैक(स्ये)ति । सत्त्वोत्तरतया तत्त्वज्ञानप्रचुरदेवजातेरपीति भावः । उत्कृष्टापकृष्टसंनिधावुत्कृष्टग्रहणशीलता भोक्तृवर्गस्येत्यनेन सूचिता । हिशब्दोऽत्र दुरतिक्रमत्वहेत्वर्थः । देवनिर्मिता दैवीति ताद्धितार्थः । दिवु क्रिडेत्यादिधातोर्देवशब्दस्य निष्पत्तिः । एतेन देवात्मशक्तिमिति श्रुतिसूचनम् । दैवी ममेति शब्दाभ्यां मायाप्रवर्तकस्य देवस्य मायिनश्च कृष्णस्य भेदभ्रमव्युदासाय—मयैवेत्युक्तम् । न हि स्वच्छन्देनाघटितघटनासमर्थेनेश्वरेण लीलार्थं प्रवर्तिता माया‌ऽनीश्वरैः सर्वभूतैरपि लङ्घितुं शक्यत इति सर्वैरित्यस्य भावः । अत्ययशब्दस्यात्र नाशार्थत्वव्युदासायाऽऽह—दुरतिक्रमेति । दुःखेनातिक्रमणीया । भगवत्प्रपत्तिरहितैर्लङ्घितुमशक्यैव । मायाशब्दस्य पराभिमतमर्थं दूषयिष्यन्स्वाभिमतमर्थं तावदाह—अस्या इति । सत्येष्वेवाऽऽसुरराक्षसास्त्रादिषु मायाशब्दप्रयोगो न मिथ्यात्वनिबन्धन इति भावः । यथा चेति । तेन मायासहस्रमित्यत्र न मिथ्यार्थ-

ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् ।
आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥
तेन मायासहस्रं तच्छम्बरस्याऽऽशुगामिना ।
बालस्य रक्षता देहमेकैकांशेन सूदितम् । इत्यादौ ।

अतो मायाशब्दो न मिथ्यार्थवाची । ऐन्द्रजालिकादिष्वपि केनचिन्मन्त्रौषधादिना मिथ्यार्थविषयायाः पारमार्थिक्या एव बुद्धेरुत्पादकत्वेन मायावीति प्रयोगः । तथा मन्त्रौषधादिरेव च तत्र माया । सर्वप्रयोगेष्वनुगतस्यैकस्यैव शब्दार्थत्वात् । तत्र मिथ्यार्थेषु मायाशब्दप्रयोगो

---

विषयत्वमुत्प्रेक्षितुमपि शक्यम् । मिथ्याभूतस्य शस्त्रनिपूदनीयत्वाभावादिति भावः । आदिशब्देन—

' मायया सततं वेत्ति प्राणिनां च शुभाशुभम् ' ।
' देवमायेव निर्मिता ' इत्यादिप्रयोगसंग्रहः ॥

अपि च दण्डनीतौ सामाद्युपायचतुष्टयादन्ये मायोपेक्षेन्द्रजालरूपा अमुख्यास्त्रय उपाया उपदिष्टाः । तत्र मायाऽन्यथाभूतस्य वस्तुनोऽन्यथाकरणशक्तिः । इन्द्रजालं तु अन्यथाप्रतिभासनशक्तिरिति विभागः । तस्मात्सत्यविषय एव मायाशब्द इत्यभिप्रायेणाऽऽह—अत इति । मायाशब्दप्रयोगस्य सत्यविषयत्वादित्यर्थः । ननु मिथ्याभूतार्थप्रदर्शकेषु तत्संबन्धान्मायादिशब्दः प्रयुज्यतेऽतो मायाशब्दो मिथ्यार्थेऽपि प्रयुक्त इत्याऽऽह—ऐन्द्रजालिकेति । असत्यत्ववदसत्यत्वोत्पादकत्वमपि न मायाशब्दप्रवृत्तिनिमित्तमिति दर्शयितुम्—पारमार्थिक्या एवेत्युक्तम् । भ्रान्तिज्ञानमपि हि स्वरूपतः सत्यम् । आरोपितस्तु विषयो मिथ्येत्युच्यते । तथाऽप्यन्ततो मिथ्यार्थसंबन्धो निमित्तमित्यत्राऽऽह—तथेति । मन्त्रौषधादेर्मिथ्यार्थस्य च संनिधाने किं विशेषनियामकमित्यत्राऽऽह—सर्वेति । नह्येकशक्त्यैव निर्वाहे संभवत्यनेकशक्तिकल्पना युक्तेति भावः । मिथ्याभूतेष्वेवार्थेषु मायेयमिति प्रयोगो भवति । तत्र च विचित्रकार्यकरत्वाभावान्मिथ्यात्वमेव निमित्तमाश्रयणीयमित्यत्राऽऽह—तत्रेति । अयं भावः—यत्र संबन्धाद्गुणयोगाद्वा प्रयोगो दुर्निर्वाहस्तत्र हि शक्त्यन्तरकल्पनागौरवं सह्यम् । संभवति चात्र परम्परया

---

१ ख. ग. घ. ङ. च. कैकश्येन ।

मायाकार्यबुद्धिविषयत्वेनौपचारिको मञ्चाः क्रोशन्तीतिवत् । एषा गुणमयी पारमार्थिकी भगवन्मायैव "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इत्यादिष्वभिधीयते । अस्याः कार्यं भगवत्स्वरूपतिरोधानं स्वस्वरूपभोग्यत्वबुद्धिश्च । अतो भगवन्मायया मोहितं सर्वं जगद्भगवन्तमनवधिकाति-

---

संबन्धो मायाकार्यज्ञानविषयत्वात् । न च मिथ्यात्वे प्रवृत्तिनिमित्ततया स्वीकृतेऽज्ञानादिषु तत्संबन्धगन्धः, तन्मिथ्यार्थस्य च गुणाभावादेव तद्गुणयोगो दूरनिरस्तः । अपि च मिथ्याभूतेषु शुक्तिकारजतादिषु तत्संयोगाभावान्मिथ्यात्वविशेषे विष्णुप्रख्यापोऽस्मदुक्त एव विशेषोऽन्तर्भवतीति ॥

त्वं हि लोकगतिर्देव न त्वां केचिन्न जानते ।
ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहम् ॥

"योगनिद्रा महामाया" इत्यादिष्वपि भगवतो विचित्रकार्यविशेषोपयोगितया वा प्रकृतितत्त्वाभिमानिदेवतात्वादिरूपेण वा मायेत्युक्तम् । अतो युक्तं विचित्रकार्यकरत्वमेव मायाशब्दप्रवृत्तिनिमित्तमिति । श्रुतावपि विचित्रसृष्ट्युपादाने प्रकृतौ सत्त्वाया(या)मेव मायाशब्दः प्रयुक्त इत्याह—एवमिति । महेश्वरशब्दस्यात्र रुद्रविषयत्वभ्रमव्युदासाय भगवच्छब्दः । श्वेताश्वतरोपनिषद(द्य)पि पुरुषसूक्तप्रत्यभिज्ञानान्महापुरुषशब्दस्वरसप्रवर्तकत्वादिभिर्भगवद्विषयतयैव प्रतीयते । महेश्वरशिवादिशब्दास्तु तस्मिन्नवयवशक्त्या गुणयोगेन च वृत्ताः । रुद्रस्यान्यत्र कार्यत्वकर्मवश्यत्वसंप्रतिपत्तेरिति भावः । 'मायां तु प्रकृतिं विद्यात्' इत्यादिनाऽत्र न प्रकृत्यनुवादेन मायात्वं विधीयते किंतु मायाशब्दार्थानुवादेन प्रकृतित्वम्, इति वाक्यस्वारस्यावगमनम् । पूर्वत्र 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' इत्यभिहिते केयं मायेत्याकाङ्क्षायां प्रवृत्तत्वादिति भावश्च । अस्मिन्प्रकरणे मायाशब्दप्रयोगान्निदानमत्रोपयुक्तं विचित्रकार्यं दर्शयति—अस्या इति । तदेतदखिलमभिप्रेत्य भगवद्यामुनमुनिभिरुक्तम्—"स्वयाथात्म्यं प्रकृत्याऽस्य तिरोधिः शरणागतिः" इति चोद्यपरिहारतां दर्शयन्नुपसंहरति—अत इति ।

शयानन्दस्वरूपं नाभिजानाति । मायाविमोचनोपायमाह—मामेव सत्यसंकल्पं परमकारुणिकमनालोचितविशेषाशेषलोकशरण्यं ये शरणं प्रपद्यन्ते त एतां मदीयां गुणमयीं मायां तरन्ति मायामुत्सृज्य मामेवोपासत इत्यर्थः ॥ १४ ॥

किमिति भगवदुपासनापादिनीं भगवत्प्रपत्तिं सर्वे न कुर्वन्तीत्यत्राऽऽह—

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

मां दुष्कृतिनः पापकर्माणो दुष्कृततारतम्याच्चतुर्विधा न प्रपद्यन्ते । मूढा नराधमा माययाऽपहृतज्ञाना आसुरं भावमाश्रिता इति । मूढा विप-

---

प्रकृत्याऽस्य तिरोधिः शरणागतिरितिसंग्रहश्लोके तन्निवृत्त्यर्थमित्यध्याहर्तव्यमिति दर्शयन्ननन्तरग्रन्थमवतारयति—मायाविमोचनेति । यच्छासनादलङ्घनीयं निगलनं तन्निवृत्तिरपि तेनैव कार्या न त्वन्येनेति मामेवेत्यवधारणाभिप्रायं व्यञ्जयति—सत्यसंकल्पमिति । नहि बन्धविषय एव हि संकल्पः सत्योऽपि तु मोक्षविषयोऽपीति स एव प्रपदनीय इति भावः । शक्तस्यापि निर्घृणस्य प्रपत्त्या न किंचित्प्रयोजनमित्यत उक्तम्—परमकारुणिकमिति । कारुणिकस्यापि लोकदृष्टपरिग्राह्यापरिग्राह्यविभागे किमसह्यापराधशालिनो जनस्य तत्प्रपत्त्येत्यत्रोक्तम्—अनालोचितेत्यादि । वायसशाखामृगविभीषणद्रौपदीप्रभृतिषु चैतत्स्पष्टम् । यदि वा रावणः स्वयमिति च तदुक्तिः । एतामित्यस्याभिप्रेतमाह—मदीयां गुणमयीमिति । अपीति शेषः । उपासनप्रकरणत्वाद्वक्ष्यमाणार्तादिचतुष्टयसाधारणत्वाच्चोपासनाङ्गभूता प्रपत्तिरत्रोच्यत इत्यभिप्रायेणाऽऽह- मायामुत्सृज्येति ॥ १४ ॥

ये प्रपद्यन्त इति विशेषनिर्देशप्रतिक्षेपाभिप्रायेण शङ्कते—किमिति । सुकृतित्वदुष्कृतित्वभेदः साक्षाच्छङ्कोत्तरम् । तत्तारतम्यकथनं त्वत्यन्तहेयात्यन्तोपादेयाकारभेदज्ञापनार्थमित्यभिप्रायेणाऽऽह—दुष्कृतिन इति । उत्तरश्लोकस्थचतुर्विधपदमत्रापि चतुर्विधपुरुषनिर्देशवशादाकृष्य दर्शितम् । मूढत्वादिविशेषणा-

हृतज्ञानाः पूर्वोक्तप्रकारेण मत्स्वरूपापरिज्ञानात्प्राकृतेष्वेव विषयेषु सक्ताः । पूर्वोक्तप्रकारेण भगवच्छेषतयैकरसमात्मानं भोग्यजातं च स्वशेषतया मन्यमाना नराधमाः । सामान्येन ज्ञातेऽपि मत्स्वरूपे मदौन्मुख्यानर्हत्वात्[1] । माययाऽपहृतज्ञानास्तु मद्विषयं मदैश्वर्यविषयं च ज्ञानं प्रस्तुतमप्येषां तदसंभावनापादिनीभिः[2] कूटयुक्तिभिरपहृतं ते तथोक्ताः । आसुरं भावमाश्रितास्तु मद्विषयं मदैश्वर्यविषयं च ज्ञानं सुदृढमुपपन्नं येषां द्वेषायैव भवति ते तथोक्ताः । उत्तरोत्तराः पापिष्ठतमाः ॥ १५ ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

---

नामेकस्मिन्नेव समुच्चयः किं न स्यादितिशङ्काव्युदासाय पदचतुष्टयव्याख्या । मूढत्वापहृतज्ञानत्वयोर्मध्ये काचिदवस्था नराधमशब्देन विवक्षितेत्यभिप्रायेणाऽऽह—सामान्येनेति । उपनिषदर्थनिश्चयाभावेऽपि सर्वलोकप्रसिद्धेतिहासपुराणादिभिः सामान्यज्ञानम् । सुमेरुप्रभृतिष्विव सुलभत्वापरिज्ञानादौन्मुख्यानर्हत्वम् । उत्पन्नस्यैव हि ज्ञानस्यापहारः, स च विचित्रमोहजनकतया मायाशब्दवाच्याभिः कुदृष्टिबाह्यप्रसूतकूटयुक्तिभिरेवेत्यभिप्रायेणाऽऽह—मद्विषयमिति । आसुरं भावमाश्रिता इत्येतदनपहृतज्ञानविषयमित्याह—सुदृढमुपपन्नमिति । निपुणतमप्रतिपादितप्रक्रियया प्रमाणतर्कैरबाध्यत्वेन निश्चितमित्यर्थः । असुरसंबन्धी भाव आसुरो भावः । असुरा हि भगवन्तमतिशयितशक्तिं जानन्त एव द्वेषमाचरन्ति । वक्ष्यते चाऽऽसुरप्रकृतीनां भावः षोडशे—

विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ।

इति न्यायाच्च । अयमासुरो भावो भगवति द्वेष एवेत्यभिप्रायेण द्वेषायैव भवतीत्युक्तम् । एषामुत्तरोत्तरेषां ज्ञानांशेनातिशयादुत्कृष्टतमत्वभ्रमः स्यादिति तन्निरासायाऽऽह—उत्तरोत्तरा इति । विदुषोऽतिक्रमे दण्डभूयस्त्वमिति न्यायेन ज्ञानप्रकर्ष एवात्र पापिष्ठतमत्वहेतुः । ज्ञानातिशयेऽपि वैमुख्यं च प्राचीनपापातिशयादेवेति भावः ॥ १५ ॥

चतुर्विधा भजन्त इत्यत्र भजनपर्यवसिता प्रपत्तिर्विधि-

---

१ क. °नर्हाः । मा° । २ ख. ग. घ. °भिः कपटापन्नागमु° ।

सुकृतिनः पुण्यकर्माणो मां शरणमुपगम्य मामेव भजन्ते । ते च सुकृततारतम्येन चतुर्विधाः सुकृतगरीयस्त्वेन प्रपत्तिवैशिष्ट्यादुत्तरोत्तराधिकतमा भवन्तीत्यर्थः । आर्तः प्रतिष्ठाहीनो भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः। अर्थार्थी अप्राप्तैश्वर्यतयैश्वर्यकामः। तयोर्मुखभेदमात्रमैश्वर्यविषयतयैक्यादेक एवाधिकारः। जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः ।

---

त्सिता । पूर्वश्लोके तन्निषेधादत्र तद्विधानस्यौचित्यादित्यभिप्रायेण—शरणमुपगम्येत्युक्तम् । सुकृतित्वाविशेषे कथमधिकारिभेद इत्यत्रोत्तरम्—सुकृततारतम्येनेति । तारतम्यं विवृणोति—सुकृतगरीयस्त्वेनेति । विश्वासादेः साधारणत्वेऽपि प्रपत्तेर्वैशिष्ट्यं फले चा(च)भेदात् (दः)। आर्तशब्दोऽत्राऽऽर्तिमूलपूर्वस्थितिशैथिल्यपर इत्यभिप्रायेणाऽऽह—प्रतिष्ठाहीन इति । आर्तस्य हि परमभजनमू(मा)र्तिनिवृत्त्यर्थमेवेत्यभिप्रायेणाऽऽह—भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकाम इति । पाठक्रमादप्यर्थक्रमस्य प्रबलत्वाज्जिज्ञासोः प्रागेवार्थार्थिन उपादानम् । आर्तस्य विशेषं दर्शयति—अप्राप्तेति । अर्थशब्दोऽत्रार्थनीयभोग्यविशेषपरः । फलद्वारा ह्यधिकारिभेदोऽभिधीयते । फलं चाऽऽर्तस्यार्थिनश्चैश्वर्यमेकमेव । यदि पुनस्तदवान्तरभेदेन भेदक्लृप्तिः, भेदान्तरमपि वक्तुं शक्यमित्यत्राऽऽह—तयोरिति । प्रसिद्धेनावान्तरभेदेन विशेषव्यपदेशमात्रमिति भावः । जिज्ञासुशब्देन ज्ञानार्थिमात्रं किं न गृह्यते भगवन्तमेव वा जिज्ञासुर्भक्तिश्रद्धारहितः कुतूहलमात्रेण भगवन्तं जिज्ञासमानो वा । यथैकतमे द्वितता(त्रा)यो यूयं जिज्ञासवो भक्ता इति।

आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् ।
ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥

इत्युक्ताधिकारिचतुष्टये चात्र प्रत्यभिज्ञाप्यमाने जिज्ञासुरपि स एव भवितुमर्हतीति तत्राऽऽह—प्रकृतीति । भगवन्तं जिज्ञासोरन्ततो भगवानेव प्राप्यतयाऽभिमत इति न पुरुषार्थभेदस्तद्भेदाच्चात्राधिकारिभेदः प्रतिपाद्यतेऽतोऽर्थार्थीति बाह्यपुरुषार्थाभिलाषिणो निर्दिष्टाः । भगवदर्थी च ज्ञानीति । जीवात्मस्वरूपं चाधिकानन्दस्वरूपादल्पं चान्यत्र प्रसिद्धम् । अत्रापि परस्तादधिकारिभेदः समर्थ-

ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तम् । ज्ञानी च, इतरस्त्वन्यां प्रकृतिं विद्धि मे परामित्यादिनाऽभिहितभगवच्छेषतयैकरसात्मस्वरूपवित्प्रकृतिवियुक्तकेवलात्मन्यपर्यवस्यन्भगवन्तं प्रेप्सुर्भगवन्तमेव परमप्राप्यं मन्वानः ॥ १६ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७॥

तेषां ज्ञानी विशिष्यते । कुतः—नित्ययुक्त एकभक्तिरिति च । तस्य

---

यिष्यते । अतः परिशेषादात्मार्थिविषयो जिज्ञासुशब्द इति भावः । ज्ञानार्थवाचके जिज्ञासुशब्दे कथमात्मार्थित्वं व्याक्रियत इत्यत्राऽऽह——ज्ञानमेवेति । ज्ञानमिह शुद्धात्मानुभवरूपं विवक्षितमिति भावः । ज्ञानिनोऽधिकार्यन्तरत्वानुगुणान्वक्ष्यमाणान्विशेषाननुसंधाय विशिष्टज्ञानत्वं दर्शयति—इतरस्त्वन्यामित्यादिना । केवलात्मन्यपर्यवस्यन्निति । नगरं प्रविविक्षोरध्वगस्य च्छायातन्मूलस्वापवदात्मानुभवविलम्ब इति भावः । अत्र जिज्ञासावक्तव्यं सर्वमष्टमे प्रपञ्चयिष्यामः । विशिष्टज्ञानफलभूतं पुरुषार्थान्तरपरिग्रहमाह—भगवन्तं प्रेप्सुरिति । तत्र हेतुमाह—भगवन्तमिति । भगवन्तमेवेत्यात्मानुभवविलम्बाक्षमत्वमभिप्रेतम् ॥ १६ ॥

एवं भक्तभेद उक्तः । तत्र प्रबुद्धस्य श्रैष्ठ्यं दर्शयति—तेषामिति । इममेवार्थं परस्तादपि वक्ष्यति—

चतुर्विधा मम जना भक्ता एव हि ते श्रुताः ।
तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ॥
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् ।
ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ॥
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् । इति ।

तेषामिति निर्धारणे षष्ठी । विशिष्यते श्रेष्ठतम इत्यर्थः । किं प्रशंसामात्रार्थमिदमिति शङ्कते—कुत इति । वैशिष्यहेतुपदं विशेषणद्वयमित्याह-नित्ययुक्त एकभक्तिरिति चेति । ज्ञानिनो हीत्यादि । प्रापकस्यैव प्राप्यत्वात्फलदशायां योगोऽनुवृत्त इत्यर्थः । आर्तस्यार्थार्थिनश्चैकाधिकारित्वनिर्णयादितरयोरिति द्विवचनम् । एतेनाऽऽत्मार्थिनः

हि मदेकप्राप्यस्य मया योगो नित्यः । इतरेषां तु यावत्स्वाभिलषित-प्राप्ति मया योगः । तथा ज्ञानिनो मय्येकास्मिन्नेव भक्तिः । इतरेषां तु स्वाभिलषिते तत्साधनत्वेन मयि च । अतः स एव विशिष्यते । किंच 'प्रियो हि ज्ञानिनोऽत्यर्थमहम्' अत्रात्यर्थशब्दोऽनभिधेयवचनः । ज्ञानिनोऽहं यथा प्रियस्तथा मया सर्वज्ञेन सर्वशक्तिनाऽप्यभिधातुं न शक्यत इत्यर्थः । प्रियत्वस्येयत्तारहितत्वात् । यथा ज्ञानिनामग्रेसरस्य प्रह्लादस्य

फलदशायां परमात्मनो भोग्यतयाऽनुसंधानं नास्तीति सिद्धम् । एकस्मिन्भक्तिर्यस्य स एकभक्तिरिति व्यधिकरणबहुव्रीहिः । एक-शब्दाभिमतमुपास्यफलयोरभेदं दर्शयितुम्—एकस्मिन्नेवेत्यवधारणम् । प्रियो हीत्यादिना हेत्वन्तरमुच्यत इत्यभिप्रायेणाऽऽह—किंचेति । अतिशयकाष्ठां वक्तुमाह—अत्यर्थशब्दोऽनभिधेयवचन इति । अत्य-र्थमत्यभिधेयम् । अभिधेयातिक्रमणं चात्राभिधेयान्तराद्वैलक्षण्यम् । तच्चाभिधातुमशक्यमित्यभिप्रायेणाऽऽह—ज्ञानिनोऽहमिति । अभि-धातुमशक्यमित्यस्येश्वरवचनत्वात्तेनाप्यशक्यमिति फलितमित्य-भिप्रायेणोक्तम्—मयेत्यादि । ननु सर्वज्ञेन यदज्ञातं तदसदेव स्याद्यत्र चासावशक्तस्तत्र चानीश्वरत्वं स्यादित्यत्राऽऽह—प्रियत्व-स्येति । गगनकुसुमादिवदसत्त्वनिबन्धनमज्ञानं न दोषाय । अन्यथा भ्रान्तत्वप्रसङ्गात् । इयत्ताया अभावादेव तद्वाचकः शब्दोऽपि नास्तीति तदप्रयोगोऽपि नाशक्तिहेतुरिति भावः । हिशब्दद्योतितां प्रसिद्धिमुदाहरति—यथेति । ज्ञानिनामग्रेसरस्येत्य-नेन जन्मसिद्धनिरतिशयज्ञानवत्त्वं बाधकवचनादिभिर्विभीषि-कासहस्रैश्चाकम्पितत्वं विवक्षितम् ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥

इति कृष्णशब्देनात्र निर्वृतिहेतुत्वादिकं विवक्षितम् । प्रवा-हनादिकृष्णावतारकृतकालियमर्दनसूचनं वा । भक्तदुःखानां कर्षणाद्वा कृष्णः । तीव्रहेतुदुःखसद्भावेऽपि दुःखानुभवाभावो निरतिशयप्रीत्यन्तरतयेति भावः । आत्मज्ञानमपि तदानीं दुर्गम् । किं पुनर्गृहादिकल्पशरीरज्ञानमित्यात्मनो गात्रमित्यस्य भावः ।

१ क. तयोस्तु° । २ क. °तयोस्तु स्वा° ।

स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः ।
न विवेदाऽऽत्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः ॥
इति । सोऽपि तथैव मम प्रियः ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

सर्व एवैते मामेवोपासत इत्युदारा वदान्याः । ये मत्तो यत्किंचिदपि गृह्णन्ति ते हि मम सर्वस्वदायिनः । ज्ञानी त्वात्मैव मे मतं तदायत्तात्म-

---

स च मम प्रिय इत्यत्राप्यत्यर्थशब्दः समुच्चयसामर्थ्यादर्थस्वभावाच्चानुषक्त इत्यभिप्रायेणाऽऽह—तथैवेति । यथाऽहं त्रिविधपरिच्छेदरहितनिरतिशयानन्दस्वरूपोऽनन्तगुणविभूतिर्ज्ञानिनः प्रियस्तथाऽयमेक एव ज्ञानी मम निरतिशयप्रीतिविषय इत्युक्तं भवति। स च मम प्रिय इत्यत्र निरतिशयप्रीतिं कुर्वतोऽपि महोदारस्येश्वरस्य तत्प्रीत्युपाधिकप्रीतिकरणादतृप्तिः सूचितेति केचिदाचार्याः ॥ १७ ॥

तेषामिति श्लोकस्यार्थ एव 'उदाराः' इत्यनेनापि दृढी क्रियते । ज्ञानिनोऽत्यर्थप्रियत्ववचनादन्येषामपि किंचित्प्रियत्वं फलितम् । तदेवोदाराः सर्व इति पादेन विशदीकृतम् । तदेकोपायत्वस्य साधारण्यं मामेवोपासत इत्यनेन दर्शितम् । उदारशब्दस्यात्र मन्दप्रयोजनोत्कर्षमात्रपरत्वव्युदासाय प्रसिद्ध्यनुरोधेनाऽऽह-वदान्या इति । अर्थित्वेनावस्थितानां कथं वदान्यत्वमित्यत्राऽऽह-ये मत्त इति । सकलफलप्रदत्वलक्षणं परमौदार्यमेव हि मम सर्वस्वं तच्च प्रतिग्रहीतृसापेक्षं तदभावे कथं स्यादित्युक्तं भवति। मतमिति। नपुंसकत्वान्न ज्ञानीत्यनेनान्वयः। मत इति परोक्तपाठस्त्वप्रसिद्धस्तस्मादितिशब्दोऽध्याहृतः। अयमर्थस्त्वन्यन्तसिद्धान्ते विरुद्धो भवतु वा मा वा, कृष्णसिद्धान्तस्त्वयमिति भावः । आत्मशब्दस्यात्र बहुप्रमाणविरुद्धत्वान्न तादात्म्यादिविषयत्वम् । तथा सति व्यतिरेकनिर्देशबाधश्च। अतस्तदभिप्रेतमाह-तदायत्तेति । शरीरं प्रति धारको ह्यात्मा । प्रियत्वातिशयप्रतिपादनाय सावधारणोऽयमात्मत्वारोपः। अस्मिन्नभिमात्र(न)सारे भगवत्सिद्धान्ते किं प्रमाणमभिमतमित्याकाङ्क्षायामास्थित इत्यादि-

धारणोऽहमिति मन्ये । कस्मादेवम्—यस्मादयं मया विनाऽऽत्मधारणा- संभावनया मामेवानुत्तमं प्राप्यमास्थितः । अतस्तेन विना ममाप्यात्म- धारणं न संभवति । ततो ममाप्यात्मा हि सः ॥ १८ ॥

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

नाल्पसंख्यासंख्यातानां पुण्यजन्मनां फलमिदं यन्मच्छेषतैकरसा- त्मयाथात्म्यज्ञानपूर्वकं मत्प्रपदनम् । अपि तु बहूनां पुण्यजन्मनाम-

---

त्कमुच्यत इत्याह—कस्मादेवमिति । हि हेतौ । युक्तात्मेत्याशंसायां क्तः । परमात्मयोगाशंसाविशिष्ट एवाऽऽत्मा यस्य सोऽत्र युक्तात्मा । तदेतदभिप्रेत्योक्तम्—मया विनाऽऽत्मधारणासंभावन- येति । मदनुसंधानाभावे सति अर्थान्तरानुसंधानप्रवृत्तेरसमर्थसं- भावनयेत्यर्थः । मामेवेति । अयुक्तदशायामसत्त्वमेव स्यादिति भावः । मामेवोपायभूतमेव न तु फलान्तरलब्धमित्यर्थः । प्राप्य- मिति । गतिशब्दोऽत्र गन्तव्यपरः । अस्त्वेवं तदायत्तधारणो यथा- प्रमाणं ज्ञानी, ततः किमायातं भवतस्तदायत्तधारणत्वस्येत्य- त्राऽऽह—अतस्तेन विनेति । सहृदयानां मदभिप्रायविदां चैतद्व्य- क्तमित्यभिप्रायः । तथाहि—

न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यते त्रिषु लोकेषु ततोऽस्म्येकान्तितां गतः ॥
नाद(र)दैताद्धि ते सत्यं वचनं समुदाहृतम् ।
नास्य भक्तः प्रियतरो लोके कश्चन विद्यते ॥ इति ।

ततो ममाऽऽत्मा हि स इत्याधारत्वादिविशेषो ह्यात्मलक्षण- मिति भावः । ऐश्वर्यादिकामाः स्वत एव मत्स्वरूपस्यातिशय- हेतवो ज्ञानी तु मम स्वरूपसत्ताहेतुरिति स्वभक्तस्तुतिपरः श्लोकः ॥ १८ ॥

पुनरप्युक्तज्ञानवत्त्वस्यानेकजन्मसाध्यपुण्यफलत्वेन दुर्लभत- रतया ज्ञानिनः श्रैष्ठ्यं दर्शयति—बहूनामिति श्लोकेन ।

' ये जन्मकोटिभिः सिद्धास्तेषामन्तेऽत्र संस्थितिः ' ।

इति भगवच्छास्त्रं जन्मान्तरसहस्रेष्वित्यादिकां स्मृतिं चानुसं- दधान आह—नाल्पेति । बहूनां जन्मनामित्यत्र न तावद्बहुजन्म-

न्तेऽवसाने वासुदेवशेषतैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च । स चासंख्येयैः कल्याणगुणैः परतर इति ज्ञानवान्भूत्वा वासुदेव एव मम परमप्राप्यं प्रापकं चान्यदपि यन्मनोरथवर्ति स एव मम तत्सर्वमिति मां यः प्रपद्यते मामुपास्ते स महात्मा महामनाः सुदुर्लभो दुर्लभतरो लोके । वासुदेवः सर्वमित्यस्यायमेवार्थः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहम्' 'आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्' इति प्रक्रमात् । ज्ञानवांश्चायमुक्तलक्षण एवास्यैव पूर्वोक्तज्ञानित्वात् ।

---

सद्भावमात्रं विवक्षितम् । तस्यात्रानुपयुक्तत्वात् । न च बहुजन्ममात्रस्य ज्ञानहेतुत्वमुच्यते सर्वेषामयत्नतो ज्ञानित्वप्रसङ्गात् । अतः पुण्यजन्मनामिति विशेषितम् । ईदृशज्ञानवत्त्वमेवंभूतविशिष्टप्रवृत्तौ हेतुरिति दर्शयितुं ज्ञानवतोऽनेकजन्मभ्रमव्युदासाय च ज्ञानवान्भूत्वेत्युक्तम् । वासुदेवः सर्वमिति सामानाधिकरण्यस्य बाधाध्यासतद्धाम्यादिविषयत्वायोगात् शरीरशरीरिभावादिनिर्वाहादपि प्रकरणविशेषसिद्धस्यार्थस्य ग्राह्यतरत्वात्—परमप्राप्यमित्यादिकमुक्तम् । लौकिकं धारकमित्यादिकमभिप्रेत्याऽऽह—अन्यदपीत्यादि । 'त्वमेव माता च पिता त्वमेव' 'माता पिता भ्राता निवासः शरणं सुहृत्' गतिर्नारायण इत्यादिकमपीहाभिप्रेतम् । प्रपत्तेरत्रोपासनाङ्गत्वादाह—मामुपास्त इति । ज्ञानिनोऽपि स्वरूपमहत्त्वं प्रमाणविरुद्धं पङ्क्तिपावनत्वादि माहात्म्यं सदपि प्रकृते नापेक्षितम् । तस्माज्ज्ञानविशेषाधीनमाहात्म्यमिह विवक्षितमित्याह—महामना इति । फलान्तर[भा]वस्यापि भगवदुपासकस्य दुर्लभत्वात्तद्व्यवच्छेदाय सुशब्द इति दर्शयितुं दुर्लभतर इत्युक्तम् । वासुदेवः सर्वमिति सामानाधिकरण्यस्य पराभिमतमर्थं प्रतिक्षिपन्स्वोक्तं द्रढयति—वासुदेव इति । अत्र ह्युपक्रमः प्राप्यभेदनिबन्धनाधिकारिभेदपरः । अतः प्रकरणविरुद्धः प्रकरणानुपयुक्तो चाऽर्थः प्रकरणविशेषसिद्धोपयुक्तसमार्थे जागरूकेऽनादरणीय इति भावः । ज्ञानवानित्यत्रापि निर्विशेषादिज्ञानजीवस्वाद्यज्ञानादिव्युदासायाऽऽह—ज्ञानवांश्चायमिति । उक्तलक्षणवासुदेवशेषतैकरसस्वात्मवेदीत्यर्थः । उक्तलक्षणत्वहेतुमाह—अस्यैव पूर्वोक्तज्ञानित्वादिति । ज्ञानी च भरतर्षभेति पूर्वोक्ते ज्ञानिनि कथमुक्तल-

भूमिराप इत्यारभ्य—

‘ अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥

जीवभूताम् ’ इति हि चेतनाचेतनस्य प्रकृतिद्वयस्य परमपुरुषशेषतैकरसतोक्ता ।

‘ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥
इत्यारभ्य—
ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ ’

इति प्रकृतिद्वयस्य कार्यकारणोभयावस्थस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वं परमपुरुषस्य च सर्वैः प्रकारैः सर्वस्मात्परतरत्वमुक्तम् । अतः स एवात्र ज्ञानीत्युच्यते ॥ १९ ॥

तस्य ज्ञानिनो दुर्लभत्वमेवोपपादयति—

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

सर्व एव हि लौकिकाः पुरुषाः स्वया प्रकृत्या वासनया गुणमयभा-

---

क्षणत्वमित्यत्राऽऽह—भूमिराप इत्यारभ्येति । यद्वा—पूर्वोक्तज्ञानित्वादित्येकभक्तित्वादिकं विवक्षितम् । भूमिराप इत्यादिना हेत्वन्तरोक्तिः । कार्यकारणोभयावस्थस्येति । कार्यत्वकारणत्वरूपोभयावस्थाविशिष्टस्येत्यर्थः । स्वरूपस्थित्यादितादधीन्यं मयि सर्वं रसोऽहमित्यादिषु व्यक्तम् । उक्तलक्षणत्वं निगमयति—अत इति । स एवेति । वासुदेवशेषतैकरसोऽहमित्यादिनोक्त एवेत्यर्थः । उक्तलक्षण एव ज्ञानवानित्यभिधीयत इति दर्शयितुं ज्ञानीत्युच्यत इत्युपसंहृतम् ॥ १९ ॥

कामैस्तैरित्यादेः सर्गे यान्ति परंतपेत्यन्तस्य प्रकृतसंगतिमाह—तस्येति । देवतान्तरफलान्तरसङ्गादिकं प्रतिबन्धकमिति भावः । बहुवचनासंकोचं सर्वभूतानि संमोहमिति वक्ष्यमाणं चानुसंधायोक्तम्—सर्व एव हीति । स्वयेति । प्राचीनस्वकीयानुभवजनितया प्रत्यात्मनियतया च तदेकनिष्ठफलप्रकारिकयेत्यर्थः । वासनाया नियतविषयेच्छाजनकत्वायोक्तम्—गुणमयभावविषय-

वत्विषयया नियता नित्यान्विताास्तैस्तैः स्ववासनानुरूपैर्गुणमयैरेव कामैरि-
च्छाविषयभूतैर्हृतमत्स्वरूपविषयज्ञानास्तत्तत्कामसिद्ध्यर्थमन्यदेवता मद्-
व्यतिरिक्ताः केवलेन्द्रादिदेवतास्तं तं नियममास्थाय तत्तद्देवताविशे-
षमात्रप्रीणनायासाधारणं नियममास्थाय प्रपद्यन्ते ता एवाऽऽश्रित्यार्-
चयन्ते न मत्स्वरूपमभिजानन्ति ॥ २० ॥

---

येति । एतेन स्वभावपर्यायः प्रकृतिशब्दोऽत्र । कामैस्तैस्तैरित्या-
दिसमभिव्याहारात्तत्तदिच्छाहेतुभूतसहजवासनाविषय इत्यपि
निर्व्यूढम् । नियतत्वं नामादृष्टव्यभिचारः संबन्ध इत्यभिप्रायेणो-
क्तम्–नित्यान्विता इति । वीप्साभिप्रेतमाह–स्ववासनानुरूपैरिति ।
लभते च ततः कामान्, इत्यनन्तराभिधीयमानैकार्थ्यात्कामश-
ब्दोऽत्र कर्मणि व्युत्पन्नः । हृतज्ञाना इत्यत्र ज्ञानशब्देन पूर्वप्र-
सक्तमेव ज्ञानं विवक्षितमिति दर्शयितुम्–हृतमत्स्वरूपविषयज्ञाना
इत्युक्तम् । तदेव चान्यदेवताभजनकारणम् । फलकारणयोः
स्वरूपेण निर्दिष्टयोरपि साध्यसाधनभावोऽर्थसिद्ध इति दर्श-
यितुम्–तत्तत्कामसिद्ध्यर्थमित्युक्तम् । तैस्तैस्तत्तद्देवताभिर्दातुं शक्यैरि-
त्यर्थः । इन्द्रादिदेवतानामपि भगवत्पर्यन्तानुसंधाने तत्तद्विशेष-
णविशिष्टस्य भगवत एव तत्तद्देवतात्वादन्यदेवतात्वं तथाविधा-
नुसंधानराहित्यनिबन्धनमिति ज्ञापनायोक्तम्—मद्व्यतिरिक्ताः
केवलेन्द्रादिदेवता इति । एतेन कामैस्तैरित्यादिकमितरभक्तत्रय-
विषयमिति परोक्तं निरस्तम् । तत्तत्कामार्थमपि निपुणैर्भगवा-
नेव प्रव(प) दनीयः । अत एव संगृहीतम्–'ऐकान्त्यं भगवत्येषां
समानमधिकारिणाम्' इति । अन्यथा तृषितो जाह्नवीतीरे कूपं
खनति दुर्मतिरिति भावः । तं तं नियममिति । नियमोऽत्र संक-
ल्पविशेषादिः । श्रद्धयाऽर्चितुमिच्छतीति वक्ष्यमाणवशादत्रापि
प्रपत्तेरर्चनाङ्गत्वं दर्शयति—ता एवाऽऽश्रित्यार्चयन्त इति ।
विश्वासगर्भफलप्रदत्ववरणपूर्वकं तत्तत्कर्मभिः प्रीणयन्तीत्यर्थः ।
प्रपत्तिस्वरूपसामर्थ्यादवधारणसिद्धिः । तदेकोपायता याच्ञेति
हि तल्लक्षणम् ॥ २० ॥

---

१ ग. घ. °त्य चिन्तोचितमत्स्वरूपं न संश्रयन्ते ॥ २० ॥

यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

ता अपि देवता मदीयास्तनवः ' य आदित्ये तिष्ठन्यमादित्यो न वेद यस्याऽऽदित्यः शरीरम् ' इत्यादिश्रुतिभिः प्रतिपादिता मदीयास्तनव इत्यजानन्नपि यो यो यां यां मदीयामिन्द्रादिकां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति तस्य तस्याजानतोऽपि मत्तनुविषयैषा श्रद्धेत्यहमेवानुसंधाय तामेवाचलां निर्विघ्नां विदधामि ॥ २१ ॥

---

एवं देवतान्तरफलान्तरसक्ता अपि तत्तदाराधनतत्फलयोः शैथिल्ये सति ' अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता ' इति न्यायेनानर्थहेतुषु निषिद्धेषूपायेषु निमज्जेयुरिति भयात्परमकारुणिकोऽहमेव तत्तदाराधनहेतुश्रद्धाविघ्नशान्तिं तत्फलं च प्रयच्छामीति श्लोकद्वयेनाऽऽह—यो य इति । एक एवेश्वरो रामकृष्णाद्यवतारवदादित्यादिविग्रहभाक्, न तु चेतनान्तरमस्तीति कुदृष्टिमतनिरासायाऽऽह—ता अपीति । अयमभिप्रायः—पूर्वश्लोके प्रपद्यन्तेऽन्यदेवता इति निर्देशो न तावदीश्वरासाधारणविग्रहविशेषविषयस्तद्विशिष्टेश्वरविषयो वा भवितुमर्हति अत्रान्यदेवतात्वव्यपदेशायोगात् । रामकृष्णादिवदेव । ततश्च चेतनान्तरविषयत्वमवश्याभ्युपगमनीयम्—देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपीति च पृथग्वक्ष्यते । अतोऽत्र तनुशब्दः पूर्वोत्तरपरामर्शवशाच्चेतनविशेषविषय इति । सर्वासां चेतनविशेषरूपदेवतानामीश्वरशरीरत्वेन प्रदर्शनार्थं श्रुतिमुदाहरति—य इति । नात्र तनुत्वेन भजनं विवक्षितम् । तथा सति प्रतर्दनविद्यादिष्विव परमात्मोपासनत्वप्रसङ्गात् । न तु मामभिजानन्ति तत्त्वेनेति वक्ष्यमाणत्वाच्चेत्यभिप्रायेणाऽऽह—मदीयास्तनव इति । अजानन्नपीति । तर्हि तनुत्वेनात्र निर्देशोऽनुपपन्नोऽनर्थकश्च, यां यां देवतामित्येव हि वक्तव्यमित्यत्राऽऽह—तस्य तस्येति । यथा नरपतेरात्मस्वरूपमजानतोऽपि राजशरीरप्रसादनादिकर्तुरन्ततो राजान्नैव फलमिति न्यायसूचनादुपपन्नोऽत्र तनुशब्द इति भावः । जातायाः श्रद्धाया अचलत्वं नाम प्रतिबन्धराहित्येन फललाभाय निरन्तरसंतन्यमानत्वमित्यभिप्रायेणोक्तम्—निर्विघ्नमिति ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥

स तया निर्विघ्नया श्रद्धया युक्तस्तस्येन्द्रादेराराधनं प्रतीहते चेष्टते। ततो मत्तनुभूतेन्द्रादिदेवताराधनात्तानेव हि स्वाभिलषितान्कामान्मयैव विहिताँल्लभते। यद्यप्याराधनकाल इन्द्रादयो मदीयास्तनवस्तत एव तदर्चनं च मदाराधनमिति न जानाति तथाऽपि तस्य वस्तुतो मदाराधनत्वा-

---

स तयेति श्लोकेऽपि पूर्ववद्वीप्सा भाव्या। तयेत्यस्य प्रस्तुतोपयुक्ताकारपरामर्शित्वज्ञापनाय—निर्विघ्नयेत्युक्तम्। स्त्रीलिङ्गेन देवताशब्देन तनुशब्देन च पूर्वनिर्देशेऽपि तस्येति पुंलिङ्गेन प्रतिनिर्देशो बुद्धिस्थतत्तद्देवपरः। देवान् देवयजो यान्तीति ह्यनन्तरमुच्यत इत्यभिप्रायेण—तस्येन्द्रादेरित्युक्तम्। यद्यपि तस्या इति पदच्छेदः शक्यस्तथाऽपि राधनमित्यस्योपसर्गरहितस्याऽऽराधने प्रसिद्ध्यभावात्तदनादरः। यद्वा—फलितोक्तिरियम्। राधनमित्येव पदच्छेदः। तत इति व्याख्येयनिर्देशः। तद्व्याख्यानम्—मत्तनुभूतेन्द्रादिदेवताराधनादिति। अयमभिप्रायः—तत इत्यस्येन्द्रादिपरत्वं मन्दम्। मयैव विहितानिति स्वस्यैव फलदातृत्ववचनात्। ततस्तन्निमित्तमेवात्रापेक्षितमतस्तस्या राधनमीहत इति प्रधानतया प्रस्तुतपरामर्श एवायमिति। हि तानित्यत्र हीत्यव्ययम्। सर्वत्र च तच्छब्दनिर्देशात्कामानित्यत्रापि तानिति विशेषणमुचितम्। भगवतः समस्ताभिलषितदायित्वसूचनादपेक्षितं च कामविहितत्ववचनं न प्रकरणविरुद्धम्। 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इति तन्निन्दाप्रवृत्तत्वादित्यभिप्रायेणोक्तम्—तानेव हि स्वाभिलषितानिति। त्वद्विषयज्ञानहीनस्य त्वया फलदानं कथमित्यत्र मयैवेत्यवधारणाभिप्रेतमाह—यद्यपीति। एतदप्यत्र स्मारितम्। यद्यपीत्यवधारणार्थमाह—मदाराधनत्वादिति। अहं हि सर्वयज्ञानामित्येतदत्र भाव्यम्। 'इष्टापूर्तं बहुधा जातं जाय-

दाराधकाभिलषितमहमेव विदधामि ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

तेषामल्पमेधसामल्पबुद्धीनामिन्द्रादिमात्रयाजिनां तदाराधनफलमल्पमन्तवच्च भवति । कुतः—देवान्देवयजो यान्ति । यत इन्द्रादीन्देवांस्तद्याजिनो यान्ति । इन्द्रादयो हि परिच्छिन्नभोगाः परिमितकालवर्तिनश्च ततस्तत्सायुज्यं प्राप्तास्तैः सह प्रच्यवन्ते । मद्भक्ता अपि तेषामेव कर्मणां मदाराधनरूपतां ज्ञात्वा परिच्छिन्नफलसङ्गं त्यक्त्वा मत्प्रीणनैकप्रयो-

---

मानम्, विश्वं बिभर्ति भुवनस्य नाभिः ' इति च श्रुतिः ॥२२॥

यदि भगवत्प्रसादात्तेषामपि फलसिद्धिस्तर्हि तत्र को विशेषो भवदुपासकेभ्य इत्यत्रोत्तरम्—अन्तवत्त्वित्यादि। पूर्वार्धे संभवत्येकवाक्यत्वे वाक्यभेदभ्रमनिरासाय तेषामल्पमेधसामिति सामानाधिकरण्यं दर्शितम् । तेषामिति फलाल्पत्वहेतुपरामर्श इत्याह—इन्द्रादिमात्रयाजिनामिति । तत्र हेतुरल्पबुद्धित्वमल्पेष्विन्द्रादिषु तदधीनफलेषु च मेधा बुद्धिर्येषां तेऽल्पमेधसः। अल्पगोचरत्वादल्पा मेधा येषामिति वा । अल्पमेधस्त्वादेव तत्फलस्याल्पत्वं सिद्धमिति कृत्वाऽल्पमन्तवच्च भवतीत्युक्तम् । देवान्देवयज इत्यत्र देवशब्दो गोबलीवर्दन्यायान्मच्छब्दोक्तभगवद्व्यतिरिक्तदेवपरः । अथवा मनुष्यादिसहपठितकर्मवश्यदेवजातिविशेषपर इत्यभिप्रायेण—इन्द्रादीन्देवांस्तद्याजिन इत्युक्तम् । कथमिन्द्रादिप्राप्तिः फलस्याल्पास्थिरत्वहेतुरित्यत्राऽऽह—इन्द्रादयो हीति। अस्तु तेषामल्पभोगत्वमस्थिरत्वं च ततः किं तदुपासकस्य भगवत्प्रसादाधीनफललाभस्येत्यत्राऽऽह—तत इति । केवलेन्द्रादियाजिनां तत्तदभिलषितं तत्सायुज्यादिकमेव हि भगवान्प्रयच्छति । सायुज्यं च समानभोगवत्त्वमेव । तत इन्द्रादिभोगस्य परिमितस्वरूपत्वात्परिमितकालवर्तित्वाच्च तत्समानस्तदुपासकभोगोऽपि तथाविध एव भवेदिति भावः । मामितिनिर्दिष्टभगवत्स्वरूपस्य निरतिशयानन्दमयत्वात्तत्साधर्म्यमागतस्यापि निरतिशयभोगत्वं सिद्धम् । सूत्रं च ' भोगमात्रसाम्यलिङ्गाच्च ' [ ब्र० सू० ४।४।२१ ]।

जना मामेव प्राप्नुवन्ति न च पुनर्निवर्तन्ते । ' मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ' इति वक्ष्यति ॥ २३ ॥

इतरे तु सर्वसमाश्रयणीयत्वाय मम मनुष्यादिष्ववतारमप्यकिंचित्करं कुर्वन्तीत्याह—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

सर्वैः कर्मभिराराध्योऽहं सर्वेश्वरो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावः परमकारुण्यादाश्रितवात्सल्याच्च सर्वसमाश्रयणीयत्वायाजहत्स्वभाव

---

इति । तन्नित्यत्वाच्च तदुपासकभोगस्यापि नित्यत्वं दर्शयति— न च पुनर्निवर्तन्त इति । अत्राभिप्रेतं वक्ष्यमाणवचनेन विशदयति—मामुपेत्येति । अत्रापि सूत्रम्—' अनावृत्तिः शब्दादनावृत्तिः शब्दात् । ' [ ब्र० सू० ४ । ४ । २२ ] इति । मद्भक्ता यान्ति मामपीत्यत्र भगवति फलान्तरार्थिनामपि मोक्षे विश्रमो नारायणार्यैरुक्तः । यथा देवतान्तरभक्तानामपेक्षितार्थलाभ एव फलम् । भगवद्भक्तानां तु न तावन्मात्रं फलं किं तु स्वभावप्रसादनभिसंहितादपि पापपरिक्षयात्सत्त्वाधिकारोन्मीलनेन शुद्धेषु धर्मेषु श्रद्धोत्पत्त्या शनैः शनैर्ज्ञानवैराग्यादिलाभद्वारेण पूर्वोक्तभक्तिविशेषलाभाच्चिरतरेणापि कालेन भगवत्प्राप्तिर्भविष्यतीति नित्यफलत्वमित्यभिप्राय इति । इदं च शाण्डिल्यसंहितायामपि भागवताचारसंग्रहे प्रोक्तम्—

भगवन्तं समुद्दिश्य तदेकशरणा नराः ।
कदाचिन्न च हीयन्ते काम्यकर्मरता अपि ॥ इति ॥ २३ ॥

ननु फलान्तरदेवान्तरवासनया हि तद्विषयज्ञानप्रतिबन्ध उक्तः । त्वत्साक्षात्काराभावे हि तदुपपत्तिः । त्वयि कारुण्यादिभिरिते सर्वसमाश्रयणीयत्वायावतारवशादशेषजननयनगोचरे कथं त्वत्परित्याग इत्यत्रोत्तरमव्यक्तं व्यक्तिमापन्नमित्यभिप्रायेणाऽऽह— इतरे त्विति । इतरे चतुर्विधसुकृतिभ्योऽन्ये । परं भावमित्यनेनाभिप्रेतं निरतिशयपरत्वं सौलभ्यरूपं स्वभावं च दर्शयति—सर्वैः कर्मभिरित्यादिनाऽवतीर्ण इत्यन्तेन । अजहत्स्वभाव इत्यव्ययशब्दाभि-

एव वसुदेवसूनुरवतीर्ण इति ममैवं परं भावमव्ययमनुत्तममजानन्तः प्राकृतराजसूनुसमानमितः पूर्वमनभिव्यक्तमिदानीं कर्मवशाज्जन्मविशेषं प्राप्य व्यक्तिमापन्नं मान्यं मामबुद्धयो मन्यन्ते । अतो मां नाऽऽश्रयन्ते न कर्मभिराराधयन्ति च ॥ २४ ॥

कुत एवं न प्रकाशत इत्यत्राऽऽह—

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

---

प्रेतोक्तिः । अस्मादुत्तमं नास्तीत्यनुत्तमम् । अनवधिकातिशयमित्यर्थः । अत्राव्यक्तं व्यक्तिमापन्नमित्येतत्सामर्थ्यादवतारविषयत्वं तत्रापि मामित्यस्यौचित्यादवतारविशेषविषयत्वं च सिद्धमित्यभिप्रेत्योक्तम्—वसुदेवसूनुरवतीर्ण इति प्राकृतराजसूनुसमानमिति च । इदं सर्वावतारोपलक्षणतया विशेषोदाहरणमात्रं वा । अव्यक्तं व्यक्तिमापन्नमित्यनयोरर्थान्तरभ्रमव्युदासायाऽऽह— प्राकृतेत्यादि । मन्दमतिबोध्यतया निन्द्यमानोऽर्थोऽत्रायमेव भवितुमर्हतीति भावः । इतः पूर्वमनभिव्यक्तत्वमिदानीमवताराद्व्यक्तत्वमपि प्रमाणसिद्धं तत्कथमत्र प्रक्षिप्यत इत्यत्रोक्तम्—कर्मवशाज्जन्मविशेषं प्राप्येति । उत्सर्गापवादादिनयात्संकोच इति भावः । अबुद्धय इत्यनेन परमात्मतदवतारादिविषयश्रवणमननादिराहित्यं वैलक्षण्यज्ञापकलिङ्गदर्शनेऽपि तदूहशक्तिवैकल्यं च विवक्षितम् । फलितमाह—अत इत्यादि । आश्रयणमत्र प्रपत्तिपूर्वकभजनम् । तदभावाच्च तदङ्गतया वर्णाश्रमादिधर्मान्स्तुतिनमस्कारादींश्च न कुर्वत इत्याह—न कर्मभिरिति ॥ २४ ॥

यदि त्वमप्रतिहतसंकल्पः साभिसंधिकं सर्वसमाश्रयणीयत्वायावतीर्णस्तर्हि कथं तत्फलासिद्धिरित्यभिप्रायेण शङ्कते—कुत इति । मायाशब्दस्ताविद्विचित्रसृष्टिकरार्थवाचितया प्रागेव प्रपञ्चितः । त्रिगुणात्मकमायया समावृतत्वं तु प्रागवस्थावतारावस्थयोः साधारणम् । असाधारणश्चाऽऽवरणहेतुरत्र संभवन्वक्तुमुचितः । संकल्पादिश्च साधारणः । योगशब्दोऽपि संबन्धे प्रचुर-

---

१ ख. ग. घ. ङ. च. °यम् ॥ २५ ॥ म° ।

क्षेत्रज्ञासाधारणमनुष्यत्वादिसंस्थानयोगाख्यमायया समावृतोऽहं न सर्वस्य प्रकाशः । मयि मनुष्यत्वादिसंस्थानदर्शनमात्रेण मूढोऽयं लोको मामतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसमुपलभ्यमानमपि अजमव्ययं निखिलजगदेककारणं सर्वेश्वरं मां सर्वसमाश्रयणीयत्वाय मनुष्यत्वसंस्थानमास्थितं नाभिजानाति ॥ २५ ॥

---

प्रयोगत्वात्तदर्थः प्रसृतस्ततः संबन्धी चार्थसिद्धः । स चात्रौचित्यात्प्रदेशान्तरेषु प्रसिद्धत्वाच्च मनुष्यत्वादिसंस्थानदेशभाषादिरेव । तेनेन्द्रजालमायाव्यवच्छेदोऽपि सिद्ध इत्यभिप्रायेणाऽऽह—मनुष्यत्वादीति । प्रकाशः परस्वभावेनेति शेषः । तर्हि तवैवायं दोष इत्यत्रोत्तरम्—मूढोऽयमित्यादि । अविगर्ह्यत्वायाऽऽपादितं मनुष्यत्वादिकं दुर्मतीनां परित्यागहेतुरभूत् । न च पारमेश्वरस्वभावो मायया सर्वस्तिरोहितः, लोकोत्तरकर्मतेजःप्रभृतीनां प्रकाशनात् । किंत्वयं मन्दो लोको यत्किंचित्साधर्म्याद्धन्तावृते मयूखमालिनि खद्योतभावमवगच्छतीत्यभिप्रायेणाऽऽह—मयीति । मूढो मयि मनुष्यत्वादिभ्रमविशिष्ट इत्यर्थः । मामिति तदानींतनोपलभ्यमानाकारनिर्देशसामर्थ्यात्प्रदेशान्तरोक्तत्वाच्च—अतिवाय्विन्द्रकर्माणमित्याद्युक्तम् । परावस्थस्याज्ञानं सर्वेषां प्राप्तमेव । इह तु परं भावमजानन्तो ममाव्ययमनुत्तममिति मनुष्यत्वे परत्वस्याज्ञानमुच्यते । तत्र प्रतिषेधस्याज्ञानस्य प्रसङ्गार्थं लिङ्गोक्तिरियम् । निरतिशयदीप्तियुक्तत्वमपि जगत्कारणपरमपुरुषासाधारणधर्मतया वेदान्तेषु निर्णीतम् । अतिवाय्विन्द्रकर्मत्वं च सर्वनियन्तृत्वलिङ्गम् । अजमित्यनेन फलितमाह—निखिलजगदेककारणमिति । अव्ययमित्यनेन सिद्धमाह—सर्वेश्वरमिति । स्वरूपतो धर्मतश्च निर्विकारत्वं हि तस्याव्ययत्वम् । एतेन 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्' इति प्रागुक्तसूचनं वा । अजमव्ययं न जानाति किंतु पुरुषान्तरवत्कर्माधीनजन्मानं ज्ञानसंकोचादिमन्तं जानातीति शेषः ॥ २५ ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

अतीतानि वर्तमानानि अनागतानि च सर्वाणि भूतानि अहं वेद जानामि । मां तु वेद न कश्चन । मयाऽनुसंधीयमानेषु सर्वेषु कालत्रयवर्तिषु भूतेषु मामेवंविधं वासुदेवं सर्वसमाश्रयणीयतयाऽवतीर्णं विदित्वा मामेव समाश्रयन्न कश्चिदुपलभ्यत इत्यर्थः । अतो ज्ञानी सुदुर्लभ एव ॥ २६ ॥

तथाहि—

इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥

इच्छाद्वेषाभ्यां समुत्थेन शीतोष्णादिद्वंद्वाख्येन मोहेन सर्वभूतानि

---

अयं लोको नाभिजानातीत्येतावता वर्तमानमात्रपरत्वं नाऽऽशङ्कनीयं किंतु त्रैकाल्यवर्ति(र्ती)न्यपि भूतानि न जानन्तीत्युच्यते—वेदाहमित्यादिना । अत्रातीतानीति पृथङ्निर्दिष्टत्वाद्भूतानीत्येतत्क्षेत्रज्ञपरम् । स्वस्य सर्वज्ञत्वमत्र किमर्थमुच्यत इत्यत्राऽऽह—मयेति । तद्वेदनफलं हि तदेकसमाश्रयणमिति दर्शयितुम्—मामेव समाश्रयन्नित्युक्तम् । परमप्रकृतेन संगमयति—अत इति ॥ २६ ॥

एवं ज्ञानिनो दौर्लभ्याय कालत्रयवर्तिसर्वभूतसाधारणं भगवदज्ञानकारणमिच्छेति श्लोकेनोच्यत इत्यभिप्रायेणाऽऽह—तथाहीति । इच्छाद्वेषाभ्यामिति । इच्छाद्वेषाभ्यां समुत्तिष्ठतीतीच्छाद्वेषसमुत्थः । ननु जन्मकाल एवेच्छाद्वेषौ कारणाभावान्न संभवतः, संभवन्तौ वा भगवद्विषयौ किं न स्याताम् । न चेच्छाद्वेषमात्रेण शीतोष्णादेरुत्थानं तस्य हेमन्तघर्मादिस्वकारणाधीनत्वात् । द्वंद्वस्य च कथं मोहशब्दार्थता । मोहेन मोहं यान्तीति चाऽऽत्माश्रयादिप्रसङ्गः । इच्छाद्वेषावेव द्वंद्वशब्देन गृह्येते अतो द्वंद्वनिमित्तो मोहो द्वंद्वमोह इत्यादिपरव्याख्यानं च पुनरुक्त्यादिदुःस्थम् । एतेन सुखं मे भूयाद्दुःखं मे मा भूदित्यभिनिवेशो

सर्गे जन्मकाल एव संमोहं यान्ति। एतदुक्तं भवति—गुणमयेषु सुखदुःखादिद्वंद्वेषु पूर्वपूर्वजन्मनि तद्विषयाविच्छाद्वेषौ रागद्वेषावभ्यस्तौ तद्वासनया पुनरपि जन्मकाल एव तदेव द्वंद्वाख्यमिच्छाद्वेषविषयत्वेन समुपस्थितं भूतानां मोहनं भवति। तेन मोहेन सर्वभूतानि संमोहं यान्ति। तद्विषयेच्छाद्वेषस्वभावानि भवन्ति। न मत्संश्लेषवियोगसुखदुःखस्वभावानि। ज्ञानी तु मत्संश्लेषवियोगैकसुखदुःखस्वभावः। न तत्स्वभावं किमपि भूतं जायत इति॥ २७॥

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वंद्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥ २८॥

---

द्वंद्वमोह इत्यपि मन्दमुक्तमित्यादिकमाशङ्क्याऽऽह—एतदुक्तं भवतीति। जन्मान्तरवासनाख्यं कारणमस्ति। वासनायाश्च स्वकारणस्वभावविषयत्वादिच्छाद्वेषयोर्न भगवत्संश्लेषविश्लेषविषयत्वप्रसङ्गः। उत्थानं चेच्छाद्वेषविषयतया स्फुरणमेव। मोहशब्दस्य च करणे व्युत्पत्त्या द्वंद्वे प्रयोगः। मोहकारणस्य मोहजनने च नाऽऽत्माश्रयादीति भावः। अभोग्ये भोग्यताबुद्धिरद्वेष्ये च द्वेष्यताबुद्धिरिह संमोह इत्यभिप्रायेणाऽऽह—तद्विषयेति। एवंविधसंमोहवशादिच्छाद्वेषयोः साक्षात्प्राप्तविषयपरित्यागं दर्शयति—न मत्संश्लेति। उचितविषयेच्छाद्वेषशालिनं सुदुर्लभं ज्ञानिनं तद्व्यतिरेकप्रकाशनाय दर्शयति—ज्ञानीति।

‘ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः।
तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः’॥

इति हि संग्रहः। तद्व्यतिरेकमेव भूतानां जन्मसिद्धं दर्शयति—न तदिति॥ २७॥

यद्येवं सर्वभूतानि संमोहं यान्ति तर्हि भगवदुपासनं कदाचिदपि कस्यचिदपि न स्यात्। अतश्चतुर्विधा भजन्ते मामित्यादिनोक्तं चानुपपन्नं स्यादित्यत्रोत्तरम्—येषां त्विति। पुण्यकर्मणामित्येतत्पापनिवृत्तिहेतुपरम्। तथा च श्रुतिः—धर्मेण पापमपनुदतीति। जनशब्दश्च जनिमति वर्तमानत्वात्पुण्यप्रचयहेतुभूता-

येषां त्वनेकजन्मार्जितेनोत्कृष्टपुण्यसंचयेन गुणमयद्वंद्वेच्छाद्वेषहेतुभूतं मदौन्मुख्यविरोधि चानादिकालप्रवृत्तं पापमन्तगतं क्षीणं ते पूर्वोक्तेन सुकृततारतम्येन मां शरणमनुप्रपद्य गुणमयान्मोहाद्विनिर्मुक्ता जरामरण-मोक्षाय प्रकृतिवियुक्तात्मस्वरूपदर्शनाय महते चैश्वर्याय मत्प्राप्तये च दृढव्रता दृढसंकल्पा मामेव भजन्ते ॥ २८ ॥

अत्र तेषां त्रयाणां भगवन्तं भजमानानां ज्ञातव्यविशेषानुपादेयांश्च प्रस्तौति—

---

नेकजन्मसूचनपर इत्यभिप्रायेणोक्तम्—अनेकजन्मार्जितेनोत्कृष्टपुण्य-संचयेनेति । भगवज्ज्ञानप्रतिबन्धकपापनिवर्तकत्वाच्चोत्कृष्टत्वं फलितम् । गुणमयशब्देन सुखदुःखरूपभगवत्संश्लेषविशेषा-(योगा)ख्यद्वंद्वव्यवच्छेदः । द्वंद्वमोहविनिर्मुक्ता मां भजन्त इति फलद्वयदर्शनात्तत्प्रतिबन्धकेऽपि पापे द्वंद्वेच्छाद्वेषहेतुभूतं मदौ-न्मुख्याविरोधि चेति भेदो दर्शितः । अनेकजन्मार्जितोत्कृष्टपुण्य-नाश्यत्वायोक्तम्—अनादिकालप्रवृत्तमिति । उपासनारम्भे पापस्य द्वंद्वमोहस्य च निःशेषविनष्टत्वाभावादन्तर्गतशब्देनाल्पावशि-ष्टत्वं विवक्षितमित्यभिप्रायेणोक्तम्—क्षीणमिति । मामेव ये प्रप-द्यन्ते, चतुर्विधा भजन्ते मामित्यादिकं च प्रागुक्तमनन्तराभिधी-यमानं च जरामरणमोक्षायेत्यादिकमनुसंदधान आह—ते पूर्वोक्ते-नेति । न चात्र द्वंद्वमोहनिर्मुक्तवचनादैश्वर्यार्थिनां प्रसङ्गानुपपत्तिः। तेषामपि क्षुद्रतरद्वंद्वनिरोधस्यावश्यापेक्षितत्वात् । व्रतशब्दः संक-ल्पविशेषेषु मुख्यः । तत्तत्संबन्धादेव क्रियाविशेषेषु प्रयोग इत्य-भिप्रायेण—दृढसंकल्पा इत्युक्तम् । दृढव्रतशब्देन देवतान्तरपरित्या-गादिनियमोऽपि यथाप्रमाणं सूचित इत्यभिप्रायेण—मामेव भजन्त इत्युक्तम् । मां भजन्त इत्यनेनैव भजनाङ्गव्रतादेरपि सिद्धत्वान्म-त्प्राप्तये चेत्यन्तेन दृढसंकल्पत्वं स्वाभिमतफलविषयतया वा व्याख्यातम् ॥ २८ ॥

अथाष्टमाध्याये प्रपञ्चयिष्यमाणस्यार्थस्य प्रस्तावः श्लोकद्वयेन क्रियत इत्याह—अत्रेति । जरामरणमोक्षायेत्येतावतो निर्देशात्—

---

१ ख. घ. 'र्जितोत्कृष्ट' । २ ङ, ग. 'चयाद्गुण' ।

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

जरामरणमोक्षाय प्रकृतिवियुक्तात्मस्वरूपदर्शनाय मामाश्रित्य ये यतन्ते ते तद्ब्रह्म विदुः। अध्यात्मं च कृत्स्नं विदुः। कर्म चाखिलं विदुः ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे विज्ञान-
योगो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अत्र य इति पुनर्निर्देशात्पूर्वनिर्दिष्टेभ्योऽन्येऽधिकारिणो ज्ञायन्ते । साधिभूतं साधिदैवं मामैश्वर्यार्थिनो ये विदुरित्येतदनुवादस्वरूपमप्य-

---

प्रकृतिवियुक्तात्मस्वरूपदर्शनायेत्युक्तम् । यतनमत्राऽऽराधनरूपं विवक्षितम् । एषां ब्रह्माध्यात्मकर्मादीनां सप्तानां प्रश्नपूर्वकं प्रपञ्चो भविष्यति। अत्र विदुरिति सिद्धवद्वर्तमानापदेशो विध्यर्थः ॥२९॥

साधिभूतमिति श्लोकस्यैश्वर्यार्थिविषयत्वं वक्तुमधिकारिणो भेदमात्रज्ञापकं तावद्दर्शयति-अत्रेति । पूर्वाधिकारिविषयत्वे साधियज्ञं च ते विदुरिति हि वक्तव्यम्। न चैवं शिष्टाः पठन्ति। न चात्र यच्छब्दावृत्तेः प्रयोजनमस्तीति भावः। प्रश्नोत्तरवशाच्चाधिकारिभेदः सेत्स्यति। एवं सामान्येन ज्ञातमधिकारिभेदमधिभूतादिसामर्थ्याद्विशिनष्टि-ऐश्वर्यार्थिन इति । जरामरणमोक्षायेत्यादाविवात्रापि यच्छब्दवशादनुवादत्वं प्रतीतमिति तत्प्रतिक्षिपति-इत्येतदित्यादिना। यदाग्नेयोऽष्टाकपाल इत्यादिवदिति भावः। अस्य च विधित्वं प्रश्नादिवशाच्च फलिष्यति। नह्यवगते प्रश्नाद्यवकाशः। साधियज्ञमित्यस्यैकस्मिन्नधिकारिणि निर्दिष्टस्याप्य-

मात्रार्थत्वात्तद्विधायकमेव । तथा साधियज्ञमित्यपि त्रयाणामधिकारिणामविशेषेण विधीयते । अर्थस्वाभाव्यात् । त्रयाणां हि नित्यनैमित्तिकरूपमहायज्ञाद्यनुष्ठानमवर्जनीयम् । ते च प्रयाणकालेऽपि स्वप्राप्यानुगुणं मां विदुः । ते चेति चकारात्पूर्वे जरामरणमोक्षाय यतमानाश्च प्रयाणकालेऽपि विदुरिति समुच्चीयते । अनेन ज्ञानिनोऽप्यर्थस्वाभाव्यात्साधियज्ञं मां विदुः प्रयाणकालेऽपि स्वप्राप्यानुगुणं मां विदुरित्युक्तं भवति ॥३०॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
सप्तमोऽध्यायः ॥ ७ ॥

---

र्थस्वाभाव्यात्त्रिष्वप्यन्वयं दर्शयति—तथेति । अर्थस्वाभाव्यादिति । सर्वाधिकारिसाधारणतया प्रमाणसिद्धयज्ञाख्यपदार्थस्वाभाव्यादित्यर्थः । एतदेव दर्शयति—त्रयाणां हीति । अन्यथा—संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्वित्यादिक्रमेणाकर्मवश्यत्वादतिप्रसङ्ग इत्यभिप्रायेणाऽऽह—अवर्जनीयमिति । अपिचेत्येकान्वयार्थत्वे प्रयोजनाभावात्पृथक्त्वे सप्रयोजनतयाऽन्वयसंभवाच्च विभज्याऽऽह—ते चेति । अन्तिमप्रत्ययस्यैकस्यैव वक्ष्यमाणं विषयविशेषेण प्राप्यानुगुणाकारवत्त्वं युक्तचेतःशब्देन विवक्षितमित्याह—स्वप्राप्यानुगुणमिति । चकारस्य पृथगन्वयेन लभ्यमाह—ते चेति । चकारादिति । यद्वृत्तप्रतियोगिकत्वात्तद्वृत्तमैश्वर्यार्थिविषयमेव । चकारात्तत्पूर्वश्लोकोक्तानां समुच्चयः । तेषामपि ह्यन्तिमप्रत्यये विशेषो वक्ष्यत इति भावः । त्रयाणामित्यादिकमयुक्तम् । ज्ञानिनामत्र प्रसङ्गाभावादित्यत्राऽऽह—अनेनेति । यज्ञान्तिमप्रत्ययमात्रयोरधिकारित्रयसाधारण्यसिद्धेरिति भावः ॥ ३० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य कृतौ श्रीमद्रामानुजविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां सप्तमोऽध्यायः ॥ ७ ॥

# अथाष्टमोऽध्यायः ॥

सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यस्य निखिलचेतनाचेतनवस्तुशेषित्वं कारणत्वमाधारत्वं सर्वशरीरतया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वं सर्वनियन्तृत्वं सर्वैश्च कल्याणगुणगणैरेकाश्रयत्वं तस्यैव परतरत्वं च सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिकालप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानमत्युत्कृष्टसुकृतहेतुकभगवत्प्रपत्त्या च तन्निव-

---

संगतिप्रदर्शनायाऽऽह—सप्तम इति । परस्य ब्रह्मणो वासुदेवस्योपास्यस्येति मय्यासक्तमना इत्यादेरर्थः । तत्रैव ह्युपासनं प्रस्तुतं तच्छेषतया चान्यत्सर्वमिहोच्यते । तस्यैव प्रपञ्चनम्, अहं सर्वस्य प्रभवः, वासुदेवः सर्वम्, चतुर्विधा भजन्ते माम्, इत्यादिभिः परस्तात्क्रियत इति भावः । परस्येत्यादिभिरुपहितब्रह्मव्योमातीतपक्षप्रतिक्षेपः । ब्रह्मशब्दस्य विशेषशब्दसमभिव्याहाराद्वैयतान्तरव्यावृत्तिः । वासुदेवशब्देनात्रावतारविशेषो वा विवक्षितः । निखिलेत्यादिभिरुपास्यत्वपरब्रह्मत्वोपयुक्ताकारकथनम् । निखिलचेतनाचेतनवस्तुशेषित्वमिति भूमिराप इत्यादेः श्लोकद्वयस्यार्थः । निखिलशब्देन कार्यकारणादिरूपावस्थासंग्रहात्कार्यभूतब्रह्मरुद्रादेरपि क्रोडीकारः । कारणत्वमेतद्योनीनीति श्लोकस्यार्थः । मत्तः परतरं नान्यदित्युक्तस्य परत्वस्य मामेभ्यः परमित्यत्रोपयुक्ततया तथैवोदाहर्तुमत्र तदिति क्रमेण मयि सर्वमित्याद्युक्ताधारत्वोपादानम् । रसोऽहमित्यादिसामानाधिकरण्यफलितं सर्वशब्दवाच्यत्वम् । तत्र हेतुराधारत्वादिविशेषसिद्धं सर्वशरीरकत्वम् । एवं शेषित्वाद्यनुवादेन वक्ष्यमाणतत्तदधिकारिप्राप्यवस्तुविशेषसामानाधिकरण्यस्यापि शरीरात्मभावहेतुकत्वं दर्शितम् । मत्त एवेति तान्विद्धीत्यादिषु प्रवृत्तितादधीन्यस्यापि विवक्षितत्वात्सिद्धं सर्वत्र नियन्तृत्वम् । सर्वैश्चेत्यनेनानिर्दिष्टानामन्येषां चाऽऽभिप्रायिकाणां संग्रहः । तस्यैवेत्यवधारणेन नान्यत्किंचिदस्तीत्यस्यार्थ उक्तः । त्रिभिर्गुणमयैः, इति श्लोकस्य सार्धस्यार्थ उक्तः सत्त्वेत्यादिना । मामेवेत्याद्युक्तप्रपत्तेः सुकृतविशेषहेतुकत्वं जनाः सुकृतिन इत्यनेन दर्शितमाह—अत्युत्कृष्टसुकृतेति । न मां दुष्कृतिन इत्यादेः पूर्वोक्ततिरोधानप्रकारविशेष-

तेन सुकृततारतम्येन च प्रपत्तिवैशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षयोपासकभेदं भगवन्तं प्रेप्सोर्नित्ययुक्ततयैकभक्तितया चात्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यं दुर्लभत्वं च प्रतिपाद्यैषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीत् । इदानीमष्टमे प्रस्तुतान्ज्ञातव्योपादेयभेदान्विविनक्ति—

अर्जुन उवाच—

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

किं तदिति । जरामरणमोक्षाय भगवन्तमाश्रित्य यतमानानां ज्ञातव्यतयोक्तं तद्ब्रह्माध्यात्मं कर्म च किमिति वक्तव्यम् । ऐश्वर्यार्थिनां ज्ञातव्यमधिभूतमधिदैवं च किम् ॥ १ ॥

---

कथनरूपत्वात्सुकृतप्रशंसाशेषत्वाच्च तदर्थोऽत्र पृथङ्नोपात्तः । चतुर्विधा इत्यादिकं सुकृततारतम्येनेत्यादिनाऽनुसंहितमुपासकभेदं चेत्यन्वयः । तेषां ज्ञानीत्यादेः श्लोकद्वयस्यार्थो भगवन्तमित्यादिनोक्तः । बहूनां जन्मनाम्, इत्यादिना सर्गे यान्ति परंतप, इत्यन्तेन सिद्धमाह—दुर्लभत्वमिति । एषां त्वित्यादेरध्यायशेषस्यार्थमाह—एषां त्रयाणामिति । ज्ञातव्यमिह सिद्धरूपं विवक्षितम् । उपादेयमनुष्ठेयम् । एतेन स्वयाथात्म्यमित्यादिश्लोकार्थोऽपि प्रपञ्चितः । अयं त्वष्टमस्य संग्रहः—

ऐश्वर्याक्षरयाथात्म्यं भगवच्चरणार्थिनाम् ।
वेद्योपादेयभावानामष्टमे भेद उच्यते ॥ इति ।

अत्र भेदोक्तेरध्यायार्थत्वात्स्वरूपप्रस्तावः प्रागेव कृत इति दर्शितं प्रस्तुतमप्रश्नमिति संगतिमाह—इदानीमिति । जीवस्वरूपादिज्ञातव्यस्योपादेयोपासनाद्यनुष्ठेयस्य च भेदजिज्ञासया—अर्जुन उवाच—किं तदिति । अतो जिज्ञासुरित्यादिना प्रागेवाधिकारित्रयस्योक्तत्वाज्जरामरणमोक्षायेत्यादिप यच्छब्दावृत्तिसामर्थ्यस्वभावाच्चाधिकारिभेदस्तेषां ज्ञातव्योपादेयवस्तुप्रतिनियमश्चार्जुनेन ज्ञातस्तत्रैव विशेषबुभुत्सयाऽयं प्रश्नः । वक्ष्यते च विशेषः । ततश्च किं तद्ब्रह्मेत्यर्थमक्षरयाथात्म्यादिविषयमधिभूतं चेत्यर्थमैश्वर्यार्थिविषयमधियज्ञ इति श्लोकस्तु अर्थस्वभावात्त्रयाणां साधारण इति विविनक्ति—जरामरणेति ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

प्रयाणां ज्ञातव्योऽधियज्ञशब्दनिर्दिष्टः कः। तस्य चाधियज्ञभावः कथम्। प्रयाणकाले चैभिस्त्रिभिर्नियतात्मभिः कथं ज्ञेयोऽसि ॥ २ ॥

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अक्षरमिति। तद्ब्रह्मेति निर्दिष्टं परममक्षरं न क्षरतीत्यक्षरं क्षेत्रज्ञं समष्टिरूपम्। तथा च श्रुतिः—'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते' इत्यादिका। परममक्षरं प्रकृतिविनिर्मुक्तात्मस्वरूपं स्वभावोऽ-

---

कथमिति प्रकारप्रश्ने। अधियज्ञभाव इत्यर्थलब्धम्। अत्रेत्ये-तच्छब्दः शास्त्रसंनिध्युपाधिकः। तच्चोत्तरग्रन्थे व्याख्यास्यति—अत्रेन्द्रादौ सर्व देहभृत इति। अस्मिन्नितीदंशब्दस्तु स्वप्रत्यक्ष-संनिध्युपाधिकः। प्रत्यक्षा हीन्द्रादयोऽपि प्रष्टुरर्जुनस्य। एतच्छ-ब्देदंशब्दयोश्चैकस्मिन्वाक्ये सामानाधिकरण्येन प्रयोगो दृश्यते—'स एष द्वाभ्यां दर्शनीभ्यां विराड्भ्यामनयोर्द्वाविंशो द्विजानयोरयं पुरुषः प्रतिष्ठितः' इत्यादौ यथा। अत्रेति यज्ञस्वरूपपरामर्शः। नियतात्मत्वं त्रयाणामपेक्षितम्। अत्र बहुवचनमधिकारित्रयपरमित्यभिप्रायेणोक्तम्—एभिस्त्रिभिरिति ॥ २ ॥

अक्षरं ब्रह्म परममित्यत्रोद्देश्योपादेयान्यथाभावनिरासायाऽऽह—तद्ब्रह्मेति निर्दिष्टमिति। ब्रह्मशब्देनात्र परमात्मसाधर्म्यादुपचारस्त्वस्येति भावः। अक्षरशब्दस्य निर्वचनं प्रतिपाद्यं च दर्शयति—न क्षरतीत्यादिना। क्षेत्रज्ञसमष्टौ श्रौतं प्रयोगं दर्शयति—तथा चेति। लयोऽत्र संश्लेषविशेषः। अथवा श्रुतावक्षरशब्देनान्यत्र चेतनांशः प्रकृत्यवस्थाविशेष एवाभिधीयत इति साक्षात्प्रलयार्थत्वेऽपि न विरोधस्तथाऽपि शब्दप्रवृत्तिद्वारमात्रनिर्देशे तात्पर्यात्तदुदाहरणम्। परममक्षरमित्यत्र विशेषणाभिप्रेतमाह—प्रकृतिविनिर्मुक्तात्मस्वरूपमिति। स्वभावशब्दार्थः—प्रकृतिरिति। नियतसंबन्धित्वाभिप्रे

ध्यात्ममुच्यते । स्वभावः प्रकृतिः । अनात्मभूतमात्मनि संबध्यमानं भूतसूक्ष्मतद्वासनादिकं पञ्चाग्निविद्यायां ज्ञातव्यतयोदितं तदुभयं प्राप्यतया त्याज्यतया च मुमुक्षुभिर्ज्ञातव्यम् । भूतभावो मनुष्यादिभावस्तदुद्भवकरो यो विसर्गः 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इतिश्रुतिसिद्धो योषित्संबन्धजः स कर्मसंज्ञितः । तच्चाखिलं सानुबन्धमुद्वेजनीयतया परिहरणीयतया च मुमुक्षुभिर्ज्ञातव्यम् । परिहरणीयता चानन्तरमेव वक्ष्यते—'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' इति ॥ ३ ॥

---

यावत् । किं तदित्याकाङ्क्षायामध्यात्मशब्दानुसारेणाऽऽह—अनात्मेति । आत्मन्यधिवसनात्संबध्यमानमित्यध्यात्मशब्दनिर्वचनम् । तत एव सिद्धमनात्मत्वम् । तद्वासनादिकं तत्संसर्गोपाधिकज्ञानकर्मवासनादिकम् । भूतसूक्ष्मादेर्ज्ञातव्यत्वे श्रुतिं दर्शयति—पञ्चाग्निविद्यायामिति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्युक्त्वा तत्र इत्थं विदुरिति अप्शब्दोपलक्षितपञ्चभूतसूक्ष्मवेद्यत्वं ह्युक्तमिति भावः । ननूपायकर्तृभूते तदानींतनात्मस्वरूपपरित्यागे परिशुद्धात्मस्वरूपकथनं मुमुक्षोः स्वोपयुक्तं भूतसूक्ष्मादिकथनं च किमर्थमित्यत्राऽऽह—तदुभयमिति । यथाक्रममन्वयः । अत्र पञ्चमाहुतेर्विवक्षितत्वाद्योनिजभूतविषयोऽयं भूतशब्द इत्यभिप्रायेणाऽऽह—भूतभावो मनुष्यादिभाव इति । मनुष्यत्वादिविशिष्टशरीरयोग इत्यर्थः । विशिष्टस्य विसर्गस्य ज्ञातव्यत्वे तस्य मनुष्यत्वादिभावहेतुत्वे च श्रुतिं दर्शयति—पञ्चम्यामिति । मूत्रपुरुन्मलादिविसर्गव्यवच्छेदार्थमुक्तम्—तदुद्भवकर इति । तदेव दर्शयति—योषित्संबन्धज इति । विसर्गविशेषणसामर्थ्यादेतत्सिद्धम् । एवं कर्मसंज्ञितरेतोविसर्गज्ञानस्य सप्रयोजनतामाह—तच्चाखिलमिति । अत्र कर्माभिप्रायेण नपुंसकनिर्देशः । अखिलं मनुष्यत्वमृगत्वादिजातिभेदहेतुतयाऽनेकप्रकारम् । सानुबन्धं हेतुभूतैः कर्मभिः फलभूतैश्च गर्भवासादिभिः सहितमित्यर्थः । पञ्चाग्निविद्यायामुचितरस(दितस)र्गावस्थानुयायित्वदुस्त्यजत्वगर्भजन्मादिदुःखकरत्वादेः फलितत्वाज्जुगुप्सनीयतारूपा भयावहत्वरूपा चोद्वेजनीयता युक्ता परिहरणीयता तु कुतः सिद्धेत्यत्राऽऽह—परिहरणीयता चेति ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

अधिभूतमिति । ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टमधिभूतं क्षरो भावो वियदादिभूतेषु वर्तमानस्तत्परिणामविशेषः क्षरस्वभावो विलक्षणः शब्दस्पर्शादिः साश्रयो विलक्षणाः साश्रयाः शब्दस्पर्शरूपरसगन्धा ऐश्वर्यार्थिभिः प्राप्यास्तैरनुसंधेयाः । पुरुषश्चाधिदैवतम् । अधिदैवतशब्दनिर्दिष्टः पुरुषः । अधिदैवतं दैवतोपरि वर्तमानम् । इन्द्रप्रजापतिप्रभृतिकृत्स्नदैवतोपरि वर्तमान इन्द्रप्रजापतिप्रभृतीनां भोग्यजाताद्विलक्षणशब्दादेर्भोक्ता पुरुषः । सा च भोक्तृत्वावस्थैश्वर्यार्थिभिः प्राप्यतयाऽनुसंधेया । अधियज्ञोऽ-

---

ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टमित्येतदधिदैवतेऽप्यनुषञ्जनीयम् । अधिभूतक्षरशब्दनिर्वचनानुरोधेन व्याख्याति—वियदादीति । भूतशब्दस्यात्र जन्तुविषयत्वव्यवच्छेदाय वियदादीति । शब्दाद्यवस्थातद्वतोर्भोग्यद्वययोरपि क्षरशब्देन संग्रहणाय क्षरस्वभाव इति निर्वचनम् । नश्वर इत्यर्थः । विलक्षण इति । इन्द्रप्रजापतिप्रभृतिभोग्यजातादिति वक्ष्यमाणमत्रापि द्रष्टव्यम् । एवंविधं च वैलक्षण्यं स्वासाधारणभक्तियोगप्रसन्नपरमात्मसंकल्पविशेषप्रसूतभोगरूपत्वादस्य ज्ञातव्यताहेतुं दर्शयति—विलक्षणा इति । क्षरो भाव इत्येकवचनं जात्यभिप्रायमिति भावः । प्राप्याः प्राप्यत्वादित्यर्थः । अधिदैवतशब्दरूढिभ्रमव्युदासायाऽऽह—अधिदैवतशब्दनिर्दिष्ट इति । तन्निरुक्तिर्दैवतोपरि वर्तमानमिति । दैवतोपरीति संबन्धसामान्यषष्ठ्या समासः । दैवतशब्दस्यात्र सर्वेश्वरात्संकोचं देवतान्तरेष्वभिव्याप्तिं चाऽऽह—इन्द्रेति । उपरि वर्तमानत्वमिह न केवलदेशाद्यपेक्षया किं तु भोगप्रकर्षादपीत्यभिप्रायेणेत्याह—इन्द्रेत्यादि पुरुष इत्यन्तम् । ननु पुरुषान्तरमिहाविवक्षितम् । स्वात्मस्वरूपपुरुषानुसंधानमधिकार्यन्तरस्यापि समानम् । ततोऽत्र को विशेष इत्यत्राऽऽह—सा चेति । न परिशुद्धस्वरूपमिहानुसंधेयम् । न चाशुद्धेऽपि हेयत्वमिह भाव्यम् । पुरुषशब्दनिर्देशश्चात्र भावप्रधान इति भावः । अहमेवेति प्रश्नस्योत्तरे कथमितिप्रश्नस्योत्तरत्वं तदभिप्रेतं विवृणोति—अधियज्ञ

हमेव । अधियज्ञशब्दनिर्दिष्टोऽहमेव । अधियज्ञो यज्ञ आराध्यतया वर्तमानः । अत्रेन्द्रादौ मम देहभूत आत्मतयाऽवस्थितोऽहमेव यज्ञैराराध्य इति महायज्ञादिनित्यनैमित्तिकानुष्ठानवेलायां त्रयाणामधिकारिणामनुसंधेयमेतत् ॥ ४ ॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

इदमपि त्रयाणां साधारणम् । अन्तकाले च मामेव स्मरन्कलेवरं

---

इति । यज्ञे संबध्यमानोऽधियज्ञः । तत्र च सर्वेश्वरस्याऽऽराध्यतया संबन्ध इत्याह—यज्ञ आराध्यतया वर्तमान इति । इन्द्रादयो हि तत्राऽऽराध्याः श्रुतास्तत्कथमहमेवेत्युच्यत इत्यत्रोत्तरमत्र देह इत्यनेन विवक्षितमिति दर्शयति—अत्रेन्द्रादाविति । अधियज्ञोऽहमेवात्र देह इत्तविवरेणाभिधीयमानत्वात्तद्देहविषयत्वं प्रतीतम् । स देश्वरदेहः, यज देवपूजायामिति याज्यदेवतापेक्षयज्ञप्रसङ्गादिन्द्रादिरेवेत्यभिप्रायेणोक्तम्—इन्द्रादाविति । यां यां तनुमिति प्रागुक्तं स्मारयति—मम देहभूत इति । कर्मणा ह्यचिद्द्रव्यं कस्यचिद्देहो भवति । न तथाऽत्र देहत्वं कादाचित्कमिति ज्ञापनाय देहभूत इति प्रयोगः । देहभूतकेवलेन्द्रादिव्यवच्छेदार्थमहमेवेत्यवधारणं पूर्वनिर्दिष्टब्रह्माध्यात्मकर्माधिभूताधिदैववन्न तत्त्वान्तरमिति ज्ञापनार्थं वा । विष्णुः सर्वा देवता इति च श्रुतिः । एतेन कथमिति प्रश्नस्याप्युत्तरं दत्तम् । तद्विशिष्टस्याऽऽराध्यत्वात् । देहभृतां वर इत्यनेनाध्यात्मचिन्तानुगुणं सत्त्वोत्तरं देहेन्द्रियादिमत्त्वं स्वस्यालौकिकेन्द्रादिदेहवत्त्वेन निदर्शनं चाभिप्रेतम् । एवंविधाधियज्ञविज्ञानमनुष्ठानानुप्रविष्टं न तु तदुपकारकमात्रं न चैश्वर्यार्थिमात्रविषयमिति दर्शयति—इतीति । महायज्ञेति । अकरणनिमित्तानर्हतादिपरिहाराय त्रयाणामवश्यकर्तव्यताद्योतनाय नित्यनैमित्तिकत्वोक्तिः ॥ ४ ॥

प्रयाणकाले इत्यस्य प्रश्नस्य प्रत्युत्तरम्—अन्तकाले इति श्लोकः । अतो न ज्ञानिमात्रविषय इत्यभिप्रायेणाऽऽह—इदमपीति । अधियज्ञपदार्थस्वाभाव्याद्वक्ष्यमाणप्रकाराच्चेति भावः । अन्वयं दर्शयति—अन्तकाले चेति । मद्भावं यातीत्यत्र श्रुत्यादि-

त्यक्त्वा यः प्रयाति स मद्भावं याति मम यो भावः स्वभावस्तं याति। तदानीं यथा मामनुसंधत्ते तथाविधाकारो भवतीत्यर्थः। यथा—आदिभरतादयस्तदानीं स्मर्यमाणमृगसजातीयाकाराः संभूताः ॥ ५ ॥

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

स्मर्तुः स्वविषयसजातीयाकारतापादनमन्त्यप्रत्ययस्य स्वभाव इति सुस्पष्टमाह। अन्तेऽन्तकाले यं यं वाऽपि भावं स्मरन्कलेवरं त्यजति तं

---

विरुद्धतादात्म्यावाप्तिभ्रमव्युदासायाऽऽह—मम यो भाव इति। नन्वीश्वरस्वभावमाप्तवस्यापि कृशोदरनीडनिहितकीटस्य तज्जातीयत्ववदीश्वरान्तरत्वप्रसङ्गस्त्रयाणामधिकारिणां गुणाष्टकरूपेश्वरस्वभावप्राप्त्यविशेषोऽधिकारिभेदश्च न स्यादित्यत आह—तदानीमिति। तदनुसंधेयाकारविशेषसाम्यप्राप्तिर्विवक्षिता। साम्यं च स्वरूपभेदके वैधर्म्ये स्थिते सत्येवेति न कश्चिद्दोष इति भावः। एवं प्रश्नप्रकार उक्तः। नास्त्यत्र संशय इत्यनेनाभिप्रेतां प्रयोजकप्रसिद्धिं दर्शयति—यथाऽऽदिभरतादय इति। एतेनोदाहरणेनापि तादात्म्यभ्रमो निरस्तः। न ह्यादिभरतस्य स्मर्यमाणमृगेण तादात्म्यमपि तु तत्समानाकारमृगशरीरपरिग्रह एवेति तत्रैव प्रसिद्धम्। तदानीं देहवियोगकाल इत्यर्थः ॥ ५ ॥

न केवलमीश्वरविषयान्तिमप्रत्ययस्वभावोऽयमिति मन्तव्यम्। किं तु सर्वसाधारणमिदमत्राप्युक्तमिति प्रयोजकाकारो यं यमिति श्लोकेनोच्यत इत्याह—स्मर्तुरिति। अन्तशब्दः पूर्वश्लोकाभिहितान्तकालपरः। तस्यान्तिमप्रत्ययप्रभावज्ञापनाय स्मरन्तीत्यनेनान्वय इति दर्शयति—अन्तेऽन्तकाल इति। वीप्सया, वाऽपीत्यनेन च स्मर्तव्यविषयनियमो नीचोत्तमविषयवैषम्याभावश्च दर्शितः। तं तमिति वीप्सया त्वसंकीर्णतत्तत्प्राप्तिरवधारणेन प्रबलपुण्यान्तरेणापि तस्य दुर्वारत्वं च विवक्षितम्। भावशब्दोऽत्र स्वभावपरः। धर्मिप्रत्ययस्तु नान्तरीयकः। भावशब्दस्यात्र परार्थपरत्वे प्रस्तुतभावशब्दवैरूप्यं तं तमेतीति साजात्यलक्षणा च। तं तमेवैतीत्यत्र यत्र क्वचन जन्मनि सर्वसाधारणतज्जातीययोगमात्रव्युदासायोक्तं—

तं भावयेव मरणानन्तरमेति । अन्त्यप्रत्ययश्च पूर्वभावाविषय एव जायते ॥ ६ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥

यस्मात्पूर्वकालाभ्यस्तविषय एवान्त्यप्रत्ययो जायते तस्मात्सर्वेषु कालेषु आ प्रयाणादहरहर्मामनुस्मर । अहरहरनुस्मृतिकरं युद्धादिकं

---

मरणानन्तरमिति । न ह्यादिभरतमृगत्वे जन्मान्तरव्यवधानम् । सदा तद्भावभावित इत्यनेनान्तिमस्मृतिहेतुर्विवक्षित इत्याह—अन्तिमप्रत्ययश्चेति तद्भावभावितस्तद्भावनावासित इत्यर्थः । तस्मिन्भावो भावितो येनेति वा तद्भावभावितः ॥ ६ ॥

एवमन्तिमप्रत्ययाधीने फलेऽन्तिमप्रत्यये चानवरतभावनाधीने भवताऽपि तथाविधा भावना तदनुग्राहककर्म च कर्तव्ये इत्युच्यते—तस्मादिति श्लोकेन । सर्वेषु कालेष्वित्यनेन 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते' [ छा० ८ । १५ । १ ] । प्रायणान्तमोंकारमभिध्यायीतेत्यादिश्रुतिरनुश्रुतेत्यभिप्रायेण—आ प्रयाणादित्युक्तम् । सूत्रं च 'आ प्रयाणात्तत्रापि हि दृष्टम्' [ ब्र० सू० ४ । १ । १२ ] इति । प्रतिमासं प्रतिपक्षमनुस्मरणेऽप्या प्रयाणादिति वक्तुं शक्यमिति तद्व्युदासाभिप्रायेण-बहुवचनमित्याह—अहरहरिति । तं पूर्वापररात्रेषु युञ्जान इत्यादिविहितैकाग्रतानुरूपसात्त्विककालेष्वित्युक्तं भवति । तथा च सूत्रम्—'यत्रैकाग्रता तत्राविशेषात्' [ब्र० सू० ४ । १ । ११] इति । युध्य चेति । विहितस्य युद्धस्यात्र फलवत्संनिधावफलं तदङ्गमित्यादिन्यायादनुस्मृत्यङ्गत्वं सिद्धम् । तच्च युद्धमत्र प्रस्तुतत्वादुपलक्षणतयोक्तम् । ततश्च प्रमाणसिद्धं यथास्वं वर्णाश्रमकर्मावश्यं कर्तव्यमित्युक्तं भवतीत्यभिप्रायेणाऽऽह—अहरहरनुस्मृतिकरं युद्धादिकमिति । वर्णाश्रमानुबन्धीत्युपलक्ष्यसंग्रहाकारः । चोदितेत्यनेन शमादिविधेश्चोदितव्यतिरिक्तविषयत्वं सूचितम् । नित्यनैमित्तिकशब्देन फलाभिसंधिपूर्वकर्मव्युदासः । मय्यर्पितमनोबुद्धिरित्यस्योक्तार्थानुवादरूपत्वं दर्श-

वर्णाश्रमानुबन्धि श्रुतिस्मृतिचोदितनित्यनैमित्तिकं च कर्म कुरु । एतदुपायेन मय्यर्पितमनोबुद्धिरन्तकाले च मामेव स्मरन्यथाभिलषितप्रकारं मां प्राप्स्यसि नात्र संशयः ॥ ७ ॥

एवं सामान्येन सर्वत्र स्वप्राप्त्यावाप्तिरन्त्यप्रत्ययाधीनेत्युक्त्वा तदर्थं त्रयाणामुपासनप्रकारभेदं वक्तुमुपक्रमते । तत्रैश्वर्यार्थिनामुपासनप्रकारं यथोपासनमन्त्यप्रत्ययप्रकारं चाऽऽह—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

अभ्यासेति । अहरहरभ्यासयोगाभ्यां युक्ततया नान्यगामिना चेत-

यति—एवमिति । उपायेन कर्मादिरूपेणेत्यर्थः । अनुस्मरणमेवात्र मनसोऽर्पणम् । बुद्धेरर्पणं तु फलप्रदत्वाध्यवसायः । प्रकरणसिद्धावान्तरव्यापारकथनम्—अन्तकाले च मामेव स्मरन्निति । यद्वाऽत्रोपायेनेति कर्मानुगृहीतानुस्मृतिरेवोच्यते । तत्फलं मय्यर्पितमनोबुद्धिरिति । तस्यैवार्थोऽन्तकाले च मामेव स्मरन्निति । पूर्वोत्तरानुवृत्ताधिकारित्रयसाधारण्यायाऽऽह—यथाभिलषितप्रकारं मामिति ।

निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान्हेतुबलान्नाध्यवस्यति माधवः ॥

इत्यादिवदसंशय इत्यस्यार्जुनविशेषणत्वेऽपि फलितमाह—नात्र संशय इति । प्रतिषेध इति वचनादकारो वाऽत्र पृथगनुसंधेयः । एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीत्यादिकमत्रानुसंधेयम् ॥ ७ ॥

अन्तिमप्रत्ययप्रसङ्गात्तद्धेतुतयाऽनुस्मरेत्युपासनं प्रस्तुतम् । तत्प्रकारभेदोऽनन्तरप्रघट्टकार्थ इत्यभिप्रायेणाऽऽह—एवमिति । गतिभेदोऽपि वक्ष्यमाणेनोपलक्षणीयः । अभ्यासेत्यादिश्लोकत्रयार्थमाह—तत्रेति । योगशब्दस्य संबन्धमात्रपरत्वे नैरर्थक्यादत्र ध्यानरूपत्वं वक्तुं युक्तम् । तत्पुरुषाच्च द्वंद्वस्योभयपदार्थप्रधानत्वात्परिग्राह्यत्वमस्ति तदाह—अभ्यासयोगाभ्यामिति । नान्यगामिनेत्येतत्नैकाधि(दि)शब्दवदनन्यगामिनेत्यर्थः । अन्यत्र विषयान्तरे गन्तुं शीलं नास्येति नान्यगामि । अभ्यासयोगशब्देन प्राचीनचिन्तनस्योक्तत्वादनुचिन्तयन्नित्येतदन्तिमस्मृतिपरमिति प्रदर्शनायान्तकाल इत्युक्तम् । चिन्तनस्य ध्यानस्य च पुरुष एवात्र कर्म ।

१ ख ङ. °थाऽनय ।

साऽन्तकाले परमं पुरुषं दिव्यं मां वक्ष्यमाणप्रकारं चिन्तयन्मामेव याति आदिभरतमृगत्वप्राप्तिवदैश्वर्यविशिष्टतया मत्समानाकारो भवति। अभ्यासो नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु मनसोपास्यसंशीलनम्। योगस्तु अहरहर्योगकालेऽनुष्ठीयमानं यथोक्तलक्षणमुपासनम् ॥ ८ ॥

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

कविं सर्वज्ञं पुराणं पुरातनमनुशासितारं विश्वस्य प्रशासितारम-

---

स च परमशब्देन विशेषितत्वादीश्वर एवेत्यभिप्रायेण—मामिति पदम्। दिव्यमित्यस्य सूर्यमण्डले स्थितमिति शंकरोक्तं निर्मूलम्। आदित्यवर्णं तमसः परस्तादिति वक्ष्यमाणविरुद्धं चेत्यभिप्रायेणाऽऽह—वक्ष्यमाणप्रकारमिति। अनन्तरश्लोकद्वयेनेति शेषः। कथमैश्वर्यार्थिनोऽनपेक्षितपरमपुरुषप्राप्तिः फलतयोच्यत इत्यत्राऽऽह—आदिभरतेति। अन्तकाले स्मर्यमाणभोगप्रधानोपयुक्ताकारविशिष्टपरमपुरुषसमानैश्वर्यप्राप्तिरिह परमपुरुषप्राप्तिस्तत्साम्यापत्तिरेव हि तत्प्राप्तिस्तथा यं यमिति श्लोकेनोदाहृतेति भावः। आरम्भणसंशीलनं पुनः पुनरभ्यास इति वाक्यकारवचनानुरोधेनाभ्यासशब्दार्थमाह—अभ्यास इति। पुनः पुनरिति वचनान्मध्येऽवश्यंभाविभिः कैश्चिद्व्यवधानं सूचितमित्यभिप्रायेणोक्तम्—नित्यनैमित्तिकाविरुद्धेष्विति। सर्वेषु कालेष्विति। न केवलं योगकाले तदातनस्य शीलनस्य योगशब्देनोपात्तत्वादिति भावः। आरम्भणमालम्बनं तच्चात्रोपास्यशब्देन व्याख्यातम्। योगशब्देनात्राङ्गिस्वरूपमुच्यत इत्यभिप्रायेणाऽऽह—योगस्त्विति। यथोक्तलक्षणमिति। अत्यर्थप्रियविशदतमप्रत्यक्षतापन्नमित्यर्थः ॥८॥

क्रान्तदर्शी हि कविरित्युच्यते। अत्र तु कविशब्द ईश्वरविषयत्वात्सर्वदर्शित्वपर इत्यभिप्रायेणाऽऽह—सर्वज्ञमिति। पुराणशब्देनानादित्वं विवक्षितमित्यभिप्रायेणोक्तम्—पुरातनमिति। अनुपूर्वः शासिर्विविच्य ज्ञापनार्थ इत्येतावन्मात्रपरत्वव्युदासाय—विश्वस्य प्रशासितारमित्युक्तम्। ईश्वरस्य सतोऽनुशासनमाज्ञापनमेवेति भावः।

णोरणीयांसं जीवादपि सूक्ष्मतरं सर्वस्य धातारं सर्वस्य स्रष्टारमचिन्त्यरूपं सकलेतरविसजातीयस्वरूपमादित्यवर्णं तमसः परस्तादप्राकृतस्वा-

अनुशासनस्य कर्माकाङ्क्षायां सर्वस्य धातारमित्यत्र [ इयं ] सर्वस्येति पदमाकर्षणीयम्। विशेषनिर्देशाभावाद्वा सर्वविषयत्वमित्यभिप्रायेण—विश्वस्येत्युक्तम्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' [ बृ० ३ । ८ । ९ ] इत्यादिकमत्र भाव्यम्। 'अन्तः प्रविष्टः शास्ता जनानाम्' [ तै० आ० ३ । ११ । २ ] इत्यादिषु प्रशासनसहपठितान्तःप्रवेशौपयिकसूक्ष्मतमत्वमत्राणोरणीयांसमित्युच्यत इत्यभिप्रायेणोक्तम्—सूक्ष्मतरमिति। 'धाता पुरस्ताद्यमुदाजहार' 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्यादिषु धातृशब्दस्य स्रष्टरि प्रयोगाद्धातूनां चानेकार्थगर्भत्वात्–सर्वस्य स्रष्टारमित्युक्तम्। विष्णुना विधृते भूमी सर्वाधारं धाम विष्णुसंज्ञमित्युक्तम्। सर्वाधारत्वं सर्वस्रष्टुरेवेति फलितोक्तिर्वा। उक्तप्रकारस्येश्वरस्य रूपस्य सामान्यतो दृष्टैस्तर्कैरसंभावनीयतां केचिदभिमन्येरन्निति तन्निरासपरमचिन्त्यरूपमित्यभिप्रायेणाऽऽह–सकलेतरविसजातीयस्वरूपमिति। वर्णयोगस्य स्वरूपेणाघटनात्प्रमाणसिद्धविलक्षणविग्रहद्वारा तद्योगमाह—अप्राकृतेति। 'येन सूर्यस्तपति तेजसेद्धः' [ तै० ब्रा० ३ । १२ । ९ । ] यस्याऽऽदित्यो भामुपयुज्य भाति' 'तस्य भासा सर्वमिदं विभाति' [ कौ० २ । ५ । १५ ] 'तद्देवा ज्योतिषां ज्योतिः' [ बृ० ४ । ४ । १६ ] इत्यादिषु निरतिशयदीप्तियोगः सिद्धः। 'आदित्यवर्णं तमसः परस्तात्' [ यजु० आ० ३ । १३ ] इति श्रुतिखण्डस्यात्र निबन्धः, 'तम आसीत्' 'तमसस्तन्महिनाऽजायतैकम्' [ यजु० २ । ८ । ९ ] यदा तम इत्यादिश्रुत्यन्तरोपलक्षणार्थः। तेन तमस इति सर्वकारणभूततमोद्रव्यविवक्षा। तमसः परस्तादित्यनेन फलितमप्राकृतप्रस्तुतत्त्वम्। तत एव चाकर्माधीनत्वं नित्यत्वं निरवद्यत्वमित्यादि सूचितम्। एतच्छ्लोकसच्छायश्च मानवश्लोकः—

साधारणदिव्यरूपम् ॥ ९ ॥

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

प्रयाणकाल इति । तमेवंभूतमहरहरभ्यस्यमानभक्तियुक्तयोगबलेनाऽऽरूढसंस्कारतयाऽचलेन मनसा प्रयाणकाले भ्रुवोर्मध्ये प्राणमावेश्य संस्थाप्य तत्र भ्रुवोर्मध्ये दिव्यं पुरुषं योऽनुस्मरेत्स तमेवोपैति तद्भावं

---

प्रशासितारं सर्वेषामणीयांसमणीयसाम् ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥ इति ।

अनुकूलानां हितरमणीयत्वाद्याकारेण हिरण्यवर्णत्वरुक्माभत्वादिव्यपदेशः । प्रतिकूलदुष्प्रेक्ष्यत्वप्रकाशातिरेकादिविवक्षयाऽऽदित्यवर्णत्वाद्युक्तिः । दिवि सूर्यसहस्रस्येत्यादि च वक्ष्यति । एतेनाऽऽदित्यशब्दस्य नित्यचेतनप्रकाशपरत्वं तमःशब्दस्य चाज्ञानविषयत्वं परोक्तं निरस्तम् ॥ ९ ॥

श्लोकद्वयस्यान्वयं दर्शयति—तमेवंभूतमित्यादिना । भक्त्या युक्तो योगबलेनेति पृथङ्निर्देशात्परोक्तप्राणजयबलादिपृथगर्थताप्रतीतिः स्यादिति तदपाकरणाय विशिष्टैकार्थतां दर्शयितुम्—भक्तियुक्तयोगबलेनेत्युक्तम् । मनसोऽचलत्वे हेतु ( तुं ) तस्य चावान्तरव्यापारं योगपर्याययुक्तशब्देन विवक्षितमाह—आरूढसंस्कारतयेति । आवेश्येत्यनेन योगप्रकरणेषूक्तं निश्चलावस्थानं विवक्षितमित्याह—संस्थाप्येति । अत्र पुरुषध्यानस्यापि भ्रूमध्यमेव प्रदेशः । देशान्तरानभिधानात् । योगप्रकरणान्तरेषूपदेशाच्च तत्सिद्धेरिति विभाव्योक्तम्—तत्र भ्रुवोर्मध्य इति । तमेवंभूतं दिव्यं पुरुषमित्याशयः । तं तमेवैतीति अवधारणदर्शनात्स तं परं पुरुषमित्यत्रापि तमितीतरव्यवच्छेदपरमित्यभिप्रायेणाऽऽह—स तमेवोपैतीति । यः प्रयाति स मद्भावं यातीति प्रक्रान्तप्रकार एवात्र विवक्षित इति दर्शयति—तद्भावं यातीति । भावप्रधानोऽत्र

याति तत्समानैश्वर्यो भवतीत्यर्थः ॥ १० ॥

अथ कैवल्यार्थिनां स्मरणप्रकारमाह—

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

यदक्षरमिति । यदक्षरमस्थूलत्वादिगुणकं वेदविदो वदन्ति वीतरागाश्च यतयो यदक्षरं विशन्ति यदक्षरं प्राप्तुमिच्छन्तो ब्रह्मचर्यं चरन्ति, तत्ते पदं संग्रहेण प्रवक्ष्ये । पद्यते गम्यतेऽनेनेति पदं तन्निखिलवेदान्तवेद्यं मत्स्वरूपमक्षरं यथोपास्यं तथा संक्षेपेण प्रवक्ष्यामीत्यर्थः ॥ ११ ॥

---

निर्देश इति भावः । तत्र तादात्म्यादिभ्रमं व्युदस्यति—तत्समानैश्वर्यो भवतीत्यर्थ इति । परमसाम्यापत्तिव्यवच्छेदाय समानैश्वर्य इत्युक्तम् । एतेन कविमित्यादिभिः सर्वज्ञत्वादयो गुणा ऐश्वर्यपरत्वार्थमनुसंधेयतयोक्ता न तु प्राप्यत्वार्थमिति फलितम् । एवमन्त्यकालस्मर्तव्यतया निर्दिष्ट एवाऽऽकारः प्रागपि ध्येयतयोक्त इति मन्तव्यम् । एवमुत्तरत्रापि ॥ १० ॥

अथ मन्दप्रयोजनोक्तपरव्याख्याप्रतिक्षेपाय यदक्षरमित्यादिश्लोकत्रयस्यार्थमाह—अथेति । स्मरणशब्दोऽत्रोपासनस्यान्तिमप्रत्ययस्य च संग्राहकः । उभयोरपि स्मृतिविषयत्वात् । 'नावेदविन्मनुते तं बृहन्तम्' इत्युक्तप्रमाणान्तरागोचरत्वपरेण वेदविदो वदन्तीत्यनेन सूचितवेदोक्तप्रकारकथनम्—अस्थूलत्वादिगुणकमिति । अस्थूलमनण्वह्रस्वमित्यादिश्रुतिरिह विवक्षिता । ब्रह्मचर्यमूर्ध्वरेतस्त्वादिकम् । यद्वा 'अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तदथ यन्मौनमित्याचक्षतेऽथ यत्सत्रायणमित्याचक्षतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्' इति श्रुतेर्ब्रह्मप्राप्त्यर्था या काचिदपि चर्या ब्रह्मचर्यम् । वीतरागा यतय एव 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' इत्यत्रापि कर्तारः । एतेन फलोपाययोः प्रदर्शनम् । परशब्दस्यात्र रूढार्थानुपपत्तेरुपपन्नं योगमाह—पद्यत इतीति । अत्र पदशब्देन ज्ञानविषयत्वमुखेनोपास्यत्वादिकमभिप्रेतमित्याह—गम्यतेऽनेनेति । यच्चच्छन्दाभिप्रेतां प्रसिद्धिमाह—तन्निखिलेति । अक्षरशब्दस्यात्र विकारादिदोषरहितपरमात्मविषयत्वात्—मत्स्वरूपमित्युक्तम् । साधारणं रूपमित्यर्थः । अक्षररूपपरमात्मोपासनमत्राक्षरस्वरूपजीवात्मप्राप्त्यर्थम् ॥ ११ ॥

---

१ ख. ग. घ. ङ. °गुणं वे° ।

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽऽत्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

सर्वद्वाराणीति । सर्वाणि श्रोत्रादीनीन्द्रियाणि ज्ञानद्वारभूतानि संयम्य स्वव्यापारेभ्यो विनिवर्त्य हृदयकमलनिविष्टे मय्यक्षरे मनो निरुध्य योगाख्यां धारणां समास्थितो मय्येव निश्चलां स्थितिमास्थितः ॥ १२ ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥

ओमित्येकाक्षरं ब्रह्म मद्वाचकं व्याहरन् वाच्यं मामनुस्मरन्नात्मनः

सर्वद्वाराणि संयम्येत्यत्र नवद्वारप्रतीतिनिरासाय प्रत्याहारविषयताद्योतनाय चाऽऽह—सर्वाणि श्रोत्रादीनीति । द्वारानुबन्धरहितस्पर्शनादीन्द्रियाणां कथं द्वारशब्दार्थतेत्यत्रोक्तम्—ज्ञानद्वारभूतानीति । संयमनमत्र शब्दादिविषयोन्मुख्यनिवर्तनमित्यभिप्रायेणाऽऽह—स्वव्यापारेभ्यो विनिवर्त्येति । मनो हृदि निरुध्य चेति । अत्र हृन्मात्रस्य ध्येयताऽनुपपन्नेत्यत्रोक्तम्—हृदयकमलनिविष्टे मय्यक्षर इति । हृच्छब्दोऽत्र तत्रत्यपुरुषलक्षकः । अन्यथा मामनुस्मरन्नित्यनन्तरोक्तिर्न घटत इति भावः । अर्थक्रमेण बलवता दुर्बलस्य पाठक्रमस्य बाधमभिप्रेत्य मनो हृदि निरुध्य चेत्यस्यानन्तरमास्थितो योगधारणामित्यादिकं व्याख्यातम् । प्रत्याहारानन्तरपठितधारणाव्यवच्छेदायाऽऽह—योगाख्यां धारणामिति । षष्ठीसमासात्समानाधिकरणसमासस्य ग्राह्यत्वं निषादस्थपतिन्यायसिद्धम् । धारणाशब्दाधिक्याभिप्रेतमाह—मय्येव निश्चलां स्थितिमिति ॥ १२ ॥

प्रणवस्य ब्रह्मप्रतिपादकत्वाद्ब्रह्मेति व्यपदेश इत्यभिप्रायेण—मद्वाचकमित्युक्तम् । मन्त्रस्यार्थविशेषप्रकाशनमुखेनोपकारकत्वमप्यत्र ब्रह्मशब्देन प्रतिपादनाद्विवक्षितमित्यभिप्रायेण—वाच्यं मामनुस्मरन्नित्युक्तम् । प्रणवस्य भगवद्वाचकत्वं योगाङ्गत्वादिकं च श्रुतिस्मृत्यादिसिद्धम् । यथा कठवल्ल्याम्—' सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ' इति । अत्र नामनामिनोर्निर्देशः । तथा—

१ ग. ङ. °णि द्वा° ।

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ इति ।

तथा—

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासात्पश्येद्ब्रह्म निगूढवत् ॥ इति ।

तथा—ओमित्येव ध्यायेदात्मानमिति । तथा— 'यः पुनरेवं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो(पन्नो)यथा पादोदरस्त्वचा विनिर्मुक्त एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' इति । तथा—

'अग्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे' ।
स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥

इत्यत्रैव श्लोके विष्णुं पश्येद्धृदि स्थितमिति योगियाज्ञवल्क्यपाठः । तथा—

कांस्यघण्टानिनादस्तु यथा लीयति शान्ती(न्त)ये ।
ओंकारस्तु तथा योज्यः शान्तये शान्तिमिच्छता ॥
यस्मिन्स लीयते शब्दस्तत्परं ब्रह्म गीयते ॥ इति ।

तथा—ओं खं ब्रह्म ओं खं पुराणमिति । ओमित्येतदक्षरं ब्रह्मास्य पादाश्चत्वारो वेदाश्चतुष्पादिदमक्षरं पूर्वस्य मात्रा पृथिव्यकार इत्यारभ्य 'प्रथमा रक्तपीता महद्ब्रह्मदेवत्या मध्यमा कृष्णा विष्णुदेवत्या तृतीया शुभाशुभा शुक्ला रुद्रदेवत्या याऽवसानेऽस्य चतुर्थ्यर्थ(र्ध)मात्रा सा विद्युम(त्व)ती सर्ववर्णा पुरुषदेवत्या' इति चात्रार्धमात्राऽधिदैवतभूतः पुरुष एवावतीर्णावस्थो द्वितीयमात्रादैवत्वेन विष्णुरिति चोक्तः । तथा—'ओमिति ब्रह्म ओमितीदꣳ सर्वमिति' । 'ओंकार एवेदꣳ सर्वमिति' । तथा—

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥

'तस्योत्तरतः शिरो दक्षिणतः पादो य उत्तरतः स ओंकारो य ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं तद्वैद्युतं तत्परं ब्रह्म' इति । अत्र प्रकरणादिवशात्प्रतर्दनविद्यावदन्तरितं शासनमनुसंधेयम् । मुमुक्षोरुत्क्रमणप्रकरणे च प्रणवः श्रूयते । अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति । एतद्वै खलु लोकस्य द्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् । तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' [छा० ८ । ६ । ६] इति ॥ महाभारते च महेश्वरवचनम्—

ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ।

आह च भगवान् याज्ञवल्क्यः—

'देवतायाः परायाश्च सालम्बः प्रणवः स्मृतः ।
कश्चिदाराधनं कामी विष्णोर्भक्त्या करोति वै ॥
तदाराधनसांनिध्ये प्रतिमां व्यञ्जिकां यथा ।
धातुद्रव्यादिपाषाणैः कृत्वा भावं निवेशयेत् ॥
श्रद्धाभक्त्यादराद्यैश्च तस्य देवः प्रसीदति ।
ओंकारेण तथा चाऽऽत्मा ह्युपास्तेन प्रसीदति ॥
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽऽस्थितः प्राणमास्थितो योगधारणाम् ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥
एवं यः प्रणवेनाऽऽद्यमक्षरं प्रतिपद्यते ।
ततोऽक्षरेण वेदेन वेद्यं ब्रह्माधिगच्छति ॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मभूयाय कल्पते ॥

अदृष्टविग्रहो देवो भावग्राह्यो निरामयः ।
तस्योंकारः स्मृतं नाम तेन हूतः प्रसीदति ॥
तस्मादोमिति पूर्वं तु कृत्वा युञ्जीत तत्परम् ।
ब्रह्मोंकारविधानेन तत्त्वेन प्रतिपद्यते ' ॥ इति ।

अत्र सर्वद्वाराणीत्यादिश्लोकयोर्भगवद्वाचकतया प्रसिद्धयोरुदाहरणं मामिति निर्देशस्तद्विषयः । पुनश्चात्र हैरण्यगर्भादिसिद्धान्तेषु प्रणवार्थं प्रपञ्चयान्तेऽप्याह—

त्रिरात्मा त्रिस्वभावश्च तथा त्रिव्यूह एव च ।
पञ्चरात्रे तथा ह्येष भगवद्वाचकः स्मृतः ॥
बलं वीर्यं तथा तेजस्त्रिरात्रे(त्मे)ति च संज्ञितः ।
ज्ञानैश्वर्ये तथा शक्तिस्त्रिस्वभाव इति स्मृतः ॥
संकर्षणोऽथ प्रद्युम्नो ह्यनिरुद्धस्तथैव च ।
त्रिव्यूह इति निर्दिष्ट ओंकारो विष्णुरव्ययः ॥
भगवद्वाचकः प्रोक्तः प्रकृतेर्वाचकस्तथा ।
व्यक्ताव्यक्तो वासुदेवः प्रभवः प्रलयस्तथा ॥ इति ।

यच्चात्र हैरण्यगर्भकपिलापान्तरतपःसनत्कुमारब्रह्मिष्ठपाशुपताख्येषु सिद्धान्तेष्वर्थभेदवर्णनं तदपि तत्तदर्थविशेषान्तरितपरमपुरुषपर्यवसानमभिप्रेत्येति मन्तव्यम् । अत एव हि विष्णुप्रतिपादकतयाऽन्तकाले स्मर्तव्यतयोपसंह्रियते—

ओंकारं विपुलमचिन्त्यमप्रमेयं
सूक्ष्माख्यं ध्रुवमचलं च यत्पुराणम् ।
तद्विष्णोः पदमपि पद्मजप्रसूतं
देहान्ते मम मनसि स्थितिं करोतु ॥ इति ।

प्रणवेनैव चात्र भगवदर्चनमुच्यते—

' तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वान्देवान्समाहितः ।
नमस्कारेण पुष्पाणि विन्यसेत्तु यथाक्रमम् ॥
आवाहनादिकं कर्म यत्र सूक्तं मया त्विह ।
तत्सर्वं प्रणवेनैव कर्तव्यं चक्रपाणये ॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव हि ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुरेव दिवाकरः ।
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥ ' इति ।

प्राणं मूर्ध्न्याधाय देहं त्यजन्यः प्रयाति स याति परमां गतिं प्रकृति-वियुक्तं मत्समानाकारमपुनरावृत्तिमात्मानं प्राप्नोतीत्यर्थः ।

‘ यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ।
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । ’

इत्यनन्तरमेव वक्ष्यते ॥ १३ ॥

---

तथा परमपुरुषसाक्षात्कारकारणतया चात्र प्रणवोपासनप्रकार उच्यते—

ॐ भूर्भुवः सुवर्महर्जनस्तपः सत्यमिति वैदिकम् ।
एतदुच्चार्य वै ब्रह्म परे व्योम्नीति योजयेत् ॥
हृदयेऽग्निश्च वायुश्च जीवो यः समुदाहृतः ।
ओंकारं पद्मनाले तु उद्धृत्योपरि योजयेत् ॥
आ प्राणाच्चेच्छून्यभूतात्मचेतोङ्गं जीवसंज्ञितम् ।
जायते तु यतस्तस्मात्पुनस्तत्र निवेशयेत् ॥
घण्टाशब्दवदोंकारमुपासीत समाहितः ।
पुरुषं निर्मलं शुभ्रं पश्येद्वै नात्र संशयः ॥ इति ।

योगानुशासनसूत्रं च—‘क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः’ [ यो० सू० १ । २४ ] । ‘ तस्य वाचकः प्रणवः ’ [ यो० सू० १ । २७ ] इति । अतः प्रणवस्य भगवद्वाचकत्वं समाध्युत्क्रमणाद्यवस्थासु तेनैव भगवदनुस्मरणं च सिद्धम् । ‘ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ’ ॥ [ छा० ८ । ६ । ६ ]

ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥

इति श्रुतिस्मृत्यनुसारान्मुमुक्षोरुत्क्रमणौपयिकमिदं मूर्ध्नि प्राणाधानम् । त्यजन् यः प्रयातीति । त्यक्त्वा यो यातीत्यर्थः । आत्मार्थिनो ह्यात्मा गन्तव्यः । तत्रापुनरावृत्तित्वमात्रात्परमगतित्वोक्तिरित्यभिप्रायेणाऽऽह—प्रकृतीति । ईदृशस्याऽऽत्मनः परंमगतिशब्देन व्यपदेशो न केवलं प्रकरणवशात्किंत्वस्मिन्नेवाध्याये तद्विषय एवार्थं प्रयोगोऽप्यस्तीत्याह—यः स सर्वेष्विति ॥ १३ ॥

संगत्यर्थमनुवदति—एवमिति । अध्यायारम्भगतप्रश्नोत्तरयोस्तत्प्रसङ्गके पूर्वाध्यायान्ते चायं क्रमो न विवक्षितः । अवियज्ञान्तिमप्रत्यययोः साधारण्येन प्रतिपादने तात्पर्यात् । इह तु प्रतिनियतार्थोपदेशरूपत्वादुत्तरोत्तरमुत्कृष्टताप्रदर्शनायैश्वर्याक्षरयाथात्म्यं भगवच्चरणार्थिनः क्रमेणोक्तमिति भावः । अत्र चैवमिति निर्देशात्स्वप्राप्यानुगुणमिति निर्देशाच्च प्रकरणस्याधिकारित्रयविषयत्वव्यवस्थापकहेतवः प्रदर्शिताः । तथाहि—एवमत्र कश्चिच्छङ्केत ननु ते ब्रह्म तद्विदुः । किं तद्ब्रह्म, अक्षरं ब्रह्म परममिति । ब्रह्मशब्दस्य साक्षाद्ब्रह्मविषयत्वे को बाधः । तस्यैव च सर्वात्मत्वादध्यात्मशब्देनापि तद्गतं सर्वं ग्रहीतुमुचितम् । भूतभावोद्भवकरो विसर्ग इत्यपि जगत्सृष्टिग्रहणं युक्तम् । देवतोद्देशेन द्रव्यत्यागो वा । स चात्र निवृत्तिलक्षणो यज्ञः । अधिभूतं क्षरो भाव इति चाधिभवतीतिव्युत्पत्तेः प्राणिजातम् । पुरुषश्चाधिदैवतमिति परब्रह्मावस्थाविशेषः । समष्टिपुरुषादिर्वा । अधियज्ञः सर्वयज्ञाभिमानिनी विष्ण्वाख्यदेवता । 'यज्ञो वै विष्णुः' इति श्रुतेः । अन्तकाले चेत्यादिश्लोकत्रयमपि मुमुक्षोरेवान्तिमप्रत्ययमधिकृत्योक्तम् । प्रश्नप्रतिवचनश्लोकानां पूर्वाध्यायप्रस्तुताधिकारित्रयज्ञातव्योपादेयपरत्वेऽप्युपरितनाः श्लोकाः प्रधानतया सुदुर्लभत्वेन निर्दिष्टज्ञानिपरा युक्ताः । अन्यथा मामेव स्मरन् मामेवैष्यसीत्यादेर्बाधात् । अत एव 'प्रयाणकाले च कथम्' 'अन्तकाले च माम्' इति श्लोकयोरधिकारित्रयपरत्वेऽपि तद्विवरणेऽत्र तदैकार्थ्यं ग्राह्यमित्यपि निरस्तम् । तत्रापि चाधिकारित्रयपरत्वं न प्रतीयते । न चैश्वर्यार्थिनः परमपुरुषविषयान्तिमप्रत्ययसापेक्षतायां प्रमाणं पश्यामः । एवमुत्तरेष्वपि श्लोकेष्वेक एवाधिकारी तद्वेद्यं चैकमेव पुनः पुनरनूद्य विशेषतो विशदीक्रियते । न च पुनरुक्तिदोषः । अभ्यासस्य ज्ञानिप्राधान्यलिङ्गत्वात् । 'संसिद्धिं परमां गताः' 'स याति परमां गतिम्' 'तमाहुः परमां गतिम्' इत्यमीषामैकार्थ्यं च प्रतीतं तु(त्व)परित्याज्यम् । न च परमगन्तव्यातिरिक्ता परमसंसिद्धिः, तमाहुः परमां गति-

मिति परोक्षनिर्देशश्च पुरुषः स परः पार्थ इतिवत्स्यात् । ' परमं पुरुषं दिव्यम् ' ' स तं परं पुरुषमुपैति दिव्यम् ' 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ' इत्यमीषां भिन्नार्थत्वकल्पनं चायुक्तम् । परैरपि च सर्वैः प्रायश एवमेकैकठये(श्ये)न व्याख्यातमिति । अत्रैवं परिहारक्रमः—अधियज्ञोऽहमेवेतिवदहमेव ब्रह्मेत्यनुक्तेरध्यात्मादिवदत्र ब्रह्मशब्दार्थस्याप्यर्थान्तरं तावत्प्री- (त्मती) तम् । न च ब्रह्मशब्दादक्षरशब्दस्य परमात्मनि रूढ्यतिशयः । येन ततस्तद्व्याख्यानं स्यात् । ' एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तम् ' इत्यादिषु च परमात्मनोऽस्य ह्येवोपास्य[ त्व ]मक्षरशब्देन प्रतीयते ।

द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥
अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ।

इत्यादिषु चाक्षरपरब्रह्मशब्दौ परिशुद्धात्मविषयौ शारीरकभाष्ये समर्थितौ । अतोऽत्र किं तद्ब्रह्मेत्युक्तेऽहमेव ब्रह्मेत्यव्याख्यानात्स्वेतरविषयब्रह्मशब्दः । परमशब्दविशेषिताक्षरशब्दानुगुण्याच्च प्रकृतेरीश्वराचान्यस्मिन्परिशुद्धात्मन्युपचाराद्वर्तते । पश्चाच्चायमेव ' अव्यक्तोऽक्षर इत्युक्तः ' इति वक्ष्यते । न चासौ श्लोकः परमात्मपर इति शङ्कनीयम् । ' ये चाप्यक्षरमव्यक्तम् ' ' ये त्वक्षरमनिर्देश्यम् ' ' क्षरश्चाक्षर एव च ' इत्यादिष्विवात्रापि अक्षरशब्दस्य भगवद्व्यतिरिक्तविषयत्वप्रतीतेः । संसिद्धिशब्दश्च परमगतिशब्दनिर्दिष्टप्राप्यविलक्षणां समीचीनां सिद्धिं स्वरसत उपसर्गशक्त्या व्यनक्ति । अत एव स्वभावादिशब्दा अधिकारित्रयज्ञातव्योपादेयवस्तुविशेषपरा इत्युक्तम् । एवं स्ववाक्यपर्यालोचनया पूर्वाध्यायप्रकृतपरामर्शेन प्रश्नप्रतिवचनवाक्यानामधिकारित्रयविषयत्वे सिद्धे तदनन्तराणामपि ग्रन्थानां यथासंभवं सर्वविषयत्वं युक्तम् । प्रक्रान्ते चाधिकारित्रये यद्वृत्तत्रयेणानूद्यमाने कैवल्यभगवत्प्राप्तिकामयोरनन्तरं स्फुटमभिधानादभ्यासेत्यादिकं परिशेषादैश्वर्यार्थिविषयम् । यच्चैश्वर्यार्थिनां परमपुरुषविषयान्तिमप्रत्ययसापेक्षतायां प्रमाणं नास्तीति तदपि न ।

उक्तः। अथ ज्ञानिनो भगवदुपासनप्रकारं प्राप्तिप्रकारं चाऽऽह—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥ १४॥

अनन्यचेता इति। नित्यशो मामुद्योगप्रभृति सततं सर्वकालमनन्यचेता यः स्मरति अत्यर्थमत्प्रियत्वेन मत्स्मृत्या विनाऽऽत्मधारणमलभ-

---

श्रीमद्भागवते पुराणे ध्रुवचरिते तद्दृ( दृ )ष्टेः 'भक्तिं हरौ भगवति प्रवहन्' इत्यादिना। अतो यथोक्त एवार्थः। यद्यपि ब्रह्मपुरुषपरगत्यादिशब्दैरिह सर्वत्र परमात्मभजनतत्प्राप्त्यादिरेव प्रतीयते। तथाऽपि तावतैवाधिकारित्रिविषयत्वं वक्तुं न युज्यते। पूर्वत्र प्रयाणकाले भ्रूमध्ये प्राणावेशस्य तत्रैव परमात्मध्यानस्य च विहितत्वात्। अनन्तरं च हृदि ध्यानस्य मूर्ध्नि प्राणावेशस्य च तत्काल एव विधानात्। तदिदं द्वयं परस्परविरुद्धं किं कालभेदाद्व्यवस्थाप्येताधिकारिभेदाद्वा। तत्र न तावत्कालभेदः श्रुतः प्रत्युत कालैक्यमेव श्रूयते। अतः परिशेषात्सिद्धोऽधिकारिभेदः। किंच शतं चैका चेत्यादिभिर्मूर्धन्यनाड्या निष्क्रमणं फलान्तरहेतुरित्यवगतेः प्रयाणकाले भ्रूमध्ये मूर्ध्नि च प्राणावेशनस्योत्क्रमणशेषतया तत्तद्देशगतनाड्योत्क्रमणे प्रतीते सिद्धस्तदधिकारिभेदः। पूर्वत्र चाध्याये 'चतुर्विधा भजन्ते माम्' इत्यादावयमधिकारिभेदः प्रस्तुतः। तदन्ते च 'जरामरणमोक्षाय' 'साधिभूताधिदैवं माम्' इति श्लोकयोर्यच्छब्दावृत्त्याऽधिकारिभेदप्रतीतिर्भाष्ये प्रतिपादिता। सा चात्रापि स्फुटा। 'अणोरणीयांसमनुस्मरेद्यः' 'यः प्रयाति त्यजन्देहम्' 'यो मां स्मरति नित्यशः' इत्येतदखिलमभिप्रेत्योक्तम्—एवमैश्वर्यार्थिन इत्यादि। उक्तश्चास्याधिकार्यनन्यचेता इत्युच्यत इति परोक्तं निराकुर्वन् 'अनन्यचेताः' इति श्लोकस्यार्थमाह–अथेति। नित्यश इत्यनेनाऽऽत्मानुभवादिफलान्तरव्यवधाननैरपेक्ष्यं विवक्षितमित्याह—उद्योगप्रभृतीति। अन्यथा सततमित्यनेन पुनरुक्तिः संकोचक्लेशो वा स्यात्, इत्यभिप्रायेणाऽऽह—सततं सर्वकालमिति। अनन्यचेतःशब्देनाभिप्रेतं स्मृतेर्भक्तिरूपापन्नत्वं दर्शयति—अत्यर्थेति।

मानो निरतिशयप्रियं मां यः स्मरति तस्य नित्ययुक्तस्य नित्ययोगं काङ्क्षमाणस्य योगिनोऽहं सुलभोऽहमेव प्राप्यो न मद्भाव ऐश्वर्यादिकः। तद्वियोगमसहमानोऽहमेव तं वृणे मत्प्राप्त्यनुगुणोपासनविपाकं तद्विरोधिनिरसनमत्यर्थं मत्प्रियत्वादिकं चाहमेव ददामीत्यर्थः । ' यमेवैष वृणुते तेन लभ्यः ' इति हि श्रूयते । वक्ष्यते च—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ इति ॥ १४ ॥

---

अनन्यचेतस्त्वादेव च स्मरणस्याच्छिद्रत्वम् । उत्कण्ठने च स्मरतिः प्रयुज्यते । भ्रातरौ स्मरतां वीरावित्यादिषु । ' नित्ययुक्तस्य योगिनः ' इत्युक्तानुवादः फलस्याव्यवहितत्वद्योतनाय । अत्राहंशब्देनेश्वरस्य प्रत्यगर्थोऽभिप्रेतः । तेन तद्विशेषणभूताक्षरादिफलप्राप्तिव्यवच्छेदो विवक्षित इत्यभिप्रायेणाऽऽह—अहमेवेति । तदेव विवृणोति—न मद्भाव इति । भगवत्प्राप्तेः फलान्तरेभ्योऽतिशयितफलत्वात्तत्प्राप्तौ प्रयासातिरेकसंभावनाव्यवच्छेदाय सुलभपदमित्यभिप्रायेणाऽऽह—सुप्रापश्चेति । अकृच्छ्रेण प्राप्य इत्यर्थः। ' ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ' [पा० सू० ३ । ३ । १२६] इत्यनुशिष्यते । आश्रितवत्सलस्येश्वरस्य सौलभ्यं रागप्राप्तमित्याह—तद्वियोगमिति । उक्तस्यातिवादमात्रत्वशङ्काव्युदासाय श्रुतिमूलतामाह—यमेवेति । अत्र वरणशब्देन किमुच्यते न तावच्छेषत्वशरीरत्वाद्याकारेण स्वीकारः, तस्य नित्यसिद्धत्वात् । न च तद्विपरीतः, विरुद्धत्वादेव । न च प्राप्तिप्रदानं तेन लभ्य इत्यनेन पौनरुक्त्यप्रसङ्गात् । न चान्योऽत्र प्रकारोऽसंभवादित्यत्राऽऽह—मत्प्राप्त्यनुगुणेति । विपाकोऽत्र ध्रुवानुस्मृतिरूपत्वदर्शनसमानाकारत्वादिरूपः । तद्विरोधिनो दुष्कृतरजस्तमोरागद्वेषमोहादयः । अत्यर्थमत्प्रियत्वं निरतिशयभक्तित्वम् । आदिशब्देन परमपदपर्यन्तासक्तिपर्यन्तं यन्मध्येऽपेक्षितं तत्सर्वं विवक्षितम् । अहमेवेति । परमकारुणिकस्य ममैवायं भर इत्यभिप्रायः। तस्याहं सुलभ इत्यादेरुक्तार्थपरत्वस्थिरीकरणायास्यैवार्थस्य वक्ष्यमाणं विरतरमुदाहृतश्रुत्युपबृंहणरूपं दर्शयति—वक्ष्यते चेति ॥ १४ ॥

अतः परमध्यायशेषेण ज्ञानिनः कैवल्यार्थिनश्चापुनरावृत्तिमैश्वर्यार्थिनः पुनरावृत्तिं चाऽऽह—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाऽऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

मामिति । मां प्राप्य पुनर्निखिलदुःखालयमस्थिरं जन्म न प्राप्नुवन्ति । यत एते महात्मानो महामनसो यथावस्थितमत्स्वरूपज्ञाना अत्यर्थं मत्प्रियत्वेन मया विनाऽऽत्मधारणमलभमाना मय्यासक्तमनसो मदाश्रया मामुपास्य परमसंसिद्धिरूपं मां प्राप्ताः ॥ १५ ॥

ऐश्वर्यगतिं प्राप्तानां भगवन्तं प्राप्तानां च पुनरावृत्तावपुनरावृत्तौ च हेतुमनन्तरमाह—

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

---

इतः पूर्वं त्रयाणामधिकारिणां केचन वेद्योपादेयभेदाः प्रतिपादिताः । अतः परमधिकारौपयिकतयाऽवश्यवेद्यस्य फलस्य स्थिरास्थिरत्वलक्षणविशेषं दर्शयतीत्याह—अतः परमिति । अत्र ज्ञानिनस्तावदपुनरावृत्तिरुच्यते—मामुपेत्यादिश्लोकेन । दुःखानन्त्यस्य सर्वप्रमाणसिद्धत्वाद्दुःखशब्दस्य निर्विशेषणस्य संकोचायोगात्—निखिलेत्युक्तम् । जन्मनश्चाशाश्वतशब्दनिर्दिष्टमस्थिरत्वं जन्माविनाभूतदेहभोगाद्यस्थिरत्वरूपमिह विवक्षितम् । जन्मशब्दो वाऽत्र जनिमच्छरीरपरः । महात्मान इति स्तुतिमात्रादपि माहात्म्यस्यात्र संसिद्धिहेतुत्वमुचितमित्यभिप्रायेणाऽऽह—यत इति । महामनस्त्वं ज्ञानिनां प्राक्प्रपञ्चितमिहानूदितं दर्शयति—यथावस्थितेत्यादिना । अभिलषितस्य फलस्य सिद्धिव्यपदेशौचित्यात्परमशब्दस्वारस्याच्च—परमसंसिद्धिरूपं मामित्युक्तम् । परमसंसिद्धिरूपं परमपुरुषार्थरूपमित्यर्थः । समीचीना सिद्धिः संसिद्धिः ॥ १५ ॥

अप्रसक्तप्रतिषेधायोगात्प्रतिषेधस्य प्रसङ्गिनश्चाऽऽसन्नवर्तिन उपादातुमुचितत्वान्नश्वरफलभूतैश्वर्यार्थिनां जन्मात्र तन्निषेधमुखेन सूचितमतस्तत्रापि हेतुरेव केवलं वक्तव्य इत्यभिप्रायेणाऽऽह—ऐश्वर्यगतिमिति । मामुपेत्य त्विति भगवतः प्रतियो-

आ ब्रह्मेति । ब्रह्मलोकपर्यन्ता ब्रह्माण्डोदरवर्तिनः सर्वे लोका भोगैश्वर्यालयाः पुनरावर्तिनो विनाशिनः । अत ऐश्वर्यगतिं प्राप्तानां प्राप्यस्थानविनाशाद्विनाशित्वमवर्जनीयम् । मां सर्वज्ञं सत्यसंकल्पं निखिलजगदुत्पत्तिस्थितिलयलीलं परमकारुणिकं सदैकरूपं प्राप्तानां विनाशप्रसङ्गाभावात्तेषां पुनर्जन्म न विद्यते ॥ १६ ॥

ब्रह्मलोकपर्यन्तानां लोकानां तदन्तर्वर्तिनां च परमपुरुषसंकल्पकृतामुत्पत्तिविनाशकालव्यवस्थामाह—

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

---

गिकरणादाङोऽत्राभिविधिपरत्वाभिप्रायेणाऽऽह—ब्रह्मलोकेति । प्रकृत्याख्यभगवन्मायामहोदधौ ब्रह्माण्डैरपि यदा बुद्बुदायितं तदा कैव कथा तदन्तर्वर्तिनां लोकानामित्यभिप्रायेण—ब्रह्माण्डोदरवर्तिन इत्युक्तम् । तेन परमाकाशव्यवच्छेदसिद्धिश्च । ऐश्वर्यनित्यताप्रतिपादनपरत्वायोक्तं—भोगैश्वर्यालया इति । भुवनशब्दसमभिव्याहृतस्य लोकशब्दस्य जनविषयत्वायोगाल्लोकस्य गमनाभावेन पुनरावृत्तेरप्यभावात्पुनरावृत्तिशब्देन प्रवाहतोऽपि नाशमात्रं लक्ष्यत इत्याह—विनाशिन इति । पुनरावृत्तिशब्दस्याजहल्लक्षणावृत्तेस्तल्लोकगतपुरुषपुनरावृत्तिरेव वा द्वारम् । फलितमाह—अत इति । मामित्यस्य तुशब्दद्योतितानपुनरावृत्तिहेतुविशेषान्दर्शयति—मां सर्वज्ञमित्यादिना । असर्वज्ञमसत्यसंकल्पं कार्यकोटिघटितं (तम) निर्गुणं रजस्तमोमूलरागद्वेषादिनानाविकारशालिनं कंचन क्षुद्रदेवं प्राप्तानां तदन्येन तेनैव वा पुनरावृत्तिः स्यादिति विशेषणानां तात्पर्यम् ॥ १६ ॥

सहस्रेत्यादिश्लोकत्रयस्य पिण्डितार्थमाह—ब्रह्मलोकपर्यन्तानामिति । हिरण्यगर्भादिस्वातन्त्र्यसिद्धसत्यलोकादिस्थैर्यशङ्काव्युदासायाऽऽह—परमपुरुषसंकल्पकृतामिति । ईश्वरस्वातन्त्र्यमेव ह्यनूनानतिरिक्तदिनराज्यादिविचित्रव्यवस्थायां कारणम् । तथा चोच्यते—कालस्य हि च मृत्योश्च । कालचक्रं जगच्चक्रमित्या-

---

१ ख. ग. घ. ङ. °र्यादिरूपाः पु° ।

सहस्रयुगेति । ये मनुष्यादिचतुर्मुखान्तानां मत्संकल्पकृतामहोरात्रव्यवस्थां विदुस्ते जना ब्रह्मणश्चतुर्मुखस्य यदहस्तच्चतुर्युगसहस्रावसानं विदू रात्रिं च तथारूपाम् ॥ १७ ॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
राज्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

---

दिभिरेवमेवोक्तम् । अन्यत्र—

ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः ।
कृत्वा मत्स्थानि भूतानि चराणि स्थावराणि च ॥ इत्यादि ।

यत्तु मानवे—

तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः ।
रात्रिं च तावतीमेव तेऽहोरात्रविदो जनाः ॥ इति ।

तत्र य इत्येव पाठाद्यथाक्रममन्वयः । इह तु सहस्रेति श्लोके यदित्यहःशब्देनैव ह्यन्वयो घटते । ततश्च त इत्यस्य य इति पदमपेक्षितम् । तत्रापि ये विदुस्तेऽहोरात्रविदो जना इत्यन्वये प्रसङ्गरहिताहोरात्रवेदिस्तुतिपरं वाक्यं प्रस्तुतासंगतं स्यात् । ततश्च येऽहोरात्रविदो जनास्त एवं विदुरित्यन्वय एव कालव्यवस्थायां प्रामाणिकत्वप्रतिपादनपरोऽत्र स्वीकार्य इत्यभिप्रायेणाऽऽह—ये मनुष्यादीति । अनूद्यमानमहोरात्रवेदित्वं यथाप्रसिद्धि सर्वविषयमेव भवितुमर्हति । तेन चतुर्मुखस्यापि मनुष्यादितुल्यता द्योतिता स्यादित्यभिप्रायेण—मनुष्यादीत्यादिकमुक्तम् । ब्रह्मशब्दस्यात्र परमात्मविषयत्वभ्रमव्युदासाय चतुर्मुखशब्दस्तस्यैव हि सहस्रयुगप्रतिनियताहोरजनीविभागः प्रसिद्ध इति भावः । 'सविशेषणौ विधिनिषेधौ विशेषणमुपसंक्रामतः' इति न्यायाद्येऽहोरात्रविज्जना इत्यहोरात्रवेदितांशस्यानूदितत्वाच्च सहस्रयुगपर्यन्ततावेदनमेवात्र विधेयमित्यभिप्रायेण—तच्चतुर्युगसहस्रावसानं विदुरित्युक्तम् । सहस्रयुगानि( णि )पर्यन्ते यस्य तत्सहस्रयुगपर्यन्तम् । युगशब्दश्चात्र प्रमाणान्तरानुसाराच्चतुर्युगपरः ॥ १७ ॥

अस्त्वेवं चतुर्मुखस्याहोरात्रव्यवस्था, ततः किं प्रस्तुतस्येत्य-

तत्र ब्रह्मणोऽहरागमसमये त्रैलोक्यान्तर्वर्तिन्यो देहेन्द्रियभोग्यभोगस्थानरूपा व्यक्तयश्चतुर्मुखदेहावस्थादव्यक्तात्प्रभवन्ति तत्रैवाव्यक्तावस्थाविशेषे चतुर्मुखदेहे राज्यागमसमये प्रलीयन्ते ॥ १८ ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
राज्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

भूतग्राम इति । स एवायं कर्मवश्यो भूतग्रामोऽहरागमे भूत्वा भूत्वा राज्यागमे प्रलीयते पुनरप्यहरागमे प्रभवति । तथा वर्षशतावसानरूप-

---

त्रोत्तरम्—अव्यक्तादिति श्लोकस्तस्यार्थमाह—तत्रेति । अयमभिप्रायः—अत्र व्यक्तिशब्दस्तावन्न महदादिविषयः । चतुर्मुखात्प्रागेव तदुत्पत्तेः । अतश्चतुर्मुखसृज्यमात्रविषय एवासौ । व्यज्यन्त इति व्यक्तयः । तत्रापि सत्यलोकादेः प्रतिकल्पं प्रलयाभावात्त्रैलोक्यान्तर्वर्तिदेहेन्द्रियादिवस्तुमात्रविषयपरत्वमेव स्वीकार्यम् । तेषां चोत्पत्तिर्ब्रह्मशरीरादेव । ततश्चाव्यक्तशब्दोऽपि न मूलाव्यक्तव्यक्त( विष )योऽपि तु तदुपादानकब्रह्मशरीरपरः । शरीरे चाव्यक्तशब्दप्रयोगः सूत्रेऽप्युपपादितः । ' सूक्ष्मं तु तदर्हत्वात् ' [ ब्र० सू० १ । ४ । २ ] इति ॥ १८ ॥

एवंविधसृष्टिप्रलयकारणविशेषं तदनुच्छेदाच्च सृष्टिप्रलयसंतानानुच्छेदमकृताभ्यागमकृतविप्रणाशप्रसङ्गपरिहारमुक्तस्यार्थस्य सर्वेष्वपि कल्पेष्वभिव्याप्तिं यथापूर्वकल्पनं च भूतग्राम इति श्लोकः प्रतिपादयतीत्यभिप्रायेणाऽऽह—स एवायमिति । भूतशब्दोऽत्राचिद्विशिष्टक्षेत्रज्ञपरः । सृज्यत्वसंहार्यत्वहेतुभूतमवशत्वं कर्मनिबन्धनमेव हीत्यभिप्रायेण—कर्मवश्य इत्युक्तम् । अहरागम इति पदं भूत्वेत्यत्रापि अनुवर्तनीयमित्यभिप्रायेणाऽऽह—अहरागमे भूत्वेत्यन्वय उक्तः । इदं च नैमित्तिकप्रलयप्रतिपादनं श्रुत्यादिप्रसिद्धप्राकृतप्रलयस्याप्युपलक्षणम् । तदा सत्यलोकविनाशसिद्धिः । आ ब्रह्मभुवनाल्लोका इति ह्युपक्रान्तमित्यभिप्रायेणाऽऽह—तथेति । यद्वा राज्यागमशब्द एव ब्रह्मणोऽन्तिमराज्यागममपि शक्त्या संगृह्णातीति भावः । तदेतत्सूचितम्—वर्षशतावसानरूप-

युगसहस्रान्ते ब्रह्मलोकपर्यन्ता लोका ब्रह्मा च । पृथिव्यप्सु प्रलीयत आपस्तेजसि लीयन्त इत्यादिक्रमेणाव्यक्ताक्षरतमःपर्यन्तं मय्येव प्रलीयते । एवं मद्व्यतिरिक्तस्य कृत्स्नस्य कालव्यवस्थया मत्त उत्पत्तेर्मयि प्रलयाच्चोत्पत्तिविनाशयोगित्वमवर्जनीयमित्यैश्वर्यगतिं प्राप्तानां पुनरावृत्तिरपरिहार्या । मामुपेतानां तु न पुनरावृत्तिप्रसङ्गः ॥ १९ ॥

अथ कैवल्यप्राप्तानामपि पुनरावृत्तिर्न विद्यत इत्याह—

---

युगसहस्रान्त इति । तथाचान्यत्र स्मर्यते 'निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्' इति । एवमहरागमशब्दोऽपि प्रथममहः संगृह्णाति । पृथिव्यादितत्त्वानामेव विलये तदारब्धानां ब्रह्मलोकब्रह्मशरीरब्रह्माण्डादीनां का कथेत्यभिप्रायेण पृथिवीत्यादिश्रुतिरुदाहृता । तमोवस्थाचिद्द्रव्यस्यैकीभावो हि परस्मिन्नेव देवे श्रूयते । अत्रापि—'अहं कृत्स्नस्य जगतः प्रभवः प्रलयः' इत्यादि ह्युक्तमित्यभिप्रायेण—मय्येवेत्युक्तम् । एवम्—'यो ब्रह्माणं विदधाति पूर्वम्' एको ह वै नारायण आसीन्न ब्रह्मा नेशान इति क्रमेण पुनर्ब्रह्मादिसृष्टिः पुनश्च तत्प्रलय इत्यादिकमपि ग्राह्यम् । ईदृशसृष्टिप्रलयप्रतिपादनस्य प्रकृतोपयोगं दर्शयति—एवमिति । सर्वेषु सृष्टिप्रलयप्रकरणेष्विदमेव तात्पर्यम् । मद्व्यतिरिक्तस्य कृत्स्नस्येत्यनेनाहं कृत्स्नस्येति प्रागुक्तं स्मारितम् । उक्तं च मोक्षधर्मेऽपि—

नित्यं च नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥ इति ॥ १९ ॥

पर इत्यादिश्लोकद्वयस्यार्थमाह—अथेति । अयमभिप्रायः—भगवन्तं प्राप्तानामपुनरावृत्तिः प्रागेवोक्ता । व्यक्तात्परत्वेन निर्दिष्टोऽक्षरश्च जीव एव भवितुमर्हति । अपरेयमितस्त्वन्यामित्यादिप्रत्यभिज्ञानात् । वक्तव्या च कैवल्यार्थिनामश्वरोह्यभावादपुनरावृत्तिः । अत एतत्परमेवेदं श्लोकद्वयमिति । अव्यक्तस्यैव पूर्वप्रकृतत्वादत्राव्यक्तादित्येव पदच्छेदः । तस्य चापेक्षया परशब्दान्यशब्दाभ्यामप्यन्वयः । तत्र च पौनरुक्त्यव्युदासायोत्कृष्टत्वाभिधानमुखेन पुरुषार्थरूपत्वपरः परशब्दः । तत एव च स्वरूपभेदस्य सिद्धत्वादन्यशब्दः प्रकारान्यत्वपरः । अतः स च

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

पर इति । तस्मादव्यक्तादचेतनप्रकृतिरूपात्पुरुषार्थतया पर उत्कृष्टो भावोऽन्यो ज्ञानैकाकारतया तस्माद्विसजातीयोक्तः केनचित्प्रमाणेन न व्यज्यत इत्यव्यक्तः स्वसंवेद्यस्वासाधारणाकार इत्यर्थः । सनातन उत्पत्तिविनाशानर्हतया नित्यः । यः सर्वेषु वियदादिषु भूतेषु सकारणेषु सकार्येषु विनश्यत्सु तत्र तत्र स्थितोऽपि न विनश्यति ॥ २० ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

अव्यक्त इति । सोऽव्यक्तोऽक्षर इत्युक्तः 'ये त्वक्षरमनिर्देश्यमव्यक्तं

---

प्रकारभेदश्चेतनस्वरूप एव प्रमाणसिद्ध इत्यभिप्रायेणाऽऽह—तस्मादिति । भावशब्दोऽत्र पदार्थमात्रवाची । व्यक्त इति पदच्छेदो न युक्तः । अव्यक्तोऽक्षर इत्यत्रैवाभिधानात् । दुर्ग्रहे च जीवे व्यक्तशब्दप्रयोगानुपपत्तेरित्यभिप्रायेणाऽऽह—केनचिदिति । ननु जीवस्याव्यक्तत्वमयुक्तम् । प्रत्यक्षानुमानागमैर्यथासंभवं तद्व्यक्तेरन्यथा खपुष्पत्वप्रसङ्गादित्यत्राऽऽह—स्वसंवेद्येति । प्रमाणान्तराणि हि साधारण्येन तत्प्रतिपादकानीति भावः । नित्यत्वे द्वितीयाध्यायोक्तहेतुस्मरणं सनातनत्वं च प्रसिद्धमित्यभिप्रायेणाऽऽह—वियदादिष्विति । प्रसक्तो हि नाशो जीवे निषेध्यः, प्रसङ्गश्चात्र नश्यत्पदार्थानुप्रवेशवशात् । यथा तिलेषु दह्यमानेषु तदनुप्रविष्टतैलमपि दह्यते ततश्च सर्वेषु भूतेषु नश्यत्स्वित्यस्यैव सामर्थ्यलभ्यमुक्तम्—तत्र स्थितोऽपीति ॥ २० ॥

यः स सर्वेष्वित्यत्र स इत्यस्य प्रयोजनमान्र्यादुत्तरत्रापेक्षितत्वाच्च सोऽव्यक्तोऽक्षर इत्यन्वय उक्तः । यद्वाऽयमध्याहारः । उक्त इत्यस्य कुत्रेत्याकाङ्क्षायामाह—ये त्विति । अनयोः प्रकरणयोरक्षरशब्दस्य जीवविषयत्वं तत्रैव व्यक्तम् । उत्तमः पुरुषस्त्वन्य इत्यादिभेदव्यपदेशात् । अतोऽत्राध्यायेऽक्षरं ब्रह्म परममव्यक्तोऽक्षर इत्यक्षरशब्दाभ्यां परिशुद्धजीव एव व्यपदिश्यते । ये त्व-

पर्युपासते'। 'कूटस्थोऽक्षर उच्यते' इत्यादिषु तं वेदविदः परमां गतिमाहुः। अयमेव 'यः प्रयाति त्यजन्देहं स याति परमां गतिम्'। इत्यत्र परमगतिशब्दनिर्दिष्टोऽक्षरः प्रकृतिसंसर्गवियुक्तस्वरूपेणावस्थित आत्मेत्यर्थः। यमेवंभूतं स्वरूपेणावस्थितं प्राप्य न निवर्तन्ते तन्मम परमं धाम परमं नियमनस्थानम्। अचेतनप्रकृतिरेकं नियमनस्थानं तत्संसृष्टरूपा जीवप्रकृतिर्द्वितीयं नियमनस्थानम्। अचित्संसर्गवियुक्तं स्वरूपेणावस्थितं मुक्तस्वरूपं परमं नियमनस्थानमित्यर्थः। तच्चापुनरावृत्तिरूपम्। अथ वा प्रकाशवाची धामशब्दः। प्रकाशश्चेह ज्ञानमभिमतम्।

---

त्यत्राक्षराव्यक्तशब्दयोर्द्वयोरपि प्रयोगादत्राप्यव्यक्तोऽक्षर इत्युक्त इति तदुभयनिर्देशाच्च तत्प्रत्यभिज्ञा सिद्धेति भावः। ननु कथं वक्ष्यमाणप्रकारस्थमत्रोक्त इत्यनेनान्विततयोपादीयते। इत्थं तत्प्रकरणोपबृंहणीयश्रुत्यभिप्रायेण तदुपादानात्। निहताः पूर्वमेवेतिवत्स्वसंकल्पारोहाद्वेति। आहुरित्यत्र कर्त्रपेक्षायां यदक्षरं वेदविदो वदन्तीति प्रसक्तमुचितं च कर्तृविशेषमाकृष्याऽऽह—तं वेदविद इति। तमाहुः परमां गतिमिति पूर्वोक्तप्रत्यभिज्ञानार्थमिति भावः। तत्राक्षरपरमगतिशब्दयोः प्रयोगयोगतां दर्शयति—प्रकृतीति। अनिवृत्तिहेतुत्वेनायमर्थ उक्त इत्यभिप्रायेणैवंभूतं स्वरूपेणावस्थितमित्युक्तम्। तद्धाम स्थानि(नं)स्थानिसापेक्षमिति नियमादात्मानि तिष्ठन्नित्याद्युक्तमधिष्ठेयस्थानपर्यायधाम ममेति संबन्धमात्रविधानस्य प्रागेव सिद्धेः स्थानस्य प(ग)तिशब्देन विवक्षितमर्थमाह—नियमनस्थानमिति। अत्र किं परं नियमनस्थानं यद्व्यवच्छेदाय परमशब्द इत्यत्राऽऽह—अचेतनेति। अत्र परमधामत्वव्यपदेशात्परिशुद्धात्मविषयत्वं सिद्धम्। ततश्चाशुद्धो जीवोऽस्य पर एव विवक्षित इत्याह—तत्संसृष्टेति। यदि मुक्तोऽपि परमात्मपरतन्त्रः स्वतन्त्रेण परमात्मना पुनरपि संसारगर्ते प्रक्षिप्येतेत्यत्राऽऽह—तच्चेति। अयं भावः—अविद्यादि संसारकारणं न तु पारतन्त्र्यम्। अविद्यादेश्च क्षयादीश्वरकारुण्यादीनां च स्वाभाविकत्वान्न मुक्तस्य संसारगन्ध इत्यर्थः। यद्वा न केवलं भगवत्प्राप्तिरेवापुनरावृत्तिरूपा, किंतु परिशुद्धजीवप्राप्तिरपि अवरोहाभावात्तथेति भावः। नियमनस्थानमित्यस्याश्रुतविशेषणोपादानारुचेराह—अथवेति।

प्रकृतिसंसृष्टात्परिच्छिन्नज्ञानरूपादात्मनोऽपरिच्छिन्नज्ञानरूपतया मुक्तस्वरूपं परं धाम ॥ २१ ॥

ज्ञानिनः प्राप्यं तु तस्मादत्यन्तविभक्तमित्याह—

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

पुरुष इति ।

'मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' ॥

'मामेभ्यः परमव्ययम्' इत्यादिना निर्दिष्टस्य यस्यान्तःस्थानि सर्वाणि भूतानि येन च परेण पुरुषेण सर्वमिदं ततं स परः पुरुषोऽनन्यचेताः सततमित्यनन्यया भक्त्या लभ्यः । अथाऽऽत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य च

---

अस्तु धामशब्दस्तेजःपर्यायः प्रकाशवाची । तस्य कथमत्रान्वय इत्यत्राऽऽह—प्रकाशश्चेति । विशेषणफलितं दर्शयति—प्रकृतिसंसृष्टादिति । प्रकाशपक्षे तत्परं धाम मच्छेषभूतमिति वाक्यार्थः । यद्यप्यपरेयमितस्त्वन्यामित्यादिना प्रागेव स्वशेषत्वमुक्तम् । तथाऽपि समष्टिचेतनमात्रविषयत्वं तत्र प्रतीयते । इह तु मुक्तस्य स्वशेषत्वमुच्यत इत्यपौनरुक्त्यम् ॥ २१ ॥

पुरुषः स इति श्लोके तुशब्देनार्थान्तरद्योतनादनन्यया भक्त्येत्यस्य सामर्थ्यात्पुरुषशब्दस्य परमात्मनि पुरिशयत्वपूर्णत्वपूर्वसद्भावपुरुदानादिभिर्निमित्तैः सहस्रशीर्षा पुरुष इत्यादिप्रयोगप्राचुर्यात्परशब्देन विशेषणाच्च पूर्वोक्तात्फलादधिकफलोपदेशार्थोऽयं श्लोक इत्यभिप्रायेणाऽऽह—ज्ञानिन इति । विभक्तं विवेचकैरिति शेषः । विलक्षणमिति वाऽर्थः । गगनाद्यन्तःस्थितावपि गगनादेः परत्वाभावात्तन्निरासार्थं यस्येत्यादिप्रसिद्धवन्निर्देशोऽत्र पूर्वोक्तपरत्वपर इति दर्शयति—मत्त इति । अनुवादपुरोवादयोरैकार्थ्यमिति भावः । यस्मात्परं नापरमित्यारभ्य 'तेनेदं पूर्णं पुरुषेण सर्वम्' इति स्मारणाय—येन च परेण पुरुषेणेत्युक्तम् । भक्तेरनन्यत्वं कीदृशमित्याह—अनन्यचेता इति । यत्र काले त्वित्यादेः 'योगयुक्तो भवार्जुन' इत्यन्तस्य तात्पर्यमाह—अथेति । अत्र धूमादिमार्गकथनं हेयत्वार्थम् । अर्चिरादिमार्गोपदे-

साधारणीमर्चिरादिकां गतिमाह—द्वयोरप्यर्चिरादिका गतिः श्रुतौ श्रुता। सा चापुनरावृत्तिलक्षणा। यथा पञ्चाग्निविद्यायां—'तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' (छा० ५। १०। १) इत्यादावर्चिरादिकया गत्या गतस्य परब्रह्मप्राप्तिरपुनरावृत्तिश्चोक्ता 'स एनान्ब्रह्म गमयति' 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते' (छा० ४। १५। ५) इति। न च प्रजापतिवाक्यादौ श्रुतपरविद्याङ्गभूतात्मप्राप्तिविषयेयम् 'तद्य इत्थं विदुः' इति गतिश्रुतिः। 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति परविद्यायाः पृथक्श्रुतिवैयर्थ्यात्। पञ्चाग्निविद्यायां च 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५। ९। १) इति 'रमणीयचरणाः कपूयचरणाः' इति पुण्यपापहेतुको मनुष्यादिभावोऽपामेव भूतान्तरसंसृष्टानामात्मनस्तु तत्परिष्वङ्गमात्रमिति चिदचितोर्विवेकमभिधाय 'तद्य इत्थं विदुः। तेऽर्चिषमभिसंभवन्ति' 'इमं मानवमावर्तं नाऽऽवर्तन्ते' इति

---

शस्तु तदनुसंधानार्थ एवेति तत्रैव तात्पर्यमिति भावः। ननु परमपुरुषनिष्ठस्यैव ह्यर्चिरादिगतिस्तत्कथमत्र साधारण्यमुच्यत इत्यत्राऽऽह—द्वयोरपीति। आत्मनिष्ठस्याप्यनावृत्तेः पूर्वोक्तत्वात्तस्याप्यर्चिरादिकैव गतिरिति दर्शयितुमाह—सा चेति। साधारण्या अपुनरावृत्त्याः श्रुतिमेव दर्शयति—यथेति। अङ्गिफलमेवाङ्गेऽपि व्यपदिश्यत इत्याशङ्क्य परिहरति—न चेति। हेतुमाह—ये चेति। यद्यप्यङ्गिफलमेवाङ्गेऽपि निर्देष्टुं युक्तं तथाऽप्यङ्गिना सहाङ्गस्य तुल्यवत्पृथङ्निर्दिष्टस्य फलनिर्देशो न युक्त इति भावः। एतेन प्रथमषट्कोदितप्रत्यगात्मवेदनादत्रत्याक्षरयाथात्म्यानुसंधानस्य भेदोऽपि दर्शितः। तद्य इत्थं विदुरित्यस्य प्रत्यगात्मनिष्ठविषयत्वं कथमित्यत्राऽऽह—पञ्चाग्निविद्यायां चेति। पुरुषवचसो भवन्तीति त्रिवृत्कृतानामभिधीयमानत्वाद्भूतान्तरसंसर्गसिद्धिः। अपामेवेति आत्मस्वरूपपरिणामव्युदासायोक्तम्। एवंविधशरीरसंबन्धमात्रस्याप्यौपाधिकत्वप्रदर्शनायाऽऽह—पुण्यपापहेतुक इति। रमणीयचरणा रमणीयां योनिं कपूयचरणाः कपूयां

विविक्ते चिदचिद्वस्तुनी त्याज्यतया प्राप्यतया च तद्य इत्थं विदुस्तेऽर्चिरादिना गच्छन्ति न च पुनरावर्तन्त इत्युक्तमिति गम्यते। आत्मयाथात्म्यविदः परमपुरुषनिष्ठस्य 'स एनान्ब्रह्म गमयति' (छा० ४। १५। ५) इति ब्रह्मप्राप्तिवचनादचिद्वियुक्तमात्मवस्तु ब्रह्मात्मकतया ब्रह्मशेषतैकरसमित्यनुसंधेयम्। तत्क्रतुन्यायाच्च। परशेषतैकरसत्वं च 'य आत्मनि तिष्ठन्यस्याऽऽत्मा शरीरम्' (बृ० ३।७।२२॥)

---

योनिमित्यादिवचनान्न केवलाचिद्विषयमिदं प्रकरणम्।' तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्युक्तयद्वृत्तद्वयस्य तेऽर्चिषमित्येव प्रस्तुताकारं विशेषं दर्शयति—विविक्ते इति। ननु तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयतीति अर्चिरादिना गतस्य ब्रह्मप्राप्तिः श्रूयते। तत्कथं केवलात्मोपासकस्य ब्रह्मप्रापकार्चिरादिगतिप्राप्तिरित्यत्राऽऽह—आत्मयाथात्म्येति। अयं पञ्चाग्निविद्यानिष्ठो न केवलात्मोपासकोऽपि तु ब्रह्मात्मकस्वानुसंधायीति भावः। अन्यथा तत्क्रतुन्यायविरोध इत्यभिप्रायेणाऽऽह—तत्क्रतुन्यायाच्चेति। चकार इतरेतरयोगे। यथावस्थितात्मानुसंधानस्य परशेषतैकरसत्वानुसंधानरूपत्वे प्रमाणमाह—य आत्मनीति। आदिशब्देन पतिं विश्वस्य, करणाधिपाधिपः, इत्यादिवाक्यशतं गृह्यते। अत्र शारीरकादिभाष्यविरोधो मन्दैराशङ्कितः। इह तावच्छ्रुतिसूत्रभाष्यादिष्वन्यत्र च पञ्चाग्निविदः परमात्मात्मकत्वस्वात्मानुसंधातृत्वमर्चिरादिगतिश्चाविशेषेणोच्यते। तस्याश्च ब्रह्मगमयितृत्वस्य श्रुत्यादिष्विह च तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना इति सिद्धत्वात्पञ्चाग्निविदोऽपि परमात्मप्राप्तिरस्त्येवेति स्वीकर्तव्यम्। तत्र प्राप्तौ ज्ञानिनां परमात्मात्मकस्वात्मानुसंधानस्य विशिष्टो भोग्यः। अक्षरयाथात्म्यनिष्ठानां तु स्वरूपमेव पूर्वं भोग्यम्। वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिसाधनमधुविद्यादिन्यायादनन्तरं ब्रह्मप्राप्तिः। ईदृशपर्वक्रमप्रतिनियमश्च प्राचीनापेक्षया भेदात्। स च प्राचीनकर्मविशेषाच्चतुर्विधा भजन्ते मामिति प्रागेव दर्शितः। न चात्र जिज्ञासोरन्य एवाऽऽत्मयाथात्म्यविदिति भाष्यते। जिज्ञासुवेद्यतयोक्तस्वभावविसर्गयोरत्र पञ्चाग्निविद्योदाहरणान्मध्ये कैवल्यार्थिन एव नाड्या निष्क्रमणमनावृत्तिश्चोक्ता। आत्मयाथात्म्यशब्दयोश्चात्र न भिन्नार्थत्वम्। तस्योपासने कश्चिदस्ति

विशेषः। अक्षरयाथात्म्यविदः परमात्मशरीरभूतस्वात्मोपासकाः। ज्ञानिनस्तु स्वात्मशरीरकपरमात्मोपासका इत्ययमेव विशेषः, तद्य इत्थं विदुः, ये चेमेऽरण्य इति विभागनिर्देशाभिप्रेत इति भाष्यादिभिरुक्तम्। सारे तूभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुखभेदेन। स्वात्मशरीरकं ब्रह्म केचन ब्रह्मात्मकस्वात्मानमितर इति। अत एव सप्तमे प्रक्रान्तो जिज्ञासुः परमात्मप्राप्तिकामज्ञानिव्यतिरिक्तत्वादब्रह्मात्मकस्वात्मानुसंधायीति न भ्रमितव्यम्। तस्य चोदारकोटिमात्रे निवेशः स्वात्मानुभव(वा)विलम्बिमुखज्ञानिव्यतिरेकात्। अर्चिरादिगतिनिषेधस्तु ब्रह्मात्मकस्वात्मानुसंधानरहितस्वात्मोपासनविषयः। इदमपि भाष्यादिषु व्यक्तमेवोक्तम्—तस्मादचिन्मिश्रं केवलं वाऽचिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते न तान्नयति अपितु परब्रह्मोपासीनानात्मानं च प्रकृतियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गुणो नयतीत्यादिभिः। यत्पुनरुच्यते—'ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः। सर्वे च्यवनधर्माणः' इति। तत्रापि आत्ममात्रानुभवसुखस्यास्थिरत्वादेव च्यवनधर्मत्वमुच्यते न तावता पुनः संसारप्रसङ्गः।

इन्द्रलोकात्परिभ्रष्टो मम गेयपरायणः।
प्रमुक्तः सर्वसंसारैर्मम लोकं च गच्छति॥

प्रच्युतो वा एषोऽस्माल्लोकादसतो देवलोकमित्यादिष्विवोत्तरोत्तरातिशयितपदप्राप्तावपि पूर्वपदभ्रंशमात्राच्च्यवनधर्मत्ववाचोयुक्तेरविरोधात्। परिमितसुखानुभवविलम्बनेन तदानीं निरतिशयसुखाननुभवात्। भ्रष्टत्वेनापि निन्दोपपत्तेश्च। उपाश(स)नदशानुभूते परमात्मनि फलदशायां किंचित्कालमनुभवविच्छेदाद्वा प्राप्तभ्रंशलक्षणं च्यवनधर्मत्वम्। प्रतिबुद्धस्तु मोक्षभागिति चाव्यवहितमोक्षभाक्त्वं प्रतिबुद्धस्योच्यते। न तावताऽन्यस्य मोक्षाभावः।

भुक्त्वा च भोगान्विमलांस्त्वमन्ते मत्प्रसादतः।
ममानुस्मरणं प्राप्य मम लोकमवाप्स्यसि॥

इतिवदविरोधात्। यथा च मुमुक्षोरेव कस्यचिन्मध्ये ब्रह्मका-

यनिषेवणसुखमुच्यते तथाऽत्रापि । स्थानविशेषे स्वात्मानुभवाविलम्बः । यथाच—

'अथवा नेच्छते तत्र ब्रह्मकायनिषेवणम् ।
उत्क्रामति च मार्गस्थः शीतीभूतो निरामयः' ॥

इत्यादिना ब्रह्मकायनिषेवणसङ्गान्मुक्तस्य देवयानेन मार्गेण परमाकाशगमनमुच्यते । तद्वदिहापि स्वात्मानुभवस्थानात्प्रच्युतस्य परमव्योमाधिरोहः स्यात् । अर्चिरादिगतिश्चास्यावान्तरफलानुभावात्पश्चाद्वा गतिमध्ये वा । दक्षिणायनमृतस्य चन्द्रमसः सायुज्यवद्विश्रममात्ररूपोऽयमवान्तरफलानुभव इत्युभयथाऽपि न विरोधः । एतेन पश्चादेवास्याप्रतीकालम्बनत्वमित्यपि निरस्तम् । मधुविद्यावदेव प्रथममपि तदुपपत्तेः । स्मरन्ति च—स्वात्मानुभवस्थानमुक्तस्थानादर्वाचीनम् ।

योगिनाममृतं स्थानं स्वात्मसंतोपकारिणाम् ।
एकान्तिनः सदा ब्रह्मध्यायिनो [ योगिनो ] हि ये ॥
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ।

इत्यमृतस्थानवर्तिनां च मुक्तत्वस्य व्यपदेशो जरामरणादिविरहात्पुनर्जन्महेतुभूतपुण्यपापविगमाच्च । अस्ति च परित्यक्तस्थूलदेहानामपि तत्तदुपासनाविशेषाधीनमपवर्गादर्वाचीनं फलम् । तच्च प्रकृतिलयादिशब्देन सांख्याः पठन्ति—

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥
वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ इति ।

विपर्ययादिष्यते बन्ध इत्यत्र च वाचस्पतिना व्याख्यातम्—विपर्ययादतत्त्वज्ञानादिष्यते बन्धः । स च त्रिविधः—प्राकृतिको वैकृतिको दाक्षायणिकश्चेति । तत्र प्रकृतावात्मज्ञानाये प्रकृतिमुपासते तेषां प्राकृतो बन्धः । यः पुराणे प्रकृतिलयान्प्रकृत्योच्यते—पूर्णं वर्षसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तका इति । वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाहंकारबुद्धीरुपासते पुरुषबुद्ध्या तान्प्रतीदमुच्यते । यथा—

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।

इत्यादिश्रुतिसिद्धम् ॥ २२ ॥

ते खल्वमी त्रिविधा येषां वैकृतिको बन्ध इति । एवमव्यक्तादितत्त्वचिन्तकानामिव प्रत्यगात्मतत्त्वचिन्तकानां तदुचितदेशकालं तत्तो निश्चितं फलमुपपद्यते । अत एव भूमविद्यायां प्रत्यगात्ममात्रोपासकस्याप्यतिवदि( हि )त्वमुक्तम् । ब्रह्मात्मकस्वात्मानुसंधाने तु ब्रह्मप्राप्तौ विश्रमादपुनरावृत्तिरिति विशेषः । अत एवाक्षरानुभवस्यान्तवत्त्वे तदर्थिनां कथमैश्वर्याधिकारिणोऽधिकार्यन्तरत्वमित्यपि निरस्तम् । वाह्यान्तरभोक्तव्यविभागादावृत्त्यनावृत्तियोग्यताभेदाच्च तद्भेदोपपत्तेः । विलम्बाक्षराणां पुनरियं निष्ठा—

सर्वधर्मांश्च संत्यज्य सर्वलोकांश्च साक्षरान् ।
लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ॥ इति ।
कैवल्यं भगवन्तं च मन्त्रोऽयं साधयिष्यति ।

इत्यादिष्वपि कैवल्यशब्देनाऽऽत्ममात्रानुभवसुखं तदपेक्षिभिः प्राप्यमुच्यते । एतच्चान्तरायकोटिनिविष्टत्वादादितः सावधाना ज्ञानिनः परिहरन्ति । केचित्तु ब्रह्मानुभववैमुख्येन नित्यमात्मानुभवसुखमिच्छन्ति । न तत्र भाष्यकारादिसंप्रदायं प्रमाणं युक्तिं वा पश्यामः । निःशेषकर्मक्षये स्वाभाविकरूपाविर्भावेन ब्रह्मानुभवावश्यंभावात् । कर्मशेषयोगे तु संसारप्रसङ्गाच्च । जरामरणादिहेतुभूतसर्वकर्मविनाशादसंसारः । तावन्मात्रेण च मुक्तत्वव्यपदेशः । ब्रह्मानुभवप्रतिबन्धककर्मणस्त्वविनाशात्तदनुभवाभाव इति चेदस्त्वेवमेतत्कर्म परस्तादपि न नङ्क्ष्यतीत्यत्र नियामकमस्तीत्येषां दिक् । परप्राप्त्यादिरहितनित्यकैवल्यकल्पना सूत्रभाष्यश्रुतिस्मृत्यादीनां बाधे न सिध्यति ।

अतोऽधिकारिभेदेन अवस्थाभेदमाश्रितम् ।
अन्यामपि गतिं प्राहुः प्रतीचीं प्रत्यपादयन् ॥
तत्राऽऽवृत्तिपरप्राप्तिवैरूप्यादेरयोगतः ।
अस्मदुक्तं श्रुतिस्मृत्योरनपायं रसायनम् ॥ २२ ॥

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

अत्र कालशब्दो मार्गस्याहःप्रभृतिसंवत्सरान्तकालाभिमानिदेवताभूयस्तया मार्गोपलक्षणार्थः । यस्मिन्मार्गे प्रयाता योगिनोऽनावृत्तिं पुण्यकर्माणश्चाऽऽवृत्तिं यान्ति तं मार्गं वक्ष्यामीत्यर्थः ॥ २३ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणमिति संवत्सरादीनां प्रदर्शनम् ॥ २४ ॥

---

नन्वर्चिरादिगतिमाहेति कथमुच्यते यत्र काल इति कालविशेषो ह्युपक्रम्यत इत्यत्राऽऽह—अत्र कालशब्द इति । शारीरके दक्षिणायनमृतस्यापि मोक्ष उक्तः 'अतश्चायनेऽपि दक्षिणे' [ब्र० सू० ४ । २ । १९ ] इति । अत्र च 'शुक्लकृष्णे गती ह्येते' इत्यनन्तरमेवोच्यते । अन्यथाऽग्निर्ज्योतिरित्यादिना च विरुध्येत । नैते सृती पार्थ जानन्निति च मार्गवाचिना शब्देनोपसंगृह्येते इति भावः । यत्र काले प्रयाता इति व्यवहितेन संबन्धं दर्शयन् योगिनामावृत्तिः कथमिति च शङ्कां परिहरन् यत्र काल इति श्लोकस्य वाक्यार्थमाह—यस्मिन्निति । यत्र योगिनो ज्ञानिनः पुण्यकर्मसंबन्धिनश्च 'सरूपाणामेकशेष एकविभक्तौ' [ पा० सू० १ । २ । ६४ ] । यद्वा पुण्यकर्माण इत्यध्याहृतम् । 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरम्' [ छा० ४ । १५ । ५ ] इत्यादिश्रुत्यनुसारेणोक्तं संवत्सरादीनां प्रदर्शनमिति । एतद्वैशद्यमर्चिरादिपादे । तत्रैवं संगृहीतं वरदगुरुभिः—

अर्चिरहःसितपक्षानुदगयनाब्दमरुदर्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥ इति ॥ २३ ॥

अग्निर्ज्योतिरिति । अग्निरूपज्योतिरित्यर्थः । तेन देवयानप्रथमपर्वस्थार्चिर्विवक्षा । अत एवाग्निज्योतिषोर्भिन्नदेवतात्वं कालाभिमानिदेवतात्वं च वदन्तः प्रत्युक्ताः ॥ २४ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

एतच्च धूमादिमार्गस्थपितृलोकादेः प्रदर्शनम् । अत्र योगिशब्दः पुण्यकर्मसंबन्धिविषयः ॥ २५ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥

शुक्ला गतिरर्चिरादिका कृष्णा च धूमादिका । शुक्लयाऽनावृत्तिं याति कृष्णया तु पुनरावर्तते । एते शुक्लकृष्णे गती ज्ञानिनां द्विविधानां पुण्यकर्मणां च श्रुतौ शाश्वते मते । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' (छा० ५ । १० । १) 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' (छा० ५ । १० । ३) इति ॥ २६ ॥

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

---

पितृलोकादेरित्यादिशब्देनाऽऽकाशचन्द्रग्रहणम् । योगिनो धू( धू )मादिमार्गः पुनरावृत्तिश्च कथमुच्यत इत्यत्राऽऽह— अत्र योगिशब्द इति । अत्र योगशब्द उपायमात्रवाची । यद्वा संबन्धवाची । धूमादिसामर्थ्यात्तु पुण्यकर्मरूपसंबन्धविशेषसिद्धिरिति भावः । 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' [ छा० ५ । १० । ३ ] इत्यादिका श्रुतिरत्रोपबृंहिता ॥ २५ ॥

उक्तमार्गद्वये श्रुतिप्रसिद्धिः प्रदर्श्यते—शुक्लकृष्णे इति श्लोकेन । शुक्लपक्षकृष्णपक्षान्वयाद्वा शुद्ध्यशुद्धिविवक्षया वाऽभिमन्तव्यरूपस्याभिमन्तर्यारोपादेर्वा गत्योः शुक्लकृष्णशब्दोपचारः । अत्राऽऽदितृतीयवर्णद्वयविषयजगच्छब्दाभिप्रेतप्रदर्शनं ज्ञानिनां शाश्वतत्वं प्रवाहरूपेणानाद्य ( द्य ) त्वं व्यवस्थितत्वम् ॥ २६ ॥

नैते सृती इति श्लोकेन मार्गवेदनस्याप्युपासनवत्परमपुरुषप्राप्त्यर्थमेव तथाऽपि मार्गज्ञानमभिगन्तुरव्याकुलगमनार्थमिति

नैते इति । एतौ मार्गौ जानन् योगी प्रयाणकाले कश्चन न मुह्यति अपि तु स्वेनैव देवयानेन पथा याति । तस्मादहरहरर्चिरादिगतिचिन्तनाख्ययोगयुक्तो भव ॥ २७ ॥

अथाध्यायद्वयोदितशास्त्रार्थवेदनफलमाह—

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाऽऽद्यम् ॥ २८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽक्षरपरब्रह्मयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

---

ऋग्यजुःसामाथर्वरूपवेदाभ्यासयज्ञतपोदानप्रभृतिषु सर्वेषु पुण्येषु यत्फ-

---

लोकसिद्धमत्रापि तथोपकारः संभवन्न परित्याज्यस्तत्प्रसादादेव हि तत्सिद्धिरपीत्यभिप्रायेणाऽऽह—एताविति । कश्चनेति । कश्चिदपीत्यर्थः । न मुह्यति । तत्प्रकाशितद्वार इत्यादिप्रकारेण स्पष्टमार्गो भवतीत्यर्थः । मार्गद्वयज्ञानं हेयमार्गप्रहाणार्थमित्यभिप्रायेणाऽऽह - अपि त्विति । गतिज्ञानस्य फलमुद्दिश्य तस्मादिति हेतुतया परामर्श ( मृश्यं, ) साक्षाद्योगविधानस्यासंगतत्वाद्योगशब्दोऽत्र ध्यानमात्रविषयः, तच्च ध्यानं प्रस्तुतगतिचिन्तनरूपमेव भवितुमर्हतीत्यभिप्रायेणाऽऽह—तस्मादिति ॥ २७ ॥

इदं विदित्वेति सामान्यतो निर्देशादविशेषाच्चैकप्रकरणभूताध्यायद्वयार्थो गृह्यत इत्यभिप्रायेणाऽऽह—अथेति । वेदेष्वित्यपि यज्ञादिवत्फलकारणतयोपादानं न तु प्रतिपादकतया । तदा यज्ञादिति फलव्यतिरिक्तविषयतया संकोचनीयत्वापातात् । वेदाभ्यासस्य च दुरितक्षयादिफलप्रदत्वं श्रुत्यादिसिद्धम् । यज्ञादिफलानां प्रतिपादकतयोपादाने च प्रस्तुताध्यायद्वयार्थस्यापि वेदार्थत्वात्ततोऽपि संकोचः स्यात् । तदेतत्सर्वमभिप्रेत्य वेदाभ्यासेत्युक्तम् । दाने चेति चकारस्यानुक्तसमुच्चायकत्वप्रदर्शनाय प्रभृतिशब्दः । पुण्यफलमित्यत्र पुण्यशब्देन फलविशेषणतया

लं निर्दिष्टम्, इदमध्यायद्वयोदितं भगवन्माहात्म्यं विदित्वा तत्सर्वमत्येति एतद्वेदनसुखातिरेकेण तत्सर्वं तृणवन्मन्यते। योगी ज्ञानी च भूत्वा ज्ञानिनः प्राप्यं परमाद्यं स्थानमुपैति ॥ २८ ॥

इति श्रीमद्रामानुजविरचिते श्रीमद्भगवद्गीताभाष्येऽष्टमोऽध्यायः ॥ ८ ॥

---

यज्ञादीनामेव सामान्यतो निर्देशः फलस्य श्लाघ्यताप्रदर्शनार्थ इत्यभिप्रायेण यज्ञादिविशेष्यतया पुण्येष्वित्युक्तम्। अध्यायद्वयोदितं भगवन्माहात्म्यमिति। सप्तमारम्भे हि भगवन्माहात्म्यं प्रक्रान्तम्। तदनुबन्धादन्यत्सर्वमुक्तमिति भावः। परं स्थानमुपैतीति। योगानुष्ठानसाध्यस्य साक्षात्फलस्य पृथगुच्यमानत्वात्तद्विषयत्वे पौनरुक्त्यादधिकपुण्यफलप्राप्तिविवक्षाय लक्षितलक्षणापातात्, संसारनिवृत्तिमात्रपरत्वेऽपि पुण्यफलशब्देन पापफलस्यापि लक्षयितव्यत्वात् तत्सर्वमत्येतीत्येतद्विवेकमूलवितर्क्यभिप्रायः। अतिशयितफलवेदनं हि मनःप्रीतिकरायासादित्यादिन्यायेन फलान्तरवैतृष्ण्यहेतुरित्यभिप्रायेणाऽऽह—एतद्वेदनेति। भगवन्माहात्म्यज्ञानस्य परस्थानप्राप्तिहेतुत्वे प्रागुक्तज्ञानविशेषरूपद्वारप्रदर्शनं योगीत्यनेन क्रियत इत्यभिप्रायेण ज्ञानी च भूत्वेत्युक्तम्। परत्व देशकालयोगादिभिः। 'आदित्यवर्णं तमसः परस्तात्' 'तदक्षरे परमे व्योमन्' 'दिव्यं स्थानमजरं चाप्रमेयम्' 'एते वै निरयास्तात स्थानस्य परमात्मनः' इत्यादेः। आद्यमनादिमित्यर्थः। आदौ भवं कारणं ब्रह्मेति परोक्तं तु स्थानशब्दनैकट्यादयुक्तमिति ॥ २८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतौ श्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायामष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः ।

उपासकभेदनिबन्धना विशेषाः प्रतिपादिताः । इदानीमुपास्यस्य परमपुरुषस्य माहात्म्यं ज्ञानिनां च विशेषं विशोध्य भक्तिरूपस्योपासनस्य स्वरूपमुच्यते––

श्रीभगवानुवाच––

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

---

स्वमाहात्म्यं मनुष्यत्वे परत्वं च महात्मनाम् ।
विशेषो नवमे योगो भक्तिरूपोऽभिधीयते ॥

इति संग्रहश्लोकमपि व्याकुर्वंस्तदनुसारेणाष्टमनवमयोः संगतिं च दर्शयति–उपासकेत्यादिना । विशेषा ज्ञातव्योपादेयभेदाः परमपुरुषयाथात्म्यस्य ज्ञानिनां विशेषस्य च प्रागेव [व्या]कृतत्वात्तत्प्रभावविशोधनमत्रोपासनतत्फलानुप्रविष्टतया क्रियते । अध्यायप्रधानार्थस्तूपासनस्वरूपनिष्कर्षप्रधानार्थत्वेनेत्यभिप्रायेण विशोध्येति विच्छिद्य भक्तिरूपस्येत्यादि पृथगुक्तम् । भजनोपासनशब्दयोरस्मिन्नेवाध्याये प्रकरणान्तरेषु च समानविषयतयैव प्रयोगवशाच्छ्रुतिसिद्धोपासनस्यैवात्र भक्तिशब्दे विशेषणं कृतमित्यभिप्रायेण––भक्तिरूपस्योपासनस्येत्युक्तम् । अत्र 'इदं तु ते गुह्यतमम्' इति ज्ञानस्योपक्रान्तत्वान्मन्मना भवेति चोपसंह्रियमाणत्वान्मध्ये च बहुशो भजनस्यैवाभ्यस्यमानत्वात्प्रत्यक्षरूपत्वनिरतिशयप्रियत्वकीर्तनीययतननमस्कारादिरूपत्वादीनां चापूर्वाणां भक्तिस्वरूपानुप्रवेशिनां प्रकरणप्रतिपाद्यमानत्वात् स्वरूपतः साध्यतया निरतिशयफलप्रतिपादनाद्राजविद्येत्यादिना प्रशंसारूपार्थवाददर्शनाच्चात्रोपक्रमोपसंहारादितात्पर्यलिङ्गैर्भक्तिस्वरूपनिष्कर्षेऽध्यायस्य तात्पर्यं तदन्विततयाऽन्यदत्रोच्यत इत्यभिप्रायः । इदं तु त इत्यत्र वक्ष्यमाणमेव बुद्धिस्थतयेदमिति निर्दिष्टम् । एष तु वा अतिवदतीति प्राणविदपेक्षयाऽसत्यविरोधिकत्ववि(व)तु-

इदं तु ते गुह्यतमं भक्तिरूपमुपासनाख्यं ज्ञानं विज्ञानसहितमुपासनगतविशेषज्ञानसहितमनसूयवे ते प्रवक्ष्यामि । मद्विषयं सकलेतरविसजातीयमपरिमितप्रकारं माहात्म्यं श्रुत्वैवमेव संभवतीति मन्वानाय ते प्रवक्ष्यामीत्यर्थः । यज्ज्ञानं वक्ष्यमाणमनुष्ठानपर्यन्तं ज्ञात्वा मत्प्राप्तिविरोधिनः सर्वस्मादशुभान्मोक्ष्यसे ॥ १ ॥

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

---

शब्देन कर्मयोगज्ञानयोगाभ्यामप्यस्याऽऽधिक्यं विवक्षितम् । तयोर्हि गुह्यत्वं गुह्यतरत्वं च । इदं तु गुह्यतमम् । इदं च शुश्रूषाज्ञापनार्थं गोपनाधिक्यशिक्षणार्थं चोक्तम् । उपब्रह्मणि-(बृंहणी)-वेदान्तवाक्येष्विवात्रापि ज्ञानशब्दस्य वक्ष्यमाणविशेषपर्यवसानप्रदर्शनाय भक्तिरूपमुपासनाख्यमित्युक्तम् । उपासनगतविशेषज्ञानसहितमिति पूर्वोक्तविज्ञानादत्र सविज्ञानस्य भेदस्तद्धयुपास्यादिविशेषज्ञानमुपासनगतविशेष उपासनप्रकारः । प्रस्तुतोपयिकमनसूयत्वप्रकारं दर्शयति—मद्विषयमिति । गुणेषु दोषाविष्करणचित्तवृत्तिविशेषो ह्यसूया । तद्विपर्ययश्च गुणेषु गुणाध्यवसाय एव हीति भावः । एतेनोपदेशयोग्यायोग्यविभागेन शिष्यलक्षणं कृतम् । विद्याया(वा)चनमनसूयकाय मा मा दा इत्यादि । वक्ष्यति च–इदं ते नातपस्कायेत्यारभ्य न च मां योऽभ्यसूयतीति । प्रवक्ष्यामि कृत्स्नं लघु व्यक्तं च वक्ष्यामीत्यर्थः । यज्ज्ञानमनुष्ठानपर्यन्तं ज्ञात्वेति । न ह्यनुष्ठेयज्ञानमात्रादनुष्ठानफलमत उपासनस्वरूपं ज्ञात्वा तदनुष्ठानद्वारा मोक्ष्यस इत्युच्यत इति भावः । कर्मादिभिर्हि भक्त्युत्पत्त्यादिविरोधिपापनिरसनम् । भक्त्या तु भगवत्प्राप्तिविरोधिसमस्तपापनिरसनं हि प्रमाणसिद्धमित्यभिप्रायेण—मत्प्राप्तिविरोधिनः सर्वस्मादशुभादित्युक्तम् । अशुभशब्दस्यात्र स्वर्गाद्यपरपर्यायव्यामोहननिरयहेय(तु)भूतपुण्यशब्दाभिलप्यपापविषयत्वमपि सर्वस्मादित्यनेन विवक्षितम् ॥ १ ॥

उपायान्तरेभ्योऽस्योपायस्यातिशयं दर्शयति– राजविद्येति । राजशब्दस्यात्र क्षत्रियविषयत्वे विशेषविधिः शेषनिषेधं गमयतीति

राजविद्या विद्यानां राजा राजगुह्यं गुह्यानां राजा राज्ञां विद्येति वा राजविद्या । राजानो हि विस्तीर्णागाधमनसः, महामनसामियं विद्ये-त्यर्थः । महामनस एव गोपनीयगोपनकुशला इति तेषामेव गुह्यमिदमुत्तमं पवित्रं मत्प्राप्तिविरोध्यशेषकल्मषापहं प्रत्यक्षावगममवगम्यत इत्यवगमो विषयः प्रत्यक्षभूतोऽवगमो विषयो यस्य ज्ञानस्य तत्प्रत्यक्षावगमं भक्तिरूपेणोपासनेनोपास्यमानोऽहं तदानीमेवोपासितुः प्रत्यक्षतामुपगतो भवामीत्यर्थः । अथापि धर्म्यं धर्मादनपेतम् । धर्मत्वं हि निःश्रे-

---

न्यायेन ब्राह्मणादेरनधिकारप्रसङ्गाद्राज्ञां विद्येति विग्रहनामा-(मना)हत्याऽऽह—विद्यानां राजगुह्यानां राजेति । समानाधिकरणसमासफलमनुरुध्येदमुक्तम् । शब्दार्थस्तु राजभूता विद्येति । राजदन्तादिषु वा पाठो द्रष्टव्यः । पवित्रमिदमुत्तममित्युत्तमशब्दसमानन्यायतया राजशब्दोऽत्र श्रेष्ठवाची । एवं प्रसिद्धार्थक्लेशं सहमान आह—राज्ञां विद्येति । ब्राह्मणादेरधिकारनिषेधपरत्वशङ्कापरिहारायोपचारनिमित्तं गुणं दर्शयति—राजानो हीति । फलितमाह—महामनसामिति । अजहल्लक्षणा वा गौणी वा वृत्तिरिह विवक्षिता । अन्यैर्ज्ञातुमशक्यत्वादिति भावः । राजगुह्यमित्यस्यापि सप्रयोजनत्वायौपचारिकार्थं दर्शयति—महामनस एव हीति । उपायविरोधिनिवर्तककतिपयनिवर्तकव्यवच्छेदार्थमुत्तमशब्दविशेषितपवित्रशब्दविवक्षितमाह—मत्प्राप्तीति । प्रत्यक्षावगममित्यत्र प्रत्यक्षरूपज्ञानपरत्वेन नपुंसकत्वायोगाज्ज्ञानस्यैव विशेष्यज्ञानमेव विशेषणीकृत्य बहुव्रीह्ययोगाच्च कर्मणि व्युत्पत्त्या बहुव्रीहित्वं घटयति—अवगम्यत इत्यादिना । नन्विदमयुक्तमुपासनस्य स्मृतिसंततिरूपत्वात्, उपास्यस्य चाप्रत्यक्षत्वश्रुतेः । प्रत्यक्षस्य तु विषयान्तरस्य भक्तावनन्वयादित्यत्राऽऽह भक्तिरूपेणेति । भक्त्या त्वनन्यया शक्य इत्यादिकमिह भाव्यम् । तदानीमेवेत्यासक्तिदशा-दु(द्यु)क्तम् । स्वयं फलभूतानां हि फलान्तरसाधनत्वरूपं धर्मत्वं दुर्लभमित्यभिप्रायेणाऽऽह—अथापि धर्म्यमिति । 'धर्मपथ्यर्थन्यायादनपेते' [ पा० सू० ४ । ४ । ९२ ] इतिसूत्रानुसारेण धर्म्यशब्दं निर्वक्ति—धर्मादिति । अभिमतं विवृणोति—धर्मत्वं हीत्यादिना । प्रीतिपर्यायधृतिवाचके धातौ करणाविवक्षया

यससाधनत्वम् । स्वरूपेणैवात्यर्थप्रियत्वेन तदानीमेव मद्दर्शनापादनेन तया च स्वयं निःश्रेयसरूपमपि निरतिशयनिःश्रेयसरूपात्यान्तिकमत्प्राप्तिसाधनमित्यर्थः । अत एव सुसुखं कर्तुं सुसुखोपादानमत्यर्थप्रियत्वेनोपादेयम् । अव्ययमक्षरं मत्प्राप्तिं साधयित्वाऽपि स्वयं न क्षीयते । एवंरूपमुपासनं कुर्वतो मत्प्रदाने कृतेऽपि न किंचित्कृतं मयाऽस्येति मे प्रतिभातीत्यर्थः ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

अस्योपासनाख्यस्य धर्मस्य निरतिशयप्रियमद्विषयतया स्वयं

---

व्युत्पन्नो ह्ययं धर्मशब्द इति भावः । उक्तं चाभियुक्तैः—

धर्म इत्युपसंहार्यं यच्छ्रेयस्करभाषणम् ।
तद्धर्मपदवाच्यार्थनिरूपणविवक्षया ' ॥

इत्यादि । श्रेयसोऽत्रावच्छेदकाभावात्, मुक्तिः कैवल्यनिर्वाणश्रेयो निःश्रेयसामृतमिति नैघण्टुकपाठाच्च—निरतिशयेत्यादिकमुक्तम् । अत एवेति । स्वरूपतः साध्यतश्च पुरुषार्थरूपत्वादित्यर्थः । कर्तुं सुसुखं करणे सुसुखमित्यर्थः । सुसुखस्य तुमुन्क्रियाकर्मीभावभ्रमव्युदासायाऽऽह—सुसुखोपादानमिति । उपसर्गसुखशब्दयोरत्राभिप्रेतमाह—अत्यर्थेति । स्वरूपतो विषयतश्चात्यर्थानुकूलत्वात्सुखेनानुष्ठेयमित्यर्थः । फलविनाश्यं हि सर्वमन्यत्कर्म । इदं तु सुखकरमपि फली(ले)नापि न क्षीयते । अपवर्गरूपं फलमप्येतस्य नालमित्यतिशयपरोऽव्ययशब्द इत्यभिप्रायेणाऽऽह—अक्षयमिति । तद्विवृणोति—मत्प्राप्तिमिति । तर्हि किमन्यदधिकं साध्यमिति शङ्कनयाभिप्रेतमाह—एवंरूपमिति ॥ २ ॥

उक्तप्रकारश्रद्धेयज्ञानानुष्ठानाभावे मोक्षो न सिध्यतीति दर्शयन् स्वरूपतः फलतश्च निरतिशयसुखरूपस्य सर्वैरनुष्ठानाभावे हेतुं च नदन्यः पन्था अयनायेत्यादिकमुपबृंहयति अश्रद्दधाना इति श्लोकेन । अस्येति पूर्वोक्तसर्वाकारामर्श इत्याह—निरतिशयेत्यादिना । धर्मस्येति संबन्धसामान्यविषयेयं षष्ठी । फलिता-

निरतिशयप्रियरूपस्य परमनिःश्रेयसस्वरूपमत्प्राप्तिसाधनस्यास्य धर्मस्योपादानयोग्यदशां प्राप्याश्रद्दधाना विश्वासपूर्वकश्रद्धारहिताः पुरुषा मामप्राप्य मृत्युरूपे संसारवर्त्मनि नितरां वर्तन्ते । अहो महदिदमाश्चर्यमित्यर्थः ॥ ३ ॥

शृणु तावत्प्राप्यभूतस्य ममाचिन्त्यमहिमानम्—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥

मयेति । इदं चेतनाचेतनात्मकं कृत्स्नं जगदव्यक्तमूर्तिनाऽप्रकाशित-

---

न्वयप्रदर्शनायाऽऽह—उपादानयोग्यदशां प्राप्येति । यद्वा श्रद्धानिषेधस्तत्प्रसङ्गे सति हीत्यभिप्रायः । करणनिवृत्तेः कार्यानुष्ठाननिवृत्तिपर्यन्तत्वप्रदर्शनायोक्तम्—विश्वासपूर्वकश्रद्धारहिता इति । मृत्युरूप इति । भाव(व)स्वरूप इत्यर्थः । अथवा मरणगर्भत्वादेव मृत्युरूपता । निवर्तन्त इत्यत्र प्रतिनिवृत्तिविवक्षायामवधिसाकाङ्क्षत्वादत्र च तन्निर्देशाभावात् कर्म [अ]प्राप्येति प्राङ्निर्दिष्टत्वेन परमपुरुषस्याप्यवधित्वकल्पनायोगात् संसारवर्त्मनीति सप्तम्या स्वरसत आधेयसाकाङ्क्षत्वादुपसर्गाणां चानेकार्थत्वान्नितरां वर्तन्त इत्युक्तम् । स्वरूपतः फलतश्च निरतिशयपुरुषार्थोपासनं ज्ञात्वा विपरित्यज्य पुरुषाः पुरुषार्थतारतम्यविदोऽपि निरतिशयापुरुषार्थमयं संसारमादरेण सेवन्त इति विस्मयाविष्टस्येश्वरस्येदं वचनमित्यभिप्रायेणाऽऽह—अहो इति । आश्चर्यतमो दुष्कर्मप्रभाव इत्यभिप्रायः । महदिदमाश्चर्यमिति । अश्रद्धाहेतव आन्तरशत्रवोऽपि त्वया निराकार्या इति परंतपेति संबुद्धेर्भावः ॥ ३ ॥

एवमध्यायप्रधानार्थस्य प्रापकस्य माहात्म्यमुक्तम् । अथ प्राप्यमाहात्म्यद्वाराऽपि तदेव स्थिरी क्रियत इत्यभिप्रायेणाऽऽह—शृणु तावदिति । इदं सर्वमिति निर्देशः प्रमाणसिद्धसमस्तवस्तुपर इत्यभिप्रायेण—इदं चेतनाचेतनात्मकमित्युक्तम् । अव्यक्तमूर्तिनेत्यस्य विग्रहविषयत्वेऽत्रानुपयोगात्स्वरूपविषयोऽयमौपचारिकः प्रयोग इति दर्शयितुम्—अप्रकाशितस्वरूपेणेत्युक्तम् । आकाशादिवत्संनिधि-

स्वरूपेण मयाऽन्तर्यामिणा ततम् । अस्य जगतो धारणार्थं नियमनार्थं च शेषित्वेन व्याप्तमित्यर्थः । यथाऽन्तर्यामिब्राह्मणे—'यः पृथिव्यां तिष्ठन् यं पृथिवी न वेद य आत्मनि तिष्ठन् यमात्मा न वेद' (बृ० ३ । ७ । २२ ) इति चेतनाचेतनवस्तुजातैरदृष्टेनान्तर्यामिणा तत्र तत्र व्याप्तिरुक्ता ततो मत्स्थानि सर्वभूतानि सर्वाणि भूतानि मयि अन्तर्यामिणि स्थितानि । तत्रैव ब्राह्मणे—'यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति' ( बृ० ३ । ७ । २२ ) इति शरीरत्वेन नियम्यत्वप्रतिपादनात्तदायत्ते स्थितिनियमने प्रतिपादिते इति शेषित्वं च । न चाहं तेष्ववस्थितः, अहं तु न तदायत्तस्थितिः । मत्स्थितौ तैर्न कश्चिदुपकार इत्यर्थः ॥ ४ ॥

---

मात्ररूपव्याप्तिव्युदासाय बहुप्रमाणसिद्धो व्याप्तिप्रकारो मयेत्यनेनाभिप्रेत इत्याह—अन्तर्यामिणेति । उक्तप्रकाराया व्याप्तेः प्रयोजनं तन्निदानं च दर्शयति—अस्येति । अत्र धारणमनन्तरग्रन्थसिद्धम् । अत एव नियमनमप्यर्थसिद्धम् । धारणं हि प्रशासनाधीनं श्रूयते । शेषित्वं तु प्रागुक्तं शरीरत्वेनार्थसिद्धं च । अप्रकाशितस्वरूपत्वे नियमनकल्पने च सर्वप्राप्तिं श्रुतौ दर्शयति—यथेति । पृथिव्युदाहरणं तत्प्रकरणोक्तसर्वाचेतनोपलक्षणार्थम् । उक्तप्रकारव्यापकत्ववशात् । मत्स्थानीत्यनेन जगतः पृथक्सिद्धता निरस्यत इत्यभिप्रायेणाऽऽह—तत इति । श्रीविश्वरूपादिषु विग्रहाश्रुतत्वमपि सर्वस्योच्यते । अत्र स्वरूपनिष्ठतेत्यपौनरुक्त्याय स्थ्यन्तर्यामिणीत्युक्तम् । अनयोर्धारणनियमनयोरपि व्याप्त्या सहाधीततामाह—तत्रैवेति । स्थितिनियमने स्थितिप्रवृत्ती इत्यर्थः । शरीरशरीरित्ववचनात् । धृतिशेषित्वं च तत्रार्थसिद्धमित्यभिप्रायेणाऽऽह—शेषित्वं चेति । मया ततमिदं सर्वमित्यभिधायैव न चाहं तेष्ववस्थित इति वचनं व्याहतं यः पृथिव्यां तिष्ठन्नित्यादिश्रुतिविरुद्धं चेत्याह—अहं त्विति। मत्संस्थानि भूतानीति प्रस्तुतप्रकारा स्थितिरत्र निषिध्यते । स भगवः कस्मिन्प्रतिष्ठित इत्यत्र स्वे महिम्नि यदि वा न महिम्नीति श्रूयत इति भावः । उक्तं विवृणोति—मत्स्थिताविति । न कश्चिदिति । स्वरूपतः संकल्पादृष्टादिना वेति भावः ॥ ४ ॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः ॥ ५ ॥

न च मत्स्थानि भूतानि । न घटादीनां जलादेरिव मम धारकत्वम् । कथम्—मत्संकल्पेन । पश्य ममैश्वरं योगमन्यत्र कुत्रचिदसंभवनीयं मदसाधारणमाश्चर्यं योगं पश्य । कोऽसौ योगो भूतभृन्न च भूतस्थो ममाऽऽत्मा भूतभावनः सर्वेषां भूतानां भर्ताऽहं न च तैः कश्चिदपि ममोपकारः । ममाऽऽत्मैव भूतभावनो मम मनोमयः संकल्प एव भूतानां

---

मत्स्थानि न च मत्स्थानीत्येतद्व्याहतमित्यत्राऽऽह—न घटादीनामिति । मूर्तं हि मूर्तान्तरं पतनप्रतिघातिना संयोगेन धारयति न तथाऽत्रेति भावः । लोकदृष्टविपरीतं न संभवतीत्यभिप्रायेण शङ्कते—कथमिति । शरीरशरीरिणोरिव संभवमभिप्रेत्याऽऽह—मत्संकल्पेनेति । स्वेच्छाधीनधारकत्वं हि विहितमस्वतन्त्रतया धारकत्वं तु निषिध्यत इत्यविरोध इति भावः । ऐश्वरमित्यनेनानन्यसाधारणत्वं फलितं पश्येत्यनेन चाऽऽश्चर्यता द्योतितेत्यभिप्रायेणाऽऽह—अन्यत्रेति । योगः संनहनोपायध्यानसंगतियुक्तिष्विति पाठात्संकल्परूपध्यानमिह योगः । युज्यमानस्वभावादिर्वा । पश्य मे योगमित्युक्ते योगस्वरूपमेवानन्तरं वक्तव्यमिति तदाकाङ्क्षां दर्शयति—कोऽसाविति । भूतभृन्न च भूतस्थ इत्यर्थावित्यादहमित्येव विशेष्यमथवा भूतभावन इतिवन्ममाऽऽत्मेति निर्दिष्टसंकल्पविशेषणत्वे फलितकथनम्—सर्वेषां भूतानां भर्ताऽहमित्यादि । आत्मेति विशेषनिर्देशः परिसंख्यया तद्व्यतिरिक्तसहकारिव्यवच्छेदार्थ इत्यभिप्रायेणाऽऽह—ममाऽऽत्मैवेति । ममाऽऽत्मेति व्यधिकरणनिर्देशस्वारस्यासिद्धमात्मशब्दार्थमाह—मम मनोमयः संकल्प इति । एतेन देहादिसंघातेऽहंकारमध्यारोप्य लोकबुद्ध्यनुसारेण ममाऽऽत्मेति व्यपदेश इति शंकरोक्तं प्रत्युक्तम् । संकल्प एव मनःकार्यतयाऽन्यत्र सिद्धो मनःप्रतिपादकेनाऽऽत्मशब्देनान्यत्र व्यपदिष्टः । यद्वा—आत्मशब्दोऽत्र संकल्परूपमनःपर एव । मनसैव जगत्सृष्टिमनो(नः) कुरु तस्यामितीत्यादेस्तदर्थताज्ञापनाय तु मनोमयशब्दः । धारणनियमनयोरेव प्रकृत-

भावयिता धारयिता नियन्ता च ॥ ५ ॥

सर्वस्यास्य स्वसंकल्पायत्तस्थितिप्रवृत्तित्वे निदर्शनमाह—

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

यथाऽऽकाशेऽनालम्बने महान्वायुः स्थितः सर्वत्र गच्छति स तु वायुर्निरालम्बनो मदायत्तस्थितिरित्यवश्याभ्युपगमनीयो मयैव धृत इति विज्ञायते । तथैव सर्वाणि भूतानि तैरसंसृष्टे मयि स्थितानि मयैव धृतानीत्युपधारय । यथाऽऽहुर्वेदविदः—

मेघोदयः सागरसंनिवृत्तिरिन्दोर्विभागः स्फुरितानि वायोः ।
विद्युद्विभंगा गतिरुष्णरश्मेर्विष्णोर्विचित्राः प्रभवन्ति मायाः ॥

---

त्वादनन्तरश्लोके च निर्दिश्यमानत्वात्सृष्टेश्च ततोऽप्यनन्तरं वक्ष्यमाणत्वादत्र भूतभावन इत्येतत्सत्तादधीन्यानियमनाद्युपलक्षणमित्यभिप्रायेणाऽऽह—धारयिता नियन्ता चेति । अथवा भूतभृन्न च भूतस्थ इत्यस्यैवायमर्थः ॥ ५ ॥

यथाऽऽकाशस्थित इति श्लोके स्वस्मिन्सर्वभूतस्थितेराकाशे वायुस्थितिर्दृष्टान्त इति केचिदाहुः । तदयुक्तम् । आकाशस्य वाय्वपेक्षया नियमनधारणयोरभावात्तथाविधस्थितेरिह प्रकृतत्वेन तन्निदर्शनार्थत्वस्यैवौचित्याच्चेत्यभिप्रायेणाऽऽह—सर्वस्येति । आकाशस्थितः सर्वत्रग इत्याभ्यामीश्वरैकधार्यत्वं तदेकप्रेर्यत्वं च विवक्षितमित्यभिप्रायेणाऽऽह—यथाऽऽकाशेऽनालम्बन इति । महत्त्वं चान्याशक्यत्वायोक्तम् । अभिमतं निदर्शनप्रकारं विशदयति—स त्विति । यथा निरालम्बने विहायसि विहंगमशरीरादेश्चेतनविशेषाधिष्ठेयत्वमेवमेव वाय्वादेरपीति भावः । तैरदृष्ट इत्यनेनानुपलम्भबाधानिरासाय पूर्वोक्तश्रुत्यादिसिद्धायोगत्वप्रदर्शनम् । ईश्वरानुमानमनभ्युपगच्छतां कथमिदं निदर्शनमित्यत्राऽऽह—यथाऽऽहुर्वेदविद इति । आगममूलसंभावनात्तत्परमिति भावः । वेदविद इत्यनेनाधीयमानवेदोपबृंहणरूपता द्योतिता । अस्मदाद्यगोचरोपादानोपकरणसंप्रदानादीनां तत्क्षणादेव सकलदिङ्मुखव्यापिनां धाराधराणामुत्पत्तिः । सकलभुवनाप्लावनलम्पटस्यैव जलनिधेरम्बरलम्बिनां तरङ्गाणां

---

१ ख. ग. घ. ङ. °रिति मये° ।

इति। विष्णोरनन्यसाधारणानि[1] महाश्चर्याणीत्यर्थः। श्रुतिरपि–' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' ( बृ० ३। ८। ९ )। ' भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः ' ( तै० आन० ८। १ ) इत्यादिका ॥ ६ ॥

सकलेतरनिरपेक्षस्य भगवतः संकल्पात्सर्वेषां स्थितिः प्रवृत्तिश्चोक्ता। तथा तत्संकल्पादेव सर्वेषामुत्पत्तिप्रलयावपीत्याह—

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

स्थावरजङ्गमात्मकानि सर्वाणि भूतानि मामिकां मच्छरीरभूतां प्रकृतिं तमःशब्दवाच्यां नामरूपविभागानर्हां कल्पक्षये चतुर्मुखावसानसमये

---

वेले निवृत्तिः, प्रतिनियतकलावृद्धिक्षयशृङ्गोन्नमनादिरूपश्चन्द्रमसो विभागः, अशङ्कितागमानामनियततद्विशेषाणां तृणगिरितरुषण्डलुण्टाकानां चण्डमारुतादीनां विस्फूर्तयः प्रशान्तदहनमिहिरहिमकरे प्रावृषि निशीथेऽप्यविदितपूर्वोत्तरदक्षिणानां क्षणरुचीनां विभागो निरालम्बने विहायसि महीयसो मिहिरमण्डलस्य प्रतिनियतदिनरजनिमासायनसंवत्सरादिदेशिकसंचार एवंविधान्यन्यानि च परिशे-(वे)षोपरागेन्द्रचापकरकास्तनिताशनिभूकम्पभूपञ्जरभ्रमणादयोऽत्यद्भुतप्रकाराः सर्वे सर्वव्यापिनः सर्वशक्तेर्विष्णोरेव चित्रसृष्टिशक्तिमूला भवितुमर्हन्तीति श्लोकार्थः। मायाशब्दस्य मिथ्यार्थत्वानिरसनायाऽऽह—विष्णोरिति। संबन्धसामान्यस्य नियाम्यत्वधार्यत्वादिविशेषपर्यवसानाय यथाऽऽहुर्वेदविद इत्यनेनाभिप्रेतं विवृणोति—श्रुतिरपीति। प्रशासनमत्र संकल्पः। भीषेति। भयादित्यर्थः ॥ ६ ॥

प्रस्तुतसृष्टिप्रलयाभिधानस्य संगतिमाह—सकलेति। प्रवृत्तिश्चेत्यर्थसिद्धा। मामिकामित्यनेन शेषित्वं सिद्धम्। तच्च शरीरतयेत्यत्रावगतम्। यस्य तमः शरीरमित्यतो मच्छरीरभूतामित्युक्तम्। सर्वभूतशब्देन समस्तकार्यावस्थासंग्रहात्तमःशब्दवाच्यामित्युक्तम्। तमः परदेव एकी भवतीत्युक्तप्रदर्शनं नामरूपविभागानर्हामिति। सर्वभूतशब्दात्प्रकृतिं यान्तीतिवचनाच्च प्राकृतप्रलय एवात्र विवक्षित इत्याह—चतुर्मुखावसानसमय इति। कल्पक्षयान्तिमब्रह्मदिवसाव-

---

[1] ख. ग. ङ. °नि सवश्चर्या°।

मत्संकल्पाद्यान्ति। तान्येव भूतानि कल्पादौ पुनर्विसृजाम्यहम्। यथाऽऽह मनुः—'आसीदिदं तमोभूतम्' (मनु० १। ५) "सोऽभिध्याय शरीरात्स्वात' (मनु० १।८) इति। श्रुतिरपि— 'यस्याव्यक्तं शरीरम्' इत्यादि। अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते तमः परदेव एकी भवति। तम आसीत्तमसा गूढमग्रे प्रकेतम्' (यजु० २।८ ९) इति च ॥ ७ ॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

---

सानं इत्यर्थः। कल्पानां क्षय इति वा विवक्षितम्। ब्रह्मायुःपरो वाऽत्र कल्पशब्दः। संहर्ता च स्वयं प्रभुः। मनसैव जगत्सृष्टिं संहारं च करोति यः। इत्याद्युक्तेरत्रैव पुनस्तान्विसृजामीति वचनाच्च मदीयां प्रकृतिं यापयामीत्यभिप्रायः। तदाह–मत्संकल्पाद्यान्तीति। तानि तत्सजातीयानीत्यर्थः। तदभिप्रायेण तान्येवेत्युक्तम्। यथर्तुषु तु लिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येवेतिवत्। यथा कुन्तीशरीरात्तवोत्पत्तिस्त्वयाऽप्यनुपलब्धाऽप्याप्तवाक्याद्दृढप्रतिपन्ना तथा मच्छरीरात्प्रपञ्चस्योत्पत्तिं ममैव वाक्यादभ्युपगच्छेति कौन्तेयेत्यस्य भावः। मच्छरीरभूतां तमःशब्दवाच्यामिति स्वोक्तमर्थं प्रेषजायमानयत्किंचनोक्तेन मनोर्वचनेन संवादयति—यथाऽऽहेति। आसीदिदमित्यादिकायां सप्तश्लोक्यां नारायणस्यैव परमकारणत्वं ब्रह्मादेरशेषस्य तत्स्रष्टृत्वं च सुव्यक्तमुक्तमनुसंधेयम्। कारणावस्थाचिद्द्रव्यस्य परमात्मशरीरतयाऽत्यन्तभिन्नत्वे तमःशब्दवाच्यत्वादौ च मनोरुपबृंहणीयां श्रुतिं दर्शयति—श्रुतिरपीति ॥ ७ ॥

विसृजामीत्युक्तायाः समष्टिव्यष्टिरूपायाः सृष्टेः [ प्रकारः ] प्रदर्श्यते प्रकृतिं स्वामिति श्लोकेन। विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्। ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती सा जनित्री भूतभाविनीत्यादिश्रुत्यनुसारेणास्य श्लोकस्यार्थमाह—

स्वकीयां विचित्रपरिणामिनीं प्रकृतिमवष्टभ्याष्टधा परिणमय्येमं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं भूतग्रामं मदीयाया मोहिन्या गुणमय्याः प्रकृतेर्वशादवशं पुनः पुनः काले काले विसृजामि ॥ ८ ॥

एवं तर्हि विषमसृष्ट्यादीनि कर्माणि नैर्घृण्याद्यापादनेन भगवन्तं बध्नन्तीत्यत्राऽऽह—

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

---

स्वकीयामित्यादि । उपादानद्रव्यस्य कर्त्रा(त्रा ऽ)वष्टम्भो ह्यधिष्ठानम् । तच्चाभिमतकार्यविशेषानुगुणमध्यमावस्थाप्रापणमेवेत्यभिप्रायेणोक्तमष्टधा परिणमय्येति । भूमिराप इत्यादिना प्रागुक्तमष्टविधत्वम् । एवमर्थसिद्धसमष्टिसृष्टिप्रकार उक्तः । भूतग्रामशब्दोऽत्र देवत्वादिजात्यवच्छिन्नव्यष्टिजीवस्तोमपरः । अचेतनपरत्वे प्रकृतेर्वशादवशमित्यनन्वयात् । चतुर्विधस्य सावान्तरभेदस्य संग्रहार्थः कृत्स्नशब्दः । एवंविधकार्यत्वे प्रकृतिपरवशत्वे च योग्यताप्रदर्शनार्थमिमामिति निर्देश इत्यभिप्रायेणोक्तमिमं चतुर्विधमित्यादि । चातुर्विध्यमेव विवृणोति—देवेति । प्रकृतेर्वशादित्यनेनाभिप्रेतः प्रकृतिं मोहिनीं श्रिता इत्यत्र कण्ठोक्तो वशत्वहेतुर्मोहिन्या इत्युक्तम् । तत्रापि हेतुर्गुणमयत्वं त्रिभिर्गुणमयैरित्यादिनोक्तम् । पुनः पुनरित्यनेन तदुत्पत्तिप्रलयोचिताद्विपरार्धसहस्रयुगादिप्रतिनियतानाद्युक्तप्रवाहकालावच्छेदकविशेषो विवक्षित इत्यभिप्रायेणाऽऽह—काले काल इति । विसृजामि विचित्रनामरूपदेशकालभोगादियुक्तं करोमीत्यर्थः ॥ ८ ॥

न च मां तानि कर्माणीत्येतन्न पुण्यपापरूपकर्मविषयं तस्याप्रस्तुतत्वेन तानीति परामर्शायोगात् सृष्टिसंहारादेश्च प्रसक्तत्वात्तत्परामर्श एवोचितः, तस्य दोषरूपत्वं सृज्यदेवादिवैषम्यादिना द्योतितमिति तन्निरासार्थोऽयं श्लोक इत्यभिप्रायेणाऽऽह—एवं तर्हीति । सृष्ट्यादीनीत्यादिशब्देन स्थितिसंहारनिग्रहानुग्रहादिसंग्रहः । नैर्घृण्यादीत्यादिशब्देन पक्षपातत्वाव्यवस्थितत्वादि

न च तानि विषमसृष्ट्यादीनि कर्माणि मां निबध्नन्ति मयि नैर्घृण्यादिकं नाऽऽपादयन्ति। यतः क्षेत्रज्ञानां पूर्वकृतान्येव कर्माणि देवादिविषमभावहेतवः। अहं तु तत्र वैषम्येऽसक्तस्तत्रोदासीनवदासीनः। यथाऽऽह—'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र० सू० २।१।३४) 'न कर्माविभागादिति चेन्नानादित्वात्' (ब्र० सू० २।१।३५) इति ॥९॥

---

संगृह्यते। निबध्नन्तीति संसाररूपो बन्ध उच्यते। जगत्सृष्ट्यादेः संसारहेतुत्वाश्रयणात् परोक्तधर्माधर्मसंबन्धशङ्कामसङ्गाभावाद्दौर्जन्ये सत्यपीश्वरस्य नियामकाभावादतो नैर्घृण्यादिरूपदोषानुबन्ध एवात्राऽऽशङ्कितः प्रतिषिध्यत इत्याह—मयीति। चः शङ्कानिवृत्त्यर्थः। सृष्टिवैषम्ये प्रयोजकमभिप्रेतमाह—यत इति। स्वशक्त्या वस्तु वस्तुताम्, कर्मभिर्भाविताः पूर्वैः।

आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितसंसारवशवर्तिनः॥
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा॥
संसारतापानखिलानवाप्नोत्यतिसंततान्॥
तया तिरोहितत्वाच्च शक्तिः सा क्षेत्रसंज्ञिता।
सर्वभूतेषु भूपाल तारतम्येन वर्तते॥

इत्यादिभिः सिद्धोऽयमर्थः। तेषु कर्मस्वसक्त इत्युक्ते सत्यकर्तृत्वादिभ्रमः स्यादिति तन्निरासायोक्तम्—तत्र वैषम्य इति। असक्तः प्रयोजकत्वरूपसंबन्धरहित इत्यर्थः। असक्तत्वे दृष्टान्त उच्यते—उदासीनवदासीन इति। यथा कस्मिंश्चित्कर्मणि उदासीनस्तत्र प्रयोजकत्वरूपसंबन्धरहितस्तथा कर्ताऽपि असौ तस्मिन्नंशे। यद्वा उदासीनवदुदासीनमित्यर्थः। तेन कर्मानुष्ठानदशायामीश्वरस्य वैषम्योदासीनत्वमेवोच्यते। विषमसृष्टेः कर्मसापेक्षत्वे जीवानां तत्कर्मप्रवाहाणां चानादितया प्रलयकालेऽपि सद्भावे सूत्रद्वयं दर्शयति—वैषम्येत्यादि॥ ९॥

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥

तस्मात् क्षेत्रज्ञकर्मानुगुणं मदीया प्रकृतिः सत्यसंकल्पेन मयाऽध्यक्षेणेक्षिता सचराचरं जगत्सूयते । अनेन क्षेत्रज्ञकर्मानुगुणमदीक्षणेन हेतुना जगद्विपरिवर्तत इति मत्स्वाम्यं सत्यसंकल्पत्वं नैर्घृण्यादिदोषरहितत्वमित्येवमादिकं मम वसुदेवसूनोरैश्वरं योगं पश्य ।

---

यदि कर्मानुगुणा विषमसृष्टिस्तर्हि प्रकृतिरेव परिणामशीला तदनुगुणं परिणमतां किं त्वयेत्यत्रोच्यते—मयाऽध्यक्षेणेति । सर्वभूतानीत्युपक्रान्तस्वसंकल्पाधीनसृष्टिप्रलयोपसंहारताद्योतनायाऽऽह—तस्मादिति । मयाऽध्यक्षेणेतिपदद्वयाभिमेतं श्रौतमर्थमाह—सत्यसंकल्पेनेक्षितेति । 'कर्माध्यक्षः सर्वभूताधिवासः' [ श्वे० ६ । ११ ] 'योऽस्याध्यक्षः' 'ध्यायतेऽध्यासिता तेन' [ चू० १ । ४ ] इत्यादिकमत्र भाव्यम् । अधिकमश्रुत इति अध्यक्ष इति केचित् । जगच्छब्दस्तत्राप्यन्वेतव्यः । पूर्वार्धगतसचराचरशब्द उत्तरत्रापीत्यभिप्रायेण सचराचरं जगदित्युक्तम् । सूयत इत्यादिना सूयते पुरुषार्थं चेत्यादिश्रुतिः स्मारिता । पूर्वार्धे सृष्टिहेतुतयोक्तमेवोत्तरत्रापि संहारहेतुतयाऽनेन हेतुनेति परामर्शार्हं पुनः प्रधानतया स्थिताऽपि सृष्टिः, तस्याः प्रलयादिकं प्रत्यहेतुत्वादित्यभिप्रायेणाऽऽह-अनेनेति । तेनाध्यक्षशब्दस्यात्राधिक्रियाया दृशिमात्रपरतां वदन्तः प्रत्युक्ताः । कर्मवशाज्जीवहेतुभूतं प्रपञ्चं प्रति कथं तव स्वाम्यं कथं च कारुणिकस्यापि कर्मपरतन्त्रतया दुःखमुत्पादयितुः सत्यसंकल्पतेत्यत्राऽऽह—मत्स्वाम्यमिति । पश्य मे योगमित्युपक्रान्तनिर्वहणरूपताप्रदर्शनाय मयेत्यादिकम् । अवजानन्ति मामित्यनन्तरश्लोकस्थास्मच्छब्दानुसंधानवशान्म इत्येतन्निरतिशयसौलभ्यसंछादितेश्वरभावमवतारमभिप्रैतीति वसुदेवसूनोरित्युक्तम् । एतेन मनुष्यत्वे परत्वं चेति संग्रहश्लोकोऽनुसंहितः । युज्यत इति व्युत्पत्त्या स्वाम्यादेरत्र योगशब्दार्थतोक्ता । प्रकृतेरीश्वराधीनपरिणामत्वे जीवानां कर्मानुगुणप्रकृतिवशत्वे च

यथाऽऽह श्रुतिः—'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' ( श्वे० ४।९ ) 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' ( श्वे० ४ १० ) इति ॥ १० ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

एवं मां भूतमहेश्वरं सर्वज्ञं सत्यसंकल्पं निखिलजगदेककारणं परमकारुणिकतया सर्वसमाश्रयणीयत्वाय मानुषीं तनुमाश्रितं स्वकृतैः पापकर्मभिर्मूढा अवजानन्ति प्राकृतमनुष्यसमं मन्यन्ते । भूतमहेश्वरस्य ममापारकारुण्यौदार्यसौशील्यवात्सल्यादिनिबन्धनं मनुष्यत्वसमाश्रयणलक्षणमिमं परं भावमजानन्तो मनुष्यत्वसमाश्रयणमात्रेण मामितरसजातीयं मत्वा तिरस्कुर्वन्तीत्यर्थः ॥ ११ ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

---

श्रुतिमुदाहरति—यथाऽऽहेति ॥ १० ॥

महात्मना विशेषं वक्तुं मूढानां स्वभाव उच्यतेऽवजानन्तीति श्लोकद्वयेन । प्रकृतसंगत्यर्थं एवंशब्दः । भूतमहेश्वरमित्यस्य भावविशेषणत्वायोगाद्व्यवहितेनापि मामित्यनेनान्वयः । भूतमहेश्वरशब्देनाभिप्रेतदर्शनं सर्वज्ञमित्यादि । मानुषीं मनुष्यसंबन्धिनीं मनुष्यजातीयसंनिवेशवतीमित्यर्थः । यथा हिरण्मयमृन्मयघटयोर्द्रव्यवैजात्येऽपि संस्थानसाम्यं तद्वदत्रापि । इदं च मत्स्यादितन्वाश्रयणस्याप्युपलक्षणम् । मौढ्यस्यापीश्वराधीनत्वेन तद्दोषव्युदासाय—स्वकृतैः पापकर्मभिरित्युक्तम् । अवज्ञाकारणं दर्शयति—प्राकृतेति । परं भावमजानन्त इत्यनेन भ्रमहेतोर्भेदाग्रहस्य कथनं मानुषीं श्रितमिति तु सादृश्यस्य, ताभ्यां प्राकृतमनुष्यसजातीयभ्रमः । ततश्च यथाकथंचित्प्रतीयमानोत्कर्षापह्नवेन निकर्षापादनरूपावज्ञा। तदेतदखिलं विशदयति—भूतमहेश्वरस्येति । मनुष्यत्वसमाश्रयणलक्षणाजहत्स्वभावस्यानितरसाधारणमेवंविधमनुष्यत्वाश्रयणमपि वस्तुतः परत्वानुप्रविष्टमिति भावः ॥ ११ ॥

मोघाशा इति श्लोकेन प्रस्तुतस्य हेतुफले प्रतिपाद्येते ।

मम मनुष्यत्वे परमकारुण्यादिपरत्वतिरोधानकरीं राक्षसीमासुरीं च मोहिनीं प्रकृतिमाश्रिता मोघाशा मोघवाञ्छिता निष्फलवाञ्छिता मोघकर्माणो मोघारम्भा मोघज्ञानाः सर्वेषु मदीयेषु चराचरेषु अर्थेषु मयि च विपरीतज्ञानतया निष्फलज्ञाना विचेतसः सर्वत्र विगतयाथात्म्यज्ञाना मां सर्वेश्वरमितरसमं मत्वा मयि यत्कर्तुमिच्छन्ति यदुद्दिश्याऽऽरम्भान्कुर्वते तत्सर्वं मोघं भवतीत्यर्थः ॥ १२ ॥

---

मोहिनीप्रकृत्याश्रयणं हि मोघाशत्वादौ हेतुरिति पूर्वोत्तरार्धव्याख्या। राक्षसीं रक्षःसंबन्धिनीं राजसीमासुरीं तामसीमसुरसंबन्धिनीं क्रोधलोभादिमयीमित्यर्थः। प्रकृतिं स्वभावमित्यर्थः।

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः।
भूतान्प्रेतगणांश्चान्ये यजन्ते तामसा जनाः॥
मन्ये त्वां राक्षसं क्रूरमथवा तामसात्मकम्।
तस्मात्क्षिपसि गोविन्दं पाण्डवं च धनंजयम्॥

इत्यादिष्विदं द्रष्टव्यम्। मोहिनीमित्यनेन भगवत्परत्वतिरोधानादिकमभिप्रेतम्। मोघाशा इति समासशब्दद्वयार्थकथनं मोघवाञ्छिता निष्फलवाञ्छिता इति फलपर्यन्तकर्मस्वरूपासिद्ध्यभिप्रायेण—मोघारम्भा इत्युक्तम्। उपक्रमप्रभृति निष्फलप्रवृत्तय इत्यर्थः। ज्ञानस्य मोघत्वं हि स्वाधीनप्रवृत्त्यभिमतफलराहित्यम्। तच्चायथार्थत्वनिबन्धनम्। तस्य चात्र विषयविशेषनिर्देशाभावाद्यथासंभवं सर्वविषयत्वमुचितमित्यभिप्रायेणाऽऽह—सर्वेष्विति। वैपरीत्यं चास्वतन्त्रे स्वतन्त्रत्वमन्यदीये स्वकीयत्वमजडे नित्ये जडत्वानित्यत्वादिकमस्थिरे स्थिरत्वमित्यादिकं द्रष्टव्यम्। मोघज्ञाना इति ज्ञानविशेषस्य विहितत्वात्तत एव तत्कारणस्य निषेद्धुमशक्यत्वाद्विचेतस इति निषेधस्तदतिरिक्तज्ञानपर इत्यभिप्रायेणाऽऽह—विगतयथार्थज्ञाना इति। ननु मोघाशत्वादिकमसिद्धं स्वर्गफलाद्यभिलषितसिद्धेस्तदुपायभूतयागादिषु यथार्थज्ञानाच्चेत्यत्राऽऽह—मामिति। अत्र यथार्थज्ञानाभावान्मोघज्ञानत्वं तत एव मोघाशत्वमोघारम्भत्वे इति क्रमः॥ १२॥

---

१ ख. ग. घ. ङ. 'त्वाऽप्रक्षयवन्तं कर्तुं'। २ ख. ग. क. यमुद्दि'।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

ये तु स्वकृतैः पुण्यसंचयैर्मां शरणमुपगम्य विध्वस्तसमस्तपापबन्धा दैवीं प्रकृतिमाश्रिता महात्मानस्ते भूतादिमव्ययं वाङ्मनसागोचरनामकर्मस्वरूपं परमकारुणिकतया साधुपरित्राणाय मनुष्यत्वेनावतीर्णं मां ज्ञात्वाऽनन्यमनसो मां भजन्ते मत्प्रियत्वातिरेकेण मद्भजनेन विना मनसश्चाऽऽत्मनश्च बाह्यकरणानां च धारणमलभमाना मद्भजनैकप्रयोजना भजन्ते ॥ १३ ॥

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

अत्यर्थं मत्प्रियत्वेन मत्कीर्तनयतननमस्कारैर्विना क्षणाणुमात्रेऽ-

---

एवमवज्ञाप्रवृत्तमूढभूयिष्ठलोके निष्फलस्तवावतार इति शङ्कामवतारसाफल्यकारिणां वृत्तकथनव्याजेन भक्तिं प्रसञ्जयति—महात्मानस्त्विति । महात्मशब्देन तुशब्देन च सिद्धं भजनौपयिकमतिशयं दर्शयन्नुद्देश्योपादेयांशं च विभजते—ये त्विति । जनाः सुकृतिनो मामेव ये प्रपद्यन्त इत्यादि प्रागुक्तं प्रतिसंधापयति—स्वकृतैः पुण्यसंचयैर्मां शरणमुपगम्येति । दैवीं सात्त्विकीम् । भूतादिमित्यनेन शक्योपादानपरत्वं विवक्षितमित्याह—वाङ्मनसेति । मामित्यनेनावतारपर्यवसितं सौलभ्यं सहेतुकमाह—परमकारुणिकतयेति । अवतारस्य दयादिमूलकत्वेन कर्ममूलत्वाभावाज्ज्ञानसंकोचाद्यभावोऽव्ययशब्देनोच्यते । अनन्यमनस्त्वं सहेतुकं विवृणोति—मत्प्रियत्वेति । अतोऽप्यधिकार्यन्तरव्यवच्छेदार्थत्वादनन्यप्रयोजनत्वविवक्षाऽत्रोचिता । पार्थशब्देनेन्द्रसूनुस्त्वमपि दैवप्रकृतिरिति सूचितम् ॥ १३ ॥

भजन्तीत्युपासनं प्रसक्तम् । अथ तदेव कीर्तनयतननमस्कारेषु प्रेरयिष्यत्याऽत्यर्थप्रियत्वलक्षणावस्थया विशेष्यते—सततमिति । कीर्तनादीनां त्रयाणां वाङ्मनःकायकर्मरूपतां तेषामेव प्रकरणान्तरेषु सिद्धं प्रकारं सततमित्यस्य कीर्तनयतननमस्कारनित्ययुक्तत्वोपासनेष्वविशेषेणान्वयमाह—अत्यर्थेति । अत्यर्थम्-

ष्यात्मधारणमलभमाना मद्गुणविशेषवाचीनि मन्नामानि स्मृत्वा पुलकितसर्वाङ्गा हर्षगद्गदकण्ठा नारायण कृष्ण वासुदेवेत्येवमादीनि सततं कीर्तयन्तस्तथैव यतन्ते मत्कर्मस्वर्चनादिकेषु वन्दनस्तवनकरणादिकेषु तदुपकारकेषु भवननन्दनवनकरणादिकेषु च दृढसंकल्पा यतमाना

त्प्रियत्वं भक्त्येत्यस्यार्थः । क्षणे महापृथिव्यादिवत्कल्पिते तस्य चरमावयवतया कल्पितोऽंशः क्षणाणुमात्रेऽपीत्युक्तः । स्वादुत्वातिशयसिद्ध्यर्थं मद्गुणविशेषवाचीनीत्युक्तम् । नामकीर्तनं चेष्टितादिकीर्तनस्योपलक्षणम् । गुणानुसंधानाभावे स्वरूपतः प्रीतिजननाय पुनर्मन्नामानीति व्यपदेशः । पुलकितसर्वाङ्गा इत्यादिकं तत्तत्प्रदेशोक्तशब्दोपादानम् । तथा तन्नामस्मरणोद्भूतपुलकाश्चेति । हर्षगद्गदकण्ठा इत्यनेन स्वरनेत्राङ्गविक्रियेत्यादिभक्तिलक्षणग्रन्थस्मारणम् । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः' इति कृष्णशब्दोऽपि पुरुषार्थहेतुत्वप्रतिपादनमुखेन परव्यूहादिसमस्तावस्थासाधारण इति ज्ञापनाय व्यापकयोर्मध्ये पठितः । अवतारान्तरेष्वपि कृष्णशब्दः प्रयुज्यते । 'उद्धृताऽसि वराहेण कृष्णेन शतबाहुना' इति । यद्वा—नारायणेति परत्वानुसंधानं कृष्ण वासुदेवेति तु अवतारविशेषपरतया सौलभ्यानुसंधानम् ।

यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ॥
नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः ।
कमलनयन वासुदेव विष्णो धराधराच्युत शङ्खचक्रपाणे ॥
एतावताऽलमघनिर्हरणाय पुंसाम् ।
संकीर्त्य नारायणशब्दमात्रम् ॥

इत्यादिषु सर्वत्र संकीर्तनप्रभावः प्रसिद्धः । रहसि जनसंनिधौ च व्रीडादिराहित्यमपि सततशब्देन व्यञ्जितम् । तथैव सततं भक्त्येत्यर्थः । मत्कर्मस्वित्यादि कर्मभक्तियोगसाधारण-

भक्तिभारावनमितमनोबुद्ध्यभिमानपदद्वयकरद्वयशिरोभिरष्टाङ्गैराचान्तितपांसुकर्दमशर्करादिके धरातले दण्डवत्प्रणिपतन्तः सततं मां नित्ययुक्ता नित्ययोगमाकाङ्क्षमाणा आत्मवन्तो महास्यव्यवसायिन उपासते ॥ १४ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

अन्येऽपि महात्मानः पूर्वोक्तैः कीर्तनादिभिर्ज्ञानाख्येन यज्ञेन च यजन्तो मामुपासते । कथम्—बहुधा पृथक्त्वेन जगदाकारेण विश्वतोमुखं

---

यतनविपयमदर्शनम् । [ इति ] दृढसंकल्पा महत्यामापदि संपदि चान्याश्रयणपरिहारार्थम् । भक्तिभारेत्यादिकं प्रणामस्य रागप्राप्तत्वकथनम् ।

मनोबुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादाञ्छिरस्तत्रैव पञ्चमम् ॥

इत्युक्ताष्टाङ्गप्रणामः । नित्ययुक्ता इति आशंसायां क्त इत्याह—नित्ययोगमाकाङ्क्षमाणा इति । काङ्क्षमाणशब्दश्चानश्प्रत्ययान्तः । 'ताच्छील्यवयोवचनशक्तिषु चानश्' [ पा० सू० ३ । २ । १२९ ] इत्यनुशासनात् । दासभूता इत्याद्युक्तस्वरूपानुरूपेण नित्ययोगं विशिनष्टि—आत्मवन्तो महास्यव्यवसायिन इति ॥ १४ ॥

भजन्त्यनन्यमनस इत्यनन्यमनस्त्वेन प्रथममुपासनं विशेषितम् । ततश्च कीर्तनादिभिरनन्तरश्लोकैः । अथ वेद्याकारविशेषदर्शनेनापि तदेव विशेष्यते—ज्ञानयज्ञेनेत्यादिना—सदसच्चाहमर्जुनेत्यन्तेन । चकारः पूर्वोक्तकीर्तनादिसमुच्चयार्थः । अपिस्त्वन्य इत्यनेनान्वितः । अन्यथा नैरर्थक्यादित्यभिप्रायेणाऽऽह—अन्येऽपीति । अन्यशब्दोऽत्र पूर्वोपासकपरः । यज्ञेन यजन्तो यज्ञेन प्रीणयन्त इत्यर्थः । बहुधा पृथक्त्वेनेत्यनेन समष्टिव्यष्टितदन्तर्गतरूपसमस्तसंग्रह इत्याह—जगदाकारेणेति । विश्वतोमुखशब्दस्यार-

---

१ ख. म. क. ङ. 'णा म. ात्मान' म' ।

विश्वप्रकारमवस्थितं मामेकत्वेनोपासते। एतदुक्तं भवति — भगवान् वासुदेव एव नामरूपविभागानर्हातिसूक्ष्मचिदचिद्वस्तुशरीरः सन्सत्यसंकल्पो विविधविभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरः स्यामिति संकल्प्य स एक एव देवतिर्यङ्मनुष्यस्थावराख्यविचित्रजगच्छरीरोऽवतिष्ठत इत्यनुसंदधानाश्च मामुपासत इति ॥ १५ ॥

तथाहि विश्वशरीरोऽहमेवावस्थित इत्याह —

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।
मन्त्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतम् ॥ १६ ॥

अहं क्रतुरहं ज्योतिष्टोमादिकः क्रतुरहमेव यज्ञो महायज्ञोऽहमेव

---

समभिव्याहारानुगुणं विवक्षितमाह — विश्वप्रकारमिति। नन्वेकत्वेन पृथक्त्वेन चोपासत इत्यन्वयः किं नोच्यते। कथं चैकस्यैव सतो बहुत्वेनावस्थानम्। तथा च सविकारत्वसंसारित्वादिदोषाश्च स्युः। बहुधावस्थितस्यैकत्वेनोपासतो दृष्टिविचित्रद्भ्रान्तिश्च स्यादित्यत्राऽऽह — एतदुक्तमिति। एतेन परोक्तप्रक्रिययोपासनत्रिधात्रयपरत्वं भेदाभेदादिवर्णनं च प्रत्युक्तम्। भगवानित्यनेन सृष्ट्याद्यौपयिकगुणप्रपञ्चप्रदर्शनम्। वासुदेवशब्दे प्रथमांशेन सर्वसामानाधिकरण्यव्यपदेशनिदानसर्वशरीरकत्वपर्यवसितव्याप्तिविशेषो द्वितीयांशेन सृष्टिप्रयोजनं क्रीडादिरेवेत्युच्यते। द्वाभ्यां च पदाभ्यामनन्योपास्यैकान्तिजनशीलितमन्त्रविशेषोऽपि स्मारितः। पृथिव्यादिबहुत्वमात्रस्य प्रत्यक्षादिसिद्धत्वादेकस्यैव सतो बहुत्वं हि शास्त्रवेद्यम्। ततश्च तथाभूतैकत्व एवात्र वाक्यतात्पर्यम्। तच्चैकस्य सर्वशरीरकत्वेन निर्व्यूढमिति न कश्चिद्दोषः ॥ १५ ॥

यद्यपि परव्यूहादिरूपेणैकत्वपृथक्त्वे वक्तुं शक्ये तथाऽप्यनन्तरग्रन्थानुसारादुक्त एवार्थ इत्यभिप्रायेणाह। क्रतुरित्यादिश्लोकचतुष्टयस्य प्रकृतसंगतमर्थमाह — तथाहीति। ज्योतिष्टोमादिक इत्यनेन महायज्ञ इत्यनेन च विषयविशेषप्रदर्शनात्क्रतुयज्ञशब्दयोः पौनरुक्त्यपरिहारः। शारीरमानसश्रौतस्मार्तादिविभागस्तु न प्रसिद्ध्यनुसारीति भावः। महायज्ञो ब्रह्मय-

स्वधा पितृगणपुष्टिदायिनी, औषधं हविश्चाहमेव । अहमेव च मन्त्रोऽह-मेवाऽऽज्यम् । मदर्शनार्थमिदम् । सोमादिकं च हविरहमेवेत्यर्थः । अह-माहवनीयादिकोऽग्निर्होमश्चाहमेव ॥ १६ ॥

पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥

अस्य स्थावरजङ्गमात्मकस्य जगतस्तत्र तत्र पितृत्वेन मातृत्वेन धातृत्वेन पितामहत्वेन च वर्तमानोऽहमेव । अत्र धातृशब्दो मातृपितृव्य-तिरिक्त उत्पत्तिप्रयोजके चेतनविशेषे वर्तते । यत्किंचिद्वेद्यं पवित्रं

---

ज्ञादिः पञ्चविधः । अविशेषादेवकारः सर्वत्रान्वेतव्यः । क्रतुतद्-वयवादिप्रसङ्गात्स्वधाशब्दपाठादाज्यस्य च पृथगुक्तत्वादोषधि-विकारहविर्विशेषविषयोऽयमौषधशब्द इत्याह–औषधं हविश्चाहमे-वेति । एतेन स्वधौषधशब्दयोरन्य(न्न)भेषजादिपरत्वव्याख्या प्रत्युक्ता । विशेषविधिः शेषनिषेधार्थ इति शङ्कां परिहरति–प्रदर्श-नार्थमिति । एवमुत्तरेष्वपि पितामहादिकथनं प्रपितामहादिप्रदर्श-नार्थम् । अत्राग्निशब्दस्य प्रकरणविशेषाद्भूततृतीयादिमात्रविष-यत्वं न युज्यत इत्यभिप्रायेणाऽऽह–अहमाहवनीयादिकोऽग्निरिति । हविषां प्रागुक्तत्वादत्र हुतशब्दो भावार्थ इत्याह–होम-श्चेति ॥ १६ ॥

पितामहस्येत्यादौ न स्वस्वरूपे पितृत्वादिकमिहोच्यतेऽपि तु पितृत्वादिरूपेण प्रतिपन्नानां स्वान्तर्यामिकत्वं तथा सति हि प्रकृतसंगतिरित्यभिप्रायेणाऽऽह–अस्येति । स्थावरेष्वपि तानि तानि कारणानीश्वरशरीराणीति तत्रापि तस्य पितृत्वादिव्यव-हारः । धातृशब्दो हि स्रष्टृचेतनविशेषपरतया प्रसिद्धस्ततश्चात्र पौनरुक्त्यमित्याशङ्क्याऽऽह–अत्रेति । गोबलीवर्दन्यायादिति भावः । एतस्यैव सर्वत्रापितृत्वाभावात्प्रतिनियतिप्रदर्शनाय तत्र तत्रेत्युक्तम् । पित्रादिसमभिव्याहृतत्वादित्यर्थः । रुद्रेन्द्रादिसहपाठे हि चतुर्मु-खपरतेति भावः । धात्वर्थभूतधारणादिद्वारोत्पत्तिप्रयोजकत्वम् । वेद्यत्वमात्रस्य सर्वसाधारणत्वाद्वेद्यपवित्रशब्दयोर्विशेषणविशेष्य-भावेनान्वयः संभवन्प्रतीयमानो बाधकाभावान्न त्याज्य इत्यभि-प्रायेणाऽऽह–यत्किंचिदिति । वेद्यस्यानन्तरमभिधीयमानत्वात्पवि-

पावनं तदहमेव। वेदकश्च वेदबीजभूतः प्रणवोऽहमेव। ऋक्सामयजुराख्यः स्त्रसंज्ञो वेदश्चाहमेव ॥ १७ ॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवप्रलयस्थानं निधानं बीजमव्ययम् ॥ १८ ॥

गम्यत इति गतिः। तत्र तत्र प्राप्यस्थानमित्यर्थः। भर्ता धारयिता प्रभुः शासिता साक्षी साक्षाद्द्रष्टा निवासो वासस्थानं वेश्मादि शरणमिष्टस्य प्रापकतयाऽनिष्टस्य निवारणतया समाश्रणीयश्चेतनः स चाह-

त्रत्वसामर्थ्याच्च वेद्यवेद्यमित्युक्तम्। नपुंसकनिर्देशाद्विशेषकाभावाच्चानुक्तसमस्तवेदवेद्यसंग्रहविषयोऽयमिति ज्ञापनाय यत्किंचिच्छब्दः। संकोचकसंज्ञापरत्वव्युदासाय पावनमित्युक्तम्। ससंबन्धिनिर्देशमध्यपाताद्वेद्यप्रतिसंबन्धिनिर्देशमध्यपाताद्वेद्यप्रतिसंबन्धिनिर्देशरूपत्वज्ञापनाय वेदकश्चेत्युक्तम्। ऋक्सामयजुषां पृथगभिधानेऽपि तदनुप्रविष्टस्य प्रणवस्य पृथगुक्तिः किमभिप्रायेत्यत्राऽऽह—वेदबीजभूत इति ॥ १७ ॥

गतिशब्दस्याश्रयाश्रयन्यायेन द्रव्यपरत्वौचित्यान्नात्र भावार्थपरत्वमित्यभिप्रायेण स्थानपरत्वमाह—गम्यत इतीति। सर्वजनसाधारणेष्वर्थेषु निर्दिश्यमानेषु तन्मध्ये स्त्रीविशेषमात्रप्रतिसंबन्धिपदार्थो न वक्तुमुचितः। साधारणार्थत्वं च बिभर्तिधातोः प्रसिद्धमित्यभिप्रायेणाऽऽह—भर्ता धारयितेति। प्रभुशब्दस्यात्र प्रभूततामात्रपरत्वे जगत इत्यनेनान्वयो न स्यादित्यभिप्रायेणाऽऽह—शासितेति। साक्षाद्द्रष्टेति। 'साक्षाद्द्रष्टरि संज्ञायाम्' [पा० सू० ५।२।९१] इति हि साक्षिशब्दोऽनुशिष्यते। वासस्थानमिति। अत्र भावादिपरत्वानौचित्यादधिकरणार्थोऽयं घञिति भावः। गतिशब्देन पौनरुक्त्यनिरासायोक्तं वेश्मादीति। गतिशब्दस्तु स्वर्गपृथिव्यादिगन्तव्यदेशपर उक्तः। तत्तद्देशानुभाव्यभोग्यपरो वा। शरणशब्दस्यात्र निवासशब्दनिर्दिष्टस्पृ(गृ)हाद्यचेतनपरत्वव्युदासायाऽऽह—इष्टस्येति। इष्टप्राप्त्यनिष्टनिवारणयोर्यथेच्छं प्रत्येकसमुदायाभ्यामन्वयः। शरणं गृहर-

१ ग. ङ. °द्। ऋगादिवेदो वे°। ख. घ °व। वेदो वे°।

मेव, सुहृद्धितैषी[1] प्रभवप्रलयस्थानं यस्य कस्य यत्र कुत्रचित्प्रभवप्रलययोर्यत्स्थानं[2] तदहमेव, निधानं निधीयत इति निधानमुत्पाद्यमुपसंहार्यं चाहमेवेत्यर्थः । अव्ययं बीजं तत्र तत्र व्ययरहितं यत्कारणं तदहमेव ॥ १८ ॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

अग्न्यादित्यादिरूपेणाहमेव तपामि । ग्रीष्मादावहमेव वर्षं निगृह्णामि ।

---

क्षित्रोः, इति पाठादत्र रक्षितृपरः शरणशब्दः । हितैषीति । शोभनहृदययुक्तो हि सुहृत् । शोभनत्वं च हृदयस्य हितगोचरत्वमिति भावः । यस्य कस्यचिदिति । केवलं ब्रह्मादेरव्यक्तादेर्वा यदुत्पत्तिप्रलयस्थानमित्यभिप्रायः । प्रभव इति व्यस्तं परोक्तपाठान्तरमप्रसिद्धेरनार्जवाच्च नाऽऽदृतम् । प्रभवप्रलयस्थानमिति प्रसक्तत्वात्तत्र यत्प्रभवति यच्च प्रलीयते तदत्र निधानशब्देन विवक्षितमित्यभिप्रायेणाऽऽह—निधीयत इति निधानमिति । कर्मार्थोऽयं ल्युप्रत्ययः । एतेन निधानशब्दस्य प्रलयस्थानविशेषणत्वेनाव्याहृ(कृ)तपरत्वयोजना निरस्ता । प्रभवप्रलयस्थानमित्यस्योपादानविवक्षायां बीजशब्दः कारणमात्रपरः । तस्योपादानपरत्वविवक्षायां बीजाधारक्षित्यादिदेशपरः पूर्व इत्यभिप्रायेणाऽऽह—तत्र तत्रेति ॥ १८ ॥

एवं प्राधान्यत इति वक्ष्यमाणप्रकारेण लोके तत्तच्छब्दवाच्यतया प्रसिद्धानां प्रकृष्टपदार्थानां सत्तायाः स्वाधीनत्वप्रदर्शनमर्थप्रवृत्तितादधीन्यमुखेनोच्यते—तपामीति । स्वरूपतस्तापहेतुत्वाभावाद्विशिष्टं तं दर्शयति—अग्न्यादित्यादीति । आदिशब्देनाग्न्यादितप्तद्रव्यविवक्षा । एकत्र कार्ययोर्विरुद्धयोः कालादिभेदेन व्यवस्थेत्यभिप्रायेणाऽऽह—ग्रीष्मादाविति । वर्षास्विति च । अत्र वर्जना( र्पणा )दिरूपेणेति भाव्यम् । एवं रश्मिविशेषोऽपि ग्राह्यः । अहं क्रतुरित्युपक्रम्यैतावताऽधियज्ञाधिप्रजाधिदैवाध्यात्माधिदेवताविवक्षेति केचित् । अथ साधकबाधकरूपेण संगृह्यो-

---

१ ख. ग. घ. ङ. °षी प्रभवः प्रशस्थानं प्रलयो लयस्थानं य° २ ख. ग. घ. ङ. योग्यस्था° ।

तथा वर्षास्वपि चाहमेवोत्सृजामि । अमृतं चैव मृत्युश्च येन जीवति लोको येन च म्रियते तदुभयमप्यहमेव। किमत्र बहुनोक्तेन सदसच्चाप्यहमेव। सद्यद्वर्ततेऽसद्यदतीतमनागतं च सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्तत्प्रकारोऽहमेवावस्थित इत्यर्थः। एवं बहुधा पृथक्त्वेन विभक्तनामरूपावस्थितकृत्स्नजगच्छरीरतया तत्प्रकारोऽहमेवावस्थित इत्येकत्वज्ञानेनानुसंदधानाश्च मामुपासते त एव महात्मानः ॥ १९ ॥

एवं महात्मनां ज्ञानिनां भगवदनुभवैकभोगानां वृत्तमुक्त्वा तेषामेव

---

च्यते––अमृतं चैव मृत्युश्चेति । मृतिकारणाभिधामृत्युशह( ब्द )प्रयोगान्मृतिसंबन्धमात्रविषयोऽयममृतशब्दः । सुधापरत्वे तु विषेण सह पठितव्यः । अमृतसहपाठाच्च मृत्युशब्दस्य वैवस्वतादिपरत्वमयुक्तमित्यभिप्रायेणाऽऽह–येनेति । त्रैकाल्यवर्तिसर्वसंग्रहेणोपसंहारपरतां दर्शयति –किमत्रेति । अत्र सच्छब्दवदसच्छब्दोऽपि जीवान्तराभाववादाद्वस्तुविशेषपरः । अन्यथाऽहमितिसामानाधिकरण्यायोगादित्यभिप्रायेणाऽऽह–यद्वर्ततेऽसद्यदतीतमनागतं चेति । असच्छब्दोऽत्र वर्तमानविषयः । ननु प्रकरणान्तरेष्विव चेतनाचेतनादिविषयत्वमनयोः किं नोच्यत इत्यत्राऽऽह––सर्वावस्थेति । सर्वस्य भगवदात्मकत्वं हि प्रकृतम् । त्रैकालिकसमस्तसंग्रहौचित्याय वर्तमानत्वादिविवक्षायामपि चिदचितोर्न त्यागः । तयोरेव तत्तदवस्थाविशेषविशिष्टस्वरूपविषयत्वादिति । अथवा सर्वेत्यादिकमहं क्रतुरित्याद्युक्तकृत्स्नवाक्यार्थकथनमनुध्येयम् । सर्वतादधीन्यवचनं प्रकृतेनोपासनेन संगमयति––एवं बहुविधेत्यादि । विशिष्टैकत्वमिह विवक्षितम् । न पुनः प्रलयदशापन्नाविभक्तत्वलक्षणम् । अप्रस्तुतज्ञानयज्ञत्वस्मरणाय–एकत्वज्ञानेनानुसंदधाना इत्युक्तम् ॥ १९ ॥

सदसच्चाहमर्जुनेत्यस्यानन्तरं त्रैविद्या इत्यादिकमसंगतमिति शङ्कायां पूर्वोत्तरानुवृत्तप्रघट्टकार्थं दर्शयन् संगतिमाह–एवं महात्मनामिति । महात्मनां ज्ञानिनां भगवदनुभवैकभोगानामिति त्रिभिर्महात्मानस्तु ज्ञानान्यम(न्मन्म)नस इति प्राक्त [न] स्मरणम् । अद्य जानन्तीत्याद्यपेक्षया महात्मानस्त्वित्यादेर्विशेषकथनरूपत्वेऽपि भजनकीर्तनादेर्भक्तस्वरूपनिरूपकतया––वृत्तमुक्त्वेत्युक्तम् । एवं

विशेषं दर्शयितुमज्ञानां कामकामानां वृत्तमाह—

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥२०॥

ऋग्यजुःसामरूपास्तिस्रो विद्यास्त्रिविद्यं केवलं त्रिविद्यनिष्ठास्त्रैविद्या न तु त्रय्यन्तनिष्ठाः। त्रय्यन्तनिष्ठा हि महात्मानः पूर्वोक्तप्रकारेणाखिलवेदवेद्यं मामेव ज्ञात्वाऽतिमात्रमद्भक्तिकारितकीर्तनादिभिर्ज्ञानयज्ञेन च मदेकप्राप्त्या मामेवोपासते। त्रैविद्यास्तु वेदप्रतिपाद्यकेवलेन्द्रादियागवि-

---

निरूपितस्वरूपाणां तेषां निरतिशयफलसौकर्यमभिधास्यमानो विशेषो भवितुमर्हतीति तेषामेव विशेषं दर्शयितुमित्युक्तम्। अज्ञानामित्यनेन परं भावमजानन्त इति प्रागुक्तमेवात्र फलगुफलयोगादिभिः प्रपञ्च्यत इति सूचितम्। त्रैविद्या इत्यत्र संख्याविशेषप्रसिद्धा( द्धया ) त्रयीधर्ममिति वक्ष्यमाणानुसंधानाच्च विद्यां विशिष्ट( शिंष ) न समासार्थं चाऽऽह—ऋग्यजुरिति । तिस्रो विद्याः समाहृता इति द्रष्टव्यम्। द्विगुसमासत्वात्त्रिविद्यमित्येकवद्भावनपुंसकत्वे। अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इत्यस्य पात्रादिभ्यः प्रतिषेधो वक्तव्य इत्यपवादः। 'तदधीते तद्वेद' [ पा० सू० ४ । २ । ५९ ) इत्यण्प्रत्ययविवक्षयाऽऽह—त्रिविद्यनिष्ठा इति। सर्ववेद ( वेद ) विषयत्वे विरोधात्कर्ममात्रविषयत्वज्ञापनाय केवलशब्दः। तदेव विशदयति—न तु त्रय्यन्तनिष्ठा इति । विषयव्यवस्थापनाय पूर्वोक्तानां महात्मनामपि वेदैकदेशभूतोपनिषन्निष्ठत्वं सर्वस्यापि वेदस्य तत्तद्द्वारा भगवत्परत्वस्वीकारं च वदन्यथावस्थितज्ञानाधीनपुरुषार्थविशेषाभिलाषतदुपायनिष्ठतामात्रेण विशेषात्सिद्धा(द्धया)न्तरनिष्ठत्वभ्रमं च व्युदस्यन्केवलत्रयीनिष्ठवृत्तव्याख्यानावसरे तद्व्यवच्छेद्यमखिलं दर्शयति—त्रय्यन्तनिष्ठा हीति। एतेन प्रकरणान्तरेषु चतुर्थी विद्येति मोक्षसाधनभूता त्रय्यन्तविद्यैषा सांपरायिकीति च—वेदप्रतिपाद्येति। कर्मभागमात्रप्रतिपाद्येत्यर्थः। महात्मनामपि विद्याङ्गकर्मगतसोमपानसद्भावात्तद्व्यवच्छेदायोक्तम्—केवलेन्द्रादियागविशिष्टेति ।

शिष्टसोमान् पिबन्तः पूतपापाः स्वर्गादिप्राप्तिविरोधिपापात्पूतास्तैः केवलेन्द्रादिदेवतयाऽनुसंहितैर्यज्ञैर्वस्तुतस्तद्रूपं मामिष्ट्वा तथाऽवस्थितं मामजानन्तः स्वर्गतिं प्रार्थयन्ते ते पुण्यं दुःखासंभिन्नं सुरेन्द्रलोकं प्राप्य तत्र दिव्यान्देवभोगानश्नन्ति ॥ २० ॥

---

यज्ञशिष्टसोमपानस्य धर्मत्वाद्यागविशिष्टोक्तिः । स्वर्गतिं प्रार्थयन्त इत्यनन्तरमभिधानात्तत्प्रतिबन्धकपापनिरासकत्वमात्रमेवात्र सोमपानस्येत्यभिप्रायेण—स्वर्गादिप्राप्तिविरोधिपापात्पूता इत्युक्तम् । स(स्व)र्गशब्दोपलक्षणार्थत्वज्ञापनायाऽऽदिशब्दः (ब्दः) । पापस्य पूतत्वं नाम निरस्तत्वं तदेव हि पुरुषस्य पूतत्वमित्यभिप्रायेण-पापात्पूता इत्युक्तम् । पापान्मुक्ता इत्यर्थः । स्वर्गाद्यर्थिनां तत्त्वतो भगवज्ज्ञानाभावस्य साक्षाद्भगवद्याजिनां भगवत्प्राप्तेः केवलेन्द्रादियागानामपि वस्तुतः परमपुरुषाराधनरूपत्वस्य तज्ज्ञानाच्च तेषां कैवल्यस्य येऽप्यन्यदेवताभक्ता इत्यादिश्लोकत्रयेण वक्ष्यमाणत्वात्, यज्ञैर्मामिष्ट्वेत्येतत्परमपुरुषस्य स्वानुसंधानमात्रमूलं वचो न पुनर्यजमानानुसंधानमूलमिति ज्ञापनायोक्तम्—तथाऽवस्थितं मामजानन्त इत्यन्तम् । अनुष्ठानस्य फलकामनापूर्वकत्वेऽपि यज्ञानन्तरमेव हि फलं देहीति देवतां प्रति प्राप(प्रार्थ)नमत इष्ट्वा प्रार्थयन्त इति क्रमोपपत्तिः । पुण्यक्रियातज्जन्यादृष्टयोर्लोकसामानाधिकरण्यायोगात्सुरेन्द्रलोकस्य फलमात्ररूपस्य पाद(साध)नत्वेनाश्रुतत्वात्भूतदुःखासंभिन्नत्वस्य श्रुतत्वात्पुण्यप्रतिक्षेप्यपापकार्यदुःखनिवृत्तिपरोऽयं पुण्यशब्द इत्यभिप्रायेणोक्तम्—दुःखासंभिन्नमिति । पुण्यसाध्यसुखमयत्वलक्षणा वा दुःखनिवृत्तिरर्थसिद्धा । पुण्यसाध्यत्वलक्षणायां त्वर्थतः पुनरुक्तिः स्यात् । सुरेन्द्रलोकं प्राप्येत्युक्तेऽपि पुनर्दिवीति निर्देशो विचित्रभोगाश्रयतत्तदवान्तरप्रदेशविशेषविषयो भवितुमर्हतीति तत्र तत्रेत्युक्तम् । दिव्यानिति । मोहनत्वाय भौमभोगवैलक्षण्यकथनम् । दिव्यान् दिवि भवान् देवभोगान् । देवानां भोग्यानित्यर्थः । देवभोग्यपुरोडाशादिभौमव्यवच्छेदार्थं च दिव्यशब्दः । देवा हि स्वरूपतः कालतश्च परिमितान् स्वभोगान् स्वयाजिभ्यः संविभजन्ते । अश्नन्ति भुञ्जते । अनुभवन्तीत्यर्थः ॥ २० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

ते तं विशालं स्वर्गलोकं भुक्त्वा तदनुभवहेतुभूते पुण्ये क्षीणे पुनरपि मर्त्यलोकं विशन्ति । एवं त्र्यन्तसिद्धज्ञानविधुराः काम्यस्वर्गादिकामाः केवलं त्रयीधर्ममनुप्रपन्ना गतागतं लभन्ते । अल्पास्थिरस्वर्गादीननुभूय पुनः पुनर्निवर्तन्त इत्यर्थः ॥ २१ ॥

महात्मानस्तु निरतिशयप्रियरूपं मच्चिन्तनं कृत्वा मामनवधिकाति-

---

भुक्त्वेत्यनूद्यते । विशालमिति भोगभोगापेक्षया पृथुत्ववचनम् । स्वर्गलोकं भुक्त्वेति । स्वर्गलोकसंभवान्भोगाननुभूयेत्यर्थः । नहि स्वर्गानुभवाद्बन्धकपुण्यान्तरक्षयः । कर्मशेषेण विशिष्टजात्यादिप्राप्तिः श्रूयत इत्यभिप्रायेणोक्तम्—तदनुभवहेतुभूत इति । एतेन स्वर्गेऽपि पातभीतस्येत्यादि दर्शितम् । अत्र मर्त्यशब्देन भूलोकेऽप्यस्थिरत्वं द्योतितम् । एवंशब्दाभिमतेन प्रकारेण त्रयीशब्दस्य तत्र संकोचं कामकामत्वे हेतुत्वं च दर्शयति—एवं त्र्यन्तसिद्धज्ञानविधुरा इति । अनुवादोऽयं स्वरूपतो मोक्षानुगुणस्यापि धर्मस्य प्रकारविशेषात्पुनरावृत्तिहेतुत्वमिति ज्ञापनार्थः । पूर्वः कामशब्दः कर्मणा व्युत्पन्न इत्याह—काम्यस्वर्गादिकामा इति । मोक्षस्यापि फलतया काम्यमानत्वात्ततोऽत्र संकोचाय स्वर्गादिशब्दः । केवलशब्देन त्र्यन्तसिद्धाङ्गिभूतपरमधर्मराहित्योक्तिः । गतं चाऽऽगतं च गतागतं तदेव लभन्ते । नहि गमनागमनमात्रं दोष इत्याह—अल्पेति । अनुभवदशायामप्यल्पत्वात् । यथा पशुरेवं स देवानामिति प्रक्रियायामतिशयितब्रह्मादिसुखानुसंधानेन दुःखत्वं तस्य चास्थिरत्वानुसंधानाद्दुःखतरत्वं तत्प्रध्वंसागमे तु दुःखतमत्वम् । घटीयन्त्रन्यायेन पुनरावृत्त्यधीनगर्भवासव्याधिनिरयादिसंभवं तु दुःखं वक्तुमपि सुदुःसहं तच्चास्वच्छन्दातप्रवाहमिति भावः ॥२१॥

उपायस्यापि सुखरूपतया फलस्य च नित्यनिर्दोषनिरतिशयानन्दतया महात्मनां विशेषोऽभिधीयत इत्याह—महात्मानस्त्विति ।

अथानन्दं प्राप्य न पुनरावर्तन्त इति तेषां विशेषं दर्शयति—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

अनन्या अनन्यप्रयोजना मच्चिन्तनेन विनाऽऽत्मधारणलाभान्मच्चिन्तनैकप्रयोजना मां चिन्तयन्तो ये महात्मानो जनाः पर्युपासते सर्वकल्याणगुणान्वितं सर्वविभूतियुक्तं मां परित उपासतेऽन्यूनमुपासते तेषां नित्याभियुक्तानां मयि नित्याभियोगं काङ्क्षमाणानामहं मत्प्राप्तिलक्षणं योगमपुनरावृत्तिरूपं क्षेमं च वहामि ॥ २२ ॥

---

अनन्यत्वविशेषणवशाच्चिन्तनस्य निरतिशयसुखरूपत्वसिद्धिः । मामित्यादिना योगक्षेमशब्दविवक्षितमुक्तम् । यद्यपि ये त्वन्यदेवता इतिवक्ष्यमाणवीक्षणेनान्यदेवताप्रतीतिस्तथाऽपि प्रकृतकाम्यव्यवच्छेदार्थत्वादुपायसहचरं ततोऽन्यत्फलं व्यवच्छेत्तुमनन्यशब्दः । अत एवैकत्वानुसंधानपरत्वं चायुक्तमिति दर्शयति—अनन्यप्रयोजना इति । तत्र हेतुमाह—मच्चिन्तनेनेति । अनन्याश्चिन्तयन्त इति समभिव्याहारसामर्थ्याच्चिन्तनादन्यस्य निषेधसिद्धिः । जनिविशेषणस्य जनशब्दस्याऽऽकृतिगुणतुल्ये जने प्रयोगात्तद्व्यवच्छेदाय प्रकरणसिद्धमुक्तम्—महात्मान इति । ये महात्मानो जानन्ति तेषामेव हि साफल्यमिति भावः । पर्युपासत इत्यत्र परीत्यस्योपसर्गस्य नैरर्थक्यायोगात्तदर्थे परित इति विवक्षिते तस्यैव प्रमाणान्तरसिद्धविशेषं दर्शयति—सर्वकल्याणेति । प्रतीकोपासनव्यवच्छेदार्थमिदमुक्तमित्यभिप्रायेणाऽऽह—अन्यूनमिति । अखण्डितगुणविभूतिकमित्यर्थः । अत्राहमित्यनेन परमोदारत्वसौशील्यादिगुणविवक्षा । नहि मोक्षकाङ्क्षिणामानुषङ्गिकभोगप्राधान्ये(प्रदाने)ऽपि मोक्षानुपयुक्तशरीरयात्रादिरूपयोगक्षेमौ दातव्यावित्यभिप्रायेणाऽऽह—मत्प्राप्तीति । अलब्धलाभो योगः । लब्धरक्षणं क्षेमः । समाहारार्थत्वादेकवद्भावः । वहामि ददामीत्यर्थः ॥ २२ ॥

येऽप्य( ये त्व )न्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥

येऽप्य(ये त्व)न्यदेवताभक्ता ये त्विन्द्रादिदेवताभक्ताः केवलत्रयीनिष्ठाः श्रद्धयाऽन्विता इन्द्रादीन् यजन्ते तेऽपि पूर्वोक्तेन न्यायेन सर्वस्य मच्छरीरतया मदात्मकत्वेनेन्द्रादिशब्दानां च मद्वाचित्वाद्वस्तुतो मामेव यजन्ति । अपि त्वविधिपूर्वकं यजन्ते । इन्द्रादीनां देवतानां कर्मस्वाराध्यतयाऽन्वयं यथा वेदान्तवाक्यानि 'चतुर्होतारो यत्र संपदं गच्छन्ति देवैः' इत्यादीनि विदधति न तत्पूर्वकं यजन्ते । वेदान्तवाक्यजातं हि परमपुरुषशरीरतयाऽवस्थितानामिन्द्रादीनामाराध्यत्वं विदधदात्मभूतस्य परमपुरुषस्यैव साक्षादाराध्यत्वं विदधाति । चतुर्होतारोऽग्निहोत्रदर्शपूर्णमासादीनि

---

सर्वासामपि देवतानां मच्छरीरत्वाद्धिया मामित्युक्तप्रकारेण वस्तुतः स्वसमाराधनमिति जानन् भवान् किं न केवलकर्मणाऽपि मोक्षरूपयोगक्षेमं प्रयच्छतीत्यत्रोच्यते—ये त्वित्यादिश्लोकद्वयेन । तुशब्दः शङ्कानिवृत्त्यर्थः । अन्यदेवताभक्ता इत्येतत्समभिव्याहारफलितमिन्द्रादीति । पूर्वोक्तेन न्यायेनेति । मयि सर्वमित्यादावस्मिन्नप्यध्याये मया ततमिदं सर्वमित्यादौ चेति भावः । मामेव यजन्तीत्यन्तं शङ्कितानुवादरूपं शेषं तु विधेयरूपमित्यभिप्रायेणाऽऽह—अपि त्विति । विधित्वज्ञानद्वारा यस्य पूर्वकरणं तद्विधिपूर्वकम् । तदन्यदविधिपूर्वकम् । कथमविधिपूर्वकत्वं विहितानामित्यत्राऽऽह—इन्द्रादीनामिति । तत्पूर्वकमिति । तथाविधविध्यनुसंधानपूर्वकमित्यर्थः । यथा विदधतीत्युक्तं विवृणोति—वेदान्तेति । इन्द्रादीनामाराध्यत्वमात्रं कर्मभागे प्रतिपादितम् । तेषामेव यथावस्थितं स्वरूपं वेदान्तेष्विति न विरोधः । साक्षादिति । निरुपाधिकमित्यर्थः । प्रधानतयेति वा । हविरुद्देश्यपरमपुरुषविशेषणतयेन्द्रादीनां मध्येऽस्यानुप्रवेशः । यथा प्रतर्दनविद्यादिषूपास्यानुप्रवेश इति भावः । चतुर्होतार इति उपात्तवाक्यस्य कथं प्रस्तुतार्थता तत्राऽऽह—चतुर्होतार इति । उपलक्षणतामभिप्रेत्योक्तम्—अग्निहोत्रदर्शपूर्णमासादीनीति । अन्तः प्रविशः

कर्माणि कुर्वाणा यत्र परमात्मनि तत्तद्देवतान्तर्यामितयाऽवस्थिते सत्येव तच्छरीरभूतैरिन्द्रादिदेवैः संपदं गच्छन्ति । इन्द्रादिदेवतानामाराधनान्येतानि कर्माणि मद्विषयाणीति ज्ञात्वा कुर्वन्तो मत्संपदं गच्छन्तीत्यर्थः ॥ २३ ॥

अथ त्रैविद्या इन्द्रादिशरीरस्य परमपुरुषस्याऽऽराधनान्येतानि कर्माणि आराध्यश्च स एवेति न जानन्ति । ते च परिमितफलभागिनश्च्यवनस्वभावाश्च भवन्ति तदाह—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥

अहं हीति । प्रभुरेव च तत्र तत्र फलप्रदाता चाहमेवेत्यर्थः ॥ २४ ॥

---

शास्ता जनानां सर्वात्मेत्यादिप्रसिद्धिः । यत्रशब्दार्थ उच्यते— परमात्मनीत्यादिना । यस्याऽऽदित्यः शरीरमित्यादिवाक्यानुसंधानेन तच्छरीरभूतैरित्यादिकमुक्तम् । कर्मणा देवैः साध्या संपत्तिराराधनत्वरूपोऽतिशय एव । स चान्ततः फलसाधनत्वप्रकारे पर्यवसित इत्यभिप्रायेणाऽऽह—इन्द्रादिदेवतानामित्यादि ॥ २३ ॥

अविधिपूर्वकत्वविवरणरूपतां तथाविधस्यात्यन्तनैष्फल्यशङ्कापरिहाररूपतां चाहं हीति श्लोकस्य दर्शयति—अथेति । सर्वशब्देनेन्द्राद्युद्देशेन क्रियमाणानामित्यभिप्रेतम् । आराध्यश्चेति भोक्तृशब्दाभिप्रेतोक्तिः । च्यवन्तीत्यनेन कुतश्चिदिति सिद्धम् । तच्च तत्तत्कर्मसाध्यमस्थिरं फलमेवेति यान्तीत्यनन्तरश्लोकस्थशब्दाद्वाक्यान्तराच्च लब्धं तदाह—परिमितेत्यादिना । फलस्य परिमितत्वं देशतः कालतः स्वरूपतश्च । अतस्तद्भागिनां च्यवनस्वभावता । प्रभुशब्दस्यात्र गतिर्भर्ता प्रभुरित्यादिष्विव शास्त्र(सितृ)त्वादिविवक्षाव्युदासाय योग्यमर्थमाह—तत्र तत्रेति । सूत्रं च ' फलमत उपपत्तेः ' [ ब्र० सू० ३ । २ । ३७ ] इति । यथेन्द्राद्याराधनतया प्रयोगेऽपि तत्र तत्र फलप्रदोऽहं न तथा मदाराधनत्वेऽन्यः फलप्रद इत्येवकारार्थः ॥ २४ ॥

---

१ ङ. मत्तः संप° ।

अहो महदिदं वैचित्र्यं यदेकस्मिन्नेव कर्मणि वर्तमानाः संकल्पमात्रभेदेन केचिदत्यल्पफलभागिनश्च्यवनस्वभावाश्च भवन्ति, केचनानवधिकातिशयानन्दपरमपुरुषप्राप्तिरूपफलभागिनोऽपुनरावर्तिनश्च भवन्तीत्यत्राऽऽह–

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥

यान्तीति । व्रतशब्दः संकल्पवाची । देवव्रता दर्शपौर्णमासादिभिः कर्मभिरिन्द्रादीन् यजाम इतीन्द्रादियजनसंकल्पा ये त इन्द्रादीदेवान् यान्ति ये च पितृयज्ञादिभिः पितॄन् यजाम इति पितृयजनसंकल्पास्ते पितॄन् यान्ति । ये च यक्षरक्षःपिशाचदीनि भूतानि यजाम इति भूतयजनसंकल्पास्ते भूतानि यान्ति । ये तु तैरेव यज्ञैर्देवपितृभूतशरीरकं परमात्मानं भगवन्तं वासुदेवं यजाम इति मां यजन्ते ते मद्याजिनो मामेव यान्ति । देवादिव्रता देवादीन् प्राप्य तैः सह परिमितं भोगं

---

एकस्यैव कर्मणः कथं भोगमोक्षविरुद्धफलसाधन [ त्व ]मित्यत्र संकल्पाख्यसहकारिवैचित्र्यादुपपत्तिरिति प्राप्यवैषम्यं यान्तीति श्लोकेन प्रदर्श्यत इत्यभिप्रायेणाऽऽह–अहो महदिति । संकल्पभेदाद्विचित्रफलसाधनत्वं ज्योतिष्टोमादिष्वपि सिद्धम् । व्रतशब्दः संकल्पवाचीति । अत्र संकल्पविशेषाद्धि फलभेद इति भावः । देवव्रता इत्यादौ यजनं भूतेज्या इत्यत्र व्रतं चापेक्षया मेलितम् । भूतशब्दस्यात्र प्रामाणिकमात्रादिपरत्वव्युदासान्न(सेन) राजसतामसरा( या )ज्यवर्गप्रदर्शनाय–यक्षेत्यादिकम् । न देवयजनपितृयजनादिवत् क्रियास्वरूपभेदोऽत्रेति ज्ञापनाय–तैरेवेत्युक्तम् । वाक्यान्तरविहितदेवयजनाद्यनुवादेन फलविशेषोऽत्र प्रदर्श्यते न तु ज्योतिष्टोमादिवाक्यवत्फलार्थोपायविधानं क्रियत इति ज्ञापनाय यत्तच्छब्दविन्यासेन व्याख्यातम् । देवेषु व्रतं येषां ते देवव्रताः । भूतानुद्दिश्येज्या येषां ते भूतेज्याः । तत्तत्प्राप्यभेदवचनं तत्तत्समानदेशकालसमानभूत्वा( भोगा )र्थमिति दर्शयति–देवादिव्रता इति । अनादिनिधनमित्यनेन प्राप्यानित्यत्वनिबन्धनायाः पुन-

भुक्त्वा तेषां विनाशकाले तैः सह विनष्टा भवन्ति। मद्याजिनस्तु मामना-
दिनिधनं सर्वज्ञं सत्यसंकल्पमनवधिकातिशयासंख्येयकल्याणगुणगणमहो-
दधिमनवधिकातिशयानन्दं प्राप्य न पुनर्निवर्तन्त इत्यर्थः ॥ २५ ॥

मद्याजिनामयमपि विशेषोऽस्तीत्याह—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥

सर्वसुलभं पत्रं वा पुष्पं वा फलं वा तोयं वा भक्त्या मे प्रयच्छति

---

रावृत्तेः प्रतिक्षेपः । सर्वज्ञमित्यनेन विरोध्यज्ञाननिमित्तायाः सत्यसंकल्पमित्यनेनाशक्तिमूलाया भगवत्स्वातन्त्र्यशङ्कितायाश्च। भक्तान्न वर्ते( निवर्तये )यमित्यपि संकल्पः सत्य इति भावः। स्वरूपतश्च परिमितत्वप्रयुक्तभोगाल्पत्वव्युदासायानवधिकेत्यादि विशेषणद्वयम्। एतेनान्यवैतृष्ण्यहेतुतया स्वेच्छोपाधिकपुनरावृत्तिव्युदासः ॥ २५ ॥

समानेऽप्यायासे प्राप्यवैषम्यमुक्तम्। अथोपायवैषम्यमुच्यत इत्याह—मद्याजिनामिति । मद्यजनशीलानामित्यर्थः । अपीति । उपास्यसौलभ्यातिशयप्रयुक्तोपायसौकर्यरूप इत्यर्थः । पत्रपुष्पफलानां प्रायशो हेतुकार्यभावात्क्रमविन्यासः। तस्य तत्तत्कालानुरूपं यथासंभवं किमपि लभ्यमिति भावः। पत्रादीनामसमासकरणात्समुच्चयाच्च परस्परनैरपेक्ष्यं सूचितम्। तद्द्योतनाय पत्रं वेत्यादिविकल्पकरणम् । एकैकेन तुष्यति भगवानिति ह्युच्यते—

अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात्।
अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः ॥ इति ।

सर्वाभावेऽपि तोयं लभ्यमित्यभिप्रायेण तस्य पश्चादुक्तिः। न ह्येतद्वित्तव्ययादिसाध्यतया दरिद्राणां दुर्लभमित्यभिप्रायेण—सर्वसुलभमित्युक्तम् । अन्यत्र चाऽऽहुः—

पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु।
भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः ॥

इति सामान्यनिर्देशेन सापराधनिरपराधज(ब)लाज(व)लादि-

अत्यर्थमतिप्रियतया तत्प्रदानेन विनाऽऽत्मधारणमलभमानतया तदेकप्रयोजनो यो मे पत्रादिकं ददाति तस्य प्रयतात्मनस्तत्प्रदानैकप्रयोजनत्वरूपशुद्धियुक्तमनसस्तत्तथाविधभक्त्युपहृतमहं सर्वेश्वरो निखिलजगदुदयविभवलयलीलोऽवाप्तसमस्तकामः सत्यसंकल्पेऽ-

---

विभागं न पश्यामीत्यभिप्रेतम्। वक्ष्यति हि—येऽपि स्युः पापयोनयः, स्त्रियो वैश्यास्तथा शूद्रा इत्यादि। भक्त्येति। अनेन दृष्टादृष्टप्रत्यवायपरिहारफलान्तरहेतुत्वव्यपदेशस्तद्व्यञ्जयति—अत्यर्थेति। प्रयतात्मशब्दं व्याख्याति—तत्प्रदानेनेति।

तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ।
सुजानुमृदुरक्ताभिरङ्गुलीभिरलंकृतौ॥
प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ।

इत्यादिष्विव प्रयोजनान्तररागरूपाशुद्धिविरहः प्रयतत्वमित्यर्थः। पुण्येष्वपि फलाभिसंधिरेव हि मनसोऽशुद्धिः। तदप्याहुः—

तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः।
प्रसह्य चित्ताहरणं न कल्क-
स्तान्येव भावोपहतानि कल्कः॥ इति।

भक्त्युपहृतमिति पुनः कीर्तनं भगवदादरणीयत्वे हेतुरयमेवेति ज्ञापनार्थम्। तथाच स्वयमेवाऽऽह—

अण्वप्युपहृतं भक्तैर्मम भोगाय जायते।
भूर्यप्यभक्तोपहृतं न मे भोगाय जायते॥

इति। फलाभिलाषिणामपि काचिद्भक्तिरस्तीति तद्व्युदासाय तच्छब्द इत्यभिप्रायेण तथाविधभक्त्युपहृतमित्युक्तम्। पत्रादिक्षुद्रद्रव्यपरिग्रहप्रतिबन्धिनः प्रकारा अहंशब्देन विवक्षिता इति दर्शयितुं सर्वेश्वर इत्यादिकम्। अपिशब्दः प्रत्येकमन्वेतव्यः। सर्वेश्वर इति। यथेन्द्रादयः स्वशक्तिवृद्धये हविरादिकं गृह्णन्ति नहि तथाऽहं सर्वगोचरसदातननियमनशक्तिशालित्वादिति भावः। निखिलजगदुदयविभवलयलील इति। नहि मल्लीलोपकरणाद्बहिर्भूतं पत्रादिकं मह्यं दीयत इति भावः। अवाप्तसमस्तकाम इति। न हि मेऽनवाप्तमवाप्तव्यमस्तीत्यभिप्रायः। सत्यसंकल्प इति।

नवधिकातिशयासंख्येयकल्याणगुणगणः स्वाभाविकानवधिकातिशयानन्दः स्वानुभवे वर्तमानोऽपि मनोरथपथदूरवर्तिप्रियं प्राप्येवाश्नामि। यथोक्तं मोक्षधर्मे—

' याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ' ॥ इति ॥ २६ ॥

यस्माज्ज्ञानिनां महात्मनां वाङ्मनसगोचरोऽयं विशेषस्तस्मात्त्वं च ज्ञानी भूत्वोक्तलक्षणभक्तिभावाराधनरतात्मा कीर्तनयजनार्चनप्रणामादिकं सततं कुर्वाणो लौकिकं वैदिकं च नित्यं नैमित्तिकं कर्म चेत्थं कुर्वित्याह—

---

न हि ममाशक्यं किंचिदन्येनोपहृतं स्वी क्रियत इति भावः। अनवधिकेत्यादि। गुणतः स्वरूपतश्च निरतिशयानन्दतृप्तस्य मे कियदिदं पत्रादिकमिति तात्पर्यम्। स्वाभाविकशब्देन हेतुनैरपेक्ष्यं वर्तमानशब्देन चानिवर्त्यत्वं विवक्षितम्।

परिपूर्णोऽपि भगवान्भक्तैर्यत्किंचिदीरितम्।
सापेक्षवत्तदादत्ते तेन प्रीतो ददात्यलम् ॥

इत्यस्यार्थमभिप्रयन्नाह—मनोरथेति। अश्नामीत्युपयोगमात्रलक्षणा। तेन निवेद्याभावे पत्रादिकमपि निवेद्यं स्यादिति व्यज्यते। फलान्तरार्थिजनसमर्पितानाम् ' तत्सर्वं वेदवेद्यस्य चरणावुपतिष्ठतः ' इति भगवत्पादोपसर्पणमुक्त्वा परमैकान्तिजनदत्तानां भगवताऽत्यादरेण शिरसा प्रतिग्रहो मोक्षधर्मेऽभिहित इत्याह—यथोक्तमिति ॥ २६ ॥

उक्तार्थफलितपरतयोत्तरश्लोकस्य संगतिमाह—यस्मादिति। महात्मनां विशेष उक्तः। अथ तत्परिगृहीतं भक्तियोगं वक्तुं तदङ्गभूतं बुद्धिविशेषमनुशास्तीत्यभिप्रायेणेत्थं कुर्वित्युक्तम्। यत्करोषीति श्लोकेन स्वभावार्थशास्त्रप्राप्तसर्वकर्मसमर्पणविषयमन्त्रविशेषोऽपि स्मारितः। इममेव श्लोकं यत्करोमीत्युपक्रम्य भगवन्निति संबोध्य त्वदर्पणमित्यन्तं मन्त्रमेव केचिदनुसंदधते।

---

१ क. ग. घ. °नसागो° । २ क. °भाराधनता° ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥

यद्देहयात्रादिशेषभूतं लौकिकं कर्म करोषि यच्च देहधारणायाश्नासि यच्च वैदिकं होमदानतपःप्रभृति नित्यनैमित्तिकं कर्म करोषि तत्सर्वं मदर्पणं कुरुष्व । अर्प्यत इति अर्पणं सर्वस्य लौकिकस्य वैदिकस्य च कर्मणः कर्तृत्वं भोक्तृत्वमाराध्यत्वं च यथा मयि सर्वं समर्पितं भवति तथा कुरु । एतदुक्तं भवति—यागदानादिष्वाराध्यतया प्रतीयमानानां देवादीनां कर्मकर्तुर्भोक्तुस्तव च मदीयतया मत्संकल्पायत्तस्वरूपस्थितिप्रवृत्तितया च मय्येव परमशेषिणि परमकर्तरि त्वां च कर्तारं भोक्तारमाराधक-

तत्र यत्करोषीत्येतद्गोबलीवर्दन्यायात्संकुचितं स्वभावप्राप्तविषयमित्याह—यद्देहेति । अश्नासीत्येतदर्थप्राप्तवर्गोपलक्षणमित्यभिप्रायेणाऽऽह—यच्च देहधारणायाश्नासीति । यज्जुहोषीत्यादेः शास्त्रप्राप्तसमस्तोपलक्षणत्वमुपलक्षणीयसंग्राहकाकारं च दर्शयति—यच्च वैदिकमिति । अत्र यच्छब्दात्सर्वे क्रियाविशेषाः । अर्पणशब्दस्य भाववाचित्वे व्यधिकरणबहुव्रीहिक्लेशात्तत्पुरुषत्वौपयिककर्मप्रत्ययान्ततां व्युत्पादयति–अर्प्यत इत्यर्पणमिति । 'कृत्यल्युटो बहुलम्' [ पा० सू० ३ । ३ । ११३ ] इति कर्मणि ल्युट् । मय्यर्पितं कुरुष्वेति शब्दार्थः । अन्यत्र स्थितस्य स्थायिनस्ततोऽन्यस्मिन्निवेशनं हि समर्पणम् । तच्चात्र क्षणिके कर्मणि कथमित्यत्राऽऽह—सर्वस्येति । ननु जीवस्यैव कर्तृत्वम् 'कर्ता शास्त्रार्थवत्त्वात्' [ ब्र० सू० २ । ३ । ३३ ] इत्यधिकरणे स्थापितम् । इन्द्रादीनां चाऽऽराध्यत्वं श्रुतम् । तथा च देवताभेदो मीमांसितः । अतन्निष्ठस्य तन्निष्ठत्वानुसंधाने भ्रान्तिरेव स्यात्तत्कथमीश्वरे तत्समर्पणमित्यत्राऽऽह—एतदुक्तमिति । परमकर्तरीति । 'परात्तु तच्छ्रुतेः' [ ब्र० सू० २ । ३ । ४० ] इत्यधिकरणार्थः स्मारितः । कर्तारं भोक्तारमाराधकमिति । क्रियायास्तत्फलस्य तत्प्रदातॄणां चेति शेषः । परमकर्तृत्वात्कर्तृत्वसमर्पणं परमशेषित्वादाराध्यत्वादिसमर्पणम् । कर्तृत्वादौ समर्पिते

आराध्यं च देवताजातमाराधनं च क्रियाजातं सर्वं समर्पय । तत्र मन्नियम्यतापूर्वकं मच्छेषतैकरसतामाराध्यादेश्चैतत्स्वभावकगर्भतामत्यर्थ-प्रीतियुक्तोऽनुसंधत्स्वेति ॥ २७ ॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

एवं संन्यासाख्ययोगयुक्तमना आत्मानं मच्छेषतां मन्नियाम्यतैक-रसं कर्म च सर्वं मदाराधनमनुसंदधानो लौकिकं वैदिकं च कर्म कुर्वञ्शुभा-शुभफलैरनन्तैः प्राचीनकर्माख्यैर्बन्धनैर्मत्प्राप्तिविरोधिभिः सर्वैर्मोक्ष्यसे । तैर्विमुक्तो मामेवोपैष्यसि ॥ २८ ॥

---

साक्षात्कर्तर्याराध्यविशेषणभूतेन्द्रादौ च किमनुसंधेयमिति शङ्का-यां समर्पणं शिक्षयति—तत्रेति । भक्तिप्रकरणात्प्रीतियुक्त-त्वोक्तिः ॥ २७ ॥

संन्यासयोगयुक्तात्मेत्ययं फलविधानार्थः पूर्वश्लोकार्थानुवादो न तु ज्ञानकर्मयोगादिपर इत्यभिप्रायेणान्वयमाह—एवं संन्यासा-ख्येति । योगशब्दोऽत्रानुसंधानपरः । तदेव प्रकृतसमर्पणानुवा-दिना संन्यासशब्देन विशेष्यते । आत्मानमित्यादि तद्विवरणम् । लौकिकमिति स्वभावार्थप्राप्तयोः सामान्यरूपम् । शुभाशुभफलैरनु-कूलप्रतिकूलफलैरित्यर्थः । अनन्तैरिति बहुवचनाभिप्रेत-कथनम् । समर्पणबुद्ध्या क्रियमाणस्य बन्धकत्वाभावात्तद्व्यव-च्छेदाय प्राचीनशब्दः । अभिमतगतिनिवृत्तिहेतुर्हि बन्धनमित्यभि-प्रायेण—मत्प्राप्तिविरोधिभिरित्युक्तम् । तेनोपायविरोधिव्यवच्छेदश्च । एतेनैव शुभफलस्यापि कर्मणोऽतिशयितफलप्रतिबन्धकत्वाद्धेयत्वं निर्व्यूढम् । मामुपैष्यसीत्येतत्सामर्थ्यात्—सर्वैरित्युक्तम् । मोक्ष्यस इत्युक्त एवार्थो विमुक्त इत्यनूद्यत इत्यपौनरुक्त्याभिप्रायेण—तैर्विमुक्त इति । अत्र विमुक्तिशब्दस्य जीवन्मुक्तिपरत्वं वदन्तस्तद-संभवादेव निरसनीयाः । कर्तृत्वफलप्रदत्वादिवत्फलत्वमपि स्व-स्यैवेत्यभिप्रायेण—मामेवोपैष्यसीत्युक्तम् । यद्वा क्रमेण प्राप्त्या विल-म्बस्य व्यवच्छेदार्थ एवकारः । मामेवैष्यसीति च वक्ष्यते ॥२८॥

समेममपरमतिलोकं स्वभावं शृणु——

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

देवतिर्यङ्मनुष्यस्थावरात्मनाऽवस्थितेषु जातितश्चाऽऽकारतः स्वभावतो ज्ञानतश्चात्यन्तोत्कृष्टापकृष्टरूपेण वर्तमानेषु सर्वेषु भूतेषु समाश्रयणीयत्वेन समोऽहम् । अयं जात्याकारस्वभावज्ञानादिभिर्निकृष्ट इति

---

दुर्लभसुलभोत्कृष्टापकृष्टद्रव्यतारतम्यादर्शनेन स्वीकारः पत्रमिति श्लोकेन प्रोक्तः । तेन सौलभ्यमुक्तं भवति । यत्करोषीत्यादिना क्रियमाणस्य सर्वस्य बुद्धिविशेषमात्रेण तदाराधनत्वसंपत्त्या तदेव दृढीकृतम् । अथ भक्तियोगाधिकारिप्रशंसनपरे समोऽहमिति श्लोके तु जात्याकारादितारतम्यानादरेण भक्तैः स्वस्यैकरस्यमुच्यते । तेन सौशील्यमुच्यते । कंसादिनिग्रहादक्रूराद्यनुग्रहात्तत्कुरुष्व मदर्पणम् , मामुपैष्यसीत्याद्युक्तेश्च जाता रागद्वेषशङ्का प्रतिक्षेप्येत्यभिप्रायेणाऽऽह—ममेति । अहंशब्दोऽत्र स्वेतरव्यवच्छेदपर इत्यभिप्रायेणातिलोकमित्युक्तम् । समोऽहमित्यस्य प्रतिशिरोभूतं वैषम्यं सर्वशब्देन विवक्षितमित्यभिप्रायेणाऽऽह—देवेति । जातितो देवत्वमनुष्यत्वब्राह्मणत्वक्षत्रियत्वादेः । आकारतोऽभिरूपस्त्रीत्वपुंस्त्वसमविषमाङ्गत्वादेः । वक्ष्यति हि येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रा इति । स्वभावत इत्यनेन सात्त्विकराजसत्वादिकं विवक्षितम् । देवादीनां भगवत्समाश्रयणम् ‘ तदुपर्यपि बादरायणः संभवात् ’ [ ब्र० सू० १ । ३ । २५ ] इत्यधिकरणे समर्थितम् । तिरश्चामपि गजेन्द्रवानरेन्द्रादिषु पुण्याधिक्यनिबन्धनज्ञानविशेषवत्सु प्रथितम् । तस्मात्तिर्यगधिकाराविरोधः । स्थावरेष्वपि शापादिजातेषु कचिद्ज्ञानं महर्षयः कथयन्ति । ततश्च मनोवृत्तिरूपं समाश्रयणं तत्रापि संभवेदेव । न मे द्वेष्योऽस्ति न प्रिय इत्यत्र प्रतिषेधस्य प्रसङ्गसाकाङ्क्षत्वाज्जात्यादिभिर्निकर्षोत्कर्षौ प्रतिषेध्यप्रसञ्जकतयोक्तावित्याह—अयमिति । द्वेष्यत्वप्रियत्वे हि त्याज्यत्वाज्यत्वसं-

समाश्रयणे न मे द्वेष्योऽस्ति उद्वेजनीयतया न त्याज्योऽस्ति। तत्समाश्रितत्वातिरेकेण जात्यादिभिरत्यन्तोत्कृष्टोऽयमिति तद्युक्ततया समाश्रयणे न कश्चित्प्रियोऽस्ति न संग्राह्योऽस्ति अपि त्वत्यर्थमत्प्रियत्वेन मद्भजनेन विनाऽऽत्मधारणालाभान्मद्भजनैकप्रयोजना ये मां भजन्ति ते जात्यादिभिरुत्कृष्टा अपकृष्टा वा मत्समानगुणवद्यथासुखं मय्येव वर्तन्ते। अहमपि तेषु मदुत्कृष्टेष्विव वर्ते ॥ २९ ॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥

---

ग्राह्यत्वार्थे इति तन्निषेधात्तन्निषेधः फलित इत्यभिप्रायेणोक्तम्—उद्वेजनीयतया न त्याज्योऽस्तीति न संग्राह्योऽस्तीति च। समाश्रयणाधीनप्रियप्रतिषेधभयात्तत्समाश्रितत्वातिरेकेणेत्युक्तम्। यदि न प्रियत्वहेतुतया प्रसिद्धत्वाज्जात्यादिभिरुत्कर्षात्प्रियत्वं कुतस्तर्हि स मम प्रिय इत्यादिविरोध इति शङ्कानिराकरणार्थस्तुशब्द इत्यभिप्रायेणाऽऽह—अपि त्विति। भक्त्या भजन्तीत्यनयोः पौनरुक्त्यपरिहारायान्वयमाह—अत्यर्थेति। य इत्येतदुत्कर्षापकर्षानियमाभिप्रायमित्याह—त इति। जात्यादिभिस्तुल्यानामिवान्योन्यैकरस्यं मयीत्यादिना विवक्षितमित्यभिप्रायेणोक्तम्—मत्समानगुणवद्यथासुखमिति। ननु स्वामित्वेन त्वामनुसंधाय भजतां कथं त्वयि समानगुणवद्धृतिरित्यस्योत्तरं तेषु चाहमित्यनेनोच्यत इत्यभिप्रायेणाऽऽह—अहमपीति। सौशील्यातिरेकतो मत्तो व्युत्कृष्टानहं शिरसा देवः प्रतिगृह्णातीत्युक्तनक्रियया संभावयामि। ततश्च ते मत्परमेश्वरत्वाद्यनुसंधाननिबन्धनसाध्वसविधुराः सुखं मां सेवन्त इति भावः। अहं च ते चान्योन्यं पित्रादिष्विव न्यस्तभरा इति पिण्डितार्थः। स्वजातिप्रतिनियतधर्मभजनान्नापकृष्टजातिनिर्देशविरोधः ॥ २९ ॥

एवं समाश्रयणस्वीकारे जात्याद्यपकर्षोऽकिंचित्कर इत्युक्तम्। तत्र चातिवृत्तापकर्षोऽप्यकिंचित्कर इत्युच्यतेऽपि चेदिति श्लोके-

तत्रापि तत्र तत्र जातिविशेषे जातानां यः समाचार उपादेयः परि-हरणीयश्च तस्मादतिवृत्तोऽप्युक्तप्रकारेण मामनन्यभाग्भजनैकप्रयोजनो भजते चेत् साधुरेव स वैष्णवाग्रेसर एव मन्तव्यो बहुमन्तव्यः

नेत्यभिप्रायेणाऽऽह—तत्रापीति । ब्राह्मणाद्याचारः शूद्रादेरधर्मः शूद्राद्याचारश्च ब्राह्मणादेरेवं ब्राह्मणस्य निषिद्धमद्यमांसादिकं शूद्रस्य न निषिध्यते । शूद्रस्य निषिद्धं च कपिलाक्षीरादिकं ब्राह्मणस्य प्रशस्तम् । अतः स्वजातिनियमाद्यपेक्षया दुराचारत्वं दोष इत्यभिप्रायेणाऽऽह—तत्र तत्रेति । विहिताकरणं निषिद्धक-रणं चेत्युभयमपि दुराचार इति ज्ञापनायोपादेयः परिहरणीयश्चे-त्युक्तम् । अत्र चेदित्यस्य नैरर्थक्यादिपरिहाराय दुराचारोऽपि भजते चेदित्यन्वयः प्रदर्शितः । उक्तप्रकारेणेति । सततकीर्तना-दिनेत्यर्थः । प्रकरणविशेषतोऽनन्यभागित्यस्यार्थः—भजनैकप्रयो-जन इति । तेनैव देवदेवतान्तरभजनप्रसङ्गो दूरनिरस्तः । यथोच्यते—

ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥ इति ।

ननु 'आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः' । 'आचा-रहीनं न पुनन्ति वेदाः' ।

'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' ।

इत्यादिषु सत्सु दुराचारस्य केनाऽऽकारेण साधुत्वमित्यत्राऽऽ-ह—वैष्णवाग्रेसर इति । अनन्यभजनं वैष्णवाग्रेसरत्वे प्रयोजकम् । ननु 'साधवः क्षीणदोषाः स्युः' इति भगवत्पराशरवचनात् क्षीणपापानां च कृष्णभक्तिस्मरणात्साधुशब्दोऽत्र कथं वैष्णवाग्रे-सरपर उक्तः । आचारशून्यस्य शिष्टापरिग्रहादसाधुत्वमेवेत्यत्रोत्तरं मन्तव्यमित्युच्यत इति दर्शयति—बहुमन्तव्य इति । अर्थसिद्धबोद्धव्य-तामात्रकथनं निरर्थकम् । संपूर्वस्य मनधातोश्च बहुमतिरर्थः । उपस-र्गार्थाश्च धातुलीला इति भावः । अपरिग्रहे सति खल्वसाधुत्वशङ्का

१ ख. ग. घ. ङ. सदाचार' ।

पूर्वोक्तैः सम इत्यर्थः । कुत एव तत्—सम्यग्व्यवसितो हि सः । यतोऽस्य व्यवसायः सुसमीचीनः । भगवान्निखिलजगदेककारणभूतः परं ब्रह्म नारायणश्चराचरपतिरस्मत्स्वामी मम गुरुर्मम सुहृन्मम परं भोग्यमिति

---

न तु साऽस्तीत्याह—पूर्वोक्तैः सम इति । विष्णुरेव भूत्वेत्यादौ साम्येऽप्येवकारः प्रयुज्यत इति भावः । पूर्वोक्तैर्महात्मभिरित्यर्थः । ननु स्वाचारदुराचारयोः पुष्कलविकलोपाययोर्न तावदुपायतः साम्यम् । तत एव न फलतोऽपीति शङ्कायां सम्यगित्यादिकमवतारयति—कुत एव तदिति । यत इति । हिर्हेताविति भावः । व्यवसायस्य समीचीनतां प्राधान्यतो व्यवसेयविषयविशेषेण विशदयति—भगवानिति । भगवानुभयलिङ्गकः । निखिलजगदेककारणभूत इत्यनेन ब्रह्मत्वसाधकं श्रौतं लक्षणमुक्तम् । तेन 'ज्ञात्वा भूतादिमव्ययम्' इति पूर्वोक्तं च स्मारितम् । सामान्यशब्दस्य पर्यवसानं नारायणः परं ब्रह्मेत्यादि तत्त्वनिर्णयवाक्यं चाभिप्रेत्य परं ब्रह्म नारायण इत्युक्तम् । चराचरपतिः । 'पतिं विश्वस्याऽऽत्मेश्वरम्, पतिं पतीनामित्यादि द्रष्टव्यम् । एवं परत्वव्यवसायः(ये) कथं सौलभ्याध्यवसायः—अस्मत्स्वामीति । न ह्यहं मद्विभूतेर्बहिर्भूतः स्वशेषभूतमसौ स्वयमेव लब्धुमुपक्रान्त इति भावः । एवंप(वं त)दीयेन सांसिद्धिकः संबन्धो दर्शितः । अत्यन्तमूर्खस्य मम सम्यग्ज्ञानप्रदायी महोपकारक इत्यभिप्रायेण—मम गुरुरित्युक्तम् । अनन्तमहापराधशालिनि मय्यपि शोभनहृदयोऽयमित्यभिप्रायेण—मम सुहृदित्युक्तम् । अतिक्षुद्रदुःखमिश्रनश्वरसुखकणसङ्गिनो मे निरतिशयनिर्दोषनित्यसुखसागरं स्वात्मानं प्रकाशितवानित्यभिप्रायेण—मम परं भोग्यमित्युक्तम् । गुरुत्वसुहृत्त्वे प्रापकत्वार्थे । भोग्यत्वं तु प्राप्यत्वार्थम् । सर्वैर्दुष्प्राप इति आचारबहुलेष्वपि तादृशो व्यवसायो न दृश्यते । आकरेऽपि शिलाशकलमनुपादेयम् । अप( व )करेऽपि रत्नमादरणीयमिति भावः । बहूनां जन्मनामन्ते ह्येवंविधो व्यवसाय उक्तः । स्मरति च श्रीपौष्करे—'ये जन्मकोटिभिः सिद्धाः, अनेकसंसारर(ख)चिते [संचिते] पापसमुच्चये क्षीणे जायतेऽन्तेऽत्र संस्थितीरिति । मङ्क्षुतिजनैकेश्वरऽऽह—

सर्वैर्दुष्प्रापोऽयं व्यवसायस्तेन कृतस्तत्कार्यं चानन्यप्रयोजनं निरन्तरभजनं तस्यास्ति अतः साधुरेव बहुमन्तव्यः । अस्मिन्व्यवसाये तत्कार्ये चोक्तप्रकारभजने संपन्ने सति तस्याऽऽचारव्यतिक्रमः स्वल्पवैकल्यमिति न तावताऽनादरणीयोऽपि तु बहुमन्तव्य एवेत्यर्थः ॥ ३० ॥

ननु

'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्' ॥

इत्यादिश्रुतेराचारव्यतिक्रम उत्तरोत्तरभजनोत्पत्तिप्रवाहं निरुणद्धीत्यत्राऽऽह—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

---

[ वि ]ज्ञानं व्यवसायश्च द्वौ परप्रतिपादकौ ।
व्यवसायादृते ब्रह्मन्नासादयति तत्परम् । इति ॥

व्यवसायमात्रेण कथं भजमानैः समानत्वमित्यत्राऽऽह—तत्कार्यं चेति । भजते मामित्यत्र व्यवसायोऽन्तर्गतः । व्यवसित इत्यत्राप्यर्थाद्भजनम् । अनन्यभजनमूलबहुमन्तव्यत्वहेतुतया हि व्यवसायोऽयमुक्त इति भावः । अविकलानुष्ठायीव विकलानुष्ठायी कथं बहुमन्तव्य इत्यत्राऽऽह अस्मिंश्चेति । तादृशपुरुषस्वल्पवैकल्यनिमित्तोऽनादर एव महापराधः स्यादिति भावः ।

'स्मृतः संभाषितो वाऽपि पूजितो वा द्विजोत्तम'
'स च पूज्यो यथा ह्यहम्' ॥

इत्यादिप्रमाणसूचनाभिप्रायेण निगमयति—अपि तु बहुमन्तव्य एवेति ॥ ३० ॥

अस्त्वन्येषां बहुमन्तव्यः स्वस्य तु कार्यासिद्धिरिति शङ्कापूर्वकमनन्तरश्लोकमवतारयति—ननु नाविरत इति । न केवलं प्राप्तिमात्रनिषेधः श्रुतावपि तु प्रज्ञानस्यापि निषेधोऽभिप्रेत इत्यभिप्रायेणोक्तमुत्तरोत्तरभजनोत्पत्तिप्रवाहं निरुणद्धीति । तथा चोच्यते—

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव पुनरारभते द्विज ॥ इति ॥

प्रतिबन्धकरजस्तमोमूलभूतपापनिरासाय ह्याचारः । तस्मिंश्च पापे मद्भजनेन विनिवृत्ते सति नोपासनप्रतिबन्ध इत्यभिप्राये-

मत्प्रियत्वकारिणाऽनन्यप्रयोजनमद्भजनेन विधूतपापतयैव समूलोन्मूलितरजस्तमोगुणः क्षिप्रं धर्मात्मा भवति क्षिप्रमेव विरोधिरहितसपरिकरमद्भजनैकमना भवति। एवंरूपभजनेनैव हि धर्मस्यास्य परंतपेत्युपक्रमे धर्मशब्दोदिता शश्वच्छान्तिं निगच्छति शाश्वतीमपुनरावर्तिनीं मत्प्राप्तिविरोध्याचारनिवृत्तिं च गच्छति। कौन्तेय त्वमेवास्मिन्नर्थे प्रतिज्ञां कुरु मद्भक्तावुपक्रान्तो विरोध्याचारमिश्रोऽपि न नश्यति

---

णाऽऽह—मत्प्रियत्वेति। विकलस्य विलम्बशङ्काप्रतिक्षेपार्थः क्षिप्रशब्दः। धर्मशब्दोऽत्र प्रकरणादनन्यभजनपरः। आत्मशब्दश्च तत्करणभूतमनोविषयः। अनन्यमनसः, मन्मना भवेति हि पूर्णपरब्रह्मभजनेनेव कथं भजनोत्पत्तिप्रतिबन्धकनिवर्तकमिति चेत्तन्न। परिपूर्णभजनस्य साध्यत्वात्। भक्त्युपक्रमस्य च हेतुत्वात्तदेतदाह—क्षिप्रमेवेत्यादिना। नन्वत्र शब्द(धर्म)शब्दो वर्णाश्रमधर्ममात्रपरः किं न स्यादित्यत्राऽऽह—एवंरूपेति। सामान्यशब्दस्य प्राकरणिकविशेषविषयत्वमेव न्याय्यम्। प्रयुक्तश्चायमेव शब्दः प्रक्रमे भजनरूपविशेषविषयतयेति भावः। अस्तु भजनप्रभावात्पापनिवृत्तिः। तथाऽपि परितापरहितबुद्धिपूर्वानुवृत्तदुराचारसंतानः कथं न प्रतिबन्धकं इत्यत्रोत्तरम्—शश्वच्छान्तिं निगच्छतीति। मत्प्राप्तिविरोध्याचारनिवृत्तिमिति प्रकरणविशेषितः शान्तिशब्दार्थः। प्रतिजानीहीत्यत्र ज्ञानमात्रविधावुपसर्गस्य नैरर्थक्याद्वास्तोष्पते प्रतिजानीह्यस्मानित्यादिष्वगत्या नैरर्थक्यस्वीकारात्, अत्र च ज्ञानविधेः प्रयोजनाभावात्प्रतीयमानप्रतिज्ञातार्थस्यात्यन्तनिर्णीतत्वस्थापकतयाऽपेक्षितत्वाच्चाऽऽह—कौन्तेय त्वमेवास्मिन्नर्थे प्रतिज्ञां कुर्वीति। प्रतिजानामीति स्वप्रतिज्ञानादपि प्रतिजानीहीति श्रोतुरेव प्रतिज्ञाविधानमत्यन्तस्थैर्याभिप्रायमिति व्यञ्जनायोक्तम्—त्वमेवेति। न मे भक्तः प्रणश्यतीत्ययं प्रतिज्ञाविषय इति ज्ञापनायास्मिन्नर्थे इत्युक्तम्। परिपूर्णोपासकस्य नाशप्रसङ्गाभावादपि चेत्सुदुराचार इत्युक्तविषयत्वाच्चाऽऽह—मद्भक्तावुपक्रान्तो विरोध्याचारमिश्रोऽपीति। उपक्रान्तभक्तिरपि हि भक्त इत्युच्यते। भक्तस्य नाशप्रतिषेधः शश्वदित्याद्युक्ततत्प्रतिकूलनाशमुखेन

अपि तु मद्भक्तिमाहात्म्येन सर्वं विरोधिजातं नाशयित्वा शाश्वतीं विरोधिनिवृत्तिमधिगम्य क्षिप्रं परिपूर्णभक्तिर्भवति ॥ ३१ ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥

स्त्रियो वैश्याः शूद्राश्च पापयोनयोऽपि मां व्यपाश्रित्य परां गतिं यान्ति ॥ ३२ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥

---

परिपूर्तिपर्यवसित इत्यभिप्रायेणाऽऽह—अपि त्विति । अत्रोपरिचरादिवृत्तान्तो ग्राह्यः । यथोपरिचरो भगवद्धर्ममास्थितः कदाचिद्देवानामृषीणां च विवादेऽपि भृग्वादिमहर्षिविरुद्धमनृतमभिधाय निपतितः क्षिप्रं भगवतोद्धृतः (द्धृतः) । तथा च—उपमानमशेषाणां साधूनां यः सदाऽभवदिति प्रसिद्धः प्रह्लादः कदाचिद्भगवन्तं प्रतियोद्धुं प्रवृत्तः शीघ्रं प्रत्यबुध्यत । तथा च पापिष्ठः क्षत्रबन्धुर्हि भगवन्नामप्रभावादनन्तरजन्मनि जातिं स्मरति । जातनिर्वेदो भगवन्तं शरणमुपसंगम्य ह्यमुच्यत । इति शब्दस्यास्मिन्नर्थे इत्यनेनान्वयः । अपि चेत्सुदुराचार इत्यागन्तुकपापोक्तिः ॥ ३१ ॥

अथ जन्मत एव पापिष्ठानां जात्याद्यपकर्षेऽपि स्वसमाश्रयणमात्रेण फलसिद्धिं प्रासङ्गिकतया प्रपञ्च्य तत एव जात्याद्युत्कर्षे भक्तिपौष्कल्ये च कैमुतिकन्यायमुक्त्वा जात्यादिभिरुत्कृष्टस्त्वं फले निःसंदेह उपायमातिष्ठेत्युच्यते—मां हीत्यादिश्लोकद्वयेन । स्त्रीशूद्राणां परगतिविरोधितया शङ्कितकारानुवादार्थः पापयोनिशब्दः । तत्र ये पापयोनयोऽपि स्युरित्यन्वयः । त्रैवर्णिकस्य विद्यादिमतोऽपि वैश्यस्य शूद्रादिभिः सह पापयोनित्वेन परिगणनं सत्रानधिकारित्वात् । ऋत्विज एव हि सर्वे सत्रेषु यजमानाः । आर्त्विज्यं च ब्राह्मणस्य । स च सत्राधिकाररूप उत्कर्षः, तस्माद्राजपेययाज्यार्त्विजीन इति क्षत्रियस्यापि श्रुतः ॥ ३२ ॥

पापयोनिशब्दप्रतिशिरस्त्वात्पुण्यशब्दोऽत्र पुण्ययोनित्वपरः प्रदर्शितः । किं पुनरित्यादिकैमुतिकन्यायादनायासत्ववचनं राज-

किं पुनः पुण्ययोनयो ब्राह्मणा राजर्षयश्च भक्तिमाश्रिता अतस्त्वं राजर्षिरस्थिरं तापत्रयाभिहततयाऽसुखं चेमं लोकं प्राप्य वर्तमानो मां भजस्व ॥ ३३ ॥

भक्तिस्वरूपमाह—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्या-
राजगुह्ययोगो नाम नवमोऽध्यायः ॥९॥

---

मन्मना भव मयि सर्वेश्वरे निखिलहेयप्रत्यनीककल्याणैकताने

---

र्षिप्रदर्शनमर्जुनस्य फलसिद्धिप्रतिपादनार्थमित्यभिप्रायेणाऽऽह—अतस्त्वमिति । राजर्षिशब्देन सामर्थ्यं व्यञ्जितम् । अस्थिरमित्यादिना नात्यर्थित्वम् । अनित्यशब्दस्य सततविक्रियेत्युक्तप्रकारेण स्वभावविषयत्वज्ञापनायास्थिरशब्दः । असुखशब्दस्यात्र पर्युदासवृत्त्या दुःखपरतां सांसारिकसुखस्यापि दुःखकोटिनिवेशात्सुखराहित्यपरत्वं चाभिप्रेत्याऽऽह—तापत्रयेति । इममित्यनेनातिक्षुद्रत्वं निर्दिष्टम् । प्राप्येत्यस्यानुवादरूपताज्ञापनाय प्राप्य वर्तमान इत्युक्तम् । एवमनित्यत्वासुखत्वे क्षुद्रत्वानुदर्शनाद्भजनवैमुख्यनिवृत्तिर्भवतीत्यभिप्रायः ॥ ३३ ॥

भजस्वेत्युक्तभक्तिस्वरूपनिष्कर्षोऽनन्तरं क्रियत इति संगतिं दर्शयति—भक्तिस्वरूपमाहेति । सामान्येन स(म)तासु परविद्यासूपास्यतया तदुपयुक्ततया च प्रमाणशतैः प्रतिपादिताः स्वरूपगुणादयोऽत्रास्मच्छब्देन विवक्षिता इत्यभिप्रायेणाऽऽह—मयीति । तमीश्वराणां परमं महेश्वरम् । न तस्येशे कश्चनेत्यादेरर्थमाह—सर्वेश्वरेश्वर इति । न ह्यसमर्थसेवया किंचिल्लभ्यते । न च ब्रह्माण्डान्तरादेरनीश्वरा ब्रह्मेशानादयोऽपि मोक्षदानशक्ता इति भावः । क्षेत्रज्ञेश्वरज्ञानाद्विशुद्धिः परमा मतेति ह्युच्यते । हेयास्पदस्य गुणरहितस्य भजनीयत्वाभावादितरव्यावृत्त्यर्थं सगुणनिर्गुणश्रुतीनां विषयव्यवस्थयोभयलिङ्गत्वमाह—निखिलेति । समस्तानिष्टानि-

सर्वज्ञे सत्यसंकल्पे निखिलजगदेककारणे परस्मिन्ब्रह्मणि पुरुषोत्तमे पुण्डरीकदलामलायतकरुणेक्षणे स्वच्छनीलजीमूतसंकाशे युगपदुदितदिनकरसहस्रतेजसि लावण्यामृतमहोदधावुदारपीवरचतुर्बाहावत्युज्ज्वलपीताम्बरेऽ

वर्तकत्वादनन्तभोग्यमयत्वाच्चायमेवोपास्य इति भावः । अनन्तमङ्गलगुणोपलक्षकतया ध्येयलक्षणजगत्कारणत्वमोक्षप्रदत्वौपयिकं गुणद्वयं सर्वज्ञे सत्यसंकल्प इत्युक्तम् । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' [ मु० । १ । १ ] इति । 'सत्यकामः सत्यसंकल्पः' [ छा० ८ । ५ । १ ] इति च । अनिष्टनिवृत्त्यादौ चास्याज्ञातं सहकारिसापेक्षत्वं च नास्तीति भावः । 'यतो वा इमानि भूतानि जायन्ते ।' [ तै० ३ । १ ] इत्युपक्रम्य तद्विजिज्ञासस्व, कारणं तु ध्येयमित्यात्राभिप्रायेण—निखिलजगदेककारण इत्युक्तम् । निखिलशब्देनाव्यक्तादेर्ब्रह्मरुद्रादेश्च संग्रहः । व्योमातीतनिर्गुणवादादिनिराकरणं सामान्यविशेषशब्दयोरैकरस्यं चाभिप्रेत्य—परस्मिन् ब्रह्मणि पुरुषोत्तम इत्युक्तम् । अनेन सर्वात्मकत्वं सर्वविलक्षणत्वं चाविरुद्धमुपदर्शितं भवति नारायणानुवाकपुरुषसूक्तादिकं च स्मारितम् । एतावता विशिष्टं स्वरूपमुक्तम् । अथ सर्वशाखादिपठितपुरुषसूक्तादिसिद्धं शुभाश्रयप्रकरणप्रपाञ्चितं च विग्रहतद्गुणादिकमुच्यते । तस्य 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' ( छा० १ । ६ । ७ ) इत्याद्युक्तं परत्वचिह्नमाह—पुण्डरीकदलामलायताक्ष इति । स्वच्छेत्यादिना नीलतोयदमध्यस्थेत्यादिकमनुसंहितम् । स्वच्छत्वं मणिमुकुरसलिलकाचादिवद्व्यवहितप्रकाशप्रतिबिम्बादियोग्यः प्रसादविशेषः । दिवि सूर्यसहस्रस्येत्यादि वक्ष्यमाणं तमेव भान्तमित्यादिश्रुतिं चाभिप्रेत्योक्तम्—युगपदित्यादि । श्रुत्यादिप्रसिद्धं बाहूनामुदारत्वमोजस्यमभिमतफलप्रदत्वं च । यत्र रूपान्तरं न शिष्टं तत्र वक्तुर्वसुदेवनन्दनस्य रूपं विवक्षितम् । तच्चावतारोपलक्षणम् । चतुर्भुजत्वं भगवतः कृष्णस्य पररूपस्य सांसिद्धिकं द्विभुजत्वं सहस्रभुजादिकं चाऽऽहार्यमित्याशयेनोक्तम्—चतुर्बाहाविति । अथवाऽपि चतुर्भुजत्वम्—

भुजैश्चतुर्भिः समुपेतं ममेदं रूपं विशिष्टं दिवि संस्थितं च ।
भूमौ गतं पूजयताप्रमेयं सदा हि तस्मिन्निवसामि देवाः ॥

इत्यादिकमिह भाव्यम् । दिव्याम्बरयोगमाह—अत्युज्ज्वलेति ।

मलकिरीटमकरकुण्डलहारकेयूरकटकादिभूषितेऽपारकारुण्यसौशील्यसौन्दर्यमाधुर्यगाम्भीर्यौदार्यवात्सल्यजलधावनालोचितविशेषाशेषलोकशरण्ये सर्वस्वामिनि तैलधारावदविच्छेदेन निविष्टमना भव। तदेव विशिनष्टि-

---

मूर्धादिपादान्तदिव्यावयवगतसमस्ताभरणवर्गोपलक्षणतया किरीटाद्युक्तिः। ध्येयः सदेत्युपक्रम्य केयूरवान्मकरकुण्डलवान् किरीटी, इत्यादिकमिह द्रष्टव्यम् । मकरशब्दो मकराकारकुण्डलपरः । तेजःप्राचुर्यं प्रतिकूलैः दुष्प्रेक्षत्वं चाभिप्रेत्य युगपदित्यादिकमुक्तम् । लावण्येत्यादिना तु तस्यैवानुकूलभोग्यत्वाकर्षकत्वादिकमभिप्रेतम् । चक्षुरानन्दजनकस्तेजोविशेषो हि लावण्यम् । तत इदमुच्यते—

लोचनैरनुजग्मुस्ते तमा दृष्टिपथात्पुनः ।
मनोभि( भि ) रनुजग्मुश्च कृष्णं प्रीतिसमन्विताः ॥
अतृप्तमनसामेव तेषां केशवदर्शने ।
क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः ॥
अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम् ।
न हि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् ॥
नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे । इति ॥

अपारेत्यादिना सौलभ्योपयोगिनोऽपिताः सुन्दरत्वादिमिश्राः समाश्रयणीयत्वेऽत्यन्तापेक्षिताः स्वरूपरूपयोर्गुणा उक्ताः। सर्वलोकशरण्यो यः, सुदुष्टो वाऽप्यदुष्टो वा, विभीषणो वा सुग्रीव(वा) यदि वा रावणः स्वयम्, इत्यादिकमनुसंधाय कारुण्यादिफलितमाह—अनालोचितेति । आश्रितसंरक्षणं स्वलाभं मत्वा प्रवर्तत इत्यभिप्रायेणोक्तम्—सर्वस्वामिनीति । 'कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इति ह्युक्तम् । निदिध्यासितव्यः, ध्यायीत ध्रुवा स्मृतिः 'आवृत्तिरसकृदुपदेशात्' [ ब्र० सू० ४ । १ । १ ] इत्याद्यनुसंधानेन मनःशब्दस्यात्र ध्यानाख्यमनोवृत्तिविशेषविषयतामाह--तैलधारेति । मय्येव मन आधत्स्वेत्युच्यते । अत्र च मामेवैष्यसीति साध्यगतावधारणात्साधनेऽप्यवधारणं विवक्षितमिति गम्यते । तेन चानन्यमनस्त्वादिकं सिद्धम् । ततश्च तैलधारावदविच्छेदोऽपि फलित इति भावः ।

'यमेवैष वृणुते तेन लभ्यः' [ का० । २३ ] इति श्रुत्युपबृंहणतामभिप्रेत्याऽऽह--तदेवेति । भक्तेरपि ज्ञानविशेषरूपत्वा-

मद्भक्तोऽत्यर्थं मत्प्रियत्वेन युक्तो मन्मना भवेत्यर्थः । पुनरपि विशिनष्टि—मद्याजि अनवधिकातिशयप्रियमदनुभवकारितमद्यजनपरो भव । यजनं नाम परिपूर्णशेषवृत्तिः । औपचारिकसांस्पर्शिकाभ्यवहारिकादिसकलभोगप्रदानरूपो हि यागः । यथावदनुभवजनितनिरवधिकातिशयप्रीतिकारितमद्यजनपरो भवसि तथा मन्मना भवेत्युक्तं भवति । पुनरपि तदेव विशिनष्टि—मां नमस्कुरु । अनवधिकातिशयप्रियमदनुभवकारितात्यर्थप्रियाशेषशेषवृत्तावपर्यवस्यन् मय्यन्तरात्मन्यतिमात्रप्रह्वी-

---

द्विशेषकत्वमुपपद्यत इत्यभिप्रायेणाऽऽह—अत्यर्थेति । स्वतन्त्र्यार्थान्तरविधानशङ्कानिरासायाऽऽह—पुनरपीति । भक्तिस्वरूपविशेषनिष्कर्षपरत्वात्तदसाधारणशास्त्रविशेषप्रतिपादितपूजाविशेषपरोऽयं यजनशब्द इत्यभिप्रायेणाऽऽह—यजनं नामेति । शेषवृत्तिः कैङ्कर्यम् । इदं च पत्रं पुष्पमित्यादिना प्रदर्शितस्य तत्तच्छास्त्रप्रपञ्चितस्य संग्रहशासनम् । अतोऽत्र यजिर्दर्शपूर्णमासादिविषय इति न भ्रमितव्यम् । ' यज देवपूजायाम् ' इत्येव च पठ्यते देवतामुद्दिश्य द्रव्यत्यागो याग इति चाऽऽहुः । अग्निहोत्रादिव्यतिरिक्तेष्वपि पञ्चमहायज्ञादिषु यजिर्निरूढः । अन्यत्रापि कृष्णो वाक्यैरिज्यते संप्रश्नैरित्यादयः प्रयोगाः । अतोऽत्र भगवच्छास्त्रादिप्रपञ्चितविषयोऽयं यजिरित्यभिप्रायेणाऽऽह—औपचारिकेति । पूर्वोक्तादधिकरूपत्वं दर्शयितुमपर्यवस्यन्नित्यन्तमुक्तम् । वृत्त्यन्तरशब्देन दासस्वरूपप्राप्तता विवक्षिता । अतिमात्रशब्देन तस्य निरतिशयभोगत्वं सूचितम् । त्रिविधप्रतिसंग्रहाय चौपचारिका नीराजनादयः । सांस्पर्शिकाः स्रक्चन्दनादयः । आदिशब्देन सांदृष्टिकदीपादिग्रहणम् । मद्याजीत्यनेन बाह्यक्रियापरेण मन्मनस्त्वं कथं विशेष्यत इत्यत्राऽऽह—यथेति । पुनरपीत्याद्यपि पूर्ववत् । नमधातुस्वरूपनिरूपणेन प्रह्वीभावशब्दः ।

> प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका परा ।
> उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते ॥

इति हि नमःशब्दो विवृतः । ज्ञानविशेषकत्वव्यक्त्यर्थं व्यवसायशब्दः । परायण इत्यत्र परशब्दविशेषणसामर्थ्यादवधारणं विव-

भावव्यवसायं कुरु। मत्परायणोऽहमेव परमयनं यस्यासौ मत्परायणो मया विनाऽऽत्मधारणासंभावनया मदाश्रय इत्यर्थः । एवमात्मानं युक्त्वा मत्परायणस्त्वमेवमनवधिकातिशयप्रीत्या मदनुभवसमर्थं मनः प्राप्य मामेवैष्यसि। आत्मशब्दो ह्यत्र मनोविषयः। एवंरूपेण मनसा मां ध्यात्वा मामनुभूय मामिष्ट्वा मां नमस्कृत्य मत्परायणो मामेव प्राप्स्यसीत्यर्थः। तदेवं लौकिकानि शरीरधारणार्थानि वैदिकानि च नित्यनैमित्तिकानि कर्माणि मत्प्रीतये मच्छेषतैकरसो मयैव कारित इति कुर्वन्सततं मत्कीर्तनयजननमस्कारादिकान्प्रीत्या कुर्वाणो मन्नियम्यं निखिलजगन्मच्छेषतैकरसमिति चानुसंदधानोऽत्यर्थप्रियमद्गुणगणं चानुसंधा-

क्षितमित्यभिप्रायेणाऽऽह—अहमेवेत्युक्तम्। फलितमाह—मया विनेति। एषैव भक्तेः परमा काष्ठा प्राप्तेरव्यवहितपूर्वभाविनीति प्रबलाभिलाषज्ञापनार्थो मत्परायणशब्द इत्यभिप्रायः । एवंशब्दानूदितमाकारमाह—अनवधिकेत्यादिना । आत्मानं युक्त्वेति पदयोरत्रोचितार्थप्रदर्शनम्—मनः प्राप्येति । युजिरत्र योगः समाध्यर्थो वा मन्मना भवेत्युक्तार्थपरत्वमेवमात्मानमित्यनुवादेन प्रतीयत इत्यभिप्रायेणाऽऽह—आत्मशब्दो हीति । मनसोऽत्र निर्देशो ध्यानाधिकरणत्वेनेति प्रदर्शयञ्श्लोकपिण्डितार्थमाह—एवंरूपेणेति। निरतिशयप्रीतिमतेत्यर्थः। ध्यानादिकं मद्भक्त इति विशेषणादुपभोगरूपमित्यभिप्रायेण—मामनुभूयेत्युक्तम् । अथ सुखग्रहणायाध्यायप्रधानार्थभूतसाङ्गोपाङ्गफलशिरस्कभक्तिस्वरूपं संक्षेपेण निष्कृष्य वदन्नुपसंहरति—तदेवमिति । तस्मादित्यर्थः। तत्र दुःखबहुलसंसारसागरपतितत्वान्मम च परत्वसौलभ्यादियुक्तस्य समस्तदुःखसागरोत्तरणसांयात्रिकत्वादुपायस्य चात्यन्तसुखकरत्वादिगुणयुक्तत्वादित्यर्थः। एवमिति । पूर्वग्रन्थ उक्तप्रकारेणेत्यर्थः। लौकिकानीत्यादि कुर्वन्नित्यन्तं यत्करोषीत्यादेरर्थः। नियाम्यमित्यादिकं मया ततमित्यादेरभिप्रेतकथनम् । अत्यर्थप्रियमद्गुणगणमिति समोऽहं पत्रं पुष्पमित्यादेरर्थः । गुणानुसंधानाद्भक्तेः पुरुषसाध्यत्वं युज्यत इत्यभिप्रायेणाऽऽह—मद्गुणगणं चानु-

याहरहर्मदुक्तलक्षणमिदमुपासनमुपादधानो मामेव प्राप्स्यसि ॥ ३४ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
नवमोऽध्यायः ॥ ९ ॥

---

संधायाहरहर्मदुक्तलक्षणमिदमुपासनमुपादधान इति । यजन्ते मामित्यादिकमत्रानुसंहितम् । अहरहरित्यादिकं मन्मना इत्यादेर्विवक्षितम् । आप्रयाणत्वसिद्ध्यर्थमहरहरित्याद्युक्तम् । उक्तलक्षणमिति । अनन्यप्रयोजननमस्कारादिभिरकृतदेकधारकत्वदशापर्यन्तनिरतिशयप्रीतिरूपमित्यर्थः ॥ ३४ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतौ श्रीमद्रामानुजविरचितश्रीमद्भगवद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः ।

भक्तियोगः सपरिकर उक्तः । इदानीं भक्त्युत्पत्तये तद्विवृद्धये च भगवतो निरङ्कुशैश्वर्यादिकल्याणगुणगणानन्त्यं कृत्स्नस्य जगतस्तच्छरीरतया तदात्मकत्वेन तत्प्रवर्त्यत्वं च प्रपञ्च्यते—

श्रीभगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

मम माहात्म्यं श्रुत्वा प्रीयमाणाय ते मद्भक्त्युत्पत्तिविवृद्धिरूपहितका-

---

दशमसंगतिं वक्तुं नवमार्थं सप्तमप्रभृत्यध्यायत्रयार्थं वा संगृह्याऽऽह—भक्तियोग इति ।

स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनता मतिः ।
भक्त्युत्पत्तिविवृद्ध्यर्था विस्तीर्णा दशमोदिता ॥

इति संग्रहश्लोकं व्याकुर्वन् संगतिमाह—इदानीमिति । पूर्वत्र सपरिकरभक्तियोगस्वरूपप्रपञ्चनपरतया स्वकल्याणगुणादेः संग्रहेण कथनम् । इह तु तत्प्रपञ्चनमित्यवसरप्राप्तिरपौनरुक्त्यं च विस्तीर्णेत्यनेन विवक्षितमिति दर्शयितुम्—इदानीं प्रपञ्च्यत इति पदद्वयम् । अर्जुनस्य वक्ष्यमाणार्थश्रवणयोग्यत्वं तस्यार्थस्य च परमहितसाधनत्वादिकं च वदन् सोपच्छन्दनं सावधानयति—भूय एवेति श्लोकेन । प्रश्नमन्तरेणापि स्वयमेव प्रतिपादने हेतुः प्रीयमाणायेत्यनेनोच्यत इत्यभिप्रायः । तादृशप्रीतेर्विषयं दर्शयति—मम माहात्म्यं श्रुत्वेति । बाहुशालिनां हि परोत्कर्षकथनमसूयापदम् । भवतस्तु शिशुपालादिव्याकुले जगति भाग्यवशादीदृशप्रीतिः संजातेति महाबाहो प्रीयमाणायेत्यनयोर्भावः । यद्वा बाहुबलाद्यथा ते बाह्यशत्रुविष ( ज )यस्तथा मद्विषयप्रीतिबलादान्तरशत्रवोऽपि त्वया जिता इति भावः । प्रकरणादर्थस्वभावाच्च हितं विशिनष्टि—मद्भक्त्युत्पत्तिविवृद्धिरूपेति । सर्वपापैः

मनया भूयो मन्माहात्म्यप्रपञ्चविषयमेव परमं वचो यद्वक्ष्यामि तद्वहितमनाः शृणु ॥ १ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

सुरगणा महर्षयश्चातीन्द्रियार्थदर्शिनोऽधिकतरज्ञाना अपि मे प्रभवं प्रभावं न विदुः, मम नामकर्मस्वरूपस्वभावादिकं न जानन्ति । यतस्तेषां देवानां महर्षीणां च सर्वशोऽहमादिः । तेषां स्वरूपस्य ज्ञानश-

---

प्रमुच्यते सोऽविकम्पेन योगेन युज्यत इति हि विस्तर इति भावः । उक्तमात्रस्य पुनरपि (भि) धाने प्रयोजनाभावाद्भूय एवेत्यनेन प्रक्रान्तगुह्यतमानुबन्ध्यर्थप्रपञ्चरूपत्वं विवक्षितमित्यभिप्रायेण—भूयो मन्माहात्म्यप्रपञ्चनविषयमेवेत्युक्तम् । एतेनैव वचसः परत्वे हेतुरपि दर्शितः । शृण्वत एवार्जुनस्य पुनः शृण्विति विधानं विशिष्टश्रवणार्थमित्यभिप्रायेणाऽऽह—तद्वहितमना इति । पूर्वमनसूयवे दोषानिवृत्त्या गहनमात्रमुक्तम् । इदानीमुच्यमाने प्रीयमाणाय गुणसंपत्त्याऽतिगहनमुच्यते । अतस्त्वयाऽत्यन्तावहितेन भवितव्यमिति भावः ॥ १ ॥

वक्ष्यमाणस्य ज्ञानस्यातिदुर्लभत्वमादरणीयत्वायोच्यते—न मे विदुरिति श्लोकेन । सुरगणा महर्षय इत्याभ्यां प्रतिषेधोपायिकप्रतिषेध्यसंभावनास्थलप्रदर्शनमित्यभिप्रायेणोक्तम्—अतीन्द्रियार्थदर्शिनोऽधिकतरज्ञाना अपीति । प्रभवगोचरवेदनमात्रं निषिध्यते । न तु प्रभवः, विशिष्टनिषेधे गौरवात् । कर्माधीनोत्पत्तेरभावादेव तद्वेदनस्य निषेद्धुं युक्तत्वात् । अनन्तरं च यो मामिति प्रभावज्ञानमेवोच्यते न तु जन्मज्ञानम्, अजमित्येव वचनात् । अत एवावताररहस्यविषयत्वमपि नात्रान्वितं प्रपञ्चितं च तत्प्रागेव । इह त्वन्यत्प्रपञ्च्यते । ततश्चात्र देवर्षिभिरप्यवेद्य । ईश्वरे विद्यमानश्च प्रभवः प्रकर्षेण सत्ताप्रभव एव भवितुमर्हतीत्यभिप्रायेण प्रभावमित्युक्तम् । प्रभावं विविच्याऽऽह—मम नामेति । जन्मविषयत्वे हेतुरनन्वित इत्यभिप्रायेण यत इति । अनेन नहिशब्दस्य हेतुपरता दर्शिता । सर्वश इति न देवादीनां कात्स्न्यमात्रं विवक्षितम् । तस्य बहुवचनादसंकोचादपि सिद्धेरतस्तदभिप्रेतं व्यञ्जयति—तेषां स्वरूपस्येत्यादिना । कथमसौ प्रभावापरिज्ञानहेतुरिति

क्त्यादेश्चाहमेवाऽऽदिः । तेषां देवत्वदेवर्षित्वादिहेतुभूतपुण्यानुगुणं मया दत्तं ज्ञानं परिमितमतस्ते परिमितज्ञाना मत्स्वरूपादिकं यथावन्न जानन्ति ॥ २ ॥

तदेतद्देवाद्यचिन्त्यस्वरूपयाथात्म्यविषयज्ञानं भक्त्युत्पत्तिविरोधिपापविमोचनोपाय इत्याह—

योो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

न जायत इत्यजः। अनेन विकारिद्रव्यादचेतनात्तत्संसृष्टात्संसारिचेत-

---

शङ्कायामभिप्रेतं हेतुत्वप्रकारं विशदयति—तेषां देवत्वेति । वैषम्यनैर्घृण्यपरिहाराय परिमितत्वसिद्धये च पुण्यानुगुण्यकथनम् । ' को अद्धा वेद क इह प्रवोचत् । कुत आ जाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनाय । अथा को वेद यत आबभूव । इयं विसृष्टिर्यत आबभूव । यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद ' इत्यादिश्रुत्यभिप्रायेणाऽऽह—अत इति ।

यत्र देवा न मुनयो न चाहं न च शंकरः ।
जानाति परमेशस्य तद्विष्णोः परमं पदम् ' ॥

इत्यादि च द्रष्टव्यम् ॥ २ ॥

देवादिभिरप्यवेदनीयत्वकथनस्य वक्ष्यमाणोपयोगं व्यञ्जयन् यो मामितिश्लोकाभिप्रेतमाह—तदेतदिति । यो वेत्तीत्यनुवादपरत्वप्रतीतावप्यर्थतः फलानुवादेनोपायविधाने तात्पर्यमित्यभिप्रायेण—उपायमाहेत्युक्तम् । अजशब्दस्य व्यवच्छेद्यप्रदर्शनाय व्युत्पत्तिं तावदाह—न जायत इत्यज इति । विशेषणसामर्थ्यफलितां तदुचिताद्व्यवच्छेद्याद्व्यावृत्तिमाह—अनेनेति । विकारिद्रव्यात्तत्संसृष्टादित्युभाभ्यां व्यवच्छेदयोग्यत्वं दर्शितम् । अजो नित्यः शाश्वत इत्यादिभिर्नित्यस्य जीवस्य कथमचित्संसर्गमात्रेणाजशब्दव्यवच्छेद्यत्वमित्यत्राऽऽह—संसारिचेतनाच्चेति । ईश्वरस्यापि

नाच्च विसजातीयत्वमुक्तम् । संसारिचेतनस्य हि कर्मकृताचित्संसर्गो जन्म। अनादिमित्यनेन पदेनाऽऽदिमतोऽजान्मुक्तात्मनो विसजातीयत्वमुक्तम्। मुक्तात्मनो ह्यजत्वमादिमत् । तस्य हेयसंबन्धस्य पूर्ववृत्तत्वात्तदर्हताऽस्ति । अतोऽनादिमित्यनेन तदनर्हतया तत्प्रत्यनीकतोच्यते । 'निरवद्यम्' [ श्वे० ६।१९ ] इत्यादिश्रुत्या च । एवं हेयसंबन्धप्रत्यनीकस्वरूपतया तदनर्हं मामजं लोकमहेश्वरं लोकेश्वराणामपीश्वरं मर्त्येष्वसंमूढो यो वेत्ति । इतरसजातीयतयैकीकृत्य मोहः संमोहः तद्रहितोऽ-

सर्वशरीरतया तत्तदचित्संसर्गस्य विद्यमानत्वात्तद्व्युदासाय—कर्मकृतेत्युक्तम्। मुक्तस्यापि स्वरूपानादित्वमस्ति । ततः कथं व्यवच्छेद्यत्वमित्यत्राऽऽह—मुक्तात्मनो ह्यजत्वमादिमदिति । अजत्वविशेषणानादित्वमिह विवक्षितम् । स्वरूपानादित्वविवक्षायां[1] तु पौनरुक्त्यमिति भावः। मुक्तदशायामचित्संसर्गो नास्ति। प्राचीनसंसर्गविवक्षायां बद्धवे(दे)व व्यवच्छेदः स्यात्तस्तदानींतनस्वरूपाद्व्यावृत्तिः कथमुक्ता स्यादित्यत्राऽऽह—तस्येति । सहादि(कारि)संनिधौ कुर्वत्स्वभावत्वं सहकार्यभावप्रयुक्तकार्याभावत्वमपि हि योग्यतेत्यभिप्रायः । कालविशेषावच्छेदरहितनिरवद्यत्वविधायकश्रुत्या चायमर्थः सिद्ध इत्याह—निरवद्यमिति । अन्वयार्थमाह—एवमिति । देवैर्महर्षिभिश्च दुर्लभं ज्ञानं मन्दप्रज्ञेषु मर्त्येषु भाग्यवशात्कस्यचिज्जायत इति निर्धारणार्थत्वमुचितम्। उत्तरार्धे च फलनिर्देशेनासंमूढशब्दार्थं वक्तुमुपसर्गाभिप्रेतमर्थं व्यञ्जयति—इतरेति ।

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥

इत्यनन्तरमेव वक्ष्यमाणत्वादत्रापि तदुपयुक्तपापविमोक्ष एवाभिप्रेत इत्यभिप्रायेण भक्त्युत्पत्तिविरोधिभिरित्युक्तम् । लोकमहेश्वरे परस्मिन्प्रतिपन्ने चाऽप्रतिपन्ने वा न संमोहप्रसङ्गो येन तन्निषेधः स्यात्। कथं च ब्रह्मरुद्रसनकादिषु जीवत्सु परमपुरुषस्यैव लोकमहेश्वरत्वं कथं वा बद्धमुक्तविलक्षणत्वेऽपि

१ ख ग. घ. °स्ति जन्म।

संमूढः। स भवत्युत्पत्तिविरोधिभिः सर्वैः प्रमुच्यते। एतदुक्तं भवति— लोके मनुष्याणां राजेतरमनुष्यसजातीयः केनचित्कर्मणा तदाधिपत्यं प्राप्तस्तथा देवानामधिपतिरपि। तथा ब्रह्मण्डाधिपतिरपीतरसंसारिसजातीयः। तस्यापि भावनात्रयान्तर्गतत्वात्। 'यो ब्रह्माणं विदधाति'

मित्यसूरिवर्गाद्व्यवच्छेद इत्यादिशङ्कायां संमोहोदयतदभावप्रकारौ विवृणोति—एतदुक्तमिति। तत्तदधिपतीनामपि लोके तत्तत्सजातीयत्वदर्शनादत्रापि सामान्यतोऽवगते शङ्कावकाशः। मनुष्यदेवाधिपतिप्रभृतेरपि कर्मविशेषमूलपरिमितदेशकालविषयभगवत्संकल्पाधीनैश्वर्ययोगितया भगवत एवोत्तरावधिरहितमैश्वर्यम्। लोकमहेश्वरशब्देन सर्वगोचरैश्वर्यस्य विवक्षितत्वादेव नित्यानामपि व्यवच्छेदसिद्धिरिति भावः। सजातीयस्य कथमधिकत्वसिद्धिरित्यत्रोक्तम्—केनचित्कर्मणेति। कथमण्डाधिपतेस्तदधीनस्वरूपस्थितिप्रवृत्तिभिरितरसंसारिभिः साजात्यमित्यत्राऽऽह—तस्यापीति। कर्मभावना ब्रह्मभावनोभयभावनेति भावनात्रयम्। तेषामपि भावनात्रययोगादिकं भगवत्पराशरशौनकादिभिः प्रपञ्चितम्। यथा—हिरण्यगर्भादीनुपक्रम्य—

अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥ इति।
आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितसंसारवशवर्तिनः॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः॥ इति।

प्रतिबुद्धैरनुपास्यत्वं भगवदधीनत्वं च पञ्चम एव वेदे व्यक्तम्—

ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्॥
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ।
तदादर्शितपन्थानौ सृष्टिस्थित्यन्तकारकौ।

इत्यादिभिः। भावनात्रयान्वयेन सह हिरण्यगर्भस्य कार्यत्वादिसमुच्चयार्थं चशब्दः। सनत्कुमाररुद्रादिब्रह्मकुमारवर्गम-

१ ख. ग. घ. °पि भुवनत्र°।

इति श्रुतेश्च । तथाऽन्येऽपि ये केचनाणिमाद्यैश्वर्यं प्राप्ताः । अयं तु लोकमहेश्वरः कार्यकारणावस्थादचेतनाद्बद्धान्मुक्ताच्च चेतनादीशितव्यात्सर्वस्मान्निखिलहेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणैकतानतया नियमनैकस्वभावतया च विसजातीय इतीतरसजातीयत्वसंमोहरहितो यो मां वेत्ति सर्वैः पापैः प्रमुच्यत इति ॥ ३ ॥

एवं स्वस्वभावानुसंधानेन भक्त्युत्पत्तिविरोधिपापनिरसनं विरोधिनिरसनादेवाऽर्थतो भक्त्युत्पत्तिं च प्रतिपाद्य स्वैश्वर्यस्वकल्याणगुणगणप्रपञ्चानुसंधानेन भक्तिवृद्धिप्रकारमाह—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥

बुद्धिर्मनसो निरूपणसामर्थ्यम् । ज्ञानं चिदचिद्वस्तुविशेषनिश्चयः । असंमोहः पूर्वगृहीताद्रजतादेर्विसजातीये शुक्तिकादिवस्तुनि सजातीय-

---

भिप्रेत्याऽऽह—तथाऽन्येऽपीति । अणिमादीति । ‘अणिमा महिमा च तथा लघिमा गरिमा वशित्वमैश्वर्यम् । प्राप्तिः प्राकाम्यं चेत्यष्टैश्वर्याणि योगयुक्तस्य’ । तानि च कर्माधीनभगवत्संकल्पाधीनान्येव । रौद्रस्याणिमाद्यैश्वर्यस्य क्वचिदकृत्रिमत्वोक्तिरपि जन्मप्रभृतिसिद्धतामाह । अन्यथा ‘महादेवः सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव ।’ इत्यादिभिर्विरोधात् । लोकशब्दो लोक्यत इति व्युत्पत्त्या सर्वसंग्राहक इत्यभिप्रायेणाऽऽह—कार्येति । निखिलेत्यादिकं महच्छब्दस्याभिप्रेतविवरणम् । नियमनैकस्वभावतयेतीश्वरशब्दस्य ॥ ३ ॥

भक्त्युत्पत्तिविवृद्ध्यर्थेत्यत्र विवक्षितं विवृण्वन्नुक्तेन तत्फलितेन च वक्ष्यमाणप्रकरणस्य च संगतिमाह—एवमिति । बुद्धिज्ञानशब्दयोः पौनरुक्त्यपरिहाराय बुद्धिमत्त्वाज्जानातीतिप्रयोगानुसारेण शक्तिलक्षणया बुध्यतेऽनयेति तद्व्युत्पत्त्या वा हेतुकार्थपरतया व्याख्याति—बुद्धिर्मनसो निरूपणसामर्थ्यमिति । असंमोहात्सत्यात्तद्धेतुभूतं ज्ञानमिह विवक्षितमित्यभिप्रायेणाऽऽह—ज्ञानं चिदचिद्वस्तुविषयो निश्चय इति । बुद्धिज्ञानशब्दयोरध्यवसायमोक्षधीविषयत्वेन व्याख्यानं शब्दद्वयसंकोचाद्विप्रसङ्गादनादृतम् । विजातीये सजातीयताबुद्धिः संमोहः । तदुदाहरति—पूर्वेति । पूर्वगृहीतादापणादिनिष्ठतयाऽनुभूतादित्यर्थः । इदं च

---

१ ख. °ल्याणगुणगणे° । २ ध. प. घ. °यन्त्रितैक° । ३ ख. ग. व. °नसश्चिदचिद्व° । ङ. °नसः सदसन्निरू° ।

तानुद्धिनिवृत्तिः । क्षमा मनोविकारहेतौ सत्यप्यविकृतमनस्त्वम् । सत्यं यथादृष्टविषयं भूतहितरूपं वचनम् । तदनुगुणा मनोवृत्तिरिहाभिप्रेता मनोवृत्तिप्रकरणात् । दमो बाह्यकरणानामनर्थविषयेभ्यो नियमनम् । शमोऽन्तःकरणस्य तथा नियमनम् । सुखमात्मानुकूलानुभवः ।

---

स्मर्यमाणाध्यासोदाहरणम् । न कोपाख्यविकाराभावमात्रे सुषुप्त्यादिषु क्षमाशब्दोऽपि तु कोपहेतुषु सत्सु तदभावे तत्प्रयोग इत्यभिप्रायेणाऽऽह—मनोविकारेति । क्रोधहेतावाक्रोशताडनादौ सत्यपीत्यर्थः । ननु कथं हेतौ सति तत्कार्यनिवृत्तिः । तथात्वे तस्य हेतुत्वमेव हीयते । उच्यते । न ह्यवश्यं हेतौ सति कार्येण भवितव्यमिति नियमः । अपि तु प्रतिबन्धकराहितायां सामग्र्यां सत्याम् । अन्यथा प्रत्येकं हेतूनां प्रतिबन्धकानां च तत्तत्कार्यजनकत्वे कार्यस्य सदातनत्वसार्वत्रिकत्वप्रसङ्गात् । नित्यविभोश्च कारणस्य त(स)द्भावात् । तर्हि कः क्षमायां विस्मय इति चेद्यथा मणिमन्त्रादिभिः स्फोटसामग्री स्तभ्यते तथा प्रबलविवेकाख्यप्रतिबन्धकेन कोपसामग्र्या दुर्निवारायाः स्तम्भनादिति भावः । वस्तुसत्यत्वस्य यथार्थदर्शनमप्यपेक्षितम् । तथाऽपि यथादृष्टवचनमात्रे वक्तुर्नापराधो भ्रमस्य दैवागतत्वादित्यभिप्रायेण—यथादृष्टविषयमित्येतावदुक्तम् । परमार्थत्वेऽपि परार्थहेतोः ' सत्यं भूतहितं प्रोक्तम् ' इत्यादिभिः सत्यत्वप्रतिक्षेपाद्भूतहितरूपेति विशेषितम् । भावशब्दस्य मनोवृत्तौ प्रसिद्धिप्रकर्षबलप्रत्ययमायनयं चाभिप्रेत्य सत्यशब्दस्यात्र लाक्षणिकत्वमाह—तदनुगुणेति । शमशब्दयोरेकैकस्योभयनियमनाभिधानसामर्थ्येऽपि पौनरुक्त्यपरिहाराय विषयभेदे वक्तव्ये नियमनक्रमेण दमशमयोर्बाह्यान्तरकरणविषयत्वोक्तिः । शास्त्रीयेभ्यो नियमनस्य निषिद्धत्वात्—अनर्थविषयेभ्य इत्युक्तम् । तथेति । अनर्थविषयेभ्य एव । अनुकूलत्वमात्रं प्रतिकूलत्वमात्रमेव च सुखदुःखयोर्लक्षणम् । तथाऽपि मनोवृत्तिरूपत्वसिद्ध्यर्थमनुभवशब्दः । सुखदुःखभयाभयमध्यपठितत्वात् । भवोऽभाव इत्यत्राऽपि परस्परविरुद्धार्थविषयत्वं संभवदपरित्याज्यम् । ततश्च भवभावशब्दयोः प्रत्ययमात्रभेद

---

१. ख., ग., घ. °नम् । तच्च सत्यं. तदनुगुणमनोवृत्तिभिरनीहादिभिः प्रयतमनोवृत्तिप्रकारकम् । ङ° ।

दुःखं प्रतिकूलानुभवः। भवो भवनम्। अनुकूलानुभवहेतुकं मनसो भवनम्। अभावः प्रतिकूलानुभवहेतुको मनसोऽवसादः। भयमागामिनो दुःखस्य हेतुदर्शनजं दुःखम्। तन्निवृत्तिरभयम्॥ ४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥ ५॥

अहिंसा परदुःखाहेतुत्वम्। समताऽऽत्मनि सुहृत्सु विपक्षेषु चार्थानर्थ-

---

एव न त्वर्थभेदः। तत्र चाभाव इत्येव पदच्छेदः। तयोरपि वृत्तिरूपत्वं वक्तव्यम्। प्रस्तुतयोरेव च सुखदुःखयोस्तद्धेतुत्वमुचितम्। अत एव भवो भाव्यता भावोऽभिप्राय इत्यादिपरव्याख्यानं मन्दम्। तदेतदखिलमभिप्रेत्याऽऽह—अनुकूलेति। भवनमित्युद्धर्षोऽत्र विवक्षितः। अवसादप्रतियोगित्वात्। अनवसादानुद्धर्षौ हि सहोक्तौ वाक्यकारेण 'तल्लब्धिश्च विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः' इति। सुखदुःखशब्दाभ्यां पौनरुक्त्यव्युदासाय भयाभयशब्दयोस्तद्विशेषविषयतां दर्शयति—आगामिन इति। आगामिप्रत्यवायोत्प्रेक्षा भयमिति लक्षणेऽपि तस्यैव ज्ञानविशेषस्य प्रतिकूलरूपत्वाद्दुःखत्वम्। न ह्यन्यो दुःखाख्यो गुणोऽस्मद्दर्शने॥ ४॥

परदुःखाहेतुत्वमित्यत्र दुःखशब्देनाहितं विवक्षितम्। चिकित्सादौ हितरूपदुःखकरणस्य हिंसात्वाभावात्। प्रपञ्चितं चैतत्प्रागेव। अभयाहिंसयोरभावरूपयोरपि भावान्तरत्ववेषेण मनोवृत्तिरूपत्वं भाव्यम्। समत्वप्रकारेषु बहुषु सत्स्वपि हिंसानिषेधप्रसङ्गाद्धिंसाविषयभूतशत्रुस्मृतिर्जाता। ततश्च द्वेष्याद्यभावेन शत्रुमित्रादिसाम्यं प्रदेशान्तरप्रपञ्चितमिह विवक्षितमित्याभिप्रायेणाऽऽह—आत्मनीति। 'सममतिरात्मसुहृद्विपक्षपक्षे' इति भगवत्पराशरवचनमिह तत्तत्पदैः स्मारितम्। अर्थानर्थयोरिति। आत्मार्थपरार्थयोरात्मानर्थपरानर्थयोश्चेत्यादि भाव्यम्। तुष्टेः समतासहपाठाच्छत्रूणां समृद्धिमतामपि संग्रहाय सर्वशब्दः।

योः सममतित्वम् । तुष्टिः सर्वेषु[1] लाभालाभेषु तोषस्वभावत्वम् । तपः शास्त्रीयो भोगसंकोचरूपः कायक्लेशः । दानं स्वकीयभोग्यानां परस्मै प्रतिपादनम् । यशो गुणवत्ताप्रथा । अयशो नैर्गुण्यप्रथा । कीर्त्यकीर्त्यनुगुणमनोवृत्तिविशेषौ तथोक्तौ । मनोवृत्तिप्रकरणात् । तपोदाने च तथा । एवमाद्याः सर्वेषां भूतानां भावाः प्रवृत्तिनिवृत्तिहेतवो मनोवृत्तयो मत्त एव मत्संकल्पायत्ता भवन्ति ॥ ५ ॥

---

सर्वत्र संतोष एवं ह्याऽऽत्मनः स्वारसिकः प्राप्तः । प्रातिकूल्यभावनाद्युपाध्यधीनं हि वैरादिकमित्याभिप्रायेण—संतोषस्वभावत्वमित्युक्तम् । इदं च मैत्र्यादिषु चतुर्षु मुदिताख्यचित्तप[रि]कर्मवाह्यागमा(सना)दिमूलक्लेशस्य तपस्त्वव्यवच्छेदायोक्तम् । शास्त्रीय इति । शास्त्रीयस्यैव भोगसंकोचस्य व्याध्यादिवशादक्लेशात्मकत्वे तपस्त्वं नास्तीति व्यञ्जनाय कायक्लेश इत्युक्तम् । दाने परकीयाणामपि हेयभूतानां व्यवच्छेदाय स्वकीयभोग्यानामित्युक्तम् । प्रतिपादनं परस्वत्वापादनमित्यर्थः । अयशःशब्दे नञो विरोधिपरत्वं प्रयोगप्रकर्षसिद्धमाह—नैर्गुण्यप्रथेति । सदोषत्वप्रथेत्यर्थः । प्रथामात्रमुभयसाधारणमतो गुणवत्त्वनैर्गुण्याभ्यां विशेषः । एतच्चेत्यादिकं पूर्ववत् सिंहावलोकितकेनाऽऽह—तपोदाने च तथेति । मनोवृत्तिविशेषावित्यर्थः । उक्तमात्रव्युदासायोपलक्षणतामभिप्रेत्याऽऽह—एवमाद्या इति । अभिप्रायेऽपि भावशब्दप्रयोगादत्र भावशब्दस्य मनोवृत्तिविषयता । सर्वेषां कर्तृकारणानां प्रवृत्तेः स्वाधीनत्वेऽपि मनोवृत्त्युदाहरणं प्राकरणिकभक्तिरूपमनोवृत्तेरपि स्वसंकल्पमूलत्वज्ञापनार्थम् । प्रवृत्तिनिवृत्त्योः स्वाधीनत्वे कैमुतिकार्थमाह—प्रवृत्तिनिवृत्तिहेतव इति । मत्त एवेत्यत्र परोक्तसंनिधिमात्रादिव्युदासाय पश्चम्यर्थगतं हेतुत्वं व्यापारमुखेने(णे)त्याह—मत्संकल्पेति । पृथग्विधानां परस्परविरुद्धानामप्यहमेको हेतुरित्येवकाराभिप्रायः ॥ ५ ॥

---

१ क. °र्वेष्वात्मसु दृश्येषु तो° ।

सर्वस्य भूतजातस्य सृष्टिस्थित्योः प्रवर्तयितारश्च मत्संकल्पायत्तप्रवृत्तय इत्याह—

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।

मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

पूर्वे सप्त महर्षयोऽतीतमन्वन्तरे ये भृग्वादयः सप्त महर्षयो नित्यसृष्टिप्रवर्तनाय ब्रह्मणो मनसः संभवा नित्यस्थितिप्रवर्तनाय ये च सावर्णिका नाम चत्वारो मनवः स्थिताः, येषां संतानमये लोके जाता इमाः सर्वाः प्रजाः प्रतिक्षणमा प्रलयादपत्यानामुत्पादकाः पालकाश्च भवन्ति । ते

---

सृष्टिस्थितिहेतुतया प्रसिद्धेषु महत्स्वपि हेतुभूतेषु स्वतन्त्रशङ्का न कार्या । अन्यसंकल्पप्रसूतेष्वपि मत्संकल्पत्वमनुसंधेयमित्यस्योदाहरणतया महर्षय इत्युच्यत इत्यभिप्रायेणाऽऽह—सर्वस्येति । येषां लोक इमाः प्रजा इत्येतदभिप्रेतकथनं सर्वस्य भूतजातस्येत्यादि । सृष्टिस्थित्योरिति महर्षिषु मनुषु च क्रमादन्वेतव्यम् । सप्तर्षीणां पूर्वत्वविशेषणविवक्षितमाह—अतीतमन्वन्तर इति । भृग्वादय इति । महर्षीणां भृगुरहमिति तत्प्रयोजनत्वं हि वक्ष्यते । 'सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः' । इत्यादिस्मरणाय सप्तशब्दः । आर्षेयप्रकरणे वरणीयानां गोत्राणां प्रवर्तयितार इत्यभिप्रायेणाऽऽह—नित्यसृष्टिप्रवर्तनायेति । ब्रह्मणो मनसः संभवा इति । सौवाले स मानसान्सप्त पुत्रानसृजदित्यादिनैमित्तिकसृष्ट्यादिव्यवच्छेदाय नित्यशब्दः । ननु ब्रह्मदिवसे चतुर्दश मनवः क्रमादधिकुर्वन्ति । एकस्मिन्मन्वन्तर एक एव तत्कथं चत्वार इत्यत्राऽऽह—ये च सावर्णिका नामेति । ब्रह्मसावर्णो रुद्रसावर्णो धर्मसावर्णो दक्षसावर्ण इति । दक्षस्य दुहितरि तैश्चतुर्भिर्मानसा जनिताः । मद्भावा इत्येतावदत्र विधेयमन्यत्सर्वं पुराणादिसिद्धमनूद्यत इति ज्ञापनाय यच्छब्दः । संतानमय इति । जनो लोकः प्रोक्त इति पाठाल्लोकोऽत्र संतानः । येषां लोके जाता यत्पुत्रपौत्रादिभ्यो जाता इत्यर्थः । इमा इति निर्देशो [ लो ] कान्तरवर्तिनित्यसृष्टेरपि संग्राहकः । ईश्वरस्य तत्राप्यापरोक्ष्यादित्यभिप्रायेणाऽऽह—प्रतिक्षणमाप्रलयादिति । उत्पादकाः पालकाश्चेति महर्षीणां मनूनां

भृग्वादयो मनवश्च मद्भावा मम यो भावः स एव येषां भावस्ते मद्भावाः। मन्मते स्थिता मत्संकल्पानुवर्तिन इत्यर्थः ॥ ६ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

विभूतिरैश्वर्यम् । एतां सर्वस्य मदायत्तोत्पत्तिस्थितिप्रवृत्तिरूपां विभूतिं मम हेयप्रत्यनीककल्याणगुणरूपं योगं च यस्तत्त्वतो वेत्ति

---

यथाक्रमं निर्देशः । उत्पादका इत्यादिस्त्रीलिङ्गपाठे तु तत्तत्प्रजाभिर्यथासंभवमन्वयः । मम यो भावः स एव येषां भाव इति भावसामानाधिकरण्ये फलितोक्तिरियम् । मध्यमपदलोपी वा समासः । राज्ञो भाव एव किंकरस्य भाव इतिवदभिप्रायसाम्यापेक्षयाऽयं व्यपदेश इति दर्शयति—मन्मते स्थिता इति । स्वाच्छन्द्यादभिप्रायसाम्यं भृत्यादिवद्बुद्धिपूर्वानुवर्तनमात्रं च व्युदस्यति—मत्संकल्पानुवर्तिन इति ॥ ६ ॥

एतां विभूतिं योगं चेति पूर्वोक्तार्थस्य बुद्धिस्थक्रमेणानुवादः । स्वकल्याणेत्यादिसंग्रहश्लोके स्वयमेवार्थो यथाक्रममुक्तस्तदनुसारेण पदार्थवाक्यार्थमाह—विभूतिरैश्वर्यमित्यादिना । सर्वस्य मदायत्तोत्पत्तिस्थितिप्रवृत्तिरूपां विभूतिमिति । तन्निरूप्यत्वात्तत्सामानाधिकरण्यम् । उत्पत्तिस्थित्योरपि संकल्पाधीनत्वान्नियमनविषयत्वम् । प्रवृत्तिरिह स्वकार्यार्थव्यापारः । स्पन्दादेः सार्वत्रिकत्वात् । विभूतिर्भूतिरैश्वर्यमिति नैघण्टुकाः । विशब्दश्च नियन्तरि प्रयुक्तचरः । अतो विभवनमिह नियमनमेव वक्ष्यति(विभूतिमि)त्यस्य भावार्थतास्वारस्यादनपवादाच्च । वस्त्वन्तरसामानाधिकरण्यवद्विभूतिशब्देषु तु नियन्तव्यविषयता वक्ष्यते । युज्यत इति व्युत्पत्त्योभयलिङ्गत्वमिह योग उक्तः । ईश्वरेऽनीश्वरस्वभावभूतपारतन्त्र्यदुःखाज्ञानाद्यारोपमनीश्वरे चेश्वराधीनस्वातन्त्र्यादेः स्वतःसिद्धत्वाद्यारोपं च परित्यज्येति तत्त्वत इत्यस्य भावः । अविकम्पेनेत्यत्र स्वतः कम्पराहित्यमात्रव्युदासेन बाधकशतैरप्य-

सोऽविकम्पेनाप्रकम्प्येण भक्तियोगेन युज्यते नात्र संशयः । मद्विभूति-विषयं कल्याणगुणविषयं च ज्ञानं भक्तियोगवर्धनमिति स्वयमेव द्रक्ष्यसीत्यभिप्रायः ॥ ७ ॥

विभूतिज्ञानविपाकरूपां भक्तिवृद्धिं दर्शयति—

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

अहं सर्वस्य विचित्रचिदचित्प्रपञ्चस्य प्रभव उत्पत्तिकारणं सर्वं मत्त एव प्रवर्तत इतीदं मम स्वाभाविकं निरङ्कुशैश्वर्यं सौशील्यसौन्दर्यवात्स-

---

ल्यत्वं च दर्शयितुम्—अप्रकम्प्येणेत्युक्तम् । पूर्वापरपरामर्शादुपासकान्वितयोगशब्दस्य योगविशेषनिष्ठतामाह—भक्तियोगेनेति । शास्त्रसिद्धस्याप्यर्थस्य साक्षात्कारे सत्येव ह्यत्यन्तवैशद्यमित्यभिप्रायेण नात्र संशय इत्यस्याऽऽशयं विशदयति—मद्विभूतीति ॥ ७ ॥

उक्तार्थस्यानन्तरमुदाहरणप्रदर्शनमुखेन प्रपञ्चनं क्रियत इत्यभिप्रायेणाऽऽह—विभूतिज्ञानेति । तदेव हि ज्ञानं भक्तिरूपेण परिणमत इत्यभिप्रायेण विभूतिज्ञानविपाकरूपत्वोक्तिः । असंकोचात्कार्यभूतब्रह्मादिसमस्तगोचरः सर्वशब्द इत्यभिप्रायेण—विचित्रेत्यादिकमुक्तम् । प्रभवशब्दस्यात्रोत्पत्तिक्रियादिमात्रपरत्वव्युदासायाऽऽह—उत्पत्तिकारणमिति । अत्र वक्ष्यमाणप्रकारेण सृष्ट्युपयुक्तकल्याणगुणयोगोऽपि गर्भितः । ब्रह्मादेरपि स्वप्रवृत्तिसामर्थ्यं मदधीनमिति मत्तः सर्वमित्यनेन विवक्षितमित्यभिप्रायेणाऽऽह—सर्वं मत्त एवेति । पूर्वोक्तविभूत्याद्यनुवादरूपतां दर्शयति—इतीदमित्यादिना । स्वाभाविकनिरङ्कुशशब्दाभ्यामर्वाचीनेश्वरव्यवच्छेदाय श्रुतिसिद्धा हेतुसाध्यत्वानवधिकत्वोक्तिः । वक्तृरूपावतारौ सौलभ्यपरौ(?) । अस्मच्छब्दाभिप्रेतं मां भजन्त इत्युच्यमानभजनस्यात्यन्तोपयुक्तं योगशब्दार्थमाह—सौशील्येत्यादिना । सौशील्यवात्सल्येति दिव्यात्मगुणवर्गस्य प्रदर्शनार्थम् । सौन्दर्येति आकर्षकतमदिव्यमङ्गलविग्रहगुणवर्गस्य । बुधशब्देनात्र प्रकृतज्ञानवि-

ल्यादिकल्याणगुणगणयोगं च मत्वा बुधा ज्ञानिनो भावसमन्विता मां सर्वकल्याणगुणान्वितं भजन्ते। भावो मनोवृत्तिविशेषः। मयि स्पृहयालवो मां भजन्त इत्यर्थः ॥ ८ ॥

कथम्—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

मच्चित्ता मयि निविष्टमनसः। मद्गतप्राणा मद्गतजीविताः। मया विनाऽऽत्मधारणमलभमाना इत्यर्थः। स्वैः स्वैरनुभूतान्मदीयान् गुणान्प-

---

शेषवन्तः प्रागुक्ता महात्मानो विवक्षिता इत्यभिप्रायेण—ज्ञानिन इत्युक्तम्। मत्वा भावसमन्विता इत्यन्वयः। एवंविधज्ञानस्य भक्तिसाधनत्वे तात्पर्यात्। मामित्यनेनात्र भजनदशानुसंधेयगुणगणविशिष्टं स्वरूपं विवक्षितमित्यभिप्रायेणोक्तम्—सर्वकल्याणगुणान्वितमिति। अने(मन)नार्थस्य भावशब्दस्य प्रकृतानुगुणमर्थमाह—भावो मनोवृत्तिविशेष इति। तमेव विशेषं विशदयति—मयि स्पृहयालव इति ॥ ८ ॥

भावसमन्वितत्वप्रपञ्चनमेवानन्तरं क्रियत इत्यभिप्रायेण तदाकाङ्क्षां दर्शयति—कथमिति। भक्तिपरिपाकक्रमविशेषसिद्धाकारप्रदर्शनं मच्चित्ता इत्यादिभिश्चतुर्भिर्विशेषणैः क्रियत इत्यभिप्रायेण मयि निविष्टमनस इत्यादिकमुक्तम्। मद्गतप्राणा इत्यस्य तात्पर्यप्रदर्शनाय पर्यायं तावदाह—मद्गतजीविताः इति। भक्तगतस्य जीवितस्य कथं तद्गतत्वमित्यत्राऽऽह—मया विनेति। बोधनकथनशब्दयोरेकविषयत्वे पौनरुक्त्याद्विषयभेदो वाच्यः। तत्र च बोधयन्त इत्यनेनाज्ञाताकारज्ञापनं कथयन्त इत्यनेन चेतिवृत्तवर्णनं च स्वरसतः प्रतीयत इत्यभिप्रायेण—स्वैः स्वैरित्यादिकमुक्तम्। दिव्यानीत्यतिमानुषत्वप्रयुक्ताद्भुतत्वं विवक्षितम्। तस्यैव भोग्यत्वं रमणीयानीत्यनेनोक्तम्। तुष्यन्ति च रमन्ति चेत्यनयोर्द्वयोरपि कथाकथकविषयत्वेन भिन्नार्थतायां मन्दप्रयोजनत्वात्कस्यचित्कथकत्वेऽश्रयत्वमन्यस्य कथनाक्षिप्तश्रोतृविषयत्वं युक्तम्। तत्र

रस्परं बोधयन्तो मदीयानि दिव्यानि रमणीयानि कर्माणि च कथयन्तस्तुष्यन्ति च रमन्ति च। वक्तारः श्रोतृप्रश्नेनानन्यप्रयोजनेन तुष्यन्ति श्रोतारश्च तच्छ्रवणेनानवधिकातिशयप्रियेण रमन्ते ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

तेषां सततयुक्तानां मयि सततयोगमाशंसमानानां मां भजमानानामहं तमेव बुद्धियोगं विपाकदशापन्नं प्रीतिपूर्वकं ददामि येन ते मामुपयान्ति ॥ १० ॥

---

च स्वप्रयोजनान्तरसाधकपरप्रीत्यर्थं हि लोके कथाप्रयोगो दृष्टः। तोषशब्दश्चाधिकस्पृहानिवृत्त्यर्थः । ततोऽत्र तुष्यन्तीत्यनन्यप्रयोजनप्रश्नकविषयं पारिशेष्याद्रमन्तीत्यस्य श्रवणमूलत्वं लब्धम् । तुष्यन्ति च रमन्ति चेत्यनयोर्भिन्नचित्ता इत्याद्युक्तैककर्तृकत्वं कथनश्रवणयोरेकस्मिन्नेव कालभेदेन संभवान्न परित्यक्तम् । तदेतदखिलमभिप्रेत्याऽऽह—वक्तार इत्यादि रमन्त इत्यन्तम् ॥ ९ ॥

भगवद्गुणविभूतिज्ञानस्य भक्त्युत्पत्तिविवृद्धिहेतुत्वं तथाविधविवृद्धभक्तेर्भगवत्प्राप्तिपूर्वभाविविशदतमसाक्षात्काररूपावस्थाविशेषहेतुत्वं भगवत्प्रसादावान्तरव्यापारकमुच्यते—तेषामिति । मयि सततयोगमाशंसमानानामिति । नहि सततं समाधानरूपो यः शक्यः । सततशब्देन प्रतिदिनविवक्षा च न स्वारसिकी । न च प्राप्तिरूपसततयोगं इदानीं वृत्तिः । अत आशंसार्थ [त्व] मेव युक्तमिति भावः । तमेवेति । आशंसाविषयान्तर्गतमेवेत्यर्थः । सततयोगाशंसयैव भजने प्रीतिरूपत्वस्य फलितत्वात्प्रीतिपूर्वकमित्यस्य भजनान्वये प्रयोजनं नास्ति । ददामीत्यनेनान्वये तु भजनावान्तरव्यापारकथनरूपेण परमोदारत्वादिभगवद्गुणगणप्रकाशनेन च महत्प्रयोजनमित्यभिप्रायेण—प्रीतिपूर्वकं ददामीत्यन्वय उक्तः । मामुपयान्तीत्यत्रापरामृष्टपदार्थैर्मूढैरैक्यापत्तिर्व्याख्याता ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

किंच तेषामेवानुग्रहार्थमहमात्मभावस्थस्तेषां मनोवृत्तौ विषयतयाऽवस्थितो मदीयान्कल्याणगुणगणांश्चाऽऽविष्कुर्वन्मद्विषयज्ञानाख्येन स्वसजातीयेन भास्वता दीपेन ज्ञानविरोधिप्राचीनकर्मरूपाज्ञानजं मद्व्यतिरिक्तविषयप्रावण्यरूपं पूर्वाभ्यस्तं तमो नाशयामि ॥ ११ ॥

---

उक्तबुद्धियोगोत्पत्तिप्रतिबन्धनिरासं तेषामेवेति श्लोकेनोच्यत इत्यभिप्रायेणाऽऽह—किं चेति । अनुकम्पाशब्देनात्रानिष्टनिवृत्तिपूर्वकेष्टप्राप्तिहेतुस्तदनुग्रहायेति वक्ष्यमाणप्रसादविशेषो विवक्षितः । सहजकारुण्यमात्रपरत्वे त्य ( त्व ) र्थशब्दस्य व्यर्थत्वादित्यभिप्रायेणोक्तम्—अनुग्रहार्थमिति । अत्राहंशब्देनानुग्रहौपयिकज्ञानशक्तिकरुणादिव्यमङ्गलविग्रहादिविशिष्टस्वरूपं विवक्षितम् । मनोवृत्ताविति । आत्मभावशब्दस्यात्राऽऽत्मत्वस्वस्वभावादिपरत्वेऽधिकप्रयोजनं नास्ति । मनोवृत्तिविषयत्वं तु बुद्धियोगस्यात्यन्तोपयुक्तमिति भावः । व्याप्तस्येश्वरस्य कीदृशीयं पूर्वा स्थितिरित्यत्रोक्तम्—विषयतयेति । दीपतया रूपितस्य ज्ञानस्य भास्वरत्वं परितः प्रकाशनं तच्च प्रकारविशेषप्रकाशनं भवितुमर्हति । तथाविधविशदानुभवादज्ञाननिवृत्तिः शब्दादिप्राकृतगुणप्रावण्यनिवृत्तिश्चेत्यभिप्रायेणाऽऽह—मदीयान्कल्याणगुणगणांश्चाऽऽविष्कुर्वन्निति । हेतुकार्यभावेन व्यपदेशादज्ञानतमःशब्दयोरर्थान्तरं वाच्यम् । कर्मणि च ज्ञानविरोधित्वेनाज्ञानशब्दः । यथोक्तम्—' अविद्या कर्मसंज्ञाऽन्या ' [विष्णु० पु०] इति । कर्मजन्यं भगवत्साक्षात्काररूपप्रकाशप्रतिबन्धकं च तमोऽर्थस्वभावाद्विषयान्तरप्रावण्यमेव । निरतिशयभोग्यभगवज्ज्ञानस्य भोग्यान्तरप्रावण्यनिवर्तकत्वं युक्तम् । स्थितेरविद इत्यादिन्यायात् । तदेतदभिप्रेत्योक्तम्—ज्ञानविरोधीत्यादि । तमःशब्देन तमोनिवृत्तिलक्षणादिपक्षोऽप्यनेन निरस्तः । यद्यपि विषयप्रावण्यनिवृत्तिपूर्वकं भजनं तथाऽपि संस्कारविशेषादनुवृत्तं सूक्ष्मं प्रावण्यमिह भजनविनाश्यतयोक्तमिति नान्योन्याश्रयः ॥ ११ ॥

एवं सकलेतरविसजातीयं भगवदसाधारणं शृण्वतां निरतिशयानन्दजनकं कल्याणगुणगणयोगं तदैश्वर्यवितर्तिं च श्रुत्वा तद्विस्तारं श्रोतुकामः—

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

परं ब्रह्म परं धाम परमं पवित्रमिति यं श्रुतयो वदन्ति स हि भवान् । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' । [ तै० ३।१।१ ]। 'ब्रह्मविदाप्नोति परम्' [ तै० २ । १ ] । 'स यो ह वै तत्परं ब्रह्म वेद

---

परं ब्रह्मेत्यादेरमृतमित्यन्तस्यार्जुनवाक्यस्य पूर्वोत्तरसंगतिं दर्शयति—एवमिति । यो मामजमित्याद्यनुसंधानेनोक्तम्—सकलेतरेत्यादि । तुष्यन्ति चेत्यनेनोक्तमाह—शृण्वतां निरतिशयानन्दजनकमिति । विस्तरेणाऽऽत्मनो योगं विस्तरस्य म इति प्रष्टु (ष्टृ)प्रतिवक्तृभ्यां विस्तरशब्दप्रयोगेऽपि वक्ष्यमाणस्यार्थप्रपञ्चरूपत्वाच्छब्दप्रपञ्चोपलक्षितार्थप्रपञ्चेत्यत्र विस्तरशब्दस्य तात्पर्यमिति दर्शयितुं तद्विस्तारं श्रोतुकाम इत्युक्तम् । विस्तरं श्रोतुकामश्चार्जुनः संग्रहोक्तस्यार्थस्य प्रतिपन्नतां तस्य सत्यत्वाध्यवसायेनानसूयतां च दर्शयति—परं ब्रह्मेत्यादिभिः । अत्र तावद्भवानित्यस्य प्रथमान्तत्वादाहुरित्युत्तरत्र न संबन्धः । परं ब्रह्मेत्यादीनां प्राथम्यादिनोद्देश्यत्वं भवानित्यस्य विधेयत्वं प्रतीतम् । उद्देश्यस्य च पूर्वमेव सिद्धिरपेक्षिता तदाह—यं श्रुतयो वदन्ति स हि भवानिति । त्रिष्वपि क्रमाच्छ्रुतीरुदाहरति—तत्र 'यतो वा' [ तै० ३ । १ । १ ] इत्युपास्यब्रह्मलक्षणवाक्यम् । तत्पुरोवादेनोपास्यं ब्रह्मैव प्राप्यमिति दर्शनाय परशब्दविशेषणासिद्धये च 'ब्रह्मवित्' [ तै० २ । १ । १ ] इति वाक्यमुपात्तम् । उभयत्रास्फुटं वाक्यम् 'स यो ह'

ब्रह्मैव भवति ' [ मु० ३ । २ । ९ ] । इति । तथा परं धाम धामशब्दो ज्योतिर्वचनः । परं ज्योतिः । ' अथ यदतः परो दिवो ज्योतिर्दीप्यते ' [ छा० ३ । १३ । ७ ] । ' परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' [ छा० ८ । १२ । २ ] । ' तद्देवा ज्योतिषां ज्योतिः ' [ बृ०

---

[ मु० ३ । २ । ९ ] इति । ब्रह्मैव भवतीत्येतच्छारीरकभाष्ये व्याख्यातम् । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव । यथा—सोऽयं गौरिति । ब्रह्मात्यन्तसाम्याद्ब्रह्मव्यपदेशो मुख्यप्राय इत्यर्थः । सोऽयं गौरिति दृष्टान्तः साधर्म्यमूलव्यपदेशविषयः । यद्वा ब्रह्मैव भवतीत्यत्राप्येवकार इवशब्दार्थोऽपि स्यादिति केचित् । इववद्वैवमेवेति निघण्टुसद्भावात् । ' वैष्णवं वामनमूलभेदस्पर्धमू(वाजिनमालभेत स्पर्धमा)नो विष्णुरेव भूत्वेमाँल्लोकानभिजयति ' इत्यादिप्रयोगसद्भावाच । नह्यत्र पशुयागमात्रेण विष्णुरेवासौ जातः । नापि स्पर्धमानस्य मोक्षाधिकारः । न च विष्णुरेव भवतीति तावदेवफलं निर्दिष्टम् । किंतु इमाँल्लोकानभिजयतीति सांसारिकफलमुक्तम् । अतः पराक्रमादिगुणयोगेन विष्णुरिव भूत्वेमाँल्लोकानभिजयतीति वाक्यार्थ इति । अतो ब्रह्मैव भवतीति साधर्म्यहेतुकं सामानाधिकरण्यम् । ' परमं साम्यमुपैति ' [मु० ३ । १ । ३ ] इति हि श्रुतिः । वक्ष्यति च—'मम साधर्म्यमागताः' इति श्रुतिप्रदर्शनार्थं विषयमुपादाय शोधयति—तथेत्यादिना । सामानाधिकरण्यप्रयोगाद्वस्त्वन्तरसामानाधिकरण्यसहपाठाद्भगवतस्तत्तच्छ्रुतिप्रतिपादितपरत्वप्रकारव्यञ्जने तात्पर्याच्चात्र धामशब्दस्य स्थानादिपरत्वमयुक्तमित्यभिप्रायेणाऽऽह—धामशब्दो ज्योतिर्वचन इति । विष्णुसंज्ञं सर्वाधारं धामेत्यादिधामशब्दप्रयोगेऽपि परं धामेति विशेषणदर्शनात् पर्यायान्वयमुखेन तत्प्रदर्शयति—परं ज्योतिरिति । ' अथ यदतः ' [ छा० ३ । १३ । ७ ] इत्यादिवाक्येनाप्राकृतलोकादिविशिष्टत्वम् । ' पादोऽस्य सर्वा भूतानि ' [ छा० ३ । १२ । ६ ] इत्यादिव्यपदेशवशसिद्धपुरुषसूक्तप्रकरणैकार्थ्याच्च समीहितमखिलं सिद्धम् । ' परं ज्योतिरुपसंपद्य ' [ छा० ८ । १२ । २ ] इति वाक्येन मुक्तप्राप्यत्वादिकं परं

४ । ४ । १६ ] तथा च ' परमं पवित्रं परमं पावनं स्मर्तुरशेषकल्मषा-श्लेषविनाशकरं च । ' ' यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते ' [ छा० ४ । १४ । ३ ] ' तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते ' [ छा० ५ । २४ । ३ ] । ' नारायण परं ब्रह्म तत्त्वं नारायणः परः । नारायण परं ज्योतिरात्मा नारायणः परः ' इति हि श्रुतयो वदन्ति ॥ १२ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥

ऋषयश्च सर्वे परावरतत्त्वयाथात्म्यविदस्त्वामेव शाश्वतं दिव्यं पुरुष-

---

ज्योतिरिति विशिष्टप्रयोगश्च सिद्धः । ' तद्देवा ज्योतिषां ज्योतिः ' [ बृ० ४ । ४ । १६ ] इत्यादिना देवोपास्यत्वमुखेन ज्योतिषां ज्योतिष्ट्वेन च परत्वमर्थलब्धं भगवदसाधारणं परमशब्दविशेषितं पावनत्वं दर्शयितुं पवित्रशब्दस्यात्र संज्ञात्वव्युदासायाऽऽह—परमं पावनमिति । विनाशकरमित्यत्र कल्मषशब्दो बुद्ध्या निष्कृष्यानुसंधेयः । प्रदूयन्ते नश्यन्तीत्यर्थः । सूत्रं च—' तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ' [ ब्र० सू० ४ । १ । १३ ] इति । तत्त्वनिर्णयैकतत्परनारायणानुवाकवाक्येनापि परब्रह्मत्वादिकं भवानितिनिर्दिष्टदेवताविशेषस्यैव संवादयति—नारायणेति । अनयोर्वाक्ययोः प्रथमौ नारायणशब्दौ लुप्तविभक्तिकौ । तत्त्वं नारायणः पर इत्यादिसहपाठवशाद्व्यस्तत्वं प्रथमान्तत्वं च प्राप्तम् । तथैव सविभक्तिकतया श्रुत्यन्तरेऽधीयते—नारायणः परं ब्रह्मेत्यादि । एतेन पञ्चमीसमासतां वदन् भगवद्द्वेषी प्रत्युक्तः । सर्वश्रुतिस्मृतिसूत्रन्यायविरोधाच्च । इति श्रुतयो वदन्तीत्यत्र यतो वा इमानीत्यादिकमखिलमन्वेतव्यम् । मध्ये तदर्थैकशाखायावान्तरवाक्यम् ॥ १२ ॥

एवं श्रुतिसिद्धोऽर्थः स्मृतीतिहासपुराणायमानमहर्षिवचनाच्छ्रुतिवदन्यानपेक्षसर्वज्ञवचनाच्च सिद्ध इत्याह—पुरुषमिति । सार्थे सर्वशब्देनापि गतित्वं विवक्षितम् । परावरतत्त्वयाथात्म्यविद इति ऋषिशब्दाभिप्रेतोक्तिः । तेनाऽऽप्ततमत्वमुक्तं भवति । त्वामित्येतद्ब्रह्मरुद्रादिविशेषान्तरव्युदासार्थमित्यभिप्रायेण—त्वामेवेत्युक्तम् । यद्वा—अव-

मादिदेवमजं विभुमाहुः । तथैव देवर्षिर्नारदोऽसितो देवलो व्यासश्च ।

तीर्णं त्वामेवेत्यर्थः । शाश्वतं नित्यम् । दिव्यं पुरुषमिति । 'परमव्योमनिलयं पुरुषम्' 'परात्परं पुरिशयं पुरुषमीक्षते' [ प्र० ५ । ५ ] । इत्यादि प्रतिपादितम् । शाश्वतं दिव्यं पुरुषमिति व्युत्क्रमोपादानं दिवि वर्तमानस्य पुरुषस्य पुरुषसूक्तोदितामृतत्रिपाद्विभूतिविशिष्टवेषेण शाश्वतत्वमिह विवक्षितमिति व्यञ्जनार्थम् । आदिश्चासौ देवश्चेत्यादिदेवः । जगत्कारणभूतः क्रीडारूपजगत्कारणव्यापारश्चेत्यर्थः । स्मरति च—

क्रीडतो बालकस्येव क्रीडा हरेरिदं सर्वम् । बालः क्रीडनकैरिव । सूत्रं च 'लोकवत्तु लीलाकैवल्यम्' [ ब्र० सू० २ । १ । ३३ ] इति । एतेन ब्रह्मादीनामपि देवजात्यनुप्रविष्टानां परमपुरुषलीलोपकरणत्वं कार्यत्वं चोक्तं भवति । 'नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते' । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' । [ महो० १ । १ । ] । 'तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयांसि' । 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ' । 'आवां तवाङ्गे संभूतौ' इत्यादेः कारणवाक्यार्थ उक्तः । शोधकवाक्यार्थमुपलक्षयति—अजमिति । कर्मकृतजन्मादिरहितमित्यर्थः । स्वरूपापेक्षया वा निर्विकारत्वमुच्यते । विभुमाकाशवत्सर्वगतश्च नित्य इति प्रक्रियया व्याप्तम् । नियन्तारमिति वा । एतेन कारणत्वाद्यनुगुणव्याप्तिनियमनादिकमन्तर्यामिब्राह्मणादिसिद्धं स्मारितम् । एतैः पदैः 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति श्रुतिः सूचिता । सर्व इति सामान्यतः संग्रहे व्या(ऽत्या)प्ततमत्वविवक्षया नारदादेः पृथगभिधानम् । देवर्षिशब्देन जात्याऽपि सत्यो(त्यो)त्तरत्वं प्रकाश्यते । तत्राप्यसौ देवर्षीणां च नारद इति प्रकृष्टः । असितो देवलश्च तस्य पिता व्यासश्चात्र भगवत्पाराशर्यः । 'आहुस्त्वामृषयः सर्वे' इत्यादिकविवक्षितं महात्मत्वं परमात्मत्वं वा । 'स वा एष महानज आत्मा' [ बृ० ४ । ४ । २५ ] इत्यादि । यागदा-

' एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥
पुण्या द्वारवती तत्र यत्राऽऽस्ते मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मः सनातनः ॥
ये च वेदविदो विप्रा येचाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥
पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ॥
त्रैलोक्यं पुण्डरीकाक्षो देवदेवः सनातनः ।
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ' ॥

---

नादयो हि देशकालादिपरिमितफलदायिनः स्वयं चानित्याः । अयं तु नित्यनिरतिशयफलदायी नित्यश्चेति सनातनशब्देन धर्मस्य विशेषणम् । पवित्रशब्दोऽत्र पापनिवर्हणपरः । पुण्यशब्दोऽभिमतफलविशेषसाधनपरः । मङ्गलशब्दश्च स्वसंनिधिमात्रेणातिसमृद्धिहेतुभूतकल्याणवस्तुपरः । त्रैलोक्यं पुण्डरीकाक्ष इति कार्यकारणभावेन शरीरात्मभावेन वा सामानाधिकरण्यम् । त्रयो लोकास्त्रैलोक्यम् । बद्धमुक्तनित्य इत्यर्थः । यद्वोपलक्षणतया भूम्यन्तरिक्षादिकमुच्यते । पुण्डरीकाक्षशब्देनान्तरादित्यविद्याप्रतिपादितविलक्षणविग्रहवत्त्वं दर्शितम् । ' यथा कप्यासं पुण्डरीकमेवमक्षिणी ' [ छा० १ । ६ । ७ ] । इत्यस्य च वाक्यस्य द्रमिडभाष्योदितेषु परस्वर्थेषु सिद्धान्तत्वेन भाष्यकारगृहीतास्त्रयोऽर्थाः । तथाहि वेदार्थसंग्रहे दर्शितम् । गम्भीराम्भःसमुद्भूतसंमृष्टनालरविकरविकसितपुण्डरीकदलामलायताक्ष इति । इदं च वरदगुरुभिस्तत्त्वसारे दर्शितम् । प्रपञ्चितं च । नारायणशब्देन परतत्त्वनिर्णयैकपरनारायणानुवाकसूचनम् । श्रीमान् क्षीरार्णवनिकेतन इत्याभ्यां ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ' ' अम्भस्यपारेऽयमन्तः समुद्रे ' इत्यादिकं स्मारितम् । उत्सृज्याऽऽगत इत्यवतारमात्रत्वं विवक्षितम् । कृष्णावतारदशायामपि क्षीरार्णवगतनागपर्यङ्कशायिविग्रहस्य तत्रैव स्थितत्वात् । साक्षादिति ।

तथा—

'यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च ॥
तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम् ।
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ॥
आदिदेवो महायोगी यत्राऽऽस्ते मधुसूदनः ।
पुण्यानामपि तत्पुण्यं मा भूत्ते संशयोऽत्र वै ॥
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' ॥ इति ।

तथा स्वयमेव ब्रवीषि च—

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ इत्यादिना
'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यन्तेन । १३॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥१४॥**

अतः सर्वमेतद्यथावस्थितवस्तुकथनं मन्ये न प्रशंसाद्यभिप्रायम् ।

---

न त्वौपचारिकः, आत्मान्तरव्यवहितो वेत्यर्थः । तथेति । प्रकरणान्तरव्यक्त्यर्थं देवर्षिर्नारदस्तथेति व्याख्येये विभागावगमात्तदुक्तवाक्योपादानमपि तथा विभागेन कुर्मह इति च दर्शितम् । तत्र कृत्स्नमित्यादि नारायणस्यैव सर्वाश्रयत्वात्सर्वप्रकारातिशययोगित्वाद्वा । तत्पूर्णमित्यादि ब्रह्मशब्दानुरोधेन नारायणविषयं वा प्रकरणविशेषेण तदा श्रुतस्थानप्रशंसनं वा । स्वयमेवेति । स्वतः सर्वज्ञो ब्रह्मादीनामपि गुरुस्त्वमेवेत्यर्थः । भूमिराप इत्यादिषु सर्वशेषित्वं सर्वकारणत्वं सर्वशरीरत्वमित्यादिकमुक्तम् ॥ १३ ॥

संगत्यर्थमाह—अत इति । आप्ततमैराम्नायैर्महर्षिभिर्भगवताऽपि चोक्तत्वादिति भावः । ऋतं मन्य इत्यस्याभिप्रेतमाह—न प्रशंसाद्यभिप्रायमिति । अन्येषु हि तद्गुणारोपणं प्रशंसेत्यभिप्रायः । मामित्यनेन 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' इत्यादिकमभिप्रेतम् । वदिरिह शिष्टमनुवदन्नत्र शास्यर्थे वर्तमाने द्विकर्मकः ।

यन्मां प्रत्यनन्यसाधारणमनवधिकातिशयं स्वाभाविकं तवैश्वर्यं कल्याणगुणगणानन्त्यं च वदसि। अतो भगवन्निरतिशयज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधे ते व्यक्तिं व्यञ्जनप्रकारं नहि परिमितज्ञाना देवा दानवाश्च विदुः ॥ १४ ॥

स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

हे पुरुषोत्तमाऽऽत्मनाऽऽत्मानं स्वयमेव स्वेनैव ज्ञानेन वेत्थ। भूत-

---

एवं शिष्टस्यानुभाषणं शासनविशेषप्राधान्यार्थम्। अनन्यसाधारणमनवधिकातिशयामिति विशेषणाभ्यां समाधिकराहित्यम्। स्वाभाविकमित्यनन्याधीनत्वं विवक्षितम्। अतो न विदुरित्यर्थः।

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥

इति भगवत्पराशरवचनानुसारेण देवादिभिरवेद्यत्वाय भगवच्छब्दार्थं दर्शयति—निरतिशयज्ञानेत्यादिना। व्यक्तिशब्दोऽत्र किमात्मिकैवैषा भगवतो व्यक्तिरित्यादिवित्र न विग्रहादिपरा, अप्रसक्तत्वात्। अनन्तरं चापृच्छ्यमानत्वात्। अतो वक्तुमर्हस्यशेषेणेत्यनन्तरं विवक्षोरन्ये त्वत्प्रतिपादनप्रकारमपि न जानन्ति। किं पुनः प्रत्यक्षादित्वत्प्रकाशनमित्ययमर्थोऽपेक्षितस्तदात्स्वीकार्य इत्यभिप्रायेणाऽऽह—व्यञ्जनप्रकारमिति। अक्षरक्षरयोर्व्यक्तिमिच्छाम्यरिसू(निषू)दन। उपलब्धुमितिवत्परिमितज्ञाना इति शब्दतात्पर्योक्तिः ॥ १४ ॥

देवादीनां भगवद्वैभवे वक्तृत्वयोग्यता प्रतिक्षिप्ता। अत एव भगवत एव स्ववैभवे वचनयोग्यतामाह—स्वयमेवेतिश्लोके[1]। अत्र पुरुषोत्तमेति संज्ञाशेषं तत्संज्ञान्वयो(न्वयौ)पयिकगुणपरमिति विभजनाय पूर्वमेव पुरुषोत्तमेत्युक्तम्। अत्र त्वमेव त्वां वेत्थ योऽसि सोऽसीति श्रुतिस्मरणात्तदभिप्रायेणाऽऽत्मानमित्यस्य त्वामिति प्रतिपदम्। स्वयमेवेत्यनेन फलितोक्तिः—स्वेनैव ज्ञानेनेति। आत्मना—अन्यैरननुगृहीत इत्यर्थः। यथाऽन्येषां मत्तः स्मृतिर्ज्ञानं न तथाऽस्येति भावः। यद्वाऽऽत्मनेत्यस्य व्याख्या—ज्ञानेनेति।

---

१ ख. ग. घ. ङ. °न्मां सुहृत्त्वेन शिष्यत्वेन प्रपन्नत्वेन च वर्तमानं प्र°।

भावन सर्वेषां भूतानामुत्पादयितः। भूतेश सर्वेषां भूतानां नियन्तः। देवदेव देवतानामपि परमदैवत। यथा मनुष्यमृगपक्षिसरीसृपादीन् सौन्दर्यसौशील्यादिकल्याणगुणगणैर्देवतान्यतीत्य वर्तन्ते तथा तानि सर्वाणि देवतान्यपि तैस्तैर्गुणैरतीत्य वर्तमान जगत्पते जगत्स्वामिन् वक्तुमर्हसी-त्युत्तरेणान्वयः॥ १५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि॥१६॥

दिव्यास्त्वदसाधारण्यो विभूतयो यास्तास्त्वमेवाशेषेण वक्तुमर्हसि

---

आत्मा जीव इत्यारभ्य यत्नेऽर्केऽग्नौ मतौ वायाविति पाठात्। भावनशब्दस्य चिन्ताद्यर्थपरत्वव्युदासायाऽऽह— उत्पादयितरिति। भूतेशजगत्पतिशब्दयोः पौनरुक्त्यशङ्काव्युदासाय नियन्तृत्व-स्वामित्वकथनम्। रक्षणे व्युत्पन्नस्यापि पतिशब्दस्य शेषित्वे रूढिः। 'स कारणं करणाधिपाधिपः।' [श्वे० ६।९]

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्'
[श्वे० ६।७]

इति श्रुतिसिद्धाश्चत्वारोऽर्था भूतभावनेत्यादिभिश्चतुर्भिः प्रति-पाद्यन्त इति ज्ञापनाय देवतानामपि परमदैवतमिति श्रुतिगतैः पदैर्व्याख्यातम्। देवशब्दस्य जातिविशेषवाचकत्वेन प्रतिसंबन्धि-शब्दत्वाभावाद्द्वितीयो देवशब्द उत्कर्षविशेषविषयतयौपचारिक इति मुख्यगौणानुगतमुपचारनिमित्तं दर्शयति— यथेति। अन्यो-न्यवैलक्षण्यस्याकिंचित्करत्वायात्यन्तवैलक्षण्यज्ञापनाय च मृगप-क्षिसरीसृपग्रहणम्। यथा देवादीनां कीटास्तथा परमात्मनो देवा अपि। कीटाः समस्ताः सुरा वृक्ष्टे (क्ष्) यत्रेति ह्याहुः। सौन्दर्यसौ-शील्येति। विग्रहगुणानामात्मगुणानां चोपलक्षणम्॥ १५॥

आत्मशब्दोऽन्यविभूतित्वव्युदासार्थ इत्याह—त्वदसाधारण्य इति। विभूतय इति प्रथमान्तत्वेन वक्तुमर्हसीत्यनेनान्वयायोगात्, विभू-तयो या इति यच्छब्दाध्याहारः। यद्वा दिव्या हि अतोऽवश्यव-क्तव्याः। अतस्ता वक्तुमर्हसीति वाक्यावृत्तिज्ञापनार्थः। अर्हसीति योग्यत्वनिर्देशेन तत्प्रार्थनमविवक्षितम्। ईश्वरेणाप्यशेषेण वक्तुमशु-

---

१ ख. म. घ. ङ. °व्यास्त्वासा°।

त्वमेव व्यञ्जयेत्यर्थः । याभिरनन्ताभिर्विभूतिभिर्यैर्नियमनविशेषैर्युक्त इमाँल्लोकांस्त्वं नियन्तृत्वेन व्याप्य तिष्ठसि ॥ १६ ॥

किमर्थं तत्प्रकाशनमित्यपेक्षायामाह—

कथं विद्यामहं योगी त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥

अहं योगी भक्तियोगनिष्ठः सन् भक्त्या त्वां सदा परिचिन्तयन्

---

नेन च श्रोतुमशक्यत्वाद्वचनतः प्रसादतश्च प्रकाशमात्रमिह प्रार्थ्यते । न हि ते भगवन्व्यक्तिमिति हि पूर्वमुक्तमित्यभिप्रायेणाऽऽह—त्वमेव व्यञ्जयेत्यर्थ इति । बहुवचनासंकोचादशेषेणेति निर्देशाच्चाऽऽनन्त्यमिह विवक्षितम् । नास्त्यन्तो विस्तरस्येत्याद्युत्तरवशाच्चेत्यभिप्रायेणानन्ताभिरित्युक्तम् । विपूर्वो भवतिर्हि भावप्रत्ययान्तो नियमनवाचीत्युक्तम् । न चात्रार्थान्तरं घटते नियन्तव्यसामानाधिकरण्याद्यभावादित्यभिप्रायेण—यैर्नियमनविशेषैरित्युक्तम् । प्रभूतनियमनविषये कौतुकातिरेकद्योतनाय विशेषशब्दः । तृतीयाया इह कारणार्थत्वायोगादित्थंभूतलक्षणार्थत्वं विवक्षितमित्यभिप्रायेण युक्त इत्युक्तम् । विभूतिशब्दस्य नियन्तव्यपरत्वेऽश्वत्थादीनां न लोकव्याप्तिकारणत्वम् । न च तद्विशिष्टस्य तैः सह वा तदितरव्याप्तिः । न च व्याप्तौ नियन्तव्यानामित्थंभूतलक्षणत्वं नैरर्थक्यात् । नियमनविशेषाणां तु श्रुत्यनुसारादाकाशत्वादिव्याप्तिव्यवच्छेदार्थत्वाच्च तदुपपत्तिरित्यभिप्रायेणाऽऽह—नियन्तृत्वेन व्याप्येति । 'अन्तःप्रविष्टः शास्ता जनानाम्' [ तै० ३ । ११ । २ ] 'अन्तरो यमयति अन्तर्याम्यमृतः' [ बृ० ५ । ७ २२ ] इत्यादिभिः श्रूयते । व्याप्य तिष्ठसीत्यनेन व्याप्य नारायणः स्थित इति श्रुतिः स्मारिता ॥ १६ ॥

योगिशब्दः प्रकरणविशेषात्त्वां सदा परिचिन्तयन्नित्यादेः सामर्थ्याच्च योगिविशेषविषय इत्याह—भक्तियोगनिष्ठः सन्निति । अनेन निष्पन्नयोगिपरत्वमपि व्यावर्तितम् । अत्र योगिन्निति परेषां पाठोऽनार्षः । सदेति विशेषणसामर्थ्याद्भक्त्येति सिद्धम् । वेदनात्पूर्वं चिन्तनाशक्तेः कथं विद्यामित्यस्य चिन्तनहेतुत्वात् 'लक्षणहेत्वोः क्रियायाः' [ पा० सू० ३ । २ । १२६ ] इति शतु-

परिचिन्तयितुं प्रवृत्तश्चिन्तनीयं त्वां परिपूर्णैश्वर्यादिकल्याणगुणगणं कथं विद्याम् । पूर्वोक्तबुद्धिज्ञानादिभावव्यतिरिक्तेष्वनुक्तेषु केषु केषु च भावेषु मया नियन्तृत्वेन चिन्त्योऽसि ॥ १७ ॥

विस्तरेणाऽऽत्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति संक्षेपेणोक्तं तव स्रष्टृत्वादियोगं विभूतिं नियमनं च भूयो विस्तरेण कथय । त्वयोच्यमानं त्वन्माहात्म्यं शृण्वतो मेऽमृतं पिबत इव तृप्तिर्नास्ति । हि प्रसिद्धा ममातृप्तिस्त्वयैव विदितेत्यभिप्रायः ॥ १८ ॥

श्रीभगवानुवाच—

हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

हे कुरुश्रेष्ठ मदीयाः कल्याणीर्विभूतीः प्राधान्यतस्ते कथयिष्यामि ।

---

रनुशासनाच्च चिन्तयितुं प्रवृत्त इत्युक्तम् । त्वामिति धर्मिविशेषस्य प्रतिपन्नत्वात्प्रकारविशेषेषु बुभुत्सेति ज्ञापनायोक्तम्—परिपूर्णेत्यादि । प्रश्नो ह्यज्ञातविशेषज्ञानार्थ इत्यभिसंधायोक्तम्—पूर्वोक्तेत्यादि । भावेष्विति सप्तम्यभिप्रेतोक्तिः प्रकृतानुकर्षणं वा—नियन्तृत्वेनेति ॥ १७ ॥

प्रतिकूलजनानां नरकादिगमयितृत्वादनुकूलजनैः स्वाभिलषितं याच्यमानत्वाज्जनार्दनः । विस्तरबुभुत्साहेतुज्ञापनार्थं योगशब्दविवक्षितव्यक्त्यर्थं च भूयःशब्दफलितमाह—अहं सर्वस्येति । अमृतशब्दोऽत्रातृप्तिसमभिव्याहारान्माहात्म्येभोग(ग्य)त्वपरः । भोग्यतमत्वायोक्तम्—त्वयोच्यमानमिति । त्वन्मुखचन्द्रानिःसृतमिति भावः । हिशब्दाभिप्रेतं विवृणोति—ममेति ॥ १८ ॥

एवमतृप्त्या पृच्छन्तमर्जुनं प्रति अतिप्रसन्नो भगवांस्तस्याभिजनादिवर्णनमुखेन योग्यतां दर्शयन् विभूतिविस्तरेण प्रत्येकं वक्तुं श्रोतुं चाशक्यत्वात् केनचिदुपाधिविशेषेण संगृहीता विभूतीर्वक्ष्यामीत्याह—हन्तेति । तेऽनसूयत्वप्रीयमाणत्वातृप्तत्वादिगुणपूर्णायेति भावः । गुणत्वादिप्रतियोगिकशेषित्वादिप्राधान्यविवक्षा-

प्राधान्यशब्देनोत्कर्षो विवक्षितः । पुरोधसां च मुख्यं मामिति हि वक्ष्यते । जगत्युत्कृष्टाः काश्चन विभूतीर्वक्ष्यामि । विस्तरेण वक्तुं श्रोतुं च न शक्यते । तासामानन्त्यात् । विभूतित्वं नाम नियाम्यत्वम् । सर्वेषां भूतानां बुद्ध्यादयः पृथग्विधा भावा मत्त एव भवन्तीत्युक्त्वा— ' एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ' इति प्रतिपादनात् ।

---

यां वक्ष्यमाणसमस्तोदाहरणव्याप्त्यभावाद्गुणानां च प्राधान्येन व्यपदेक्ष्यमाणत्वसंग्राहकमर्थविशेषमाह—प्राधान्यशब्देनेति । तस्यैव विवक्षितत्वं वक्ष्यमाणेन संवादयति—पुरोधसामिति । पिण्डितार्थमाह—जगतीति । विस्तरेण कथयेति पृच्छन्तं प्रति प्राधान्यतः कथयिष्यामीति कथमुच्यत इति शङ्कायां नास्त्यन्तो विस्तरस्य म इत्युच्यते । विभूतीनामिति शेषः । विभूतेर्विस्तरो मयेति हि वक्ष्यते । नास्तिशब्दाभिप्रेतमशक्यत्वं दर्शयति—विस्तरेण वक्तुमिति । नेदं वक्तृश्रोत्रोरसामर्थ्यनिबन्धनमित्याह—तासामानन्त्यादिति । तदेतदुक्तं नास्त्यन्त इति । वक्ष्यमाणेषु पदार्थेषु विभूतिशब्दप्रयोगनिमित्तमाह—विभूतित्वं नामेति । नियन्तव्यवस्त्वन्तरविषयो विभूतिशब्दो विभवनकर्मपरः । अन्यत्र च ब्रह्मा दक्षादयः कालः, विष्णुर्मन्वादयः कालः, रुद्रः कालान्तकाद्याश्चेत्यादिषु जनार्दनविभूतय इति नियन्तव्येषु विभूतिशब्दो दृष्ट इति भावः । कुत इत्यत्राऽऽह—सर्वेषामिति । प्रस्तुतं तादधीन्यं ह्येतच्छब्देन परामृश्यत इति भावः । समनन्तरश्लोकेनापि तस्य श्लोकस्य तदर्थपरत्वं दर्शयति—तथेति । नन्वस्य श्लोकस्य व्याख्याने पूर्वं सौशील्यवात्सल्यसौन्दर्यादिकल्याणगुणयोगमित्युक्तम् । इह तु योगशब्दनिर्दिष्टं स्रष्टृत्वादिकमुच्यते तत्कथं घटते, इत्थमुभयत्रोभयमप्यादिशब्देन संगृहीतमित्येकार्थत्वात् । अत एव ह्येतां विभूतिं योगं चेत्यत्र मम हेयप्रत्यनीककल्याणगुणगणरूपं योगं चेति प्रयोजकेन संगृहीतम् । एतां विभूतिमित्यादेः पूर्ववन्नियमनपरत्वेन व्याख्यानेऽपि अत्र तदुपादानं समृद्ध्याद्यर्थान्तरव्युदासेन सोपसर्गधात्वर्थव्यञ्जनार्थम् ।

तथा तत्र योगशब्दनिर्दिष्टं स्रष्टृत्वादिकं विभूतिशब्दनिर्दिष्टं तत्प्रवर्त्यत्वमिति। पुनश्च—

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः'॥

इत्युक्तम्॥ १९॥

तत्र सर्वभूतानां प्रवर्तनरूपं नियमनमात्मतयाऽवस्थायेतीममर्थं योगशब्दनिर्दिष्टं सर्वस्य स्रष्टृत्वं पालयितृत्वं संहर्तृत्वं चेति सुस्पष्टमाह—

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः।**
**अहमादिश्च मध्यं च भूतानामन्त एव च॥ २०॥**

सर्वेषां भूतानां मम शरीरभूतानामाशये हृदयेऽहमात्मतयाऽवस्थितः। आत्मा हि नाम शरीरस्य सर्वात्मनाऽऽधारो नियन्ता शेषी च।

---

विस्तरेणाऽऽत्मनो योगं विभूतिं चेत्यत्र तु याभिर्विभूतिभिरिति तत्पूर्वप्रश्नवाक्यस्थविभूतिशब्दैकार्थ्यस्वारस्यान्नियमनार्थतोक्ता। अतः प्रश्नोत्तरपदयोरपि द्वैरूप्यं सह्यम्॥ १९॥

विस्तरेणाऽऽत्मनो योगं विभूतिं चेति पृष्टमर्थद्वयं विस्तरेण वक्तुं तस्योत्तरद्वयमहमात्मेति श्लोकेन संगृह्योच्यत इत्यभिप्रायेणाऽऽह—तत्रेति। एतेन प्रागुक्तेषु वक्ष्यमाणेषु च सामानाधिकरण्यनिर्देशेषु यथासंभवं निमित्तद्वयमुक्तं भवति। आत्मतयाऽवस्थित इति फलितान्वयप्रदर्शनम्। अनेकार्थोऽप्यात्मशब्दः शरीरप्रतिसंबन्धिनि प्रसिद्धिप्राचुर्यात् प्रतिसंबन्धिरूपं शरीरमपेक्षते। ततश्च वृत्त्यन्तर्गतो विभूतिशब्दो बुद्ध्या निष्कृष्यान्वेतव्य इत्यभिप्रायेण सर्वेषां भूतानां मम शरीरभूतानामित्युक्तम्। ईश्वरस्य भूतानि जीवांश्च प्रति कथमात्मत्वमित्यत्राऽऽत्मलक्षणं दर्शयति—आत्मा हीति। त्रयमप्येकं लक्षणमित्येके। तत्र श्रुत्याद्यनुसारेण जन्मादित्रयस्य ब्रह्मलक्षणत्वमिव शङ्कितमात्रव्यवच्छेदार्थतया त्रयाणां साफल्यं भाव्यम्। लक्षणत्रयमिति चान्ये। तत्र त्वेवं विवेकः—यस्य चैतन्यविशिष्टस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यमित्यादि शरीरलक्षणवाक्यं विभाव्यम्। शरीरलक्षणान्तराणि च तत्र तत्र विस्तरेण प्रतिक्षिप्तानि।

तथा वक्ष्यते—

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ इति ।

श्रूयते च—'यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो य॰ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' [ बृ० ३ । ७ । १५ ] इति । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' [ बृ० ५ । ७ । २२ ] इति च । एवं सर्वभूतानामात्मतयाऽवस्थितोऽहं तेषामादिर्म-

---

चैतन्यविशिष्टं प्रत्यपृथक्सिद्धविशेषणभूतद्रव्यं शरीरमिति भाष्याभिप्रेतोऽस्माकं निष्कर्षः । अत्र सर्वभूतशब्देन शरीरमात्रनिर्देशशङ्काव्युदासाय[ आशय ]शब्दस्य च हृदयविषयत्वव्यञ्जनायाऽऽधारत्वनियन्तृत्वादेरात्मलक्षणत्वसिद्धयर्थं चाऽऽह—तथेति । सर्वस्य चाहमित्यस्यानन्तरं द्वाविमौ पुरुषावित्युपक्रम्य क्षरः सर्वाणि भूतानीति वचनात्सर्वभूतशब्दोऽचिद्विशिष्टक्षेत्र[ ज्ञ ]पर इति निश्चीयते तद्वदत्रापि । तथा तस्मिन्नेव प्रकरणे 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्युक्त्वा 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्युक्तम् । अत्र बिभर्तीश्वर इत्याभ्यामाधारत्वनियन्तृत्वे स्पष्टे । ईश्वरशब्दरूढ्या च स्वामित्वसिद्धिः । न खलु गदादिषु भुजंगादीन्नियच्छत्सु तदधीश्वरशब्दः । ईश्वरशब्दस्याहंशब्दस्यात्रैकविषयत्वं श्लोकद्वयोपादानेन दर्शितम् । अत्र हि सर्वभूतशब्दो जीवपर एव । 'यन्त्रारूढानि मायया' इत्यभिधानात् । भ्रामयन्नित्यनेन नियन्तृत्वादिसिद्धिः । हृद्देशस्थित्या च मयि सर्वमिदं प्रोतमित्याद्युक्तधारकत्वादि सूचितमेव । चिदचिदात्मकसमस्तवस्तुशरीरत्वं सर्वभूतशब्दान्वयेनैव वदन्तीं श्रुतिं दर्शयति—यः सर्वेषु भूतेष्विति । चिदंशप्रतिशरीरत्वं प्रपञ्चयद्वाक्यमुपादत्ते—य आत्मनीति । आत्मत्वेनावस्थानस्योपादानत्वनिमित्तत्वोपयोगात् पूर्वार्धेन संगमयन्नुत्तरार्धं व्याख्याति—एवमिति । एवमात्मतयाऽवस्थितोऽहमित्यनेन निर्विकारस्य स्वस्यैवोपादानत्वस्थापनं देशतः कालतो वा मध्यान्तत्वमात्रम-

ध्योऽन्तश्च तेषामुत्पत्तिस्थितिप्रलयहेतुरित्यर्थः ॥ २० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

एवं भगवतः स्वविभूतिभूतेषु सर्वेष्वात्मतयाऽवस्थानं तत्तच्छब्दसामानाधिकरण्यनिर्देशहेतुं प्रतिपाद्य विभूतिविशेषान् सामानाधिकरण्येन व्यपदिशति । भगवत्यात्मतयाऽवस्थिते हि सर्वे शब्दास्तस्मिन्नेव पर्यवस्यन्ति । यथा देवो मनुष्यः पक्षी वृक्ष इत्यादयः शब्दाः शरीराणि प्रतिपादयन्तस्तत्तदात्मनि पर्यवस्यन्ति । तथा भगवतस्तत्तदात्मतयाऽवस्थानमेव तत्तच्छब्दसामानाधिकरण्यनिबन्धनमिति विभूत्युपसंहारे वक्ष्यति । 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इति सर्वेषां स्वेनाविनाभा-

---

नुचितमिति तदुपचरितमाह—तेषामुत्पत्तीति ॥ २० ॥

आदित्यानामहं विष्णुरित्युपक्रम्य 'यच्चापि सर्वभूतानां बीजं तदहमर्जुन' इत्यन्तं सामानाधिकरण्यप्रघट्टकमहमात्मेति श्लोकेन संगमयन्नवतारयति—एवं भगवत इति । एतेनाहमात्मेत्यादिकाः समस्ताश्चतस्रो विभूतय इति मतान्तरं निरस्तम् । विभूतिविशेषानिति प्राधान्यत इति ह्युपक्रान्तम् । ननु शरीरवाचिनः शरीरादिशब्दा नाऽऽत्मनि पर्यवस्यन्ति । तस्मादत्रापि लक्षणास्वीकार एव न्याय्यः, न शक्तिकल्पना लाघवाच्चेत्यत्राऽऽह—भगवतीति । हिशब्दो हेत्वर्थः । अपृथक्सिद्धविशेषणवाचिनः शब्दास्तत्तद्द्वारा धर्मिण्यपि मुख्यवृत्ता इति प्रयोजकरूपेण गुणादिष्वपि सिद्धत्वान्न शक्तिकल्पनागौरवमिति भावः । तदेतदुक्तम्—पर्यवस्यन्तीति । शरीरवाचिशब्दानां स्वरसतस्तत्तदात्मनि पर्यवसानमपृथक्सिद्ध्युपाधिकं दर्शयति—यथेति । शरीरादिशब्दास्तु गुण इत्यादिशब्दवन्निष्कर्षकशब्दत्वान्न धर्मिणि पर्यवस्यन्ति । एतदभिप्रायेणोक्तम्—देवो मनुष्यः पक्षी वृक्ष इत्यादयः शब्दा इति । अध्यासादिहेतुकसामानाधिकरण्यशङ्कामपनयति—भगवतस्तदात्मतयेति । न ह्युपक्रमोपसंहारविरुद्धोऽर्थो मध्ये स्वीकार्यः । न च ब्रह्मणः सर्वहेयमयत्वभ्रमाद्वा तत्त्वतो वाऽङ्गीकर्तुं युक्तमिति भावः । अविनाभाववचनादिति । आत्मना

वचनात् । अविनाभावश्च नियाम्यतयेति ' मत्तः सर्वं प्रवर्तते ' इत्युपक्रम उदितम् । द्वादशसंख्यासंख्यातानामादित्यानां द्वादशो य उत्कृष्टो विष्णुनामाऽऽदित्यः सोऽहम्, ज्योतिषां जगति प्रकाशकानां योऽंशुमान रविरादित्यगणः सोऽहम्, मरुतामुत्कृष्टो मरीचिर्यः सोऽहमस्मि, नक्षत्रा-

---

विना हि शरीरभूतं न भवतीति भावः । अग्निना विना धूमो नास्ति गुणिना विना गुणो नास्तीत्युक्त अग्न्यादिरेव परमार्थो धूमादिस्तु मिथ्याभूत इति वाऽग्न्यात्मक इति वा प्रत्ययो हि न भवति तद्वदत्रापीति । ननु यज्ञदत्तं विनाऽन्ये गृहे न सन्ति रज्जुं विना सर्पादिकं नास्तीत्युक्ते यथैकस्यैव सत्त्वं तद्व्यतिरिक्तानां चासत्त्वं प्रतीयते तद्वदत्रापि किं न स्यादत्राऽऽह–अविनाभावश्चेति। अजातविरोधकालसमुदितोपक्रमविरुद्धस्योपसंहारस्य नोदय इत्युपक्रमाधिकरणसिद्धमिति भावः । नियम्यतयेत्यनेन धूमाग्निव्याप्तिवैषम्यमपि दर्शितम् । एवमेतावता ग्रन्थेन ' अहमात्मा गुडाकेश सर्वभूताशयस्थितः ' इति सर्वशरीरवर्तिनां जीवानां ब्रह्मस्वरूपैक्यमुच्यत इति कुदृष्टिमतमुन्मूलितम् । आदित्यानामदित्यपत्यानामजघन्यो जघन्य इत्यादिवचनानुसारेण द्वादशो य उत्कृष्ट इत्युक्तम् । अत्र चोत्तरेषु च निर्धारणाविशेषप्रदर्शनार्थ उत्कृष्टशब्दः । स च पुरोधसां च मुख्यमिति वक्ष्यमाणमुख्यपर्यायतयाऽपेक्षितप्रदेशे सर्वत्र निहितः । अत्र चोद्दिश्यमाणानां पदार्थानां केषांचित्प्राधान्यं प्रत्यक्षं केषांचिदागमिकम् । क्वचिद्व्यवहितं क्वचिज्जीवव्यवहितं च सामानाधिकरण्यम् । ज्योतिःशब्देन तारकामात्रग्रहणे ततो बहिर्भूतस्य तत्संबन्धरहितस्य तस्य च रवेर्निर्धारणाद्ययोगात्–प्रकाशकानामिति सामान्येनोक्तम्। जगत्कारणभूतपरज्योतिरपेक्षया रवेः खद्योतकल्पत्वात्तद्व्यवच्छेदाय जगतीति विशेषितम्। अंशुमानिति निर्धारणावधिकातिशययोगो मतुवा विवक्षितः। अन्यथा पौनरुक्त्यात्। रविशब्दस्य द्वादशादित्यसाधारण्यादेकवचनं समुदायाभिप्रायमिति प्रदर्शनायोक्तम्—आदित्यगण इति। मरुतो वायव एकोनपञ्चाशद्दितिपुत्रा येषां सप्तकाः सप्त गणा भवन्ति। शशिनोऽपि यदि नक्षत्रत्वं स्यात्तदा हि तस्माद्वर्गात्तस्य निर्धारणमित्यभिप्रायेणाऽऽह—

णामहं शशी, नेयं निर्धारणे षष्ठी । भूतानामस्मि चेतनेतिवन्नक्षत्राणां पतिर्यश्चन्द्रः सोऽहमस्मि ॥ २१ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥

वेदानामृग्यजुःसामाथर्वणां य उत्कृष्टः सामवेदः सोऽहम् । देवानामि-

---

नेयमिति । कस्तर्ह्यत्रार्थ इत्यत्राऽऽह—नक्षत्राणां पतिरिति । प्राधान्यत इति ह्युपक्रान्तमिति भावः । ननु पूर्वापरेषु सर्वेषु निर्धारणार्थेषु मध्ये कस्यचित्संबन्धमात्रपरत्वमयुक्तम् । नक्षत्रशब्देन निशि प्रकाशमात्रं चितिन्यायाद्ग्राह्यम् । 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति श्रुतेः । चन्द्रमण्डलस्यापि वा स्वर्गाणां (र्गस्य) भोगस्थानत्वान्नक्षत्रत्वम् । यो वा इह यजतेऽमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वं देवग्र(गृ)हा वै नक्षत्राणीति । तत्राऽऽह— भूतानामस्मि चेतनेतिवदिति । मुख्ये संभवति नक्षत्राणां(त्रत्वे) न्याय्या । न चात्र सर्वत्र निर्धारणार्थता । भूतानामस्मि चेतना । सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन । वादः प्रवदतामहम् । अहमेवाक्षयः कालः । उद्भवश्च भविष्यताम् । द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् । जयोऽस्मि व्यवसायोऽस्मीत्यादौ निर्धारणाभावात् । अतोऽत्र चन्द्रस्य नक्षत्रजातीयत्वाभावात्षष्ठ्यभिहितस्य संबन्धसामान्यस्य प्रमाणसिद्धविशेषपर्यवसानमिति भावः ॥ २१ ॥

गीतिर्हि सामशब्दार्थः । तस्य वेदेषु निर्धारणं कथमिति शङ्काव्युदासाय सामवेदोऽस्मीति निर्देश इति प्रदर्शयति—ऋग्यजुरिति । सामवेदोत्कर्षो गीतिप्रधानत्वसहस्रशाखत्वादिभिः । अन्येषां तु तदभावात्तावन्मात्रेणापकर्षः । न तु प्रामाण्यतारतम्यात् । ऋक् च वा इदमग्रे साम चाऽऽस्तां सैव नाम ऋगासीदमो नाम साम सा वा ऋक् सामोपावदन्मिथुनं संभवाव प्रजात्या इति नेत्यब्रवीत् साम ज्यायान्वा अतो मम महिमेति, गीतिरूपस्य साम्नः प्राधान्याद्गीतात्मकस्य सामवेदस्य प्राधान्यम् । ऋग्भ्यो जातं वैश्यं वर्णमाहुर्यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिं सामवेदो ब्राह्मणानां प्रसूतिरिति च । देवा इति स्वर्गवासिनो विवक्षिताः । ब्रह्मादिसं-

-न्द्रोऽहमस्मि । एकादशानामिन्द्रियाणां यदुत्कृष्टं मन इन्द्रियं तदहमस्मि ।
इयमपि न निर्धारणे । भूतानां चेतनावतां या चेतना साऽहमस्मि॥२२॥

---

ग्रहायोगात् । वासवशब्दस्येन्द्रशब्देन व्याख्यानमतिशयद्योतनार्थम् । 'इदि परमैश्वर्ये ' [ पा० धा० पा० ६३ ] इति हि स्मृतिः ।

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ' । [ का० ३ । १० ]

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ' । [ मु० २ । १ । ३ ]

इत्यादिषु मनस इन्द्रियेभ्यः पृथगभिधानात्कथमिन्द्रियाणां मनश्चास्मीति निर्धारणमित्यत्राऽऽह—एकादशेन्द्रियाणां यदुत्कृष्टं मन इन्द्रियमिति । अयमभिप्रायः—'इन्द्रियाणि दशैकं च' 'एकादशं मनश्चात्र ' इत्यादिषु मनसोऽपीन्द्रियत्वेन व्यपदेशात्क्वाचित्कः पृथग्व्यपदेशो गोबलीवर्दन्यायादिति निर्धारणोपपत्तिरिति । न हि भूतेषु चेतनासंज्ञं किंचिद्भूतमस्तीत्यभिप्रायेणाऽऽह—इयमपीति । षष्ठीति शेषः । तेजस्तेजस्विनां सत्त्वं सत्त्ववतामित्यादिवद्विशिष्टे सारभूते विशेषणांशो विवक्षित इत्यभिप्रायेण–चेतनावतामित्युक्तम् । ननु भूतानां षष्ठत्वेन चेतनासंज्ञं किमप्यत्रोच्यते । यथा—

महाभूतानि खं वायुरग्निरापस्तथा मही ।
षष्ठस्तु चेतना धातुरात्मा सप्तम उच्यते ॥
अष्टमं तु मनो ज्ञेयम् । इति ।

तथा—

षष्ठस्तु चेतनाधातुर्मन इत्युपदिश्यते ॥ इति च ।

अत्र मनसोऽधिष्ठानतया चेतनायास्तदपृथग्वचनमित्यविरोधः। अतो भूतानामस्मि चेतनेति निर्धारणार्थत्वं युज्यत इति । मैवम् । न हि भूतषष्ठनिर्देशमात्रान्महाभूतत्वम् । अन्यथा संख्यानिवेशसंभवात् । अत्र च सप्तमतयाऽष्टमतया च निर्दिष्टयोर्महाभूतत्वानभ्युपगमात् । चेतनाशब्दस्य चाप्रसिद्धत्वात् । प्रसिद्धार्थस्वीकारस्यौचित्यात् । अतः संबन्धमात्रविवक्षयैवात्र षष्ठी युक्तेति ॥ २२ ॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

रुद्राणामेकादशानां शंकरोऽहमस्मि । यक्षरक्षसां वैश्रवणोऽहं वसूनामष्टानां पावकोऽहं शिखरिणां शिखरशोभिनां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

पुरोधसामुत्कृष्टो बृहस्पतिर्यः सोऽहमस्मि । सेनानीनां सेनापतीनां स्कन्दोऽहमस्मि । सरसां सागरोऽहमस्मि ॥ २४ ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

---

रुद्रेति । रुद्रेष्वेकस्य शंकरसंज्ञयैवोत्कर्षद्योतनम् । यक्षराक्षसजात्योरविदूरविप्रकर्षाद्यक्षरक्षसामित्युक्तम् । न तु वित्तेशस्य राक्षसत्वगन्धः । यद्वा नक्षत्राणामहं शशीतिवज्जातिद्वयपतित्वमात्रमिह विवक्षितम् । वित्तेशसंज्ञया च धनदस्यासाधारणैश्वर्योत्कर्षद्योतनम् । ' स्थावराणां हिमालयः ' इति पर्वतमात्राणां परस्ताद्वक्ष्यमाणत्वान्मेरुः शिखरिणामित्यत्र शिखरिशब्दः पर्वतविशेषोपलक्षकः । शक्तश्चायं शब्दो विशेषं दर्शयितुमित्यभिप्रायेणोक्तम्——शिखरशोभितानां पर्वतानामिति । प्रशंसापरः प्रत्यय इति भावः । प्रशस्तरत्नकाञ्चनादिमयशिखरविशेषयोगान्मेरोरतिशयः ॥ २३ ॥

बृहस्पतिसंज्ञया बृहतां पतिरित्यतिशयः सिद्धः । गिरां पतिर्ह्यसौ । सेनानीशब्देनात्र कर्मवश्यसेनापतिसंग्रहः । स्कन्दस्य देवसेनानीत्वलक्षणोऽतिशयः । सारशब्देन प्रवाहव्यतिरिक्तस्थास्नुसलिलाशयमात्रस्य विवक्षितत्वात्सागरसंग्रहः । स्रोतसां पृथग्वक्ष्यमाणत्वात् ॥ २४ ॥

देवर्षीणां मुनीनामित्यादेर्वक्ष्यमाणत्वादत्र महच्छब्देन विशेषणाच्च महर्षीणामिति ऋषिगणविशेषो विवक्षित इत्यभिप्रा-

महर्षीणां मरीच्यादीनां भृगुरहम् । अर्थाभिधायिनः शब्दा गिरः,

येण—मरीच्यादीनामित्युक्तम् । गिरामिति न शब्दमात्रं विवक्षितम् । समुद्रघोषादिषु तत्प्रयोगाभावात् । अत एव नाक्षरमात्रम् । अक्षराणामकारोऽस्मीति पृथग्वक्ष्यमाणत्वाच्च । तत एवैकमक्षरमित्यप्यकारव्यतिरिक्तविषयम् । ओमित्येकाक्षरं ब्रह्मेत्यादिषु प्रणवेऽप्येकशब्दविशेषितोऽक्षरशब्दः प्रयुक्त इत्यभिप्रायेणाऽऽह—अर्थाभिधायिन इति । अर्थाभिधायिषु प्रणवस्योत्कर्षः सर्वोत्कृष्टार्थाभिधायित्वादिना । शङ्कुना पर्णानामिव सर्वासां वाचां प्रणवेन संतृण्ण [ त ] इति श्रुतेश्च । यज्ञेषु जपयज्ञस्य प्राशस्त्यमन्यत्र सिद्धम्—'विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः' इति । किं च

कुर्याद्घृतपशुं [ वाऽपि ] कुर्यात्पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कथंचन ॥ इति ।
पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ।
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः ॥
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ।

इत्यादिवचनबलादहिंसात्मकयज्ञानर्हाणां हिंसात्मकयज्ञानुष्ठानम् ।तत्र विधितः प्रवृत्तेरपकारानभिसंधानादुपकारस्मृतेर्देवताप्रीणनत्वाच्च न प्रत्यवायः। फलार्थिनां तु तत्फलमल्पमस्थिरं दुःखमिश्रं च। अहिंसकास्तु यज्ञा विशिष्टाधिकारिसा भ(त्वाद्भ)गवतोऽतिप्रीणनत्वादपवर्गप्रत्यासन्नाः। अत एव ह्युपरिचरादयः पिष्टपशुभिरिष्टवन्तः। एवमितरेषु यज्ञेषु हिंसादिप्रसङ्गोऽधिकारिविशेषादिना विषयव्यवस्था हामि(चे)त्यादिर्महान् क्लेशः। जपयज्ञे तु तत्प्रसङ्गाभावादव्याक्षेपणार्थप्रतीत्या सबीजयोगद्वारा समाधौ सहसा निवेशनाच्च यज्ञान्तरेभ्यो जपयज्ञः प्रशस्ततमः सर्वाश्रमसाधारण्यात्,

जप्येनापि तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥ इति ।

विधुरादेरपि सिद्धिहेतुत्वाच्च। पर्वतविशेषाणां पूर्वमुक्तत्वाद्वृक्षाणां वक्ष्यमाणत्वाच्च तदुभयव्यवच्छेदार्थं हिमवच्छैलराजत्व-

तासामेकमक्षरं प्रणवोऽहमस्मि । यज्ञानामुत्कृष्टो जपयज्ञोऽस्मि । पर्वतमात्राणां हिमवानहम् ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

सर्ववृक्षाणां मध्ये पूज्योऽश्वत्थ एवाहम् । देवर्षीणां मध्ये परमवैष्णवो नारदोऽहमस्मि । गन्धर्वाणां देवगायकानां मध्ये चित्ररथोऽस्मि । सिद्धानां योगनिष्ठानां परमोपास्यः कपिलोऽहम् ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

सर्वेषामश्वानां मध्येऽमृतमथनोद्भवमुच्चैःश्रवसं मां विद्धि । गजेन्द्राणां सर्वेषां मध्येऽमृतमथनोद्भवमैरावतं मां विद्धि । अमृतोद्भवमित्यैरावतस्यापि विशेषणम् । नराणां मध्ये राजानं मां विद्धि ॥ २७ ॥

---

प्रसिद्ध्यनुरोधार्थं चोक्तम्—पर्वतमात्राणामिति ॥ २५ ॥

ननु सर्ववृक्षाणामित्येतदनुपपन्नम् । पारिजाताद्यपेक्षयाऽश्वशब्द (त्थ) स्य निकृष्टत्वादित्यत्रोक्तम्—पूज्य इति । पारिजातादीनामप्यश्वत्थवत्पूज्यत्वं नास्तीति भावः । देवा मन्त्रदर्शिनो देवर्षयः । देवर्षिषु नारदस्य बहुप्रकारोऽतिशयो बहुषु प्रदेशेषु महाभारत एव प्रपञ्चितः । चित्ररथो गन्धर्वराजः । सिद्धानामित्यादि । पूर्वसंचितसुकृतविशेषवशाज्जन्मसिद्धाणिमाद्यैश्वर्याः सिद्धाः । आदिविद्वान्सिद्ध इति कपिलमाहुः । 'ऋषिं प्रसूतं कपिलं महान्तम्' [ श्वे० ५ । २ ] । इति च श्रुतिः । 'ददृशुः कपिलं तत्र वासुदेवं सनातनम्' इति चाऽऽहुः । अयमपि परशुरामादिवत् ॥ २६ ॥

अमृतोद्भवमिति जन्मनः प्रकर्षसूचनम् । अमृतमत्र जलं मथ्य-( थ्य )मानावस्था सुदै( धै )व वा । गजेन्द्रशब्देन दिग्गजा विवक्षिताः । तेषु प्रधानतया दिक्पालेश्वरस्य शचीपतेरौपवाह्य ऐरावतः । अमृतोत्पन्नत्वं च काकाक्षिन्यायादैरावतेऽप्यन्वेतव्यम् । रथंतरसामोद्भवत्वं वा द्रष्टव्यम् । नराधिपशब्देनैव निर्वाहकत्वलक्षणोऽतिशयः सिद्धः ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

आयुधानां मध्ये वज्रं तदहम्। धेनूनां हविर्दुघानां मध्ये कामधुग्दिव्या सुरभिः। प्रजनो जननहेतुः कंदर्पश्चाहमस्मि। सर्पा एकशिरसस्तेषां मध्ये वासुकिरस्मि ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम्।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

नागा बहुशिरसः। यादांसि जलवासिनस्तेषां वरुणोऽहम्। अत्रापि न निर्धारणे षष्ठी। दण्डयतां वैवस्वतोऽहम् ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

---

आयुधानामित्यर्वाचीनायुधपरम्। सुदर्शनाद्यपेक्षया दधीचेरस्थिसंभवस्य वज्रस्यापि निकृष्टत्वात्। धेनूनां दोग्ध्रीणां दिव्या सुरभिरिति यौगिकः कामधुक्शब्दोऽत्र व्यक्तिविशेषनिष्ठ इति भावः। प्रजनशब्देन जननहेतुत्वं कंदर्पस्यासाधारणोऽतिशय उक्तः। स मदायत्त इत्यर्थः। अप्रजार्थकंदर्पव्यवच्छेदार्थो वा प्रजनशब्दः। पर्याययोः सर्पनागशब्दयोः कथं व्यपदेश इत्यत्राऽऽह—सर्पा एकशिरसो नागा बहुशिरस इति ॥ २८ ॥

यादःशब्देन वरुणस्यापि संग्रहार्थमाह—यादांसि जलवासिन इति। यद्वा जन्तुमात्रं विवक्षितम्। तेषां पतित्वेन संबन्धो वरुणस्य तत्साजात्याभावाद्ग्राह्यः। अर्यमा पितृराजः। संयमतां संयच्छतामित्यर्थः। तदाह—दण्डयतामिति ॥ २९ ॥

उपमानमशेषाणां साधूनां यः सदाऽभवदित्यादिना प्रह्लादोत्कर्षः। अहमेवाक्षयः काल इत्यस्य कालतत्त्वस्य परस्ताद्वक्ष्यमाणत्वाद्यमस्य च पूर्वमुक्तत्वात्तद्व्यतिरिक्तः पुरुषविशेष इह कालशब्देन विवक्षितः। अचेतनस्य कालस्य गणयितृत्वं न युज्यते। कलयतामित्यस्य विज्ञातृमात्रपरत्वे तेषु कालस्य निर्धा-

अनर्थप्रापकतया गणनीयानां मध्ये कालो मृत्युरहम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

पवतां गमनस्वभावानां पवनोऽहम् । शस्त्रभृतां रामोऽहम्[1] । शस्त्रभृत्त्वमत्र विभूतिः । अर्थान्तराभावात् । आदित्यादयश्च क्षेत्रज्ञा आत्मत्वेनावस्थितस्य भगवतः शरीरतया धर्मभूता इति शस्त्रभृत्त्वस्थानीयाः ॥ ३१ ॥

---

रणमयुक्तमतस्तदुचितमर्थविशेषं दर्शयति — अनर्थेति । नहि मरणातिरिक्तोऽनर्थ इति भावः । मृगेन्द्रशब्देनैव सिंहस्यातिशयः सिद्धः । पक्षिषु वैनतेयस्य वेगातिशयाद्वेदमयत्वादिना चोत्कर्षः ॥ ३० ॥

पवतामित्यनेन पवनासाधारणक्रिया विवक्षिता चेन्निर्धारणं नोपपद्यत इति तदुपपत्तये गमनस्वभावानामित्युक्तम् । अजस्रगमनशीलानामित्यर्थः । पवनप्रेरिता एव हि तारकादयोऽप्यजस्रं परिभ्रमन्ति । सोमपवनादिष्विवात्र शोधनत्वाधिगमनमिहाविवक्षितम् । रामः शस्त्रभृतामहमिति परशुरामस्यापि जेता रावणहन्ता रामो विवक्षित इति तदुचितममोघशस्त्रत्वलक्षणमतिशयमाह— शस्त्रभृत्त्वमत्र विभूतिरिति । पूर्वोत्तरेष्विव राम एव विभूतिः किं न स्यादित्यत्राऽऽह—अर्थान्तराभावादिति । अचिद्विशेषस्य चेतनान्तरस्य वा शस्त्रभृच्छब्दवाच्यस्यात्रासंभवादित्यर्थः । अर्थान्तराणां मध्ये स्वासाधारणधर्मविशेषनिर्देशरीतिभङ्गः स्यादित्यत्राऽऽह— आदित्यादयश्चेति । शस्त्रभृत्त्वस्यान्येषां च भगवद्धर्मिणां प्रतिधर्मत्वमविशिष्टमित्येकैव रीतिः, निर्धारणानिर्धारणभेदवन्मुखभेदमात्रं न दोष इति भावः । तत्राऽऽदित्यशब्देन ज्योतिषां रविरंशुमानित्युक्तो रविर्विवक्षितः । आदित्यानामहं विष्णुरित्युक्तस्त्वादित्यो रामतुल्यः । मकरो मत्स्यराजः । स्रोतःसु जाह्नव्या विष्णुपदोद्भवत्वसर्वज्ञशिरोधृतत्वत्रैलोक्यप्रवृत्तत्वादिभिरतिशयः ॥ ३१ ॥

---

१ क. ग. च. °म् । न तु मेऽस्रौ नि° ।

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

सृज्यन्त इति सर्गास्तेषामादिः कारणं सर्वदा सृज्यमानानां सर्वेषां प्राणिनां तत्र तत्र स्रष्टारोऽहमेवेत्यर्थः। तथाऽन्तः सर्वदा संह्रियमाणानां तत्र तत्र संहर्तारोऽप्यहमेव। तथा च मध्यं पालनं सर्वदा पाल्यमानानां पालयितारश्चाहमेवेत्यर्थः । श्रेयःसाधनभूतानां विद्यानां मध्ये परमनिःश्रेयससाधनभूता विद्याऽहमस्मि। जल्पवितण्डादिं कुर्वतां तत्त्वनि-

---

सर्गशब्देन सृष्टिमात्रविवक्षायामादिरन्तश्चेत्यादिनाऽन्वयायोगात्क्रमार्थोऽत्र सर्वशब्द इत्याह—सृज्यन्त इति सर्गा इति । आदिमध्यान्तशब्दानामत्रावयवविशेषाद्यर्थता न युक्ता । अनतिशयितार्थत्वात् । नापि कालविशेषार्थता । कालस्य वक्ष्यमाणत्वेनात्र पृथग्व्यपदेशप्रयोजनाभावात् । न चोत्पत्त्यादिक्रियामात्रार्थता । उद्भवश्च भविष्यतामिति वक्ष्यमाणेन पौनरुक्त्यप्रसङ्गात् । न चेश्वरस्यैव कारणत्वादिकमिहोच्यते । अहमादिश्च मध्यं चेत्युपक्रमेण कृततरत्वात् । न चेदं सामान्यतस्तन्निगमनम् । अत्र चर्युपरिवचनम्(?) । तस्माल्लोकसिद्धोत्पत्त्यादिहेतुपरत्वमेवोचितम् । लक्षणतया तत्राप्युपादानकारणस्य बीजं मां सर्वभूतानामिति वक्ष्यमाणत्वान्निमित्तकारणमात्रमिह विवक्षितम् । सर्गाणामित्यविशेषवचनेन सर्वदेशकालवर्तिसृज्यप्रतियोगिकसर्वनिमित्तकारणवर्गस्य स्वाधीनत्वमभिप्रेतम् । तदेतदखिलमभिसंहितं सर्वदेत्यादिवाक्यत्रयेण । अध्यात्मविद्या जीवपरमात्मयाथात्म्यविद्या सा विषयतः फलतश्च विद्यान्तरेभ्य उत्कृष्टा । प्रवदतामिति नान्योन्यविवादमात्रं विवक्षितम् । तत्र वादाख्यविशेषस्यास्मरणात् । अध्यात्मविद्या विद्यानामिति विद्याप्रसङ्गात्तदर्थकथाविषयत्वोपपत्तेः । न च सत्त्वं सत्त्ववतामहमितिवद्वादाख्यं कथाविशेषवत्त्वमभिमतम् । अन्यापेक्षयाऽतिशयसूचनसंभवे तत्परित्यागायोगात् । अतः प्रवदतामिति कथात्रयसाधारणरूपमिह विवक्षितम् । तदाह—जल्पवितण्डादि कुर्वतामिति । तत्त्वनिर्णयाय

र्णयाय प्रवृत्तो वादो यः सोऽहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ३३ ॥

अक्षराणां मध्येऽकारः । 'अकारो वै सर्वा वाक्' इति श्रुतिसिद्धः सर्ववर्णानां प्रकृतिरकारोऽहम् । सामासिकः समाससमूहस्तस्य मध्ये द्वंद्वसमासोऽहम् । स ह्युभयपदार्थप्रधानत्वेनोत्कृष्टः । कलामुहूर्तादिमयोऽक्षयः कालोऽहमेव । सर्वस्य स्रष्टा हिरण्यगर्भश्चतुर्मुखोऽहम् ॥ ३३ ॥

---

प्रवृत्त इत्यनेन स्वल्पफलविजिगीषुकथातिशयितापवर्गपर्यवसितफलत्वेन वादस्योत्कर्षप्रदर्शनम् ॥ ३२ ॥

बह्वृचोपनिषदि श्रूयते–'अ इति ब्रह्म' इति । तथा 'अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इति । श्रुत्यैव प्रपञ्चितं प्रकृतित्वमाह–सर्ववर्णानां प्रकृतिरिति । निर्धारणोपयिकबहुत्वसिद्ध्यर्थं प्रत्ययार्थं दर्शयति–सामासिकः समाससमूह इति । पूर्वोत्तरान्यपदार्थप्रधानेभ्योऽव्ययीभावतत्पुरुषबहुव्रीहिभ्यो द्वंद्वस्योत्कर्षमाह—स ह्युभयेति । अक्षयशब्देन कला मुहूर्ताः काष्ठाश्च 'कलामुहूर्तादिमयश्च कालः' इति श्रुतिस्मृत्यादिसिद्धबहुविधविकाररूपलोकक्षयहेतुभूतानन्तावच्छेदे सत्यपि स्वरूपतोऽनाद्यनन्तत्वं विवक्षितमित्यभिप्रायेणाऽऽह—कलेति । 'अनादिर्भगवान्कालो नान्तोऽस्य द्विज विद्यते'।'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः'। 'नान्तो न चाऽऽदिर्न च मेऽस्ति मध्यम्'इत्यादेरिदं कालाधिष्ठातृत्वं व्यक्तम् । धातृशब्दरूढ्या विश्वतोमुखत्वविशेषणेन च हिरण्यगर्भ एवात्रोच्यत इत्यभिप्रायेणाऽऽह–सर्वस्येति । धातृशब्देनैवाण्डान्तर्वर्तिसमस्तविधातृत्वलक्षण उत्कर्षः सिद्ध इति प्रदर्शनाय–सर्वस्य स्रष्टेत्युक्तम् । एतेन कर्मफलविधातृत्वेन व्याख्यान्तरं निरस्तम् । विश्वत इति दिक्चतुष्टयमात्रमिह विवक्षितमिति ज्ञापनायोक्तम्–चतुर्मुख इति । वेदचतुष्टयप्रवर्तनादिकं चानेन सूचितम् ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

सर्वप्राणहरो मृत्युश्चाहम्। उत्पत्स्यमानानामुद्भवाख्यं कर्म चाहम्। नारीणां श्रीरहं कीर्तिश्चाहं स्मृतिश्चाहं मेधा चाहं धृतिश्चाहं क्षमा चाहम् ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

साम्नां बृहत्सामाहम्। छन्दसां गायत्र्यहम्। ऋतूनां कुसुमाकरो

---

कर्मानुरूपदण्डनकालावच्छेदाधिकृतयोर्यमकालाख्यपुरुषयोरुक्तत्वाद्यमादेशकारिप्राणहरणादि ( धि ) कृतः पुरुषविशेष इह मृत्युः सर्वहर इत्युच्यते, इति ज्ञापनाय सर्वप्राणहर इत्युक्तम्। प्रलये सर्वसंहर्तेश्वर इह मृत्युरिति कैश्चिदुक्तं मन्दम्। भूतानामन्त एव चेत्युक्तत्वादुद्भवसहपाठादत्र मृत्युशब्दो मरणपर इति केचित्। उद्भवशब्दस्य( ब्दः स्व ) रसत उत्पत्तिक्रियापरः । उद्भवस्थानादिनिमित्तोपादानादिकं चात्र पृथगेव निर्दिष्टमिति क्रियापरत्वमेवोचितमित्यभिप्रायेणोद्भवाख्यं कर्मेत्युक्तम् । कीर्त्यादयो नेह गुणविशेषा विवक्षिताः । तेषां पुरुषेष्वपि उद्भूतत्वेन नारीणामिति विशेषायोगात् । न च नारीशब्दोऽत्र स्त्रीलिङ्गपदार्थमात्रपरः। मुख्यबाधाभावात्। अतो नारीविशेषनिर्धारणमेव क्रियते। तत्र च श्रिय एव सर्वनारीभ्योऽतिशयितत्वात्सैव प्रथमं वक्तव्या। कीर्तिः श्रीरिति तु पाठक्रमोऽर्थक्रमेण बाध्यत इत्यभिप्रायेण श्रीरहं कीर्तिश्चाहमित्युक्तम् । एताश्च भगवदसाधारणव्यक्तयः । अन्यत्र तु तत्तदभिमानविशेषात्तत्तच्छब्दः ॥ ३४ ॥

सामसु बृहत्साम्न उत्कृष्टत्वं श्रुत्यैव सिद्धम्। 'ब्रह्म च वा इदमग्रे रथंतरं चाऽऽस्तां वाक्च वै तन्मनश्चाऽऽस्तां वाग्वै रथंतरं मनो बृहत्तद्बृहत्पूर्वं ससृजानं रथंतरमित्यमन्यत तद्रथंतरं गर्भमधत्त' इति। गायत्र्याश्छन्दसां मातृत्वेनोत्कर्षः श्रुतिषु च्छन्दोविचि(चि)त्यां च प्रपञ्चितः। यथा बह्वृचोपनिषदि—'अग्रं वै छन्दसां गायत्री' इति। मासेषु मार्गशीर्षस्यातिशयो वर्षगर्भाधानकालत्वात्।

वसन्तः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

छलं कुर्वतां छलास्पदेष्वक्षादिलक्षणद्यूतमहम् । जेतॄणां जयोऽस्मि व्यवसायोऽस्मि । सत्त्ववतां सत्त्वं महामनस्त्वम् ॥ ३६ ॥

---

मासेषु केशवादिद्वादशसु प्रथमस्य केशवस्य मासत्वादुत्रतवाग्वा-(ताद्या)रम्भकालत्वाच्च । कुसुमाकरशब्देनैव वसन्तस्य प्रत्यक्षसिद्धः सर्वप्राणिसुखहेतुरतिशयो द्योतितः । "वसन्ते वसन्ते ज्योतिषा यजेत" "वसन्ते दीक्षयेद्विप्रं ग्रीष्मे राजन्यमेव च" इत्यादिभिश्च ॥ ३५ ॥

छलयतामित्यत्र 'तत्करोति' इति णिजित्यभिप्रायेण—छलं कुर्वतामित्युक्तम् । अक्षसंचारादिमात्रेण जयपराजयारोपादिह च्छलत्ववाचोयुक्तिरित्यभिप्रायेणाक्षादिलक्षणमित्युक्तम् । तेजस्तेजस्विनामित्यादिवद्दीव्यतां द्यूतमहमित्यनभिधानाच्छलयतामिति च्छलकरणमात्रवचनाच्च च्छलस्थानान्तरेभ्यः क्रयविक्रयऋणादायसंवित्संगरादिभ्यो द्यूतस्यातिशयितत्वं विवक्षितमित्यभिप्रायेण—छलास्पदेष्वित्युक्तम् । वञ्चनास्पदेष्वित्यर्थः । अक्षादीत्यादिशब्देन सजीवनिर्जीवसमस्तद्यूतवर्गसंग्रहः । यद्वा निर्जीवमात्रग्रहणायाक्षादिलक्षणमित्युक्तम् । तस्य चातिशयितत्वमनायासेन धर्माविरोधेनाभ्युपगमादेव समस्तधनहरणादेः शक्यत्वात् । तेजस्विसत्त्ववच्छब्दयोः पूर्वोत्तरयोस्तेजःसत्त्वाभ्यामवरुद्धत्वात्तत्र जयव्यवसायशब्दयोरन्वयानौचित्यात्तदुचितौ जेतृव्यवसायिशब्दौ पूर्वापरच्छाययाऽर्थाक्षिप्तावित्यभिप्रायेण—जेतॄणां व्यवसायिनामिति चोक्तम् । 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यादिभिः सत्त्वशब्दस्यानेकार्थसिद्धेर्व्यवसायस्य चोक्तत्वात्सत्त्ववच्छब्दप्रसिद्ध्यनुरोधेनार्थविशेषं दर्शयति—सत्त्वं महामनस्त्वमिति । एतेन पराभिभवसामर्थ्यादिलक्षणतेजसोऽपि सत्त्वस्यात्र भेद उक्तः ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

वसुदेवसूनुत्वमत्र विभूतिः । अर्थान्तराभावादेव । पाण्डवानां धनंजयोऽर्जुनोऽहम् । मुनयो मननेनार्थयाथात्म्यदर्शिनस्तेषां व्यासोऽहम् ।

---

वृष्णीनां वासुदेवोऽस्मीत्यत्रापि रामवत्साक्षात्स्वावतारत्वादाह—वसुदेवसूनुत्वमत्र विभूतिरिति । अर्थान्तराभावादेवेत्येवकारेण रामप्रसङ्गे हेतोः प्रागेवोक्तत्वं सूचितम् । ननु वसुदेवसूनुत्वमिति नेयं विभूतिः । नहि सूनुत्वमात्रेणातिशयः । अतिप्रसङ्गात् । न च वसुदेवाख्यपितृविशेषसूनुत्वेन तस्याप्यनेकसाधारणत्वेन निर्धारणायोगात् । न च वासुदेवशब्दप्रसिद्धिमात्रेण तावन्मात्रस्यातिशयं प्रत्यप्रयोजकत्वात् । न चेह वसुदेवसूनुत्वमुपदेश्यमर्जुनस्य संप्रतिपन्नत्वादेव । अतः साक्षादवतारत्वं नोचितम् । अत एव वृष्णीनामहमस्मीति नोक्तमिति । अत्रोच्यते—वासुदेवशब्दोऽत्र लक्षणया वसुदेवगृहे चतुर्भुजतयाऽवतारप्रभृति अतिमानुषगुणविग्रहपराक्रमादिरूपमागोपालप्रसिद्धमतिशयं लक्षयति । तस्य चार्जुनं प्रत्यभिधानं दृष्टान्तार्थम् । सर्वनाम्नो युष्मदस्मच्छब्दादपि साक्षान्नाम्नोऽत्यन्तासन्नत्वादिभिरतिशयोऽत्र विवक्षितः । धर्मे युधिष्ठिरस्य सर्वातिशायित्वात्, बले च भीमसेनस्य । आभिरूप्यादिषु च माद्रीसुतयोः, अर्जुन इति प्रसिद्धनामधेयेन विशदीकरणम् । तेन स्वाभिमुखमर्जुनं प्रति त्वमिति निर्देशाभावात् किं धनंजयाख्योऽन्य इति शङ्काव्युदासः । न ह्यत्र पारोक्ष्यप्रसङ्गः । अपरोक्षस्यैव सर्वस्यैवात्र सर्वदर्शिना वचनादिति । ऋषित्वं ह्यदृष्टविशेषादतीन्द्रियार्थदर्शित्वम् । तच्च प्रायशः प्रागेवोक्तम् । अतो मुनीनामित्यनेन तदतिरिक्ता निर्वचनबलात्, एतमेव विदित्वा मुनिर्भवतीति श्रुत्यनुसाराच्च विवक्षिता इत्याभिप्रायेणाऽऽह—मुनयो मननेनाऽऽत्मयाथात्म्यदर्शिन इति । तथाविधस्य भगवतो व्यासस्यातिशयस्तद्वाक्यैरेव सिद्धः ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

कवयो विपश्चितः ॥ ३७ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

नियमातिक्रमणे दण्डं कुर्वतां दण्डोऽहम् । विजिगीषूणां जयोपायभूता नीतिरस्मि । गुह्यानां संबन्धिषु गोपनेषु मौनमस्मि । ज्ञानवतां ज्ञानं चाहम् ॥ ३८ ॥

---

इत्यादिभिः ।

तपोविशिष्टादपि वै वसिष्ठान्मुनिसत्तमात् ।
मन्ये श्रेष्ठतमं त्वाऽऽद्य रहस्यज्ञाननवेदनात् ॥ इति च ।

अयमपि कश्चिद्विभवावतारो गण्यते ।

वेदविद्भगवान् कल्की पातालशयनः प्रभुः । इति ।

कवीनामिति न निबन्धृत्वं विवक्षितम् । तथा सति वाल्मीकिप्रभृतेः सर्वातिशायित्वादन्ततः क्रान्तदर्शी कविरिति विवक्षितमित्यभिप्रायेणाऽऽह—कवयो विपश्चित इति । उशनसो विपश्चित्सु वैलक्षण्यं नीतिनिपुणत्वादिभिः । प्रसिद्धं ह्येतत्—

'न कश्चिन्नोपनयते पुमानन्यत्र भार्गवात् ।
शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्ववतिष्ठते' ॥

इत्यादिषु ॥ ३७ ॥

नियमातिक्रमण इति । दण्डयोग्यत्वकथनम् । अदण्ड्यविषयदण्डस्यातिशयेन नरकहेतुत्वात् । नीतिरस्मि नीतिमतामिति वक्तुं जिगीषतामित्यनेन तु कीदृशोऽन्वय इत्यत्राऽऽह—विजिगीषूणां जयोपायभूता नीतिरिति बुद्धिव्यापारविशेषो विवक्षितः । लोकविदितस्य वाङ्नियमनरूपस्य मौनस्य गुह्यत्वाभावान्न निर्धारणमुचितम् । मौनशब्दस्याऽऽत्मविद्यादिविषयत्वे तु प्रसिद्धित्यागः स्यात् । न च गुह्यधर्मत्वं मौनस्य सत्त्वं सत्त्ववतामितिवत्स्यादित्यत्राऽऽह—गुह्यानां संबन्धिषु गोपनेषु मौनमस्मीति । गुह्यानां गोपनीयत्वमौनस्य चाषट्कर्णत्वमन्त्रणादपि गोपनोपायत्वं संप्रतिपन्नम् । ततश्चात्र संबन्धमात्रे षष्ठी गोप्यगोपनभावस्वरूपविशेषे विश्रान्ता । भूतानामस्मि चेतनेति चैतन्यमात्रस्य पूर्वमुक्तत्वादत्र ज्ञानं ज्ञानवतामिति पुरुषार्थौपयिकातिशयितज्ञानविशेषोऽभिमतः, तज्ज्ञानमज्ञानमतोऽन्यदुक्तमितिवत् ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥

सर्वभूतानां सर्वावस्थावस्थितानां तत्तदवस्थाबीजभूतं प्रतीयमानमप्रतीयमानं च यत्तदहमेव । चराचरं सर्वभूतजातं मयाऽऽत्मतयाऽवस्थितेन विना यत्स्यान्न तदस्ति । 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति प्रक्रमात् । 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इत्यत्राप्यात्मतयाऽवस्थानमेव विवक्षितम् । सर्वं वस्तुजातं सर्वावस्थं मयाऽऽत्मभूतेन युक्तं स्यादित्यर्थः । अनेन सर्वस्यास्य सामानाधिकरण्यनिर्देशस्याऽऽत्मतयाऽवस्थितिरेव हेतुरिति प्रकटयति ॥ ३९ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

---

सर्वभूतानां बीजमिति न प्रधानादिमात्रमुच्यते । तस्य साक्षात्सर्वभूतबीजत्वाभावात् । नापि व्रीह्यादिलक्षणं बीजम् । तस्य सर्वभूतशब्दसंगृहीतेषु जङ्गमेष्वनन्वयात् । ततश्चाविशेषेण तत्तत्कार्यावस्थद्रव्यापेक्षया तत्तत्कारणावस्थोपादानद्रव्यमात्रमिह विवक्षितमित्यभिप्रायेणाऽऽह—सर्वावस्थेति । एतेन प्राकृतनैमित्तिकसृष्ट्यादेरहमादिश्चेत्यादिनोक्तत्वादिह नित्यसृष्टिहेतुभूततत्तद्द्रव्यशरीरकत्वेन तद्धेतुत्वमपि प्रदर्शितम् । यच्चापीत्यनेनाभिप्रेतमाह—प्रतीयमानमप्रतीयमानं चेति । अप्रतीयमानमनुमानादिवेद्यमित्यर्थः । न तदस्तीत्यादौ स्वव्यतिरिक्तासत्त्वादिविधिपरत्वभ्रमव्युदासाय विनाभावार्थतोक्तिः । उपक्रमाविरोध्युपसंहारो नोदेतुमलमित्यभिप्रायेणाऽऽह—आत्मतयाऽवस्थितेनेति । अविनाभावमुपपादयति—अहमात्मेति । व्यतिरेकोक्तिफलितमन्वयविशेषं दर्शयति—सर्वमिति । उपक्रमोपसंहारयोरविनाभावकथनस्य भगवदभिप्रेतं प्रयोजनमाह—अनेनेति । क्वचित्कचिद्द्रव्यव्यतिरिक्तैः सामानाधिकरण्यमपि तदाश्रयद्रव्यस्य भगवच्छरीरत्वादिति प्रागेव प्रपञ्चितमस्माभिः ॥ ३९ ॥

निःशेषवचनाशक्यतां प्रागुक्तामेव स्मारयति—नान्तोऽस्तीति । दिव्यशब्देन देशविशेषवर्तित्वादिविवक्षायां पूर्वमनियतदेशत्व-

मम दिव्यानां कल्याणीनां विभूतीनामन्तो नास्ति। एष तु विभूतेर्विस्तरो मया कैश्चिदुपाधिभिः संक्षेपतः प्रोक्तः॥ ४० ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥

यद्यद्विभूतिमदीशितव्यसंपन्नं भूतजातं श्रीमत्कान्तिमद्धनधान्यसमृद्धं वा, ऊर्जितं कल्याणारम्भेषूद्युक्तं तत्तन्मम तेजोंशसंभवमित्यवगच्छ। तेजः पराभिभवनसामर्थ्यम्। ममाचिन्त्यशक्तेर्नियमनशक्त्येकदेशसंभवमित्यर्थः॥ ४१ ॥

---

र्तिनां दिव्यानां प्रपञ्चनं विरुध्येतेत्यत उक्तम्—कल्याणीनामिति। विभूतीरात्मनः शुभा इति ह्युपक्रान्तम्। उद्देशतः—एकदेशतः। प्रयोजकाकारैर्विभूत्युद्धरणेनेत्यर्थः। तदभिप्रायेणाऽऽह—कैश्चिदुपाधिभिः संक्षेपत इति॥ ४० ॥

प्राधान्यत उपक्रम्य प्रपञ्चितमर्थमनुक्तानामवश्यकर्तव्यप्रधानविभूतीनां संग्रहाभिप्रायेणोपसंहरति—यद्यदिति श्लोकेन। विभूतिशब्दस्य प्राकरणिकमर्थमनुसंधायोक्तमीशितव्यसंपन्नमिति। सत्त्वशब्दोऽत्र जन्तुपरः। वीप्साभिप्रायव्यञ्जनाय जातशब्दः। विभूतिमच्छ्रीमच्छब्दयोः पौनरुक्त्यं परिहरति—कान्तिमदिति। नियन्तव्यविशेषविवक्षया गोबलीवर्दन्यायात्पौनरुक्त्यपरिहार इत्यभिप्रायेणाऽऽह—धनधान्यसमृद्धं वेति। ऊर्जितमिति। उत्कृष्टत्वादिसामान्यविवक्षायामितरपाठैर्यथ्र्याद्विशिष्टमर्थमाह—कल्याणेति। ऊर्जशब्दो ह्यदीनत्वेन संनाहशीलत्वपरः। विभूतिमदित्यादि बलादिमतां प्रदर्शनम्। मम तेजोंशसंभवमित्युक्ते विग्रहगततेजोद्रव्यैकदेशोपादानत्वं प्रतीयेतेति तन्निरासाय प्रकृतौपयिकं तेजःशब्दार्थमाह—तेजः पराभिभवनसामर्थ्यमिति। कोऽयमत्राभिभवो नाम, तत्र च कथमंशसद्भाव इत्यत्राऽऽह—ममेति। अचिन्त्यशक्तेरित्यनेन चिन्तायोग्यांशनिष्कर्षाय ममेत्यस्याभिप्रायो विवृतः। तेन सर्वगोचरत्वाभङ्गुरत्वाघटनघटनत्वादिसिद्धिः। यथा शैलान्दोलिनश्चण्डमारुतस्य तृणप्रेरणादिकं वेगलेशमात्रभवं तद्वदिहेति भावः। तेजसोंऽशः संभवो यस्य तत्तेजोंशसंभवम्॥ ४१ ॥

अथवा बहुनैतेन किं ज्ञानेन तवार्जुन।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो
नाम दशमोऽध्यायः ॥ १० ॥

---

बहुनैतेनोच्यमानेन ज्ञानेन किं प्रयोजनम्। इदं चिदचिदात्मकं कृत्स्नं जगत्कार्यावस्थं कारणावस्थं स्थूलं सूक्ष्मं च स्वरूपसद्भावे स्थितौ प्रवृत्तिभेदे च यथा मत्संकल्पं नातिवर्तेत तथा मम महिम्नोऽयुतायुतांशेन विष्टभ्याहमवस्थितः। यथोक्तं भगवता पराशरेण—यस्यायुतायुतां-

---

प्राधान्यत इत्युपक्रान्तमुपसंहृतम्। अथ संक्षेपादपि संक्षेपेण प्रधानाप्रधानसमस्तविभूतिसंग्रहमाह—अथवेति श्लोकेन। उच्यमानेनेति। एतच्छब्द उक्त्यवसानराहित्यपर इति भावः। विभूतिपर्यवसानज्ञानरूपं प्रयोजनं न सिध्येदित्यभिप्रायेणाऽऽह—किं प्रयोजनमिति। इदमित्यनेन तत्तत्प्रमाणप्रतिपन्नवैचित्र्यं सूचितमित्यभिप्रायेण चिदचिदात्मकमित्युक्तम्। कार्येत्यादिना कृत्स्नशब्दाभिप्रेतविवरणं स्थूलं सूक्ष्मं चेति। कार्यकारणावस्थयोर्यथाक्रममन्वयः। स्वरूपेत्यादिना विष्टम्भनप्रयोजनकथनम्। अनित्येषु स्वरूपसद्भावः उत्पत्तिः। नित्येष्वसद्व्यतिरेकः। नित्यानां स्वरूपमपि हि भगवतो नित्येच्छासिद्धम्। इदं च प्रागेव प्रपञ्चितम्। अत्र स्वरूपैकदेशावतारादिरूपांशव्युदासाय नियमनप्रकरणबलाच्च मम महिम्न इत्युक्तम्। अत्र महिमशब्देन प्रकृतं नियमनसामर्थ्यमेव विवक्षितम्। अत एव तेजोंशसंभवमित्यनेनैकार्थ्यम्। एकशब्दोऽत्रातिक्षुद्रत्वपर इत्यभिप्रायेणोक्तम्—अयुतायुतांशेनेति। स्तम्भनमत्र स्वैराचारनिवारणम्। स्ववशीकरणरूपमधिष्ठानं वा। एकांशेनेत्यत्र स्तोकमर्थं संवादयति—यथोक्तमिति। विश्वशक्तिस्तत्तत्कार्योपयुक्तविशेषभूतं विश्वमित्यर्थः।

शांशे विश्वशक्तिरियं स्थिता, इति ॥ ४२ ॥

इति श्रीमद्रामानुजाचार्यविरचिते गीताभाष्ये दशमोऽध्यायः ॥ १० ॥

---

तेजोंशसंभवमित्यनन्तरमभिधानादेकांशेनेत्यस्याप्यंशशब्दस्य तद्वि-षयत्वमेव न्याय्यमिति भावः ॥ ४२ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु श्रीमद्रामानुजविरचितश्रीमद्भगव-द्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां दशमोऽध्यायः ॥ १० ॥

# अथैकादशोऽध्यायः ।

एवं भक्तियोगनिष्पत्तये तद्विवृद्धये च सकलेतरविलक्षणेन स्वाभाविकेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतः सर्वात्मत्वं तद्व्यतिरिक्तस्य कृत्स्नस्य चिदचिदात्मकस्य वस्तुजातस्य तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वं चोक्तम् । तमेतं भगवदसाधारणस्वभावं कृत्स्नस्य तदायत्तस्वरूपस्थितिप्रवृत्तितां च भगवत्सकाशादुपश्रुत्यैवमेवेति निश्चित्य तथाभूतं भगवन्तं साक्षात्कर्तुकामोऽर्जुन उवाच । तथैव भगवत्प्रसादादनन्तरं द्रक्ष्यति । ' सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् । तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ' इति हि वक्ष्यते—

अर्जुन उवाच—

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

मदिति । देहात्माभिमानरूपमोहेन मोहितस्य ममानुग्रहैकप्रयोजनाय परमं गुह्यं परमं रहस्यमध्यात्मसंज्ञितमात्मनि वक्तव्यं वचः ' न त्वेवाहं जातु नाऽऽसम् ' इत्यादि ' तस्माद्योगी भवार्जुन ' इत्येतदन्तं यत्त्वयोक्तं तेनायं ममाऽऽत्मविषयो मोहः सर्वो विगतो दूरतो निरस्तः ॥१॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

तथा सप्तमप्रभृति दशमपर्यन्तं त्वद्व्यतिरिक्तानां सर्वेषां भूतानां त्वत्तः परमात्मनो भवाप्ययावुत्पत्तिप्रलयौ विस्तरतो मया श्रुतौ । हे कमलपत्राक्ष तवाव्ययं नित्यं सर्वचेतनाचेतनवस्तुशेषित्वं ज्ञानबलादिकल्याणगुणगणैस्तवैव परतरत्वं सर्वाधारत्वं चिन्तितनिमिषितादिसर्वप्रवृत्तिषु त्वैव प्रवर्तयितृत्वमित्याद्यपरिमितं माहात्म्यं च श्रुतम् । हिशब्दो वक्ष्यमाणदिदृक्षाद्योतनार्थः ॥ २ ॥

एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

हे परमेश्वरैवमेतदित्यवधृतं यथाऽऽत्थ त्वमात्मानं ब्रवीषि पुरुषोत्तमाऽऽश्रितवात्सल्यैकजलधे तवैश्वरं त्वदसाधारणं सर्वस्य प्रशासितृत्वे स्रष्टृत्वे संहर्तृत्वे भर्तृत्वे कल्याणगुणाकरत्वे, परतरत्वे सकलेतरविसजातीयत्वे चावस्थितं रूपं द्रष्टुं साक्षात्कर्तुमिच्छामि ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो।
योगेश्वर ततो मे त्वं दर्शयाऽऽत्मानमव्ययम् ॥ ४ ॥

तत्सर्वस्य स्रष्टृ सर्वस्य प्रशासितृ सर्वस्याऽऽधारभूतं त्वद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे ततो योगेश्वर योगो ज्ञानादिकल्याणगुणयोगः, 'पश्य मे योगमैश्वरम्' इति हि वक्ष्यते। त्वद्व्यतिरिक्तस्य कस्याप्यसंभावितानां ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निध आत्मानं त्वामव्ययं मे दर्शय। त्वमव्ययमिति क्रियाविशेषणम्। त्वां सकलं मे दर्शयेत्यर्थः॥ ४ ॥

एवं कौतूहलान्वितेन हर्षगद्गदकण्ठेन पार्थेन प्रार्थितः—

श्रीभगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

पश्य मे सर्वाश्रयाणि रूपाणि अथ शतशः सहस्रशश्च नानाविधानि नानाप्रकाराणि दिव्यान्यप्राकृतानि नानावर्णाकृतीनि शुक्लकृष्णादिनानावर्णानि नानाकाराणि च पश्य ॥ ५ ॥

---

१ ग. घ. ङ. °शास्तृ स° । २ ख. °र्वाश्रयाणि।

पश्याऽऽदित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याऽऽश्चर्याणि भारत ॥ ६ ॥

ममैकस्मिन्रूपे पश्याऽऽदित्यान्द्वादश वसूनष्टौ रुद्रानेकादशाश्विनौ द्वौ मरुतश्चैकोनपञ्चाशतम् । प्रदर्शनार्थमिदम् । इह जगति प्रत्यक्षदृष्टानि शास्त्रदृष्टानि च यानि वस्तूनि तानि सर्वाण्यपि सर्वेषु लोकेषु सर्वेषु च शास्त्रेष्वदृष्टपूर्वाणि बहून्याश्चर्याणि पश्य ॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

इह ममैकस्मिन्देहे तत्राप्येकस्थमेकदेशस्थं सचराचरं कृत्स्नं जगत् पश्य । यच्चान्यद्द्रष्टुमिच्छसि तदप्येकदेहैकदेश एव पश्य ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

अहं मम देहैकदेशे सर्वं जगद्दर्शयिष्यामि त्वं त्वनेन नियमितपरिमितवस्तुग्राहिणा प्राकृतेन स्वचक्षुषा मां तथाभूतं सकलेतरविसजातीयमपरिमेयं द्रष्टुं न शक्यसे । तव दिव्यमप्राकृतं मद्दर्शनसाधनं चक्षुर्ददामि । पश्य मे योगमैश्वरं मदसाधारणं योगं पश्य ममानन्तज्ञानादियोगमनन्तविभूतियोगं च पश्येत्यर्थः ॥ ८ ॥

संजय उवाच—

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

एवमुक्त्वा सारथ्येऽवस्थितः पार्थमातुलजो महायोगेश्वरो हरिर्महाश्चर्ययोगाना(णा)मीश्वरः परब्रह्मभूतो नारायणः परममैश्वरं स्वासाधारणं रूपं पार्थाय पितृष्वसुः पृथायाः पुत्राय दर्शयामास ॥ ९ ॥

तद्विविधविचित्रनिखिलजगदाश्रयं विश्वस्य प्रशासितृ च रूपमीदृशम्—

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

देवं द्योतमानमनन्तं कालत्रयवर्तिनिखिलजगदाश्रयतया देशकालपरिच्छेदानर्हं विश्वतोमुखं विश्वदिग्वर्तिमुखं स्वोचितदिव्याम्बरगन्धमाल्याभरणायुधान्वितम् ॥ १० ॥ ११ ॥

तामेव देवशब्दनिर्दिष्टां द्योतमानतां विशिनष्टि—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

तेजसोऽपरिमितत्वदर्शनार्थमिदम् । अक्षयतेजःस्वरूपमित्यर्थः ॥१२॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

तत्रानन्तायामविस्तारेऽनन्तबाहूदरवक्त्रनेत्रेऽपरिमिततेजस्केऽपरिमितदिव्यायुधोपेते स्वोचितापरिमितदिव्यभूषणे दिव्यमाल्याम्बरधरे दिव्यगन्धानुलेपनेऽनन्ताश्चर्यमये देवदेवस्य शरीरे दिव्येऽनेकधा प्रविभक्तं ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादिभोक्तृवर्गपृथिव्यन्तरिक्षस्वर्गपातालातलवितलसुतलादिभोगस्थानभोग्यभोगोपकरणभेदभिन्नं प्रकृतिपुरुषात्मकं कृत्स्नं जगत्

'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
हन्त ते कथयिष्यामि विभूतीरात्मनः शुभाः' ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः' ।
'आदित्यानामहं विष्णुः' इत्यादिना
'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' ।

'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यन्तेनोदितमेकस्थमेकदेशस्थं पाण्डवो भगवत्प्रसादलब्धतद्दर्शनानुगुणदिव्यचक्षुरपश्यत् ॥१३॥

१ ख. ग. घ. ङ. °शास्तृ च ।

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

ततो धनंजयो महाश्चर्यस्य कृत्स्नस्य जगतस्तस्य देहैकदेशे दर्शनाद्विस्मयाविष्टः कृत्स्नजगदाश्रयभूतं कृत्स्नस्य प्रवर्तयितारं चाऽऽश्चर्यतमानन्तज्ञानादिकल्याणगुणगणं देवं दृष्ट्वा हृष्टरोमा शिरसा दण्डवत्प्रणम्य कृताञ्जलिरभाषत ॥ १४ ॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

देव तव देहे सर्वान्देवान् पश्यामि । तथा सर्वान् प्राणिविशेषाणां संघांस्तथा ब्रह्माणं चतुर्मुखमण्डाधिपतिं तथेशं कमलासनस्थं कमलासने ब्रह्मणि स्थितमीशं तन्मतेनावस्थितं तथा देवर्षिप्रमुखान्सर्वानृषीनुरगांश्च वासुकितक्षकादीन्दीप्तान् ॥ १५ ॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवाऽऽदिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

अनेकबाहूदरवक्त्रनेत्रमनन्तरूपं त्वां सर्वतः पश्यामि । विश्वेश्वर विश्वस्य नियन्तर्विश्वरूप विश्वशरीर यतस्त्वमनन्तोऽतस्तव नान्तं न मध्यं न पुनस्तवाऽऽदिं च पश्यामि ॥ १६ ॥

---

१ क. °न्मतेऽव° ।

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतोदीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

तेजोराशिं सर्वतोदीप्तिमन्तं समन्ताद्दुर्निरीक्ष्यं दीप्तानलार्कद्युतिमप्रमेयं त्वां किरीटिनं गदिनं चक्रिणं च पश्यामि ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

उपनिषत्सु ' द्वे विद्ये वेदितव्ये ' [ मु० १ । १ । ४ ] । इत्यादिषु वेदितव्यतया निर्दिष्टं परममक्षरं त्वमेव । अस्य विश्वस्य परं निधानं विश्वस्यास्य परमाधारभूतस्त्वमेव । त्वमव्ययोऽव्ययरहितो यत्स्वरूपो यद्गुणो यद्विभवश्च त्वं तेनैव रूपेण सर्वदाऽवतिष्ठसे । शाश्वतधर्मगोप्ता शाश्वतस्य नित्यस्य वैदिकस्य धर्मस्यैवमादिभिरवतारैस्त्वमेव गोप्ता । सनातनस्त्वं पुरुषो मतो मे 'वेदाहमेतं पुरुषं महान्तम्' [ श्वे० ३ । ८ ] ' परात्परं पुरुषम् ' [ मु० ३ । २ । ८ ] इत्यादिषूदितः सनातनपुरुषस्त्वमेवेति मे मतो ज्ञातः यदुकुलतिलकस्त्वमेवंभूत इदानीं साक्षात्कृतो मयेत्यर्थः ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

अनादिमध्यान्तम्—आदिमध्यान्तरहितम् । अनन्तवीर्यम्—अनवधिकातिशयवीर्यम् । वीर्यशब्दः प्रदर्शनार्थः । अनवधिकातिशयज्ञानबलैश्वर्यशक्तितेजसां निधिमित्यर्थः । अनन्तबाहुम्—असंख्येयबाहुम् । सोऽपि प्रदर्शनार्थः । अनन्तबाहूदरपादवक्त्रादिकम् । शशिसूर्यनेत्रम् । शशिवत्सूर्यवच्च प्रसादप्रतापयुक्तसर्वनेत्रम् । देवादीननुकूलान्नमस्कारादि कुर्वा-

णान्प्रति प्रसादस्तद्विपरीतानसुरराक्षसादीन्प्रति प्रतापः । ' रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ' इति हि वक्ष्यते । दीप्तहुताशवक्त्रं प्रदीप्तकालानलवत्संहारानुगुणवक्त्रम् । तेजः पराभिभवनसामर्थ्यम् । स्वकीयेन तेजसा विश्वमिदं तपन्तं त्वां पश्यामि । एवंभूतं सर्वस्य स्रष्टारं सर्वस्याऽऽधारभूतं सर्वस्य प्रशासितारं सर्वस्य संहर्तारं ज्ञानाद्यपरिमितगुणसागरमादिमध्यान्तरहितमेवंभूतदिव्यदेहं त्वां यथोपदेशं साक्षात्करोमीत्यर्थः । एकस्मिन्दिव्यदेहेऽनेकोदरादिकं कथम् । इत्थमुपपद्यते—एकस्मात्कटिप्रदेशादनन्तपरिमाणादूर्ध्वमुद्गता यथोदितदिव्योदरादयोऽधश्च यथोदितदिव्यपादास्तथैकस्मिन्मुखे नेत्रद्वयमिति च न विरोधः ॥ १९ ॥

एवंभूतं त्वां दृष्ट्वा देवादयोऽहं च प्रव्यथिता भवाम इत्याह—

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

द्युशब्दः पृथिवीशब्दश्चोभावुपरितनानामधस्तनानां च लोकानां प्रदर्शनार्थौ । द्यावापृथिव्योरन्तरमवकाशः । यस्मिन्नवकाशे सर्वे लोकास्तिष्ठन्ति । सर्वोऽयमवकाशो दिशश्च सर्वास्त्वयैकेन व्याप्ताः । दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदम् । अनन्तायामविस्तारमत्यद्भुतमत्युग्रं तव रूपं दृष्ट्वा लोकत्रयं प्रव्यथितम् । युद्धदिदृक्षयाऽऽगतेषु ब्रह्मादिदेवासुरपितृगणसिद्धगन्धर्वयक्षराक्षसेषु प्रतिकूलानुकूलमध्यस्थरूपं लोकत्रयं सर्वं प्रव्यथितमत्यन्तभीतम् । महात्मन्नपरिच्छेद्यमनोवृत्ते, एतेषां*-

---

*—ननु दर्शयामास पार्थायेति ह्युपक्रान्तं तत्कथं देवासुरादीनामपि मानुषत्वन्मांसचक्षुषा भगवद्विग्रहसाक्षात्कार उच्यत इत्यत्राऽऽह—एतेषामिति । अर्जुनस्य शिष्यभूतस्यात्यन्तोपसन्नस्य निरतिशयभक्तेः स्वविग्रहप्रकाशनं प्राप्तं तदर्थं च तस्यैव दिव्यचक्षुर्दत्तम् । वक्ष्यति च—'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ' इति । अतः सामान्येन सर्वजनस्य दिव्यचक्षुःप्रदाने कारणं न पश्याम इत्यभिप्रायेण शङ्कते—किमर्थमिति । परिहरति—अर्जुनायेति । देवादिदिदृक्षासंभवात्क्षुद्राणामिव महतामपि भयावहत्वादिना निरङ्कुशैश्वर्यस्य प्रकाशनेन प्रकृतोपयोगाच्च दिव्यचक्षुर्दानमिति भावः ।

अप्यर्जुनस्यैव विश्वाश्रयरूपसाक्षात्कारसाधनं दिव्यं चक्षुर्भगवता दत्तं किमर्थमिति चेदर्जुनाय स्वैश्वर्यं सर्वं प्रदर्शयितुम्। अत इदमुच्यते—' दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ' इति॥ २०॥

अमी हि त्वां सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति।
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

अमी सुरसंघा उत्कृष्टास्त्वां विश्वाश्रयमवलोक्य हृष्टमनसस्त्वत्समीपं विशन्ति। तेष्वेव केचिदत्युग्रमत्यद्भुतं च तवाऽऽकारमालोक्य भीताः प्राञ्जलयः स्वज्ञानानुगुणं स्तुतिरूपाणि वाक्यानि गृणन्ति उच्चारयन्ति। अपरे महर्षिसंघाः सिद्धसंघाश्च परावरतत्त्वयाथात्म्यविदः स्वस्तीत्युक्त्वा पुष्कलाभिर्भगवदनुरूपाभिः स्तुतिभिः स्तुवन्ति ॥ २१ ॥

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

ऊष्मपाः पितरः। ' ऊष्मभागा हि पितरः ' इति श्रुतेः। एते सर्वे विस्मयमापन्नास्त्वां वीक्षन्ते ॥ २२ ॥

रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम्।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥ २३ ॥

बह्वीभिर्दंष्ट्राभिरतिभीषणाकारं लोकाः पूर्वोक्ताः प्रतिकूलानुकूलमध्यस्थास्त्रिविधाः सर्वे एवाहं च तवेदमीदृशं रूपं दृष्ट्वाऽतीव व्यथिता भवामः ॥ २३ ॥

नभःस्पृशं दीप्तमनेकवर्णं

व्यात्ताननं दीप्तविशालनेत्रम्।

दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा

धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

नभःशब्दः 'तदक्षरे परमे व्योमन्' 'आदित्यवर्णं तमसः परस्तात्' [ श्वे० ३। ८ ] 'क्षयं तमस्य रजसः पराके' 'यो अस्याध्यक्षः परमे व्योमन्' इत्यादिश्रुतिसिद्धत्रिगुणप्रकृत्यतीतपरमव्योमवाची। सविकारस्य प्रकृतितत्त्वस्य पुरुषस्य च सर्वावस्थस्य कृत्स्नस्याऽऽश्रयतया वर्तमानस्य नभःस्पृशमिति वचनात्, द्यावापृथिव्योरिदमन्तरं हि व्याप्तमिति पूर्वोक्तत्वाच्च। दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं त्वां दृष्ट्वा प्रव्यथितान्तरात्माऽत्यन्तभीतमना धृतिं न विन्दामि देहस्य धारणं न लभे। मनसश्चेन्द्रियाणां च शमं न लभे। विष्णो व्यापिन्, सर्वव्यापिनमतिमात्रमत्यद्भुतमतिघोरं च त्वां दृष्ट्वा प्रशिथिलसर्वावयवो व्याकुलेन्द्रियश्च भवामीत्यर्थः ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि

दृष्ट्वैव कालानलसंनिभानि।

दिशो न जाने न लभे च शर्म

प्रसीद देवेश जगन्निवास ॥ २५ ॥

युगान्तकालानलवत्सर्वसंहारे प्रवृत्तान्यतिघोराणि तव मुखानि दृष्ट्वा दिशो न जाने सुखं च न लभे। जगतां निवास देवेश ब्रह्मादीनामीश्वराणामपि परममहेश्वर मां प्रति प्रसन्नो भव। यथाऽहं प्रकृतिं गतो भवामि तथा कुर्वित्यर्थः ॥ २५ ॥

एवं सर्वस्य जगतः स्वायत्तस्थितिप्रवृत्तित्वं दर्शयन्पार्थसारथी राजवेषच्छद्मनाऽवस्थितानां धार्तराष्ट्राणां यौधिष्ठिरेष्वनुप्रविष्टानां चासुरांशानां संहारेण भूभारावतरणं स्वमनीषितं स्वेनैव करिष्यमाणं पार्थाय दर्शयामास। स च पार्थो भगवतः स्रष्टृत्वादिकं सर्वैश्वर्यं साक्षात्कृत्य तस्मिन्नेव भगवति सर्वात्मनि धार्तराष्ट्रादीनामुपसंहारमनागतमपि तत्प्रसादलब्धेन दिव्येन चक्षुषा पश्यन्निदं प्रोवाच—

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः॥ २६॥
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः॥ २७॥

अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वे भीष्मो द्रोणः सूतपुत्रः कर्णश्च तत्पक्षीयैरवनिपालसमूहैः सर्वैरस्मदीयैरपि कैश्चिद्योधमुख्यैः सह त्वरमाणा दंष्ट्राकरालानि भयानकानि तव वक्त्राणि विनाशाय विशन्ति। तत्र केचिच्चूर्णितैरुत्तमाङ्गैर्दशनान्तरेषु विलग्नाः संदृश्यन्ते॥२६॥२७॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति॥ २८॥
यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः॥ २९॥

एते राजलोका बहवो नदीनामम्बुप्रवाहाः समुद्रमिव प्रदीप्तज्वलन-

मिव च शलभास्तव चक्षूंण्यभिविज्वलन्ति स्वयमेव त्वरमाणा आत्म-नाशाय विशन्ति ॥ २८ ॥ २९ ॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

राजलोकान् समग्राञ्ज्वलद्भिर्वदनैः समन्ताद्ग्रसमानः कोपवेगेन तद्रुधिरासिक्तमोष्ठपुटादिकं लेलिह्यसे पुनः पुनर्लेहनं करोषि। तवातिघोरा भासो रश्मयस्तेजोभिः स्वकीयैः प्रकाशैर्जगत्समग्रमापूर्य प्रतपन्ति ॥ ३० ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

दर्शयाऽऽत्मानमव्ययमिति तवैश्वर्यं निरङ्कुशं साक्षात्कर्तुं प्रार्थितेन भवता निरङ्कुशमैश्वर्यं दर्शयताऽतिघोररूपमिदमाविष्कृतम्। अतिघोररूपः को भवान्। किं कर्तुं प्रवृत्त इति भवन्तं ज्ञातुमिच्छामि। तवाभिप्रेतां प्रवृत्तिं न जानामि। एतदाख्याहि मे। नमोऽस्तु ते देववर प्रसीद नमस्तेऽस्तु सर्वेश्वर। एवं कर्तुमनेनाभिप्रायेणेदं संहर्तृरूपमाविष्कृतमित्युक्त्वा प्रसन्नरूपश्च भव ॥ ३१ ॥

आश्रितवात्सल्यातिरेकेण विश्वैश्वर्यं दर्शयतो भवतो घोररूपाविष्कारे कोऽभिप्राय इति पृष्टो भगवान्पार्थसारथिः साभिप्रायमाह—पार्थोद्योगेन विनाऽपि धार्तराष्ट्रप्रमुखमशेषं राजलोकं निहन्तुमहमेव प्रवृत्त इति ज्ञापनाय मम घोररूपाविष्कारः। तज्ज्ञापनं च पार्थमुद्योजयितुमिति—

श्रीभगवानुवाच—

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

कलयति गणयतीति कालः सर्वेषां धार्तराष्ट्रप्रमुखानां (णां)राजलोकानामायुरवसानं गणयन्नहं तत्क्षयकृद्घोररूपेण प्रवृद्धो राजलोकान्समाहर्तुमाभिमुख्येन संहर्तुमिह प्रवृत्तोऽस्मि । अतो मत्संकल्पादेव त्वामृतेऽपि त्वदुद्योगादृतेऽपि एते धार्तराष्ट्रप्रमुखास्तव प्रत्यनीकेषु येऽवस्थिता योधास्ते सर्वे न भविष्यन्ति विनङ्क्ष्यन्ति ॥ ३२ ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

तस्मात्त्वं तान्प्रति युद्धायोत्तिष्ठ ताञ्शत्रूञ्जित्वा यशो लभस्व धर्म्यं राज्यं च समृद्धं भुङ्क्ष्व मयैवैते कृतापराधाः पूर्वमेव निहता हनने विनियुक्तास्त्वं तु तेषां हनने निमित्तमात्रं भव । मया हन्यमानानां शस्त्रादिस्थानीयो भव । सव्यसाचिन्, 'षच समवाये' सव्येन शरसचनशीलः सव्यसाची सव्येनापि करेण शरसमवायकरः । हस्तद्वयेन योद्धुं समर्थ इत्यर्थः ॥ ३३ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

द्रोणभीष्मकर्णादीन्कृतापराधतया मयैव हनने विनियुक्तांस्त्वं जहि त्वं हन्याः । एतान्गुरून्बन्धूंश्चान्यानपि भोगसक्तान्कथं हनिष्यामीति मा व्यथिष्ठाः । तानुद्दिश्य धर्माधर्मभयेन बन्धुस्नेहेन कारुण्येन च मा व्यथां कृथाः । यतस्ते कृतापराधा मयैव हनने विनियुक्ता अतो निर्विशङ्को युध्यस्व रणे सपत्नाञ्जेतासि जेष्यसि । नैतेषां वधे नृशंसतागन्धोऽपि तु जय एव लप्स्यत इत्यर्थः ॥ ३४ ॥

संजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी।
नमस्कृत्य भूय एवाऽऽह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

एतदाश्रितवात्सल्यजलधेः केशवस्य वचनं श्रुत्वाऽर्जुनस्तस्मै नमस्कृत्य भीतभीतोऽतिभीतो भूयस्तं प्रणम्य कृताञ्जलिर्वेपमानः किरीटी सगद्गदमाह ॥ ३५ ॥

अर्जुन उवाच—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३६ ॥

स्थाने युक्तं यदेतद्युद्धदिदृक्षयाऽऽगतमशेषं देवगन्धर्वयक्षसिद्धविद्याधरकिंपुरुषादिकं जगत्त्वत्प्रसादात्त्वां सर्वेश्वरमवलोक्य तव प्रकीर्त्या सर्वं प्रहृष्यति अनुरज्यते च। यच्च त्वामवलोक्य रक्षांसि भीतानि सर्वा दिशः प्रद्रवन्ति सर्वे सिद्धसंघाः सिद्धाद्यनुकूलसंघा नमस्यन्ति च तदेतत्सर्वं युक्तमिति पूर्वेण संबन्धः ॥ ३६ ॥

युक्ततामेवोपपादयति—

कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥

महात्मंस्ते तुभ्यं गरीयसे ब्रह्मणो हिरण्यगर्भस्यापि आदिभूताय कर्त्रे हिरण्यगर्भादयः कस्माद्धेतोर्न नमस्कुर्युः। अनन्त देवेश जगन्निवास त्वमेवाक्षरं न क्षरतीत्यक्षरं जीवात्मतत्त्वम्। 'न जायते म्रियते वा विपश्चित्' [क० २। १८] इत्यादिश्रुतिसिद्धो जीवात्मा हि न क्षरति। सदसच्च त्वमेव सदसच्छब्दनिर्दिष्टं कार्यकारणभावेनावस्थितं प्रकृतितत्त्वं नामरूपविभागवत्तया कार्यावस्थं सच्छब्दनिर्दिष्टं तदनर्हतया कारणावस्थमसच्छब्दनिर्दिष्टं च त्वमेव। तत्परं यत्तस्मात्प्रकृतेः प्रकृतिसंबन्धिनश्च जीवात्मनः परमन्यन्मुक्तात्मतत्त्वं यत्तदपि त्वमेव॥ ३७॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम्।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप॥ ३८॥

अतस्त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानं निधीयते त्वयि विश्वमिति त्वमस्य विश्वस्य परं निधानं विश्वस्य शरीरभूतस्याऽऽत्मतया परमाधारभूतस्त्वमेवेत्यर्थः। जगति सर्वो वेदिता वेद्यं च सर्वं त्वमेव। एवं सर्वात्मतयाऽवस्थितस्त्वमेव परं च धाम स्थानं प्राप्यस्थानमित्यर्थः। त्वया ततं विश्वमनन्तरूप त्वयाऽऽत्मत्वेन विश्वं चिदचिन्मिश्रं जगत्ततं व्याप्तम्॥ ३८॥

अतस्त्वमेव वाय्वादिशब्दवाच्य इत्याह—

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
पितामहस्त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते॥ ३९॥

सर्वेषां प्रपितामहस्त्वमेव सर्वासां प्रजानां पितरः प्रजापतयः प्रजापतीनां पिता हिरण्यगर्भः प्रजानां पितामहः। हिरण्यगर्भस्यापि पिता त्वं

प्रजानां प्रपितामहः। पितामहादीनामात्मतया तत्तच्छब्दवाच्यस्त्वमेवे-
त्यर्थः ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

अत्यद्भुताकारं भगवन्तं दृष्ट्वा हर्षोत्फुल्लनयनोऽत्यन्तसाध्वसावनतः सर्वतो नमस्करोति। अनन्तवीर्यामितविक्रमस्त्वं सर्वमात्मतया समाप्नोषि ततः सर्वोऽसि यतस्त्वं सर्वं चिदचिद्वस्तुजातमात्मतया समाप्नोषि अतः सर्वस्य चिदचिद्वस्तुजातस्य त्वच्छरीरतया त्वत्प्रकारत्वात्सर्वप्रकारस्त्वमेव सर्वशब्दवाच्योऽसीत्यर्थः। त्वमक्षरं सदसद्वायुर्यमोऽग्निरित्यादि-सर्वसामानाधिकरण्यनिर्देशस्याऽऽत्मतया व्याप्तिरेव हेतुरिति सुव्यक्तमुक्तम्—'त्वया ततं विश्वमनन्तरूपं सर्वं समाप्नोपि ततोऽसि सर्वः' इति च ॥ ४० ॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति * ।
अजानता महिमानं तवेमं
मया प्रमादात्प्रणयेन वाऽपि ॥ ४१ ॥
यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाऽप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

तवानन्तवीर्यत्वामितविक्रमत्वसर्वान्तरात्मत्वस्रष्टृत्वादिको यो महिमा तमिममजानता मया प्रमादान्मोहात्प्रणयेन चिरपरिचयेन वा सखेति मम वयस्य इति मत्वा हे कृष्ण हे यादव हे सख इति त्वयि प्रसभं

---

* संधिरार्षः।

विनयापेतं यदुक्तं यच्च परिहासार्थं सर्वदैव सत्कारार्हस्त्वमसत्कृतोऽसि विहारशय्यासनभोजनेषु च सहकृतेषु एकान्ते वा समक्षं यदसत्कृतोऽसि तत्सर्वं त्वाममप्रमेयमहं क्षामये ॥ ४१ ॥ ४२ ॥

पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

अप्रतिमप्रभाव त्वमस्य चराचरस्य लोकस्य पिताऽसि अस्य लोकस्य गुरुश्चासि । अतस्त्वमस्य चराचरस्य लोकस्य गरीयान्पूज्यतमः । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽपि त्वदन्यः कारुण्यादिना गुणेन केनापि न त्वत्समोऽस्ति कुतोऽभ्यधिकः ॥ ४३ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायाऽर्हसि * देव सोढुम् ॥ ४४ ॥

यस्मात्त्वं सर्वस्य पिता पूज्यतमो गुरुश्च कारुण्यादिगुणैश्च सर्वाधिकोऽसि तस्मात्त्वामीशमीड्यं प्रणम्य प्रणिधाय च कायं प्रसादये । यथा कृतापराधस्यापि पुत्रस्य यथा च सख्युः प्रणामपूर्वकं प्रार्थितः पिता सखा वा प्रसीदति तथा त्वं परमकारुणिकः प्रियः प्रियाया इव मे सर्वं सोढुमर्हसि ॥ ४४ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

अदृष्टपूर्वमत्यद्भुतमत्युग्रं च तव रूपं दृष्ट्वा हृषितोऽस्मि प्रीतोऽस्मि भयेन प्रव्यथितं च मे मनः । अतस्तदेव तव सुप्रसन्नं रूपं मे दर्शय ।

* प्रियाया अर्हसीत्यत्रेवशब्दलोपेऽसंहिततयाऽत्रस्थाने प्राप्ते छन्दःपूरणार्थं भगवद्गीताया उपनिषत्त्वात्संधिर्बोध्यः ।

प्रसीद देवेश जगन्निवास मयि प्रसादं कुरु देवानां ब्रह्मादीनामपीश निखिलजगदाश्रयभूत ॥ ४५ ॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

तथैव पूर्ववत्किरीटिनं गदिनं चक्रहस्तं त्वां द्रष्टुमिच्छामि । अतस्तेनैव पूर्वसिद्धेन चतुर्भुजेन रूपेण युक्तो भव । सहस्रबाहो विश्वमूर्ते, इदानीं सहस्रबाहुत्वेन विश्वशरीरत्वेन दृश्यमानरूपस्त्वं तेनैव रूपेण युक्तो भवेत्यर्थः ॥ ४६ ॥

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

यन्मे तेजोमयं तेजोराशिं विश्वं सर्वात्मभूतमनन्तमन्तरहितं प्रदर्शनार्थमिदम् । आदिमध्यान्तरहितमाद्यं मद्व्यतिरिक्तस्य कृत्स्नस्याऽऽदिभूतं त्वदन्येन केनापि न दृष्टपूर्वं रूपं तदिदं प्रसन्नेन मया मद्भक्ताय ते दर्शितमात्मयोगादात्मनः सत्यसंकल्पत्वयोगयुक्तत्वात् ॥ ४७ ॥

अनन्यभक्तिव्यतिरिक्तैः सर्वैरप्युपायैर्यथावदवस्थितोऽहं द्रष्टुं न शक्य इत्याह—

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य + अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

एवंरूपो यथावदवस्थितोऽहं मयि भक्तिमतस्त्वत्तोऽन्येनैकान्ति-

+ शक्योऽहमिति वक्तव्ये छान्दसत्वाद्विसर्गलोपे श्लोकपूरणार्थं संहिताया अविवक्षणादसंहितकरणम् ।

कात्यन्तिकभक्तिरहितेन केनापि पुरुषेण केवलैर्वेदयज्ञादिभिर्द्रष्टुं न शक्यः ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

ईदृशघोररूपदर्शनेन ते या व्यथा यश्च विमूढभावो वर्तते तदुभयं मा भूत्त्वयाऽभ्यस्तपूर्वमेव सौम्यरूपं दर्शयामि तदेव मम रूपं पश्य ॥ ४९ ॥

संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

एवं पाण्डुतनयं भगवान् वसुदेवसूनुरुक्त्वा भूयः स्वकीयमेव चतुर्भुजं रूपं दर्शयामास । अपरिचितस्वरूपदर्शनेन भीतमेनं पुनरपि परिचितसौम्यवपुर्भूत्वाऽऽश्वासयामास च । महात्मा सत्यसंकल्पः । अस्य सर्वेश्वरस्य परमपुरुषस्य परस्य ब्रह्मणो जगदुपकृतिमर्त्यस्य वसुदेवसूनोश्चतुर्भुजमेव स्वकीयं रूपम् । कंसाद्भीतवसुदेवप्रार्थनेन कंसवधात्पूर्वं भुजद्वयमुपसंहृतं पश्चादाविष्कृतं च ।

जातोऽसि देवदेवेश शङ्खचक्रगदाधर ।
दिव्यं रूपमिदं देव प्रसादेनोपसंहर ॥

'उपसंहर सर्वात्मन्रूपमेतच्चतुर्भुजम्' । इति हि प्रार्थितम् । शिशुपालस्यापि द्विषतोऽनवरतभावनाविषयं चतुर्भुजमेव वसुदेवसूनो रूपम्— 'उदारपीवरचतुर्बाहुं शङ्खचक्रगदाधरम्' इति । अतः पार्थेनात्र तेनैव रूपेण चतुर्भुजेनेत्युच्यते ॥ ५० ॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

अनवधिकातिशयसौन्दर्यसौकुमार्यलावण्यादियुतं तवैवासाधारणं मनुष्यत्वसंस्थानसंस्थितमतिसौम्यमिदं तव रूपं दृष्ट्वेदानीं सचेताः संवृत्तोऽस्मि प्रकृतिं गतश्च ॥ ५१ ॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥

ममेदं सर्वस्य प्रशासनेऽवस्थितं सर्वाश्रयं सर्वकारणभूतं रूपं यद् दृष्टवानसि तत्सुदुर्दर्शनं न केनापि द्रष्टुं शक्यम् । अस्य रूपस्य देवा अपि नित्यं दर्शनकाङ्क्षिणो न तु दृष्टवन्तः ॥ ५२ ॥

कुतः—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥
भक्त्या त्वनन्यया शक्य * अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥

वेदैरध्यापनप्रवचनाध्ययनश्रवणजपविषयैर्यागदानहोमतपोभिश्च मद्भक्तिरहितैः केवलैर्यथावदवस्थितोऽहं द्रष्टुं न शक्यः । अनन्यया तु भक्त्या तत्त्वतः शास्त्रैर्ज्ञातुं तत्त्वतः साक्षात्कर्तुं तत्त्वतः प्रवेष्टुं च शक्यः । तथा च श्रुतिः—' नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ' [ का० २ । २३ ] इति ॥ ५३ ॥ ५४ ॥

---

* छान्दसत्वाद्विसर्गलोपेऽसंधिः पूर्ववत् ।

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः ॥ ११ ॥

---

वेदाध्ययनादीनि सर्वाणि कर्माणि मदाराधनरूपाणीति यः करोति स मत्कर्मकृत्, मत्परमः सर्वेषामारम्भाणामहमेव परमोद्देश्यो यस्य स मत्परमः, मद्भक्तोऽत्यर्थमत्प्रियत्वेन मत्कीर्तनस्तुतिध्यानार्चनप्रणामादिभिर्विनाऽऽत्मधारणमलभमानो मदेकप्रयोजनतया यः सततं तानि करोति स मद्भक्तः, सङ्गवर्जितो मदेकप्रियत्वेनेतरसङ्गमसहमानः, निर्वैरः सर्वभूतेषु मत्संश्लेषवियोगैकसुखदुःखस्वभावत्वात्स्वदुःखस्य स्वापराधनिमित्तत्वानुसंधानाच्च सर्वभूतानां परमपुरुषतन्त्रत्वानुसंधानाच्च सर्वभूतेषु वैरनिमित्ताभावात्तेषु निर्वैरः, य एवंभूतः स मामेति मां यथावदवस्थितं प्राप्नोति निरस्ताविद्याद्यशेषदोषगन्धो मदेकानुभवो भवतीत्यर्थः ॥ ५५ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्य एकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः ॥

भक्तियोगनिष्ठानां प्राप्यभूतस्य परस्य ब्रह्मणो भगवतो नारायणस्य निरङ्कुशैश्वर्यं साक्षात्कर्तुकामायार्जुनायानवधिकातिशयकारुण्यौदार्यसौशील्यादिगुणसागरेण सत्यसंकल्पेन भगवता स्वैश्वर्यं यथावदवस्थितं दर्शितम् । उक्तं च तत्त्वतो भगवज्ज्ञानदर्शनप्राप्तीनामैकान्तिकात्यन्तिकभगवद्भक्त्येकलभ्यत्वम् । अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपा-

सन्नाद्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुखोपादानत्वाच्च श्रैष्ठ्यं भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षत्वाश्चोच्यन्ते । भगवदुपासनस्य प्राप्यभूतोपास्यश्रैष्ठ्याच्छ्रैष्ठ्यं तु—

'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' ।

इत्यत्रोक्तम् ।

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

एवं मत्कर्मकृदित्यादिनोक्तेन प्रकारेण सततयुक्ता भगवन्तं त्वामेव परं प्राप्यं मन्वाना ये भक्तास्त्वां सकलविभूतियुक्तमनवधिकातिशयसौन्दर्यसौशील्यसार्वज्ञ्यसत्यसंकल्पत्वाद्यनन्तगुणसागरं परिपूर्णमुपासते १ ये चाप्यक्षरं प्रत्यगात्मस्वरूपं तदेव चाव्यक्तं चक्षुरादिकरणेनानभिव्यक्तस्वरूपमुपासते तेषामुभयेषां के योगवित्तमाः के स्वसाध्यं प्रति शीघ्रगामिण इत्यर्थः । 'भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्' इत्युत्तरत्र योगवित्तमत्वं शैघ्र्यविषयमिति हि व्यञ्जयिष्यते ॥ १ ॥

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

अत्यर्थमतिप्रियत्वेन मनो मय्यावेश्य श्रद्धया परयोपेता नित्ययुक्ता नित्ययोगं काङ्क्षमाणा ये मामुपासते प्राप्यविषयं मनो मय्यावेश्य ये मामुपासत इत्यर्थः । ते युक्ततमा मे मता मां सुखेनाचिरात्प्राप्नुवन्तीत्यर्थः ॥ २ ॥

---

१ क. °ङ्क्षस्क° ।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

ये त्वक्षरं प्रत्यगात्मस्वरूपमनिर्देश्यं देहादन्यतया देवादिशब्दानिर्देश्यं तत एव चक्षुरादिकरणानभिव्यक्तं सर्वत्रगमचिन्त्यं च सर्वत्र देवादिदेहेषु वर्तमानमपि तद्विसजातीयतया तेन रूपेण चिन्तयितुमनर्हं तत एव कूटस्थं सर्वसाधारणं तत्तद्देवाद्यसाधारणाकारासंबद्धमित्यर्थः । अपरिणामित्वेन स्वासाधारणाकारान्न चलति न च्यवत इत्यचलं तत एव ध्रुवं नित्यम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

संनियम्येन्द्रियग्रामं चक्षुरादिकमिन्द्रियग्रामं सर्वस्वव्यापारेभ्यः सम्यङ् नियम्य सर्वत्र समबुद्धयः सर्वत्र देवादिविषमाकारेषु देहेष्ववस्थितेष्वात्मसु ज्ञानैकाकारतया समबुद्धयस्तत एव सर्वभूतहिते रताः सर्वभूताहितरतित्वान्निवृत्ताः । सर्वभूताहितरतित्वं ह्यात्मनो देवादिविषमाकाराभिमाननिमित्तं य एवमक्षरमुपासते तेऽपि मां प्राप्नुवन्त्येव मत्समानाकारमसंसारिणमात्मानं प्राप्नुवन्त्येवेत्यर्थः । 'मम साधर्म्यमागताः' इति वक्ष्यते । श्रूयते च–'निरञ्जनः परमं साम्यमुपैति' [ मु० ३ । १ । ३ ] इति । तथाऽक्षरशब्दनिर्दिष्टात्कूटस्थादन्यत्वं परस्य ब्रह्मणो वक्ष्यते– 'कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः' इति । 'अथ परा यया तदक्षरमधिगम्यते' [ मु० । १ । ५ ] इत्यक्षरविद्यायां तु अक्षरशब्दनिर्दिष्टं परमेव ब्रह्म भूतयोनित्वादेव ॥ ४ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

तेषामव्यक्तासक्तचेतसां क्लेशोऽधिकतरः । अव्यक्ता हि गतिरव्यक्तविषया मनोवृत्तिर्देहवद्भिर्देहात्माभिमानयुक्तैर्दुःखेनावाप्यते । देहवन्तो हि देहमेवाऽऽत्मानं मन्यन्ते ॥ ५ ॥

भगवन्तमुपासीनानां युक्ततमत्वं सुव्यक्तमाह—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

ये तु लौकिकानि देहयात्राशेषभूतानि देहधारणार्थानि चाशनादीनि कर्माणि वैदिकानि च यागदानहोमतपःप्रभृतीनि सर्वाणि सकारणानि सोद्देशानि अध्यात्मचेतसा मयि संन्यस्य मत्परा मदेकप्राप्या अनन्येनैव योगेनानन्यप्रयोजनेन योगेन मां ध्यायन्त उपासते ध्यानार्चनप्रणामस्तुतिकीर्तनादीनि स्वयमेवात्यन्तप्रियाणि प्राप्य समानि कुर्वन्तो मामुपासत इत्यर्थः ॥ ६ ॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

तेषां मत्प्राप्तिविरोधितया मृत्युभूतात्संसाराख्यात्सागरादहमचिरेणैव कालेन समुद्धर्ता भवामि ॥ ७ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

अतोऽतिशयितपुरुषार्थत्वात्सुलभत्वादाचिरलभ्यत्वाच्च मय्येव मन आधत्स्व मयि मनःसमाधानं कुरु । मयि बुद्धिं निवेशय । अहमेव परमप्राप्य इत्यध्यवसायं कुरु । अत ऊर्ध्वं मय्येव निवसिष्यसि । अहमेव परमप्राप्य इत्यध्यवसायपूर्वकमनोनिवेशनानन्तरमेव मयि निवसिष्यसीत्यर्थः ॥ ८ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय ॥ ९ ॥

अथ सहसैव मयि स्थिरं चित्तं समाधातुं न शक्नोषि ततोऽभ्यासयोगेन मां प्राप्तुमिच्छ स्वाभाविकानवधिकातिशयसौन्दर्यसौशील्यसौहार्दवात्सल्यकारुण्यमाधुर्यगाम्भीर्यौदार्यवीर्यपराक्रमसर्वज्ञत्वसत्यकामत्वस-

१ ग. 'तज्ञानप्राप्यत्वा° । २. ङ. °तज्ञानार्थत्वा° ।

त्यसंकल्पत्वसकलकारणत्वाद्यसंख्येयकल्याणगुणसागरे निखिलहेयप्रत्यनीके मयि निरतिशयप्रेमगर्भस्मृत्यभ्यासयोगेन स्थिरं चित्तसमाधानं लब्ध्वा मां प्राप्तुमिच्छ ॥ ९ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥

अथैवंविधस्मृत्यभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव । मदीयानि कर्माण्यालयनिर्माणोद्यानकरणप्रदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पाहरणपूजनोद्वर्तननामकीर्तनप्रदक्षिणनमस्कारस्तुत्यादीनि तान्यत्यर्थप्रियत्वेनाऽऽचर । अत्यर्थप्रियत्वेन मदर्थकर्माणि कुर्वन्नचिरादभ्यासयोगपूर्विकां मयि स्थिरां चित्तस्थितिं लब्ध्वा मत्प्राप्तिरूपां सिद्धिमवाप्स्यसि ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

अथ मद्योगमाश्रित्यैतदपि कर्तुं न शक्नोषि मद्गुणानुसंधानकृतमदेकप्रियत्वाकारं भक्तियोगमाश्रित्य भक्तियोगाङ्गरूपमेतन्मत्कर्मापि कर्तुं न शक्नोषि ततोऽक्षरयोगमात्मस्वभावानुसंधानरूपं परभक्तिजननं पूर्वषट्कोदितमाश्रित्य तदुपायतया सर्वकर्मफलत्यागं कुरु । मत्प्रियत्वेन मदेकप्राप्यताबुद्धिर्हि क्षीणाशेषपापस्यैव जायते । यतात्मवान्यतमनस्कः ॥ ततोऽनभिसंहितफलेन मदाराधनरूपेणानुष्ठितेन कर्मणा सिद्धेनाऽऽत्मज्ञानेन निवृत्ताविद्यादिसर्वतिरोधाने मच्छेषतैकस्वरूपे प्रत्यगात्मनि साक्षात्कृते सति मयि परा भक्तिः स्वयमेवोत्पद्यते । तथा च वक्ष्यते— "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्यारभ्य "विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्" इति ॥ ११ ॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

अत्यर्थप्रीतिविरहितात्कर्मस्वरूपात्स्मृत्यभ्यासादक्षरयाथात्म्यानुसंधानपूर्वकं तदपरोक्षज्ञानमेवाऽऽत्महितत्वे विशिष्यते । आत्मापरोक्षज्ञानाद-

---

१ क. °गाङ्कुरूप° । २ क. °त्मध्याने° । ३ क. ङ. °तत्कर्मरूप° । ४ ङ. °वैकात्मप्र° ।

ष्यनिष्पन्नरूपात्तदुपायभूतात्मध्यानमेवाऽऽत्महिततत्वे विशिष्यते । ध्यानादप्यनिष्पन्नरूपात्तदुपायभूतं फलत्यागेनानुष्ठितं कर्मैव विशिष्यते । अनभिसंहितफलादनुष्ठितात्कर्मणोऽनन्तरमेव निरस्तपापतया मनसः शान्तिर्भविष्यति । शान्तेन मनसाऽऽत्मनो ध्यानं संपत्स्यते । ध्यानाज्ज्ञानं ज्ञानाच्च तदापरोक्ष्यं तदापरोक्ष्यात्परा भक्तिरिति भक्तियोगाभ्यासाशक्तस्याऽऽत्मनिष्ठैव श्रेयसी । आत्मनिष्ठस्याप्यशान्तमनसो निष्ठाप्राप्तयेऽन्तर्गतात्मज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसीत्यर्थः ॥ १२ ॥

अनभिसंहितफलकर्मनिष्ठस्योपादेयान्गुणानाह—

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

अद्वेष्टा सर्वभूतानां द्विषतां द्वेषं कुर्वतामपि सर्वेषां भूतानामद्वेष्टा मदपराधानुगुणमीश्वरप्रेरितानि एतानि भूतानि द्विषन्ति उपकुर्वन्ति चेत्यनुसंदधानस्तेषु द्विषत्सूपकुर्वत्सु च सर्वभूतेषु मैत्रीं कुर्वन्मैत्रः । तेष्वेव दुःखितेषु करुणां कुर्वन्करुणः । निर्ममो देहेन्द्रियेषु तत्संबन्धिषु च निर्ममः । निरहंकारो देहात्माभिमानरहितः । तत एव समदुःखसुखः सुखदुःखागमयोः सांकल्पिकयोर्हर्षोद्वेगरहितः । क्षमी स्पर्शप्रभवयोरवर्जनीययोरपि तयोर्विकाररहितः ॥ १३ ॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

संतुष्टो यदृच्छोपनतेन येन केनापि देहधारणद्रव्येण संतुष्टः । सततं योगी सततं प्रकृतिवियुक्तात्मानुसंधानपरः । यतात्मा नियमितमनोवृत्तिः । दृढनिश्चयोऽध्यात्मशास्त्रोदितेष्वर्थेषु दृढनिश्चयः । मय्यर्पितमनोबुद्धिर्भगवान्वासुदेव एवानभिसंहितफलेनानुष्ठितेन कर्मणाऽऽराध्यत आराधितश्च ममाऽऽत्मापरोक्ष्यं साधयिष्यतीति मय्यर्पितमनोबुद्धिः । एवंभूतो मद्भक्त एवंभूतेन कर्मयोगेण मां भजमानो यः स मे प्रियः ॥ १४ ॥

---

१ ख. ग. °कमनस आत्म° । २ ग. °नाद्रु° । ३ ख. ग. ङ. °षन्त्यप° । ४ ख. ग. स्पर्शप्र° ।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

यस्मात्कर्मनिष्ठात्पुरुषान्निमित्तभूताल्लोको नोद्विजते यो लोकोद्वेगकरं कर्म किंचिदपि न करोतीत्यर्थः । लोकाच्च निमित्तभूताद्यो नोद्विजते यमुद्दिश्य सर्वो लोको नोद्वेगकरं कर्म करोति सर्वाविरोधित्वनिश्चयात् । अत एव कंचन प्रति हर्षेण कंचन प्रत्यमर्षेण कंचन प्रति भयेन कंचन प्रति उद्वेगेन मुक्त एवंभूतोऽपि यः सोऽपि मे प्रियः ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

अनपेक्ष आत्मव्यतिरिक्ते कृत्स्ने वस्तुन्यनपेक्षः । शुचिः शास्त्रविहितद्रव्यवर्धितकायः । दक्षः शास्त्रीयक्रियोपादानसमर्थः । अन्यत्रोदासीनः । गतव्यथः शास्त्रीयक्रियानिर्वृत्तावर्जनीयशीतोष्णवर्षस्पर्शादिदुःखेषु व्यथारहितः । सर्वारम्भपरित्यागी शास्त्रीयव्यतिरिक्तसर्वकर्मारम्भपरित्यागी य एवंभूतो मद्भक्तः स मे प्रियः ॥ १६ ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥

यो न हृष्यति यन्मनुष्याणां हर्षनिमित्तं प्रियजातं तत्प्राप्य यः कर्मयोगी न हृष्यति यच्चाप्रियं तत्प्राप्य यो न द्वेष्टि यच्च मनुष्याणां शोकनिमित्तं भार्यापुत्रवित्तक्षयादिकं तत्प्राप्य न शोचति तथाविधमप्राप्तं च न काङ्क्षति यच्च मनुष्याणां हर्षनिमित्तभार्यावित्तादि तदप्राप्तं च न काङ्क्षतीत्यर्थः । शुभाशुभपरित्यागी पापवत्पुण्यस्यापि बन्धहेतुत्वाविशेषादुभयपरित्यागी । य एवंभूतो भक्तिमान्स मे प्रियः ॥ १७ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

अद्वेष्टा सर्वभूतानामित्यादिना शत्रुमित्रादिषु द्वेषादिरहितत्वमुक्तम् । अत्र तेषु संनिहितेषु अपि समचित्तत्वं ततो व्यतिरिक्तो विशेष उच्यते ।

आत्मनि स्थिरमतित्वेन निकेतनादिष्वसक्त इत्यनिकेतः। तत एव मानापमानादिष्वपि समः। य एवंभूतो भक्तिमान्स मे प्रियः॥ १८॥ १९॥

अस्मादात्मनिष्ठान्मद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन्यथोपक्रममुपसंहरति—

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।
अश्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः॥ २०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः॥ १२॥

---

धर्म्यं चामृतं चेति धर्म्यामृतं ये तु प्राप्यसमं प्रापकं भक्तियोगं यथोक्तं मय्यावेश्य मनो ये मामित्यादिनोक्तेन प्रकारेणोपासते ते भक्ता अतितरां मे प्रियाः॥ २०॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये द्वादशोऽध्यायः॥ १२॥

इति द्वितीयं षट्कं समाप्तम्।

---

## अथ त्रयोदशोऽध्यायः।

### तृतीयं षट्कम्।

पूर्वस्मिन्षट्के परप्राप्यस्य परस्य ब्रह्मणो भगवतो वासुदेवस्य प्राप्त्युपायभूतभक्तिरूपभगवदुपासनाङ्गभूतं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनं ज्ञानयोगकर्मयोगलक्षणनिष्ठाद्वयसाध्यमुक्तम्। मध्यमे च परमप्राप्यभूतभगवत्तत्त्वयाथात्म्यतन्माहात्म्यज्ञानपूर्वकैकान्तिकात्यन्तिकभक्तियोगनिष्ठा प्रतिपादिता। अतिशयितैश्वर्यापेक्षाणामात्मकैवल्यमात्रापेक्षाणां च भक्तियोगस्तत्तदपेक्षितसाधनमिति चोक्तम्। इदानीमुपरितनषट्के प्रकृ-

तिपुरुषतत्संसर्गरूपप्रपञ्चेश्वरयाथात्म्यकर्मज्ञानभक्तिस्वरूपतदुपादानप्रकाराश्च षट्कद्वयोदिता विशोध्यन्ते। तत्र तावत्त्रयोदशे देहात्मनोः स्वरूपं देहयाथात्म्यशोधनं देहवियुक्तात्मप्राप्त्युपायविविक्तात्मस्वरूपसंशोधनं तथाविधस्याऽऽत्मनश्चाचित्संबन्धनहेतुस्ततो विवेकानुसंधानप्रकारश्चोच्यते—

श्रीभगवानुवाच—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥

इदं शरीरं देवोऽहं मनुष्योऽहं स्थूलोऽहं कृशोऽहमित्यात्मना भोक्त्रा सह सामानाधिकरण्येन प्रतीयमानं भोक्तुरात्मनोऽर्थान्तरभूतं तस्य भोगक्षेत्रमिति शरीरयाथात्म्यविद्भिरभिधीयते। एतदवयवशः संघातरूपेण चेदमहं वेद्मीति यो वेत्ति तं वेद्यभूतादस्माद्वेदितृत्वेनार्थान्तरभूतं क्षेत्रज्ञ इति तद्विद आत्मयाथात्म्यविदः प्राहुः। यद्यपि देहव्यतिरिक्तघटाद्यर्थानुसंधानवेलायां देवोऽहं मनुष्योऽहं घटादिकं जानामीति देहसामानाधिकरण्येन ज्ञातारमात्मानमनुसंधत्ते तथाऽपि देहानुभववेलायां देहमपि घटादिकमिव इदमहं वेद्मीति वेद्यतया वेदिताऽनुभवतीति वेदितुरात्मनो वेद्यतया शरीरमपि घटादिवदर्थान्तरभूतम्। तथा घटादेरिव वेद्यभूताच्छरीरादपि वेदिता क्षेत्रज्ञोऽर्थान्तरभूतः। सामानाधिकरण्येन प्रतीतिस्तु शरीरस्य गोत्वादिवदात्मविशेषणतैकस्वभावतया तदपृथक्सिद्धेरुपपन्ना। तत्र वेदितुरसाधारणाकारस्य चक्षुरादिकरणाविषयत्वाद्योगसंस्कृतमनोविषयत्वाच्च प्रकृतिसंनिधानादेव मूढाः प्रकृत्याकारमेव वेदितारं पश्यन्ति। तथा च वक्ष्यति—

'उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः' ॥

[भ० गी० १०। १५] इति ॥ १ ॥

---

१ क. °स्तु वस्तुतः श° । २ ख. ग. घ. ङ. °ना ॥ १ ॥ श्रो° ।

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥

देवमनुष्यादिसर्वक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञं च मां विद्धि मदात्मकं विद्धि । क्षेत्रज्ञं चापीत्यपिशब्दात् क्षेत्रमपि मां विद्धीत्युक्तमित्यवगम्यते । यथा क्षेत्रं क्षेत्रज्ञविशेषणतैकस्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव निर्दिष्टं तथा क्षेत्रं क्षेत्रज्ञश्च मद्विशेषणतैकस्वभावतया मदपृथक्सिद्धेर्मत्सामानाधिकरण्येनैव निर्देश्यौ विद्धि । वक्ष्यति हि क्षेत्रात् क्षेत्रज्ञाच्च बद्धमुक्तोभयावस्थात् क्षराक्षरशब्दनिर्दिष्टादर्थान्तरत्वं परस्य ब्रह्मणो वासुदेवस्य ।

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' ॥
[ भ० गी० १५ । १६ । १७ । १८ ] इति ।

पृथिव्यादिसंघातरूपस्य क्षेत्रस्य क्षेत्रज्ञस्य च भगवच्छरीरतैकस्वभावस्वरूपतया भगवदात्मकत्वं श्रुतयो वदन्ति—'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः' [ बृ० ३ । ७ । ३ ] इत्यारभ्य 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद । यस्याऽऽत्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः' इत्याद्याः । इदमेवान्तर्यामितया सर्वक्षेत्रज्ञानामात्मत्वेनावस्थानं भगवत्सामानाधिकरण्येन व्यपदेशहेतुः ।

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' ।
'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' ॥
'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' ।

१ क. °काकारं क्षे° ।

इति पुरस्तादुपरिष्टाच्चाभिधाय मध्ये सामानाधिकरण्येन व्यपदिशति—'आदित्यानामहं विष्णुः' इत्यादिना। यदिदं क्षेत्रक्षेत्रज्ञयोर्विवेकविषयं तयोर्मदात्मकत्वविषयकं च ज्ञानमुक्तं तदेवोपादेयं ज्ञानमिति मे मतम्। केचिदाहुः—'क्षेत्रज्ञं चापि मां विद्धि' इति सामानाधिकरण्येनैकत्वमवगम्यते। ततश्चेश्वरस्यैव सतोऽज्ञानात् क्षेत्रज्ञत्वमिव भवतीत्यभ्युपगन्तव्यं तन्निवृत्त्यर्थश्चायमेकत्वोपदेशः। अनेन चाऽऽप्ततमभगवदुपदेशेन रज्जुरियं न सर्प इत्याप्तोपदेशेन सर्पत्वभ्रमनिवृत्तिवत् क्षेत्रज्ञत्वभ्रमो निवर्तत इति। ते प्रष्टव्याः—अयमुपदेष्टा भगवान् वासुदेवः परमेश्वरः किमात्मयाथात्म्यसाक्षात्कारेण निवृत्ताज्ञान उत नेति। निवृत्ताज्ञानश्चेन्निर्विशेषचिन्मात्रैकस्वरूप आत्मन्यतद्रूपाध्यासासंभावनया कौन्तेयादिभेददर्शनं तान्प्रत्युपदेशादिव्यापारश्च न संभवति। अथाऽऽत्मयाथात्म्यसाक्षात्काराभावादनिवृत्ताज्ञानस्तर्हि तस्याज्ञत्वादेवाऽऽत्मज्ञानोपदेशारम्भो न संभवति। 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तम्। अत एवमादिवादा अनाकलितश्रुतिस्मृतीतिहासपुराणन्यायसदाचारस्ववाक्यविरोधैः स्ववचःस्थापनदुराग्रहैरज्ञानिभिर्जगन्मोहनाय प्रवर्तिता इत्यनादरणीयाः। अत्रेदं तत्त्वम्—अचिद्वस्तुनश्चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेनेशितृत्वेन च स्वरूपविवेकमाहुः काश्चन श्रुतयः—'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः'। [ श्वे० ४। ९ ] 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'। [ श्वे० ४। १० ] 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः'। [ श्वे० १। १० ] अमृताक्षरं हर इति भोक्ता निर्दिश्यते। प्रधानं भोग्यत्वेन हरतीति हरः। 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' [ श्वे० ६। ९ ] 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' [ श्वे० ६। १६ ] 'पतिं विश्वस्याऽऽत्मेश्वरं शाश्वतं शिवमच्युतम्'। 'ज्ञाज्ञौ द्वावजावीशनीशौ'। [ श्वे० १। ९ ] 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' [ श्वे० ६। १३ ] 'भोक्ता भोग्यं प्रेरितारं च मत्वा' [ श्वे० १। १२ ] 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' [ श्वे० १। ६ ] 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' [ श्वे० ४। ६ ] 'अजामेकां लोहितशुक्ल-

कृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' । [ श्वे० ४ । ५ ] ' गौरनाद्यन्तवती सा जनित्री भूतभाविनी ' । 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ' [ श्वे० ४ । ७ ] इत्याद्याः । अत्रापि—' अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ' [ भ० गी० ७ । ४ ]

' अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ '
[ भ० गी० ७ । ५ ]
' सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ' ॥
[ भ० गी० ९ । ७ । ८ ]
' मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ' ॥
[ भ० गी० ९ । १० ]
' प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ' ॥
[ भ० गी० १३ । १९ ]
' मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ '
[ भ० गी० १४ । ३ ]

इति कृत्स्नजगद्योनिभूतं महद्ब्रह्म मदीयं प्रकृत्याख्यं भूतसूक्ष्मम-चिद्वस्तु यत्तस्मिंश्चेतनाख्यं गर्भं संयोजयामि । ततो मत्संकल्पकृ-ताच्चिदचित्संसर्गादेव देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां संभवो भवतीत्यर्थः । श्रुतावपि भूतादिसूक्ष्मं ब्रह्मेति निर्दिष्टम्— ' तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ' [ मु० १ । १ । ९ ] इति । एवं भोग्यभोक्तृरूपेणावस्थितयोः सर्वावस्थावस्थितयो-श्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्स्थितिं परमपु-

रूपस्य चाऽऽत्मत्वमाहुः काश्चन श्रुतयः—' यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति ' [ बृ० ३ । ७ । ३ ] इत्यारभ्य ' य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः ' [ बृ० ३ । ७ । २२ ] इति । तथा—' यः पृथिवीमन्तरे संचरन्यस्य पृथिवी शरीरं यं पृथिवी न वेद ' [ सु० बा० लो० ७ ख० ]इत्यारभ्य ' योऽक्षरमन्तरे संचरन्यस्याक्षरं शरीरं यमक्षरं न वेद । यो मृत्युमन्तरे संचरन्यस्य मृत्युः शरीरं य मृत्युर्न वेद । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ' [सु० ख०७] । अत्र मृत्युशब्देन तमःशब्दवाच्यं सूक्ष्मावस्थमचिद्वस्त्वभिधीयते । अस्यामेवोपनिषदि—'अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परदेव एकीभूय तिष्ठति' [ सु० ख० २ ]। इति वचनात् । 'अन्तः प्रविष्टोऽजः सृजते ' ' अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ' [ य० आ० ३ । ११ ] इति च । एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं जगत्स एवेत्याहुः—
' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' [ छा० ६ । २ । १ ]। ' तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत '[ छा० ६ । २ । ३ ]। इत्यारभ्य ' सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ' [ छा० ६ । ८ । ६ ] । इति तथा—' सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत ' [ तै० २ । ६ । १ ] इत्यारभ्य ' सत्यं चानृतं च सत्यमभवत् ' [ तै० २ । ६ । ३ ] इति । अत्रापि श्रुत्यन्तरसिद्धश्चिदचितोः परमपुरुषस्य च स्वरूपविवेकः स्मारितः—' हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ' [ छा० ६ । ३ । २ ] । ' तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् ' [ तै० २ । ६ । ३ ] इति च । अनेन जीवेनाऽऽत्मनाऽनुप्रविश्येति जीवस्य ब्रह्मात्मकत्वं तदनुप्रविश्य ' सच्च

त्यच्चाभवत्' 'विज्ञानं चाविज्ञानं च' इत्यनेनैकार्थ्यादात्मशरीरभावनिबन्धनमिति विज्ञायते । एवंभूतं यन्नामरूपव्याकरणम्—'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत' [ बृ० ३ । ४ । ७] इत्यत्र चोक्तम् । अतः कार्यावस्थः कारणावस्थश्च स्थूलसूक्ष्मचिदचिद्वस्तुशरीरः परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणविज्ञानेन कार्यस्य ज्ञाततयैकविज्ञानेन सर्वविज्ञानं च समीहितमुपपन्नतरम् । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति' [ छा० ६ । ३ । २ ] तिस्रो देवता इति सर्वमचिद्वस्तु निर्दिश्य तत्र स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात्सर्वे वाचकाः शब्दा अचिज्जीवविशिष्टपरमात्मन एव वाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत् । सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्मैव कारणमिति जगतो ब्रह्मोपादानत्वेऽपि संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासंकरोऽप्युपपन्नतरः । यथा—शुक्लकृष्णरक्ततन्तुसंघातोपादानत्वेऽपि विचित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसंयोग इति कार्यावस्थायामपि कारणवत्सर्वत्र चासंकरस्तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वनियाम्यत्वाद्यसंकरः । तन्तूनां पृथक्स्थितियोग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वं च । इह तु चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतैकपदार्थत्वात्तत्प्रकारः परमपुरुष एव कारणं कार्यं च । स एव सर्वदा सर्वशब्दवाच्य इति विशेषः । स्वभावभेदस्तदसंकरश्च तत्र चात्र तुल्यः । एवं च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावादविकृतत्वमुपपन्नम् । स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाऽवस्थानात्कार्यत्वमप्युपपन्नतरम् । अवस्थान्तरापत्तिरेव हि कार्यता । निर्गुणवादश्च परस्य ब्रह्मणो हेयगुणासंबन्धादुपपद्यते । 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' [ छा० ८ । १ । ५ ] इति हेयगुणान्प्रतिषिध्य 'सत्यकामः सत्यसंकल्पः' [ छा० ८ । १ । ५ ] इति कल्याणगुणान्विदधतीयं

---

१ क. समीहि° । २ क. °ईश्वता° । ३ ग. घ. °त्प्रकारतैव प° ।

श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति। ज्ञानस्वरूपं ब्रह्मेति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य परस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वप्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः । 'यः सर्वज्ञः सर्ववित्' [ मु० १ । १ । ९ ] । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' [ श्वे० ६ । ८ ] 'विज्ञातारमरे केन विजानीयात्' [ बृ० ६ । ५ । १५ ] इत्यादिका ज्ञातृत्वमावेदयन्ति । 'सत्यं ज्ञानमनन्तम्' [तै०२।१।१]इत्यादिकाश्च ज्ञानैकनिरूपणीयतया स्वप्रकाशतया च ज्ञानस्वरूपत्वम्।' सोऽकामयत बहु स्याम्' [ तै० २।६।२ ] 'तदैक्षत बहु स्याम्' [ छा० ६ । २ । ३ ] । 'तन्नामरूपाभ्यां व्याक्रियत' [ बृ० ३ । ४ । ७ ] 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति' [ बृ० ४ । ५ । ६ ] । 'सर्वं तं परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद' [ बृ० ४ । ५ । ७ ] 'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' [ सुबालो० ख० २ बृ० ४ । ४ । १० ॥ ६ । ५ । ११ ] इति ब्रह्मैव स्वसंकल्पाद्विचित्रस्थिरत्रसस्वरूपतया नानाप्रकारमवस्थितमिति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वमिति प्रतिषिध्यते—'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' [ कठ० ४ । १० ] 'नेह नानाऽस्ति किंचन' [ क० ४ । ११ ] 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' [ बृ० ४ । ४ । १४ ] इत्यादिना । न पुनः 'बहु स्यां प्रजायेय' [ छा० ६ । २ । ३ ] इतिश्रुतिसिद्धस्वसंकल्पकृतं ब्रह्मणो नानानामरूपभोक्तृत्वेन नानाप्रकारत्वमपि निषिध्यते।'यत्र त्वस्य सर्वमात्मैवाभूत्' [ बृ० ४ । ४ । १४ ] इति निषेधवाक्यारम्भे च तत्स्थापितम्—'तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' [ सुबालो० ख० २॥बृ० ४ । ४ । १०॥६ । ५ । ११ ] । इत्यादिना । एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वं वदन्तीनां च सर्वासां श्रुतीनामविरोधः श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिकब्रह्म-

१ ग. ङ. °स्थितिचराचररू° । २ घ °त्वरू° ।

भेदवादस्याप्यन्यस्यान्यायमूलकस्य सकलश्रुतिविरुद्धस्य न कथंचिदवकाशो विद्यत इत्यलमतिविस्तरेण ॥ २ ॥

तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

तत्क्षेत्रं यच्च यद्द्रव्यं यादृक् च येषामाश्रयभूतं यद्विकारि ये चास्य विकारा यतश्च यतो हेतोरिदमुत्पन्नं यस्मै प्रयोजनायोत्पन्नमित्यर्थः । यद्यत्स्वरूपं चेदं स च यः स च क्षेत्रज्ञो यो यत्स्वरूपो यत्प्रभावश्च ये चास्य प्रभावास्तत्सर्वं समासेन संक्षेपेण मे मत्तः शृणु ॥ ३ ॥

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

तदिदं क्षेत्रक्षेत्रज्ञयाथात्म्यमृषिभिः पराशरादिभिर्बहुधा बहुप्रकारं गीतम् ।

अहं त्वं च तथाऽन्ये च भूतैरुह्याम पार्थिव ।
गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥
कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते ।
अविद्यासंचितं कर्म तच्चाशेषेषु जन्तुषु ।
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
तथा पिण्डः पृथक्पुंसः शिरःपाण्यादिलक्षणः ।
ततोऽहमिति कुत्रैतां संज्ञां राजन्करोम्यहम् ।

तथा च—

किं त्वमेतच्छिरः किं तु उरस्तव तथोदरम् ।
किमु पादादिकं त्वं वै तवैतत्किं महीपते ॥
समस्तावयवेभ्यस्त्वं पृथक् भूप व्यवस्थितः ।
कोऽहमित्येव निपुणो भूत्वा चिन्तय पार्थिव । इति ॥

एवं विविक्तयोर्द्वयोर्वासुदेवात्मकत्वं चाऽऽहुः—

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च । इति ॥

छन्दोभिर्विविधैः पृथक्, विविधैश्छन्दोभिर्ऋग्यजुःसामाथर्वभिर्देहात्मनोः स्वरूपं पृथग्गीतम्—' तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः' [ तै० १।५।१ ] इति शरीरस्वरूपमभिधाय तस्मादनन्तरं प्राणमयं तस्माच्चानन्तरं मनोमयमभिधाय ' तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः' [ तै० १।५।१ ] इति क्षेत्रज्ञस्वरूपमभिधाय ' तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः' [ तै० १।५।२ ] इति क्षेत्रज्ञस्याप्यन्तरात्मतयाऽऽनन्दमयः परमात्मा विहितः। एवमृक्सामाथर्वसु च तत्र तत्र क्षेत्रक्षेत्रज्ञयोः पृथक्भावस्तयोर्ब्रह्मात्मकत्वं च सुस्पष्टं गीतम्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः, ब्रह्मप्रतिपादनसूत्राख्यैः पदैः शारीरकसूत्रैर्हेतुमद्भिर्हेतुयुक्तैर्विनिश्चितैर्निर्णयान्तैः 'न वियदश्रुतेः' [ ब्र० सू० २।३।१ ] इत्यारभ्य क्षेत्रप्रकारनिर्णय उक्तः। 'नाऽऽत्मा+ श्रुतेर्नित्यत्वाच्च ताभ्यः' [ ब्र० सू० २।३ १७ ] इत्यारभ्य 'ज्ञोऽत एव' [ ब्र० सू० २।३।१८ ] इत्यादिभिः क्षेत्रज्ञयाथात्म्यनिर्णय उक्तः। 'परात्तु तच्छ्रुतेः' [ ब्र० सू० २।३।४० ] इति च भगवत्प्रवर्त्यत्वेन भगवदात्मकत्वमुक्तम्। एवं बहुधा गीतं क्षेत्रक्षेत्रज्ञयाथात्म्यं मया संक्षेपेण सुस्पष्टमुच्यमानं शृण्वित्यर्थः ॥ ४ ॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव चेति क्षेत्रारम्भकद्रव्याणि पृथिव्यप्तेजोवाय्वाकाशमहाभूतानि अहंकारो भूतादिर्बुद्धिर्महानव्यक्तं प्रकृतिः। इन्द्रियाणि दशैकं चेति क्षेत्राश्रितानि तत्त्वानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि तानि दशैकमिति मनः। इन्द्रियगोचराश्च पञ्च शब्दस्पर्शरूपरसगन्धाः ॥ ५ ॥

---

+ रामानुजकृतसूत्रव्याख्यानानुसारेण श्रुतेरित्येव च्छेदो न त्वश्रुतेरिति।

इच्छा द्वेषः सुखं दुःखं संघातश्चेतनाधृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

इच्छा द्वेषः सुखं दुःखमिति क्षेत्रकार्याणि क्षेत्रविकारा उच्यन्ते । यद्यपीच्छाद्वेषसुखदुःखान्यात्मधर्मभूतानि तथाऽप्यात्मनः क्षेत्रसंबन्धप्रयुक्तानीति क्षेत्रकार्यतया क्षेत्रविकारा उच्यन्ते । तेषां पुरुषधर्मत्वम् । 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' इति वक्ष्यते । संघातश्चेतनाधृतिः, आधृतिराधारः सुखदुःखे भुञ्जानस्य भोगापवर्गौ साधयतश्च चेतनस्याऽऽधारतयोत्पन्नो भूतसंघातः । प्रकृत्यादिपृथिव्यन्तद्रव्यारब्धमिन्द्रियाश्रयभूतमिच्छाद्वेषसुखदुःखविकारि भूतसंघातरूपं चेतनसुखदुःखोपभोगाधारत्वप्रयोजनं क्षेत्रमित्युक्तं भवति । एतत्क्षेत्रं समासेन संक्षेपेण सविकारं सकार्यमुदाहृतम् ॥ ६ ॥

अथ क्षेत्रकार्येष्वात्मज्ञानसाधनतयोपादेया गुणाः प्रोच्यन्ते —

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

अमानित्वमुत्कृष्टजनेष्ववधीरणारहितत्वम् । अदम्भित्वं धार्मिकत्वयशःप्रयोजनतया धर्मानुष्ठानं दम्भस्तद्रहितत्वम् । अहिंसा वाङ्मनःकायैः परपीडारहितत्वम् । क्षान्तिः परपीड्यमानस्यापि तान्प्रत्यविकृतचित्तत्वम् । आर्जवं परान्प्रति वाङ्मनःकायवृत्तीनामेकरूपता । आचार्योपासनमात्मज्ञानप्रदायिन्याचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम् । शौचमात्मज्ञानतत्साधनयोग्यत्वं मनोवाक्कायगतं शास्त्रसिद्धम् । स्थैर्यमध्यात्मशास्त्रोदितेष्वर्थेषु निश्चलत्वम् । आत्मविनिग्रह आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्तनम् ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

इन्द्रियार्थेषु वैराग्यमात्मव्यतिरिक्तेषु विषयेषु सदोषतानुसंधानेनो-

द्वेजनम् । अनहंकारोऽनात्मनि देह आत्माभिमानरहितत्वम् । प्रदर्शनार्थ-मिदम् । अनात्मीयेष्वात्मीयाभिमानरहितत्वं चापि विवक्षितम् । जन्म-मृत्युजराव्याधिदुःखदोषानुदर्शनं सशरीरत्वे जन्ममृत्युजराव्याधिदुःख-स्वरूपस्य दोषस्यावर्जनीयत्वानुसंधानम् ॥ ८ ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

असक्तिरात्मव्यतिरिक्तविषयेषु सङ्गरहितत्वम् । अनभिष्वङ्गः पुत्र-दारगृहादिषु शास्त्रीयकर्मोपकरणत्वातिरेकेणाऽऽश्लेषरहितत्वम् । नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु संकल्पप्रभवेष्विष्टानिष्टोपनिपातेषु हर्षो-द्वेगरहितत्वम् ॥ ९ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

मयि सर्वेश्वरे चैकान्तिकयोगेन स्थिरा भक्तिर्जनवर्जितदेशवासित्वं जनसंसदि चाप्रीतिः ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

आत्मनि ज्ञानमध्यात्मज्ञानं तन्निष्ठत्वम् । तत्त्वज्ञानार्थदर्शनं तत्त्व-ज्ञानप्रयोजनं यत्तत्त्वं तन्निरतत्वमित्यर्थः । ज्ञायतेऽनेनाऽऽत्मेति ज्ञानमा-त्मज्ञानसाधनमित्यर्थः । क्षेत्रसंबन्धिनः पुरुषस्यामानित्वादिकमुक्तं गुण-वृन्दमेवाऽऽत्मज्ञानोपयोगि । एतद्व्यतिरिक्तं सर्वं क्षेत्रकार्यमात्मज्ञानविरो-धीत्यज्ञानम् ॥ ११ ॥

अथैतद्यो वेत्तीति वेदितृत्वलक्षणेनोक्तस्य क्षेत्रज्ञस्य स्वरूपं विशोध्यते—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

अमानित्वादिभिः साधनैर्ज्ञेयं प्राप्यं यत्प्रत्यगात्मस्वरूपं तत्प्रव-

क्ष्यामि । यज्ज्ञात्वा जन्मजरामरणादिप्राकृतधर्मरहितममृतमात्मानं प्राप्नोति । अनादि आदिर्यस्य न विद्यते तदनादि । अस्य हि प्रत्यगात्मन उत्पत्तिर्न विद्यते । तत एवान्तो न विद्यते । श्रुतिश्च—' न जायते म्रियते वा विपश्चित् ' [ कठ० २ । १८ ] इति । मत्परमहं परो यस्य तन्मत्परम् । इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूताम्, इति हि उक्तम् । भगवच्छरीरतया भगवच्छेषतैकरसं ह्यात्मस्वरूपम् । तथा च श्रुतिः— ' य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद । यस्याऽऽत्मा शरीरम् । य आत्मानमन्तरो यमयति ' [ बृ० ५ । ७ । २२ ] इति । तथा—' स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ' [ श्वे० ६ । ९ ] । ' प्रधानक्षेत्रज्ञपतिर्गुणेशः ' [ श्वे० ६ । १६ ] इत्यादिका । ब्रह्म बृहत्त्वगुणयोगि शरीरादर्थान्तरभूतं स्वतः शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः । ' स चाऽऽनन्त्याय कल्पते ' [ श्वे० ५ । ९ ] इति हि श्रूयते । शरीरपरिच्छिन्नत्वं चास्य कर्मकृतं कर्मबन्धान्मुक्तस्याऽऽनन्त्यम् । आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते—

' स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ।
ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ' इति वचनम् ।

'न सत्तन्नासदुच्यते' कार्यकारणरूपावस्थाद्वयरहिततया सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते । कार्यावस्थायां हि देवादिनामरूपभाक्त्वेन सदित्युच्यते । तदनर्हतया कारणावस्थायामसदित्युच्यते । तथा च श्रुतिः— 'असद्वा इदमग्र आसीत् । ततो वै सदजायत' [शत० ब्रा० ६ । १ । १] । ' तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत ' [ बृ० ३ । ४ । ७ ] इत्यादिका । कार्यकारणावस्थाद्वयान्वयस्त्वात्मनः कर्मरूपाविद्यावेष्टनकृतो न स्वरूपत इति सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते । यद्यपि ' असद्वा इदमग्र आसीत् ' [ श० प० ६ । १ । १ ] इति कारणावस्थं परं ब्रह्मोच्यते तथाऽपि नामरूपविभागानर्हसूक्ष्मचिदचिद्

स्तुशरीरं परं ब्रह्म कारणावस्थमिति कारणावस्थायां क्षेत्रक्षेत्रज्ञस्वरूपमपि असच्छब्दवाच्यम् । क्षेत्रज्ञस्य साऽवस्था कर्मकृतेति परिशुद्धस्वरूपं न सदसच्छब्दनिर्देश्यम् ॥ १२ ॥

सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

सर्वतःपाणिपादं तत्परिशुद्धात्मस्वरूपं सर्वतः पाणिपादकार्यशक्तम् । तथा सर्वतोक्षिशिरोमुखं सर्वतःश्रुतिमत्सर्वतश्चक्षुरादिकार्यकृत् । ' अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ' [ श्वे० ३ । १९ ] इति परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकर्तृत्वं श्रूयते । प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादादिकार्यकर्तृत्वं श्रुतिसिद्धमेव । ' तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ' [ मु० ३ । १ । ३ ] इति हि श्रूयते । ' इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ' [ गी० १४ । २ ] इति च वक्ष्यते । लोके सर्वमावृत्य तिष्ठतीति । लोके यद्वस्तुजातं तत्सर्वं व्याप्य तिष्ठति । परिशुद्धस्वरूपं देशादिपरिच्छेदरहिततया सर्वगतमित्यर्थः ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियगुणैराभासो यस्य तत्सर्वेन्द्रियगुणाभासम् । इन्द्रियगुणा इन्द्रियवृत्तय इन्द्रियवृत्तिभिरपि विषयाञ्ज्ञातुं समर्थमित्यर्थः । स्वभावतः सर्वेन्द्रियविवर्जितं विनैवेन्द्रियवृत्तिभिः स्वत एव सर्वं जानातीत्यर्थः । असक्तं स्वभावादेव देवादिदेहसङ्गरहितम् । सर्वभृच्चैव देवादिसर्वदेहभरणसमर्थं च । ' स एकधा भवति द्विधा भवति त्रिधा भवति ' [ छा० ६ । २६ । २ ] इत्यादिश्रुतेः । निर्गुणं तथा स्वभावतः सत्त्वादिगुणरहितम् । गुणभोक्तृ च सत्त्वादीनां गुणानां भोगसमर्थं च ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

पृथिव्यादिभूतानि परित्यज्याशरीरो बहिर्वर्तते तेषामन्तश्च वर्तते । 'जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा' [ छा० ८ । १२ । ३ ] इत्यादिश्रुतिसिद्धस्वच्छन्दवृत्तिषु अचरं चरमेव च स्वभावतोऽचरं चरं देहित्वे । सूक्ष्मत्वात्तदविज्ञेयम्—एवं सर्वशक्तियुक्तं सर्वज्ञं तदात्मतत्त्वमस्मिन्क्षेत्रे वर्तमानमपि अतिसूक्ष्मत्वाद्देहात्पृथक्त्वेन संसारिभिरविज्ञेयम् । दूरस्थं चान्तिके च तत् । अमानित्वाद्युक्तगुणरहितानां पुंसां स्वदेहे वर्तमानमप्यतिदूरस्थं तथाऽमानित्वादिगुणोपेतानां तदेवान्तिके च वर्तते ॥१५॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

देवमनुष्यादिभूतेषु सर्वत्र स्थितमात्मवस्तु वेदितृत्वैकाकारतयाऽविभक्तमविदुषां देवाद्याकारेणायं देवो मनुष्य इति विभक्तमिव च स्थितम् । देवोऽहं मनुष्योऽहमिति देहसामानाधिकरण्येनानुसंधीयमानमपि वेदितृत्वेन देहादर्थान्तरभूतं ज्ञातुं शक्यमित्याद्युक्तमेतद्यो वेत्तीति । इदानीं प्रकारान्तरैश्च देहादर्थान्तरत्वेन ज्ञातुं शक्यमित्याह—भूतभर्तृ चेति । भूतानां पृथिव्यादीनां देहरूपेण संहतानां यद्भर्तृ तद्भर्तव्येभ्यो भूतेभ्योऽर्थान्तरं ज्ञेयम् । अर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः । तथा ग्रसिष्णु अन्नादीनां भौतिकानां ग्रसिष्णु ग्रस्यमानेभ्यो भूतेभ्यो ग्रसितृत्वेनार्थान्तरभूतमिति ज्ञातुं शक्यम् । प्रभविष्णु च प्रभवहेतुश्च ग्रस्तानामन्नादीनामाकारान्तरेण परिणतानां प्रभवहेतुस्तेभ्योऽर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः । मृतशरीरे ग्रसनप्रभवादीनामदर्शनाद्भूतसंघातरूपे क्षेत्रे ग्रसनप्रभवभरणहेतुरिति निश्चीयते ॥ १६ ॥

---

१ क. ङ. °रूपं क्षे° । २ क. ङ. क्षेत्रे ग्र° ।

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

ज्योतिषां दीपादित्यमणिप्रभृतीनामपि तदेव ज्योतिः प्रकाशकम् । दीपादित्यादीनपि आत्मप्रभारूपं ज्ञानमेव प्रकाशयति । दीपादयस्तु विषयेन्द्रियसंनिकर्षविरोधिसंतमसनिरसनमात्रं कुर्वते । तावन्मात्रेणैव तेषां प्रकाशकत्वम् । तमसः परमुच्यते । तमःशब्दः सूक्ष्मावस्थप्रकृतिवचनः, प्रकृतेः परमुच्यत इत्यर्थः । अतो ज्ञानं ज्ञेयं ज्ञानैकाकारमिति ज्ञेयम् । तच्च ज्ञानगम्यममानित्वादिभिरुक्तैर्ज्ञानसाधनैः प्राप्यमित्यर्थः । हृदि सर्वस्य विष्ठितं सर्वस्य मनुष्यादेर्हृदि विशेषेणावस्थितं संनिहितम् ॥ १७ ॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

एवं 'महाभूतान्यहंकारः' इत्यादिना 'संघातश्चेतनाधृतिः' इत्यन्तेन क्षेत्रतत्त्वं समासेनोक्तम् । 'अमानित्वम्' इत्यादिना 'तत्त्वज्ञानार्थदर्शनम्' इत्यन्तेन ज्ञातव्यस्याऽऽत्मतत्त्वस्य ज्ञानसाधनमुक्तम् । 'अनादि मत्परम्' इत्यादिना 'हृदि सर्वस्य विष्ठितम्' इत्यन्तेन ज्ञेयस्य क्षेत्रज्ञस्य याथात्म्यं च संक्षेपेणोक्तम् । मद्भक्त एतत्क्षेत्रयाथात्म्यं क्षेत्राद्विविक्तात्मस्वरूपप्राप्त्युपाययाथात्म्यं च विज्ञाय मद्भावायोपपद्यते मम यो भावः स्वभावोऽसंसारित्वमसंसारित्वप्राप्तय उपपन्नो भवतीत्यर्थः ॥ १८ ॥

अथात्यन्तविभक्तस्वभावयोः प्रकृत्यात्मनोः संसर्गस्यानादित्वं संसृष्टयोर्द्वयोः कार्यभेदः संसर्गहेतुश्चोच्यते—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

प्रकृतिपुरुषावुभावन्योन्यसंसृष्टावनादी विद्धि । बन्धहेतुभूतान्विकारा-

निच्छाद्वेषादीनमानित्वादिकांश्च गुणान्मोक्षहेतुभूतान्प्रकृतिसंभवान्विद्धि। पुरुषेण संसृष्टेयमनादिकालप्रवृत्ता क्षेत्राकारपरिणता प्रकृतिः स्वविकारैरिच्छाद्वेषादिभिः पुरुषस्य बन्धहेतुर्भवति। सैवामानित्वादिभिः स्वविकारैः पुरुषस्यापवर्गहेतुर्भवतीत्यर्थः ॥ १९ ॥

संसृष्टयोः प्रकृतिपुरुषयोः कार्यभेदमाह—

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

कार्यं शरीरं कारणानि समनस्कानीन्द्रियाणि तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः। पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रयभोगसाधनभूताः क्रिया इत्यर्थः। पुरुषस्य त्वधिष्ठातृत्वमेव तदपेक्षयाऽधिकं 'कर्ता शास्त्रार्थवत्त्वात्' [ ब्र० सू० २ । ३ । ३३ ] इत्यादिपूक्तम्। शरीराधिष्ठानप्रयत्नहेतुत्वमेव हि पुरुषस्य कर्तृत्वम्। प्रकृतिसंसृष्टः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः सुखदुःखानुभवाश्रय इत्यर्थः। एवमन्योन्यसंसृष्टयोः प्रकृतिपुरुषयोः कार्यभेद उक्तः ॥ २० ॥

पुरुषस्य स्वतः स्वानुभवैकसुखस्यापि वैषयिकसुखदुःखोपभोगहेतुत्वमाह—

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

गुणशब्दः स्वकार्येष्वौपचारिकः। स्वतः स्वानुभवैकसुखः पुरुषः प्रकृतिस्थः प्रकृतिसंसृष्टः प्रकृतिजान्गुणान्प्रकृतिसंसर्गोपाधिकान्सत्त्वादिगुणकार्यभूतान्सुखदुःखादीन्भुङ्क्तेऽनुभवति। प्रकृतिसंसर्गहेतुमाह—पूर्वपूर्वप्रकृतिपरिणामरूपदेवमनुष्यादियोनिविशेषेषु स्थितोऽयं पुरुषस्तत्तद्योनिप्रयुक्तसत्त्वादिगुणमयेषु सुखादिषु सक्तस्तत्साधनभूतेषु पुण्यपापकर्मसु प्रवर्तते। ततस्तत्पुण्यपापफलानुभवाय सदसद्योनिषु साध्वसाधुयोनिषु जायते। ततश्च कर्माऽऽरभते। ततश्च जायते। यावदमानित्वादिकानात्मप्राप्तिसाधनभूतान्गुणान्सेवते तावदेव संसरति। तदिदमुक्तम्—'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति ॥ २१ ॥

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

अस्मिन्देहेऽवस्थितोऽयं पुरुषो देहप्रवृत्त्यनुगुणसंकल्पादिरूपेण देहस्योपद्रष्टाऽनुमन्ता च भवति । तथा देहस्य भर्ता च भवति । तथा देहप्रवृत्तिजनितसुखदुःखयोर्भोक्ता च भवति । एवं देहनियमनेन देहभरणेन देहशेषित्वेन च देहेन्द्रियमनांसि प्रति महेश्वरो भवति । तथा च वक्ष्यते-

' शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ' । इति ।

अस्मिन्देहे देहेन्द्रियमनांसि प्रति परमात्मेति चाप्युक्तः । देहे मनसि चाऽऽत्मशब्दोऽनन्तरमेव प्रयुज्यते-' ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना ' [ भ० गी० १३ । २४ ] इति । अपिशब्दान्महेश्वर इत्यप्युक्त इति गम्यते । पुरुषः परोऽनादि मत्परमित्यादिनोक्तोऽपरिच्छिन्नज्ञानशक्तिरयं पुरुषोऽनादिप्रकृतिसंबन्धकृतगुणसङ्गादेतद्देहमात्रमहेश्वरो देहमात्रपरमात्मा च भवति ॥ २२ ॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

एवमुक्तस्वभावं पुरुषमुक्तस्वभावां च प्रकृतिं वक्ष्यमाणस्वभावयुक्तैः सत्त्वादिभिर्गुणैः सह यो वेत्ति यथावद्विवेकेन जानाति स सर्वथा देवमनुष्यादिदेहेष्वतिमात्रक्लिष्टप्रकारेण वर्तमानोऽपि भूयो न जायते न भूयः प्रकृत्या संबध्नाति । अपरिच्छिन्नज्ञानलक्षणमपहतपाप्मानमात्मानं तद्देहावसानसमये प्राप्नोतीत्यर्थः ॥ २३ ॥

ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन( ण ) चापरे ॥ २४ ॥

केचिन्निष्पन्नयोगा आत्मनि शरीरेऽवस्थितमात्मानमात्मना मनसा ध्यानेन भक्तियोगेन पश्यन्ति । अन्ये चानिष्पन्नयोगाः सांख्येन

१ ग. °नोकाप° । २ च. °त्रक्लिष्ट° ।

योगेन ज्ञानयोगेन योगयोग्यं मनः कृत्वाऽऽत्मानं पश्यन्ति । अपरे योगादिष्वात्मावलोकसाधनेष्वनधिकृता ये ज्ञानयोगानधिकारिणः सुकरोपायसक्ता व्यपदेश्यश्च कर्मयोगेना( णा )न्तर्गतज्ञानेन मनसो योगयोग्यतापुत्पाद्याऽऽत्मानं पश्यन्ति ॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

अन्ये तु कर्मयोगादिष्वात्मावलोकसाधनेष्वनधिकृता अन्येभ्यस्तत्त्वदर्शिभ्यो ज्ञानिभ्यः श्रुत्वा कर्मयोगादिभिरात्मानमुपासते तेऽप्यात्मदर्शनेन मृत्युमतितरन्ति। ये श्रुतिपरायणाः श्रवणमात्रनिष्ठास्ते च पूतपापाः क्रमेण कर्मयोगादिकमारभ्यातितरन्त्येव मृत्युम् । अपिशब्दाच्च पूर्वभेदोऽवगम्यते ॥ २५ ॥

अथ प्रकृतिसंसृष्टस्याऽऽत्मनो विवेकानुसंधानप्रकारं वक्तुं स्थावरं जङ्गमं च सत्त्वं चिदचित्संसर्गजमित्याह—

यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥

यावत् स्थावरजङ्गमात्मना सत्त्वं जायते तावत् क्षेत्रक्षेत्रज्ञयोरितरेतरसंयोगादेव जायते संयुक्तमेव जायते न त्वितरेतरवियुक्तमित्यर्थः॥२६॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

एवमितरेतरयुक्तेषु सर्वभूतेषु देवादिविषमाकाराद्विविक्तं तत्र तत्र तत्तद्देहेन्द्रियमनांसि प्रति परमेश्वरत्वेन स्थितमात्मानं ज्ञातृत्वेन समानाकारं तेषु देहादिषु विनश्यत्सु विनाशानर्हस्वभावेनाविनश्यन्तं यः पश्यति स पश्यति । स आत्मानं यथावस्थितं पश्यति । यस्तु देवादिविषमाकारेणाऽऽत्मानमपि विषमाकारं जन्मविनाशादियुक्तं च पश्यति स नित्यमेव संसरतीत्यभिप्रायः ॥ २७ ॥

---

१ ङ. °द्विमुक्त । २ ख. ग. संसरत्य° ॥

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥२८॥

सर्वत्र देवादिशरीरेषु तत्तच्छेषित्वेनाऽऽधारतया नियन्तृतया च स्थितमीश्वरमात्मानं देवादिविषमाकारवियुक्तं ज्ञानैकाकारतया समं पश्यन्नात्मना मनसा स्वमात्मानं न हिनस्ति रक्षति संसारान्मोचयति । ततस्तस्माज्ज्ञातृतया सर्वत्र समानाकारदर्शनात्परां गतिं याति । गम्यत इति गतिः । परं गन्तव्यं यथावदवस्थितमात्मानं प्राप्नोति । देवाद्याकारयुक्ततया सर्वत्र विषममात्मानं पश्यन्नात्मानं हिनस्ति भवजलधिमध्ये प्रक्षिपति ॥ २८ ॥

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ २९ ॥

सर्वाणि कर्माणि 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते' इति पूर्वोक्तरीत्या प्रकृत्या क्रियमाणानीति यः पश्यति तथाऽऽत्मानमकर्तारं ज्ञानाकारं च यः पश्यति तस्य प्रकृतिसंयोगस्तदधिष्ठानं तज्जन्यसुखदुःखानुभवश्च कर्मरूपाज्ञानकृत इति च यः पश्यति स आत्मानं यथावदवस्थितं पश्यति ॥ २९ ॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

प्रकृतिपुरुषतत्त्वद्वयात्मकेषु देवादिषु सर्वेषु भूतेषु सत्सु तेषां देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिपृथक्भावमेकस्थमेकतत्त्वस्थं प्रकृतिस्थं यदा पश्यति नाऽऽत्मस्थं तत एव प्रकृतित एवोत्तरोत्तरपुत्रपौत्रादिकभेदाविस्तारं च यदा पश्यति तदैव ब्रह्म संपद्यतेऽनवच्छिन्नज्ञानैकाकारमात्मानं प्राप्नोतीत्यर्थः ॥ ३० ॥

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

अयं परमात्मा देहान्निष्कृष्टस्वभावेन निरूपितः शरीरस्थोऽपि अना-

१ ख. तत्त्वात्म ।

दित्वादनारभ्यत्वादव्ययो व्ययरहितः । निर्गुणत्वात्सत्त्वादिगुणरहित-त्वान्न करोति न लिप्यते देहभावैर्न लिप्यते न बध्यते ॥ ३१ ॥

यद्यपि निर्गुणत्वान्न करोति नित्यसंयुक्तैर्देहस्वभावैः कथं न लिप्यत इत्यत्राऽऽह—

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३२ ॥

यथाऽऽकाशं सर्वगतमपि सर्वैर्वस्तुभिः संयुक्तमपि सौक्ष्म्यात्सर्ववस्तुस्वभावैर्न लिप्यते तथाऽऽत्माऽतिसौक्ष्म्यात्सर्वत्र देवमनुष्यादौ देहेऽवस्थितोऽपि तत्तद्देहस्वभावैर्न लिप्यते ॥ ३२ ॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥

यथैक आदित्यः स्वया प्रभया कृत्स्नमिमं लोकं प्रकाशयति तथा क्षेत्रमपि क्षेत्री मदेदं क्षेत्रमीदृशमिति कृत्स्नं बहिरन्तरापादतलमस्तकं स्वकीयेन ज्ञानेन प्रकाशयति । अतः प्रकाश्याल्लोकात्प्रकाशकादित्यवद्वेदितृत्वेन वेद्यभूतादस्मात्क्षेत्रादत्यन्तविलक्षणोऽयमुक्तलक्षण आत्मेत्यर्थः ॥ ३३ ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

एवमुक्तेन प्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं विशेषं विवेकविषयज्ञानाख्येन चक्षुषा ये विदुर्भूतप्रकृतिमोक्षं च ते परं यान्ति निर्मुक्तबन्धमात्मानं प्राप्नुवन्ति । एवमुक्तेन प्रकारेण मोक्ष्यतेऽनेनेति मोक्षोऽमानित्वा-

दिव मुक्तं मोक्षसाधनमित्यर्थः। क्षेत्रक्षेत्रज्ञयोर्विवेकविषयेणोक्तेन ज्ञानेन तयोर्विवेकं विदित्वा भूतप्रकृतिमोक्षोपायममानित्वादिकं चावगम्य य आचरन्ति ते निर्मुक्तबन्धाः स्वेन रूपेणावस्थितमनवच्छिन्नलक्षणमात्मानं प्राप्नुवन्तीत्यर्थः॥ ३४॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
त्रयोदशोऽध्यायः॥ १३॥

---

## अथ चतुर्दशोऽध्यायः।

त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञायामानित्वादिभिर्भगवद्भक्त्यनुगृहीतैर्बन्धान्मुच्यत इत्युक्तम्। तत्र बन्धहेतुः पूर्वपूर्वसत्त्वादिगुणमयसुखादिसङ्ग इति चाभिहितम्—'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति। अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्तनप्रकारश्चोच्यते—

श्रीभगवानुवाच—

> परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
> यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः॥ १॥

परं पूर्वोक्तादन्यत् प्रकृतिपुरुषान्तर्गतमेव सत्त्वादिगुणविषयं ज्ञानं भूयः प्रवक्ष्यामि। तच्च ज्ञानं सर्वेषां प्रकृतिपुरुषविषयज्ञानानामुत्तमम्। यज्ज्ञानं ज्ञात्वा सर्वे मुनयस्तन्मननशीला इतः संसारात्परां सिद्धिं गताः॥ १॥

पुनरपि ज्ञानं फलेन विशिनष्टि—

> इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
> सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥ २॥

इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य मम साधर्म्यमागता मत्साम्यं प्राप्ताः

१ इतः पूर्वं ङ. पुस्तके—'देहस्वरूपमात्माप्तिहेतुरात्मविशोधनम्। बन्धहेतुर्विवेकश्च त्रयोदश उदीर्यते' इति श्लोकपाठो वर्तते।

सर्गेऽपि नोपजायन्ते न सृजिकर्मतां भजन्ते। प्रलये न व्यथन्ति च न च मृतिकर्मतां भजन्ते॥ २॥

अथ प्राकृतानां गुणानां बन्धहेतुताप्रकारं वक्तुं सर्वस्य भूतजातस्य प्रकृतिपुरुषसंसर्गजत्वं 'यावत्संजायते किंचित्' इत्यनेनोक्तं भगवता स्वेनैव कृतमित्याह—

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥ ३॥

मम मदीयं कृत्स्नस्य जगतो योनिभूतं महद्ब्रह्म यत्तस्मिन् गर्भं दधाम्यहम्।

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयम्'॥

इति निर्दिष्टाऽचेतना प्रकृति महदहंकारादिविकाराणां कारणतया महद्ब्रह्मेति उच्यते। श्रुतावपि क्वचित्प्रकृतिरपि ब्रह्मेति निर्दिश्यते— 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' [ मु० १। १। ९ ] इति। 'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम्' इति चेतनपुञ्जरूपा या प्रकृतिर्निर्दिष्टा सेह सकलप्राणिबीजतया गर्भशब्देनोच्यते। तस्मिन्नचेतनयोनिभूते महति ब्रह्माणि चेतनपुञ्जरूपं गर्भं दधामि। अचेतनप्रकृत्या भोगक्षेत्रभूतया भोक्तृवर्गपुञ्जभूतां चेतनप्रकृतिं संयोजयामीत्यर्थः। ततस्तस्मात्प्रकृतिद्वयसंयोगान्मत्संकल्पकृतात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां संभवो भवति॥ ३॥

कार्यावस्थोऽपि चिदचित्प्रकृतिसंसर्गो मयैव कृत इत्याह—

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥ ४॥

सर्वासु देवगन्धर्वयक्षराक्षसमनुष्यपशुमृगपक्षिसरीसृपादिषु योनिषु तत्तन्मूर्तयो याः संभवन्ति जायन्ते तासां ब्रह्म महद्योनिः कारणं मया संयोजितचेतनवर्गा महदादिविशेषान्ता प्रकृतिः कारणमित्यर्थः। अहं बीजप्रदः पिता तत्र तत्र च तत्तत्कर्मानुगुण्येन चेतनवर्गस्य संयोजकश्चाहमित्यर्थः॥ ४॥

१ ग. °त्प्रकृ°।

एवं सर्गादौ प्राचीनकर्मवशादचित्संसर्गेण देवादियोनिषु पुनः पुनर्देवादिभावेन जन्महेतुमाह—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वरजस्तमांसि त्रयो गुणाः प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः प्रकाशादिकार्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूतास्तद्विकारेषु महदादिषूद्भूता महदादिविशेषान्तैरारब्धदेवमनुष्यादिदेहसंबन्धिनमेनं देहिनमव्ययं स्वतो गुणसंबन्धानर्हं देहे वर्तमानं निबध्नन्ति देहे वर्तमानत्वोपाधिना निबध्नन्तीत्यर्थः ॥ ५ ॥

सत्त्वरजस्तमसामाकारं बन्धनप्रकारं चाऽऽह—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

तत्र सत्त्वरजस्तमःसु सत्त्वस्य स्वरूपमीदृशम् । निर्मलत्वात्प्रकाशकं प्रकाशसुखावरणस्वभावरहितं निर्मलत्वात्प्रकाशसुखजननैकान्तस्वभावतया प्रकाशसुखहेतुभूतमित्यर्थः । प्रकाशो वस्तुयाथात्म्यावबोधः । अनामयम्—आमयाख्यकार्यं न विद्यत इत्यनामयम् । अरोगताहेतुरित्यर्थः । एषु सत्त्वाख्यो गुणो देहिनमेनं सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति । पुरुषस्य सुखसङ्गं ज्ञानसङ्गं च जनयतीत्यर्थः । ज्ञानसुखयोः सङ्गे हि जाते तत्साधनेषु लौकिकवैदिकेषु प्रवर्तते । ततश्च तत्फलानुभवसाधनभूतासु योनिषु जायत इति सत्त्वं सुखज्ञानसङ्गद्वारेण पुरुषं बध्नाति । ज्ञानसुखजननं पुनरपि तयोः सङ्गजननं च सत्त्वमित्युक्तं भवति ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

रजो रागात्मकं रागहेतुभूतम् । रागो योषित्पुरुषयोरन्योन्यस्पृहा । तृष्णासङ्गसमुद्भवं तृष्णासङ्गयोरुद्भवस्थानं तृष्णासङ्गहेतुभूतमित्यर्थः । तृष्णा शब्दादिसर्वविषयस्पृहा । सङ्गः पुत्रमित्रादिषु संबन्धिषु संश्लेषस्पृहा । तथा देहिनं कर्मसु क्रियासु स्पृहाजननद्वारेण निबध्नाति ।

क्रियासु हि स्पृहया याः क्रिया आरभते देही ताश्च पुण्यपापरूपा इति तत्फलानुभवसाधानभूतासु योनिषु जन्महेतवो भवन्ति । अतः कर्मसङ्गद्वारेण रजो देहिनं निबध्नाति । तदेवं रजो रागतृष्णासङ्गहेतुः कर्मसङ्गहेतुश्चेत्युक्तं भवति ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

ज्ञानादन्यदिहाज्ञानमभिप्रेतम् । ज्ञानं वस्तुयाथात्म्यावबोधः । तस्मादन्यत्तद्विपर्ययज्ञानम् । तमस्तु वस्तुयाथात्म्यविपरीतविषयज्ञानजम् । मोहनं सर्वदेहिनां मोहो विपर्ययज्ञानं विपर्ययज्ञानहेतुरित्यर्थः । तत्तमः प्रमादालस्यनिद्राहेतुतया तद्द्वारेण देहिनं निबध्नाति । प्रमादः कर्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतमनवधानम् । आलस्यं कर्मस्वनारम्भस्वभावः । स्तब्धतेति यावत् । पुरुषस्येन्द्रियप्रवर्तनश्रान्त्या सर्वेन्द्रियप्रवर्तनोपरतिर्निद्रा । तत्र बाह्येन्द्रियप्रवर्तनोपरमः स्वप्नः । मनसोऽप्युपरमः सुषुप्तिः ॥ ८ ॥

सत्त्वादीनां बन्धद्वारभूतेषु प्रधानान्याह—

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

सत्त्वं सुखसङ्गप्रधानम् । रजः कर्मसङ्गप्रधानम् । तमस्तु वस्तुयाथात्म्यज्ञानमावृत्य विपरीतज्ञानहेतुतया कर्तव्यविपरीतप्रवृत्तिसङ्गप्रधानम् ॥ ९ ॥

देहाकारपरिणतायाः प्रकृतेः स्वरूपानुबन्धिनः सत्त्वादयो गुणाः । ते च स्वरूपानुबन्धित्वेन सर्वदा सर्वे वर्तन्त इति परस्परविरुद्धं कार्यं कथं जनयन्तीत्यत्राऽऽह—

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

यद्यपि सत्त्वादयस्त्रयः प्रकृतिसंसृष्टात्मस्वरूपानुबन्धिनस्तथाऽपि

प्राचीनकर्मवशाद्देहाप्यायनभूताहारवैषम्याच्च सत्त्वादयः परस्परसमुद्भवाभिभवरूपेण वर्तन्ते। रजस्तमसी कदाचिदभिभूय सत्त्वमुद्रिक्तं वर्तते। तथा तमःसत्त्वे अभिभूय रजः कदाचित्कदाचिच्च रजःसत्त्वे अभिभूय तमः ॥ १० ॥

तच्च कार्योपलब्ध्यैवावगच्छेदित्याह—

सर्वद्वारेषु देहेऽस्मिन्प्रकाश* उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

सर्वेषु चक्षुरादिषु ज्ञानद्वारेषु यदा वस्तुयाथात्म्यप्रकाशे ज्ञानमुपजायते तदाऽस्मिन्देहे सत्त्वं प्रवृद्धमिति विद्यात् ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

लोभः स्वकीयद्रव्यस्यात्यागशीलता। प्रवृत्तिः प्रयोजनमनुद्दिश्यापि चलस्वभावता। आरम्भः कर्मणां फलसाधनभूतानां कर्मणामारम्भ उद्योगः। अशम इन्द्रियानुपरतिः। स्पृहा विषयेच्छा। एतानि रजसि प्रवृद्धे जायन्ते। यदा लोभादयो वर्तन्ते तदा रजः प्रवृद्धमिति विद्यादित्यर्थः ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

अप्रकाशो ज्ञानानुदयः। अप्रवृत्तिः स्तब्धता। प्रमादोऽकार्यप्रवृत्तिफलमनवधानम्। मोहो विपरीतज्ञानम्। एतानि तमसि प्रवृद्धे जायन्ते। एतैस्तमः प्रवृद्धमिति विद्यात् ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥

यदा सत्त्वं प्रवृद्धं तदा सत्त्वे प्रवृद्धे देहभृत् प्रलयं मरणं याति चेदु-

---

* प्रकाशशब्दोऽत्र न प्रथमान्तः। ज्ञानशब्देन पुनरुक्तिप्रसङ्गात्। सप्तम्यन्तत्वे तु ज्ञानफलभूतव्यवहारानुगुणविषयतया वा ज्ञानशब्देन मनोवृत्तिविवक्षया वाऽन्वय उपपद्यते इति ज्ञेयम् ।

त्तमविदामुत्तमतत्त्वविदामात्मयाथात्म्यविदां लोकान् समूहानमलान् मलरहित नज्ञानरहितान् प्रतिपद्यते प्राप्नोति। सत्त्वे प्रवृद्धे तु मृत आत्मविदां कुलेषु जनित्वाऽऽत्मयाथात्म्यज्ञानसाधनेषु पुण्यकर्मस्वधिकरोतीत्युक्तं भवति ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

रजसि प्रवृद्धे मरणं प्राप्य फलार्थं कर्म कुर्वतां कुलेषु जायते। तत्र जनित्वा स्वर्गादिफलसाधनकर्मस्वधिकरोतीत्यर्थः। तथा तमसि प्रवृद्धे मृतो मूढयोनिषु श्वसूकरादियोनिषु जायते। सकलपुरुषार्थारम्भानर्हो जायत इत्यर्थः ॥ १५ ॥

कर्मणः सुकृतस्याऽऽहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

एवं सत्त्ववृद्धौ मरणमुपगम्याऽऽत्मविदां कुले जातेनानुष्ठितस्य सुकृतस्य फलाभिसंधिरहितस्य मदाराधनरूपस्य कर्मणः फलं पुनरपि ततोऽधिकसत्त्वजनितं निर्मलं दुःखगन्धरहितं भवतीत्याहुः सत्त्वगुणपरिणामविदः। अन्तकालप्रवृद्धस्य रजसस्तु फलं फलसाधनकर्मसङ्गिकुले जन्म फलाभिसंधिपूर्वककर्मारम्भतत्फलानुभवपुनर्जन्म। रजोवृद्धिफलाभिसंधिपूर्वककर्मारम्भपरम्परारूपं सांसारिकं दुःखमेवेत्याहुस्तद्गुणयाथात्म्यविदः। अज्ञानं तमसः फलम्। एवमन्तकालप्रवृद्धस्य तमसः फलमज्ञानपरम्परारूपम् ॥ १६ ॥

तदधिकसत्त्वादिजनितनिर्मलत्वादिफलं किमित्यत्राऽऽह—

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

एवं परम्परया जातादधिकसत्त्वादात्मयाथात्म्यापरोक्षरूपं ज्ञानं जायते। तथा प्रवृद्धाद्रजसः स्वर्गादिफललोभो जायते। तथा प्रवृद्धा-

१ ख. ग. जायते। ते। २ ख. भवार्थं पु।

च तमसः प्रमादोऽनवधानं तन्निमित्ताऽसत्कर्मणि प्रवृत्तिस्ततश्च मोहो विपरीतज्ञानं ततश्चाधिकतरं तमः। ततश्चाज्ञानं ज्ञानाभावः॥ १७॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥ १८॥

एवमुक्तेन प्रकारेण सत्त्वस्था ऊर्ध्वं गच्छन्ति क्रमेण संसारबन्धान्मोक्षं गच्छन्ति। रजसः स्वर्गादिफललोभकरत्वाद्राजसाः फलसाधनभूतं कर्मानुष्ठाय तत्फलमनुभूय पुनरपि जनित्वा तदपेक्षितं कर्मानुतिष्ठन्तीति मध्ये तिष्ठन्ति पुनरावृत्तिरूपतया दुःखप्रायमेव तत्। तामसास्तु जघन्यगुणवृत्तिस्था उत्तरोत्तरनिकृष्टतमोगुणवृत्तिषु स्थिता अधो गच्छन्ति। अन्त्यजत्वं ततस्तिर्यक्त्वं ततः कृमिकीटादिजन्म ततः स्थावरत्वं ततोऽपि गुल्मलतात्वं ततश्च शिलाकाष्ठलोष्टतृणादित्वं गच्छन्तीत्यर्थः॥ १८॥

आहारविशेषैः फलाभिसंधिरहितसुकृतविशेषैश्च परम्परया प्रवर्धितसत्त्वानां गुणात्ययद्वारेणोर्ध्वगमनप्रकारमाह—

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति॥ १९॥

एवं सात्त्विकाहारसेवया फलाभिसंधिरहितभगवदाराधनरूपकर्मानुष्ठानैश्च रजस्तमसी सर्वात्मनाऽभिभूयोत्कृष्टसत्त्वनिष्ठो यदा यो द्रष्टा गुणेभ्योऽन्यं कर्तारं नानुपश्यति गुणा एव स्वानुगुणप्रवृत्तिषु कर्तार इति पश्यति। गुणेभ्यश्च परं वेत्ति कर्तृभ्यो गुणेभ्यश्च परमन्यमात्मानमकर्तारं वेत्ति स मद्भावमधिगच्छति मम यो भावस्तमधिगच्छति। एतदुक्तं भवति—आत्मनः स्वतः परिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलगुणसङ्गनिमित्तं विविधकर्मसु कर्तृत्वम्। आत्मा स्वतस्त्वकर्ताऽपरिच्छिन्नज्ञानैकाकार इत्येवमात्मानं पश्यति तदा मद्भावमधिगच्छतीति॥१९॥

१ घ. °वं ज्ञाना[?]ज्ञा°। २ ग. घ. °भूय निष्कृष्ट°।

कर्तृभ्यो गुणेभ्योऽन्यमकर्तारमात्मानं पश्यन्भगवद्भावमधिगच्छतीत्युक्तं स भगवद्भावः कीदृश इत्यत्राऽऽह—

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

अयं देही देहसमुद्भवान्देहाकारपरिणतप्रकृतिसमुद्भवानेतान्सत्त्वादींस्त्रीन्गुणानतीत्य तेभ्यश्चान्यं ज्ञानैकाकारमात्मानं पश्यञ्जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमात्मानमनुभवति एष मद्भाव इत्यर्थः ॥ २० ॥

अथ गुणातीतस्य स्वरूपसूचनाचारप्रकारं गुणात्ययहेतुं च पृच्छन्—

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥

सत्त्वादींस्त्रीन्गुणानेतानतीतः कैर्लिङ्गैः कैर्लक्षणैरुपलक्षितो भवति । किमाचारः केनाऽऽचारेण युक्तोऽसौ । अस्य स्वरूपावगमे लिङ्गभूताऽऽचारः कीदृश इत्यर्थः । कथं चैतान् केनोपायेन सत्त्वादींस्त्रीन्गुणानतिवर्तते ॥ २१ ॥

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

प्रकाशमिति । आत्मव्यतिरिक्तेषु वस्तुषु अनिष्टेषु संप्रवृत्तानि सत्त्वरजस्तमसां कार्याणि प्रकाशप्रवृत्तिमोहाख्यानि यो न द्वेष्टि तथाऽऽत्मव्यतिरिक्तेष्विष्टेषु वस्तुषु तान्येव निवृत्तानि न काङ्क्षति ॥ २२ ॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

उदासीनवदासीनो गुणव्यतिरिक्तात्मावलोकनतृप्त्याऽन्यत्रोदासीन-

वदासीनो गुणैर्द्वेषाकाङ्क्षाद्वारेण यो न विचाल्यते । गुणाः स्वेषु कार्येषु प्रकाशादिषु वर्तन्त इत्यनुसंधाय यस्तूष्णीमवतिष्ठते नेङ्गते न गुणकार्यानुगुणं चेष्टते ॥ २३ ॥

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

समदुःखसुखो दुःखसुखयोः समचित्तः । स्वस्थः स्वस्मिन् स्थितः स्वात्मैकप्रियत्वेन तद्व्यतिरिक्तपुत्रादिजन्ममरणादिसुखदुःखयोः समचित्त इत्यर्थः । तत एव समलोष्टाश्मकाञ्चनः । तत एव च तुल्यप्रियाप्रियस्तुल्यप्रियाप्रियविषयः । धीरः प्रकृत्यात्मविवेककुशलः । तत एव तुल्यनिन्दात्मसंस्तुतिः आत्मनि मनुष्यत्वाद्यभिमानकृतगुणागुणनिमित्तस्तुतिनिन्दयोः स्वासंबन्धानुसंधानेन तुल्यचित्तः । तत्प्रयुक्तमानापमानयोस्तत्प्रयुक्तमित्रारिपक्षयोरपि स्वसंबन्धाभावादेव तुल्यचित्तः । तथा देहित्वप्रयुक्तसर्वारम्भपरित्यागी । य एवंभूतः स गुणातीत उच्यते ॥ २४ ॥ २५ ॥

अथैवंरूपगुणात्यये प्रधानहेतुमाह—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

'नान्यं गुणेभ्यः कर्तारम्' इत्यादिनोक्तेन प्रकृत्यात्मविवेकानुसंधानमात्रेण न गुणात्ययः प्राप्स्यते तस्यानादिकालप्रवृत्तविपरीतवासनाबाध्यत्वसंभवात् । मां सत्यसंकल्पं परमकारुणिकमाश्रितवात्सल्यजलधिमव्यभिचारेणैकान्त्यविशिष्टेन भक्तियोगेन यः सेवते स एतान् सत्त्वादीन् गुणान् दुरत्ययानतीत्य ब्रह्मभूयाय ब्रह्मत्वाय कल्पते ब्रह्मभावयोग्यो भवति । यथावस्थितमात्मानममृतमव्ययं प्राप्नोतीत्यर्थः॥ २६॥

१ ख. ग. 'वंभूतगु' । २ ग. 'भावाय यो' ।

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

हिशब्दो हेतौ। यस्मादहमव्यभिचारिभक्तियोगेन सेवितोऽमृतस्याव्ययस्य च ब्रह्मणः प्रतिष्ठा। तथा शाश्वतस्य च धर्मस्यातिशयितानित्यैश्वर्यस्यैकान्तिकस्य सुखस्य च 'वासुदेवः सर्वम्' इत्यादिना निर्दिष्टस्य ज्ञानिनः प्राप्यस्य सुखस्येत्यर्थः। यद्यपि शाश्वतधर्मशब्दः प्रापकवचनस्तथाऽपि पूर्वोत्तरयोः प्राप्यरूपत्वेन तत्साहचर्यादयमपि प्राप्यलक्षकः। एतदुक्तं भवति—पूर्वत्र 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते' इत्यारभ्य गुणात्ययस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां च भगवत्प्रपत्त्येकोपायतायाः प्रतिपादितत्वात्तदेकान्तभगवत्प्रपत्त्येकोपायो गुणात्ययस्तत्पूर्वकब्रह्मभावश्चेति ॥ २७ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः ।

क्षेत्राध्याये क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोः स्वरूपं विशोध्य विशुद्धस्यापरिच्छिन्नज्ञानैकाकारस्यैव पुरुषस्य प्राकृतगुणसङ्गप्रवाहनिमित्तो देवाद्याकारपरिणतप्रकृतिसंबन्धोऽनादिरित्युक्तम् । अनन्तरे चाध्याये पुरुषस्य कार्यकारणोभयावस्थप्रकृतिसंबन्धो गुणसङ्गमूलो भगवतैव कृत इत्युक्त्वा गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य गुणसङ्गनिवृत्तिपूर्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम् । इदानीं भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तविभूतियुक्तां विभूतिभूतात्क्षराक्षरपुरुषद्व-

याखिलहेयप्रत्यनीककल्याणैकतानतयाऽत्यन्तोत्कर्षरूपेण विसजातीयस्य पुरुषोत्तमत्वं च वक्तुमारभते। तत्र तावदसङ्गरूपशस्त्रच्छिन्नबन्धामक्षराख्यविभूतिं च वक्तुं छेद्यरूपबन्धाकारेण विततमचित्परिणामविशेषमश्वत्थवृक्षाकारं कल्पयञ्श्रीभगवानुवाच—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ १॥

यं संसाराख्यमश्वत्थमूर्ध्वमूलमधःशाखमव्ययं चाऽऽहुः श्रुतयः—'ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः। ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति' इत्याद्याः। सप्तलोकोपरिनिविष्टचतुर्मुखादित्वेन तस्योर्ध्वमूलत्वं पृथिवीनिवासिसकलनरपशुमृगपक्षिकृमिकीटपतङ्गस्थावरान्ततयाऽधःशाखत्वम्। सम्यग्ज्ञानोदयात्प्राक्प्रवाहरूपेणाच्छेद्यत्वेनाव्ययत्वम्। यस्य चाश्वत्थस्य च्छदांसि पर्णान्याहुः श्रुतयः। 'वायव्यं श्वेतमालभेत भूतिकामः'। 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यादिश्रुतिप्रतिपादितैः काम्यकर्मभिर्वर्धतेऽयं संसारवृक्ष इति च्छदांस्येवास्य पर्णानि पत्रैर्हि वृक्षो वर्धते। यस्तमेवंभूतमश्वत्थं वेद स वेदवित्। वेदो हि संसारवृक्षस्य च्छेदोपायं वदति। छेद्यस्य वृक्षस्य स्वरूपज्ञानं छेदनोपायज्ञानोपयोगीति वेदविदित्युच्यते॥ १॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके॥ २॥

तस्य मनुष्यादिशाखस्य वृक्षस्य तत्तत्कर्मकृता अपराश्चाधःशाखाः पुनरपि मनुष्यपश्वादिरूपेण प्रसृता भवन्ति। ऊर्ध्वं च गन्धर्वयक्षदेवादिरूपेण प्रसृता भवन्ति। ताश्च गुणप्रवृद्धा गुणैः सत्त्वादिभिः प्रवृद्धाः। विषयप्रवालाः शब्दादिविषयपल्लवाः। कथमित्यत्राऽऽह—अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके। ब्रह्मलोकमूलस्यास्य वृक्षस्य

१ क. सप्तलो°।

मनुष्याग्रस्याधो मनुष्यलोके मूलान्यनुसंततानि च कर्मानुबन्धीनि कर्माण्येवानुबन्धीनि मूलान्यधो मनुष्यलोके च भवन्तीत्यर्थः । मनुष्यत्वावस्थायां कृतैर्हि कर्मभिरधो मनुष्यपश्वादय ऊर्ध्वं च देवादयो भवन्ति ॥ २ ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चाऽऽदिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥

अस्य वृक्षस्य चतुर्मुखादित्वेनोर्ध्वमूलत्वं तत्संतानपरम्परया मनुष्याग्रत्वेनाधःशाखत्वं मनुष्यत्वे कृतैः कर्मभिर्मूलभूतैः पुनरप्यधश्चोर्ध्वं च प्रसृतशाखत्वमिति यथेदं रूपं निर्दिष्टं न तथा संसारिभिरुपलभ्यते । मनुष्योऽहं देवदत्तस्य पुत्रो यज्ञदत्तस्य पिता तदनुरूपपरिग्रहश्चेत्येतावन्मात्रमुपलभ्यते । तथाऽस्य वृक्षस्यान्तो विनाशोऽपि गुणमयभोगेष्वसङ्गकृत इति नोपलभ्यते । तथाऽस्य गुणसङ्ग एवाऽऽदिरिति नोपलभ्यते । तस्य प्रतिष्ठा चाऽऽनात्मन्यात्माभिमानरूपमज्ञानमिति नोपलभ्यते । प्रतितिष्ठत्यस्मिन्नेवेति ह्यज्ञानमेवास्य प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा । एनमुक्तप्रकारं सुविरूढमूलं सुष्ठु विविधं रूढमूलमश्वत्थं सम्यग्ज्ञानमूलेन दृढेन गुणमयभोगासङ्गाख्येन शस्त्रेण छित्त्वा ॥ ३ ॥

ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाऽऽद्यं पुरुषं प्रपद्ये- +
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

ततो विषयासङ्गाद्धेतोस्तत्पदं परिमार्गितव्यमन्वेषणीयं यस्मिन्गता भूयो न निवर्तन्ते । कथमनादिकालप्रवृत्तो गुणमयभोगसङ्गस्तन्मूलं च विपरीतज्ञानं निवर्तेत इत्यत्राऽऽह–तमेवेति । अज्ञानादिनिवृत्तये तमेव चाऽऽद्यं कृत्स्नस्याऽऽदिभूतम्—

---

\+ छन्दोवदृषीणां प्रयोगानुमतेः प्रपद्येदिति परस्मैपदम् ।

'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय'।

इत्यादिपूक्तमाद्यं पुरुषमेव शरणं प्रपद्येत्तमेव शरणं प्रपद्येत। यतो यस्मात्कृत्स्नस्य स्रष्टुरियं गुणमयभोगसङ्गप्रवृत्तिः पुराणी पुरातनी प्रसृता। उक्तं हि मयैव पूर्वमेतत्—

'दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति।

+ प्रपद्येयतः प्रवृत्तिरिति वा पाठः। तमेव चाऽऽद्यं पुरुषं प्रपद्य शरणमुपगम्येत्यर्थः। अज्ञाननिवृत्त्यादेः कृत्स्नस्यैतत्साधनभूता पुराणी प्रवृत्तिः प्रसृता पुरातनानां मुमुक्षूणां प्रवृत्तिः पुराणी। पुरातना हि मुमुक्षवो मामेव शरणमुपगम्य निर्मुक्तबन्धाः संजाता इत्यर्थः ॥ ४ ॥

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः।
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

एवं मां शरणमुपगम्य निर्मानमोहा निर्गतमानमोहा अनात्मन्यात्माभिमानरहिताः। जितसङ्गदोषा जितगुणमयभोगसङ्गाख्यदोषाः। अध्यात्मनित्या आत्मनि यज्ज्ञानं तदध्यात्मम्। आत्मध्याननिरताः। विनिवृत्तकामा विनिवृत्ततदितरकामाः। सुखदुःखसंज्ञैश्च द्वंद्वैर्विमुक्ताः। अमूढा आत्मानात्मस्वभावज्ञाः। तदव्ययं पदं गच्छन्ति। अनवच्छिन्नज्ञानाकारमात्मानं यथावस्थितं प्राप्नुवन्तीति। मां शरणमुपागतानां मत्प्रसादादेव ताः सर्वाः प्रवृत्तयः सुशकाः सिद्धिपर्यन्ता भवन्तीत्यर्थः ॥५॥

+ तत्र ह्यभिमतं पाठान्तरमर्थान्तरं चाऽऽह—प्रपद्येयादिना। उत्तमपुरुषैकवाक्यान्वयादियत इति पदच्छेदः। एवं च शङ्कायां साक्षादिदमुत्तरं स्यादिति भावः। इयच्छब्दस्यात्र प्रकृताप्रकृतसाकल्यपरत्वमाह—अज्ञाननिवृत्त्यादेः कृत्स्नस्येति। इति क. पुस्तकटिप्पण्याम्।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

तदात्मज्योतिर्न सूर्यो भासयते न शशाङ्को न पावकश्च । यद्गत्वा न निवर्तन्ते तत्परमं धाम परमं ज्योतिर्मम मदीयम् । आदित्यादीनामपि प्रकाशकत्वेनास्य परत्वम् । आदित्यादीनां ज्योतींषि च ज्ञानज्योतिषः प्रकाशकानि । ज्ञानमेव हि सर्वस्य प्रकाशकम् । बाह्यानि तु ज्योतींषि विषयेन्द्रियसंबन्धिविरोधितमोनिरसनद्वारेणोपकारकाणि । अस्यै च प्रकाशको योगः । तद्विरोधि चानादिकर्म । तन्निवर्तनं चोक्तं भगवत्प्रपत्तिमूलमसङ्गादि । यद्गत्वा पुनर्न निवर्तन्ते तत्परमं धाम परमं ज्योतिर्मम मदीयं मद्विभूतिभूतो ममांश इत्यर्थः ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

इत्थमुक्तस्वरूपः सनातनो मदंश एव सन् कश्चिदनादिकर्मरूपाविद्यावेष्टनतिरोहितस्वरूपो जीवभूतो जीवलोके वर्तमानो देवमनुष्यादिप्रकृतिपरिणामविशेषशरीरस्थानि मनःषष्ठानीन्द्रियाणि कर्षति । कश्चिच्च पूर्वोक्तमार्गेणाऽस्या अविद्याया मुक्तः स्वेन रूपेणावतिष्ठते । जीवभूतस्तत्र तिरस्कृतज्ञानैश्वर्यः कर्मरूपप्रकृतिपरिणामविशेषरूपशरीरस्थानामिन्द्रियाणां मनःषष्ठानामीश्वरस्तानि कर्मानुगुणमितस्ततः कर्षति ॥ ७ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽऽशयात् ॥ ८ ॥

यच्छरीरमवाप्नोति यस्माच्छरीरादुत्क्रामति तत्रायमिन्द्रियाणामीश्वर एतानीन्द्रियाणि भूतसूक्ष्मैः सह गृहीत्वा संयाति वायुर्गन्धानिवाऽऽशयात् । यथा वायुः स्रक्चन्दनकस्तूरिकाद्याशयात्तत्स्थानात्सूक्ष्मावयवैः सह गन्धान्गृहीत्वाऽन्यत्र संयाति तद्वदित्यर्थः ॥ ८ ॥

कानि पुनस्तानीन्द्रियाणीत्याह—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

एतानि मनःषष्ठानीन्द्रियाणि अधिष्ठाय स्वस्वविषयवृत्त्यनुगुणानि कृत्वा तत्तच्छब्दादीन् विषयानुपसेवत उपभुङ्क्ते ॥ ९ ॥

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

एवं गुणान्वितं सत्त्वादिगुणमयप्रकृतिपरिणामविशेषमनुष्यत्वादिसंस्थानपिण्डसंसृष्टं पिण्डविशेषादुत्क्रामन्तं पिण्डविशेषेऽवस्थितं वा गुणमयान् विषयान् भुञ्जानं वा कदाचिदपि प्रकृतिपरिणामविशेषमनुष्यत्वादिपिण्डाद्विलक्षणं ज्ञानैकाकारं विमूढा नानुपश्यन्ति । विमूढा मनुष्यत्वादिपिण्डाकारात्माभिमानिनः । ज्ञानचक्षुषस्तु पिण्डात्मविवेकविषयज्ञानवन्तः सर्वावस्थमप्येनं विविक्ताकारमेव पश्यन्ति ॥ १० ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

मत्प्रपत्तिपूर्वकं कर्मयोगादिषु यतमानास्तैर्निर्मलान्तःकरणा योगिनो योगाख्येन चक्षुषाऽऽत्मनि शरीरेऽवस्थितमपि शरीराद्विविक्तं स्वेन रूपेणावस्थितमेनं पश्यन्ति । यतमाना अप्यकृतात्मानो मत्प्रपत्तिविरहिणस्तत एवासंस्कृतमनसस्तत एवाचेतस आत्मावलोकनसमर्थचेतोरहिता नैनं पश्यन्ति ॥ ११ ॥

एवं रविचन्द्राग्नीनामिन्द्रियसंनिकर्षविरोधिसंतमसनिरसनमुखेनेन्द्रियानुग्राहकतया प्रकाशकानां ज्योतिष्मतामपि प्रकाशकं ज्ञानं ज्योतिरात्मा मुक्तावस्थो जीवावस्थश्च भगवद्विभूतिरित्युक्तम्—' तद्धाम परमं मम '। ' ममैवांशो जीवलोके जीवभूतः सनातनः ' इति ।

इदानीमचित्परिणामविशेषभूतमादित्यादीनां ज्योतिष्मतां ज्योतिरपि

भगवद्विभूतिरित्याह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

अखिलस्य जगतो भासकमेतेषामादित्यादीनां यत्तेजस्तन्मदीयं तेजस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि ॥ १२ ॥

पृथिव्याश्च भूतधारिण्या धारकत्वशक्तिर्मदीयेत्याह—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

अहं पृथिवीमाविश्य सर्वाणि भूतान्योजसा मदप्रतिहतसामर्थ्येन धारयामि । पुष्णामीति । तथाऽहममृतरसमयः सोमो भूत्वा सर्वौषधीः पुष्णामि ॥ १३ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

अहं वैश्वानरो जाठरानलो भूत्वा सर्वेषां प्राणिनां देहमाश्रितस्तैर्भुक्तं खाद्यचोष्यलेह्यपेयात्मकं चतुर्विधमन्नं प्राणापानवृत्तिभेदसमायुक्तः पचामि ॥ १४ ॥

अत्र परमपुरुषविभूतिभूतौ सोमवैश्वानरावहं सोमो भूत्वा वैश्वानरो भूत्वेति तत्सामानाधिकरण्येन निर्दिष्टौ । तयोश्च सर्वस्य भूतजातस्य च परमपुरुषसामानाधिकरण्यनिर्देशे हेतुमाह—

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

तयोः सोमवैश्वानरयोः सर्वस्य भूतजातस्य च सकलप्रवृत्तिनिवृत्ति-

मूलज्ञानोदयदेशे हृदि सर्वं मत्संकल्पेन नियच्छन्नात्मतया संनिविष्टः। तथाऽऽहुः श्रुतयः—'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' [ तै० आ० ३। ११। २ ]। 'यः पृथिव्यां तिष्ठन्' [ बृ० ३। ७। ३ ] 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयति' [ बृ० ३। ७। २२ ]। 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम्' [ महा० नारा० ११। ७ ] 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' [छा० ८। १। १]। इत्याद्याः। स्मृतयश्च—

'शास्ता विष्णुरशेषस्य जगतो यो जगन्मयः।
प्रशासितारं सर्वेषामणीयांसमणीयसाम्॥
यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः' इत्याद्याः।

अतो मत्त एव सर्वेषां स्मृतिर्जायते। स्मृतिः पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम्। ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः। सोऽपि मत्तः। अपोहनं च। अपोहनमज्ञाननिवृत्तिः। अपोहनमूहनं वा। 'ऊहनम्, ऊह वा (ए) व च' इति स्मृतेः। ऊहो नामेदं प्रमाणमित्थं प्रवर्तितुमर्हतीति प्रमाणप्रवृत्त्यर्हताविषयसामग्र्यादिनिरूपणजन्यं प्रमाणानुग्राहकं ज्ञानम्। तन्मत्त एव। वेदैश्च सर्वैरहमेव वेद्योऽतोऽग्निवायुसूर्यसोमेन्द्रादीनां मदन्तर्यामिकत्वेन मदात्मकत्वात्तत्प्रतिपादनपरैरपि सर्वैर्वेदैरहमेव वेद्यः। देवमनुष्यादिशब्दैर्जीवात्मेव। वेदान्तकृद्वेदान्तिन्द्रं यजेत वरुणं यजेतेत्येवमादीनामन्तः फलम्। फले हि ते सर्वे वेदाः पर्यवस्यन्ति। अन्तकृत्फलकृद्वेदोदितफलस्य प्रदाता चाहमेवेत्यर्थः। तदुक्तं पूर्वमेव—'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति' इत्यारभ्य 'लभते च ततः कामान्मयैव विहितान्हि तान्' इति। 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति च। वेदविदेव चाहं वेदविच्चाहमेव। एवं मदभिधायिनं वेदमहमेव वेद। इतोऽन्यथा यो वेदार्थं ब्रूते न स वेदविदित्यभिप्रायः॥ १५॥

अतो मत्त एव सर्ववेदानां सारमर्थं शृणु—

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ १६॥**

क्षरश्चाक्षर एव चेति द्वाविमौ लोके पुरुषौ प्रथितौ। तत्र क्षरशब्दाभि-

दिष्टः पुरुषो जीवशब्दाभिलपनीयब्रह्मादिस्तम्बपर्यन्तक्षरणस्वभावाचित्संसृष्टसर्वभूतानि । अत्राचित्संसर्गरूपैकोपाधिना पुरुष इत्येकत्वनिर्देशः । अक्षरशब्दनिर्दिष्टः कूटस्थोऽचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितो मुक्तात्मा । स त्वचित्संसर्गाभावादचित्परिणामविशेषब्रह्मादिदेहसाधारणो न भवतीति कूटस्थ इत्युच्यते । अत्राप्येकत्वनिर्देशोऽचिद्वियोगरूपैकोपाधिनाऽभिहितः । नह्यीतः पूर्वमनादौ काले मुक्त एक एव । यथोक्तम्—' बहवो ज्ञानतपसा पूता मद्भावमागताः ' ' मम साधर्म्यमागताः ' ' सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ' इति ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

उत्तमः पुरुषस्तु ताभ्यां क्षराक्षरशब्दनिर्दिष्टाभ्यां बद्धमुक्तपुरुषाभ्यामन्योऽर्थान्तरभूतः परमात्मेत्युदाहृतः । सर्वासु श्रुतिषु परमात्मेतिनिर्देशादेव ह्युत्तमः पुरुषो बद्धमुक्तपुरुषाभ्यामर्थान्तरभूत इत्यवगम्यते । कथम्—यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । लोक्यत इति लोकः । तत्त्रयं लोकत्रयम् अचेतनं तत्संसृष्टश्चेतनो मुक्तश्चेति प्रमाणावगम्यमेतत्त्रयं य आत्मतयाऽऽविश्य बिभर्ति स तस्माद्व्याप्याद्भर्तव्याच्चार्थान्तरभूतः । इतश्चोक्ताल्लोकत्रयादर्थान्तरभूतः । यतः सोऽव्यय ईश्वरश्च । अव्ययस्वभावो हि व्ययस्वभावादचेतनभूतात्तत्संबन्धेन तदनुसारिणश्च चेतनादचित्संबन्धयोग्यतया पूर्वसंबन्धिनो मुक्ताच्चार्थान्तरभूत एव । तथा तस्य लोकत्रयस्येश्वर ईशितव्यात्तस्मादर्थान्तरभूतः ॥ १७ ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यस्मादेवमुक्तैः स्वभावैः क्षरं पुरुषमतीतोऽहमक्षरान्मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतमः । अतोऽहं लोके वेदे च पुरुषोत्तम इति प्रथितोऽस्मि । वेदार्थावलोकनाल्लोक इति स्मृतिरिहोच्यते श्रुतौ स्मृतौ चेत्यर्थः । श्रुतौ तावत्—' परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः ' इत्यादौ । स्मृतावपि—' अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः ' इत्यादौ ॥ १८ ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

य एवमुक्तेन प्रकारेण पुरुषोत्तमं मामसंमूढो जानाति क्षराक्षरपुरुषाभ्यामव्ययस्वभावतया व्यापनभरणैश्वर्यादियोगेन च विसजातीयं जानाति स सर्ववित्मत्प्राप्त्युपायतया यद्वेदितव्यं तत्सर्वं वेद । भजति मां सर्वभावेन ये च मत्प्राप्त्युपायतया मद्भजनप्रकारा निर्दिष्टास्तैश्च सर्वैर्भजनप्रकारैर्मां भजते । सर्वैर्मद्विषयैर्वेदनैर्मम या प्रीतिर्या च मम सर्वैर्मद्विषयैर्भजनैरुभयविधा सा प्रीतिरनेन वेदनेन मम जायत इत्येतत्पुरुषोत्तमत्ववेदनं पूजयति ॥ १९ ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां
योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तम-
योगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

इत्थं परमपुरुषोत्तमत्वप्रतिपादनं सर्वेषां गुह्यानां गुह्यतममिदं शास्त्रं त्वमनघतया योग्यतम इति कृत्वा मया तवोक्तम् । एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च मां प्रेप्सुना ज्ञेया या बुद्धिः सा सर्वोपात्ता स्यात् । यच्च तेन कर्तव्यं तच्च सर्वं कृतं स्यादित्यर्थः । अनेन श्लोकेनानन्तरोक्तं पुरुषोत्तमविषयं ज्ञानं शास्त्रजन्यमेवैतत्सर्वं करोति न तु साक्षात्काररूपमित्युच्यते ॥ २० ॥

अचिन्मिश्राद्विशुद्धाच्च चेतनात्पुरुषोत्तमः ।
व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ॥

इति श्रीरामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः।

अतीतेनाध्यायत्रयेण प्रकृतिपुरुषयोर्विविक्तयोः संसृष्टयोश्च याथात्म्यं तत्संसर्गवियोगयोश्च गुणसङ्गतद्विपर्ययहेतुकत्वं सर्वप्रकारेणावस्थितयोः प्रकृतिपुरुषयोर्भगवद्विभूतित्वं विभूतिमतो भगवतो विभूतिभूतादचिद्वस्तुनश्चिद्वस्तुनश्च बद्धमुक्तोभयरूपादव्ययत्वव्यापनभरणस्वाम्यैरर्थान्तरतया पुरुषोत्तमत्वेन याथात्म्यं च वर्णितम्। अनन्तरमुक्तस्यार्थस्य स्थेम्ने शास्त्रवश्यतां वक्तुं शास्त्रवश्यतद्विपरीतयोर्दैवासुरसर्गयोर्विभागम्—

श्रीभगवानुवाच—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥ १॥

इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखं भयं तन्निवृत्तिरभयम्। सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य रजस्तमोभ्यामसंस्पृष्टत्वम्। ज्ञानयोगव्यवस्थितिः प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठा। दानं न्यायार्जितधनस्य पात्रे प्रतिपादनम्। दमो मनसो विषयोन्मुख्यनिवृत्तिसंशीलनम्। यज्ञः फलाभिसंधिरहितभगवदाराधनरूपमहायज्ञाद्यनुष्ठानम्। स्वाध्यायः सविभूतेर्भगवतस्तदाराधनप्रकारस्य च प्रतिपादकः कृत्स्नो वेद इत्यनुसंधाय वेदाभ्यासनिष्ठा। + तपः कृच्छ्रचान्द्रायणद्वादश्युपवासादेर्भगवत्प्रीणनकर्मयोग्यतापादनस्य करणम्। आर्जवं मनोवाक्कायकर्मवृत्तीनामेकनिष्ठता॥ १॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ २॥

परेषु अहिंसा परपीडावर्जनम्। सत्यं यथादृष्टार्थगोचरं तद्धितवा-

---

+ तप इति। शास्त्रविहितभोगसंकोचस्तप इति लक्षणे सति तद्विशेषान्दर्शयति—कृच्छ्रेति। 'एकभुक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन न निर्द्वादशिको भवेत्' ॥ इत्यादिविहितद्वादशीसमाराधनार्थैकादश्युपवासोऽत्र द्वादश्युपवास उक्तः। यद्वा विष्णुव्रतेषु तिथिद्वयबले च द्वादश्युपवासः प्राप्तोऽस्त्वित्र।

त्वम् । अक्रोधः परपीडाफलचित्तविकाररहितत्वम् । त्यागः आत्महितप्रत्यनीकपरिग्रहविमोचनम् । शान्तिरिन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनम् । अपैशुनं परानर्थकरवाक्यानिवेदनाकरणम् । दया भूतेषु सर्वेषु दुःखासहिष्णुत्वम् । * अलोलुप्त्वमलोलुत्वमिति वा पाठः । विषयेषु निःस्पृहत्वमित्यर्थः । मार्दवमकाठिन्यम् । साधुजनसंश्लेषार्हतेत्यर्थः । ह्रीरकार्यकरणे लज्जा । अचापलं स्पृहणीयविषयसंनिधावचपलत्वम् ॥ २ ॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

तेजो दुर्जनैरनभिभवनीयत्वम् । क्षमा परनिमित्तपीडानुभवेऽपि परेषु तं प्रति चित्तविकाररहितता । धृतिर्महत्यामप्यापदि कृत्यकर्तव्यतावधारणम् । शौचं बाह्यान्तःकरणानां कृत्ययोग्यता शास्त्रीया । अद्रोहः परेष्वनुपरोधः । परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वमित्यर्थः । नातिमानिताऽस्थाने गर्वोऽतिमानित्वं तद्रहितता । एते गुणा दैवीं संपदमभिजातस्य भवन्ति । देवसंबन्धिनी संपद्दैवी । देवा भगवदाज्ञानुवृत्तिशीलास्तेषां संपत्सा च भगवदाज्ञानुवृत्तिरेव तामभिजातस्य तामभिमुखीकृत्य जातस्य तामभिवर्तयितुं जातस्य भवन्तीत्यर्थः ॥ ३ ॥

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

दम्भो धार्मिकत्वख्यापनाय धर्मानुष्ठानम् । दर्पः कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः । अतिमानश्च स्वविद्याभिजनाद्यननुगुणोऽभिमानः । क्रोधः परपीडाफलचित्तविकारः । पारुष्यं साधूनामुद्वेगकरः स्वभावः । अज्ञानं परावरतत्त्वकृत्याकृत्याविवेकः । एते स्वभावा आसुरीं संपदमभिजातस्य भवन्ति । असुरा भगवदाज्ञातिवृत्तिशीलाः ॥ ४ ॥

---

* अलोलुप्त्वमिति । लुपिधातोर्यङ्लुगन्तात्क्विपि कृते लोलुबिति पकारान्तं रूपम् अचि कृते तु लोलुपेत्यकारान्तम् । तदेतद्ध्वनयन्नाह—अलोलुप्त्वमलोलुत्वमिति । लूञ् छेदने इति धातोर्लोलू, इति यङ्लुगन्तं तत्र च्छान्दसं ह्रस्वत्वमभिप्रेत्याऽऽह—अलोलुत्वमिति वा पाठ इति ।

दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

दैवी मदाज्ञानुवृत्तिरूपा संपद्विमोक्षाय बन्धान्मुक्तये भवति। क्रमेण मत्प्राप्तये भवतीत्यर्थः। आसुरी मदाज्ञातिवृत्तिरूपा संपन्निबन्धाय भवति। अधोगतिमाप्तये भवतीत्यर्थः। एतच्छ्रुत्वा स्वमकृत्यनिर्धारणादतिभीतायार्जुनायैवमाह—शोकं मा कृथाः। त्वं दैवीं संपदमभिजातोऽसि। हे पाण्डव धार्मिकाग्रेसरस्य हि पाण्डोस्तनयस्त्वमित्यभिप्रायः ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

अस्मिन्कर्मयोगे कर्मकराणां भूतानां सर्गौ द्वौ द्विविधौ दैवश्चाऽऽसुरश्चेति। सर्ग उत्पत्तिः प्राचीनपुण्यपापरूपकर्मवशाद्भगवदाज्ञानुवृत्तितद्विपरीतकरणायोत्पत्तिकाल एव विभागेन भूतान्युत्पद्यन्त इत्यर्थः। तत्र दैवसर्गो विस्तरशः प्रोक्तः। देवानां मदाज्ञानुवृत्तिशीलानामुत्पत्तिर्यदाचारकरणार्था स आचारः कर्मयोगज्ञानयोगभक्तियोगरूपो विस्तरशः प्रोक्तः। असुराणां सर्गश्च यदाचारकरणार्थस्तमाचारं मे शृणु मत्सकाशाच्छृणु ॥ ६ ॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाऽऽचारो न सत्यं तेषु विद्यते ॥ ७ ॥

प्रवृत्तिं निवृत्तिं चाभ्युदयसाधनं मोक्षसाधनं च वैदिकं धर्ममासुरा न विदुर्न जानन्ति। न च शौचं वैदिककर्मयोग्यत्वं शास्त्रसिद्धं तत् बाह्यमाभ्यन्तरं चासुरेषु न विद्यते नापि चाऽऽचारस्तद्बाह्याभ्यन्तरशौचं येन संध्यावन्दनादिनाऽऽचारेण जायते सोऽपि आचारस्तेषु न विद्यते। यथोक्तम्—'संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु,' इति। तथा सत्यं च तेषु न विद्यते। सत्यं यथार्थज्ञानं भूतहितरूपभाषणं तेषु न विद्यते ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥ ८ ॥

किंचासत्यं जगदेतत्सत्यशब्दनिर्दिष्टब्रह्मकार्यतया ब्रह्मात्मकमिति नाऽऽहुः । अप्रतिष्ठं तथा ब्रह्मणि न प्रतिष्ठितमिति वदन्ति । ब्रह्मणाऽनन्तेन धृता पृथिवी सर्वाल्लोकान् बिभर्ति । यथोक्तम्—

'तेनेयं नागवर्येण शिरसा विधृता मही ।
बिभर्ति मालां लोकानां सदेवासुरमानुषाम् ॥' इति ।

अनीश्वरं सत्यसंकल्पेन परब्रह्मणा सर्वेश्वरेण मयैतन्नियमितमिति च न वदन्ति । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्युक्तम् । वदन्ति चैवम्—अपरस्परसंभूतं किमन्यद्योषित्पुरुषयोः परस्परसंबन्धेन जातमिदं मनुष्यपश्वादिकमुपलभ्यते । अनेवंभूतं किमन्यदुपलभ्यते किंचिदपि नोपलभ्यत इत्यर्थः । अतः सर्वमिदं जगत्कामहेतुकमिति ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

एतां दृष्टिमवष्टभ्यावलम्ब्य नष्टात्मानोऽदृष्टदेहातिरिक्तात्मानोऽल्पबुद्धयो घटादिवज्ज्ञेयभूते देहे ज्ञातृत्वेन देहव्यतिरिक्त आत्मा नोपलभ्यत इति विवेकाकुशला उग्रकर्माणः सर्वेषां हिंसका जगतः क्षयाय प्रभवन्ति ॥ ९ ॥

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

दुष्पूरं दुष्प्रापविषयं काममाश्रित्य तत्सिषाधयिषया मोहादज्ञानादसद्ग्राहानन्यायगृहीतानसत्परिग्रहान्गृहीत्वाऽशुचिव्रता अशास्त्रविहितव्रतयुक्ता दम्भमानमदान्विताः प्रवर्तन्ते ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

अद्य श्वो वा मुमूर्षवश्चिन्तामपरिमेयां चापरिच्छेद्यां प्रलयान्तां

१ ख. ग. 'महत्तु°'।

प्राकृतप्रलयावधिकालसाध्यविषयामुपाश्रिताः। तथा कामोपभोगपरमाः कामोपभोग एव परमपुरुषार्थ इति मन्वानाः। एतावदिति निश्चिताः इतोऽधिकः पुरुषार्थो न विद्यत इति संजातनिश्चयाः॥ ११॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान्॥ १२॥

आशापाशशतैराशाख्यपाशशतैर्बद्धाः कामक्रोधपरायणाः कामक्रोधैकनिष्ठाः कामभोगार्थमन्यायेनार्थसंचयान्प्रतीहन्ते॥ १२॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥ १३॥

इदं क्षेत्रपुत्रादिकं सर्वं मया मत्सामर्थ्येन लब्धं नादृष्टादिना। इमं च मनोरथमहमेव प्राप्स्ये नादृष्टादिसहितः। इदं धनं मत्सामर्थ्येन लब्धं मेऽस्ति। इदमपि पुनर्मे मत्सामर्थ्येनैव भविष्यति॥ १३॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी॥ १४॥

असौ मया बलवता हतः शत्रुः। अपरानपि शत्रूनहं शूरो धीरश्च हनिष्ये। किमत्र मन्दधीभिर्दुर्बलैः परिकल्पितेनादृष्टादिपरिकरेण। तथा चेश्वरोऽहं स्वाधीनोऽहमन्येषां चाहमेव नियन्ता। स्वत एवाहं भोगी नादृष्टादिभिः। सिद्धोऽहं स्वतः सिद्धोऽहं न कस्माच्चिददृष्टादेः। तथा स्वत एव बलवान् स्वत एव सुखी॥ १४॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥ १५॥

अहं स्वतश्चाऽऽढ्योऽस्मि। अभिजनवानस्मि स्वत एवोत्तमकुले प्रसूतोऽस्मि। अस्मिँल्लोके मया सदृशः कोऽन्यः स्वसामर्थ्यलब्धसर्वविभवो विद्यते। अहं स्वयमेव यक्ष्ये दास्यामि मोदिष्य इति अज्ञानविमोहिता ईश्वरानुग्रहनिरपेक्षेण स्वेनैव यागदानादिकं कर्तुं शक्यमित्यज्ञानविमोहिता मन्यन्ते॥ १५॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

अदृष्टेश्वरादिसहकारमृते स्वेनैव सर्वं कर्तुं शक्यमिति कृत्वैवं कुर्यामेतच्च कुर्यामन्यच्च कुर्यामित्यनेकचित्तविभ्रान्ता अनेकचित्ततया विभ्रान्ता एवंरूपेण मोहजालेन समावृताः कामभोगेषु प्रकर्षेण सक्ता मध्ये मृता अशुचौ नरके पतन्ति ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

आत्मनैव संभाविता आत्मनैवाऽऽत्मानं संभावयन्तीत्यर्थः । स्तब्धाः परिपूर्णं मन्यमाना न किंचित्कुर्वाणाः । कथम्—धनमानमदान्विता धनेन विद्याभिजनाभिमानेन च जनितमदान्विता नामयज्ञैर्नामप्रयोजनैर्यष्टेति नाममात्रप्रयोजनैर्यज्ञैर्यजन्ते । तदपि दम्भेन हेतुना यष्टृत्वख्यापनायाविधिपूर्वकमयथोदितं यजन्ते ॥ १७ ॥

ते चेदृग्भूता यजन्त इत्याह—

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

अनन्यापेक्षोऽहमेव सर्वं करोमीत्येवंरूपमहंकारमाश्रिताः । तथा सर्वस्य करणे मद्बलमेव पर्याप्तमिति च बलम् । अतो मत्सदृशो न कश्चिदस्तीति च दर्पम् । एवंभूतस्य मम काममात्रेण सर्वं संपत्स्यत इति कामम् । येऽनिष्टकारिणस्तान्सर्वान्हनिष्यामीति च क्रोधम् । एवमेतान्संश्रिताः स्वदेहेषु परदेहेषु चावस्थितं सर्वस्य कारयितारं पुरुषोत्तमं मामभ्यसूयकाः प्रद्विषन्तः कुयुक्तिभिर्मत्स्थितौ दोषमाविष्कुर्वन्तो मामसहमाना अहंकारादिकान्संश्रिता यागादिकं सर्वं क्रियाजातं कुर्वत इत्यर्थः ॥ १८ ॥

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

एवं मां ये द्विषन्ति तान्क्रूरान्नराधमानशुभानहमजस्रं संसारेषु जन्म-

१ ग. घ. °मन्या न । २ ङ. ग. °न्तः कुयु° ।

जरामरणादिरूपेण परिवर्तमानेषु संतानेषु तत्राप्यासुरीष्वेव योनिषु क्षिपामि मदानुकूल्यप्रत्यनीकेष्वेव जन्मसु क्षिपामि। तत्तज्जन्मप्राप्त्यनुगुणवृत्तिगुणप्रवृत्तिहेतुभूतबुद्धिषु क्रूरास्त्वहमेव संयोजयामीत्यर्थः ॥१९॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

मदानुकूल्यप्रत्यनीकजन्मापन्नाः पुनरपि जन्मनि जन्मनि मूढा मद्विपरीतज्ञाना मामप्राप्यैवास्ति भगवान्वासुदेवः सर्वेश्वर इति ज्ञानमप्राप्य ततस्ततो जन्मनोऽधमामेव गतिं यान्ति ॥ २० ॥

अस्याऽऽसुरस्वभावस्याऽऽत्मनाशस्य मूलहेतुमाह—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

अस्याऽऽसुरस्वभावरूपस्य नरकस्यैतत्त्रिविधं द्वारम्। तच्चाऽऽत्मनो नाशनम्। कामः क्रोधो लोभ इति त्रयाणां स्वरूपं पूर्वमेव व्याख्यातम्। द्वारं मार्गो हेतुरित्यर्थः। तस्मादेतत्त्रयं त्यज तस्मादतिघोरनरकहेतुत्वात्कामक्रोधलोभानामेतत्त्रितयं दूरतः परित्यजेत् ॥ २१ ॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैः कामक्रोधलोभैस्तमोद्वारैर्मद्विपरीतज्ञानहेतुभिर्विमुक्तो नर आत्मनः श्रेय आचरति। लब्धमद्विषयज्ञानो मदानुकूल्ये प्रयतते। ततो मामेव परां गतिं याति ॥ २२ ॥

शास्त्रानादरोऽस्य नरकस्य प्रधानहेतुरित्याह—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

शास्त्रं वेदाख्यं विधिरनुशासनं वेदाख्यं मदनुशासनमुत्सृज्य यः कामकारतो वर्तते स्वच्छन्दानुगुणमार्गेषु वर्तते न स सिद्धिमवाप्नोति न

कामप्यामुष्मिकीं सिद्धिमवाप्नोति । ऐहिकमपि न सुखं किंचिदवाप्नोति । न परां गतिं कुतः परां गतिं प्राप्नोतीत्यर्थः ॥ २३ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

---

तस्मात्कार्याकार्यव्यवस्थिता उपादेयानुपादेयव्यवस्थायां शास्त्रमेक एव प्रमाणम् । धर्मशास्त्रेतिहासपुराणोपबृंहिता वेदा यदेव पुरुषोत्तमाख्यं परं तत्त्वं तत्प्रीणनरूपतत्प्राप्त्युपायभूतं च कर्मावबोधयन्ति तच्छास्त्रविधानोक्तं तत्त्वं कर्म च ज्ञात्वा यथावदन्यूनातिरिक्तं विज्ञाय कर्तुं त्वमर्हसि तदेवोपादातुमर्हसि ॥ २४ ॥

दैवासुरविभागोक्तिपूर्विका शास्त्रवश्यता ।
तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये षोडशोऽध्यायः ॥ १६ ॥

---

## अथ सप्तदशोऽध्यायः ।

---

दैवासुरसंपद्विभागोक्तिमुखेन प्राप्यतत्त्वज्ञानं तत्प्राप्त्युपायज्ञानं च वेदैकमूलमित्युक्तम् । इदानीमशास्त्रविहितस्याऽऽसुरत्वेनाफलत्वं शास्त्रविहितस्य च गुणतस्त्रैविध्यं शास्त्रसिद्धस्य लक्षणं चोच्यते । तत्राशास्त्रविहितस्य निष्फलत्वमजानन्नशास्त्रविहिते श्रद्धासंयुक्ते यागादौ सत्त्वादिनिमित्तफलभेदबुभुत्सयाऽर्जुनः पृच्छति—

अर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

शास्त्रविधिमुत्सृज्य श्रद्धयाऽन्विता ये यजन्ते तेषां निष्ठा का किं सत्त्वमाहोस्विद्रजोऽथ तमः । निष्ठा स्थितिः स्थीयतेऽस्मिन्निति स्थितिः सत्त्वादिरेव निष्ठेत्युच्यते । तेषां किं सत्त्वे स्थितिः किंवा रजसि किंवा तमसीत्यर्थः ॥ १ ॥

एवं पृष्टोऽशास्त्रविहितश्रद्धायास्तत्पूर्वकस्य च यागादेर्निष्फलत्वं हृदि निधाय शास्त्रीयस्यैव यागादेर्गुणतस्त्रैविध्यं प्रतिपादयितुं शास्त्रीयश्रद्धात्रैविध्यं तावत्—

श्रीभगवानुवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

सर्वेषां देहिनां श्रद्धा त्रिविधा भवति । सा च स्वभावजा । स्वभावः स्वासाधारणो भावः प्राचीनवासनानिमित्तस्तत्तद्रुचिविशेषः । यत्र रुचिस्तत्र श्रद्धा जायते । श्रद्धा हि स्वाभिमतं साधयत्येतदिति विश्वासपूर्विका साधने त्वरा। वासना रुचिश्च श्रद्धा चाऽऽत्मधर्मानुगुणसंसर्गजा। तेषामात्मधर्माणां वासनादीनां जनका देहेन्द्रियान्तःकरणविषयगता धर्माः कार्यैकनिरूपणीयाः सत्त्वादयो गुणाः सत्त्वादिगुणयुक्तदेहाद्यनुभव इत्यर्थः । ततश्चेयं श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा । तामिमां श्रद्धां शृणु । सा श्रद्धा यत्स्वभावा तं स्वभावं शृण्वित्यर्थः ॥ २॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

सत्त्वमन्तःकरणं सर्वस्य पुरुषस्यान्तःकरणानुरूपा श्रद्धा भवति । अन्तःकरणं यादृशगुणयुक्तं तद्विषया श्रद्धा जायत इत्यर्थः । सत्त्वशब्दः

पूर्वोक्तानां देहेन्द्रियादीनां प्रदर्शनार्थः । श्रद्धामयोऽयं पुरुषः श्रद्धामयः श्रद्धापरिणामः । यो यच्छ्रद्धो यः पुरुषो यादृश्या श्रद्धया युक्तः स एव सः, स तादृशश्रद्धापरिणामपुण्यकर्मविशिष्टश्रद्धायुक्तश्चेत्ततः पुण्यकर्मफलसंयुक्तो भवतीति श्रद्धाप्रधानः फलसंयोग इत्युक्तं भवतीति ॥३॥

तदेव विवृणोति—

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

सत्त्वगुणप्रचुराः सात्त्विकश्रद्धायुक्ता देवान्यजन्ते । दुःखासंभिन्नोत्कृष्टसुखहेतुभूतदेवयागविषया श्रद्धा सात्त्विकीत्युक्तं भवति । राजसा जना यक्षरक्षांसि यजन्ते । अन्ये तामसा जनाः प्रेतान्भूतगणान्यजन्ते । दुःखसंभिन्नाल्पसुखजननी राजसी श्रद्धा । दुःखप्रायात्यल्पसुखजननी तामसीत्यर्थः ॥ ४ ॥

एवं शास्त्रीयेष्वेव यागादिषु श्रद्धायुक्तेषु गुणतः फलविशेषः । अशास्त्रीयेषु तपोयागप्रभृतिषु मदनुशासनविपरीतत्वेन न कश्चिदपि सुखलवः । अपि त्वनर्थ एवेति हृदि निहितं व्यञ्जयन्नाह—

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

अशास्त्रविहितमतिघोरमपि तपो ये जनास्तप्यन्ते । प्रदर्शनार्थमिदम् । अशास्त्रविहितं बह्वायासं यागादिकं ये कुर्वते ते दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

शरीरस्थं पृथिव्यादिभूतसमूहं कर्षयन्तो मां मदंशभूतं जीवं चान्तःशरीरस्थं कर्षयन्तो ये तप्यन्ते यागादिकं कुर्वते तानासुरनिश्चयान् विद्धि । असुराणां निश्चय आसुरनिश्चयः । असुरा हि मदाज्ञाविपरीतकारिणः । मदाज्ञाविपरीतकारित्वात्तेषां सुखलवसंबन्धो न विद्यते । अपि त्वनर्थव्राते पतन्तीति पूर्वमेवोक्तम्—'पतन्ति नरकेऽशुचौ' इति ॥ ६ ॥

१ ख. ग. 'या त्वल' ।

अथ प्रकृतमेव शास्त्रीयेषु यागादिषु गुणतो विशेषं प्रपञ्चयति । तत्राऽऽप्याहारमूलत्वात्सत्त्वादिवृद्धेराहारत्रैविध्यं प्रथममुच्यते । 'अन्नमयं हि सौम्य मनः' [ छा० ६ । ५ । ४ ] । 'आहारशुद्धौ सत्त्वसि(शु)द्धिः' [ छा० ७ । २६ । २ ] । इति श्रूयते—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आहारोऽपि सर्वस्य प्राणिजातस्य सत्त्वादिगुणान्वयेन त्रिविधः प्रियो भवति । तथैव यज्ञोऽपि त्रिविधस्तथा तपो दानं च । तेषां भेदमिमं शृणु तेषामाहारयज्ञतपोदानानां सत्त्वादिभेदेनेमसुच्यमानं भेदं शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥८॥

सत्त्वगुणोपेतस्य सत्त्वमया आहाराः प्रिया भवन्ति । सत्त्वमयाश्चाऽऽहारा आयुर्विवर्धनाः । पुनरपि सत्त्वस्य विवर्धनाः । सत्त्वमन्तःकरणम् । अन्तःकरणकार्यं ज्ञानमिह सत्त्वशब्देनोच्यते । 'सत्त्वात्संजायते ज्ञानम्' [ भ० गी० १४ । १७ ] । इति सत्त्वस्य ज्ञानविवृद्धिहेतुवचनात् । आहारोऽपि सत्त्वमयो ज्ञानविवृद्धिहेतुः । तथा बलारोग्ययोरपि विवर्धनाः । सुखप्रीत्योरपि विवर्धनाः । परिणामकाले स्वयमेव सुखस्य विवर्धनाः । तथा प्रीतिहेतुभूतकर्मारम्भद्वारेण प्रीतिविवर्धनाः । रस्या मधुररसोपेताः । स्निग्धाः स्नेहयुक्ताः । स्थिराः स्थिरपरिणामाः । हृद्या रमणीयवेषाः । एवंविधाः सत्त्वमया आहाराः सात्त्विकस्य पुरुषस्य प्रियाः ॥ ८ ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

कटुरसा अम्लरसा लवणोत्कटा अत्युष्णा अतितीक्ष्णा रूक्षा विदाहिनश्चेति कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । अतिशैत्यातितैक्ष्ण्या-

दिना दुरुपयोगास्तीक्ष्णाः शोषकराः । रूक्षास्तापकराः । विदाहिनो दाहकराः । एवंविधा आहारा राजसस्येष्टाः । ते च रजोमयत्वाद्दुःखशोकामयवर्धना रजोवर्धनाश्च ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

यातयामं चिरकालावस्थितम् । गतरसं त्यक्तस्वाभाविकरसम् । पूति दुर्गन्धोपेतम् । पर्युषितं कालान्तरापत्त्या रसान्तरापन्नम् । उच्छिष्टं गुर्वादिभ्योऽन्येषां भुक्तशिष्टम् । अमेध्यमयज्ञार्हम् । अयज्ञशिष्टमित्यर्थः । एवंविधं तमोमयं भोजनं तामसस्य प्रियं भवति । भुज्यत इत्याहार एव भोजनं पुनश्च तमसो वर्धनम् । अतो हितैषिभिः सत्त्ववृद्धये सात्त्विकाहारा एव सेव्याः ॥ १० ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

फलाकाङ्क्षारहितैः पुरुषैर्विधिदृष्टः शास्त्रदृष्टो मन्त्रद्रव्यक्रियादिभिर्युक्तो यष्टव्यमेवेति भगवदाराधनत्वेन स्वप्रयोजनतया यष्टव्यमिति मनः समाधाय य इज्यते स सात्त्विकः ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यः ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

फलाभिसंधियुक्तैर्दम्भगर्भो यशःफलश्च यो यज्ञ इज्यते तं यज्ञं राजसं विद्धि ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

विधिहीनं ब्राह्मणोक्तविधिहीनं सदाचारयुक्तैर्विधिविद्भिर्ब्राह्मणैर्यजस्वेत्युक्तिहीनमित्यर्थः । असृष्टान्नमचोदितद्रव्यम् । मन्त्रहीनमदक्षिणं श्रद्धाविरहितं च यज्ञं तामसं परिचक्षते ॥ १३ ॥

अथ तपसो गुणतस्त्रैविध्यं वक्तुं तस्य शरीरवाङ्मनोभिर्निष्पाद्यतया तत्स्वरूपभेदं तावदाह—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

देवद्विजगुरुप्राज्ञानां पूजनम् । शौचं तीर्थस्नानादिकम् । आर्जवं यथावाङ्मनःशरीरवृत्तम् । ब्रह्मचर्यं योषित्सु भोग्यताबुद्धियुक्तेक्षणादिरहितत्वम् । अहिंसाऽप्राणिपीडा । एतच्छारीरं तप उच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

परेषामनुद्वेगकरं सत्यं प्रियहितं च यद्वाक्यं स्वाध्यायाभ्यसनं चेत्येतद्वाङ्मयं तप उच्यते ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

मनःप्रसादो मनसः क्रोधादिरहितत्वम् । सौम्यत्वं मनसः परेषामभ्युदयप्रावण्यम् । मौनं मनसा वाक्प्रवृत्तिनियमनम् । आत्मविनिग्रहो मनोवृत्तेर्ध्येयविषयेऽवस्थापनम् । भावसंशुद्धिरात्मव्यतिरिक्तविषयचिन्तारहितत्वम् । एतन्मानसं तपः ॥ १६ ॥

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः परमपुरुषाराधनरूपमिदमिति चिन्तायुक्तैर्नरैः परया श्रद्धया यत्त्रिविधं तपः कायवाङ्मनोभिस्तप्तं तत्सात्त्विकं परिचक्षते ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

मनसाऽऽदरः सत्कारः । वाचा प्रशंसा मानः । शारीरो नमस्कारादिः

पूजा। फलाभिसंधिपूर्वकं सत्काराद्यर्थं च दम्भेन हेतुना यत्तपः क्रियते तदिह राजसं प्रोक्तम्। स्वर्गादिफलसाधनत्वेनास्थिरत्वाच्चलमध्रुवम्। चलत्वं पातभयेन चलनहेतुत्वम्। अध्रुवत्वं क्षयिष्णुत्वम् ॥ १८ ॥

मूढग्राहेणाऽऽत्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥

मूढा अविवेकिनो मूढग्राहेण मूढैः कृतेनाभिनिवेशेनाऽऽत्मनः शक्त्यादिकमपरीक्ष्याऽऽत्मपीडया यत्तपः क्रियते परस्योत्सादनार्थं च क्रियते तत्तामसमुदाहृतम् ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

फलाभिसंधिरहितं दातव्यमिति देशे काले पात्रे चानुपकारिणे यद्दानं दीयते तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥ २१ ॥

प्रत्युपकारकटाक्षगर्भं फलमुद्दिश्य च परिक्लिष्टमकल्याणद्रव्यकं यद्दानं दीयते तद्राजसमुदाहृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

अदेशकालेऽपात्रेभ्यश्च यद्दानं दीयते। असत्कृतं पादप्रक्षालनादिगौरवादिरहितम्। अवज्ञातं सावज्ञम्। अनुपचारयुक्तं यद्दीयते तत्तामसमुदाहृतम् ॥ २२ ॥

एवं वैदिकानां यज्ञतपोदानानां सत्त्वादिगुणभेदेन भेद उक्तः। इदानीं तस्यैव वैदिकस्य यागादेः प्रणवसंयोगेन तत्सच्छब्दव्यपदेश्यतया लक्षणमुच्यते—

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

ॐ तत्सदिति त्रिविधोऽयं निर्देशः शब्दो ब्रह्मणः स्मृतो ब्रह्मणोऽन्वयी भवति । ब्रह्म च वेदः । वेदशब्देन वैदिकं कर्म चोच्यते । वैदिकं यज्ञादिकं कर्मौंतत्सदितिशब्दान्वितं भवति । ओमितिशब्दस्यान्वयो वैदिककर्माङ्गत्वेन प्रयोगादौ प्रयुज्यमानतया तत्सदिति शब्दयोरन्वयः पूज्यत्वाय वाचकतया तेन त्रिविधेन शब्देनान्विता ब्राह्मणा वेदान्वयिनस्त्रैवर्णिका वेदाश्च यज्ञाश्च पुरा विहिताः । पुरा मयैव निर्मिता इत्यर्थः ॥ २३ ॥

त्रयाणामोंतत्सदितिशब्दानामन्वयप्रकारो वर्ण्यते । प्रथममोमितिशब्दस्यान्वयप्रकारमाह—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

तस्माद्ब्रह्मवादिनां वेदवादिनां त्रैवर्णिकानां यज्ञदानतपःक्रिया विधानोक्ता वेदविधानोक्ता आदावोमित्युदाहृत्य सततं सर्वदा प्रवर्तन्ते । वेदाश्चोमित्युदाहृत्याऽऽरभ्यन्ते । एवं वेदानां वैदिकानां च यज्ञादीनां च कर्मणामोमितिशब्दान्वयो वर्णितः । ओमितिशब्दान्वितवेदधारणात्तदन्वितयज्ञादिकर्मकरणाच्च ब्राह्मणशब्दनिर्दिष्टानां त्रैवर्णिकानामप्योमितिशब्दान्वयो वर्णितः ॥ २४ ॥

अथैतेषां तदितिशब्दान्वयप्रकारमाह—

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

फलमनभिसंधाय वेदाध्ययनयज्ञतपोदानक्रिया मोक्षकाङ्क्षिभिस्त्रैवर्णिकैर्याः क्रियन्ते ता ब्रह्मप्राप्त्युपायतया ब्रह्मवाचिना तदितिशब्देन निर्देश्याः । 'स वः कः किं यत्तत्पदमनुत्तमम्' इति तच्छब्दो हि ब्रह्मवाची प्रसिद्धः ॥ २५ ॥

एवं वेदाध्ययनयज्ञादीनां मोक्षसाधनभूतानां तच्छब्दनिर्देश्यतया तदितिशब्दान्वय उक्तः । त्रैवर्णिकानामपि तथाविधवेदाध्ययनाद्यनुष्ठा-

नादेव तच्छब्दान्वय उपपन्नः । अथैषां सच्छब्दान्वयप्रकारं वक्तुं लोके सच्छब्दस्य व्युत्पत्तिप्रकारमाह-

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥

सद्भावे विद्यमानतायां साधुभावे कल्याणभावे च सर्ववस्तुषु सदित्येतत्पदं प्रयुज्यते लोकवेदयोः । तथा येन केनचित्पुरुषेणानुष्ठिते लौकिके प्रशस्ते कल्याणे कर्मणि सत्कर्मेदमिति सच्छब्दो युज्यते प्रयुज्यत इत्यर्थः ॥ २६ ॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

अतो वैदिकानां त्रैवर्णिकानां यज्ञे तपसि दाने च स्थितिः कल्याणतया सदित्युच्यते । कर्म च तदर्थीयं त्रैवर्णिकार्थीयं त्रिवर्णेभ्यो हितं यज्ञदानादिकं सदित्येवाभिधीयते । तस्माद्वेदा वैदिकानि कर्माणि ब्राह्मणशब्दनिर्दिष्टास्त्रैवर्णिकाश्चोंतत्सदितिशब्दान्वयरूपलक्षणेनावेदेभ्यश्चावैदिकेभ्यश्च व्यावृत्ता वेदितव्याः ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम
सप्तदशोऽध्यायः ॥ १७ ॥

---

अश्रद्धया कृतं शास्त्रीयमपि होमादिकमसदित्युच्यते । कुतः—न च तत्प्रेत्य नो इह न मोक्षाय न सांसारिकाय च फलायेति ॥ २८ ॥

इति श्रीमद्रामानुजाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये
सप्तदशोऽध्यायः ॥ १७ ॥

---

## अथाष्टादशोऽध्यायः ।

अतीतेनाध्यायद्वयेनाभ्युदयनिःश्रेयससाधनभूतं वैदिकमेव यज्ञतपोदानादिकं कर्म नान्यत् । वैदिकस्य च कर्मणः सामान्यलक्षणं प्रणवान्वयः । तत्र मोक्षाभ्युदयसाधनयोर्भेदस्तत्सच्छब्दनिर्देश्यानिर्देश्यत्वेन, मोक्षसाधनं च कर्म फलाभिसंधिरहितं यज्ञादिकं तदारम्भश्च सत्त्वोद्रेकाद्भवति सत्त्ववृद्धिश्च सात्त्विकाहारसेवयेत्युक्तम् । अनन्तरं मोक्षसाधनतया निर्दिष्टयोस्त्यागसंन्यासयोरैक्यं त्यागस्य संन्यासस्य च स्वरूपं भगवति सर्वेश्वरे च सर्वकर्मणां कर्तृत्वानुसंधानं सत्त्वरजस्तमसां कार्यवर्णनेन सत्त्वगुणस्यावश्योपादेयत्वं स्ववर्णोचितानां कर्मणां परमपुरुषाराधनभूतानां परमपुरुषप्राप्तिनिर्वर्तनप्रकारः कृत्स्नस्य गीताशास्त्रस्य सारार्थो भक्तियोग इत्येते प्रतिपाद्यन्ते । तत्र तावत्त्यागसंन्यासयोः पृथक्त्वैकत्वनिर्णयाय स्वरूपनिर्णयाय चार्जुनः पृच्छति—

अर्जुन उवाच—

* संन्यासस्य + महाबाहो × तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च ❦ हृषीकेश पृथक् केशिनिषूदन ॥ १ ॥

त्यागसंन्यासौ द्वौ मोक्षसाधनाय विहितौ ' न कर्मणा न प्रजया

---

* संन्यासस्येति । अविदुषामनुपजातविविदिषाणां च कर्माधिकृतानामेव किंचित्कर्मपरिग्रहेण किंचित्कर्मपरित्यागो यः स त्यागांशगुणयोगात्संन्यासशब्देनोच्यते । + महाबाहो इति । केशिनाम्नो महतोऽश्वाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षयितुमागच्छतोऽत्यन्तं व्यात्ते मुखे सव्यहस्तं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव हस्तेन कर्कटिकाफलवत्तं विदार्य निषूदितवानिति महाबाहो इति संबोधनम् । महाबाहो केशिनिषूदनेति द्वाभ्यां संबोधनाभ्यां बाह्योपद्रवनिवारणस्वरूपयोग्यताफलोपधाने प्रदर्शिते । × तत्त्वमिति । संन्यासत्यागशब्दौ किं घटपटादिवद्भिन्नार्थकावुत ब्राह्मणवसिष्ठन्यायेन समानजातीयार्थकौ । तत्र यदा प्रथमः पक्षस्तदा संन्यासस्य तत्त्वं त्यागात्पृथक्त्यागस्य च तत्त्वं तस्मात् पृथग्वेदितुं परस्परस्मात्पार्थक्येन परस्परस्वरूपं वेदितुमिच्छामीत्यर्थः । यदि च द्वितीयस्तर्हि अवान्तरोपाधिभेदमात्रं तत्स्वरूपभूतं वक्तव्यमिति भावः । एकव्याख्यानेनोभयं व्याख्यातं भविष्यतीति तात्पर्यम् । ❦ हृषीकेशेति । सर्वेन्द्रियनियामकेत्यर्थः । अनेन संबोधनेनान्तरुपद्रवनिवारणसामर्थ्यं सूचितम् । अत्यन्तमनुरागात्संबोधनत्रयम् । केशिनिषूदनेति तृतीयम् ।

धनेन त्यागेनैके अमृतत्वमानशुः ' [ तै० उ० ४ । १२ ]। 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ' [ मु० ३ । २ । ६ ]। इत्यादिषु । अस्य संन्यासस्य त्यागस्य च तत्त्वं याथात्म्यं पृथग्वेदितुमिच्छामि । अयमभिप्रायः-किमेतौ संन्यासत्यागशब्दौ पृथगर्थावुतैकार्थावेव । यदा पृथगर्थौ तदाऽनयोः पृथक्त्वेन स्वरूपं वेदितुमिच्छामि । एकत्वेऽपि तस्य रूपं वक्तव्यमिति ॥ १ ॥

अथानयोरेकमेव स्वरूपं तच्चेदृशमिति निर्णेतुं वादिविप्रतिपत्तिं दर्शयन्—

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

केचन विद्वांसः काम्यानां कर्मणां न्यासं स्वरूपत्यागं संन्यासं विदुः । केचिच्च विचक्षणा नित्यानां नैमित्तिकानां काम्यानां च सर्वेषां कर्मणां फलत्याग एव मोक्षशास्त्रेषु त्यागशब्दार्थ इति प्राहुः । तत्र शास्त्रीयस्त्यागः काम्यकर्मस्वरूपविषयः सर्वकर्मफलविषय इति विवादं प्रदर्शयन्नेकत्र संन्यासशब्दमितरत्र त्यागशब्दं प्रयुक्तवान् । अतस्त्यागसंन्यासशब्दयोरेकार्थत्वमङ्गीकृतमिति ज्ञायते । तथा 'निश्चयं शृणु मे तत्र त्यागे भरत सत्तम ' [ भ० गी० १८ । ४ ] । इति त्यागशब्देनैव निर्णयवचनात्, ' नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ' [ भ० गी० १८ । ७ ]। ' अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ' [ भ० गी० १८ । १२ ] । इति च परस्परपर्यायतादर्शनाच्च तयोरेकार्थत्वं प्रतीयत इति निश्चीयते ॥ २ ॥

त्याज्यं * दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥

एके मनीषिणः कापिला वैदिकाश्च तन्मतानुसारिणो रागादिदोषवद्बन्धकत्वात्सर्वं यज्ञादिकं कर्म मुमुक्षूणां त्याज्यमित्याहुः। अपरे पण्डिता यज्ञादिकं कर्म न त्याज्यमिति प्राहुः ॥ ३ ॥

---

*—दोषवदिति। सर्वं कर्म हिंसादिदोषयुक्तत्वादुष्टं केवलं बन्धहेतुरिति कृत्वा त्याज्यमिति सांख्याः प्राहुः। कर्मणो बन्धहेतुत्वं च 'कर्मणा बध्यते जन्तुः' इति स्मृत्या बोध्यते। अयं भावः—'न हिंस्यात्सर्वा भूतानि' इति सर्वप्राणिकर्मकहिंसननिषेधान्यथानुपपत्त्या तद्धिंसाया अनर्थावहत्वात्पुरुषस्यानर्थसाधनं हिंसेत्यवगम्यते। द्रव्यसाध्येषु च कर्मसु हिंसादेः प्रायः संभवः। न च यत्र कर्मणि पशोर्विशसनं तस्य कर्मणो हिंसायुक्तत्वाद्दुष्टत्वमास्तां न सर्वस्यापि कर्मण इति वाच्यम्। द्रव्यसाध्यस्य सर्वस्यापि कर्मणो हिंसासंभवोऽस्त्येव। अत एव तदपनुत्तये वैश्वदेवप्रकर्तव्यतां ब्रूते। तदुक्तं स्मृतिषु—'वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये। कण्डनी पेषणी चुल्ली जलकुम्भोऽथ मार्जनी। पञ्च सूना गृहस्थस्य' इत्यादि। एवं च सर्वमपि कर्म हिंसायुक्तत्वाद्दुष्टतया त्याज्यमिति सांख्या मन्यन्ते। ननु न हिंस्यादिति सामान्यशास्त्रम्। 'अग्नीषोमीयं पशुमालभेत' इत्यादिकं तु विशेषशास्त्रम्। एवं च तयोः परस्परं सामान्यविशेषभावः। सामान्यविशेषभावो नाम—यत्किंचिद्विधायकशास्त्रीयोद्देश्यतावच्छेदकधर्मव्यापकधर्मावच्छिन्नोद्देश्यताकत्वम्। तथा यत्किंचिद्विधायकशास्त्रीयोद्देश्यतावच्छेदकधर्मव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वम्। यथा—'पदे जुहोति' इति पदविधायकशास्त्रीयोद्देश्यतावच्छेदकज्योतिष्टोमत्वव्यापकहोमत्वावच्छिन्नोद्देश्यताकत्वात् 'यदाहवनीये जुहोति' इत्यस्य सामान्यशास्त्रत्वम्। आहवनीयविधायकशास्त्रीयोद्देश्यतावच्छेदकहोमत्वव्याप्यज्योतिष्टोमत्वावच्छिन्नोद्देश्यताकत्वात् 'पदे जुहोति' इत्यस्य विशेषशास्त्रत्वम्। तथाच—विशेषविधिशास्त्राविरोधाय सामान्यशास्त्रसंकोचस्याऽऽवश्यकत्वात्। वेदविहितहिंसेतरहिंसाया अनर्थावहत्वात्, विहितेऽग्नीषोमीयादौ च निषेधशास्त्रानवताराच्छास्त्रीयहिंसाया अनर्थहेतुत्वस्य सुरगुरुणाऽपि वक्तुमशक्यत्वात्, कथं सर्वं कर्म हिंसादिदोषवदुच्यते। विहिते निषेधाप्रवृत्तेरेव च रविवारे संकष्टचतुर्थ्यां सत्यां रात्रौ, अर्कपर्वद्वये रात्राविति भोजननिषेधस्य चतुर्थीव्रताङ्गपारणायाश्च प्राप्तौ पारणाया वैधत्वाद्विधौ च निषेधाप्रवेशाद्रात्रौ भोजनमेव कार्यं निषेधस्तु रागप्राप्तभोजनपर इत्युक्तम्। इति चेन्न—संकोचहेतोर्विरोधस्यैवाभावात्। विरोधे हि सति बलीयसा दुर्बलं बाध्यते। न चेहास्ति विरोधः कश्चित्। भिन्नविषयत्वात्। तथा-

हि—न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न क्रत्वर्थत्वमपि । अग्नीषोमीयं पशुमित्यनेन हि वाक्येन पशुहिंसायाः क्रत्वर्थत्वमुच्यते नानर्थसाधनभावः । तथा सति वाक्यभेदप्रसङ्गात् । नचानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधोऽस्ति । सामान्यविशेषशास्त्रयोः क्रत्वनर्थसाधनपरत्वादेकस्यैव क्रत्वनर्थसाधनत्वाविरोधात् । न चानर्थसाधनं न विधीयेतेति वाच्यम् । हरीतकीभक्षणादिष्विव क्रत्वनुप्रविष्टप्रायश्चिताहिंसासाध्यदुःखस्याल्पतया क्रतुसाध्यसुखस्य च भूयस्तया तदुपपत्तेः । उक्तं च सांख्यैः—' सा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यति ' इत्यादि । हिंसा हि पुरुषस्य दोषं जनयेत्क्रतुं चोपकुर्यादिति । अतो भिन्नविषयत्वात्सामान्यविशेषन्यायागोचरत्वाद्बाध्यबाधकता नास्ति । तस्माद्द्रव्यसाध्यं कर्म हिंसादिदोषयुक्तत्वात्त्याज्यमेव । तदिदमुक्तमीश्वरकृष्णैः सांख्यकारिकासु—' दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ' इति । व्याख्यातं चैतद्वाचस्पतिमिश्रैः—गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः । एतदुक्तं भवति—श्रूयत एव केवलं न केनापि क्रियते । एतेनानुश्रव इति समाख्यया वेदापौरुषेयत्वं दर्शितम् । तत्र भव आनुश्रविकः । तत्र वेदे प्राप्तो ज्ञात इति यावत् । आनुश्रविकोऽपि कर्मकलापो दृष्टेन तुल्यं वर्तत इति—ऐकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात् । अस्यां प्रतिज्ञायां हेतुमाह—' स ह्यविशुद्धिक्षयातिशययुक्तः ' इति । अविशुद्धिः—सोमादियागस्य पशुबीजादिवधसाधनता । यथाऽऽह स्म पञ्चशिखाचार्यः—' स्वल्पः संकरः सुपरिहरः सप्रत्यवमर्षः ' इति । स्वल्पः संकरो ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण, सुपरिहरः—कियताऽपि प्रायश्चित्तेन परिहर्तुं शक्यः । अथ प्रमादतः प्रायश्चित्तमपि नाऽऽचरितं प्रधानकर्मविपाकसमये विपच्यते तथाऽपि यावदसावनर्थं सूते तावत्सप्रत्यवमर्षः । प्रत्यवमर्षेण सहिष्णुतया सह वर्तेत इति । सहन्ते चानेकजन्मोपार्जितपुण्यकोटिराशिपरम्पराचलप्रसृमरां स्वःपीयूषसुरदीर्घिकामवगाहमानाः कृतिनोऽहःकाणिकोपनीतां दुःखाश्रयाशमात्राम् । क्षयातिशयौ च फलगतावप्युपचारादुपाये निर्दिष्टौ । ज्योतिष्टोमादिजन्यस्वर्गस्य क्षयित्वं कार्यत्वादनुमीयते । ज्योतिष्टोमादेः स्वर्गैकहेतुत्वं वाजपेयादेस्तु स्वाराज्यसाधनत्वमित्यतिशयविशिष्टत्वं बोध्यम् । परसंपदतिशयो हि हीनसपदः सर्वान्दुःखी करोति । ' अपाम सोमममृता अभूम ' इति चामृतत्वश्रवणं चिरस्थायित्वमुपलक्षयति । यदाहुः—' आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते ' । इति । तस्माद्धिंसादिदोषयुक्तत्वात्सर्वं कर्म त्याज्यमिति सांख्यानां मतम् ।

अपरे मीमांसकास्तु यज्ञदानतपआदि कर्म न त्याज्यमिति वदन्ति । तेषामयमभिप्रायः—हिंसायाः क्रत्वर्थत्वेऽपि न सा पुरुषेणानुष्ठेया । अन्योद्देशेन प्रवर्तिताऽपि हिंसा पुरुषस्य

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥

तत्रैवं वादिविप्रतिपन्ने त्यागे त्यागविषयं निश्चयं मे मत्तः शृणु । त्यागः क्रियमाणेष्वेव वैदिकेषु कर्मसु फलविषयतया च पूर्वमेव मया त्रिविधः संप्रकीर्तितः ।

‘ मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ’
[ भ० गी० ३ । ३० ] इति ।

कर्मजन्यं स्वर्गादिकं फलं मम न स्यादिति फलत्यागः । मदीयफलसाधनतया मदीयमिदं कर्मेति कर्मणि ममतायाः परित्यागः कर्मविषयस्त्यागः । सर्वेश्वरे कर्तृत्वानुसंधानेनाऽऽत्मनः कर्तृतात्यागः कर्तृविषयस्त्यागः ॥ ४ ॥

---

प्रत्यवायं जनयेदेव । यथा हि विधिर्विधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यलक्षणत्वाच्छेषस्य । अनुष्ठानं विना तदर्थत्वानुपपत्तेरनुष्ठानस्य च विधिमन्तराऽनुपपत्तेः । नैवमयं निषेधो निषेध्यस्य तादर्थ्यं प्रतीक्षते । प्राप्तिमात्रापेक्षितत्वात् । अन्यथा प्रमादादिना कृते दोषाभावप्रसङ्गात् । तदेवं समानविषयत्वेन सामान्यशास्त्रस्य विशेषशास्त्रेण बाधान्न बाधकता । ननु ‘ अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः ’ इत्यादिनाऽग्नीषोमीयादेरपि हिंसात्वं प्रतीयते, अन्यथाऽन्यत्रेति तद्व्यवच्छेदानुपपत्तेरिति चेन्न । ‘ न वा उ एतन्म्रियसे ’ इत्यादिश्रुतिबलादग्नीषोमीयादौ न हिंसात्वम् । अयं भावः—न तावदिह दुःखजननमात्रं हिंसा, रक्षणरूपेषु चिकित्सकशल्यप्रयोगादिष्वतिप्रसङ्गात् । नापि प्राणवियोजनमात्रं सा । अतद्रूपेषु सर्वस्वहरणनारकपीडादिषु हिंसाशब्दप्रयोगदर्शनात् । अतोऽनर्थपर्यवसितस्तादात्विकदुःखजनको व्यापारो हिंसेत्येव तत्त्वम् । अग्नीषोमीयादिषु च न हिंसा पशोः । निहीनतरच्छागादिदेहपरित्यागपूर्वककल्याणतरदेहस्वर्गादिप्रापकत्वश्रुतेः संज्ञपनस्यानर्थपर्यवसायित्वाभावात् । कथं तर्हि पिष्टपश्वादिविधेर्गतिरिति चेत् ‘ पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ’ इति वचनात्कार्तयुगधर्मनिष्ठाधिकारिविशेषनियतत्वादिति गृहाण । ततश्चान्यत्र तीर्थेभ्य इत्येतत्पश्वादेर्भाविपुरुषार्थविशेषानभिज्ञपामरदृष्ट्योक्तम् । तस्मिन्नपि वाक्ये हिंसात्वं नास्तीत्येव तात्पर्यम् । उक्तं च मनुना—तस्माद्यज्ञे वधोऽवध इति । तत्रापि वध इति पामरदृष्ट्याऽनुवादः । अवध इति तु तत्त्वकथनम् । अतोऽग्नीषोमीयादौ पशुसंज्ञपनस्य हिंसात्वाभावेनादोषत्वाद्यज्ञादिकं कर्म न त्यजनीयमिति मीमांसकमतम् ।

यज्ञदानतपः कर्म न त्याज्यं * कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

यज्ञदानतपःप्रभृति वैदिकं कर्म मुमुक्षुणा न कदाचिदपि त्याज्यमपि त्वा प्रयाणादहरहः कार्यमेव । यज्ञदानतपःप्रभृतीनि वर्णाश्रमसंबन्धीनि कर्माणि मनीषिणां मननशीलानां पावनानि । मननमुपासनम् । मुमुक्षूणां यावज्जीवमुपासनं कुर्वतामुपासननिष्पत्तिविरोधिप्राचीनकर्मविनाशनार्थानीत्यर्थः ॥ ५ ॥

एतान्यपि तु + कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

यस्मान्मनीषिणां यज्ञदानतपःप्रभृतीनि पावनानि तस्मादुपासनवदेतान्यपि यज्ञादीनि कर्माणि मदाराधनरूपाणि सङ्गं कर्मणि ममतां फलानि च त्यक्त्वाऽहरह आ प्रयाणादुपासननिर्वृत्तये मुमुक्षुणा कर्तव्यानीति मम निश्चितमुत्तमं मतम् ॥ ६ ॥

---

*—कार्यमिति । चो हेतौ । यस्मान्मनीषिणां ममनशीलानां मुमुक्षूणां यावज्जीवमुपासनं कुर्वतामुपासनपरिनिष्पत्तिविरोधिप्राक्तनकर्मविनाशकानि तस्मान्न त्याज्यानि यज्ञदानतपआदीनि किंतु कार्याण्येवेत्यर्थः । न त्याज्यमित्येतावतैव हि कार्यत्वे लब्धेऽपि पुनः कार्यमेवेत्युक्तिस्तु तेष्वत्यादरः करणीय इति सूचयति । अथवा कार्यमित्यत्राहार्थे कृत्यः । यस्मात्कर्तुमर्हत्वेन विहितं तस्मान्न त्याज्यमिति व्याख्येयमिति । + कर्माणीति । यद्यपि फलकामनया विहितान्यपि कर्माणि शुद्धिमादधति दृष्टानि धर्मस्वाभाव्यात्तथाऽपि सा फलभोगोपकारिण्येव न तूपासननिष्पत्त्युपकारिणी । तदुक्तं वार्तिककृता—'काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा । विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते फलम्' ॥ इति । उपासनपरिनिष्पत्त्युपकारिणीं तु शुद्धिमादधति एतानि यज्ञादीनि कर्माणि फलाभिसंधिपूर्वकत्वेन बन्धहेतून्यपि मननशीलैः सङ्गमहमेवं करोमीति कर्तृत्वाभिनिवेशं फलानि चाभिसंधीयमानानि त्यक्त्वा मदाराधनरूपाण्युपासनपरिनिष्पत्त्यर्थं कार्याण्येवेति ।

नियतस्य तु संन्यासः कर्मणो * नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

नियतस्य नित्यनैमित्तिकस्य महायज्ञादेः कर्मणः संन्यासस्त्यागो नोपपद्यते । ' शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ' [ भ० गी० ३ । ८ ] । इति शरीरयात्राया एवासिद्धेः । शरीरयात्रा हि यज्ञशिष्टाशनेन निर्वर्त्यमाना सम्यग्ज्ञानाय प्रभवति । अन्यथा ' ते त्वघं भुञ्जते पापाः ' [ भ० गी० ३ । १३ ] । इत्ययज्ञशिष्टरूपाशनाप्यायनं मनसो विपरीतज्ञानाय भवति । ' अन्नमयं हि सोम्य मनः ' [ छा० ६ । ५ । ४ ] । इत्यन्नेन हि मन आप्यायते । ' आहारशुद्धौ सत्त्वशुद्धिः सत्त्व-

* नोपपद्यत इति । काम्यकर्मणो मनःप्रसादसहेतुत्वाभावेन बन्धहेतुत्वेन च दोषवत्त्वाद्बन्धनिवृत्तिहेतुभूतबोधार्थिना क्रियमाणस्त्याग उपपद्यत एव । परं तु नित्यस्य कर्मणश्चित्तशुद्धिहेतुत्वेनादोषस्य त्यागोऽन्तःकरणशुद्ध्यर्थिना नोपपद्यते । शास्त्रयुक्तिभ्यां तस्यान्तःकरणमलापनयनार्थमवश्यानुष्ठेयत्वात् । तथाचोक्तं प्राक्—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ' इति । आत्मावलोकनरूपमोक्षप्राप्तिपर्यन्तं कर्म कर्तव्यमिति तदर्थः । ननु काम्यकर्मण इव नित्यस्यापि कर्मणो दोषवत्त्वं द्रव्यपश्वादिहिंसामिश्रितत्वेन साङ्ख्यैः प्रतिपादितम् । न च ' व्रीहीनवहन्ति ' ' अग्नीषोमीयं पशुमालभेत ' इत्यादिविशेषविधिगोचरत्वात्क्रत्वङ्गहिंसायाः, ' न हिंस्यात् ' इति सामान्यनिषेधस्य विहितक्रत्वङ्गहिंसेतरहिंसापरत्वमिति वाच्यम् । भिन्नविषयत्वेन विधिनिषेधयोरबाधेनैवोपपत्तेः । तथाहि—निषेधेन पुरुषस्यानर्थकारणं हिंसेत्युक्तं न त्वक्रत्वङ्गं सेति । विधिना च क्रत्वङ्गं सेत्यभिहितं न त्वनर्थकारणं नेति । तथा च क्रतूपकारकत्वानर्थसाधनत्वयोरेकत्र समावेशोपपत्तेः क्रत्वर्थाऽपि हिंसा निषिद्धैवेति हिंसामिश्रितं दर्शपूर्णमासादि सर्वं कर्म दुष्टमेव । विहितस्यापि निषेधविषयत्वं निषिद्धस्यापि विधिगोचरत्वं श्येनादिवदुपपद्यते । तथाहि—' श्येनेनाभिचरन्यजेत ' इत्यभिचारविधिना विहितोऽपि श्येनादिः ' न हिंस्यात्सर्वा भूतानि ' इति निषेधविषयत्वादनर्थहेतुरेव । तथा च तद्दोषसहिष्णोरेव च रागद्वेषादिवशीकृतान्तःकरणस्य तत्राधिकारः । अभिचारो नाम वैरिमरणानुकूलशस्त्रघातादिरूपा हिंसा । तत्कामिनस्तत्साधनत्वेन श्येननामको यागो विधीयते । तथा च श्येनेन यागेन हिंसात्मकाभिचारं भावयेदिति फलति । एवं सति श्येनफलस्य शत्रुवधरूपस्य हिंसात्मकत्वादनर्थसाधनत्वं न तत्साधनस्य श्येनस्य यागस्येति कथं श्येनस्य न हिंस्यादिति निषेधविषयत्वमुच्यते । नहि श्येनो हिंसात्मकः किंतु तत्फलं शत्रुवधः । किंच चतुर्थे श्येनस्येष्टसाधन-

त्वेन वेदबोधितत्वाद्धर्मत्वमेवोक्तम् । तत्फलस्यैव हिंसात्मकाभिचारस्य नरकरूपानिष्टजनकत्वेनाधर्मत्वमुक्तम् । एवं च श्येनफलस्य शत्रुवधस्य हिंसात्मकस्यैव न हिंस्यादिति निषेधविषयत्वेन नरकरूपानिष्टजनकत्वादनर्थहेतुत्वं न तत्साधनस्य श्येनस्य, वेदबोधितेष्टसाधनताकत्वेनानिष्टजनकत्वाभावात् । निषिद्धस्यैवानिष्टजनकत्वात् । इति चेत्—श्येनफलस्य शत्रुवधस्य हिंसास्वरूपत्वान्न हिंस्यादिति निषेधविषयत्वेन नरकरूपानिष्टजनकत्वादनर्थहेतुत्वेन तद्द्वारा श्येनस्यापि नरकरूपानिष्टजनकत्वेनानर्थहेतुत्वमित्याशयात् । एवं ज्योतिष्टोमादावपि हिंसामिश्रितत्वेनानर्थसाधनत्वात्तद्दोषसहिष्णो रागद्वेषवशीकृतस्यैव तत्राधिकारः । तथा चोक्तं भारते—

' जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते ।
अहिंसया हि भूतानां जपयज्ञः प्रवर्तते ' ॥ इति ।

मनुनाऽपि—

'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ' ॥

इति वदता मैत्रीमहिंसां प्रशंसता हिंसाया दोषवत्त्वमेव प्रतिपादितम् । पापरूपमनोमलध्वंसितत्वेदृशेन गायत्रीजपादिना सुतरामुपपत्स्यत इति हिंसादिदोषदुष्टं ज्योतिष्टोमादि नित्यं कर्म दोषासहिष्णुना श्येनादिकामिव कर्माधिकारिणाऽपि त्याज्यमिति प्राप्ते ब्रूमहे—न क्रत्वर्था हिंसाऽनर्थसाधनम् । विधिस्पृष्टे निषेधानवकाशात् । तथाहि—विधिर्हि बलवदिच्छाविषयसाधनताबोधरूपां प्रवर्तनां कुर्वन्ननर्थसाधने तदनुपपत्तेः स्वविषयस्य प्रवर्तनागोचरस्यानर्थसाधनत्वाभावमप्यर्थादाक्षिपति । अतो विधिविषयस्यानर्थहेतुत्वं न युज्यते । पशुमालभेतेत्यत्र लिङ्प्रत्ययेन यज्ञाङ्गतया पशुहिंसा विधीयते । विधौ लिङ्प्रत्ययस्मरणात् । अयं भावः— आलभेतेत्यत्र धातोरुपरितने तप्रत्ययेंऽशद्वयमस्ति । आख्यातत्वं लिङ्त्वं चेति । तत्राऽऽख्यातत्वं दशसु लकारेषु समानम् । लिङ्त्वं पुनः केवले लिङ्येव । तदवच्छेदेन लिङ्प्रत्ययः शब्दभावनामभिधत्ते । शब्दभावना नाम पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः । यथा यजेतेत्यादौ यागविषयकपुरुषप्रवृत्त्यनुकूलो लिङादिनिष्ठो व्यापारविशेषः । स एव च विध्यर्थः । लिङादिश्रवणेऽयं प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः । यद्यस्मात्प्रतीयते तत्तस्य वाच्यम् । यथा गोशब्दस्य गोत्वम् । एवं च पुरुषप्रवृत्तिजनकव्यापारो हि विधिः । स च व्यापारविशेषः प्रवृत्त्यनुकूलत्वान्यथानुपपत्त्या प्रवृत्तिविषयस्येष्टसाधनतामाक्षिपति । अन्यथा प्रवृत्तिविषयस्येष्टसाधनत्वानाक्षेपे तस्य प्रवृत्तिजनकत्वमेवानुपपन्नं स्यात् । सर्वो हीष्टसाधनतां ज्ञात्वैव प्रवर्तते । यजेतेति हि यागे प्रेरितो देवदत्तादिर्यागस्य यदीष्टसाधनत्वं गृह्णाति तदानीमेव तत्र प्रवर्तितुमुत्सहते नान्यथा । तथा चाऽऽलभेतेति विधिना क्रत्वङ्गहिंसाया इष्ट-

साधनता बोध्यते न हिंस्यादिति निषेधेन चानिष्टसाधनतेति विशेषविधिवाक्येन विरोधात्सामान्यनिषेधस्य संकुचितविषयकत्वस्याऽऽवश्यकत्वेन क्रत्वर्थहिंसेतरहिंसाविषयत्वं निषेधस्य प्रतीयते । 'श्येनेनाभिचरन्यजेत' इत्यादौ विध्यर्थे लिङ्प्रत्ययः । विध्यर्थश्च प्रवर्तना । प्रवर्तना च प्रवृत्त्यनुकूलो व्यापारः । प्रवृत्तिश्च बलवदिच्छाविषयसाधनतावति श्येननामके यागादौ । तथा च श्येनेनाभिचरन्यजेतेति विधिना, बलवदिच्छाविषयशत्रुवधरूपहिंसात्मकाभिचारफलनिरूपितसाधनतावति श्येननाम्नि यागे पुरुषः प्रवर्त्यते । श्येननाम्ना यागेन शत्रुवधरूपमभिचारफलं भावयेदिति । प्रवृत्तिजनकव्यापारश्च वेदस्य कर्तृपुरुषाभावाल्लिङादिशब्दनिष्ठ एव । लोके तु पुरुषनिष्ठोऽभिप्रायविशेषः । तेन च लिङादिनिष्ठेन व्यापारेण स्वस्य प्रवृत्तिजनकत्वोपपत्तये प्रवृत्तिविषयस्य श्येननाम्नो यागस्येष्टसाधनतावदनिष्टसाधनताभावोऽपि बोध्यते । अन्यथा यागे पुरुषाणां प्रवृत्तिर्न स्यादिति । अत एव च चतुर्थे श्येनस्येष्टसाधनत्वेन वेदबोधितत्वाद्धर्मत्वमुक्तं संगच्छते । एवं च विहितश्येनयागस्य नानिष्टसाधनत्वं किंतु तत्फलस्य शत्रुवधस्य हिंसात्मकस्यैवानिष्टहेतुत्वम् । बलवदिच्छाविषये फलादौ च पुरुषस्य स्वर्गादाविव रागत एव च प्रवृत्तेर्जायमानत्वेन विध्यप्रक्रमणात् । बलवदिच्छासमवधानदशायां जायमाना पुरुषप्रवृत्तिश्च न भाव्यस्येष्टसाधनतां ऋते न चाप्यनिष्टसाधनतां निषेद्धुमर्हति । भाव्यस्य हिंसात्मकाभिचारफलस्य विधिजन्यप्रवृत्तिविषयत्वाभावात् । विहितश्येनफलस्यापि हिंसात्मकाभिचारस्यानर्थहेतुतोपपद्यत एव । विधिजन्यप्रवृत्तिविषयं तु धात्वर्थरूपं करणं प्रवर्तनामवलम्बते । सा च नानर्थहेतुं विषयी करोतीति विशेषविधिबाधितं सामान्यनिषेधवाक्यं रागद्वेषादिमूलकाक्रत्वर्थलौकिकहिंसाविषयं प्रत्येतव्यम् । तेन श्येनाग्नीषोमयोर्वैलक्षण्यादुपपन्नं ज्योतिष्टोमादेरदुष्टत्वं दुष्टत्वं च फलतः श्येनादेः । विधिस्पृष्टस्यापि निषेधविषयत्वे षोडशिग्रहणस्यापि नातिरात्रे षोडशिनं गृह्णातीति निषेधादनर्थहेतुत्वापत्तिर्दुर्निवारा स्यात् । नातिरात्रे षोडशिनं गृह्णातीति निषेधात् । तस्मान्न किंचिदेतदिति भाट्टदर्शनं यथामति विवरीतम् । तत्र विद्वद्भिर्न दोषैकदृग्भिर्भाव्यं मीमांसाशास्त्रस्यातिदुरवगाहत्वान्मन्मतिमान्द्याद्गुरुपूर्वकं तच्छास्त्राध्ययनाभावाच्च तत्र यत्स्खलितं तद्धंसक्षीरन्यायेन वर्जयित्वा ग्राह्यग्रहणेन च मामनुगृह्णन्तु दयालवो विद्वांस इति । प्रभाकरदर्शनं तु संक्षेपतो विविच्यते—इत्थं हि तेषां मतप्रक्रिया—यथोत्कटेच्छाविषये फले स्वर्गादौ चोदनामन्तरेव रागवशात्स्वत एव पुरुषः प्रवर्तते तथा फलसाधनेऽपि रागत एव पुरुषप्रवृत्तिसिद्धेर्न तादृशे विषये विधेः प्रवर्तकत्वम् । तेन श्येनयागस्य रागप्रयुक्तप्रवृत्तिविषयत्वेन विधेरुदासान्न तस्यानर्थसाधनत्वं प्रतिक्षेप्तुं विधिः प्रभवति । श्येनस्य च न स्वरूपतोऽनर्थत्वम् । नहि श्येनो नरकं जनयति येनानर्थः स्यात् । नरकजनकस्यैवानर्थत्वात् । श्येनस्य तु शत्रुवधमात्रजनकत्वात् । किंतु श्येनफ-

लस्य शत्रुवधस्य हिंसात्मकत्वान्नरकजनकत्वेनानर्थत्वाच्छ्येनस्यापि तद्द्वारा नरकजनकत्वेनानर्थसाधनत्वम् । तदपि न विधिना प्रतिक्षिप्यते । तत्र रागवशादेव प्रवृत्तिसिद्ध्या विधेरौदासीन्यात् । वस्तुतस्तु शत्रुवधरूपाभिचारस्य श्येनफलस्य लोकतः प्राप्तत्वात्तत्र रागतः प्रवृत्तं पुरुषं प्रति श्येनस्य तत्साधनत्वमात्रं वेदेन बोध्यत इति न तस्य वेदविहितत्वम् । सर्वथाऽपि तु श्येनस्य विधिविषयत्वाभावाद्रागस्तत्र प्रवर्तकः । क्रत्वङ्गभूतायामग्नीषोमीयहिंसायां तु क्रतोः फलसाधनत्वेन तदङ्गभूताया हिंसायाः फलसाधनत्वाभावेन रागाद्यभावात्तत्र विधेरेव प्रवर्तकत्वमिति वाच्यम् । स च विधिः स्वजन्यप्रवृत्तिविषयस्यानर्थसाधनत्वं निराकरोत्यन्यथा स्वस्य प्रवर्तकत्वस्यैवानुपपत्तेरिति प्रधानभूता हिंसाऽनर्थं जनयेन्न क्रत्वङ्गभूतेति न हिंसादिमिश्रितत्वेन ज्योतिष्टोमादेर्दुष्टत्वमिति सममेव । एतावदंशे तु विशेषः—' चोदनालक्षणोऽर्थो धर्मः ' [ पू० मी० सू० १ । १ । २ ] इत्यत्र वैदिकशब्दमात्रं चोदना । विशेषेण सामान्यलक्षणात् । चोदनाप्रकरणपठितकृत्स्नवेदपरश्चोदनाशब्द इत्यर्थः । चोदना नाम प्रेरणापरपर्याया प्रवर्तना । प्रवृत्त्यनुकूलो व्यापार इति यावत् । सा च स्वविषयस्य फलवत्त्वमाक्षिपति । अन्यथा ' प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ' इति न्यायानुसारेण तस्याः प्रवर्तकत्वानुपपत्तेः । एवं च प्रयोजनवत्त्वे सति अर्थवत्त्वे च सति वेदप्रतिपाद्यत्वं धर्मत्वमिति धर्मलक्षणमिति सूत्रार्थः । तत्रार्थवत्त्वे सति वेदप्रतिपाद्यत्वमित्येतावत्युच्यमाने वेदप्रतिपाद्ये स्वर्गादिफलेऽर्थरूपेऽतिव्याप्तिः स्यात्तद्वारणाय प्रयोजनवत्त्वे सतीति । स्वर्गादिफलस्य सुखादिरूपत्वेन तत्प्रयोजनान्तराभावाद्भवति तद्वारणमिति भावः । प्रयोजनवत्त्वे सति वेदप्रतिपाद्यत्वमित्येवोच्यमाने श्येनेनाभिचरन्यजेतेत्यादिवेदप्रतिपाद्ये वैरिमारणानुकूलशस्त्रघातादिरूपहिंसात्मकाभिचारस्वरूपफलवति श्येनादावतिव्याप्तिः स्यादतोऽर्थवत्त्वे सतीति द्वितीयं सत्यन्तम् । श्येनस्य साक्षान्नरकजनकत्वाभावेनानर्थवत्त्वाभावेऽपि श्येनफलस्य शत्रुवधस्य नरकजनकत्वेनानर्थत्वाच्छ्येनोऽपि तद्द्वारा नरकजनकत्वेनानर्थ इति भवति तद्व्यावृत्तिरित्यर्थः । प्रयोजनवत्त्वे सत्यर्थवत्त्वमित्युक्तौ तु तृप्त्यादिप्रयोजनवति भोजनादावतिव्याप्तिस्तद्वारणाय वेदप्रतिपाद्यत्वमित्युक्तम् । भोजनादे रागतः प्राप्तत्वेन वेदप्रतिपाद्यत्वाभावात् । ' अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणाम् ' इत्यादिवचनानां ग्रासादिसंख्यानियमपरत्वाद्भवति तेन तद्वारणमिति ध्येयम् । एवं स्थिते प्राभाकरमते, फल इव फलसाधनेऽपि रागवशादेव प्रवृत्ते रागजन्यप्रवृत्तिविषयत्वेन विधेरौदासीन्यान्न तस्यानर्थसाधनत्वं विधिना प्रतिक्षिप्यत इति फलद्वाराऽनर्थत्वादर्थपदव्यावर्त्यत्वेनाधर्मत्वं श्येनादेः । भाट्टमते तु स्वर्गादौ फले रागतः प्रवृत्तिसिद्धेर्विध्यनपेक्षत्वेऽपि फलसाधने रागतः प्रवृत्त्यसिद्धेस्तत्र विधिरेव प्रवर्तक इति विहितस्य स्वविषयस्य विधिनाऽनर्थत्वप्रतिक्षेपादाक्षेपाच्च समीहितसाधनत्वस्य धर्मत्वमेव

विहितस्य श्येनादेः । तत्फलस्यैव शत्रुवधस्यानर्थसाधनत्वेनाधर्मत्वम् । अर्थपदव्याव-र्त्यत्वं तु कलञ्जभक्षणादेर्निषिद्धस्यैवेति फलतोऽनर्थहेतुत्वेन तु शिष्टानां श्येनादौ न धर्मत्वेन व्यवहारः । तदुक्तमभियुक्तैः—

' फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते ।
केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ' ॥ इति ।

तार्किकाणां तु दर्शनम्—कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वं चेति त्रयं विध्यर्थः । तत्र क्रत्वङ्गहिंसायां साक्षान्निषेधाभावात्प्रायश्चित्तानुपदेशाच्च कृतिसाध्यत्वार्थहेतुत्ववदनर्था-हेतुत्वमपि विधिना बोध्यते इति न तस्या अनर्थहेतुत्वम् । श्येनादेरभिचारस्य नाभि-चरेदिति साक्षादेव निषेधात्प्रायश्चित्तोपदेशाच्चानर्थहेतुत्वावगमात्तावन्मात्रं तत्र विधिना न बोध्यत इत्युपपन्नं श्येनाग्नीषोमीययोर्वैलक्षण्यम् । औपनिषदैस्तु भाट्टमेव दर्शनं व्यवहारे प्रायेणावलम्ब्यते । तथा च भगवद्बादरायणप्रणीतं सूत्रम्—' अशुद्धमिति चेन्न शब्दात् ' [ ब्र० सू० ३ । १ । २५ ] इति । अग्निष्टोमाद्याध्वरिकं कर्माशुद्धम् । अग्नीषोमीया-दिहिंसामिश्रितत्वात् । हिंसा च ' न हिंस्यात्सर्वा भूतानि ' इति निषिद्धत्वात्पापमेव । इति चेन्न । शब्दात्—' अग्नीषोमीयं पशुमालभेत ' इत्यादिविधिशब्दादित्यर्थः । अयं भावः— ' न हिंस्यात्सर्वा भूतानि ' इति सामान्यशास्त्रं ' यदाहवनीये जुहोति ' इति शास्त्रं ' पदे जुहोति ' इत्यादिनेव विशेषशास्त्रेणाग्नीषोमीयं पशुमालभेतेत्यनेन बाध्यते । तद्यथा—अना-रभ्य वादे श्रूयते— ' यदाहवनीये जुहोति ' इति । ज्योतिष्टोमे श्रूयते— ' पदे जुहोति ' इति । तत्रानारभ्यवादे होमसामान्यमनूद्याऽऽहवनीयो विधीयते ज्योतिष्टोमप्रकरणनिय-मितेन पदवाक्येन तदनुबद्धो विशिष्टहोमो विधीयते । एवं सति पदहोमे सामान्यशास्त्रेण प्राप्त आहवनीयो विशेषशास्त्रेण पदवाक्येन बाध्यते । कुतः—होमसामान्यस्यानुवादकं यच्छास्त्रं तत्सामान्ये मुख्यम् । होमविशेषानुवादे लाक्षणिकतया दुर्बलम् । होमविशेषशास्त्रं तु व्यावृत्त्या विधायकत्वात्प्रबलम् । न च पदशास्त्रमपि होमसामान्यमेवानूद्य पदविधायक-तया समानबलं स्यादिति वाच्यम् । ज्योतिष्टोमप्रकरणसंबद्धस्य तस्य विशिष्टविधायकस्य सामान्येनानुवादकत्वासंभवात् । तस्मात्प्रबलेन विशेषशास्त्रेण दुर्बलं सामान्यं बाध्यते । तद्व-दग्नीषोमीयाहिंसाविधिर्न हिंस्यादिति सामान्यनिषेधं बाधिष्यते । न हिंस्यादित्युत्सर्गः । अग्नी-षोमीयं पशुमित्यपवादः । उत्सर्गापवादयोश्च व्यवस्थितविषयत्वं भवति । अयमर्थः—काम्ये कर्मणि सर्वत्र कारणांशे रागवशादेव प्रवृत्तिः, अङ्गेषु तु विधित इति स्थितिः । ततश्च श्येनाख्ये कर्मणि निषेधेऽपि रागप्राबल्यात्प्रवृत्तिः स्यात् । क्रत्वङ्गहिंसायां तु विधित एव प्रवृत्तिर्वाच्या । स च विधिर्यद्युत्सर्गप्राप्तमनर्थहेतुत्वं न बाधेत तर्हि प्रवर्तको न स्यात्, प्रवर्तकत्वे वा विधिरनर्थाय स्यात् । अतो निरवकाशो विधिः सावकाशमुत्सर्गमभिहिंसा-

शुद्धौ * ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ' [ छा० ७। २६ । २ ]। इति ब्रह्मसाक्षात्काररूपं ज्ञानमाहारशुद्ध्यायत्तमिति श्रूयते । तस्मान्महायज्ञादिनित्यनैमित्तिकं कर्माऽऽप्रयाणाद्ब्रह्मज्ञानार्थंवोपादेयमिति तस्य त्यागो नोपपद्यते । एवं ज्ञानोत्पादिनः कर्मणो बन्धकत्वमोहात्परित्यागस्तामसः परिकीर्तितः । तमोमूलस्त्यागस्तामसः। तमःकार्याज्ञानमूलत्वेन त्यागस्य तमोमूलत्वम् । तमो ह्यज्ञानस्य मूलम् । ' प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ' [ भ० गी० १४ । १७ ] । इत्यत्रोक्तम् । अज्ञानं तु ज्ञानविरोधिविपरीतज्ञानम् । तथा च वक्ष्यते-

' अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी '
[ भ० गी० १८ । ३२ ] इति ।

अतो नित्यनैमित्तिकादेः कर्मणस्त्यागो विपरीतज्ञानमूल एवेत्यर्थः ॥ ७ ॥

---

सादिषु व्यवस्थापयतीति । इदं च निषेधशास्त्रस्य हिंसात्वादिसामान्येन प्रवृत्तिमङ्गीकृत्योक्तम् । वस्तुतस्तस्य रागप्राप्तहिंसाविषयत्वाद्वैधहिंसायामप्रवृत्तेर्नाशुद्धत्वशङ्कावसर इति द्रष्टव्यम् । तस्माच्छुद्धं वैदिकमाध्वरिकं कर्म । जपप्रशंसापरं तु वाक्यं न क्रत्वर्थहिंसाया अधर्मत्वबोधकं तस्य तत्र तात्पर्याभावादित्यर्थः ।

* ध्रुवा स्मृतिरिति । तैलधारावदविच्छिन्नस्मृतिसंतानरूपा । वेदान्तवाक्यैर्मोक्षोपायतया विहितं ज्ञानं किं वाक्यार्थज्ञानमात्रमुत तन्मूलोपासनात्मकं ज्ञानम् । न तावद्वाक्यार्थज्ञानमात्रम्—तस्य विधिमन्तरेणापि विदितपदपदार्थसंगतिकस्य समधिगतशब्दन्यायतत्त्वस्य वाक्यादेव सिद्धत्वात् । तावन्मात्रेणाऽऽत्मयाथात्म्यज्ञानानुपलब्धेश्च । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् । तथा च श्रुतयः— ' ओमित्येवाऽऽत्मानं ध्यायथ ' [ मु० २ । २ । ६ ] ' आत्मानमेव लोकमुपासीत ' [ बृ० ३ । ४ । १५ ] ' आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' [ बृ० ६ । ५ । ६ ] इत्याद्याः । अत्र श्रोतव्य इत्यनुवादः । स्वाध्यायाध्ययनस्यार्थज्ञानरूपदृष्टप्रयोजनपर्यन्तत्वसायित्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तेतेति श्रवणस्य प्राप्तत्वात् । श्रुतस्यार्थस्य श्रुत्युपपत्तिभ्यामवधारणेन दृढीकरणार्थत्वान्मननस्य मन्तव्य इति चानुवादः । तस्माद्ध्यानमेव विधीयते । ध्यानं चिन्तनम् । चिन्तनं च तैलधारावदविच्छिन्नस्मृतिसंततिरूपम् । न तु स्मृतिमात्रम् ।

तादृशं चिन्तनमेव हि ध्रुवा स्मृतिरित्युच्यते । उपासीतेत्युपास्तिरपि ध्यानसमानार्थः । एकाग्रचित्तवृत्तिनैरन्तर्ये तस्य प्रयोगदर्शनात् । एतदुभयैकार्थ्यात् 'ब्रह्म वेद ब्रह्मैव भवति' [ मु० ३ । २ । ९ ] इत्यपवर्गोपायतया विहितं वेदनमप्युपासनमित्यवगम्यते । तदेतत्सर्वं वाक्यकारेण प्रपञ्चितम्—'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' [ बोधायनवृत्तिः ] इति । सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमुक्तमिति तदर्थः । 'आवृत्तिरसकृदुपदेशात्' [ ब्र० सू० ४ । १ । १ ] इत्यधिकरणेऽप्येतदेव प्रतिपादितम् । तथाहि—'ब्रह्म वेद ब्रह्मैव भवति' [ मु० ३ । २ । ९ ] इति ब्रह्मप्राप्तिसाधनतया विहितं वेदनं सकृदेव कृतं सच्छास्त्रार्थं उताऽऽवर्तितं सच्छास्त्रार्थः । किं तावत्प्राप्तम् । सकृदेवानुष्ठेयमिति ब्रूमः । कुतः—यथा प्रयाजादयः सकृदनुष्ठिताः सन्तो दर्शपूर्णमासफलोपकारिणस्तथा वेदनमपि सकृदनुष्ठितमेव ब्रह्मप्राप्त्युपकारि भवेदिति । वेदनमात्रस्यैव विधानेनासकृदावृत्तौ प्रमाणविरहात् । अनवगम्यमानआवर्तितेऽशास्त्रार्थः कृतः स्यात् । तस्माद्यथाशब्दं सकृद्वेदनं कर्तव्यम् । इत्येवं प्राप्ते प्रचक्ष्महे—आवृत्तिरसकृत् । असकृदावर्तितमेव वेदनं शास्त्रार्थः । कुतः—उपदेशात् । उपासनापरपर्यायेण वेदनशब्देनोपदेशात् । तत्पर्यायत्वं च वेदनोपासनयोरेकस्मिन्विषये श्रुतौ प्रयोगदर्शनादवगम्यते । तथा हि—'मनो ब्रह्मेत्युपासीत' [ छा० ३ । १८ । १ ] इत्युपास्तिनोपक्रान्तोऽर्थः 'भाति च तपति च कीर्त्या यशसा य एवं वेद' ( छा० ३ । १८ । ३ । ४ । ५ । ६ ) इति विदिनोपसंहृतः । तथा—'यस्तद्वेद यत्स वेद' [ छा० ३ । १ । ४ ] इति विदिनोपक्रान्तं रैकस्य ज्ञानम् 'यां देवतामुपास्से' [ छा० ४ । २ । २ ] इत्युपासिनोपसंह्रियते । ततश्चैतत्समानार्थेषु 'निदिध्यासितव्यः' [ बृ० ४ । ४ । ५ ] इत्यादिषु ध्यानं वेदनं स्मर्यते । तच्च ध्यानं 'ध्यायति प्रोषितनाथा पतिम्' इत्यादौ प्रोषितनाथाकर्तृकपतिकर्मकसोत्कण्ठनिरन्तरस्मरणवत्तण्डुलनिष्पत्तिपर्यवसाय्यवघातवच्च सोत्कण्ठाविच्छिन्नस्मृतिपारम्पर्यरूपत्वान्मोक्षरूपफलनिष्पत्तिपर्यन्तत्वाच्चासकृदावर्तनीयमिति शास्त्रार्थः सिद्धान्तितः । सेयं ध्रुवा स्मृतिर्मोक्षप्राप्तिसाधनभूता । 'ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' [ छा० ७ । २६ । २ ] इति श्रवणात् । लब्धायां च ध्रुवायां स्मृतावनेकजन्मान्तरानुभवभावनादृढीभूतानां हृदयाश्रयाणामनर्थपाशरूपाणां सर्वग्रन्थीनां विप्रमोक्षो विनाशो भवतीति यावत् । सा च स्मृतिर्दर्शनसमानाकारा 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' [मु० २।२।८] इत्यनेनैकवाक्यत्वात् । भवति च स्मृतेरनवरतभावनाप्रकर्षाद्दर्शनरूपता । एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीति 'सर्वापेक्षा च यज्ञादिश्रुतेः' [ ब्र० सू० ३ । ४ । २६ ] इत्यधिकरणे प्रतिपादितम् । 'तमेतं

वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन ' [ बृ० ६ । ४ । २२ ] इति श्रुतौ यद्यपि विविदिषन्तीति सन्नन्तप्रयोगात्प्रकृतिप्रत्ययार्थयोरिति न्यायेन सनर्थेच्छायाः प्राधान्यात्प्रधानान्वयौचित्याच्चाप्रधानानां वेदनेच्छां प्रति साधनभावो यज्ञादीनां यज्ञेनेत्यादितृतीयाश्रुत्याऽवगम्यते । यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः । तथाऽपि यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते । यथाऽसेर्हननसाधनत्वे सति जिघांसतीति व्यपदेशो भवति नान्यथा । अतो यज्ञादीनां ज्ञानसाधनत्वं व्यपदेशान्यथानुपपत्त्याऽवगम्यते । अतो वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याऽऽ प्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माण्यनुष्ठेयानि । वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—' तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्च ' [ बोधा० वृ० ] इति । विवेकादीनां स्वरूपं चाऽऽह–' जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः ' [ बो० वृ० ] इति । जातिदुष्टं कलञ्जपलाण्डुलशुनगृञ्जनादि । आश्रयदुष्टं पतितादिस्वामिकम् । निमित्तदुष्टं नखकेशादिदुष्टमुच्छिष्टादि च । एतद्दोषत्रयरहितादन्नात्कायशुद्धिर्विवेक इत्यर्थः । निर्वचनं च–' आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः [ छा० ७ । २६ । २ ] इति । ' विमोकः कामानभिष्वङ्गः ' । निर्वचनं च–' शान्त उपासीत ' [ छा० ३ । १४ । १ ] इति । ' आरम्भणसंशीलनं पुनः पुनरभ्यासः ' [ वृत्तिः ] । आरम्भणमालम्बनं शुभाश्रयस्तस्य संशीलनं पुनः पुनः परिशोधनम् । निर्वचनं च–' सदा तद्भावभावितः ' [ भ० गी० ८ । ६ ] । ' पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया ' [ वृ० ] । निर्वचनं च–' क्रियावानेष ब्रह्मविदां वरिष्ठः ' [ मु० ३ । १ । ४ ] इति । ' कल्याणानि सत्यार्जवदयादानाहिंसादीनि ' [ वृ० ] इति । सत्यं भूतहितम् । आर्जवं वाङ्मनःकायानामेकरूपता । दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम् । दानं लोभराहित्यम् । अहिंसा वाङ्मनःकायैः परपीडानिवृत्तिः । निर्वचनं च–' सत्येन लभ्यः ' [ मु० ३ । १ । ५ ] । ' तेषामेवैष विरजो ब्रह्मलोकः ' [ प्र० १ । १६ ] इत्यादि । अनवसादो दैन्याभावः । देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यं मनसोऽवसादः । तद्विपर्ययोऽनवसादः । निर्वचनं च–' नायमात्मा बलहीनेन लभ्यः ' [ मु० ३ । २ । ४ ] इति । ' तद्विपर्ययजा तुष्टिरुद्धर्षः [ वृ० ] । तद्विपर्ययोऽनुद्धर्षः । अतिसंतोषश्च विरोधीत्यर्थः । निर्वचनं च—' शान्तो दान्तः ' [ बृ० ६ । ४ । २३ ] इति । अत्र विवेकादिषु ध्रुवानुस्मृतिनिष्पादकत्वं व्यासज्यवृत्ति । न तु प्रत्येकपर्याप्तमिति बोध्यम् ।

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

यद्यपि परम्परया मोक्षसाधनभूतं कर्म तथाऽपि दुःखात्मकद्रव्यार्जन-साध्यत्वाद्बह्वायासरूपतया कायक्लेशकरत्वाच्च मनसोऽवसादकरमिति तद्भीत्या योगनिष्पत्तये ज्ञानाभ्यास एव यतनीय इति यो महायज्ञाद्या-श्रमकर्म परित्यजेत्स राजसं रजोमूलं त्यागं कृत्वा तदयथावस्थित-शास्त्रार्थरूपमिति ज्ञानोत्पत्तिरूपं त्यागफलं न लभेत। 'अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी' [ भ० गी० १८ । ३१ ] इति हि वक्ष्यते। नहि कर्म दृष्टद्वारेण मनःप्रसादहेतुः, अपि तु भगवत्प्रसादद्वारेण ॥ ८ ॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

नित्यनैमित्तिकमहायज्ञादिवर्णाश्रमविहितं कर्म मदाराधनरूपतया

*—नित्येति । श्रेयोभ्युदययोः साधनभूतं यज्ञतपोदानादिकं वैदिकमेव कर्म न त्वन्यत् । तत्र फलानुसंधानेन क्रियमाणं कर्माभ्युदयहेतुः । फलाद्यभिसंधिरहितं च तपोदानादिकमनुष्ठीयमानं कर्म मोक्षापरपर्यायश्रेयोहेतुः । पञ्चमाध्याये 'सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी' [ गी० ५ । १३ ] इति नित्यनैमित्तिककाम्यप्रतिषिद्धसर्वकर्मणां परित्याग उक्तः । चतुर्थाध्याये च 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः' [ गी० ४ । २० ] इति फलमात्रपरित्यागेन कर्मानुष्ठानमुक्तम् । न च परमकारुणिकः सर्वज्ञो भगवान्मिथो विरुद्धं प्रब्रूयात् । अतः कर्मसंन्यासस्य तदनुष्ठानस्य चाविरोधप्रकारं वर्णयितुं शास्त्रीयत्यागस्य काम्यकर्मस्वरूपविषयत्वसर्वकर्मविषयत्वाभ्यां विवादं दर्शयन्नेकत्र संन्यासशब्दमितरत्र त्यागशब्दं च प्रयुक्तवानतस्त्यागसंन्यासशब्दयोरेकार्थत्वम्, तथा 'निश्चयं शृणु मे तत्र त्यागे भरतसत्तम' [ गी० १८ । ४ ] इति त्यागशब्देनैव निर्णयवचनात्, 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागः' [ गी० १८ । ७ ] इति च परस्परपर्यायतादर्शनाच्च तयोरेकार्थत्वं निश्चीयत इत्याह- काम्यानां कर्मणामिति । 'पुत्रकामो यजेत' 'स्वर्गकामो यजेत' इत्येवं फलकामनया विहितानामत एव चित्तशुद्धावनुपयुक्तानां काम्यानां कर्मणामिष्टिपशुसोमादीनां न्यासं परित्यागं सम्यक्फलैः सह कर्मणां त्यागं संन्यासं पण्डिता विदुर्जानन्तीत्यर्थः ।

अयमभिप्रायः—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' [ बृ० ६। ४। २२] इति श्रुतौ विविदिषन्तीति पञ्चमलकारेण प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायेन सनर्थेच्छायाः प्राधान्याद्विविदिषां भावयेयुरिति सनर्थेच्छैव भाव्यतया भाति। तथाऽपि अन्वयव्यतिरेकाभ्यां तस्या विषयसौन्दर्यलभ्यत्वाज्ज्ञानस्यैव कर्मतयेच्छां प्रति प्राधान्याच्च प्रधानसंबन्धाच्चाप्रधानानां पदार्थान्तराणामिति ज्ञानं प्रति साधनभावो यज्ञादीनां तृतीयाश्रुत्या बोध्यते। तत्रापि न वाक्यार्थज्ञानोत्पत्तौ साधनत्वं यज्ञादीनाम्, वाक्यार्थज्ञानस्य वाक्यादेवोत्पत्तिसिद्धेः। न च वाक्यस्य सहकारितया कर्मापेक्षेति वाच्यम्। अननुष्ठितकर्मणामपि विदितपदतदर्थसंगतीनां समधिगतशब्दन्यायतत्त्वानां गुणप्रधानभूतपूर्वापरपदार्थाकाङ्क्षासंनिधियोग्यतानुसंधानवतामप्रत्यूहं वाक्यार्थज्ञानोत्पत्तेः। अनुत्पत्तौ वा विधिनिषेधवाक्यार्थज्ञानाभावेन तदर्थानुष्ठानपरिहाराभावप्रसङ्गः। वाक्यार्थज्ञानतस्तु तदर्थानुष्ठानपरिहारे परस्पराश्रयः, वाक्यार्थज्ञाने सति तदर्थानुष्ठानपरिहारौ तदर्थानुष्ठानपरिहारतश्च वाक्यार्थज्ञानमिति। न च वेदान्तवाक्यानामेव स्वार्थप्रतीतौ कर्मापेक्षा नेतरवाक्याणामिति वक्तव्यम्। तादृशविशेषहेतोरभावात्। एवं च यज्ञेनेत्यादिना वाक्येन वेदानुवचनपदोपलक्षितस्य ब्रह्मचारिधर्मस्य यज्ञदानशब्दाभ्यामुपलक्षितस्य गृहस्थधर्मस्य तपोनाशकपदाभ्यामुपलक्षितस्य वानप्रस्थधर्मस्य नित्यस्य नित्येहितेन पापक्षयेण द्वारेण ज्ञानसाधनत्वं बोध्यते यज्ञादीनामिति तात्पर्यम्। न च यज्ञेनेत्यादितृतीयाश्रुत्या यज्ञादीनां साक्षादिष्यमाणज्ञानसाधनत्वावगमात्कथंतरां चित्तशुद्ध्यादिपारंपर्येण ज्ञानसाधनत्वं यज्ञादीनां प्रतिपाद्यते, इति चेन्मैवम्। ज्ञानस्य मानाधीनतया साक्षाद्यज्ञाद्यसाधनत्वेऽपि ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयाख्यचित्तशुद्धिद्वारा तेषां ज्ञानार्थत्वे पर्यवसानमित्याशयात्। न च पारम्पर्ये तृतीयाश्रुतिविरोध इति वाच्यम्। ज्वालाद्वारा पारम्पर्येऽपि काष्ठैः पचतीति प्रयोगदर्शनात्तृतीयोपपत्तेः। द्वारस्य व्यवधायकत्वमिति न वाच्यम्। औष्ण्यव्यवहितेऽप्यग्नौ दाहकत्वाङ्गीकाराद्व्यवहितेऽपि साधनत्वमविरुद्धम्। न च शुद्धेर्द्वारत्वे न प्रमाणमिति वाच्यम्। 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' 'अविद्यया मृत्युं तीर्त्वा' इति श्रुतिस्मृतिभ्यां कर्मणा पापनिवृत्तौ ज्ञानोत्पत्तिप्रतिपादनात्। तत्सिद्धं नित्यकर्मणामेव ज्ञाने विनियोगाज्ज्ञानोत्पत्तिप्रतिबन्धकैनोनिबर्हणरूपचित्तशुद्धिद्वारा ज्ञानोत्पत्त्यर्थं नित्यान्येव कर्माणि भगवदर्पणबुद्ध्याऽनुष्ठेयानि। काम्यानि तु अनुष्ठेयतया प्राप्तान्यपि सर्वाणि सफलानि परिहरणीयानीत्येकं मतम्। अपरं तु काम्यानां नित्यनैमित्तिकानां चानुष्ठीयमानानां सर्वकर्मणामात्मसंबन्धितया प्राप्तस्य फलमात्रस्य परित्यागं विचारकुशलास्त्यागशब्दार्थमाहुरिति। ननु नित्यनैमित्तिककर्मणां फलाश्रवणादविद्यमानस्य फलस्य कथं त्याग उच्यते। नहि वन्ध्यायाः पुत्रपरित्यागः संभवति। पुत्राभावाद्वन्ध्यायास्तत्त्यागायोगवन्नित्यनैमित्तिकानामफलानां कर्मणां फलत्यागानुपपत्तेरिति चेदुच्यते—

यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् ' अहरहः संध्यामुपासीत ' ' यावज्जीवमग्निहोत्रं जुहोति ' इत्यादिषु फलविशेषो न श्रूयते तथाऽप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्तयितुमशक्नुवन्विधिर्विश्वजिन्न्यायेन सामान्यतः किमपि फलमाक्षिपत्येव । अथवाऽस्मादेव भगवद्वचनान्नित्यानां फलमस्तीति गम्यते । निष्फलस्यानुष्ठानासंभवात् । तथा चाऽऽपस्तम्बः—' तद्यथाऽऽम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते, इत्यानुषङ्गिकं फलं नित्यानां दर्शयति । धर्मेण पापमपनुदति तस्माद्धर्मं परमं वदन्ति येन केन च यजेतापि वा दर्विहोमेनानुपहतमना एव भवति । तदाहुर्देवयाजी श्रेयानात्मयाजीत्यात्मयाजीति ह ब्रूयात्स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गꣳ संꣳस्क्रियत इदं मेऽनेनाङ्गमुपधीयते, इत्यादिश्रुतयश्च ज्ञानप्रतिबन्धकपापक्षयलक्षणं ज्ञानयोग्यतारूपपुण्योत्पत्तिलक्षणं चाऽऽत्मसंस्कारं नित्यानां कर्मणां फलं दर्शयन्ति । ननु च भोः फलत्यागेन पुनरपि निष्फलेषु कर्मस्वप्रवृत्तिः प्रसज्येतेति चेत्तन्न । सर्वेषामपि कर्मणां तत्तत्फलाय चोदितानामपि संयोगपृथक्त्वन्यायेन यज्ञेनेत्यादिश्रुत्या विविदिषार्थतया विनियोगात् । यथैकस्यैव खादिरत्वस्य ' खादिरो यूपो भवति ' इति क्रतुप्रकरणपाठात्क्रत्वर्थत्वम् ' खादिरं वीर्यकामस्य यूपं करोति ' इति फलसंबन्धश्रवणाच्च पुरुषार्थत्वं प्रमाणभेदात् । तदुक्तं महर्षिणा जैमिनिना ' एकस्य तूभयत्वे संयोगपृथक्त्वम् ' [ जै० सू० ४ । ३ । ५ ] इति । एकस्य कर्मण उभयत्वेऽनेकफलसंबन्धे संयोग उभयसंबन्धबोधकं वाक्यं तस्य पृथक्त्वं भेदः स हेतुरिति तदर्थः । यथा वा—एकस्यापि दध्नो दध्ना जुहोतीति कामसंयोगमनुपन्यस्य नित्यहोमसंयोगेन दधिविधानात्, तथेन्द्रियकामस्येति कामसंयोगोपन्यासेन दधिविधानाच्च वाक्यद्वयेन नित्यत्वं काम्यत्वं च विरुद्धम् । तथा पश्विष्टिसोमाग्निहोत्रादीनां सर्वेषामपि कर्मणां स्वोत्पत्तिविधिसिद्धानां तत्तत्फलसंयोगः प्रत्येकवाक्येन विविदिषासंयोगश्च यज्ञादिवाक्येन क्रियत इति उपपन्नमेकस्योभयार्थत्वम् । तदुक्तं संक्षेपशारीरके—

यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा
स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति ॥ इति ।

अतः प्रतिपदोक्तं सर्वं फलं त्यक्त्वा विविदिषार्थं सर्वकर्मानुष्ठानं घटत एवेति काम्यान्यपि फलाभिसंधिमकृत्वाऽन्तःकरणशुद्धये कर्तव्यानि । नह्यग्निहोत्रादिकर्मणां स्वतः काम्यत्वनित्यत्वरूपो विशेषोऽस्ति । पुरुषाभिप्रायभेदकृतस्तु विशेषः फलाभिसंधित्यागे कुतः । एवं च यज्ञेनेत्यादिवाक्येन नित्यानामेव कर्मणां विविदिषासंयोगश्रवणेनाऽऽत्मज्ञानार्थत्वात्, काम्यानां कर्मणां स्वफलेन सह स्वरूपतोऽपि परित्यागः संन्यासशब्दार्थ इति केचिन्मन्यन्ते । अपरे तु नित्यनैमित्तिककाम्यकर्मणां प्रतिपदोक्तफलाभिसंधित्यागस्त्यागशब्दार्थमाहुरिति । एवं च सफलकाम्यकर्मपरित्यागो

कार्यं स्वप्रयोजनमिति मत्वा सङ्गं कर्मणि ममतां फलं च त्यक्त्वा यत्क्रियते स त्यागः सात्त्विको मतः। स सत्त्वमूलः। यथावस्थितशास्त्रार्थज्ञानमूल इत्यर्थः। सत्त्वं हि यथावस्थितवस्तुज्ञानमुत्पादयतीत्युक्तम्। 'सत्त्वात्संजायते ज्ञानम्' [ भ० गी० १४ । १७ ] इति। वक्ष्यते च—

'प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी॥
[ भ० गी० १६ । १७ ] इति॥ ९॥

न द्वेष्ट्य*कुशलं कर्म कु+शले नानुषज्जते।
त्यागी सत्त्वसमाविष्टो मे×धावी छिन्नसंशयः॥ १०॥

एवं सत्त्वसमाविष्टो मेधावी यथावस्थिततत्त्वज्ञानस्तत एव च्छिन्नसंशयः कर्मणि सङ्गफलकर्तृत्वत्यागी न द्वेष्ट्यकुशलं कर्म कुशले च कर्मणि नानुषज्जते। अकुशलं कर्मानिष्टफलं कुशलं च कर्मेष्टरूपस्वर्गपुत्रपश्वन्नादिफलम्। सर्वस्मिन्कर्मणि ममतारहितत्वात्त्यक्तब्रह्मव्यतिरिक्तसर्वफलत्वात्त्यक्तकर्तृत्वाच्च तयोः क्रियमाणयोः प्रीतिद्वेषौ न करोति। अनिष्टफलं पापं कर्मात्र प्रामादिकमभिप्रेतम्। 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्' [ कठ० १ । २४ ] इति दुश्चरिताविरतेर्ज्ञानोत्पत्तिविरोधित्वश्रवणात्। अतः कर्माणि कर्तृत्वसङ्गफलानां त्यागः शास्त्रीयस्त्यागो न कर्मस्वरूपत्यागः॥ १०॥

---

वा केवलं सर्वकर्मणां फलाभिसंधित्यागो वा तथाऽपि एक एवार्थो न घटपटयोरिव संन्यासत्यागशब्दयोर्भिन्नजातीयार्थत्वं किंतु अन्तःकरणशुद्ध्यर्थं कर्मानुष्ठाने फलाभिसंधित्याग इत्येक एवार्थ उभयोरिति। अतः पञ्चमाध्यायोक्तसर्वकर्माणि मनसेति कर्मसंन्यासस्य चतुर्थाध्यायोक्तत्यक्त्वा कर्मफलासङ्गमिति फलमात्रत्यागेन कर्मानुष्ठानस्य च न परस्परं विरोधप्रसङ्गः।

* अकुशलमिति। अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकम्। + कुशल इति। कुशलं सुखकरं निदाघे मध्याह्नस्नानादिकम्। × मेधेति। शमदमसर्वकर्मोपरमगुरूपसदनादिसामवायिकाङ्गयुक्तेन मनननिदिध्यासनाख्यफलोपकार्यङ्गयुक्तेन च श्रवणाख्यवेदान्तवाक्यविचारेण परिनिष्पन्नं वेदान्तमहावाक्यकरणकं निरस्तसमस्ताप्रामाण्यशङ्कं चिदन्याविषयकमहं ब्रह्मास्मीति ब्रह्मात्मैक्यं ज्ञानमेव मेधा।

तदाह—

नहि देह*भृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

नहि देहभृता भ्रियमाणशरीरेण कर्माण्यशेषतस्त्यक्तुं शक्यम् । देहधारणार्थानामशनपानादीनां तदनुबन्धिनां च कर्मणामवर्जनीयत्वात् । तदर्थं च महायज्ञाद्यनुष्ठानमवर्जनीयम् । यस्तु तेषु महायज्ञादिकर्मसु फलत्यागी स एव 'त्यागेनैके अमृतत्वमानशुः' [ महानारा० १०।५ ] इत्यादिशास्त्रेषु त्यागीत्यभिधीयते । फलत्यागीति प्रदर्शनार्थः । फलकर्तृत्वकर्मसङ्गानां त्यागी त्रिविधः संप्रकीर्तितः । इति प्रक्रमात् ॥ ११ ॥

---

* देहभृतेति । मनुष्योऽहं ब्राह्मणोऽहं गृहस्थोऽहमित्याद्यभिमानिनाध्यासितेन देहं कर्माधिकारहेतुवर्णाश्रमादिरूपं कर्तृभोक्तृत्वाद्याश्रयं स्थूलसूक्ष्मशरीरेन्द्रियसंघातं बिभर्ति अनाद्यविद्यावासनावशाद्व्यवहारयोग्यत्वेन कल्पितमसत्यमपि सत्यतया स्वाभिन्नमपि स्वाभिन्नतया पश्यन्धारयति पोषयति चेति देहभृत् । निरस्तसमस्तदोषनिर्धूतनिखिलविशेषैकरसकूटस्थशुद्धबुद्धमुक्तनित्यज्ञानानन्दस्वयंज्योतीरूपं चिन्मात्रं ब्रह्मैव परमार्थः । तद्व्यतिरिक्तमनवरततन्तन्यमानानादिभावरूपाज्ञानकृतानेकविधज्ञानृज्ञेयादिभेददर्शननिमित्तजन्मजरामरणादि सर्वं संसृतिचक्रं तस्मिन्परस्मिन्नेव परिकल्पितं मिथ्याभूतम् । रज्जौ भुजंगवत् । यथैव हि रज्ज्वां तिमिरादिदोषवशात्सर्पभूदलनम्बुधाराः परिकल्प्यन्ते एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं सकलं जगन्मिथ्यारूपं यथावस्थितब्रह्मस्वरूपावबोधबाध्यं च । मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथाऽधिष्ठानभूतरज्जुतत्त्वज्ञाने प्रतीयमानसर्पादेर्निवृत्तिः । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसद्भ्यामनिर्वचनीयाऽनाद्यविद्याऽनादिभावरूपाज्ञानापरपर्याया । इयमेव सर्वजगन्मूलकारणत्वान्मूलाविद्येत्युच्यते । सा त्रिगुणाऽनादिरपि न सांख्यादिसंमतगुणत्रयसाम्यावस्थारूपप्रकृतिवन्नित्या । मोक्षदशायां तस्या विनाशात् ॥ सैवेश्वरशक्तिः । न च द्वैतमाशङ्कनीयम् । गुणानां गुण्यपेक्षया पृथगुपलम्भाभावेन गुणगुणिनोरभेदस्येव शक्तिशक्तिमतोः पृथगस्तित्वाभावात् ।

अत्र च प्रमाणमहमज्ञोऽहं ब्रह्म न जानामीत्यनुभवः । 'अनृतेन हि प्रत्यूढाः' [ छा० ८।३।२ ] 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' 'भूयश्चान्ते विश्वमायानिवृत्तिः' 'परास्य शक्तिर्विविधैव श्रूयते' [ श्वे० ६।८ ] इत्याद्याः श्रुतयश्च । किंच 'तत्त्वमसि' [ छा० ६।८।७ ] इति जीवब्रह्मैक्यप्रतिपादकश्रुतिरप्युक्ताविद्यायां प्रमाणम् । यदि च जीवब्रह्मणोर्वस्तुतो भेदः स्यात्तदा

तयोरैक्यं कुशाग्रधिषणेन गीर्वाणगुरुणाऽपि दुर्वचमित्यतो भेदस्य कल्पनिकत्वावश्यंभावात्, तदन्यथानुपपत्त्या तादृशकल्पनिकभेदज्ञानजनकत्वेनानिर्वचनीयानाद्यविद्या सिध्यति। भावरूपाज्ञानपदवाच्येयमविद्या कथं जाता केन च हेतुना ब्रह्मणा संबद्धेति न चोदनीयम्। अविद्यायास्तत्संबन्धस्य चानादित्वस्वीकारात्। स च संबन्धः कीदृगिति वीक्षायां प्रतिपाद्यते—यथा धूमधुमः स्वप्रतिपक्षभूते सलिले साक्षात्प्रवेशं कर्तुमसमर्थोऽपि भाजनादिद्वारेण सूक्ष्मरूपेण सलिले प्रविश्य तदीयं शैत्यं चापह्नुत्य तत्र स्वकीयोष्णत्वं तदीयत्वेन प्रदर्शयति तथेयमविद्या साक्षात्प्रवेष्टुमसमर्थाऽपि सूक्ष्मतरेण स्वकीयमूलरूपेण तत्र प्रविश्य तदीयं निर्विषयं निराश्रयं सामान्यपराकाष्ठाभूतं स्वरूपमपह्नुत्य स्वकीयं साश्रयत्वसविषयत्वरूपविशेषरूपं तत्र प्रदर्शयति। अज्ञानशक्तिर्हि स्वयं साश्रया सविषया च। तत्र विषय ईश्वरः। आश्रयो जीवः। एतद्द्वयमनयोर्मिथो भेदश्चानादिरेव। एतदेव साश्रयत्वं सविषयत्वं ज्ञानरूपे ब्रह्मणि तदीयत्वेन प्रदर्शयति। साश्रयत्वेन सविषयत्वेन च भासमानं यज्ज्ञानं तदेव महत्तत्त्वम्। एतदारभ्य सर्वं सादि, न त्वनादि। ततश्चैकमपि ज्ञानरूपं ब्रह्म धर्मधर्मिभावेन विषयविषयिभावेन च भिन्नवद्भासते। ज्ञातृरूपेण ज्ञेयरूपेण च भासत इति यावत्। तत्र ज्ञाताऽहंकारः। ज्ञेयं शब्दतन्मात्रादि। भासमानं चैतत्सर्वमविद्यापेक्षया परिणामः। ब्रह्मापेक्षया तु विवर्त एव। परिणामो नामैकस्यैव वस्तुनः पूर्वावस्थात्यागपुरःसरमवस्थान्तरप्राप्तिः। पूर्वावस्थामपरित्यज्यैवावस्थान्तरभानं विवर्त इत्याचक्षते। यथा—एकस्या एव मृदो मृदवस्थाप्रहाणेन कम्बुग्रीवादिमदवस्थाया आपत्तिः। रज्जुरूपेणावस्थितस्यैव द्रव्यस्य सर्पात्मनाऽवभासनम्। तन्मात्रशब्देन सूक्ष्मभूतान्युच्यन्ते। यथा दधिरूपेण परिणममानस्य पयसो मध्यमावस्था तद्वद्भूतरूपेण परिणममानस्य द्रव्यस्य ततः पूर्वा या काचिदवस्था तद्विशिष्टं द्रव्यं तन्मात्रशब्देनोच्यते। शब्दतन्मात्रं सूक्ष्माकाशम्। तस्मात्स्पर्शतन्मात्रं सूक्ष्मो वायुरित्यर्थः। एवं क्रमेण सूक्ष्माणां पञ्चभूतानामुत्पत्तिः। सूक्ष्माच्च तत्तद्भूतात्स्थूलस्य तत्तद्भूतस्योत्पत्तिः।

एतदेवाज्ञानं जीवत्वेश्वरत्वप्रापकोपाधिभूतम्। अस्य च द्विविधा शक्तिरावरणशक्तिर्विक्षेपशक्तिश्च। रजःसत्त्वाभ्यामनभिभूतं तम आवरणशक्तिः। सा च घटो नास्ति न प्रकाशत इति व्यवहारकारणम्। तमःसत्त्वाभ्यामनभिभूतं रजो विक्षेपशक्तिः। सा चाऽऽकाशादिप्रपञ्चोत्पत्तिहेतुः। आवरणशक्तिप्रधानमज्ञानमविद्येत्युच्यते। विक्षेपशक्तिप्रधानमज्ञानं मायेत्युच्यते। मायोपहितं चैतन्यमीश्वरः। अविद्योपहितं चैतन्यं जीवः। विक्षेपशक्तिमदज्ञानोपहितस्वरूपेणैव जगदुपादानकारणमीश्वरः। एवं च परमात्मन एव मायोपाधिकमीश्वरत्वमविद्योपाधिकं च जीवत्वम्। जडं तु प्रातिभासिकं मिथ्यैवेत्येकमेव तत्त्वं परमार्थः। परमात्मनः सकाशादभिन्नाऽपि भिन्नेव त्रिगुणा परमात्मशक्तिरज्ञानादिपदवाच्या। तदुपहितः परमात्मा जगतो मूलप्रकृतिः। अज्ञानेन परमात्मन्येवेदं

जगद्भासत इत्ययं विवर्तवादः । परमात्मविवर्तभूतं प्रातिभासिकं चेदं जगन्मिथ्यैव नतु सत्यम् । अनिर्वचनीयं चेदं जगदज्ञानदोषेण भासत इति अनिर्वचनीयख्यातिः । अनिर्वचनीयख्यातिर्नाम कार्यस्य सत्त्वेनासत्त्वेन च निर्वक्तुमशक्यस्य ख्यातिः प्रतीतिः । यथा शुक्तिकायां भासमानं रजतम् । तद्धि न सत्यम् । नेदं रजतमिति बाधानुपपत्तेः । नाप्यसत्यम् । संप्रतीदं रजतमिति प्रतीत्यनुपपत्तेः । किंतु यदा शुक्तिकेदंत्वेन ज्ञायते न तु शुक्तिकात्वेन तदा तादृशं मूलाविद्याकार्यभूतं शुक्तिकाज्ञानमिदंतया जायमानज्ञानसहकृतं चाकचक्यादिसमुद्बोधितरजतसंस्कारसहकृतं च रजताकारेण परिणमते । तदेव च तत्र रजतज्ञानविषयः । तदुक्तमभियुक्तैः—

‘ सत्त्वे न भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिबाधने ।

सदसद्भ्यामनिर्वाच्याविद्याऽऽविद्यैः सह भ्रमः ’ ॥ इति ।

आविद्यैरविद्यापरिणामभूतै रजतादिभिरित्यर्थः । अतोऽनिर्वचनीयमेव । प्रपञ्चस्यापि अनाद्यविद्यापरिणामभूतत्वादनिर्वचनीयत्वमेव । तथाहि — प्रतीयमानमिदं सर्वं जगन्न सत् । ज्ञानिदृष्ट्या बाधानुपपत्तेः । ‘नेह नानाऽस्ति किंचन’ [बृ० ४ । ४ । १९ ] इतिश्रुतिविरोधाच्च । नाप्यसत् । ज्ञानदशातः प्राक्काले अस्मदादीनामपि प्रतीत्यनुपपत्तेः । तच्च विक्षेपशक्तिमत्या मूलाविद्याया महत्तत्त्वाहंकाराकाशादिद्वारेण कार्यभूतम् । आवरणशक्तिमत्या मूलाविद्यायाः कार्यं च लोकप्रसिद्धं शुक्त्यज्ञानादि । तथा चानिर्वचनीयस्य जगतो या प्रतीतिः साऽनिर्वचनीयख्यातिरेव । न तु सत्ख्यातिः । यत्प्रतीयते तन्न सत् । यच्च सद्ब्रह्म न तत्प्रतीयते । तस्य प्रतीतिरूपत्वेन प्रतीतिविषयत्वाभावात् । अतः सतः ख्यातिर्दुर्वचा ।

अयं च मायावादः श्रीमच्छंकराचार्यैरपूर्व एव स्वकपोलकल्पनयोद्भावित इति न मन्तव्यम् । यतो मायावादमसहमानैरपि रामानुजाचार्यैः सूत्रकारात्प्रागप्ययं मायावाद आसीदित्यङ्गीकृतमस्ति । तथा च श्रीभाष्ये [ पृ० २३६ । पं० २० ] ‘ सर्वत्र प्रसिद्धोपदेशात् ’ [ ब्र० सू० १ । २ । १ ] इति सिद्धान्तसूत्रं प्रणयद्भिः सूत्रकारैर्मनस्यनुसंहितः पूर्वपक्षः प्रदर्शितः—‘ अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतः सन्ननाद्यविद्यया देवमनुष्यतिर्यक्स्थावरात्मनाऽवतिष्ठते ’ इति । तथा तत्रैव श्रीभाष्ये [ पृ० ३३६ । २ ] ‘ सुषुप्त्युत्क्रान्त्योर्भेदेन ’ [ ब्र० सू० १ । ३ । ४३ ] इत्येतत्सूत्रनिरसनीयत्वेन सूत्रकृदभिमताऽऽशङ्का प्रदर्शिता— ‘ प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति । ऐक्योपदेशात् । द्वैतप्रतिषेधाच्च । शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति व्यपदिश्यत इति । तथा च सूत्रकारात्प्रागप्ययं मायावाद आसीदिति सिद्धम् । अयं च मायावादो ब्रह्मसूत्रकाराणामनभिमत इति न कल्प्यम् । ‘ मायां

तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [ श्वे० ४ । १० ] इति श्रुतावेव मायावादस्योपन्यासात् । न च सत्त्वायाः प्रकृतेरेव विचित्रार्थसर्गकरत्वान्मायाशब्दवाच्यत्वमिति वाच्यम् । मायाशब्दस्यानिर्वचनीयार्थकत्वेन प्रसिद्धत्वात् । 'तस्मिन्मरुशुक्तिकास्थाणुस्फटिकादौ जलरूप्यपुरुषरेखादिवल्लोहितशुक्लकृष्णा गुणमयी गुणसाम्याऽनिर्वाच्या मूलप्रकृतिरासीत्' इति निरञ्जनभाष्यगृहीतश्रुतिविरोधाच्च । तथा च मायाया अनिर्वचनीयत्वाद्विवर्तरूपं जगदुपादानत्वं ब्रह्मणः सिध्यति । सूत्रकृद्भिश्चार्यैर्विवर्तवादः स्फुटमेव प्रतिपादितः । तथा च सूत्रम्—'परिणामिविवर्तिनौ' [ ब्र० सू० सि० १ । १ । ७ ] इति । अस्यार्थः—द्विविधं ह्युपादानं परिणामि विवर्ति च । तत्र घटयुत्पत्तौ मृदादिः परिणामी । शुक्तिकारजतादौ तु शुक्तिकादिर्विवर्ती । विवर्तोपादानभूतः पुरुष एव ब्रह्मशब्देन व्यपदिश्यते । बृंहणाद्ब्रह्म । बृंहणं व्यापनम् । उपादानकारणं हि कृत्स्नं कार्यजातं व्याप्नोत्येव । यथा मृदादिर्घटशरावादि प्रतीति ।

यत्तु सर्वत्र बृहत्त्वगुणयोगेन ब्रह्मशब्दः । बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः [ श्रीभा० पृ० २ प० ९ ] इत्युक्तं तन्न । निर्गुणस्य ब्रह्मणो गुणकृतमहत्त्वासंभवात् । अथ सगुणमेव ब्रह्मास्माभिरङ्गी क्रियत इति चेत्तत्रोच्यते—बृहत्त्वं हि परिमाणविशेषः । अनवधिकातिशयबृहत्त्वं च परममहत्त्वमेव । तच्च स्वरूपत एव संभवति न गुणतः । गुणेषु महत्त्वासंभवात् । वैशेषिका अपि गुणेषु गुणानैव स्वी कुर्वन्ति । गुणेष्वाश्रयद्वारा गुणाः संभवन्तीति चेत्तस्य स्वरूपगतमहत्त्व एव पर्यवसानमिति गुणैश्चेत्युक्तिर्न विशेषार्थसाधिका । न च रामानुजाचार्यैर्ब्रह्मनिष्ठस्य गुणभूतस्यापि ज्ञानस्य द्रव्यत्वाङ्गीकारात्तत्र महत्त्वसंभव इति वाच्यम् । तावताऽपि गुणैरिति बहुवचनासंगतेस्तादवस्थ्यात् । ननु पूजितत्वमेव बृहत्त्वमिति चेत्तन्न । ईदृशस्य बृहत्त्वस्य लोकेऽप्रसिद्धत्वात् ।

'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः ।'

इतिन्यायेन लोकप्रसिद्धार्थकबृहत्वानुसारेणैव ब्रह्मशब्दव्युत्पत्तेर्वाच्यत्वात् । क्वाचित्कप्रयोगस्तु नेप्सितार्थसाधकः । बृहत्त्वं च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थ इत्यप्ययुक्तम् । अनवधिकातिशयांशस्य शक्यतावच्छेदकानन्तर्गतत्वात् । गुणवाचकानां हि शब्दानां तत्तद्गुणः सामान्यत एव प्रवृत्तिनिमित्तम् । न तु तत्र निरतिशयत्वाद्यन्तर्भवति । गजप्रासादादिषु महत्त्वस्याऽऽकाश इव निरतिशयत्वाभावेऽपि महान्गजो महान्प्रासाद इत्यादयो व्यवहारा मुख्या एव सर्वैरङ्गी क्रियन्ते न तु गौणाः । तथा च बृंहणाद्ब्रह्मेति सिद्धम् । उक्तं जगद्विवर्तोपादानभूतं ब्रह्मैवाऽऽत्मशब्देन व्यपदिश्यते । एवं च मायावादिनामद्वैतवेदान्तिनां मते विवर्तवादः सर्वत्रानिर्वचनीयख्यातिश्चेति सिद्धं भवति ।

तमिमं मायावादममृष्यमाणानां रामानुजाचार्याणां मतेन परमात्मा स्वेन रूपेण कूटस्थनित्यः । चिदचिद्रूपशरीरविशिष्टरूपेण तु परिणामिनित्यः । विशिष्टरूपेणैवाद्वितीयः । ब्रह्माद्वैतं तु प्रकारद्वैतम् । परमात्मा सगुण एव नैव निर्गुणः । गुणभूतं ज्ञानं न सन्मात्ररूपं किंतु सद्विषयकम् । परमात्मैवेश्वरः । तच्छरीरभूतो जीववर्गो जडवर्गश्च ततो भिन्न एवेति चिदचिदीश्वररूपं तत्त्वत्रयम् । परमात्मनः सकाशाद्वस्तुतो भिन्नं त्रिगुणात्मकं प्रधानं जगतो मूलप्रकृतिः । प्रधानमेवान्तर्यामीश्वरसांनिध्याज्जगदाकारेण परिणमते । अयं परिणामवादः । वस्तुतः सत्यमेव जगत्प्रतीयत इति सर्वत्र सत्ख्यातिः । शुक्तिरजतस्थले स्वप्नादौ च सत्या एवार्थाः प्रतीयन्ते । इति सिद्धान्ताः ।

तत्र संक्षेपत इत्थं तन्मतप्रक्रिया—प्रमाणसिद्धं वस्तु तत्त्वशब्दवाच्यं भवति । तत्तत्त्वं त्रिप्रकारकम् । जडं जीव ईश्वरश्चेति भेदात् । जडशब्दवाच्यं पाञ्चभौतिकं शरीरादिकमखिलं जगत् । तदपेक्षया स्वरूपेण स्वभावेन चात्यन्तविलक्षणस्तदन्तर्यामी जीवात्मा । जीवस्याप्यन्तर्यामी निखिलहेयगुणरहिततया कल्याणैकतानतया च जीवापेक्षयाऽत्यन्तविलक्षण ईश्वरः । स च सर्वावस्थजीवाजडांश्च पदार्थान्व्याप्य तेषामन्तर्यामी भूत्वा नियन्ता च भवति । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' [ ना० १३ । १ ] इत्यादिश्रुतेः । अयं च जीवेश्वरभेदो वास्तव एव न काल्पनिकः । 'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' [ मु० ३ । १ । ३ इत्यादिश्रुतिषु सर्वाविद्योपाधिविनिर्मुक्तस्य जीवस्य मुक्त्यवस्थायामपीश्वरापेक्षया भेदवर्णनात् ।

तत्र जडं जीवश्चेति द्वयमीश्वरस्य शरीरं भवति । ईश्वरः शरीरी । यस्य च यच्छरीरं भवति स तस्य शरीरस्याऽऽत्मा भवति । आत्मशरीरशब्दौ हि स्वामिभृत्यशब्दवत्संबन्धिकार्थकौ । आत्मनः शरीरं शरीरस्याऽऽत्मेति । अतति व्याप्नोतीत्यात्मा । यो यद्व्याप्नोति तत्तस्य शरीरम् । ईश्वरो हि सर्वं सजीवं जगदन्तर्यामितया व्याप्नोति । न तु तमन्यः कश्चिदन्तर्यामी भूत्वा व्याप्नोति । अत ईश्वरः परमात्मशब्देनोच्यते । जीवात्मनि तु नैतादृशं परमत्वम् । ईश्वरस्य जीवान्तर्यामित्वात् । ईश्वरः केवलमात्मैव न कस्यचिदपि शरीरम् । जीवस्तु जडस्याऽऽत्मा शरीरं चेश्वरस्य भवति । जडं तु शरीरमेव न कस्याप्यात्मा भवति ।

स चायं परमात्मा सगुण एव न तु निर्गुणः । निर्गुणे जगत्कारणत्वस्य सुतरामसंभवात् । लोकेऽपि घटादिकार्योत्पादयितॄणां कुलालादीनां तत्तत्कार्यपरिनिष्पत्त्युपयोगिगुणविशेषस्य दर्शनात् । न च 'निर्गुणम्' । [ चू० ७ । २ ] इति श्रुतिविरोधः शङ्कनीयः । तत्रत्यगुणपदस्योक्तानुमानानुसारेण विशेष्यगुणपरत्वाद्धेयगुणरहितमित्यर्थः । हेया गुणास्तु पातकजरामरणशोकदुःखक्षुत्तृषादयः । 'सत्यकामः सत्यसंकल्पः' इत्यादयः शुभा गुणाः । सर्वे

गुणनिषेधे हि ' सत्यकामः ' [ छा० ८ । १ । ५ ] इतीयं श्रुतिः पीड्येत । अतश्च सविशेषत्वमपि तस्य सिध्यति ।

युज्यते चैतत् । ' यतो वा इमानि भूतानि जायन्ते ' [ तै० ३ । १ । १ ] इत्यादिश्रुतिषु ब्रह्मणो जगत्कारणत्वं प्रतिपाद्यत इति तावन्निर्विवादम् । तथा च जगद्रूपकार्योत्पत्त्युपयोगी सामर्थ्यविशेषस्तत्रावश्यमाश्रयणीयः । येन स सूक्ष्मचिदचिच्छरीरद्वारा सृष्टेरुपादानकारणं भवति येन च जीवानां स्वप्नावस्थायां तत्तत्पुरुषमात्रानुभाव्यांस्तत्तत्कालावसानांश्च हस्त्यादिपदार्थानीक्षणमात्रेण सृजति । ततश्च सविशेष एव न तु निर्विशेष इति रामानुजमतम् ।

किंच निर्विशेषं वस्तु लोके क्वापि नानुभूयतेऽतः सर्व एव ह्यनुभवः सविशेष एवेति निर्विशेषं ब्रह्मेति मायावादिनां स्वगृहीयः समय इति । तत्रैवं प्रोच्यते—योऽयं घटमहमद्राक्षमित्यादिर्लोके सविशेषानुभवः परमात्मशक्तिपरिणामभूतजगदन्तर्गतो न तस्यापलापोऽस्माभिः क्रियतेऽपि तु यो यो विशेषो घटशरावोदञ्चनादिर्जगति परिदृश्यते स सर्वोऽपि तत्प्रकृतिभूतासद्गतविशेषहीनात्तत्सामान्यान्मृदादेः सकाशाज्जायमानो दृश्यते । अतो यो यो विशेषः स स तत्सामान्यप्रकृतिक इति व्याप्तेः सर्वत्राव्यभिचारित्वाल्लोकप्रसिद्धसविशेषानुभवमूलभूतो निर्विशेषानुभवस्तयाऽपलप्यते तदिदं महदाश्चर्यं भवति । सर्वं हि लौकिकं ज्ञानमन्तःकरणवृत्तिविशेषरूपं साश्रयत्वाद्विषयसहितत्वाच्च विशेषरूपमेव । तदपेक्षया निर्विषयं ज्ञानं सामान्यभूतम् । ज्ञानं हि प्रथमत आश्रयमपेक्षते तदनन्तरं विषयम् । तदपेक्षयाऽपि निराश्रयं सामान्यभूतम् । अत्र धियो धीत्वमवशिष्यते । तदपेक्षयाऽपि सद्रूपं सामान्यम् । यत्र च धियो धीत्वमपि नास्ति किंतु सामान्यपराकाष्ठाभूतम् । एतदेव च ' सत्यं ज्ञानम् ' [ तै० २ । १ ] इति श्रुत्या प्रतिपादितं ज्ञानरूपं ज्ञानसामान्यपराकाष्ठाभूतमत एव निर्विशेषं ब्रह्म । प्रसिद्धश्चायं निर्विशेषानुभवस्तुरीयावस्थायाम् । सुषुप्तिजागृत्योः संधिभूतः क्षणस्तुरीयावस्था । तत्र यज्ज्ञानं तत्सर्वविशेषरहितं सामान्यैकस्वरूपं पूर्वसंस्काराणामविनष्टत्वात्सद्यः परिणामोन्मुखं चावतिष्ठत इत्यनुभवसिद्धमिति ।

अत्रोच्यते–अयं चेश्वरः सगुणः सविशेष उद्भूतशक्त्या कल्प्यते । ननु किमर्थं शक्त्या कल्प्यतेऽयमेव मुख्योऽस्तु जगदुत्पत्तिस्थितिप्रलयानां तेनैव सिद्धेः, न तु निर्गुणं निर्विशेषं तद्व्यतिरिक्तं किंचित्, इति चेन्न । परमात्मस्वरूपं हि श्रुत्येकसमधिगम्यं श्रुतौ यथा वर्णितं तादृगेवाङ्गीकर्तव्यम् । श्रुतौ च परमात्मस्वरूपं क्वचिन्निर्गुणं क्वचित्सगुणं च वर्णितं दरीदृश्यते । द्विविधश्रुतिनिर्वाहाय चानिरुपाधिकं परमार्थिकं ब्रह्मस्वरूपं मुख्यमेकमपरं तूपाधिपरिकल्पितमवास्तवमित्येव कल्पना ज्यायसी । तथा हि ब्रह्म स्वापेक्षयाऽभिन्नाया शक्तेस्तदाश्रयम् । शक्तेरनुद्भू-

तत्वादीदृशं तादृशमिति वक्तुमशक्यं निर्गुणं निर्विशेषमेकं सद्रूपम्। सृष्टिकाले च सा शक्तिः स्वाश्रयमुपजीव्योद्भूताम्बुनः स्वकाशाद्भिन्नवद्भिन्नेव भवति। अतस्तत्प्रतिबिम्बितो जीवः स्वमपि परमात्मनः सकाशाद्भिन्नमात्मानं मन्यते। एवं तादृशशक्तिपरिणामभूतं जगच्च परमात्मनः सकाशाद्भिन्नं मन्यते। तद्गतशक्तिमद्ब्रह्मैवेश्वर इत्याख्यम्। इदमेव परं कल्पितं ब्रह्मस्वरूपं सगुणं सविशेषं चेति।

ननु निर्गुणश्रुतेर्हेयगुणविरहे तात्पर्यमुक्तमिति चेत्तन्न। सामान्यमुखप्रवृत्तस्य गुणशब्दस्य संकुचितार्थत्वे प्रमाणाभावात्। अन्यथा बाह्येन्द्रियग्राह्यरूपरसादिगुणरहितत्वाज्जीवस्यापि निर्गुणपदवाच्यतापत्तिः स्यात्। निर्गुणमित्युक्ते हि यत्र कीदृशोऽप्येकोऽपि गुणो नास्ति तन्निर्गुणपदवाच्यमिति स्वरसतः सर्वजनीना प्रतीतिर्भवति। संकुचितार्थत्वे तादृशप्रतीतिविरोधः स्पष्ट एव। अथ च पृथिव्यादिभूतानामपि सुखदुःखादिगुणयोगाभावान्निर्गुणपदवाच्यता स्यात्। तथा च निर्गुणमिति पूर्वोक्तश्रुत्या किमप्यधिकं नोक्तं भवेत्, इति श्रुतिवैयर्थ्यापातश्च प्रसज्येत।

किंच निर्गुणश्रुत्या परमात्मनि गुणानां निषेधः प्रतिपाद्यते। निषेधस्य च प्राप्तिपूर्वकत्वात्परमात्मनि गुणप्राप्तिर्वक्तव्या। सा च न प्रत्यक्षतः। परमात्मनः प्रत्यक्षविषयत्वाभावात्। किं त्वनुमानतः। परमात्मनो जगज्जन्मस्थितिलयकर्तृत्वं ज्ञात्वा तेन हेतुना जन्माद्युपयोगिनां सर्वज्ञत्वादिगुणानां तत्रानुमानं संभवति। न तु हेयगुणानां केनापि प्रकारेण तत्रानुमानसंभवः। तथा च हेयगुणानां कथमपि प्राप्त्यभावात्कथं तन्निषेधे श्रुतितात्पर्यं कल्पयितुं योग्यं भवेत्।

अपि च निर्गुणब्रह्मस्वीकारादेव 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' [ तै० २। ४ ] इति श्रुतिः संगच्छते। अन्यथा ब्रह्मणः सगुणत्वेन वाग्विषयत्वसंभवाद्रामानुजीयैः सगुणत्वाङ्गीकाराच्च तदसंगतिः स्यात्। न च गुणानामसंख्येयत्वेन परिच्छेदाभावात्कार्त्स्न्येन वाग्विषयत्वाभावे श्रुतितात्पर्यमस्त्विति वाच्यम्। अप्राप्येतिशब्दस्वारस्यभङ्गापत्तेः। गुणानामन्तमप्राप्येति व्याख्याकरणं तु अध्याहारप्रसक्तत्वात्क्लेशपराहतम्। अप्राप्येत्यस्य कर्माकाङ्क्षायां वाक्कर्तृकनिवर्तनावधित्वेन यत इति यच्छब्दनिर्दिष्टस्यैव प्रत्यासत्तिन्यायेन ग्रहीतुमुचितत्वात्। न चाप्राप्येत्यस्य किमिति कर्माकाङ्क्षायां सत्यां यच्छब्दनिर्दिष्टस्यैव हेयाहेयसकलगुणविशिष्टस्य परमात्मन एवाऽऽक्षेपोऽस्तु। तत्र वाणीकर्तृकप्राप्त्यभावो विशेष्यभूते परमात्मनि वाग्विषयत्वबाधितः संस्तद्विशेषणीभूतगुणेष्वपि वाधितो विशेषणविशेषणे तदीयगुणनिष्ठत्वाख्ये पर्यवसास्यति। यथा शिखी ध्वस्त इत्यत्र ध्वंसस्य विशेष्ये शिखाविशिष्टे पुरुषे वाधात्तद्विशेषणशिखायामन्वयाच्छिखा ध्वस्तेति पर्यवसानं तद्वत्। तदुक्तम्—'विधिप्रतिषेधौ विशेषणे पर्यवस्यतः

सति विशेषे बाधे ' इति । इति वाच्यम् । परमात्मनः सकलगुणविशिष्टत्वेन तत्राप्रकृतत्वात् । उक्तन्यायेन निर्वाहस्यागतिकगतित्वाच्च ।

एतेन ' यतो ब्रह्मानन्दात्तत्काशात्तस्य पारमप्राप्य वाचां मनसश्च निवृत्तिरित्यर्थः.' इत्यपास्तम् । ' ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः ' [ तै० २ । ८ ] इत्येवं ब्रह्मानन्दे वाग्विषयतायाः श्रुत्यैव स्वीकाराच्च । मनुष्यानन्दस्य जीवैरनुभूतत्वेनोत्तरोत्तरं शतगुणितक्रमेण ब्रह्मानन्दस्य मनसा कल्पयितुं शक्यत्वाच्च । निर्गुणस्य तु वस्तुनो लोके क्वाप्यनुभवाभावेन निर्गुणं ब्रह्म न मनसा कल्पयितुं शक्यम् । न च त्वदभिमतस्य निर्विशेषब्रह्मणोऽपि ' निर्गुणम् ' [ चू० ७ ] इति श्रुत्या प्रतिपादितत्वेन वाङ्निवृत्तिश्रुतिरसंगतेति वाच्यम् । वाचो निवर्तन्त इत्यस्य वाचो विधिमुखेन ब्रह्म प्रतिपादयितुं न प्रभवन्तीत्यर्थात् । निर्गुणमिति श्रुतिस्तु नेदृशमिति प्रतिपादयति । किंतु केवलं गुणान्निषेधति । सर्वमेव हि वाक्यं नेदंतया वस्तु बोधयितुमर्हति । नहीक्षुक्षीरगुडादीनां मधुररसभेदः शक्य आख्यातुं लेशतोऽपि गुरोरपि । तेन लौकिकेऽर्थे यदा गतिरीदृशी तदा कैव कथा परमात्मन्यलौकिके ।

द्विविधा हि वस्तुप्रतिपादनसरणिरभिप्रेयते विद्वद्भिः । विधिमुखेनैकाऽपरा निषेधद्वारेति । यद्धि वस्तु चक्षुःश्रोत्रादिबहिरिन्द्रियग्राह्यरूपरसाद्यन्यतमगुणवद्वर्तते तदयमितीयमितीदमित्येवमिति च निर्देष्टुं शक्यते सा विधिमुखेन प्रतिपादनस्य रीतिः । तथाऽयं स्पर्शवान्वायुः । इयं गन्धवती पृथिवीत्यादिः शब्दग्राह्यं निर्देशः । यच्च न तथा केवलं स्वानुभवैकगम्यमत एव स्वसंवेद्यमिति प्रथितं तत्र पूर्वोक्तवस्तुवन्निर्देष्टुं पार्यते तादृशो वस्तुन इतरव्यावृत्त्यैव परिचयो दातुं शक्यः । यथा द्राक्षायाः कीदृङ्माधुर्यमिति पृष्टे किमुत्तरयेदुत्तरयिता । नहीत्थं तदिति वक्तुं पार्यते । किंतु न सितासदृक्षं न पिण्डखर्जूरसमं नापि गुडतुल्यमित्यन्यमधुरवस्तुमाधुर्यप्रतिषेधेनैव द्राक्षामाधुर्यं परिचीयते । यतः स्वीयरासनानुभववेद्यं तद्वर्तते । निषेधमुखेन प्रतिपादनशैलीयम् ।

यथा वा कुत्रचिन्महाजनौघसंकुले प्रदेशे जनसंमर्दात्स्वभर्तुः सकाशात्परिभ्रष्टा कुलवधूस्तत्र स्वभर्तारमपश्यन्ती अत एव चकिता, तस्या अभिप्रायज्ञेन केनचित्साधुपुरुषेण कमप्येकं नरं तस्याः पुरत आनीय किमयं ते भर्तेति पृष्टे नेत्युत्तरयति । एवं पुनरन्यमानीय पृष्टे पूर्ववदेव निषेधद्योतकं शिरश्चालनं करोति । इत्थं क्रमेण यदा तत्पतिरेव तत्पुरतो यदृच्छया निर्दिष्टो भवति तदाऽयमेव मे पतिरिति नायमिति वा किमपि न ब्रूते किंतु लज्जयाऽधोमुखीभूय तूष्णींभावमालम्बते । तेनायमेवास्याः पतिरिति ज्ञायते विचारशीलैरिति । ततश्चालौकिकस्य परमात्मनो ' नेति नेति ' इति निषेधद्वारेणैव यथाकथंचित्प्रतिपादनमभिमतम् । तद्वन्निर्गुणश्रुतिः केवलं गुणान्निषेधति न तु इत्थमिति प्रतिपादयति ।

अवश्यं चैतद्विज्ञेयम् । अन्यथा ‘ यतो वाचो निवर्तन्ते ’ इति श्रुतिः स्वयमेव वागविषयत्वेन ब्रह्म प्रतिपादयन्ती मूकोऽहमित्युक्तिरिव व्याहता स्यादिति भावः ।

स च परमात्मैकेनैव रूपेण सदा वर्तमानत्वात्कूटस्थनित्य इत्याख्यायते । अयमेव परमात्मा जगत उपादानकारणं निमित्तकारणं च भवति । उपादानत्वं च विकारयोग्यस्यैव वस्तुनः संभवति मृदादेरिव । तथा च परमात्मनो विकारित्वे कथं कूटस्थनित्यत्वं चेत्तत्रोच्यते—परमात्मा न साक्षादुपादानकारणं भवति किंतु शरीरद्वारा । प्रधानशब्दवाच्यं परमात्मशरीरं स्थूलजगद्रूपेण परिणमते । तथा च परमात्मशरीरस्य सूक्ष्मस्य स्थूलरूपेण परिणामेऽपि शरीरान्तर्यामिणः परमात्मस्वरूपस्य कूटस्थत्वानपगमात् ।

अद्वैतमित्युक्तिस्तु स्वव्यतिरिक्तसमस्तचेतनाचेतनानां नानात्वेऽपि स्वस्मात्तेषां भेदेऽपि च तद्विशिष्टस्यैकत्वात् । हस्तपादाद्यवयवभेदेऽपि तद्विशिष्टस्य शरीरिणश्चैत्रस्यैकत्ववत् । अत एव रामानुजीयं मतं विशिष्टाद्वैतमिति गीयते । एतदेव विशिष्टाद्वैतं प्रकारद्वैतमिति चोद्घुष्यते ।

परमात्मनिष्ठं ज्ञानं न सन्मात्ररूपम् । सन्मात्रं ह्यस्तित्वरूपम् । ज्ञाने च घटोऽस्तीत्यादौ घटादिरिव तदस्तित्वं विषयो भवति । विषयविषयिणोश्च भेदो लोकप्रसिद्ध एव । नहि घटादिर्विषयो ज्ञानस्वरूप इति कोऽपि प्रत्येति । तथा चास्तित्वरूपाद्विषयाद्विषयिणो ज्ञानस्य भेदोऽवश्यं स्वीकार्यः । जगतः साक्षादुपादानकारणं तु परमात्मशरीरभूतं प्रधानादिकं सूक्ष्मं जगदेव । प्रधानादिकं चान्तर्यामिरूपेण चित्संबन्धादेव परिणमते न तु स्वातन्त्र्येण । प्रधानं च त्रिगुणात्मकमविद्यामायाशब्दवाच्यमपि नानिर्वचनीयम् । अविद्यामायाशब्दयोः प्रधानरूपेऽर्थेऽनिर्वचनीयत्वरूपेणाप्रवृत्तेः । किंतु ज्ञानविरोधित्वमविद्याशब्दप्रवृत्तिनिमित्तं विचित्रसृष्टिकरत्वं च मायाशब्दप्रवृत्तिनिमित्तं बोध्यम् । अतः प्रधानपरिणामभूतं जगद्रूपीदं सत्यमेव न तु प्रातिभासिकत्वेन मिथ्यात्वं जगतः कल्पनीयम् ।

अपि च प्रधानपरिणामभूतस्यास्य जगतो ज्ञानिदृष्ट्याऽप्यबाध्यमानत्वेन न कथंचिदपि मिथ्यात्वोपपत्तिर्भवति । अयं च परिणामवादो ब्रह्मसूत्रकाराणामभिमत इति ‘ परिणामात् ’ [ ब्र० सू० १ । ४ । २७ ] इति सूत्रादवगम्यते ।

ननु यदि प्रपञ्चस्य सत्यत्वमङ्गीक्रियेत तदा तत्प्रतीतेर्भ्रान्तित्वाभावात्तत्त्वज्ञानेन तन्निवृत्तेर्वक्तुमशक्यत्वात्तत्त्वज्ञानप्रतिपादकैतच्छास्त्रवैयर्थ्यमिति चेद्भ्रान्तोऽसि । देहात्मभ्रमजीवस्वातन्त्र्यभ्रमादीनां निरासार्थमात्मयाथात्म्यप्रतिपत्त्यर्थं च शास्त्रस्यात्यन्तावश्यकत्वात् । जीवस्य तत्तत्कर्मकर्तृत्वं तदन्तःप्रविष्टपरमात्मायत्तमेव । ‘ अन्तः प्रविष्टः शास्ता ’ [ तै० आ० ३ । ११ । २ ] इत्यादिश्रुतिभिः । दुःखादिजडवस्तूनामनिशं जायमानः परिणामोऽप्यन्तर्यामीश्वराधीन एव । तथाच तत्त्वज्ञानेन देहात्मभ्रमो स्वातन्त्र्यभ्रमो च निरस्ते

सति स्वतन्त्रस्येश्वरस्याऽऽराधनादौ नरः प्रवर्तते नान्यथा । ततश्च तत्त्वज्ञानेन देहात्मभ्रमादय एव निराकरणीया न तु प्रपञ्चसत्यत्वम् । प्रधानपरिणामस्याखिलप्रपञ्चस्य सत्यत्वात् ।

शुक्तिकायां भासमानं रजतमपि सत्यमेव । रजतस्य तेजस्त्वेन तदंशानां पञ्चीकरणप्रक्रियया शुक्तौ विद्यमानत्वात् । एवं रज्जुभुजंगादौ सर्वत्र ज्ञानविषयस्य सत्यत्वम् । कथं तर्हि भ्रमत्वमिति चेद्विषयव्यवहारस्य बाधादिति गृहाण । रज्ज्वां दूरतः सर्पज्ञाने जाते ततः समीपं गतः सर्पज्ञानं भ्रम इति प्रत्येति । तत्र यद्यपि रज्ज्वां सर्पांशानां वर्तमानत्वेन विषयस्य सत्यत्वं तथाऽपि तदंशानां स्वल्पत्वेन तत्रायं सर्प इति व्यवहारो न भवति । अत एव तस्य भ्रमत्वं न तु विषयासत्यत्वात् । रज्ज्वादौ सर्पाद्यंशानां सत्त्वं तु-' तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् ' इत्युक्तरीत्या स्वसदृशे वस्तुनि स्वांशसत्त्वं नापलपितुं शक्यम् । कथमन्यथा रज्ज्वादौ सर्प एवावभासते न घटादय इति पर्यालोचय । न च सादृश्याद्रजतं शुक्तिकायां प्रतीयतामिति वाच्यम् । यस्माच्छुक्तिकायां रजतसादृश्यं रजतसंस्कारोद्बोधनद्वारा रजतस्मृतिं जनयेन्न रजतप्रत्यक्षम् ।

ओड्रपुष्पसंनिहिते स्फटिके प्रतीयमानो रक्तिमाऽपि सत्य एव । यथा जलान्तर्गततेजोद्रव्यगतः सत्य एवोष्णस्पर्शः संयुक्तसमवायेन जले भासत उष्णं जलमिति तथा स्फटिकसंयुक्तायां जपाप्रसूनप्रभायां विद्यमानः सत्य एव रक्तिमा स्फटिके भासते रक्तः स्फटिक इति । नैतावता विषयस्यासत्यत्वम् । जपाकुसुमप्रभा सर्वतः प्रसृताऽपि स्फटिकस्य स्वच्छद्रव्यत्वेन तत्रैव स्फुटमुपलभ्यते नान्यत्र ।

स्वप्ने दृश्यमाना गजाश्वादयः पदार्था अपीश्वरेणोत्पादिताः सत्या एव । यद्यप्येते पदार्थास्तत्तत्पुरुषानुभाव्या एवेत्यन्येषां न तदुपलब्धिस्तथा तत्तत्कालावसाना एवेति च तस्यैव स्वप्नद्रष्टुर्जागृतौ न तदुपलब्धिस्तथाऽप्येतादृशविचित्रपदार्थकर्तृत्वं सत्यसंकल्पस्याऽऽश्चर्यशक्तेरीश्वरस्य संभवत्येवेति न काचिदनुपपत्तिः । दर्पणे प्रतीयमानं निजमुखमपि सत्यमेव । आदर्शप्रतिहतगतयो नयनरश्मयो दर्पणात्परावृत्ताः सन्तो निजमुखं गृह्णन्ति । ननु स्वमुखस्य स्वाभिमुखत्वाभावेन कथं निजमुखस्य स्वाभिमुखत्वेन प्रतीतिः । अतिशैघ्र्याद्दर्पणमुखयोर्यदन्तरालं तदग्रहण तथा प्रतीतिः । एवं सर्वत्र सत एव विषयस्य ख्यातिः प्रतीतिर्भवति न तु क्वाप्यसतः प्रतीतिः । इयमेव सत्ख्यातिरित्युच्यते ।

तत्र यदुक्तं परमात्मा सविशेष इति तन्न-' यतो वा इमानि भूतानि जायन्ते ' इति श्रुतौ जगत्कारणत्वं ब्रह्मणः प्रतिपाद्यत इति निर्विवादम् । तद्यथोपपद्येत तथा भवताऽपि कल्पनीयम् । कारणं च कार्यापेक्षया व्यापकमत एव सामान्यम् । कार्यगतविशेषरहितमित्यर्थः । किंच यो यो विशेषः स स सामान्यप्रकृतिको यथा घटशरावादयो विशेषास्तत्सामान्यभूतमृत्प्रकृतिका इति व्याप्तिमूलकानुमानेनापि निर्विशेषमेव ब्रह्म सिध्यति । 'तदेव

निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम्' इति श्रुतौ निर्विकल्पपदेन स्पष्टमेव ब्रह्मणो निर्विशेषतोच्यते। विशेषरहितत्वादेव न तत्र कथमपि भेदत्रयं संभवति। यत्सविशेषं तदेव भेदाधिष्ठानं भवति। सविशेषं हि वस्तु स्वगतेन तेन विशेषेणेदृशमिति वक्तुं शक्यम्। ईदृशत्वस्य च तादृशत्वप्रतियोगितया तादृशमन्यत्किंचिद्वस्तु अवश्यं स्वीकरणीयम्। तादृशस्य वस्तुनः किंचित्कार्यं प्रति कारणत्वे तादृशवस्तुनस्तत्कार्यस्य च ज्ञानेनेदृशवस्तुज्ञानं सुतरां दुर्लभमिति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं नोपपद्येत। श्रुतावपि भेदत्रयराहित्यं स्पष्टमेव प्रतिपाद्यते—

'सजातीयं न मे किंचिद्विजातीयं न मे भवेत्।
स्वगतं च न मे किंचिन्न मे भेदत्रयं भवेत्' ॥ इति।

ननु लोके घटेऽयं न पट इत्यादिप्रत्यक्षे ग्राह्यग्राहकभेदस्य घटपटादिभेदस्य च प्रत्यक्षमनुभूयमानत्वेनापलापानर्हत्वात्कथमिवाभेदोपवर्णनमुपपद्येतेति चेत्, भेदो निरूपयितुमशक्य इति ब्रूमः। तथाहि—भेदस्तावन्न वस्तुनः स्वरूपम्। यतो वस्तुनः स्वरूपे गृह्यमाणेऽयं घटोऽयं पट इति स्वरूपव्यवहारो यथा भवति तद्वदिदं सर्वस्माद्भिन्नमिति भेदव्यवहारोऽपि प्रसज्येत। स चानिष्टः। वस्तुस्वरूपमात्रज्ञानात्स्वरूपव्यवहारवद्भेदव्यवहारस्य लोकेऽननुभूयमानत्वात्। न च वस्तुस्वरूपे गृह्यमाणेऽपि अयं भिन्न इतिव्यवहारस्य कस्मादित्यवधिसापेक्षत्वेन स्वरूपग्रहणसमये तत्स्मरणाभावेन न तदानीमेव भेदव्यवहारो जायत इति वाच्यम्। वस्तुस्वरूपमेव हि भेद इति ब्रुवाणस्त्वं भेदव्यवहारेऽवधिसव्यपेक्षत्वं नोत्प्रेक्षितुमर्हसि। स्वरूपभेदयोः स्वरूपत्वाविशेषात्। अन्यथा स्वरूपव्यवहारेऽपि प्रतियोगिसापेक्षत्वं केन वार्येत। यथा च स्वरूपव्यवहारे न प्रतियोग्यपेक्षा तथा भेदव्यवहारेऽपि प्रतियोग्यपेक्षा न स्यात्। पाणिः शयो हस्त इतिवद् घटो भिन्न इति पर्यायत्वं च स्यात्।

ननु च भोः केनोक्तमयं भेदो वस्तुनः स्वरूपमिति, किंतु वस्तुधर्मोऽयमिति ब्रवीमि। धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्यमाश्रयणीयः। अन्यथा वस्तुस्वरूपमेवायं भेद इति पर्यवसितं भवेत्। स्वरूपभेदे च तस्यापि भेदस्तद्धर्मस्तस्यापि भेदस्तद्धर्म इत्यनवस्थाऽऽपतेत्। भेदान्तरस्याकल्पनायां तु प्राथमिको भेदः स्वाश्रयाद्भिन्न इति व्यवहारो न स्यात्। भिन्न इतिव्यवहारहेतुभेदान्तराभावेन तस्मिन्स्तद्व्यवहारहेतुत्वासंभवात्।

किंच जात्यादिधर्मविशिष्टवस्तुग्रहणे भेदग्रहणं भेदग्रहणे च जात्यादिधर्मविशिष्टवस्तुग्रहणमिति परस्पराश्रयत्वाद्भेदो दुर्निरूपः। न चैवं भेदस्य दुर्निरूपणीयत्वे चैत्रोऽयं न मैत्र इत्यादिभेदप्रतिभासः कथमुपपद्यतामिति वाच्यम्। नहि भेदप्रतिभासे परमार्थसद्वस्तु अपेक्ष्यते। तथा सति रज्जुभुजंगादिप्रतिभासानुपपत्तेः। तस्मादनाद्यनिर्वचनीयावि-

द्याकारत्वेनैष भेदो निरूपणीयः । ततश्च भेदाभेदविषये ब्रह्मणः सविशेषत्वनिर्विशेषत्वविषये च मायिनां रामानुजीयानां च मतवैलक्षण्येऽपि चिद्धातुः स्वरूपेणापरिणामी नित्यश्च । तथा भूतभौतिकादिजडपदार्थः स्वरूपतः परिणाम्यनित्यश्च । स्वप्नगतरथादिः शुक्तिरजतादिश्च जड एव तत्कालावसायी तत्पुरुषमात्रानुभाव्यश्चेत्येतदपि निर्विवादम् । एवं स्थितावविवादे सति केवलं नाममात्रे विवादो दृश्यते । यथा–चित्, जडाः, स्वप्नस्थितरथादिश्चेति त्रयोऽपि परमार्थशब्दवाच्या उतापरमार्थशब्दवाच्या आहोस्वित्त्रयाणां मध्य एकः परमार्थशब्दभागन्यावपरमार्थशब्दभाजाविति । तत्र प्रथमः पक्षः शून्यवादिनां मतेन । स च न युक्तिं क्षमते । अपरमार्थशब्देन नञर्थो भिन्नत्वं चेद्भेदस्य प्रतियोग्यपेक्षत्वेन शून्यवादिनस्तव मते च परमार्थवस्तुनोऽभावात्प्रतियोगिप्रसिद्धेरनुपपत्तेः । अस्ति चेत्किंचिद्वस्तु परमार्थशब्दभाक्तदा परमार्थशब्देन नञ्समासेऽपरमार्थ इति निर्वक्तुं योग्यं नान्यथा ।

द्वितीयः पक्षो रामानुजानुयायिनाम् । स चापि न युक्तः । किं नाम परमार्थत्वमिष्यते भवता । अविनाशित्वमिति चेत्परमार्थत्वेन त्वयेष्यमाणेषु घटादिषु स्वप्नदृष्टगजादिषु चाव्याप्तिः । सत्यत्वं परमार्थत्वं चेत्सत्यत्वस्य स्वरूपं निर्वक्तव्यम् । यदि असत्यत्वाभावः सत्यत्वं मन्यसे तदाऽसत्यत्वज्ञानायत्तं सत्यत्वं सत्यत्वज्ञानायत्तं चासत्यत्वमित्यन्योन्याश्रयो दुर्वारः । अथ मिथ्यात्वाभावः परमार्थत्वमुच्यते चेत्किमिदं मिथ्यात्वमिति निरूपणीयम् । बाधितत्वमेव मिथ्यात्वं चेद्रज्जूरगादिस्थल उरगज्ञानस्य बाधितत्वं ‘ रज्जुसर्पादिषु तु तद्देशकालसंबन्धितयैवाभावप्रतीतेः ’ इति श्रीभाष्य उक्तत्वेनोरगज्ञानस्य मिथ्यात्वापत्तिः । ओमिति चेद्ब्रूषे तदा ‘ रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः ’ इति श्रीभाष्यीयस्वोक्तिर्विरुध्येत ।

किंच रज्जूरगस्थले विषयस्योरगस्य बाधितत्वमभिप्रेयते न वाऽऽयुष्मता । सत्ख्यातिवादिनस्तवोरगस्य बाधितत्वं सुतरां दुर्वचम् । सत्ख्यात्युच्छेदापत्तेः । द्वितीयेऽपि ‘ विषयाणामेव मिथ्यात्वम् ’ इति श्रीभाष्यस्थस्त्वदीयः सिद्धान्तो व्याकुप्येत ।

अपि च सर्वत्र सत्ख्यातिवादात्तव मते पञ्चीकरणप्रक्रियया सर्वत्र पृथिव्यादिषु सर्वभूतांशानां विद्यमानत्वाद्रज्जौ सर्पावयवान्वयसत्त्वेन रज्जूरगादेर्मिथ्यात्वाभावान्मिथ्यात्वस्य क्वापि प्रसिद्धत्वाभावेन मिथ्यात्वाभावः सर्वथा दुर्वचः । अभावज्ञानस्य प्रतियोगिप्रसिद्धिसापेक्षत्वनियमात् । ततश्च मिथ्यात्वाभावरूपं परमार्थत्वं दुर्वचम् । किंच यत्र द्वयोर्ज्ञानयोर्विरोधस्तत्र बाध्यबाधकभावो बाधितस्य च व्यावृत्तिः । यस्मिन्देशे यस्मिन्काले यस्य सद्भावः प्रतिपन्नस्तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चेत्तत्र विरोधः प्रबलत्वतो बाधकत्वं बाधितस्य च निवृत्तिर्भवति । यथा रज्ज्वां यद्देशकालसंबन्धितया सर्पसद्भावः प्रतीयते तद्देशकालसंबन्धितयैव तदभावप्रतीतेर्विरोधाद्रज्जुज्ञानं बाधकं बाध्यस्य सर्पज्ञानस्य च

निवृत्तिर्दृश्यते । घटादिषु तु न बाध्यबाधकभावो व्यावृत्तिर्वा । देशकालभेदेन विरोधाभावात् । तेन च रज्जुसर्पादिवन्न घटादीनामपारमार्थ्यम् । भिन्नदेशकालसंबन्धित्वेनानुभूतस्य घटादेर्भिन्नदेशकालयोरभावप्रतीतेः ।

अत एव ' न व्यावर्तमानत्वमात्रमपारमार्थ्ये हेतुः ' इति श्रीभाष्ये वदतस्तव व्यावर्तमानत्वविशेषोऽपारमार्थ्ये हेतुत्वेनाभीष्ट एवेति गम्यते । व्यावर्तमानत्वविशेषश्च तद्देशकालसंबन्धवत्त्वेन व्यावर्तमानत्वरूपः । स च रज्जुसर्पादौ दृष्ट इति कथमिव सत्ख्यातिः शक्या निर्वक्तुमिति निपुणं विचारयेः ।

किंच रज्जुसर्पादौ घटादौ च को भेदः । रज्जुसर्पः पूर्वं नाभूत्पश्चाच्च न भविष्यति केवलं मध्य एव प्रतीयते तद्वद्घटादिरपि पूर्वं नासीदग्रे च न भविष्यति मध्य एव हि प्रतीयते । रज्जुसर्पः पश्चात् ' नायं सर्पः ' इति बाध्यते घटादिरपि नाशोत्तरं कपालाद्यवस्थायां ' नायं घटः ' इति बाध्यत एव ।

ननु पश्चात्तनेन नायं सर्प इति बाधेन प्रतीतिकालेऽप्ययं सर्पो नाभूदिति प्रातीतिकालिकोऽपि सर्पो बाध्यते न तथा घटादिः । नहि घटध्वंसे कपालावस्थायां घटबाधेऽपि प्रतीतिकालेऽपि नायं घटोऽभूदिति कोऽपि प्रत्येति । तथाऽपि प्रातीतिकालिकसत्तायाः क्षणिकत्वेन न तथा पारमार्थिकत्वं वक्तुं शक्यम् ।

किंच प्रतीतिकालेऽपि नायं घटोऽभूदिति ज्ञानिदृष्ट्या बाधो भवत्येव । बद्धदृष्ट्या न बाध्यत इति चेन्नैतावता वस्तुनः सत्यत्वम् । इतरथा रज्जूरगस्थलेऽपि भ्रान्तदृष्ट्या बाधाभावात्तस्य सत्यतापत्तिः । न चेष्यते त्वयाऽपि रज्जूरगस्य पारमार्थिकत्वम् ।

अपि च रज्जुसर्पं दृष्ट्वा भयादिनाऽन्यत्र गमने मरणे वा सर्वथा बाधासंभवेन किं स सर्पः सत्यो भवति । यदि तत्र बाधयोग्यता वर्ततेऽपि तु इतरत्र गमनादिना रज्जुज्ञानाभावान्नास्ति बाध इत्युच्यते चेद्बद्धदृष्ट्याऽपि न बाधस्तस्य परमात्मयाथार्थ्यज्ञानाभावादिति गृहाण ।

न च तत्त्वज्ञानिदृष्ट्या घटादेर्बाधे किं मानमिति वाच्यम् । प्रातीतिकालिकोऽहिः पश्चात्तनेन रज्जुयाथार्थ्यज्ञानेन बाध्यत इत्यत्र प्रतीतिकालेऽपि तस्य सर्पस्वरूपेणासत्त्वं प्रयोजकम् । सर्पस्य सत्ता रज्जुसत्तैव नान्या । तथा मृत्सत्तैव घटसत्ता नातिरिक्ता । नहि सत्ताद्वयं प्रतीयते । न वा घटकाले मृत्सत्ता नास्तीति वक्तुं शक्यते । एवं मृदादिसत्ताऽपि न स्वकारणसत्ताया अतिरिक्ता । ततश्च प्रतीतिकालेऽपि घटादिबाधो युज्यत एवेति जगतो मिथ्यात्वं न सत्यत्वम् ।

मायावादिनां तु निर्विशेषं ब्रह्म परमार्थमितरत्सर्वमपरमार्थम् । तदेव हि परमार्थं यन्न क्वचिदपि कदाऽपि निषिध्यते । ब्रह्मसत्तायाः सर्वत्रानुवर्तनान्न क्वचिदपि कदाचिदपि

तत्सत्ताया बाधः । घटो न पटः पटो न घट इत्येवं सर्वस्यापि निषेधप्रतियोगिता दृश्यते । यस्य न लेशतोऽपि निषेधस्पर्शस्तदेव वस्तु परमार्थशब्दभागतिरिक्तं सर्वं प्रतीयमानमपरमार्थमेव । तथा च व्यावर्तमानत्वमात्रमेवापारमार्थ्ये हेतुरिति सिद्धम् । एतेन ' न व्यावर्तमानत्वमात्रमपारमार्थ्ये हेतुः ' इति श्रीभाष्यं निरस्तम् । एवं च सर्वस्यापि जगतो मिथ्यात्वान्न सत्ख्यातिः सिध्यति ।

किंच सत्ख्यातिर्नाम सर्वत्र सत एव प्रतीतिर्न क्वाप्यसत इति । तत्र सत इत्यस्य प्रातिभासिकरूपेणापि सत इत्यर्थे सत्ख्यातिरस्माकमपीष्टैव । न तु तथाऽङ्गीकृतं रामानुजीयैः । यदि तु पारमार्थिकेनैव रूपेण सत इत्यर्थ उच्यते तदा मरीचिकायां जलप्रतीतिर्न स्यात् । ननु पञ्चीकरणप्रक्रियया पृथिव्यादिषु जलांशस्य सत्त्वेनोपपद्यते प्रतीतिरिति चेत्सत्यम् । पञ्चीकृते विशिष्टे पदार्थे जलत्वं नास्त्येव । तदीयैकदेशे जलांशे यद्यपि जलत्वं विद्यते तथाऽपि न तज्ज्ञातुं शक्यते । पञ्चीकरणं नाम पृथग्विभागानर्हः संश्लेषः । पञ्चीकरणारम्भकभूतानामतिसूक्ष्मतया प्रत्यक्षायोग्यत्वेन तदुत्तरमपि तत्रत्यकेवलजलस्य प्रत्यक्षासंभवात् । किंचायं जलांशोऽतिसूक्ष्मोऽपि दूरतोऽपि गृह्यते न समीपत इति युक्तिविरुद्धमेतत् । किंच समीपगतस्य नेदं जलमिति प्रतीतिर्जायते । तत्र सत एव जलस्यासत्त्वरूपेण प्रतीतिरिति अन्यथावभासोऽवर्जनीय एव । एतेन ' शुक्तौ पञ्चीकरणेन तेजोंशस्य सत्त्वात्तस्य रजतरूपेण प्रतीतिः ' इति रामानुजमतमसंगतमिति वेदितव्यम् ।

किंच स तेजोंशो रजतरूपेणैव कुतः प्रतीयते । विद्युत्सूर्यादिरूपेणापि भानं स्यात् । मिश्रणात्प्राक् तेजोंशस्य विद्युदादिसर्वसाधारणत्वात् । न च पञ्चीकृतस्य तेजसो रजतरूपेण परिणतस्य केचिदंशाः शुक्तौ मिश्रिता भासन्त इति वाच्यम् । तत्र तेषां सत्त्वे मानाभावात् । न च रजतप्रतीतिरेव मानमिति वाच्यम् । तस्याः प्रतीतेः सत्ख्यातित्वसिद्धौ हि शुक्तौ रजतांशसत्त्वं सिध्यति । रजतांशसत्त्वसिद्धौ हि तस्याः प्रतीतेः सत्ख्यातित्वं सिध्यतीत्यन्योन्याश्रयात् ।

न च शुक्तौ रजतसादृश्यानुभवाद्रजतांशसत्त्वकल्पनेति वाच्यम् । नहि सदृशे वस्तुनि सदृशवस्त्वंशा वर्तन्त एवेति नियमोऽस्ति । तथा सति पिष्टशर्करया अस्थिचूर्णसादृश्यात्तस्यामस्थ्यवयवान्वयात्तीरत्याज्यत्वापत्तेः । सादृश्यं तु शुक्तौ रजतगतचाकचक्यादिगुणसदृशगुणवत्त्वेनोपपद्यते । सोमाभावे पूतीकग्रहणं च श्रुतिचोदितं सोमगतगुणसदृशगुणवत्त्वादेव न तु तत्र सोमावयवसत्त्वादिति जानीहि । किंच वर्णतः सुरासदृक्षायां सुधायां सुरावयवसत्त्वे तत्पानेनाऽऽदितेयानां दैत्यत्वापत्तिश्चेति बहुव्याकुलं भवेत् ।

यदपि स्वप्ने सत्ख्यातिसिद्धयर्थं स्वप्नस्था रथादयः पदार्थाः प्राणिनां पुण्यपापानुगुण्येन भगवतैव सृष्टाः परमार्थसत्या एवेत्युक्तं तच्चिन्त्यम्। सर्वार्थजातं प्रति अदृष्टस्य साधारणकारणत्वात्। तेन च न तादृग्विधः कश्चन पदार्थो यस्मान्न कस्यापि जन्तोः सुखं दुःखं वा संपन्नम्। स्वप्ने च दृष्टपदार्थमध्ये यस्मान्न सुखं नापि दुःखं तादृक्पदार्थः परमेश्वरेण वस्त्वदृष्टेन निर्मितः। अनुभूयन्ते चोदासीना बहवः पदार्थाः स्वप्ने। ततश्च

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'

इति न्यायान्नैव ते परमेश्वरेण सृष्टाः किंतु जीवेन कल्पिताः। कल्पना चेयं स्मृतिविशेषरूपा। 'मायामात्रं तु' [ ब्र० सू० ३।२।३ ] इति सूत्रे स्वप्नावस्थितपदार्थानां मायामात्रत्वं सूत्रकारैः स्पष्टमेवोक्तम्।

मायाशब्दो ह्यनिर्वचनीयवाचीति प्रसिद्धमेव। अनिर्वचनीयत्वं च तत्तत्पुरुषमात्रानुभाव्यत्वे सति तत्तत्कालावसानत्वमेव स्वप्नस्थपदार्थानां तत्तत्पुरुषमात्रानुभाव्यत्वं तत्तत्कालावसानत्वं च स्वीकृत्य मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति वदद्भी रामानुजीयैरनिर्वचनीयशब्दविषये केवलं दुराग्रहः क्रियत इति स्पष्टमेव प्रतीयते। मायाशब्दो ह्याश्चर्यवाचीति मायामात्रमाश्चर्यकारकत्वमित्यर्थः। जीवस्य स्वतः सत्यसंकल्पादेः सतोऽपि संसारदशायां तस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वान्न तथाविधाश्चर्यरूपस्वप्नसृष्टेः स्रष्टृत्वं तस्योपपद्यते किंतु परमपुरुष एव स्वाप्नं पदार्थजातं सृजतीत्यर्थे सूत्राक्षरस्वारस्यभङ्गापत्तिः। यतो हि मायामात्रमिति मायाशब्दमुपादत्ते, न परमपुरुषकर्तृतेत्युच्यते।

अपि च 'अनभिव्यक्तस्वरूपत्वं कस्येत्याकाङ्क्षायां प्रत्यासत्त्या यस्य मायामात्रत्वमुपवर्ण्यते तस्येत्यनभिव्यक्तस्वरूपत्वान्वये यथार्थत्वेनाऽऽकाङ्क्षाशान्तेर्जातत्वेनोपस्थितं तत्परित्यज्यानुपस्थितजीवानामित्यध्याहृत्य जीवानां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादित्यर्थोपवर्णनमत्यन्तानुचितं सूत्रकृतोऽसंमतं चेति बोध्यम्।

रज्जूरगाद्यपि स्वाप्नपदार्थवन्मायिकमेव। किंच तदेकानुभवविषयं तत्कालावसानं च स्वाप्नमर्थजातं निर्मिमाणस्य परेशस्याचिन्त्यशक्तेः शक्ती रज्जूरगादिनिर्माणे न कथमपि कुण्ठिता भवेदिति स्वाप्नपदार्थवद्रज्जूरगादीनां परमार्थतः सत्यत्वं रामानुजीयैः किमिति नोररी क्रियते। एवं च स्वप्नस्थपदार्थानां न सत्यत्वं किंतु प्रातिभासिकत्वमेवेत्यनिर्वचनीयत्वम्।

एवमलातचक्रादिङ्मोहद्विचन्द्रज्ञानादावपि अनिर्वचनीयख्यातिरेवाभ्युपेया न क्वापि सत्ख्यातिः संभवतीति महामहोपाध्यायास्मद्गुरुचरणाभयंकरोपाख्यश्रीवासुदेवशास्त्रिप्रणीतेऽ-

-द्वैतामोदे विस्तरशः प्रतिपादितं तद्द्रष्टव्यम् । एवं चानिर्वचनीयख्यातिरेव सर्वत्रेति परिदृश्यमानं सर्वं जगद्ब्रह्मविवर्तः प्रातिभासिकं मिथ्यैव न तु सत्यम् । तादृशविवर्ताधिष्ठानभूतं ब्रह्म वस्तुतो निर्विशेषमेव नतु सविशेषमित्युक्तम् ।

यत्तु रामानुजीयैः—नित्यसत्यादिपदमुख्यार्थैर्नित्यत्वादिधर्मैर्ब्रह्म सविशेषमेवावतिष्ठत इत्युक्तम् । तन्न । द्विविधा हि वस्तुप्रतिपादनरीतिरिष्यतेऽभियुक्तैः । क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन चेति । तत्र यत्सविशेषं वस्तु तदीदृशं तादृशमिति वक्तुं शक्यमिति सविशेषं वस्तु विधिमुखेन प्रतिपादयितुमर्हति शब्दः । निर्विशेषं तु ईदृशं तादृशमिति वक्तुं न शक्यत इति यद्यपि तादृशं वस्तु विधिमुखेन प्रतिपादयितुं नार्हति शब्दस्तथाऽपि निषेधमुखेन निर्विशेषं वस्तु प्रतिपादयितुं शक्नोति । तथाहि—' यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः ।' [ मु० १ । १ । १६ ] इति मुण्डकश्रुतिर्निर्विशेषब्रह्मप्रतिपादिका भवति । तत्राद्रेश्यमग्राह्यमित्यादेः प्रत्यक्षागोचरमनुमानाद्यगोचरमित्यादिरर्थः । एवमङ्गिद्वयेन ब्रह्म निषेधमुखेनोपवर्णितम् । यद्यपि किंचिदपि वस्तु विधिरूपेणेदृशं तादृशमित्येवंरूपेण वर्ण्यमानं यथा यथावद्वस्तुस्वरूपपरिचायकं भवति न तथा निषेधरूपेण वर्ण्यमानमित्यादौ विधिमुखेनैवोपवर्णनमुचितं तथाऽपि प्रकृते वर्ण्यमानस्य ब्रह्मणो विधिमुखेन प्रतिपादनं वस्तुतो नैव संभवतीति श्रुतेस्तथा प्रवृत्तिः । ईदृक्श्रुतिप्रक्रम एव तद्ब्रह्म निर्विशेषमिति सूचयति । उत्तरार्धे नित्यं विभुमित्येवं विधिरूपेण यद्यपि प्रतिपादनं दृश्यते तथाऽपि तस्य पर्यवसानं निषेधमुख एव । नित्यं कालतः परिच्छेदरहितम् । विभुं देशतः परिच्छेदरहितम् । सर्वगतं वस्तुतः परिच्छेदरहितम् । अनेन त्रिविधपरिच्छेदराहित्यं ब्रह्मणः प्रतिपाद्यते । अतो नात्र कश्चिद्धर्मो विधिमुखेन बोध्यते । यदि तु यत्किंचिद्भावरूपविशेषपुरस्कारेण प्रतिपादितं स्यात्तदा तेन भावरूपविशेषेण तद्वस्तु सविशेषमित्यापादयितुं शक्येत । नात्र भावरूपविशेषपुरस्कारेण वर्णनं किं त्वभावेनेति वर्णितम् ।

नन्वत्र भावरूपेणाभावरूपेण वा यथाकथमपि प्रतिपादनमस्तु न तद्विषये विप्रतिपद्यामहे किंतु तेनैवाभावरूपेण विशेषेण सविशेषमेव ब्रह्मावतिष्ठत इति वदामः । इति चेद्भ्रान्तप्रलपितमिवाश्रद्धेयमेतत् । यतोऽभावेन न वस्तुनः सविशेषत्वं भवति । तथाहि—पश्वपेक्षया भेदेन मनुष्याणां प्रतिपादनमभीष्टम् । तच्च मनुष्यत्वधर्मेण वा पुच्छाभावेन वा । तत्र मनुष्यत्वं भावरूपो धर्म इति तेन विशेषेण सविशेषत्वं मनुष्याणां भवतीत्यन्यदेतत् । परं त्वभावेन सविशेषत्वं कथंतरां प्रतिपादयितुं शक्यम् । भावविरुद्धस्य ह्यभावस्यासद्रूपत्वेन धर्म इति वा विशेष इति वा व्यवहारायोग्यत्वेन न तेन रूपेण वस्तुनः कथमपि सविशेषत्वम् । रूपाभाववतो मतारिश्वनस्तेजोपेक्षया रूपाभावेन पार्थक्ये कृते तत्र रूपाभावेनैव रूपवत्त्वमाबालं कोऽपि न प्रत्येति ।

किंचाभावेनापि विशेषवत्त्व अङ्गीकृते त्वभावस्य भावत्वापत्तौ स्वरूपोच्छेद एव स्यात्। अत एव श्रीमद्व्यासचरणैर्योगसूत्रभाष्ये [ पा० १।९। ‘ अनुत्पत्तिधर्मा पुरुष इत्युत्पत्तिधर्मस्याभावमात्रमवगम्यते न तु पुरुषान्वयी धर्मः ’ इत्युक्तम्। एवमेकमेवाद्वितीयमित्यत्राऽपि द्वितीयाभावमात्रमिति बोध्यम्। ‘ निर्गुणम् ’ [ चू० ७।२ ] ‘ निरञ्जनम् ’ [ श्वे० ३।९ ] इत्यादिरागमश्च निर्विशेषे वस्तुनि प्रमाणम्॥

अनुमानेनापि ब्रह्मणो निर्विशेषत्वं सिध्यति। अत्रायं प्रयोगः—विमतं ब्रह्म निर्विशेषं जगन्मूलकारणत्वान्मृद्वत्। कारणं कार्यापेक्षया सामान्यं भवति। सामान्यं कार्यगतविशेषरहितमित्यर्थः। घटशरावादिकार्यगतविशेषाणां घटशरावादीनां कारणभूतायां मृदि अदर्शनात्। यतो वेति श्रुत्या च सर्वजगत्कारणत्वं ब्रह्मणः प्रतिपाद्यते। यदि च तत्र कोऽपि विशेषः स्यात्तर्हि तादृशविशेषहीनं ब्रह्मणोऽपि मूलकारणमन्यत्किंचित्स्यात्। तस्यापि सविशेषत्वे तादृशविशेषरहितं तन्मूलभूतं पुनरन्यत्स्यादित्यनवस्थाप्रसङ्गः। तद्दोषपरिहारार्थं जगन्मूलकारणं ब्रह्म सर्वविशेषरहितमित्यकामेनापि वक्तव्यमेव। अन्यथा श्रुतिप्रतिपादितजगत्कारणत्वं विरुध्येत॥

अयं च निर्विशेषवादः सूत्रकारस्यापि संमतः। तदुक्तम्—‘न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि’ [ब्र० सू० ३।२।११] इति। स्थानमुपाधिः। परब्रह्मविषया उभयलिङ्गाः श्रुतयो दृश्यन्ते। ‘सर्वकर्मा सर्वकामः’ [छा० ३।१४।२] इत्याद्याः सविशेषलिङ्गाः। ‘अस्थूलमनणु’ इत्याद्या निर्विशेषलिङ्गाः। किमेतावतोभयलिङ्गं ब्रह्मोतान्यतरलिङ्गं मन्तव्यम्। यदाऽप्यन्यतरलिङ्गं तदाऽपि किं सविशेषमाहोस्विन्निर्विशेषमिति भवति विचारणा। तत्रोच्यते—न परस्य ब्रह्मणो वस्तुत उभयलिङ्गं शक्यं निर्वक्तुम्। यस्माद्धि एकमेव वस्तु स्वत एव रूपादिमत्तद्विपरीतं चेति किं युक्तं विरोधित्वात्। उपाधियोगादपि तन्नोपपद्यते। नह्युपाधियोगादन्यादृशं वस्तु अन्यादृशस्वभावं भवितुमर्हति। नह्यच्छोऽप्यच्छोऽलक्तकाद्युपाधियोगादनच्छो भवति भ्रान्तिमात्रत्वादनच्छताभिनिवेशस्य। उपाधेश्चाविद्याप्रत्युपस्थापितत्वात्। तदेवं परस्य ब्रह्मण उभयलिङ्गं सविशेषनिर्विशेषलिङ्गं स्वभावतस्तु नास्त्येव परंतु स्थानतोऽपि नास्ति। यतः सर्वत्र ‘ अशब्दमस्पर्शमरूपमव्ययम् ’ [ का० ३।१५ ] इत्यादिश्रुतिषु अपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यत इति तदर्थ इति।

यच्च रामानुजीयैर्ब्रह्मणः सविशेषभावाय ‘ यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ’ इत्यादिगीतावाक्यं प्रमाणत्वेनोपन्यस्यते तस्यापि निर्विशेष एव तात्पर्यम्। अजत्वं हि न भावरूपो धर्मः कश्चित्किंतु जन्माभावः। एवमनादित्वं मूलकारणाभावः। तथा चाभावरूपाभ्यामाभ्यां कथं ब्रह्मणः सविशेषत्वं सिध्येत्। अभावेन च न सविशेषत्वमिति प्रागुपपादितं न विस्मर्तव्यम्। एवं च गीताशास्त्रस्यापि निर्विशेषे ब्रह्मणि तात्पर्यं सिद्धम्।

ननु सर्वं खल्विदं ब्रह्म, इति जगद्ब्रह्मणोः सामानाधिकरण्यदर्शनात् ' प्रकृतिश्च ' [ ब्र० सू० १।४।२३ ] इति सूत्रे ब्रह्मणो जगदुपादानकारणत्वस्य प्रतिपादनाच्च जगद्गतविशेषा ब्रह्मणि स्युः। तथाच सविशेषमेव ब्रह्म न निर्विशेषम्। अत एव श्रुतिस्मृत्यादिषु ' सर्वकामः सर्वकर्मा सर्वगन्धः सर्वरसः ' इत्यादिविशेषपुरस्कारेण ब्रह्मणः प्रतिपादनं संगच्छत इति चेन्न। सर्वस्य प्रपञ्चस्य कल्पितत्वेन मिथ्याविवर्तवादाश्रयणेन जगद्गतविशेषलेशस्यापि ब्रह्मणि कल्पयितुं सुरगुरुणाऽप्यशक्यत्वात्।

तत्कल्पकं चानाद्यनिर्वचनीयभावरूपाज्ञानमेव। एतदेव च मायातमआदिशब्दैर्व्यवह्रियते। तदुक्तं वसिष्ठस्मृतौ—

' तामाहुः प्रकृतिं केचिन्मायामेके परे त्वणून् ' [ योगवृ० पृ० २९२ ] इति।

अस्यैव प्रधानमहदहंकारपञ्चमहाभूतरूपेण तत्तद्व्यष्टिरूपेण च परिणामः। सत्त्वरजस्तमसां त्रयाणां गुणानां साम्यावस्थाप्रधानम्। बुद्धिरेव च महत्तत्त्वम्। बुद्धेः स्वभावतः स्वच्छतया तत्र ज्ञानस्वरूपं शुद्धचैतन्यं प्रतिबिम्बते। समष्टिबुद्धौ प्रतिबिम्बितं चैतन्यमीश्वरः। व्यष्टिबुद्धौ प्रतिबिम्बितं चैतन्यं जीवः। बिम्बभूतं ज्ञानं यद्यपि निर्विषयं निराश्रयं तथाऽपि प्रतिबिम्बभूतं जीवस्वरूपमीश्वरस्वरूपं च ज्ञानं स्वाश्रयभूतभावरूपाज्ञानयशात्सविषयं साश्रयं च भासते। अज्ञानस्य स्वभावत एव किंचिद्विषयकत्वात्किंचिन्निष्ठत्वाच्च। यथाऽऽदर्शफलेन तत्प्रतिबिम्बितं मुखं मलीमसं भासते तद्वत्। तथा च प्रतिबिम्बभूतं यज्जीवेश्वररूपं ज्ञानं तदेव स्वाधिष्ठानभूताज्ञानरूपदोषवशादनन्ताश्रयमनन्तविषयं चाऽऽत्मानमनुभवति न तु बिम्बभूतम्। भावरूपाज्ञानस्य च स्वपरिणामे बिम्बग्रहणे च न स्वातन्त्र्यम्। नापि शुद्धं ब्रह्म तस्य प्रेरकम्। किंतु स्वाश्रयभूतं शुद्धं ब्रह्मोपजीव्य परिणमते प्रतिबिम्बं च गृह्णाति। यथाऽऽदर्शो न मुखप्रेरणया प्रतिबिम्बं गृह्णाति किंतु स्वभावतः। नैतावता तस्य स्वातन्त्र्यम्। मुखसांनिध्यापेक्षणात्। ज्ञानप्रतिबिम्बभूतश्चायं जीवो येन भावरूपाज्ञानरूपदोषेणानन्ताश्रयमनन्तविषयं चात्मानमनुभवति स दोषोऽपारमार्थिक एव। तथा च न तस्यान्यापेक्षा। यथा दीपो घटादिप्रकाशकोऽपि स्वभावत एव स्वमपि प्रकाशयति नान्यं दीपमपेक्षते तद्वदयं भावरूपाज्ञानरूपो दोषः स्वभावत एव ब्रह्मोपजीव्य जगत्कल्पकः स्वकल्पकश्चेति नानवस्था।

नन्वेतादृशभावरूपाज्ञाने किं मानमिति चेत्—अहमज्ञ इति प्रत्यक्षप्रतिभास एव प्रमाणमिति गृहाण। ननु ज्ञानाभावविषयोऽयमवभासो नाभिप्रेतमर्थमवबोधयतीति चेन्न तावदनुपलब्धिवादिनश्चोद्यमेतत्। परोक्षप्रतिभासकारणत्वादनुपलब्धेः। नन्वयमपि परोक्ष एवेति चेत्—न तावदयं लिङ्गेन शब्देनानुपपद्यमानार्थेन वा जन्यते। नाप्यनुपलब्ध्या। प्रत्यक्षेतरप्रमाणस्य ज्ञानकरणत्वनियमात्। न चाहमज्ञ इति प्रत्यक्षावभाससामग्रीकाले

ज्ञानं सममस्ति अनुभूयते वा । किंचाहमज्ञ इत्यस्मिन्ननुभवेऽहमित्यात्मनोऽभावधर्मितया, ज्ञानस्य च प्रतियोगितयाऽवबोधो भवति न वेति प्रष्टव्यो भवानज्ञ इत्यनुभासस्य ज्ञानाभावो विषय इति वदन् । तत्राऽऽद्ये कल्पे धर्मिप्रतियोगिज्ञानयोः सतोरात्मनि विरोधादेव न ज्ञानमात्राभावानुभवः संभवति । नहि घटवति भूतले घटाभावानुभवः संभवति अनुभूयते वा । अभावविरोधिनो भावस्य घटस्य भूतले विद्यमानत्वात् । द्वितीये तु कल्पे धर्मिप्रतियोगिज्ञानसापेक्षो ज्ञानाभावानुभवः कारणाभावात्सुतरां न संभवति ।

अभावोऽधिकरणस्वरूपो न ततस्तत्त्वान्तरं किंचिदभावो नाम । किंतु भावान्तररूप एव । यथा भूतले घटाभावः केवलभूतलस्वरूपः । तच्च केवलं भूतलं भावरूपं प्रत्यक्षत एव गृह्यत इत्यतोऽभावः प्रत्यक्षः, इत्यभावप्रत्यक्षवादिमतेऽपीयमनुपपत्तिस्तुल्यैव । अस्याज्ञानस्य भावरूपत्वेऽङ्गीक्रियमाणे धर्मिप्रतियोगिज्ञानसद्भावेऽपि विरोधाभावादज्ञ इति प्रतिभासो भावरूपाज्ञानविषय एवाभ्युपगमनीयः ।

अपि च ज्ञानाभावविषयोऽज्ञ इति अनुभव इति भवन्मते बद्धजीवस्याहमज्ञ इति या प्रतीतिर्जायते तत्र निषिध्यमानं ज्ञाधात्वर्थभूतज्ञानं किं सामान्यज्ञानमुत ज्ञानविशेषो वा । नाऽऽद्यः । ज्ञानविशेषस्यानिषेधे ज्ञानसामान्यान्तर्गतविशेषप्रतीतेः सद्भावाज्ज्ञानसामान्यस्य निषेधासंभवात् । सामान्येन विना विशेषस्थितेरनुपपत्तेः । नहि वृक्षत्वनिवृत्तौ शिंशपात्वमवतिष्ठते ।

द्वितीयकल्पे तज्ज्ञानं परमात्मस्वरूपभूतं वा परमात्मगुणभूतं वा परमात्मविषयकं वा । तत्र नाऽऽद्यो न मध्यमश्च । तथा सति मुक्तजीवस्यापि तादृशप्रतीत्यापत्तिः । न चेष्यते सा रामानुजीयैरपि ।

उत्तमे तु परमात्मविषयकज्ञाने नञर्थोऽस्यारोपितत्वं यथाकथंचित्प्रयासेनोपवर्णनीयं भवेत् । यस्मात्तस्य परमात्मविषयकं ज्ञानं याथात्म्येन संजातं स मुक्तजीवो यस्य वा तादृशं ज्ञानमयाथात्म्येन जातमपि याथात्म्येन जातमित्यभिनिवेशः स बद्धजीवस्तावेतौ द्वावपि नाहमज्ञ इति प्रतीतः । अपि तु यस्य सुतरां तादृशं ज्ञानं नास्ति स एव तथा प्रत्येति । तत्र तादृशज्ञानस्यैवाभाव आरोपितत्वं कथमुपपादयितुं शक्येत । घटादिविषयकज्ञाने परमात्मविषयकज्ञानत्वस्याऽऽरोप इति तु तयोरत्यन्तवैलक्षण्येन न युक्तिसहम् ।

मायावादिनामस्माकं मते परमात्मविषयकज्ञानस्य परमात्मगुणभूतज्ञानस्य चाभावात्परमात्मस्वरूपभूतमेव ज्ञानं ज्ञाधात्वर्थः । तच्च वस्तुतो निराश्रयं निर्विषयं चेति साश्रयं सविषयं च बद्धजीवस्य जायमानं ज्ञानमारोपितमेवेति वक्तुं शक्यम् । ज्ञाने साश्रयत्वस्य सविषयत्वस्य चाज्ञानपरिकल्पितत्वात् । उपाधिभूतसलिलगतचञ्चलत्वादेः सवितृप्रतिबिम्ब

इवाज्ञानगतसाश्रयत्वादेः प्रतिबिम्बभूतज्ञान आक्षेपो युक्तिसहः । आरोपितत्वं नञ्योत्य-मिति व्याकरणशास्त्रे प्रसिद्धम् ।

किंच भावरूपाज्ञानास्वीकारेऽहमज्ञो नैव किंचिज्जानामि, इत्यादिस्थलेऽज्ञ इति न जानामीत्यनयोर्द्वयोरपि ज्ञानाभावार्थकत्वेन पौनरुक्त्यापत्तिरित्यज्ञ इति प्रतिभासो भाव-रूपाज्ञानविषयकत्वेनानिच्छतामपि भवतां रामानुजीयानां गले पतति ।

इदं च भावरूपाज्ञानम् ' एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ' [ छा० ८ । ३ । २ ] इत्येतादृशपरःशताधिकश्रुतिप्रतिपादितम् । अत्रानृतशब्देनानिर्वचनीयं भावरूपाज्ञानमुच्यते । ऋतमिति कर्मवाचकम् । ऋतं पिबन्ताविति मन्त्रे फलाभिसंधिरहि-तस्य परमपुरुषप्राप्तिफलस्य कर्मण ऋतशब्देन प्रतिपादनात् । अत्र तु तद्भिन्नं ब्रह्मप्राप्ति-विरोधि सांसारिकफलं कर्मानृतशब्देन ज्ञायते, इति श्रीभाष्योक्तं तु न समीचीनम् । ऋतशब्दस्य सत्यार्थाभिधायकत्वेन प्रसिद्धेः । कोशेऽपि ' सत्यं तथ्यमृतम् ' [ अ० व० ७ श्लो० २२ ] इत्यमरसिंहो वक्ति । तथा चानृतमित्यस्यासत्यमित्यर्थः । तच्च ब्रह्मलोका-वेदने हेतुर्भावरूपमेतदज्ञानमेव । ' अनृतेन हि प्रत्यूढाः ' इति वेदनाभावे हेतुगर्भं विशेषणम् । यतोऽसत्येनाज्ञानेनाऽऽवृतास्ततो न विन्दन्तीत्यर्थः ।

इदं चाज्ञानं न ज्ञानाभावरूपम् । किंतु ज्ञानाभावापेक्षया व्यतिरिक्तं भावरूपम् । कारणभूताज्ञानस्यापि ज्ञानाभावरूपत्वे कार्यकारणयोरैक्यापत्तेर्वेदनाभावे हेतुत्वमनृतस्योच्य-मानं न संगच्छेत । नहि स्वस्य स्वमेव कारणं संभवति । अतः कार्यापेक्षया कारणस्य भेदोऽपेक्षितः । तथा च कार्यभूतज्ञानाभावरूपाज्ञानापेक्षया मूलभूताज्ञानस्य न ज्ञानाभाव-रूपत्वं किंतु भावरूपत्वमेवेत्यवश्यं वक्तव्यम् ।

अनुमानमपि एतदनिर्वचनीयमूलभूतभावरूपाज्ञानमेवावगमयति । तथाच प्रयोगः-विवादास्पदं प्रमाणजन्यज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्त-रपूर्वकम् , अप्रकाशितार्थप्रकाशकत्वात् , अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् । अत्र प्रमाणजन्यज्ञानमितिप्रथमदलेन पक्षो निर्दिश्यते । द्वितीयदलेन साध्यमुच्यते तृतीयदलेन हेतुः प्रतिपाद्यते । चतुर्थदलेन च दृष्टान्तः प्रदर्श्यते । ज्ञानमित्येतावदुक्ते ब्रह्मस्वरूपज्ञा-नस्य वस्त्वन्तरपूर्वकत्वविरहात्तत्परिहाराय प्रमाणेत्याद्युक्तम् । स्वप्रागभावव्यतिरिक्तं स्वविष-यावरणभूतं स्वनिवर्त्यं स्वदेशगतं च यद्वस्त्वन्तरमर्थाद्भावरूपाज्ञानं तत्पूर्वकमित्यर्थः । अत्र विशेषणचतुष्टये स्वशब्देन प्रमाणजन्यज्ञानं गृह्यते । तथा चेन्द्रियसंयोगजन्यं घटविष-यकमात्मनिष्ठं ज्ञानं भावरूपाज्ञानपूर्वकम् । तच्च भावरूपाज्ञानं न प्रमाणजन्यज्ञानप्रागभा-वरूपं किंतु तद्भिन्नं भवति तथा ज्ञानविषयघटावरकं ज्ञाननिरसनीयं ज्ञानाधिकरणदेशात्म-निष्ठं च भवतीति लक्षणसमन्वयः । अन्तरशब्दमनुक्त्वा वस्तुपूर्वकमित्येतावत्युच्यमाने

ज्ञानस्याऽऽत्मवस्तुपूर्वकत्वेनार्थान्तरता स्यात्तत्परिहाराय वस्त्वन्तरेत्युक्तम् । तथोक्तेऽपि ज्ञानविषयभूते पदार्थेऽर्थान्तरता स्यात्तदर्थं स्वदेशगतेतिविशेषणोपादानम् । अर्थान्तरता भावरूपादज्ञानादन्यो योऽर्थो विषयादिस्तत्ता स्यान्न त्वनुमानेन कल्पनीयं भावरूपाज्ञानं सिध्येदित्यत्र तात्पर्यम् । सत्यप्येवमदृष्टादेः प्रमाणज्ञानदेशगतत्वेन तत्रातिव्याप्तिः स्यात्तद्वारणाय स्वनिवर्त्येति । नहि प्रमाणजन्यं ज्ञानमदृष्टादेर्निवर्तकं भवतीति न दोषः । एवमपि पश्चाज्जायमानरज्जुज्ञानेन सर्पज्ञानस्य निवर्त्यमानत्वादुत्तरज्ञानसमानाधिकरणत्वाच्च, तत्र प्राथमिके सर्पज्ञाने लक्षणसमन्वयनिवृत्तये स्वविषयावरणेतिनिवेशः । नहि पूर्वभवेन सर्पज्ञानेनोत्तरज्ञानीयविषय आव्रियते किंतु भावरूपाज्ञानेनेति न क्षतिः । नन्वेवमपि प्रमाणजन्यज्ञानात्प्राग्विद्यमानस्य स्वप्रागभावस्य प्रमाणजन्यज्ञानविषयावरकत्वात्तज्ज्ञाननिवर्त्यत्वात्तज्ज्ञानदेशगतत्वाच्च तत्रानुमानाप्रवृत्तये स्वप्रागभावव्यतिरिक्तेति विशेषणमुपात्तम् । तेन च तद्व्यावृत्तिः स्पष्टैव । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्ते हि विषयेण घटादिनाऽर्थान्तरता स्यात्तदर्थं विषयावरणेति । एवमुक्तेऽपि अन्धकारस्य प्रागभावव्यतिरिक्तत्वाद्विषयावरकत्वाच्च तत्रानुमानपरिहाराय स्वनिवर्त्येति । न ह्यन्धकारो ज्ञाननिवर्त्य इति भावः । विषयगताज्ञाततायाः प्रागभावेत्यादिविशेषणत्रयविशिष्टत्वात्तां व्यावर्तयितुं स्वदेशगतेति विशेषणम् । अज्ञातता तु विषयगता न ज्ञानदेशात्मगता । तथाऽपि शुक्तिरजतादिमिथ्याज्ञानस्य शुक्तिज्ञानप्रागभावातिरिक्तत्वाच्छुक्त्यावरकत्वाच्छुक्तिज्ञानदेशगतत्वाच्च तेन याऽर्थान्तरता तामपोहितुं वस्त्वन्तरेति । मिथ्याज्ञानं हि न वस्तुभूतमिति तेन तद्व्यावृत्तिः सुलभा । धारावाहिकविज्ञानस्थले प्रथमज्ञानेन योऽर्थः प्रकाश्यते स एव द्वितीयादिनेति द्वितीयादिज्ञानस्य प्रकाशितार्थप्रकाशकत्वेन तत्र व्यभिचारवारणायाप्रकाशितेति । ननु स्वोत्पत्त्यनन्तरं द्वितीयक्षणवर्तिन्यां दीपप्रभायां प्रथमक्षणवर्तिदीपप्रभयैवाप्रकाशितार्थप्रकाशनादन्धकारविनाशाच्च साध्यसाधनवैधुर्यात्प्रदीपप्रभावदिति दृष्टान्तोऽसंगत इति चेन्न । प्रथमोत्पन्नेति विशेषणदानेनादोषात् । स्फीतादित्यप्रभामध्यवर्तिदीपप्रभाया अर्थप्रकाशकत्वाभावेन व्यभिचारवारणायान्धकारेति । ये चात्र भावरूपाज्ञानसाधकानुमाने रामानुजीयैराक्षेपा उत्प्रेक्षितास्तेषां सर्वेषां युक्तिपूर्वकमयुक्तत्वमुपपाद्य मायावादस्यैव युक्तत्वं प्रामाणिकत्वं प्रस्थापितमद्वैतामोदे महता विस्तरेणास्मद्गुरुचरणैरिति तत एवावगन्तव्यं नात्र विस्तरभिया विव्रियते ।

इदमेव जगन्मूलभूताज्ञानं सदसदनिर्वचनीयम् । अनिर्वचनीयत्वे च ‘नासदासीन्नो सदासीत्’ इति तैत्तिरीयब्राह्मणसूक्तं प्रमाणम् । ‘तम आसीत्’ इत्यत्र तमःशब्देनाज्ञानं प्रतिपाद्यते । तस्य चाज्ञानस्य ‘न असत् आसीत्’ ‘न सत् आसीत्’ इति निषेधद्वयेन सदसद्भ्यामनिर्वचनीयता लब्धा भवति । अयमाशयः—प्रलयकाले सदसच्च किमपि नाऽऽसीत् । किंतु तम आसीदित्यनेन प्रतिपादितं यत्तमोऽज्ञानं तस्य सत्त्वे नो सदासीदिति सद्रूपत्वनिषेधानुपपत्तिः । यदि च तस्यासत्त्वं तर्हि असन्नाऽऽसीदिति

असदस्तित्वनिषेधो नोपपद्यते । एवं चार्थादगत्या तमःशब्दापरपर्यायमज्ञानं सत्त्वेनासत्त्वेन च निर्वक्तुमशक्यमित्यनिर्वचनीयं तदित्यवगम्यते । यच्च सच्छब्दश्चिदचिद्व्यष्टिविषयकोऽसच्छब्दश्चाचिद्व्यष्टिविषयकः, उत्पत्तिसमये सत्यच्छब्दाभिहितचिदचिद्व्यष्टिभूतयोर्वस्तुनोः प्रलयावसरेऽचित्समष्टिभूते तमःशब्दप्रतिपाद्ये वस्तुनि प्रलयकथनपरत्वान्नासदासीदिति वाक्यस्येति श्रीभाष्ये [ पृ० ८७ ] रामानुजैरुक्तं तत्रायमर्थः कस्मा ह्य.कारणात्त्वकपोलकल्पितनिघण्टोर्वाऽवगत इति त एव प्रष्टव्याः । ' अस भुवि ' इतिपाणिनिस्मृत्यनुसारेणास्तीति भासमानं सत्, तत्प्रत्यनीकमसदिति हि तयोः शब्दयोरर्थः प्रसिद्धोऽस्ति । किंचोत्पत्तिवाक्ये चिद्व्यष्ट्यचिद्व्यष्टिभूतयोर्वस्तुनोः कथनादत्र तयोरेव प्रलयकथनमिति कस्मादवगम्यत आयुष्मद्भिः । ' सच्च त्यच्चाभवत् ' [ तै० २ । ६ । १ ] इत्युत्पत्तिवाक्यादिति चेन्न तद्वाक्यमेतत्प्रकरणस्थम् । शब्दसाम्यमपि न वक्तुं शक्यम् । उत्पत्तिवाक्ये हि सत्त्यच्छब्दौ भवतोऽत्र तु सदसच्छब्दाविति वैषम्यम् । तच्छब्दार्थसमानार्थकस्त्यच्छब्द इति हि लोकवेदयोः प्रसिद्धम् । तच्छब्दो हि तदिति परोक्षे विजानीयादित्यभियुक्तोक्तत्वात्परोक्षं वस्तु प्रतिपादयति । ततश्च रूढ्या त्यच्चेत्यत्रत्यत्यच्छब्दः परोक्षं वस्तु निर्ब्रूते । परोक्षं च बहुधाऽमूर्तं भवति । परोक्षत्वामूर्तत्वयोः सहचारदर्शनात् । सच्छब्दोऽस्तीति भासमानं वस्त्वाचष्ट इति हि पूर्वमुक्तमेव। भासमानं च वस्तु मूर्तमेव गृह्यते । अमूर्तार्थकत्यच्छब्दसंनिधानात् । मूर्ते सत्त्वस्य स्पष्टतरत्वात् । तथा चोत्पत्तिवाक्य एव सत्यच्छब्दौ चिदचिद्व्यष्ट्यर्थकौ न भवत इति तदनुसारेण प्रलयवाक्ये सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयकत्वं तु सुदूरनिरस्तमिति ।

मूलभूतानिर्वचनीयभावरूपाज्ञानेऽर्थापत्तिरपि प्रमाणम् । तत्त्वमसि, अहं ब्रह्मास्मीत्यादिश्रुतिभिर्जीवब्रह्मणोरभेदः प्रतिपाद्यत इति तावन्निर्विवादम् । तत्र भेदवाद्यभिमतो जीवब्रह्मणोर्भेदः सत्यश्चेत्स्यात्तदभेदो ब्रह्मणाऽपि निर्वक्तुमशक्यः । नहि वस्तुतः परस्परस्माद्भिन्नयोर्गवाश्वयोरभेदः प्रतिपाद्यमानः संगच्छते । अतः श्रुत्युपवर्णिताभेदनिर्वाहाय प्रतीयमानो भेदः कल्पनाधीन इत्यवश्याभ्युपगन्तव्यम् । तदन्यथानुपपत्त्या च तादृशभेदज्ञानजनकमनिर्वचनीयं भावरूपाज्ञानं तव पश्चादनुधावन्न त्वां मुञ्चति ।

तत्त्वमसीत्याद्यैक्योपदेशो रामानुजीयैरित्थं समर्थितः । तत्पदं सर्वज्ञत्वसत्यसंकल्पत्वजगत्कारणत्वविशिष्टं ब्रह्म परामृशति । ' तदैक्षत बहु स्याम् ' इत्यादिषु तस्यैव प्रकृतत्वात् । त्वंपदं चाचिद्विशिष्टजीवशरीरकत्वविशिष्टं ब्रह्म प्रतिपादयति । तथा चैकस्यैव ब्रह्मणः प्रकारद्वयेनावस्थानात्सामानाधिकरण्यमेकार्थस्वरूपमुपपन्नमेव । प्रकारद्वयावस्थितैकवस्तुविषयत्वात्सामानाधिकरण्यस्येति । तत्रोच्यते—त्वमित्यादेर्जीवशरीरकब्रह्मप्रतीतेः क्वाप्यप्रसिद्धेः । किंच त्वमहंशब्दादिभ्यो या ब्रह्मणः प्रतीतिरभिप्रेता भवता सा किं जीवविशेष्यतयोत जीवप्रकारतया । नाऽऽद्यः-त्वं दुःखीत्यादिप्रयोगासांगत्यापत्तेः । त्वंशब्दो-

ननु कर्माण्यग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादीनि महायज्ञादीनि च स्वर्गादिफलसंबन्धितया शास्त्रैर्विधीयन्ते । नित्यनैमित्तिकानामपि प्राजापत्यं गृहस्थानामित्यादिफलसंबन्धितयैव हि चोदना । अतस्तत्फलसाधनस्वभावतयाऽवगतानां कर्मणामनुष्ठाने बीजावापादीनामिवानभि-

---

परिथतस्य जीवविशेष्यस्य ब्रह्मणो दुःखकणिकासंपर्कस्याप्यभावात् । नच शिखी ध्वस्त इत्यत्र विशिष्टे पुरुषे बाधात्तद्विशेषणीभूतायां शिखायां ध्वंसस्येव ब्रह्मविशेषणीभूते जीवे दुःखित्वस्य पर्यवसानम् 'विधिप्रतिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे' इति न्यायादिति वाच्यम् । पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति शब्दान्वयो विशिष्ट एवेति प्रथमतः श्रोतुर्बुद्धिर्विशिष्ट एवावतरन्ती विशेष्ये बाधिता सती तद्विशेषणे पर्यवस्यतीति न्यायशरीरम् । यथा शिखी ध्वस्त इत्यत्र प्रथमं शिखाविशिष्टे पुरुषेऽवतरन्ती ध्वंसबुद्धिस्तत्र बाधिता सती तद्विशेषणशिखायां पर्यवस्यतीत्यर्थः । त्वं दुःखीत्यत्र तु प्रथममपि विशिष्टे दुःखित्वबुद्धिर्नावतरति ब्रह्मणो दुःखलेशस्याप्यसंभवात् । तथा च कथंतरामत्र तन्न्यायप्रवृत्तिर्वाच्या । अपि च तत्त्वमसीतिमध्यमपुरुषप्रयोगानुपपत्तिश्च । 'त्वदात्मा ब्रह्मास्ति' इत्यादाविव तत्त्वमस्तीति प्रयोग आपद्येत । नापि जीवप्रकारतयेति द्वितीयः । त्वंशब्दाज्जीवप्रकारतयोपस्थितस्य ब्रह्मणस्तत्पदोपस्थितार्थेनान्वयासंभवात्सामानाधिकरण्यानुपपत्तेस्तदवस्थत्वात् । नहि पुरुषप्रकारीभूतस्य राज्ञ आनयनान्वय इत्यभिप्रायेण राजपुरुषमानयेति प्रयोगः क्वापि दृष्टचरः । अपि वा घटप्रकारीभूतस्य घटत्वस्य नित्यत्वात्तदभिप्रायेण घटो नित्य इति प्रयोगः परिदृश्यते ।

किंचाचिज्जीवयोर्ब्रह्मणा सत्रा शरीरशरीरित्वं न प्रामाण्यं भजते । शरीरं नाम कर्मसाध्यसुखदुःखादिफलभोगायतनमिति हि लोके प्रसिद्धम् । न च ब्रह्मणः कर्मजन्यफलभोगाः संभवन्ति । अपहतपाप्मनः परमात्मनः पुण्यपापरूपकर्मपरतन्त्रत्वाभावात् । तथाच श्रुतिः—'अनश्नन्नन्यो अभिचाकशीति' [ मु० ३ । १ । १ ] इति । न च 'आत्मा वा अरे द्रष्टव्यः' [ बृ० २ । ४ । ५ ] इत्यत्र द्रष्टृदृश्ययोर्भेदेन निर्देशाज्जीवब्रह्मणोर्भेदस्य स्पष्टं प्रतीयमानत्वाद्भेदश्रुत्यनुसारेणैक्योपदेश एवोपाधिकृतो न भेदः, भेदस्तु सत्य एवेति कुतो नेति वाच्यम् । यथा 'तत्त्वमसि' इत्यत्र सामानाधिकरण्यदर्शनाद्वाच्यवृत्त्याऽञ्जसाऽभेद एव श्रुतेः प्रतिपिपादयिषितो लक्ष्यते न तथा 'आत्मा वा अरे द्रष्टव्यः' इत्यत्र भेदः । तत्र हि वाच्यवृत्त्या द्रष्टृदृश्यभाव एव निरुच्यते । भेदस्त्वार्थिकः । द्रष्टृदृश्यभावान्यथानुपपत्त्या कल्प्यते । आर्थिकश्रुत्यपेक्षया प्रत्यक्षश्रुतेः प्राबल्यात् । तथा च तादृशभेदज्ञानकल्पकानाद्यनिर्वचनीयभावरूपमूलाज्ञानस्वीकारमन्तरा न सद्गतिरिति अद्वैतमेव परमार्थो न विशिष्टाद्वैतमिति शांकरमतमेव विजयतेतरामिति शम् ।

संहितफलस्यापीष्टानिष्टरूपफलसंबन्धोऽवर्जनीयः । अतो मोक्षविरोधि-फलत्वेन मुमुक्षुणा न कर्मानुष्ठेयमित्यत उत्तरमाह—

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

अनिष्टं नरकादिफलम् । इष्टं स्वर्गादिफलम् । मिश्रमनिष्टसंभिन्नं पुत्रपश्वन्नादि । एतत्त्रिविधं कर्मणः फलमत्यागिनां कर्तृत्वममताफलत्यागरहितानां प्रेत्य भवति । प्रेत्य कर्मानुष्ठानोत्तरकालमित्यर्थः । न तु संन्यासिनां क्वचित्, न तु कर्तृत्वादिपरित्यागिनां क्वचिदपि मोक्षविरोधिफलं भवति । एतदुक्तं भवति—यद्यप्यग्निहोत्रमहायज्ञादीनि नित्यान्येव तथाऽपि जीवनाधिकारकामाधिकारयोरिव मोक्षाधिकारे च विनियोगपृथक्त्वेन परिह्रियन्ते । मोक्षविनियोगश्च—' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' [ बृ० ६ । ४ । २२ ] इत्यादिभिरिति । तदेवं क्रियमाणेषु स्वकर्मसु कर्तृत्वादिपरित्यागः शास्त्रसिद्धः संन्यासः स एव च त्याग इत्युक्तः ॥ १२ ॥

इदानीं भगवति पुरुषोत्तमेऽन्तर्यामिणि कर्तृत्वानुसंधानेनाऽऽत्मन्यकर्तृत्वानुसंधानप्रकारमाह—तत एव फलकर्मणोरपि ममतापरित्यागो भवतीति । परमपुरुषो हि स्वकीयेन जीवात्मना स्वकीयैश्च करणकलेवरप्राणैः स्वलीलादिप्रयोजनाय कर्माण्यारभते । अतो जीवात्मगतं क्षुन्निवृत्त्यादिकमपि फलं तत्साधनभूतं च कर्म परमपुरुषस्यैवेति—

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

सांख्यसिद्धिः सांख्ये कृतान्ते यथावस्थितवस्तुविषयया वैदिक्या बुद्ध्याऽनुसंहिते निर्णये सर्वकर्मणां सिद्धये उत्पत्तये प्रोक्तानि पञ्चेमानि कारणानि तानि निबोध मे मत्तः सकाशादनुसंधत्स्व । वैदिकी हि बुद्धिः शरीरेन्द्रियप्राणजीवात्मोपकरणं परमात्मानमेव कर्तारमवधारयति । ' य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः ' [ बृ० ३ । ७ । २२ ] ' अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा ' [ तै० आ० ३ । ११ । २ ] इत्यादिषु ॥ १३ ॥

तदिदमाह—

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

न्याय्ये शास्त्रसिद्धे विपरीते प्रतिषिद्धे वा सर्वस्मिन्कर्मणि शारीरे वाचिके मानसे च पञ्चैते हेतवः । अधिष्ठानं शरीरम् । अधिष्ठीयते जीवात्मनेति महाभूतसंघातरूपं शरीरमधिष्ठानम् । तथा कर्ता जीवात्मा । अस्य जीवात्मनः कर्तृत्वं ज्ञातृत्वं च 'ज्ञोऽत एव'* [ ब्र० सू० २ ।

---

* ज्ञोऽत एवेति । एवं हि तत्र प्रसङ्गः—'नाऽऽत्मा श्रुतेः' [ ब्र० सू० २ । ३ । १८ ] इत्यधिकरणे न जीवात्मोत्पद्यते प्रत्युत नित्यश्चेति प्रतिपादितम् । तत्र 'न जायते म्रियते वा विपश्चित्' [ क० २ । १८ ] इत्यात्मन उत्पत्तिं प्रतिषिध्य 'नित्यो नित्यानाम्' [ श्वे० ६ । १३ ] इत्यादिश्रुतिभ्यो नित्य आत्मेत्यवगम्यत इत्युक्तम् । तत्प्रसङ्गेन जीवात्मनः स्वरूपं परिचिन्त्यते किं सुगतकपिलाभिमतचिन्मात्रमेवाऽऽत्मनः स्वरूपम्, उत कणभुगभिमतपाषाणकल्पस्वरूपमचित्स्वभावमेवाऽऽगन्तुकचैतन्यगुणकम्, अथ ज्ञातृत्वमेवास्य स्वरूपमिति । किमत्र युक्तं चिन्मात्रमिति । कुतः—तथा श्रुतेः । अन्तर्यामिब्राह्मणे हि 'यो विज्ञाने तिष्ठन्' इति काण्वा अधीयते । तथा 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति कर्तुरात्मनो विज्ञानमेव स्वरूपं श्रूयते । स्मृतिष्वपि च 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः' इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते ।

अपर आह—जीवात्मनो ज्ञानस्वरूपत्वे स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गः । न च सुषुप्तिमूर्छादिषु सतोऽप्यात्मनश्चैतन्यमुपलभ्यते । जाग्रदवस्थायां च ज्ञानसाधनसामग्रीसत्त्वे चैतन्यमुपलभ्यते । अतो नास्य चैतन्यं धर्मः स्वाभाविकः । किंतु आगन्तुकमेव चैतन्यम् । अत एव ज्ञानसाधनेन्द्रियादीनां न वैयर्थ्यम् । श्रुतिरपि सुषुप्तौ ज्ञानाभावं दर्शयति—'नाह खल्वयमेवं संप्रत्यात्मानं जानाति' [ छा० ८ । ११ । २ ] इति । ज्ञानस्वरूपत्वे हि श्रुतिर्विरुध्यते । तस्मादात्ममनःसंयोगादसमवायिनश्चैतन्यमात्मगुण आगन्तुको न स्वाभाविक एवं प्राप्ते प्रचक्ष्महे—ज्ञोऽत एवेति ।

अयमात्मा ज्ञातृस्वरूप एव न ज्ञानस्वरूपो नापि जडस्वरूप आगन्तुकचैतन्यः कुतः—अत एव श्रुतेरेवेत्यर्थः । श्रुतौ च ज्ञातृत्वेन निर्देशात् । 'विज्ञातारमरे केन

विजानीयात् ' [ बृ० २ । ४ । १४ ] ' एष हि द्रष्टा ' [ प्र० ४ । ९ ] इति । ज्ञातृत्वं नाम ज्ञानाश्रयत्वम् । निर्गुणस्य कथं ज्ञानाश्रयत्वमिति न वाच्यम् । यतो रामानुजीयमते परमात्मा सगुण एव न तु निर्गुणः । निर्गुणे जगत्कारणत्वस्य सुतरामसंभवात् । जगत्कारणत्वस्य च परमात्मनः श्रुतौ स्पष्टत्वात् । तथा च ज्ञानमात्मनो गुण एव ।

ननु ज्ञानस्याऽऽत्मगुणत्वे ' विज्ञानघनः ' [ बृ० २ । ४ । १२ ] इति श्रुतिः परिपीड्येतेति वाच्यम् । अत्र हि ज्ञानस्याऽऽत्मस्वरूपत्वप्रतिपादनात् । इति चेद-त्रोच्यते—आत्मगुणभूतज्ञानादात्मस्वरूपभूतं ज्ञानं पार्थक्येनाङ्गी क्रियते रामानुजीयैः । ' विज्ञानघनः ' ' विज्ञानमानन्दं ब्रह्म ' [ बृ० २ । ४ । १२ । ३ । ९ । २८ ] इत्यादिश्रुतिषु विज्ञानस्य ब्रह्मतादात्म्यं प्रतीयते । ' विज्ञातारमरे ' ' जानात्येवायं पुरुषः ' इत्यादिषु तु विज्ञानस्य ब्रह्मणः सकाशाद्भेदः प्रतीयते । तथा च द्विप्रकारकश्रुतिसमर्थ-नाय द्विविधज्ञानसमाश्रयणमन्तरा नान्या गतिः । एतेन ' आनन्दो ब्रह्म ' [ तै० ३ । ६ १ ] ' ब्रह्मण आनन्दः ' ( तै० २ । ८ । १ ) इत्येवमानन्दविषयेऽपि स्वरूपभूता-नन्दगुणभूतानन्दद्वैविध्येन श्रुतिर्व्याख्याता भवति । आनन्दस्य ज्ञानादव्यतिरेकात् । ज्ञानमेव ह्यनुकूलमानन्दशब्देनोच्यते । ये त्वात्मस्वरूपभूतज्ञानात्पृथक्त्वेनाऽऽत्मगुणभूतं ज्ञानं न स्वी कुर्वन्ति तेषां मतं आत्मनो ज्ञातृत्वं न सिध्येत् । यतः श्रुत्यनुसारात् ' ज्ञः ' इति ' इगुपधज्ञाप्रीकिरः कः ' ( पा० सू० ३ । १ । १३५ ) इति कर्तरि कः । जानातीति ज्ञः । ज्ञानाश्रय इति यावत् । एवं चाऽऽत्मनो ज्ञातृत्वं सिद्धम् ।

+ कर्ता शास्त्रार्थवत्त्वादिति । किं स आत्मैव कर्तेति स्वयमकर्तैव सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति विचार्यते । तत्र किं तावत्प्राप्तम् । अकर्तैवाऽऽत्मेति । कुतः—आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु प्रोच्यमानं दृश्यते । तथाहि कठवल्लीषु जीवस्य ' न जायते म्रियते ' इत्यादिना जन्ममरणादिकं सर्वं प्रकृतिधर्मं प्रति-षिध्य हननादिक्रियासु कर्तृत्वमपि प्रतिषिध्यते -

' हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ' [ क० २ । १९ ] इति ।

हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः । तथा भगवता जीवस्य स्वयमेव कर्तृत्वं स्वरूपं कर्तृत्वाभिमानस्तु व्यामोह इत्युच्यते—

' प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ ' [ गी० ३ । २७ ] इति ।

तथा—

'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति' [ गी० १४ । १९ ] इति ।

'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते' [ गी० १३ । २० ] इति च ।

प्रकृतेर्गुणैः सत्त्वादिभिः कार्यकारणरूपैर्विकारादिभिः क्रियमाणानि लौकिकानि वैदिकानि च कर्माणि प्रति अहंकारेण विमूढ आत्मा यस्य सः, अहंकारो नामानहमर्थे प्रकृतावहमित्यभिमानस्तद्वान्कर्ताऽहमिति करोम्यहमिति मन्यते कर्तृत्वाध्यासेनेत्यर्थः ।

तथाऽऽत्मनः स्वतःपरिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलसङ्गनिमित्तं त्रिविधकर्मसु कर्तृत्वम् । आत्मा स्वतस्त्वकर्ताऽपरिच्छिन्नज्ञानैकाकारो गुणेभ्यस्तत्तदवस्थाविशेषेण परिणतेभ्यः कर्तृभ्यः पर इत्येवमात्मानं द्रष्टा यदा पश्यति तदा स मद्भावमधिगच्छति प्राप्नोतीत्यर्थः । कार्यं शरीरं कारणानि समनस्कानीन्द्रियाणि तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रया भोगसाधनभूता क्रियेत्यर्थः । पुरुषस्य त्वधिष्ठातृत्वमेव । शरीराधिष्ठानप्रयत्नहेतुत्वमेव हि पुरुषस्य कर्तृत्वम् । प्रकृतिसंसृष्टः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः । सुखदुःखानुभवाश्रय इत्यर्थः ।

अयं भावः—यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं नोपपद्यते, तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न संभवति तथाऽपि कर्तृत्वं नाम क्रियानिर्वर्तकत्वम् । तच्चाचेतनस्यापि चेतनादृष्टवशात्संभवति । यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते यथा वा जलमचेतनं लोकोपकाराय । तथा पयसो दधिभावेन परिणममानस्यान्यानपेक्षस्याऽऽद्यपरिस्पन्दप्रभृतिपरिणामपरम्परा स्वत एवोपपद्यते, यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नारिकेलतालचूतकपित्थनिम्बादिविचित्ररसरूपेण परिणामप्रवृत्तिर्दृश्यते तद्वदित्यर्थः । अतः पुरुषसंनिधानात्प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वं च सुखदुःखसंवेदनम् । तच्चेतनधर्म एवेति प्रकृतिसंनिधानात्पुरुषस्य भोक्तृत्वमुच्यत इति । अतः पुरुषस्य भोक्तृत्वमेव गुणानामेव च कर्तृत्वमिति प्राप्ते प्रचक्ष्महे—

आत्मैव कर्ता न गुणाः । कुतः—शास्त्रार्थवत्त्वात् । शास्त्राणि हि 'यजेत स्वर्गकामः' 'मुमुक्षुर्ब्रह्मोपासीत' इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जन्ति अर्थवन्ति भवन्ति । तानि हि कर्तुः सतः कर्तव्यशेषमुपदिशन्ति । न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते । शासनाच्छास्त्रम् । शासनं च प्रवर्तनम् । तदुक्तमभियुक्तैः—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ इति ।

शास्त्रस्य प्रवर्तकत्वं च बोधजननद्वारेण । अचेतनं च प्रधानं सुरगुरुणाऽपि बोधयितुमशक्यम् । अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वमुपपद्यते नान्यथा । तथाच स्वर्गाद्यर्थिनो यागादिविध्यन्यथानुपपत्त्या कर्तृत्वमात्मन एवेष्यं नाचेतनस्य त्रिगुणात्मकप्रधानस्य ।

किंच 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' (पू० मी० ३ । ७ । १८) इत्याह स्म भगवाञ्जैमिनिः । शास्त्रफलं स्वर्गादि । प्रयोक्तरि अनुष्ठातरि कर्तरीति यावत् । कुतः—तल्लक्षणत्वात् । प्रयोक्तृफलसाधनतालक्षणत्वाच्छास्त्रस्य विधेः । कर्त्रपेक्षितोपायता हि विधिः । गुणाश्चेत्स्युः कर्तारो भोक्ता चाऽऽत्मा ततो यस्यापेक्षितोपायो भोक्तुर्न तस्य कर्तृत्वं यस्य च कर्तृत्वं त्रिगुणाचेतनप्रधानस्य न तस्यापेक्षितोपाय इति किं केन संगतमिति शास्त्रस्याऽऽनर्थक्यमापद्येतेति भावः ।

यदुक्तं हन्ता चेन्मन्यते, इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति तत्त्वात्मनो नित्यत्वेन हन्तव्यत्वाभाव इत्यभिप्रायेणोच्यते नाकर्तृत्वाभिप्रायेण ।

यदपि प्रकृतेः क्रियमाणानीत्यादिना गुणानामेव कर्तृत्वं स्मर्यते, इति तत्सांसारिकप्रवृत्तिषु अस्य स्वतः स्वानुभवैकसुखस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकन्यायेन गुणानामेव कर्तृतेत्युच्यते । तथा च तत्रैवोच्यते—

'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति ।

गुणेषु सत्त्वरजस्तमःकार्येषु सुखदुःखादिषु सङ्ग आसक्तिरेव तत्साधनभूतेषु पुण्यपापकर्मसु स्वतः स्वानुभवैकसुखस्य प्रवृत्तौ कारणमित्यर्थः । एवं च शास्त्रस्यार्थवत्त्वान्यथानुपपत्त्या जीवात्मनः कर्तृत्वमेष्टव्यमिति स्थितम् ।

अत्रायं संक्षेपः—आचार्यमते जीवः परस्मान्न भिन्नः । 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिभिर्जीवब्रह्मणोरैक्यप्रतिपादनात् । किंतु अविकृतस्यैव ब्रह्मण उपाधिनिमित्तं जीवभावेनावस्थानमिति । परमात्मवदेव ज्ञानस्वरूपत्वं न वस्तुतो ज्ञातृत्वं किंतु अन्तःकरणोपाधिकं ज्ञातृत्वम् । तथा जीवो ब्रह्मस्वरूपत्वादेक एव । जीवनानात्वं तूपाधिपरिकल्पितम् । किंच कर्तृत्वमपि वस्तुतोऽसङ्गस्य न संभवति किंत्वात्मनि अध्यस्तम् । शास्त्रार्थवत्त्वादिभिर्हेतुभिर्जीवस्य कर्तृत्वं प्रतिष्ठापितम् । न च तस्मिन्स्वाभाविके संभवति उपाधिनिमित्तं तद् ग्रहीतुं युक्तम् । ननु स्वाभाविके कर्तृत्वे मुक्त्यभावप्रसङ्गः । उष्णस्वभावस्याग्नेरौष्ण्यादिव तत्स्वभावस्य तस्य तस्मान्मुक्तेर्वक्तुमशक्यत्वात् । नहि स्वभावस्त्यक्तुं शक्यते केनचिदपि । इति चेत्, यथा ज्ञानस्वभावो ज्ञेयाभावेऽपि नाज्ञो भवति एवं कर्तृस्वभावोऽपि क्रियाविरहाभावेऽपि नाकर्ता स्यात् । ततश्चाहं कर्तेति अनुभवबलादपि तत्स्वाभाविकम् । एवं प्राप्ते ब्रूमः—

नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति श्रुतिषु शोश्रूयते । तदस्य बुद्धत्वमसत्यपि बोद्धव्ये युक्तं वह्नेरिव दाह्येऽसत्यपि दग्धृत्वमुपपादयितुम् । कर्तृत्वं चास्य क्रियावेशादवगन्तव्यम् । न च ' असङ्गो ह्ययं पुरुषः ' इति श्रुतेर्नित्यमुदासीनत्वेनावगतस्य कूटस्थत्वेनासङ्कच्छूतस्य तस्य संभवति, तस्य च कदाचिदप्यसंसर्गे कथं तच्छक्तियोगो निर्विषयायाः शक्तेरसंभवात् । तथा च यदि तत्सिद्ध्यर्थं तद्विषयः क्रियायोगोऽभ्युपेयते तदा तत्स्वभावस्य स्वभावोच्छेदाभावाद्भावनाशप्रसङ्गः, न च मुक्तस्यास्ति क्रियायोग इति । क्रियायाः शरीरसाध्यत्वात्, ' न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ' इति श्रुत्या सशरीरस्य सतः दुःखावश्यंभावप्रतिपादनात्क्रियाया दुःखरूपत्वान्न विगलितसकलदुःखपरमानन्दावस्था मोक्षः स्यादित्यर्थः । तस्मादुपाधिधर्माध्यासेनैव कर्तृत्वं न स्वाभाविकमित्यद्वैतवेदान्तिसंमतम् ।

रामानुजमतेन परमात्मनः सकाशाद्भिन्नाः परमात्मशरीरभूता जीवा अपि ज्ञानस्वरूपा ज्ञानगुणकाश्चेति तेषां वस्तुत एव ज्ञातृत्वम् । तथा जीवा वस्तुत एव नानाविधाः । जीवाद्वैतं तु प्रकाराद्वैतम् । कर्तृत्वं न स्वाभाविकं किंतु कर्मकृतम् । आत्मनोऽविक्रियस्वरूपत्वात् । जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिः ' तत्त्वमसि ' ' अयमात्मा ब्रह्म ' इत्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं प्रतिपाद्यते । तथा ' तत्सृष्ट्वा तदेवानुप्राविशत् ' [ तै० २ । ६ ] इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वदर्शनान्न परमात्मनः सकाशाद्भिन्नो जीव इति दर्शयति । ततश्च ' बहु स्यां प्रजायेय ' इति स्रष्टुर्ब्रह्मणो यत्स्रष्टृत्वं तज्जीवस्यैवेति गम्यते । अतश्च स्वतन्त्रः कर्ता सन्हितमेवाऽऽत्मनः कुर्यान्नाहितम् । आधिदैविकाधिभौतिकाध्यात्मिकाद्यनन्तजन्ममरणजरारोगाद्यनेकानर्थजालजटिलत्वाद्दुःखकरं चेदं जगद्दृश्यते । ' बहु स्यां प्रजायेय ' इति सिसृक्षुत्वेन ब्रह्मणः प्रतीयमानत्वात्, जीवस्यापि ब्रह्मानन्यत्वस्य प्रागुपपादितत्वात्, ' तदात्मानं स्वयमकुरुत ' इति सृष्टेः कर्तृत्वं जीवगतमिति अर्थादापतितम् । नह्यपरतन्त्रः कश्चित्प्रेक्षावान् ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इति श्रुत्याऽवगतं शारीररूपं बन्धनागारमात्मनः कृत्वा तत्प्रविशेत । न चात्यन्तनिर्मलः सन्मलिनदेहं स्वीयत्वेनोपेयात् । कृतमपि कथंचिद्दुःखकरं तत्स्वेच्छया जह्यात् । सुखकरं चोपाददीत । अनुस्मरेच्च नानाजालजटिलं विचित्रं जगदिदं मयेदं विरचितमिति । सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति ।

अपि चैन्द्रजालिकः स्वेनैव प्रसारितां मायामिच्छायामनायासेनैवोपसंहरति एवं शारीरोऽपीमां सृष्टिमुपसंहरेत् । स्वमपि तावच्छरीरं जीवो न शक्नोत्यनायासेनोपसंहर्तुं कुतस्तरामेनां सृष्टिम् । किंच जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः स्युः । इत्येवमादयो दोषा ब्रह्मजीवैक्यपक्षे प्रादुर्भवन्ति ।

अथैतद्दोषपरिजिहीर्षया औपाधिकभेदविषया भेदवादिन्यः श्रुतयः स्वाभाविकाभेदपराश्चाभेदश्रुतय इति चेत्तत्रेदं विचार्यते—स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा नवा । न जानाति चेत् ' यः सर्वज्ञः सर्ववित् ' इतिश्रुतिसिद्धसर्वज्ञताहानिः प्रसज्येत । जानाति चेत्—स्वस्मादभिन्नस्य जीवस्य यद्दुःखादिकं तत्स्वस्यैवेति सर्वज्ञत्वाज्जानतो ब्रह्मणो हिताकरणाहितकरणादयो दोषाः प्रसक्ता अनिवार्या भवेयुः । तस्मादसंगतमिदं जीवस्य ब्रह्मानन्यत्वमित्यर्थाज्जीवब्रह्मणोर्भेदोऽवश्यमुररीकरणीयः । स्पष्टं च श्रुत्या ब्रह्मजीवयोर्भेदः प्रतिपाद्यते । ' ज्ञाज्ञौ द्वावजावीशनीशौ ' [ श्वे० १ । ९ ] ' क्षरात्मानावीशते देव एकः ' [ श्वे० १ । १० ] इति । अत्र क्षरात्मपदवाच्ययोर्जडजीवयोर्नियम्यत्वेन देवपदवाच्यस्य परमात्मनश्च तन्नियन्तृत्वेन प्रतिपादनात्परमात्मनः सकाशाज्जीवस्य भेदः स्पष्ट एव । सूत्रकारैरपि ' अधिकं तु भेदनिर्देशात् ' [ ब्र० सू० २ । १ । २२ ] ' मुक्तोपसृप्यव्यपदेशाच्च ' [ ब्र० सू० १ । ३ । २ ] इत्यादौ श्रीभाष्य ईश्वरापेक्षया जीवस्य भेदः प्रतिपादितः ।

ननु यदि परमात्मनः सकाशाद्भिन्ना जीवास्तर्हि कथमियं प्रतिज्ञा समर्थ्यते, एकविज्ञानेन सर्वविज्ञानं भवतीति । औपाधिकभेदकल्पने तु परमात्मज्ञानेन तद्भेदानामपि ज्ञानं सुलभम् । यथा महत्याकाशे परिगृहीते घटाकाशोऽपि गृहीतो भवति महाकाशघटाकाशयोर्वस्तुत ऐक्यात् । ततश्च परमात्मजीवात्मनोर्वस्तुत ऐक्यमेव न भेद इति चेत्—जीवस्यापि परमात्मकार्यत्वात्कार्यकारणयोरनन्यत्वाच्च । एवमपि वियदादेरिव जीवोत्पत्तिरङ्गीकृता स्यात् । नचोत्पत्तिर्जीवस्याऽऽम्नायते । प्रत्युत निषिध्यते ' न जायते म्रियते वा विपश्चित् ' ' अजो नित्यः ' इत्यादिभिः । नेत्युच्यते—कार्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः । तज्जीवस्यापि संभवति । परंत्वयान्विशेषः—वियदादेरचेतनस्य यादृगन्यथाभावो न तादृग्जीवस्य । किंतु ज्ञानसंकोचविकासलक्षणो जीवस्यान्यथाभावः । वियदादेस्तु स्वरूपान्यथाभावलक्षणः । सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते ' न जायते ' इत्यादिना ।

अयमभिप्रायः—भोग्यभोक्तृनियन्तॄन्विविक्तस्वभावान्प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरि भोक्तृगतं चापुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वज्ञत्वं विश्वस्य पतित्वं च प्रतिपाद्य सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चाऽऽत्मत्वं प्रतिपादितम् । अतः सर्वदा चिदचिद्वस्तुतया तत्प्रकारं ब्रह्म । तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति तत्कारणावस्थं ब्रह्म । कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरं तच्च कार्यावस्थम् । तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरू-

पान्यथाभावरूपविकारो भवति। चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपो विकारो भवति। उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति। ईदृशज्ञानसंकोचविकासकरतत्तद्देहसंबन्धवियोगाभिप्राया जीवस्योत्पत्तिमरणवादिन्यः श्रुतयः।

अचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो न जायत इत्यादय इति। जीवाद्वैतमित्युक्तिस्तु परस्परं वस्तुतो भिन्नानामपि जीवानां ज्ञानस्वरूपेणैकाकारतया तुल्यत्वात्। नतु स्वरूपैक्यात्। जीवानां मिथो भेदेऽपि तद्गतप्रकारस्यैक्यात्। इदमेव हि प्रकाराद्वैतमित्युच्यते। स्वरूपान्यथात्वज्ञानसंकोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायेण 'आत्माऽजरोऽमरोऽमृतो ब्रह्म' 'नित्यो नित्यानाम्' इत्याद्याः परविषयाः श्रुतयः। एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते। 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' [ बृ० १। ४। ७ ] इति हि नामरूपविभागभावाभावाभ्यां नानैकत्वे वदति। तथा च जीवभेदसिद्धौ, जीवभेदनिषेधपराणि वचनानि तु प्रामाणिकस्वरूपभेदव्यतिरिक्तदेहात्माभिमाननिबन्धनदेवादिभेदनिषेधपराणीत्युक्तं न्यायसिद्धाञ्जने। 'नेह नाना' [ बृ० ४। ४। १९ ] इत्यादिश्रुतयस्तु सर्वस्य ब्रह्मशरीरत्वेन ब्रह्मशरीरव्यतिरिक्तवस्त्वन्तरनिषेधार्थिकाः।

एतदेव हि ब्रह्माद्वैतम्। तस्य प्रकार्यद्वैते तात्पर्यात्। ब्रह्मप्रकारभूतानां जीवानामनेकत्वेऽपि तेषां सर्वेषामात्मभूतस्य प्रकारिणो ब्रह्मण एकत्वात्। स चायमात्मा स्वतः सुखी। तदुक्तमात्मसिद्धौ—

'नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी' इति। संसारस्तु अनादिकर्मरूपाविद्याकृताचित्संसर्गात्। उपाधिर्लिङ्गदेहः प्रकृत्यात्मकोऽनादिरिति मान्याः। कर्ता शास्त्रार्थवत्त्वादित्यधिकरणोक्तन्यायेन कर्तृत्वे सिद्धे तन्मूलकं भोक्तृत्वमपि तस्यैति।

रामानुजीयैः प्रत्यक्षानुमानशब्दैतत्त्रितयप्रमाणाङ्गीकारेण तस्माज्जायमानं दृष्टादृष्टविषयाणां ज्ञानं वस्तुत एव जीवनिष्ठं गुणभूतम्। नह्यस्य प्रमाणजन्यज्ञानस्य जीवस्वरूपभूतज्ञानेन गतार्थता वक्तुं शक्यते। अहं जानामि ज्ञानं मे जातमिति मानसप्रत्यक्षेण जीवात्पार्थक्येन तज्ज्ञानस्यानुभवात्। न च जीवे ज्ञानस्वरूप एव सन्भ्रमेण ज्ञानाश्रयो भासत इति वाच्यम्। नाहं ज्ञानाश्रयः किंतु ज्ञानस्वरूप एवेत्येवं बाधकप्रत्ययस्य कदाप्यदर्शनात्। तच्च जीवात्मगुणभूतं ज्ञानं न रूपादिवदाश्रयमात्रव्यापि। यथा दीपस्य रूपस्पर्शपरिमाणादयो गुणा दीपस्वरूपमात्रवर्तिनस्तथा न ज्ञानं स्वरूपमात्रवर्ति। किंतु मणिद्युमणिप्रभृतीनामेकदेशावस्थितानामपि प्रभा स्वाधिकरणीभूतकृत्स्नं सद्म व्याप्नोति तद्वज्जीवगतमपि ज्ञानं जीवाधिकरणीभूतकृत्स्नशरीरव्यापि। जीव एव समग्रविग्रहं व्याप्नो-

तीति न वाच्यम् । तस्याणुत्वस्य श्रुतिस्मृतिसिद्धत्वात् । ' आराग्रमात्रो ह्यवरोऽपि दृष्टः ' । ' वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते ' [ श्वे० ५ । ८ । ९ ] इति । एवं च रामानुजा अणुपरिमाणं जीवं मन्यन्ते ।

श्रीशंकराचार्यास्तु पुनर्जीवं विभुं मन्यमाना आहुः—जीवविभुत्वानङ्गीकारे देवदत्तीयादृष्टेन देशान्तरे देवदत्तभोग्यवस्तुन उत्पत्तिर्न स्यात् । अणोर्जीवस्य देशान्तरे व्याप्त्यभावेन तदीयादृष्टस्यापि तत्र कार्योत्पत्तिदेशे कार्योत्पत्तिकाले संनिधानाभावात् । किं च कायव्यूहे एकस्मिन्कायेऽनुभूतस्य सुखस्य दुःखस्य वा कायान्तरेऽनुसंधानं न भवेत् । एकेनैव तपोबलेन योगसामर्थ्येन वा युगपत्कृतान्यनेकशरीराणि कायव्यूह इत्याचक्षते ।

किं च तस्याणुत्वे शरीरव्यापि सुखाद्यनुपलब्धिप्रसङ्गः । शरीरपरिणामत्वे च शरीरस्य बाल्ययौवनाद्यवस्थाभेदेन पिपीलिकामनुष्यहस्त्यादिभेदेन चानियतपरिमाणत्वाज्जीवस्यापि अनियतपरिमाणत्वापत्त्या विकारादिदोषप्रसङ्गेनानित्यत्वापत्तिः । तथा च जीवो विभुरिति आचार्यमतम् ।

युक्तं चैतत् । ' स वा महानज आत्मा योऽयं विज्ञानमयः प्राणेषु ' [ बृ० ४ । ४ । २२ ] इति जीवविषयविभुत्ववादश्रुतेः । विष्णुपुराणेऽपि—' तस्याऽऽत्मपरदेहेषु सतोऽपि ' [ वि० २ । १४ । ३१ ] इत्यत्र जीवात्मनोऽनेकदेहेषु सद्भावप्रतिपादनेन विभुत्वं सूच्यते । यत्तु विष्णुपुराणे स्वपरदेहेषु जीवसद्भावप्रतिपादनं तज्जातिद्वारा गौणं न वस्तुतः । एकस्य जीवात्मनोऽन्यस्मिन्देहेऽसत्त्वेऽपि तज्जातीयान्यस्य सत्त्वात् । देशान्तरे भोग्यवस्तूत्पत्तिस्तु जीवात्मनोऽणुत्वेऽपि न विरुद्धा । जीवात्मकृतकर्मनिमित्तेश्वरकोपप्रसादात्मकबुद्धेरेवादृष्टशब्दार्थत्वस्य विवक्षितत्वात् । इति चेन्न । ' अयमात्मा ब्रह्म ' ' तत्त्वमसि ' इत्यादिश्रुतिभिर्जीवब्रह्मणोरभेदोपदेशाज्जीवविभुत्वावश्यंभावाङ्गीकारात् । अन्यथाऽभेदानुपपत्तेः । ततश्च तस्य सर्वकार्यसंनिधानात्तदीयादृष्टस्यापि मुख्यं कार्यसंनिधानमिति देशान्तरे भोग्यवस्तूत्पत्त्युपपत्तौ जीवकृतकर्मप्रयुक्तेश्वरकोपप्रसादयोरदृष्टशब्दार्थत्वादीश्वरीयकोपप्रसादयोर्विभुत्वात्तद्द्वारा जीवादृष्टस्य कार्यदेशसामानाधिकरण्योपपादनप्रयासो विफल एव । जीवाणुत्वमप्यौपचारिकं न वास्तविकम् । दुर्विज्ञेयत्वात् । यथाऽणुः सुसूक्ष्मो दुर्विज्ञेयो भवति तद्वज्जीवोऽपि दुर्विज्ञेयत्वादणुरित्युपचर्यत इति भावः । अत्र युक्तायुक्तं युक्तायुक्तबुद्धिभिर्विचारणीयमित्यलं प्रसक्तानुप्रसक्त्याऽतिपल्लवितेनेति निवर्ते ।

इति च सूत्रयोरुपपादितम् । करणं च पृथग्विधं वाक्पाणिपादादिपञ्चकं समनस्कं कर्मेन्द्रियं पृथग्विधं कर्मनिष्पत्तौ पृथग्व्यापारम् । विविधा च पृथक्चेष्टा । चेष्टाशब्देन पञ्चात्मा वायुरभिधीयते । तद्वृत्तिविशेषचिन्ता शरीरेन्द्रियधारणस्य प्राणापानादिभेदभिन्नस्य च वायोः पञ्चात्मनो विविधा च चेष्टा विविधा वृत्तिः । दैवं चैवात्र पञ्चमम् । अत्र कर्महेतुकलापे दैवं पञ्चमं परमात्माऽन्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः । उक्तं हि—' सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च '
[ भ० गी० १५ । १५ ] इति । वक्ष्यति च—

' ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ' ॥

[ भ० गी० १८ । ६१ ] इति । परमात्मायत्तं जीवात्मनः कर्तृत्वम् । ' × परात्तु तच्छ्रुतेः ' [ ब्र० सू० २ । ३ । ४० ] इत्युपपादितम् ।

---

× परात्तु तच्छ्रुतेरिति । यदुक्तं जीवस्य कर्तृत्वं तत्स्वायत्तं किं परमात्मनिघ्नं वेति विचारार्थं सूत्रमेतत्प्रवृत्तम् । यथा स्फटिकगतं लौहित्यं जपाकुसुमोपधानोपाधिकं तथा जीवात्मनः कर्तृत्वं बुद्ध्याद्युपाधिकमन्वयव्यतिरेकाभ्यां सिद्धम् । इदमिदानीं चिन्त्यते किं तत्कर्तृत्वं जीवाधीनं वेश्वराधीनं वेति । तत्र यदेतज्जीवानामौपाधिकं कर्तृत्वं प्रोक्तं प्रवर्तनालक्षणेषु रागादिषु सत्सु, तन्नेश्वरमपरं प्रवर्तकं कल्पयितुं प्रभवति । तथा सति अतिप्रसङ्गापातात् । द्वेषपक्षपातरहितो हीश्वरो नैव जीवान्साध्वसाधुनि कर्मणि प्रवर्तयितुमर्हति । यस्माद्धर्माधर्मापेक्षया हि जगद्वैचित्र्यमापाद्येत । स हीश्वरः स्वतन्त्रः परमकारुणिको जीवान्धर्म एव प्रवर्तयेन्नाधर्म इति तत्प्रेरिता जन्तवः सर्वे धार्मिका एवेति सर्वदा सुखिन एव स्युर्न कदाऽपि दुःखभाजः । दृश्यन्ते तु तथा । तस्मात्स्वातन्त्र्येण प्रवर्तमाना रागादिप्रेरिता धर्माधर्मवन्तो जगद्वैचित्र्यमनुभवन्तीत्येव युक्तम् । एवं च विधिनिषेधशास्त्राणामर्थवत्त्वमप्युपपद्यते । यो हि स्वातन्त्र्येण स्वबुद्ध्या प्रवृत्तिनिवृत्तिशक्तः स एव हि नियोज्यो भवितुमर्हति । इतरथा सर्वथाऽस्वतन्त्रा जीवा ईश्वरेणैव प्रवर्त्यन्त इति विधिनिषेधशास्त्राणामानर्थक्यं प्रसज्येत । नहि बलवदनिलसलिलौघनुद्यमानं प्रत्युपदेशोऽर्थवान् । किंच परमेश्वरायत्ते जीवस्य कर्तृत्वे स एव धर्माधर्माभ्यां नियुज्येत । ततश्च जीवस्य अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च स्यात् । तस्मात् ' एष ह्येव साधु कर्म कारयति ' इत्यादिश्रुतयः समस्तविधिनिषेधश्रुतिविरोधादैश्वर्यप्रशंसापरतया नेतव्याः । इत्येवं प्राप्ते ब्रूमः—

' एष ह्येव साधु कर्म कारयति ' इत्यादयस्तावच्छ्रुतयः सर्वास्वेव प्रवृत्तिषु जीवानामीश्वरतन्त्रतामाहुः । तस्मादसति प्रतिबन्धके न प्रशंसापरतया व्याख्यानमुचितम् ।

नन्वेवं परमात्मायत्ते जीवात्मनः कर्तृत्वे जीवात्मा कर्मण्यनियोज्यो भवतीति विधिनिषेधशास्त्राण्यनर्थकानि स्युः । इदमपि चोद्यं सूत्रकारेण परिहृतम्—'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' [ ब्र० सू० २ । ३ । ४१] इति । एतदुक्तं भवति-परमात्मना दत्तैस्तदाधारैश्च [ क्षुरादि ] करणकलेवरादिभिस्तदाहितशक्तिभिः स्वयं च जीवात्मा तदाधारस्तदाहितशक्तिः सन्कर्मनिष्पत्तये स्वेच्छया करणाद्यधिष्ठानाकारं प्रयत्नं चाऽऽरभते। तदन्तरवस्थितः परमात्मा स्वानुमतिदानेन तं प्रवर्तय-

---

तस्मात् 'अन्तः प्रविष्टः शास्ता जनानाम्' [ तै० आरण्० ३ । ११ । १० ] इत्यादिपरःशतश्रुतिसिद्धत्वात्परमेश्वरायत्तमेव जीवस्य कर्तृत्वम् ।

ननु ईश्वरतन्त्रत्वे जीवकर्तृत्वस्य धर्म एव जन्तूनां प्रवृत्तेः सुखित्वमेव न वैचित्र्यं युक्तम् । तथा च वैषम्यनैर्घृण्यमीश्वरस्य जीवस्य चाकृताभ्यागमकृतप्रणाशप्रसङ्गश्चोदितः । इति चेन्नायं दोषः । उच्चावचमध्यमसुखदुःखभेदवत्प्राणभृत्प्रपञ्चं च सुखदुःखकारणं सुधाविषादि चानेकविधं विरचयतः प्राणभृद्भिरुपात्तपापपुण्यकर्मातिशयसहायस्यात्र भगवतः परमेश्वरस्य वैषम्यनैर्घृण्ये न प्रसज्येते । नहि सभ्यः सभायां नियुक्तो युक्तवादिनं युक्तवाद्यसीति चायुक्तवादिनमयुक्तवाद्यसीति ब्रुवाणः सभापतिर्वा युक्तवादिनमनुगृह्णन्नयुक्तवादिनं च निगृह्णन्ननुरक्तो द्विष्टो वा भवन्नपि तु मध्यस्थ एव वीतराग इति चाऽऽख्यायते । तद्वदीश्वरः पुण्यकर्माणमनुगृह्णन्नपुण्यकर्माणं च निगृह्णन्मध्यस्थ एव नामध्यस्थः । एवं ह्यसावमध्यस्थः स्याद्यद्यकल्याणकारिणमनुगृह्णीयात्कल्याणकारिणं च निगृह्णीयात् । न त्वेतदस्ति । तस्मान्न वैषम्यम् । अत एव नैर्घृण्यमपि न समस्तान्प्राणिनः संहरतः । स हि प्राणिकर्माश्रयानां वृत्तिनिरोधसमयः । तमतिलङ्घयन्नयमयुक्तकारी स्यात् । न च कर्मापेक्षायामीश्वरस्यैश्वर्यव्याघातः । नहि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति । नापि विधिनिषेधशास्त्रवैयर्थ्यं प्रसज्यते । सर्वव्यापारेषु जीवेन कृतं प्रयत्नमुद्योगमपेक्ष्यान्तर्यामीश्वरो तदनुमतिदानेन प्रवर्तयति । परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यत इत्यर्थः । यथा द्वयोः साधारणे धने परस्वत्वापादनमन्यतरानुमतिमन्तरेण नोपपद्यते । अथापीतरानुमते स्वेनैव कृतमिति तत्फलं स्वस्यैव भवति । नहि गुर्वधीनोऽपि माणवको नाध्ययनस्य कर्ता भवति तद्वत् । अतो न जगद्वैचित्र्यप्रयुक्तवैषम्यनैर्घृण्यदोषः । भगवता पराशरेणापि देवादिवैचित्र्यहेतुः सृज्यमानानां क्षेत्रज्ञानां प्राचीनकर्मशक्तिरेवेत्युक्तम्—

'निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ।
प्रधानकारणीभूता यतो वै सृज्यशक्तयः' ॥ इति ।

अत एव च नाकृताभ्यागमकृतविप्रणाशप्रसङ्गो जीवस्येति ।

तीति जीवस्यापि स्वबुद्ध्यैव प्रवृत्तिहेतुत्वमस्ति । यथा गुरुतरशिलामहीरुहादिचलनादिफलप्रवृत्तिषु बहुपुरुषसाध्यासु बहूनां हेतुत्वं विधिनिषेधभाक्त्वं चेति ॥ १४ ॥ १५ ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

एवं वस्तुतः परमात्मानुमतिपूर्वके जीवात्मनः कर्तृत्वे सति तत्र तत्र कर्मणि केवलमात्मानमेव कर्तारं यः पश्यति स दुर्मतिर्विपरीतमतिरकृतबुद्धित्वादनिष्पन्नयथावस्थितवस्तुबुद्धित्वान्न पश्यति न यथावस्थितं कर्तारं पश्यति ॥ १६ ॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥

परमपुरुषकर्तृत्वानुसंधानेन यस्य भावः कर्तृत्वविशेषविषयो[1] मनोवृत्तिविशेषो नाहंकृतो नाहमभिमानकृतोऽहं करोमीति ज्ञानं यस्य न विद्यत इत्यर्थः । बुद्धिर्यस्य न लिप्यते । अस्मिन्कर्मणि मम कर्तृत्वाभावादेतत्फलं न मया संबध्यते । न च मदीयमिदं कर्मेति यस्य बुद्धिर्जायत इत्यर्थः । स इमाँल्लोकान्युद्धे हत्वाऽपि तान्न हन्ति न केवलं भीष्मादीनित्यर्थः । ततस्तेन युद्धाख्येन कर्मणा न निबध्यते तत्फलं नानुभवतीत्यर्थः ॥ १७ ॥

सर्वमिदमकर्तृत्वाद्यनुसंधानं[2] सत्त्वगुणवृद्ध्यैव भवतीति सत्त्वस्योपादेयताज्ञापनाय कर्मणि सत्त्वादिगुणकृतं वैषम्यं प्रपञ्चयिष्यन्कर्मचोदनाप्रकारं तावदाह—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

ज्ञानं कर्तव्यकर्मविषयं ज्ञानं, ज्ञेयं च कर्तव्यं कर्म, परिज्ञाता कर्मणस्तस्य बोद्धेति त्रिविधा कर्मचोदना बोधबोद्धव्यबोद्धृयुक्तो ज्योतिष्टोमादिकर्मविधिरित्यर्थः । तत्र बोद्धव्यरूपं कर्म त्रिविधं संगृह्यते—करणं

१ ख. °मिदं क° । २ ख. °द्यनु° ।

कर्म कर्तेति । साधनभूतं द्रव्यादिकम् । कर्म यागादि । कर्ताऽनुष्ठातेति ॥ १८ ॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।

प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

कर्तव्यकर्मविषयं ज्ञानमनुष्ठीयमानं च कर्म तस्यानुष्ठाता च सत्त्वादिगुणभेदेन त्रिधैवोच्यते । गुणसंख्याने गुणकार्यगणने यथावच्छृणु तान्यपि तानि गुणतो भिन्नानि ज्ञानादीनि यथावच्छृणु ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥

ब्राह्मणक्षत्रियब्रह्मचारिगृहस्थादिरूपेण विभक्तेषु सर्वेषु भूतेषु कर्माधिकारिषु येन ज्ञानेनैकाकारमात्माख्यं भावं तत्राप्यविभक्तं ब्राह्मणत्वाद्यनेकाकारेष्वपि भूतेषु सितदीर्घादिविभागवत्सु ज्ञानैकाकार आत्मनि विभागरहितम् । अव्ययं व्ययस्वभावेष्वपि ब्राह्मणादिशरीरेष्वव्ययम् । अविकृतं फलादिसङ्गानर्हं च कर्माधिकारवेलायामीक्षते तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।

वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥

सर्वेषु भूतेषु ब्राह्मणादिषु ब्राह्मणाद्याकारपृथक्त्वेनाऽऽत्माख्यानपि भावान्नानाभूतान्सितदीर्घादिपृथग्विधान्फलादिसंयोगयोग्यान्कर्माधिकारवेलायां यज्ज्ञानं वेत्ति तज्ज्ञानं राजसं विद्धि ॥ २१ ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।

अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

यत्तु ज्ञानमेकस्मिन्कार्ये एकस्मिन्कर्तव्ये कर्मणि प्रेतभूतगणाद्याराधनरूपेऽत्यल्पफले कृत्स्नफलवत्सक्तमहैतुकं वस्तुतस्त्वकृत्स्नफलवत्तया तथाविधसङ्गहेतुरहितम् । अतत्त्वार्थवत्पूर्ववदेवाऽऽत्मनि पृथक्त्वादियुक्ततया

१ क. °केऽपपद्यते । २. क. °विभागा° ।

मिथ्याभूतार्थविषयम् । अत्यल्पफलं च प्रेताद्याराधनरूपविषयत्वादल्पं च तज्ज्ञानं तामसमुदाहृतम् ॥ २२ ॥

एवं कर्तव्यकर्मविषयज्ञानस्याधिकारवेलायामधिकार्यंशेन गुणतस्त्रैविध्यमुक्त्वाऽनुष्ठेयस्य कर्मणो गुणतस्त्रैविध्यमाह—

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥

नियतं स्ववर्णाश्रमोचितम् । सङ्गरहितं कर्तृत्वादिसङ्गरहितम् । अरागद्वेषतः कृतं कीर्तिरागादकीर्तिद्वेषाच्च न कृतम् । अदम्भेन कृतमित्यर्थः । अफलप्रेप्सुनाऽफलाभिसंधिना कार्यमित्येव कृतं यत्कर्म तत्सात्त्विकं कर्मेत्युच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

यत्तु पुनः कामेप्सुना फलप्रेप्सुना साहंकारेण वा, वाशब्दश्चार्थे, कर्तृत्वाभिमानयुक्तेन च बहुलायासं यत्कर्म क्रियते तद्राजसं बहुलायासमिदं कर्म मयैव क्रियत इत्येवंरूपाभिमानयुक्तेन यत्कर्म क्रियते तद्राजसमित्यर्थः ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

कृते कर्मण्यनुबध्यमानदुःखमनुबन्धः । क्षयः कर्मणि क्रियमाणेऽर्थविनाशः । हिंसा तत्र प्राणिपीडा । पौरुषमात्मनः कर्मसमापनसामर्थ्यम् । एतान्यनवेक्ष्याविमृश्य मोहात्परमपुरुषकर्तृत्वाज्ञानाद्यत्कर्म क्रियते तत्तामसमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

मुक्तसङ्गः फलसङ्गरहितः । अनहंवादी कर्तृत्वाभिमानरहितः । धृत्युत्साहसमन्वित आरब्धे कर्मणि यावत्कर्मसमाप्त्यवर्जनीयदुःखधारणं धृतिः, उत्साह उद्युक्तचेतस्त्वम्, ताभ्यां समन्वितः सिद्ध्यसिद्ध्योर्नि-

विकारे युद्धादौ कर्माणि तदुपकरणभूतद्रव्यार्जनादिषु सिद्ध्यसिद्ध्योरविकृताचित्तः । कर्ता सात्त्विक उच्यते ॥ २६ ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

रागी यशोर्थी । कर्मफलप्रेप्सुः कर्मफलार्थी । लुब्धः कर्मापेक्षितद्रव्यव्ययस्वभावरहितः । हिंसात्मकः परान्पीडयित्वा तैः कर्म कुर्वाणः । अशुचिः कर्मापेक्षितशुद्धिरहितः । हर्षशोकान्वितो युद्धादौ कर्मणि विजयादिसिद्ध्यसिद्ध्योर्हर्षशोकान्वितः । कर्ता राजसः परिकीर्तितः ॥२७॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

अयुक्तः शास्त्रीयकर्मायोग्यः । प्राकृतोऽनधिगतविद्यः । स्तब्धोऽनारम्भशीलः । शठोऽभिचारादिकर्मरुचिः । नैष्कृतिको वञ्चनपरः । अलस आरब्धेष्वपि कर्मसु मन्दप्रवृत्तिः । विषादी अतिमात्रावसादशीलः । दीर्घसूत्री अभिचारादिकर्म कुर्वन्नितरेषु दीर्घकालवर्त्यनर्थपर्यालोचनशीलः । एवंभूतो यः कर्ता स तामसः ॥ २८ ॥

एवं कर्तव्यकर्मविषयज्ञाने कर्तव्ये च कर्मणि अनुष्ठातरि च गुणतस्त्रैविध्यमुक्तम् । इदानीं सर्वतत्त्वसर्वपुरुषार्थनिश्चयरूपाया बुद्धेर्धृतेश्च गुणतस्त्रैविध्यमाह—

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥

बुद्धिर्विवेकपूर्वकनिश्चयरूपं ज्ञानम् । धृतिरारब्धाया मोक्षसाधनभूतायाः क्रियाया विघ्नोपनिपाते विधारणसामर्थ्यम् । तयोः सत्त्वादिगुणतस्त्रिविधं भेदं पृथक्त्वेन प्रोच्यमानं यथावच्छृणु ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

प्रवृत्तिरभ्युदयसाधनभूतो धर्मः । निवृत्तिर्मोक्षसाधनभूतो धर्मः । तावुभौ यथावस्थितौ या बुद्धिर्वेत्ति कार्याकार्ये सर्ववर्णानां प्रवृत्तिनिवृत्ति-

धर्मयोरन्यतरनिष्ठानां देशकालावस्थाविशेषेषु इदं कार्यमिदमकार्यमिति च या वेत्ति भयाभये शास्त्रान्निवृत्तिर्भयस्थानं तदनु(नि)वृत्तिरभयस्थानं बन्धं मोक्षं च संसारयाथात्म्यं तद्विगमयाथात्म्यं च या वेत्ति सा सात्त्विकी बुद्धिः ॥ ३० ॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

यया पूर्वोक्तं द्विविधं धर्मं तद्विपरीतं च तन्निष्ठानां देशकालावस्थादिषु कार्यं चाकार्यं च यथावन्न जानाति सा राजसी बुद्धिः ॥ ३१ ॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

तामसी तु बुद्धिस्तमसाऽऽवृता सती सर्वार्थान् विपरीतान्मन्यते । अधर्मं धर्मं धर्मं चाधर्मं सन्तं चार्थमसन्तमसन्तं चार्थं सन्तं परं च तत्त्वमपरमपरं च तत्त्वं परम् । एवं सर्वं विपरीतं मन्यत इत्यर्थः ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

यया धृत्या योगेनाव्यभिचारिण्या मनःप्राणेन्द्रियाणां क्रियाः पुरुषो धारयते । योगो मोक्षसाधनभूतं भगवदुपासनम् । योगेन प्रयोजनभूतेनाव्यभिचारिण्या योगोद्देशेन प्रवृत्तास्तत्साधनभूता मनःप्रभृतीनां याः क्रिया यया धृत्या धारयते सा सात्त्विकीत्यर्थः ॥ ३३ ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

फलाकाङ्क्षी पुरुषः प्रकृष्टसङ्गेन धर्मकामार्थान् यया धृत्या धारयते सा राजसी । धर्मकामार्थशब्देन तत्साधनभूतात्मनः प्राणेन्द्रियक्रिया लक्ष्यन्ते । फलाकाङ्क्षीत्यत्रापि फलशब्देन राजसत्वाद्धर्मकामार्था एव विवक्षिताः। अतो धर्मकामार्थापेक्षया मनःप्रभृतीनां क्रिया यया धृत्या धारयते सा राजसीत्युक्तं भवति ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥

यया धृत्या स्वप्नं निद्रां मदं विषयानुभवजनितं मदं स्वप्नमदावुद्दिश्य प्रवृत्ता मनःप्राणादीनां क्रिया दुर्मेधा न विमुञ्चति धारयति । भयशोकविषादशब्दाश्च भयशोकादिदायिविषयपरास्तत्साधनभूताश्च मनःप्राणादीनां क्रिया यया धारयते सा धृतिस्तामसी ॥ ३५ ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

पूर्वोक्ताः सर्वे ज्ञानकर्मकर्तृत्वादयो यच्छेषभूतास्तच्च सुखं गुणतस्त्रिविधमिदानीं शृणु । यस्मिन्सुखे चिरकालाभ्यासात्क्रमेण निरतिशयां रतिं प्राप्नोति दुःखान्तं च निगच्छति निखिलसांसारिकस्य दुःखस्यान्तं निगच्छति ॥ ३६ ॥

तदेव विशिनष्टि—

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

यत्तत्सुखमग्रे योगोपक्रमवेलायां बह्वायाससाध्यत्वाद्विविक्तस्वरूपस्याननुभूतत्वाच्च विषमिव दुःखमिव भवति । परिणामेऽमृतोपमं परिणामे विपाकेऽभ्यासबलेन विविक्तस्वरूपाविर्भावेऽमृतोपमं भवति । तच्चाऽऽत्मबुद्धिप्रसादजम् , आत्मविषया बुद्धिरात्मबुद्धिस्तस्या निवृत्तसकलेतरविषयत्वं प्रसादः । निवृत्तसकलेतरविषयबुद्ध्या विविक्तस्वभावात्मानुभवजनितं सुखममृतोपमं भवति तत्सुखं सात्त्विकं प्रोक्तम् ॥ ३७ ॥

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

अग्रेऽनुभववेलायां विषयेन्द्रियसंयोगाद्यत्तदमृतमिव भवति परिणामे विपाके विषयाणां सुखतानिमित्तक्षुधादौ निवृत्ते तस्य च सुखस्य निरयादिनिमित्तत्वाद्विषमिव पीतं भवति तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

यत्सुखमग्रे चानुबन्धे चानुभववेलायां विपाके चाऽऽत्मनो मोहनं मोहहेतुर्भवति। मोहोऽत्र यथावस्थितवस्त्वप्रकाशोऽभिप्रेतः। निद्रालस्यप्रमादोत्थं निद्रालस्यप्रमादजनितम्। निद्रादयो ह्यनुभववेलायामपि मोहहेतवः। निद्राया मोहहेतुत्वं स्पष्टम्। आलस्यमिन्द्रियव्यापारमान्द्यम्। इन्द्रियव्यापारमान्द्ये च ज्ञानमान्द्यं भवत्येव। प्रमादः कृत्यानवधानरूप इति तत्रापि ज्ञानमान्द्यं भवति। ततश्च तयोरपि मोहहेतुत्वम्। तत्सुखं तामसमुदाहृतम्। अतो मुमुक्षुणा रजस्तमसी अभिभूय सत्त्वमेवोपादेयमित्युक्तं भवति ॥ ३९ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

पृथिव्यां मनुष्यादिषु दिवि देवेषु वा प्रकृतिसंसृष्टेषु ब्रह्मादिस्थावरान्तेषु प्रकृतिजैरेभिस्त्रिभिर्गुणैर्मुक्तं यत्सत्त्वं प्राणिजातं न तदस्ति॥४०॥

'त्यागेनैके अमृतत्वमानशुः' [ म० ना० १० । ५ ] इत्यादिषु मोक्षसाधनतया निर्दिष्टस्त्यागः संन्यासशब्दार्थो न तदन्यः। स च क्रियमाणेष्वेव कर्मसु कर्तृत्वत्यागमूलः फलकर्मणोस्त्यागः। कर्तृत्वत्यागश्च परमपुरुषकर्तृत्वानुसंधानेनेत्युक्तम्। एतत्सर्वं सत्त्वगुणवृद्धिकार्यमिति सत्त्वोपादेयताज्ञापनाय सत्त्वरजस्तमसां कार्यभेदः प्रपञ्चितः। इदानीमेवंभूतस्य मोक्षसाधनतया क्रियमाणस्य कर्मणः परमपुरुषाराधनवेषतां तथाऽनुष्ठितस्य च कर्मणस्तत्प्राप्तिलक्षणं फलं प्रतिपादयितुं ब्राह्मणाद्यधिकारिणां स्वभावानुबन्धिसत्त्वादिगुणभेदभिन्नं वृत्त्या सह कर्तव्यकर्मस्वरूपमाह—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

ब्राह्मणक्षत्रियविशां स्वकीयो भावः स्वभावो ब्राह्मणादिजन्महेतुभूतं

१ ख. °धनोपदेशतां।

प्राचीनं कर्मेत्यर्थः । तत्प्रभवाः सत्त्वादयो गुणाः । ब्राह्मणस्य स्वभावप्रभवो रजस्तमोभिभवेनोद्भूतः[1] सत्त्वगुणः । क्षत्रियस्य स्वभावप्रभवः सत्त्वतमोभिभवेनोद्भूतो[2] रजोगुणः । वैश्यस्य स्वभावप्रभवः सत्त्वरजोभिभवेनाल्पोद्रिक्तस्तमोगुणः । शूद्रस्य स्वभावप्रभवस्तु रजःसत्त्वाभिभवेनात्युद्रिक्तस्तमोगुणः । एभिः स्वभावप्रभवैर्गुणैः सह प्रविभक्तानि कर्माणि शास्त्रैः प्रतिपादितानि । ब्राह्मणादय एवंगुणकास्तेषां चैतानि कर्माणि वृत्तयश्चैता इति हि विभज्य प्रतिपादयन्ति शास्त्राणि ॥ ४१ ॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥

शमो बाह्येन्द्रियनियमनम् । दमोऽन्तःकरणनियमनम् । तपो भोगनियमनरूपः शास्त्रसिद्धकायक्लेशः । शौचं शास्त्रीयकर्मयोग्यता । क्षान्तिः परैः पीड्यमानस्यापि अविकृतचित्तता । आर्जवं परेषु मनोनुरूपं बाह्यचेष्टाप्रकाशनम् । ज्ञानं परावरतत्त्वयाथात्म्यज्ञानम् । विज्ञानं परतत्त्वगतासाधारणविशेषविषयं ज्ञानम् । आस्तिक्यं वैदिकार्थस्य कृत्स्नस्य सत्यतानिश्चयः प्रकृष्टः केनापि हेतुनाऽपनेतुमशक्य इत्यर्थः । भगवान्पुरुषोत्तमो वासुदेवः परब्रह्मशब्दाभिधेयो निरस्तनिखिलदोषगन्धः स्वाभाविकानवधिकातिशयज्ञानशक्त्याद्यसंख्येयकल्याणगुणगणो निखिलवेदवेदान्तवेद्यः स एव निखिलजगदेककारणं निखिलजगदाधारभूतो निखिलस्य स एव प्रवर्तयिता तदाराधनभूतं च कृत्स्नं वैदिकं कर्म तैस्तैराराधितो धर्मार्थकाममोक्षाख्यं फलं प्रयच्छतीत्यस्यार्थस्य सत्यतानिश्चय आस्तिक्यम् । 'वेदैश्च सर्वैरहमेव वेद्यः' [ भ० गी० १५ । १५ ] 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' [ भ० गी० १० । ८ ] 'मयि सर्वमिदं प्रोतम्' [ भ० गी० ७ । ७ ] 'भोक्तारं यज्ञतपसाम्' [ भ० गी० ५ । २९ ] 'ज्ञात्वा मां शान्तिमृच्छति' [ भ० गी० ५ । २९ ] 'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' । [ भ० गी० ७ । ७ ] 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' [ भ० गी० १८ । ४६ ] 'यो माम-

---

१ ख. ग. °वेनोद्रिक्तः स° । २ ख. ग. °वेनोद्रिक्तो र° ।

जमनादिं च वेत्ति लोकमहेश्वरम्' [ भ० गी० १० । ३ ] इति श्रुच्यते।
तदेतद्ब्राह्मणस्य स्वभावजं कर्म ॥ ४२ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥

शौर्यं युद्धे निर्भयप्रवेशसामर्थ्यम्। तेजः परैरनभिभवनीयता। धृतिरारब्धे कर्मणि विघ्नोपनिपातेऽपि तत्समापनसामर्थ्यम्। दाक्ष्यं सर्वक्रियानिर्वृत्तिसामर्थ्यम्। युद्धे चाप्यपलायनं युद्धे चाऽऽत्ममरणनिश्चयेऽप्यनिवर्तनम्। दानमात्मीयद्रव्यस्य परस्वत्वापादानपर्यन्तस्त्यागः। ईश्वरभावः स्वव्यतिरिक्तसकलजननियमनसामर्थ्यम्। एतत्क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

कृषिः सस्योत्पादनं कर्षणम्। गौरक्ष्यं पशुपालनमित्यर्थः। वाणिज्यं धनसंचयहेतुभूतं क्रयविक्रयात्मकं कर्म। एतद्वैश्यस्य स्वभावजं कर्म। पूर्ववर्णत्रयपरिचर्यारूपं शूद्रस्वभावजं कर्म। तदेतच्चतुर्णां वर्णानां वृत्तिभिः सह कर्तव्यानां शास्त्रविहितानां यज्ञादिकर्मणां प्रदर्शनार्थमुक्तम्। यज्ञादयो हि त्रयाणां वर्णानां साधारणाः। शमदमादयोऽपि त्रयाणां वर्णानां मुमुक्षूणां साधारणाः। ब्राह्मणस्य तु सत्त्वोद्रेकस्य स्वाभाविकत्वेन शमदमादयः सुखोपादाना इति कृत्वा तस्य शमदमादयः स्वभावजं कर्मेत्युक्तम्। क्षत्रियवैश्ययोस्तु स्वतो रजस्तमःप्रधानत्वे शमदमादयो दुःखोपादाना इति कृत्वा न तत्कर्मेत्युक्तम्। ब्राह्मणस्य वृत्तिर्याजनाध्यापनप्रतिग्रहाः। क्षत्रियस्य जनपदपरिपालनम्। वैश्यस्य कृष्यादयो यथोक्ताः। शूद्रस्य तु कर्तव्यं वृत्तिश्च पूर्ववर्णत्रयपरिचर्यैव ॥ ४४ ॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

स्वे स्वे यथोदिते कर्मण्यभिरतो नरः संसिद्धिं परमपदप्राप्तिं लभते। स्वकर्मनिरतो यथा सिद्धिं विन्दति परमं पदं प्राप्नोति तथा शृणु ॥ ४५ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

यतो भूतानामुत्पत्त्यादिका प्रवृत्तिर्येन च सर्वमिदं ततं स्वकर्मणा तं मामिन्द्राद्यन्तरात्मतयाऽवस्थितमभ्यर्च्य मत्प्रसादान्मत्प्राप्तिरूपां सिद्धिं विन्दति मानवः । मत्त एव सर्वमुत्पद्यते मया च सर्वमिदं ततमिति पूर्वमेवोक्तम्—' अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा [ भ० गी० ७ । ६ ]

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय [ भ० गी० ७ । ७ ]
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना [ भ० गी० ९ । ४ ]
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । [ भ० गी० ९ । १० ]
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ' [ भ० गी० १० । ८ ]
इत्यादिषु ॥ ४६ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥ ४७ ॥

एवं त्यक्तकर्तृत्वादिको मदाराधनरूपः स्वधर्मः स्वेनैवोपादातुं योग्यो धर्मः प्रकृतिसंसृष्टेन हि पुरुषेणेन्द्रियव्यापाररूपः कर्मयोगात्मको धर्मः सुकरो भवति । अतः कर्मयोगाख्यः स्वधर्मो विगुणोऽपि परधर्मादिन्द्रियजयनिपुणपुरुषधर्माज्ज्ञानयोगात्सकलेन्द्रियनियमनरूपतया सप्रमादात्कदाचित्स्वनुष्ठिताच्छ्रेयान् । तदेवोपपादयति—स्वभावनियतमिति । प्रकृतिसंसृष्टस्य पुरुषस्येन्द्रियव्यापाररूपतया स्वभावत एव नियतत्वात् कर्मणः कर्म कुर्वन्किल्बिषं संसारं नाऽऽप्नोति ॥ ४७ ॥

अप्रमादत्वात्कर्मणो ज्ञानयोगस्य सकलेन्द्रियनियमनसाध्यतया सप्रमादत्वात्तन्निष्ठस्तु प्रमादाच्च किल्बिषं प्रतिपद्येतापि अतः कर्मनिष्ठैव ज्यायसीति तृतीयोक्तं स्मारयति—

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥ ४८ ॥

अतः सहजत्वेन सुकरमप्रमादं च कर्म सदोषं सदुःखमपि न त्यजेत् ।

१ ख. ग. घ. °यनियमनरू° ।

ज्ञानयोगयोग्योऽपि कर्मयोगमेव कुर्वीतेत्यर्थः । सर्वारम्भाः कर्मारम्भा ज्ञानारम्भाश्च हि दोषेण दुःखेन धूमेनाग्निरिवाऽऽवृताः । इयांस्तु विशेषः– कर्मयोगः सुकरोऽप्रमादश्च ज्ञानयोगस्तद्विपरीत इति ॥ ४८ ॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

सर्वत्र फलादिष्वसक्तबुद्धिर्जितात्मा जितमनाः परमपुरुषकर्तृत्वानुसंधानेनाऽऽत्मकर्तृत्वे विगतस्पृहः, एवं त्यागादनन्यत्वेन निर्णीतेन संन्यासेन युक्तः कर्म कुर्वन्नपि परमां नैष्कर्म्यसिद्धिमधिगच्छतीति परमां ध्याननिष्ठां ज्ञानयोगस्यापि फलभूतां वक्ष्यमाणां ध्यानयोगावाप्तिं सर्वेन्द्रियकर्मोपरतिरूपामधिगच्छति ॥ ४९ ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

सिद्धिं प्राप्त आ प्रयाणादहरहरनुष्ठीयमानकर्मयोगनिष्पाद्यध्यानसिद्धिं प्राप्तो यथा येन प्रकारेण वर्तमानो ब्रह्म प्राप्नोति तथा समासेन निबोध। तदेव ब्रह्म विशिष्यते—निष्ठा ज्ञानस्य या परेति । ज्ञानस्य ध्यानात्मकस्य या परा निष्ठा परं प्राप्यमित्यर्थः ॥ ५० ॥

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

बुद्ध्या विशुद्धया यथावस्थितात्मतत्त्वविषयया युक्तो धृत्याऽऽत्मानं नियम्य च विषयविमुखीकरणेन योगयोग्यं मनः कृत्वा शब्दादीन् विषयान् विमुच्यासंनिहितान्कृत्वा तन्निमित्तौ च रागद्वेषौ व्युदस्य विविक्तसेवी सर्वैर्ध्यानविरोधिभिर्विविक्ते देशे वर्तमानो लघ्वाशि अत्यशनानशनरहितो यतवाक्कायमानसो ध्यानाभिमुखीकृतकायवाङ्मनोवृत्ति-

ध्यानयोगपरो नित्यमेवंभूतः सन्ना प्रयाणादहरहर्ध्यानयोगपरो वैराग्यं समुपाश्रितो ध्येयतत्त्वव्यतिरिक्तविषयदोषावमर्शेन तत्र तत्र विरागतां वर्धयन्नहंकारमनात्मन्यात्माभिमानं बलं तद्विवृद्धिहेतुभूतवासनाबलं तन्निमित्तं दर्पं कामं क्रोधं परिग्रहं विमुच्य निर्ममः सर्वेष्वनात्मीयेष्वात्मीयबुद्धिरहितः शान्त आत्मानुभवैकसुख एवंभूतो ध्यानयोगं कुर्वन् ब्रह्मभूयाय कल्पते ब्रह्मभावाय कल्पते सर्वबन्धविनिर्मुक्तो यथावस्थितमात्मानमनुभवतीत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

ब्रह्मभूत आविर्भूतापरिच्छिन्नज्ञानैकाकारमच्छेषतैकस्वभावात्मस्वरूपः । ‘ इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् ’ [ भ० गी० ७ । ५ ] इति हि स्वशेषतोक्ता । प्रसन्नात्मा क्लेशकर्मादिभिरकलुषस्वरूपो मद्व्यतिरिक्तं न कंचन भूतविशेषं प्रति शोचति न कंचन काङ्क्षति अपि तु मद्व्यतिरिक्तेषु सर्वेषु भूतेषु अनादरणीयतायां समो निखिलं वस्तुजातं तृणवन्मन्यमानो मद्भक्तिं लभते परां मयि सर्वेश्वरे निखिलजगदुद्भवस्थितिप्रलयलीले निरस्तसमस्तहेयगन्धेऽनवधिकातिशयासंख्येयकल्याणगुणगणैकताने लावण्यामृतसागरे श्रीमति पुण्डरीकनयने स्वस्वामिन्यत्यर्थप्रियानुभवरूपां परां भक्तिं लभते ॥ ५४ ॥

तत्फलमाह—

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

स्वरूपतः स्वभावतश्च योऽहं गुणतो विभूतितो यावांश्चाहं तं मामेवंरूपया भक्त्या तत्त्वतो विजानाति मां तत्त्वतो ज्ञात्वा तदनन्तरं तत्त्वज्ञानानन्तरं ततो भक्तितो मां विशते प्रविशति । तत्त्वतः स्वरूपस्वभावगुणविभूतिदर्शनोत्तरकालभाविन्याऽनवधिकातिशयभक्त्या मां प्राप्नोतीत्यर्थः । अत्र तत इति प्राप्तिहेतुतया निर्दिष्टा भक्तिरेवाभिधीयते—‘ भक्त्या

१ ख. °कल्मष° ।

त्वनन्यया शक्यः ' [ भ० गी० ११ । ५४ ] इति तस्या एव तत्त्वतः प्रवेशहेतुताभिधानात् ॥ ५५ ॥

एवं वर्णाश्रमोचितनित्यनैमित्तिककर्मणां परित्यक्तफलादिकानां परमपुरुषाराधनरूपेणानुष्ठितानां विपाक उक्तः । इदानीं काम्यानामपि कर्मणामुक्तेनैव प्रकारेणानुष्ठीयमानानां स एव विपाक इत्याह—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

न केवलं नित्यनैमित्तिककर्माणि अपि तु काम्यान्यपि सर्वाणि कर्माणि मद्व्यपाश्रयो मयि संन्यस्तकर्तृत्वादिकः कुर्वाणो मत्प्रसादाच्छाश्वतं पदमव्ययमविकलं प्राप्नोति । पद्यते गम्यत इति पदं मां प्राप्नोतीत्यर्थः ॥ ५६ ॥

यस्मादेवं तस्मात्—

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

चेतसाऽऽत्मनो मदीयत्वमन्नियाम्यत्वबुद्ध्या । उक्तं हि—' मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ' [ भ० गी० ३ । ३० ] इति । सर्वकर्माणि सकर्तृकाणि साराध्यानि मयि संन्यस्य मत्परोऽहमेव फलतया प्राप्य इत्यनुसंदधानः कर्माणि कुर्वन्निममेव बुद्धियोगमुपाश्रित्य सततं मयि युक्तचित्तो भव ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

एवं मच्चित्तः सर्वकर्माणि कुर्वन्सर्वाणि सांसारिकाणि दुर्गाणि मत्प्रसादादेव तरिष्यसि । अथ त्वमहंकारादहमेव कृत्याकृत्यविषयं सर्वं जानामीतिभावान्मदुक्तं न श्रोष्यसि चेद्विनङ्क्ष्यसि नष्टो भविष्यसि । नहि कश्चिन्मद्व्यतिरिक्तः कृत्स्नस्य प्राणिजातस्य कृत्याकृत्ययोर्ज्ञाता शासिता चाऽऽस्ते ॥ ५८ ॥

यद्यहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

यद्यहंकारमात्महिताहितज्ञाने स्वातन्त्र्यतयाऽभिमानमाश्रित्य मन्नियोगमनादृत्य न योत्स्य इति मन्यसे । एष ते स्वातन्त्र्यव्यवसायो मिथ्या भविष्यति । यतः प्रकृतिस्त्वां युद्धे नियोक्ष्यति । मत्स्वातन्त्र्यतयोद्विग्नमनसं त्वामज्ञं मदाज्ञया प्रकृतिर्नियोक्ष्यति ॥ ५९ ॥

तदुपपादयति--

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥

स्वभावजं हि क्षत्रियस्य कर्म शौर्यम् । स्वभावजेन शौर्याख्येन स्वेन कर्मणा निबद्धस्तत एवावशः परैर्धर्षणमसहमानस्त्वमेव तद्युद्धं करिष्यसि यदिदानीं मोहादज्ञानात् कर्तुं नेच्छसि ॥ ६० ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

सर्वं हि भूतजातं सर्वेश्वरेण मया पूर्वकर्मानुगुण्येन प्रकृत्यनुवर्तने नियमितं तच्छृणु-ईश्वरः सर्वनियमनशीलो वासुदेवः सर्वभूतानां हृद्देशे सकलप्रवृत्तिनिवृत्तिमूलज्ञानोदये देशे तिष्ठति । कथं किं कुर्वंस्तिष्ठति यन्त्रारूढानि सर्वभूतानि मायया भ्रामयन्स्वेनैव निर्मितं देहेन्द्रियावस्थप्रकृत्याख्यं यन्त्रमारूढानि सर्वभूतानि स्वकीयया सत्त्वादिगुणमय्या मायया गुणानुगुणं प्रवर्तयंस्तिष्ठतीत्यर्थः । पूर्वमप्येतदुक्तम्-'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' [ भ० गी० १५ । १५ ] 'मत्तः सर्वं प्रवर्तते' [ भ० गी० १० । ८ ] इति च । श्रुतिश्च 'य आत्मनि तिष्ठन्' [ श० ब्रा० १४ । ६ । ७ । ३० ] इत्यादिका ॥ ६१ ॥

एतन्मायानिवृत्तिहेतुमाह--

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

यस्मादेवं तस्मात्त्वमेव सर्वस्य प्रशासितारमाश्रितवात्सल्येन त्वत्सा-

रथ्येऽवस्थितामित्थं कुर्वीति च प्रशासितारं मां सर्वभावेन सर्वात्मना शरणं गच्छानुवर्तस्व। अन्यथा तन्मायामेरितेनाज्ञानेनैव त्वया युद्धादिकरणमवर्जनीयम्। तथा सति नष्टो भविष्यसि। अतो मदुक्तप्रकारेण युद्धादिकं कुर्वित्यर्थः। एवं कुर्वाणो मत्प्रसादात्परां शान्तिं सर्वकर्मबन्धोपशमं शाश्वतं च स्थानं प्राप्स्यासि। यदभिधीयते श्रुतिशतैः—'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः। यत्र ऋषयः प्रथमजा ये पुराणाः परेण नाकं निहितं गुहायाम्। यो अस्याध्यक्षः परमे व्योमन्। अथ यदतः परो दिवो ज्योतिर्दीप्यते सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यादिभिः॥ ६२॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु॥ ६३॥

इत्येवं ते मुमुक्षुभिरधिगन्तव्यं ज्ञानं सर्वस्माद्गुह्याद्गुह्यतरं कर्मयोगविषयं भक्तियोगविषयं च सर्वमाख्यातम्। एतदशेषेण विमृश्य स्वाधिकारानुरूपं यथेच्छसि तथा कुरु कर्मयोगं ज्ञानं भक्तियोगं वा यथेष्टमातिष्ठेत्यर्थः॥ ६३॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्॥ ६४॥

सर्वेष्वेतेषु गुह्येषु भक्तियोगस्य श्रेष्ठत्वाद्गुह्यतम इति पूर्वमेवोक्तम्। 'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे' [ भ० गी० ९। १ ] इत्यादौ। भूयोऽपि तद्विषयं परमं मे वचः शृणु। इष्टोऽसि मे दृढमिति ततस्ते हितं वक्ष्यामि॥ ६४॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥ ६५॥

वेदान्तेषु 'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय' [ तै० आ० ३। १३। १ ] इत्यादिषु विहितं वेदनोपासनाध्यानादिशब्द-

वाच्यं दर्शनसमानाकारं स्मृतिसंतानमत्यर्थप्रियमिह मन्मना भवेति विधीयते। मद्भक्तोऽत्यर्थं मत्प्रियोऽत्यर्थमत्प्रियत्वेन च निरतिशयप्रियां स्मृतिसंततिं कुरुष्वेत्यर्थः। मद्याजी तत्रापि मद्भक्त इत्यनुषज्यते। यजनं पूजनम्। अत्यर्थप्रियमदाराधनपरो भव। आराधनं हि परिपूर्णशेषवृत्तिः। मां नमस्कुरु नमो नमनं मय्यतिमात्रप्रह्वीभावमत्यर्थप्रियं कुर्वित्यर्थः। एवं वर्तमानो मामेवैष्यसीति एतत्सत्यं ते प्रतिजाने। तव प्रतिज्ञां करोमि नोपच्छन्दमात्रम्। यतस्त्वं प्रियोऽसि मे 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' [ भ० गी० ७। १७ ] इति पूर्वोक्तम्। यस्य मय्यतिमात्रप्रीतिर्वर्तते। ममापि तस्मिन्नतिमात्रप्रीतिर्भवतीति तद्वियोगमसहमानोऽहं तं मां प्रापयामि। अतः सत्यमेव प्रतिज्ञातं मामेवैष्यसीति ॥ ६५ ॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

कर्मयोगज्ञानयोगभक्तियोगरूपान् सर्वान्धर्मान् परमनिःश्रेयससाधनभूतान् मदाराधनत्वेनातिमात्रप्रीत्या यथाधिकारं कुर्वाण एवोक्तरीत्या फलसङ्गकर्तृत्वादिपरित्यागेन परित्यज्य मामेकमेव कर्तारमाराध्यं प्राप्यमुपायं चानुसंधत्स्व। एष एव सर्वधर्माणां शास्त्रीयपरित्याग इति। 'निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः' [ भ० गी० १८। ४ ] इत्यारभ्य 'सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः'। [ भ० गी० १८।९ ] 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' [ भ० गी० १८। ११ ] इत्यध्यायादौ सुदृढमुपपादितम्। 'अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि'। एवं वर्तमानं त्वां मत्प्राप्तिविरोधिभ्योऽनादिकालसंचितानन्ताकृत्यकरणकृत्याकरणरूपेभ्यः सर्वेभ्यः पापेभ्यो मोक्षयिष्यामि मा शुचः शोकं मा कृथाः। अथ वा[1] सर्वपापविनिर्मुक्ता[2]त्यर्थभगवत्प्रियपुरुषनिर्वर्त्यत्वा[3]द्भक्तियोगस्य तदारम्भविरोधिपापानामानन्त्याच्च तत्प्रायश्चित्तरूपैर्धर्मैरपरिमितकालकृतैस्तेषां

---

१ क. ङ. वा भक्तियोगारम्भविरोधिस°। २ क. ङ. °मुक्तिपूर्वकभक्तियोगारम्भस्यात्य°।
३ क. ङ. °त्वात्तदा°।

दुस्तरतयाऽऽत्मनो भक्तियोगारम्भानर्हतामालोच्य शोचतोऽर्जुनस्य शोकमपनुदन् श्रीभगवानुवाच—' सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ' इति । भक्तियोगारम्भविरोध्यनादिकालसंचितनानाविधानन्तपापानुगुणांस्तत्प्रायश्चित्तरूपान्कृच्छ्रचान्द्रायणकूष्माण्डवैश्वानरप्राजापत्यव्रातपतिपवित्रेष्टित्रिवृदग्निष्टोमादिकान् नानाविधाननन्तांस्त्वया परिमितकालवर्तिना दुरनुष्ठानान् सर्वधर्मान्परित्यज्य भक्तियोगारम्भसिद्धये मामेकं परमकारुणिकमनालोचितविशेषाशेषलोकशरण्यमाश्रितवात्सल्यजलधिं शरणं प्रपद्यस्व । अहं त्वा सर्वपापेभ्यो यथोदितस्वरूपभक्त्यारम्भविरोधिभ्यः सर्वेभ्यः पापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

इदं ते परमं गुह्यं शास्त्रं मयाऽऽख्यातमतपस्कायातप्ततपसे त्वया न वाच्यम् । त्वयि वक्तरि मयि चाभक्ताय कदाचन न वाच्यं तप्ततपसे चाभक्ताय न वाच्यमित्यर्थः । न चाशुश्रूषवे भक्तायाप्यशुश्रूषवे न वाच्यम् । न च मां योऽभ्यसूयति मत्स्वरूपे मदैश्वर्ये मद्गुणेषु च कथितेषु यो दोषमाविष्करोति न तस्मै वाच्यम् । असमानविभक्तिनिर्देशस्तस्यात्यन्तपरिहरणीयताज्ञापनाय ॥ ६७ ॥

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

इदं परमं गुह्यं मद्भक्तेषु योऽभिधास्यति व्याख्यास्यति मयि परमां भक्तिं कृत्वा मामेवैष्यति न तत्र संशयः ॥ ६८ ॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

न चेति । सर्वेषु मनुष्येषु इतः पूर्वं तस्मादन्यो मनुष्यो मे न कश्चित्प्रियकृत्तमोऽभूत् । इत उत्तरं न च भविता । अयोग्यानां प्रथममुपादानं योग्यानामकथनादपि तत्कथनस्यानिष्टतमत्वात् ॥ ६९ ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

य इममावयोर्धर्म्यं संवादमध्येष्यते तेन ज्ञानयज्ञेनाहमिष्टः स्यामिति मे मतिः । अस्मिन् यो ज्ञानयज्ञोऽभिधीयते तेनाहमेतदध्ययनमात्रेणेष्टः स्यामित्यर्थः ॥ ७० ॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥

श्रद्धावाननसूयश्च यो नरः शृणुयादपि तेन श्रवणमात्रेण सोऽपि भक्तिविरोधिपापेभ्यो मुक्तः पुण्यकर्मणां मद्भक्तानां लोकान्समूहान्प्राप्नुयात् ॥ ७१ ॥

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥

मया कथितमेतत् पार्थ त्वयाऽवहितेन चेतसा कच्चिच्छ्रुतम् । तवाज्ञानसंमोहः प्रनष्टः कच्चित् । येनाज्ञानेन मूढो न योत्स्यामीत्युक्तवान् ॥ ७२ ॥

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥

मोहो विपरीतज्ञानं त्वत्प्रसादान्मम तद्विनष्टम् । स्मृतिर्यथावस्थिततत्त्वज्ञानं त्वत्प्रसादादेव तच्च लब्धम् । अनात्मनि प्रकृतावात्माभिमानरूपो मोहः परमपुरुषशरीरतया तदात्मकस्य कृत्स्नस्य चिदचिद्वस्तुनोऽतदात्माभिमानरूपश्च नित्यनैमित्तिकरूपस्य कर्मणः परमपुरुषाराधनरूपतया तत्प्राप्त्युपायभूतस्य बन्धकत्वबुद्धिरूपश्च सर्वो विनष्टः । आत्मनः प्रकृतिविलक्षणत्वात्प्रकृतिविलक्षणत्वतत्स्वभावरहितताज्ञातृत्वैकस्वभावतोप-

---

१ ख. ग. °तास्व° ।

रमपुरुषशेषतातन्नियाम्यत्वैकस्वरूपताज्ञानं भगवतो निखिलजगदुत्पत्तिस्थितिप्रलयलीलाशेषदोषप्रत्यनीककल्याणैकस्वरूपस्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृतिसमस्तकल्याणगुणगणमहार्णवपरब्रह्मशब्दाभिधेयपरमपुरुषयाथात्म्यविज्ञानं चैवंरूपपरावरतत्त्वयाथात्म्यविज्ञानं तदभ्यासपूर्वकाहरहरुपचीयमानपरमपुरुषप्रीत्यैकफलनित्यनैमित्तिककर्मनिषिद्धपरिहारशमदमाद्यात्मगुणनिर्वर्त्यभक्तिरूपतापन्नपरमपुरुषोपासनैकलभ्यो वेदान्तवेद्यः परमपुरुषो वासुदेवस्त्वमिति ज्ञानं च लब्धम् । ततश्च बन्धुस्नेहकारुण्यप्रवृद्धविपरीतज्ञानमूलात्सर्वस्मादवसादाद्विमुक्तो गतसंदेहः स्वस्थः स्थितोऽस्मि । इदानीमेव युद्धादिकर्तव्यताविषयं तव वचनं करिष्ये यथोक्तं युद्धादिकं करिष्य इत्यर्थः ॥ ७३ ॥

धृतराष्ट्राय स्वपुत्राः पाण्डवाश्च युद्धे किमकुर्वतेति पृच्छते—

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

इत्येवं वासुदेवस्य वसुदेवसूनोः पार्थस्य च तत्पितृष्वसुः पुत्रस्य च महात्मनो महाबुद्धेस्तत्पदद्वंद्वमाश्रितस्येमं रोमहर्षणमद्भुतं संवादमहं यथोक्तमश्रौषं श्रुतवानहम् ॥ ७४ ॥

व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५॥

व्यासप्रसादाद्व्यासानुग्रहेण दिव्यचक्षुःश्रोत्रलाभादेतत्परं योगाख्यं गुह्यं योगेश्वराज्ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधेर्भगवतः कृष्णात्स्वयमेव कथयतः साक्षाच्छ्रुतवानहम् ॥ ७५ ॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥

केशवार्जुनयोरिमं पुण्यमद्भुतं संवादं साक्षाच्छ्रुतं स्मृत्वा मुहुर्मुहुर्हृष्यामि ॥ ७६ ॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥

तच्चार्जुनाय प्रकाशितमैश्वरं हरेरत्यद्भुतं रूपं मया साक्षात्कृतं संस्मृत्य संस्मृत्य हृष्यतो मे महान्विस्मयो जायते पुनः पुनश्च हृष्यामि ॥ ७७ ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

---

किमत्र बहुनोक्तेन यत्र योगेश्वरः कृत्स्नस्योच्चावचरूपेणावस्थितस्य चेतनस्याचेतनस्य च वस्तुनो ये ये स्वभावयोगास्तेषां सर्वेषां योगानामीश्वरः स्वसंकल्पायत्तस्वेतरसमस्तवस्तुस्वरूपस्थितिप्रवृत्तिभेदः कृष्णो वसुदेवसूनुर्यत्र च पार्थो धनुर्धरस्तत्पितृष्वसुः पुत्रस्तत्पदद्वंद्वैकाश्रयस्तत्र श्रीर्विजयो भूतिर्नीतिश्च ध्रुवा निश्चलेति मतिर्ममेति ॥ ७८ ॥

इति श्रीमद्रामानुजाचार्यविरचिते गीताभाष्येऽष्टादशोऽध्यायः ॥ १८ ॥

इति तृतीयं षट्कं समाप्तम् ।

तात्पर्यचन्द्रिकाटीकासमेतरामानुजभाष्यसहिता श्रीमद्भगवद्गीता च समाप्ता ॥

---

# अथ श्रीमद्भगवद्गीतास्थप्रतिपद्यार्धाद्यपादप्रतीकानामकारादिवर्णानुक्रमेण संग्रहः ।

भ.

इति श्रीमद्भगवद्गीतास्थप्रतिपद्यार्धाद्यपादप्रतीकानामकारादिवर्णानुक्रमेण संग्रहः ।